# साहित्यदर्पणः ।

श्रीमद्विश्वनाथकविराज-प्रणीतः ।

गङ्गाधरविद्यालङ्कारभट्टाचार्य्यात्मजेन
महामहोपाध्याय-महाकवि-भारताचार्य्य-
श्रीयुक्तहरिदाससिद्धान्तवागीशभट्टाचार्य्येण
प्रणीतया कुसुमप्रतिमा-समाख्यया
टीकया समेतः ।



चतुर्थं संस्करणम् ।

१८६७ शकाब्दे भाद्रे मासि ।

~~मूल्यम् ६) सार्द्धमुद्राषट्कम् ।~~

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रामकृपालु शास्त्री

# साहित्यदर्पणः।

श्रीमद्विश्वनाथकविराज-प्रणीतः।

गङ्गाधरविद्यालङ्कारभट्टाचार्य्यात्मजेन
महामहोपाध्याय-महाकवि-भारताचार्य्य-
श्रीयुक्तहरिदाससिद्धान्तवागीशभट्टाचार्य्येण
प्रणीतया कुसुमप्रतिमा-समाख्यया
टीकया समेतः।





चतुर्थं संस्करणम्।

१८६७ शकाब्दे भाद्रे मासि।

मूल्यम्—६) राजतमुद्राषट्कम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

४१ संख्यकदेवलेनवर्त्मस्थ-सिद्धान्तविद्यालयात्

काव्य-व्याकरण-पुराणतीर्थोपाधिकेन

श्रीहेमचन्द्रतर्कवागीशभट्टाचार्य्येण

प्रकाशितम्।

कलिकाता-महानगर्य्यां

४१ संख्यकदेवलेनवर्त्मस्थ-सिद्धान्तयन्त्रे

श्रीहेमचन्द्रभट्टाचार्य्येण

मुद्रितम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha



महामहोपाध्याय-महाकवि-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## प्रथमसंस्करणस्य विज्ञापनम् ।

एष खल्ववनतेश्वरमसीमायामवतीर्णस्य प्रायेणैव भारतवासिनः स्वभावः, यत् जीवति ग्रन्थकारे सत्यपि च प्रचुरतर एव प्रशंसाकारणे न खलु कोऽपि विवृत्य हृदयद्वारं तं तदीयग्रन्थं वा प्रशंसितुमर्हति। तेन हि नाम ग्रन्थं करिष्यन् विवेकी जनो भाविनिन्दाभयात् न प्रवर्त्तत एव, दुर्निवारोद्यमः कुर्वाण एव निन्दाश्रवणारम्भात् कियदनन्तरमेव निवर्त्तते, कृतग्रन्थस्तु अविश्रान्तखनिन्दाश्रवणेन जर्जरकर्णौ नितरामिव विषीदति ; इत्यतः प्रशंसा-लिप्सा सुदूरपराहतैव ; धनलिप्सा तु व्ययबाहुल्यात् चित्ते नाङ्कुरितापि। तथापि तु नितान्तदुरूहतया प्रायेण परित्यक्तव्याख्येयस्थानतया च तर्क-वागीशटीकातो विमुखीभूतानां विद्यार्थिनां सरलतापूर्णतयोर्विधानेन सुविधा-विधानाय, टीकाकरणेऽस्मिन् प्रवृत्तिर्मे सञ्जाता। किन्तु न जाने—कियती कृतकार्य्यता सम्पन्नेति।

अत्र हि न खलु निवृत्तोऽस्मि परमोत्तमायामपि तर्कवागीशटीकायां क्वचित् क्वचित् दोषं दर्शयितुम्। येन हि लोकश्चन्द्रमपि कलङ्किनं कथयितुं न विविनक्ति, देवेन्द्रमप्यहल्याजारमुच्चारयितुं न विचारयति, यमुनाजलञ्च मलिनमभिधातुं नोद्विजते। तदत्र प्राञ्जलिः किल प्रार्थये—यत्, सूक्ष्मतया निरपेक्षभावेनैव समालोच्य प्रशंसा वा निन्दा वा विधेया सुधीसमाजेनेति।

१८४१ शकाब्दीयसौरवैशाखगतसप्तदशदिव-सीयम्। नकीपुर-हरिचरणचतुष्पाठी। } विनीत— श्रीहरिदासशर्म्मणः।

## तृतीयसंस्करणस्य विज्ञप्तिः।

हन्त! सन्ति सागरा इति वर्त्तन्ते रत्नानि, विद्यते गगनमिति विभान्ति तारकाः, तिष्ठन्ति गिरय इति स्फुरन्ति मणयः, विराजन्ति च गुणग्राहिण इति प्रादुर्भवन्ति नानागुणाः। अतएव हि सत्यामपि संक्षिप्त-दुरूहायां तर्कवागीशटीकायां विस्तृतसरलामभिनवां कामपि टीकां कामयन्ते गुणिन इति पश्यन्तो वयं खलु तत्प्रणयने प्रवृत्ताः। सा चेयं प्रकाशितैव नवीना गुणिजनमनोहारिणी सञ्जातेति मन्यामहे। येन हि स्वल्पसमय-

CC-0. ...Prakash Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मध्य एवास्याः संस्करणद्वयं निरवशेषं जातम्। तदेतन्महदैवाख्यासस्थानमिति प्रकाशितं तृतीयं संस्करणम्।

अत्र च सर्वथा समुत्कर्षसम्पादने कृतस्तावदस्माभिर्गरीयान् प्रयत्नः। अभिनवसुन्दराक्षरैर्मुद्रापणम्, अभिनिवेशातिशयेन संशोधनम्, अत्युत्तमपत्रप्रदानम्, पूर्वपूर्वसंस्करणादतिरिक्तञ्च सूचीपत्रपञ्चकसन्निवेशनं विहितम्। तदत्र व्ययबहुलतया श्रमाधिकतया च मूल्यमपि किञ्चित् वर्द्धितम्। तच्च क्षमिरन् वस्तुतत्त्वं जानन्तः सज्जना इत्यस्ति द्रढीयान् विश्वास इति।

१८५६ शकाब्दीयसौर-चैत्रगतचतुर्दशदिवसीयम्। } कलिकाता ४१ संख्यकसुरिविलर्वर्त्तिनः श्रीहरिदासशर्म्मणः।

## चतुर्थसंस्करणस्य विज्ञापनम्।

परमकारुणिकपरमेश्वरानुग्रहेण साहित्यदर्पणस्य चतुर्थं संस्करणं प्रकाशितम्। अतीते १३४८ वङ्गाब्द एव तृतीयसंस्करणं निःशेषं जातम्। तदवधि तु विस्मयविषादाकुल एव कालमत्यवाहयम्। ग्राहकाणामाग्रहातिरेकदर्शनाद्विस्मयः, त्वरया पुनर्मुद्रणासम्भवेन च विषादः समजनि। पृथिवीव्यापिनो महायुद्धस्य प्रभावेण दीर्घकालं कागज इत्यप्राप्यमेवासीत्, परञ्च प्राप्यमपि न प्रयोजनानुरूपं न वेच्छानुरूपमुत्कृष्टम्, निकृष्टमपि च त्रिगुणमूल्यम्; राजकार्य्यव्यापृततया मुद्रायन्त्रमपि दुर्लभमेव, क्वचिल्लभ्यमपि चतुर्गुणव्ययलभ्यम्, अन्यान्यान्युपकरणान्यपि चतुर्गुणव्ययलभ्यान्येवासन्। तथापि तु मुद्रापयितुमारभमाणेन दारुणदुर्दशासागरे निरन्तरमुन्मज्जता निमज्जता च मया कथं कथमपि मुद्रापणं परिसमापितम्। परिसमाप्य च व्ययं सङ्कलयता सविस्मयं साशङ्कञ्च दृश्यते—चतुर्गुण एव व्ययः सञ्जात इति। ततश्चागत्या मूल्यमपि पूर्वमूल्यार्द्धमेव वर्द्धितम्, ४) स्थाने ६) इति। एवञ्च सम्प्रति चतुर्गुणमूल्येन व्यवहार्य्यं सर्वमेव द्रव्यं क्रीणन्तो विवेकवन्तो ग्राहकाः सहर्षमेव ग्रहीष्यन्तीत्याशास्यत इति।

१८६७ शकाब्दीय-सौरभाद्रगतसप्तदशदिवसीयम्। } कलिकाता ४१ संख्यकदेवलेनाख्यवर्त्मवर्त्तिनः विनीत—श्रीहरिदासशर्म्मणः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ विश्वनाथस्य समयादिनिरूपणम्।

नहि खलु धीरधुरीणस्य महाकवेर्विश्वनाथस्य जातिकालादिनिरूपणे किमपि विस्पष्टं प्रमाणमुपलभ्यते। तथापि तु तन्निरूपणं नातिदुष्करमिव प्रतिभाति। तथा च देशविशेषस्थहस्तलिखितदर्पणपुस्तके प्रथमपरिच्छेदे—"अत्र हि विभावनाविशेषोक्तिमूलस्य सन्देहसङ्करालङ्कारस्य स्फुटत्वम्" इत्यनन्तरम् "अत्र जयन्तभट्टेनोक्तम्—" इत्याद्यधिकपाठो दृश्यते (१)। जयन्तभट्टश्च १३५० संवद्वर्षे (१२९३ खृष्टाब्दे) काव्यप्रकाशदीपिका नाम काञ्चन काव्यप्रकाशटीकां विरचय्य समाप्तिं निनाय (२)। खृष्टीयत्रयोदश-शताब्दीसमुद्भूतस्य च आलाउद्दीननाम्नो यवनराजस्य चरित्रपरिचायकः कश्चन श्लोको दर्पणकृता स्वयमेव चतुर्थपरिच्छेदे समुपन्यस्तः (३)। अत-स्तयोः परवर्त्ती दर्पणकार इति निःसन्देहमेव। खृष्टीयचतुर्द्दशशताब्दी-समुद्भूतेन मल्लिनाथेन च दर्पणकारात् पूर्ववर्त्तितया तत्समसामयिकतया वा कुत्रापि दर्पणप्रमाणं नोल्लिखितम्। खृष्टीयपञ्चदशशताब्दीसञ्जातेन (४) गोविन्दठक्कुरेण च काव्यप्रदीपे "तददोषौ शब्दार्थौ—" इत्यादिकारिका-व्याख्यानावसरे—"अर्वाचीनास्तु" इत्यादिना दर्पणकारमतमेवोद्धृतमिति।

---

(१) अत्र जयन्तभट्टेनोक्तम्—"विभावनाविशेषोक्त्योः परिपूर्णतालक्षणाभावाच्च तन्मूलः सन्देहसङ्करः"
इति ; नहि निःशेषकारणाभावे कार्य्योत्पत्तौ विभावनायाः पूर्णत्वम्, प्रसिद्धकतिपयकारणनिषेधेऽपि विभाव-
नायाः पूर्णता स्यात्, नापि निःशेषकारणसामग्र्यां कार्य्यानुत्पत्तौ विशेषोक्तेः पूर्णत्वम्, अपि तु प्रसिद्धकतिपय-
कारणसामग्र्यां कार्य्यानुत्पत्तिकथनमात्रेणापि विशेषोक्तेः पूर्णता। अन्यथा विभावनाविशेषोक्त्योः उच्छिद्ये-
ताम्। ततश्च उक्तप्रकारेणापि विचित्रोक्तिनिर्वाहात् उभयोश्चित्रत्वस्यैव सङ्करभूमित्वात् अतः परिपूर्णयोरेव
तयोः साधकबाधकप्रमाणाभावात् तन्मूलः सन्देहसङ्करः स्फुट इति।

(२) "संवत् १३५० वर्षे ज्यैष्ठवदितरवो अद्येह......श्रीजयन्तभट्टेन......विरचितेयं काव्यप्रकाश-दीपिका समाप्ता।"

(३) "सन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः।
अल्लावदीननृपतौ न सन्धिर्न च विग्रहः॥" (२६० पृष्ठे)

(४) तथैव प्रवादस्तद्वंश्यैः प्रतीयते।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अतश्च खृष्टीयचतुर्द्दशशताब्दीमध्यभाग एव साहित्यदर्पणकृतो विश्वनाथस्य आविर्भावकाल इति ध्रुवं प्रतीयते ।

प्रथमपरिच्छेदसमाप्तौ "परमाचार्य्य-सान्धिविग्रहिक-महापात्र" इति विशेषणत्रयेण राजविशेषस्य मन्त्रिपदस्थितो ब्राह्मण एवायमित्यवधार्य्यते । आचार्य्यताया ब्राह्मण एव नियतत्वात् (१) । राज्ञः सन्धिविग्रहाधिकारे ब्राह्मणविशेषनियोगस्यैव स्मृतिप्रतिपादितत्वात् (२) उत्तमसम्प्रदानपात्रत्वावगमाच्च (३) ।

कविराजेत्युपाधिस्तु कवीनां राजा प्रधान इत्यात्मनः कविष्वपि प्राधान्यप्रतिपादनपरतयैव समुपपद्यते, कलापव्याकरणीयकलापचन्द्रकर्त्तुः सुषेणशर्म्मणः कविराजोपाधिवत् । वैद्यजातिबोधकं कविराजपदमिति तु नोपपद्यते, तथात्वे कातन्त्रपरिशिष्टे "वैद्य-महामहोपाध्याय-श्रीपतिदत्त—" इतिवत् निःसन्देहार्थं 'वैद्य' इत्येव निर्दिशेत्, कविराजपदस्य साधारणचिकित्सकार्थे व्यवहारेण केवलवैद्यबोधकत्वाभिधानस्यान्याय्यत्वाच्च ।

एवम् अयमुत्कलदेशीयो वैष्णवश्चेत्यवगम्यते । तथा च उत्कलेषु अण्डकोषार्थे 'पेल'शब्दो व्यवह्रियते, न पुनरन्यत्र । अयञ्च सप्तमपरिच्छेदे "पेलवशब्दस्य आद्याक्षरे अश्लीले" इत्याह स्म, प्रथमपरिच्छेदे च— "इति श्रीमन्नारायणचरणारविन्दमधुव्रत—" इत्यभिधत्ते स्म इति ।

---

(१) "उपनीय ददद्वेदमाचार्य्यः स उदाहृतः ।" देवलस्मृतिः ।

(२) "सर्वेषान्तु विशिष्टेन ब्राह्मणेन विशेषतः ।
मन्त्रयेत् परमं मन्त्रं राजा षाड्गुण्यसंयुतम् ॥" मनुस्मृतिः ।

(३) "पात्राणां ब्राह्मणो मुख्यः—" नारदस्मृतिः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# साहित्यदर्पणपरिच्छेदगतस्थूलविषयाणां सूचीपत्रम् ।

—————:०:—————



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha



## साहित्यदर्पणस्य कारिकासंख्या ।

| | |
|---|---|
| प्रथमपरिच्छेदे ... ... ... | ५ |
| द्वितीयपरिच्छेदे ... ... ... | २७ |
| तृतीयपरिच्छेदे ... ... ... | २४० |
| चतुर्थपरिच्छेदे ... ... ... | १७ |
| पञ्चमपरिच्छेदे ... ... ... | ५ |
| षष्ठपरिच्छेदे ... ... ... | ३१४ |
| सप्तमपरिच्छेदे ... ... ... | ३२ |
| अष्टमपरिच्छेदे ... ... ... | २० |
| नवमपरिच्छेदे ... ... ... | ७ |
| दशमपरिच्छेदे ... ... .... | १२८ |
| | ७९५ |

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# साहित्यदर्पणगतविषयाणामकारादिक्रमेण सूचीपत्रम् ।

—०—



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

SCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# साहित्यदर्पणगतविषयाणामकारादिक्रमेण सूचीपत्रम् ।



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# साहित्यदर्पणगतश्लोकानामकारादिक्रमेण सूचीपत्रम्

—०—



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

...shtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-O. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-0. Prof. Satya Vrat Shastri Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

—ह—



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# साहित्यदर्पणोद्धृतग्रन्थनाम्नां सूचीपत्रम् ।

———:०:———



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

---

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# साहित्यदर्पणाधृतग्रन्थकारनाम्नां सूचीपत्रम् ।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रामकृपालु पाठक शास्त्री

# साहित्यदर्पणः।



## प्रथमः परिच्छेदः।

—:०:—

### अवतरणिका।

ग्रन्थारम्भे निर्विघ्नेन प्रारिप्सितपरिसमाप्तिकामो वाङ्मयाधिकृततया वाग्देवतायाः साम्मुख्यमाधत्ते (क)।

नैवस्वभास्वानपि यस्तमस्वान् धृतद्वितीयोऽपि चिराद्द्वितीयः।
अनन्तभोगोऽपि विहीनभोगः शवोऽपि भूयात् स शिवः शिवो नः ॥१॥
सल्लक्षणा वृत्तियुता रसोज्ज्वला प्रियध्वनी रूपकभावशालिनी।
सालङ्कृती रीतिमती गुणान्विता बुधैर्विलोक्या प्रतिमाव दर्पणे ॥२॥
दोषाकरं परविकासपरं विलोक्य तुष्यन्ति येऽन्यगुणमात्रदृशः सुधीराः।
दोषान्वितामपि रतामपरप्रकाशे टीकां विधातुमिह मे परमाश्रयास्ते ॥३॥

(क) अथैवं नाम नालङ्कारशास्त्रमुपयुज्येत, यदि तु काव्यं दर्शपौर्णमासादिवत् वेदविधाननिदानं व्यवहारवत् राजशासनाधीनं वा स्यात्। नैवञ्च काव्यम्। अतएव हि तत् भिन्नरुचिप्रणीतं विविधप्रकारं सुशृङ्खलतासम्पत्तये कञ्चन नियामकमवश्यमपेक्षते राजानमिव प्रजा। नियामकञ्च काव्यस्यालङ्कारशास्त्रम्। अथ च प्राचीनालङ्कारग्रन्था लगुड़निर्भराः स्थविरा इव निखिलकाव्यमार्गेषु समीचीनसञ्चरणे नितान्तविधुराः, आवश्यके विषये लेशतोऽपि पदन्यासाभावात् अनावश्यके च प्रचुरतरसञ्चरणात्। इत्यतः सर्वत्र यथोपयोगसञ्चरणचतुरमेवं कञ्चिदलङ्कारग्रन्थं चिकीर्षन् तत्रभवान् विश्वनाथश्चिकीर्षितविषयस्य निर्विघ्नेन परिसमाप्तये स्वकृतस्येष्टदेवतास्मरणस्य स्वयमेवाशयं विवृणोति ग्रन्थारम्भ इति।

ग्रन्थस्य साहित्यदर्पणाभिधानमहावाक्यस्य आरम्भे आद्यावयवनिर्माणे कर्त्तव्ये सतीत्यर्थः। न च तथा सति ग्रन्थारम्भप्रागभावसमानकालीनत्वबोधात् प्रागभावस्य चानादित्वात् आरम्भाद्बहुतरपूर्वक्षणेऽपि मङ्गलाचरणापत्तिरिति वाच्यम्, सन्निहिते बुद्धिरन्तरङ्गेति न्यायात् तदारम्भाव्यवहितपूर्वक्षण एव मङ्गलाचरणप्रतीतेः सार्वजनीनत्वात्, भुक्त्वा गच्छतीत्यादौ गमनाद्बहुतरपूर्वक्षणे भोजनप्रतीत्यभावात्। एतेन राम-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**१ । शरदिन्दुसुन्दररुचिश्चेतसि सा मे गिरां देवी ।**
**अपहृत्य तमः सन्ततमर्थानखिलान् प्रकाशयतु ॥ (ख)**

**अस्य ग्रन्थस्य काव्याङ्गतया काव्यफलैरेव फलवत्त्वमिति काव्यफला-न्याह—(ग)**

---

चरणाभिमतो ग्रन्थारम्भप्राक्कालक्षणापर्यो ह्येयः, सम्भवति शक्यार्थे लक्षणाया अयोगात्। कारणीभूताभावप्रतियोगित्वं विघ्नत्वम्। विघ्नस्याभावो निर्विघ्नं तेन। निर्मक्षिकादिवदव्ययीभावः, करणे च तृतीया, अन्वयश्चास्य परिसमाप्तिपदार्थेन, तत्पुरुषसमासस्योत्तरपदप्राधान्यात् कारकसापेक्षेऽपि च समासोपगमात्। प्रारिप्सितस्य प्रारब्धुमिष्टस्य ग्रन्थस्य परिसमाप्तिं शेषवर्णपर्यन्तनिर्म्माणं कामयत इति स तथोक्तः। ननु "ज्ञानञ्च शङ्करादिच्छेत्" इत्यादिशास्त्रविषयमपहाय कथं वाग्देवतामेव प्रार्थयतीत्याह वाङ्मयेति। वाङ्मयानां वाक्यात्मकानां शास्त्राणाम् अधिकृततया अध्यक्षतया नियन्तृतया हेतुना, वाग्देवतायाः सरस्वत्याः साम्मुख्यं स्वाभिमतफलदानायाभिमुख्यम्, आधत्ते प्रार्थनया जनयति। उद्यानप्रवेशे कर्त्तव्ये तत्स्वामिनमपहाय आवश्यकत्वेन सन्निहितत्वेन च तत्पालकान्तिकप्रार्थनाया एवौचित्यादित्याशयः। आधत्ते मूलकार इति शेषः। अत्र रसस्वरूपनिरूपणस्य मूलकारकृतत्वेऽपि वृत्तिकृतो "रसस्वरूपं निरूपयिष्याम" इत्यादिप्रतिज्ञादर्शनान्मूलकारवृत्तिकारयोरेकत्वनिश्चयेऽपि मूलकर्त्तृत्वेन वृत्तिकर्त्तृत्वेन च भेदादभेदमङ्गीकृत्य प्रथमपुरुषप्रयोग इति मन्तव्यम्। व्यक्तेरभेदेऽपि प्रणन्तृत्ववक्तृत्वभेदेन भेदात् "वक्ति श्रीरघुनन्दन" इत्यादिप्रयोगवत्।

(ख) शरदिति। शरदिन्दोरिव सुन्दरी रुचिः प्रभा यस्याः सा तथोक्ता। सा प्रसिद्धा। गिरां देवी वाचां नियन्त्री देवता सरस्वती, मे मम चेतसि सन्ततं व्याप्तं तमः तमोगुणजनितमज्ञानम् अपहृत्य दूरीकृत्य अखिलानर्थान् ग्रन्थनिर्म्माणोपयोगि शक्यलक्ष्यव्यङ्ग्यात्मकमभिधेयजातं प्रकाशयतु। यथा शरदिन्दुरन्धकारमपहृत्य लोकव्यवहारोपयोगिनो घटपटादिपदार्थान् प्रकाशयति तद्वदिति भावः। एतच्च मङ्गलाचरणं सम्भाव्यमानविघ्नविनाशद्वारा ग्रन्थपरिसमाप्तिप्रयोजकमिति बोध्यम्।

(ग) ननु "सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते। शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः॥" इत्यनेन ग्रन्थादौ तद्ग्रन्थस्यैव अभिधेयसम्बन्धप्रयोजनाभिधानं श्रोतृप्रवृत्तये कर्त्तव्यतयाभिहितं तत् कथं मूलकारश्चिकीर्षितालङ्कारशास्त्रं फलन्त्वभिधत्ते काव्यस्येति। तथा च सति चैतस्य जलप्रार्थनायां मैवाय जलं ददत इव मूलकृतो महान् प्रमादः प्रतिपद्यत इत्याह अस्येति। अस्य आरभ्यमाणस्य। काव्याङ्गतया काव्यस्वरूपादिनिरूपणद्वारा काव्यफलप्रयोजकतया। तथा च प्रधाननिर्वहणद्वारा तज्जन्यजनकत्वमङ्गत्वम्। "फलवत्सन्निधावफलवत्तदङ्गम्" इति जैमिनिसूत्रात् अङ्गानां साक्षात् फलजनकत्वाभावादुक्तं प्रधाननिर्वहणद्वारेति। यथा श्रीपूजनादौ तन्निर्वहणद्वारा तज्जन्यसम्पत्प्राप्तिरूपफलजनकत्वात् सङ्कल्पादीनामङ्गत्वम्, तथा काव्यस्वरूपादिनिरूपणद्वारा काव्यफलप्रयोजकतया अस्यापि काव्याङ्गत्वम्। काव्यफलैरिति प्रकृत्या सुन्दरः धान्येन धनवानित्यादिवदभेदे तृतीया। तथा च काव्यस्य यत् फलम्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२। चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।
काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते॥ (घ)

चतुर्वर्गफलप्राप्तिर्हि काव्यतो रामादिवत् प्रवर्त्तितव्यं न रावणादिवदित्यादि-कृत्याकृत्य-प्रवृत्ति-निवृत्त्युपदेशद्वारेण सुप्रतीतैव (ङ)। उक्तञ्च—

"धर्म्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्त्तिं प्रीतिञ्च साधुकाव्यनिषेवणम्॥" इति (च)।

---

अस्यापि तदेव फलमित्यर्थः। शङ्खः पाण्डुर एवेत्यादिवत् अयोगव्यवच्छेदे एवशब्दः। इति हेतोः, काव्यफलान्याह मूलकार इति शेषः। एवञ्चोक्तरूपः प्रमादो नाशङ्कनीय इत्यभिप्रायः। क्वचिद्धर्म्मप्राप्तिः क्वचिदर्थप्राप्तिरित्यादिभेदेन चतुर्वर्गप्राप्तीनां बहुत्वात् काव्यफलानीति बहुवचनम्। मूले तु जात्यपेक्षया एकवचनं प्रयुक्तम्।

(घ) काव्यस्य फलं प्रदर्शयन् तल्लक्षणनिरूपणं प्रतिजानीते चतुरिति। यतो हेतोः, न केवलं महाधियाम् अल्पधियामपि सुखादनायासात् काव्यादेव, चतुर्णां धर्म्मार्थकाममोक्षाणां वर्गः समूह एव फलं तस्य प्राप्तिर्भवति, तेन हेतुना तस्य काव्यस्य स्वमात्मा रूप्यते ज्ञाप्यते अनेनेति स्वरूपं लक्षणं निरूप्यते ज्ञाप्यते। काव्यादेव इत्येवशब्देन दुरूहवेदादिशास्त्रेभ्यः सुखाच्चतुर्वर्गफलप्राप्तिर्व्यवच्छिद्यते।

अहो! स्ववस्तुस्वभावः। यथा विपणिगतो विक्रेता शुक्तिकाबिन्दुमपि महामुक्तिकात्वेन प्रतिपादयन् मुग्धक्रेतृषु प्ररोचयति, तद्वदयमपि दर्पणकारो वेदाद्यध्यात्मशास्त्रं व्यवच्छिद्य मुक्तिसाधनतयापि मुग्धश्रोतृषु काव्यं प्ररोचयति। वस्तुतस्तु रसास्वादनिबन्धनः प्रीत्यतिशयः फलं काव्यस्य।

(ङ) काव्यस्य चतुर्वर्गसाधनत्वं युक्त्या सामान्यतः प्रतिपादयितुमाह चतुर्वर्गेति। हि तथाहि। यथा पाठशालायां शिक्षकेण कृतः स्वशिष्येषु गुणिनः पुरस्कारो दोषिणश्च तिरस्कारः परेष्वप्युपदेशतां भजते, तथा रामायणादिकाव्यमपि रामादीनां श्रेयो रावणादीनाञ्चाश्रेयो वर्णयत् परेष्वपि रामादिवद्भवितुं रावणादिवच्च न भवितुमुपदेशतां भजत इति रामादिवत् प्रवर्त्तितव्यमित्यादिसाक्षादुपदेशाभावेऽपि न क्षतिरिति बोध्यम्। रामादिवत् प्रवर्त्तितव्यमित्यादिः कृत्ये कर्त्तव्ये पितृभक्त्यादौ प्रवृत्त्युपदेशः, तथा रावणादिवन्न प्रवर्त्तितव्यमित्यादिः अकृत्यादकर्त्तव्यात् परदारहरणादितो निवृत्त्युपदेशस्तद्द्वारेण काव्यतः रामायणादेश्चतुर्वर्गप्राप्तिः सुप्रतीतैव अतिप्रसिद्धैव। अतस्तत्प्रतिपादनाय विशेषप्रयासो नावश्यक इत्याशयः। तथा च तथाविधकाव्योपदेशात् कर्त्तव्ये कर्म्मणि प्रवृत्त्युदयेन तदनुष्ठानात् धर्म्मप्राप्तिस्ततश्चार्थलाभस्तस्माच्च कामोपपत्तिः, मुक्तिस्तु तद्धर्म्मफलानभिसन्धानादित्यवधेयम्।

(च) अत्रार्थे प्राचीनानामपि सम्मतिं दर्शयितुमाह उक्तञ्चेति। न केवलं मयैतदुच्यते प्राचीनैरप्युक्तमित्यर्थः। साधुकाव्यस्य निषेवणं निर्म्माणं श्रवणञ्च कर्त्तृ, धर्म्मार्थकाममोक्षेषु वैचक्षण्यं प्राप्ति-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

किञ्च। काव्याद्धर्म्मप्राप्तिर्भगवन्नारायणचरणारविन्दस्तवादिना (छ)। "एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके च कामधुग्भवति" इत्यादिवेदवाक्येभ्यश्च सुप्रसिद्धैव। अर्थप्राप्तिश्च प्रत्यक्षसिद्धा। कामप्राप्तिश्चार्थद्वारैव। मोक्षप्राप्तिश्चैतज्जन्यधर्म्मफलाननुसन्धानात् (ज)। मोक्षोपयोगिवाक्ये व्युत्पत्त्याधायकत्वाच्च (झ)।

---

निबन्धनामभिज्ञताम्, कलासु नृत्यगीतादिचतुःषष्टिप्रकारविद्यासु च वैचक्षण्यं दर्शनश्रवणादिनिबन्धनं ज्ञानं कीर्त्तिं रचनाजनितं श्रवणजात-वाक्पटुतादिजनितञ्च यशः, प्रीतिञ्च करोति।

(छ) नन्वीदृशपारम्परिकस्य काव्यस्य धर्म्मादिप्राप्तिं प्रति कारणत्वाङ्गीकारे घटादिकार्य्यं प्रति कुम्भकारप्रपितामहादीनामपि कारणत्वापत्तिरित्यतो विशेषेण धर्म्मादिं प्रति काव्यस्य साक्षादेव कारणत्वमुपपादयितुमाह किञ्चेति। स्तवादिना काव्यान्तर्गतेनेति शेषः। आदिपदेन लक्ष्मवर्णनादिपरिग्रहः।

(ज) अथ तर्हि मेघदूतादिकाव्यानां निष्फलत्वापत्तिः स्तवाद्यभावेन धर्म्माद्यभावादित्याह एक इति। येन कविना एकोऽपि शब्दः सुप्रयुक्तः सन्तोषकरतया काव्यान्तर्निवेशितः, येन चासौ शब्दः सम्यग्ज्ञातः स कविः स च ज्ञाता स्वर्गे परलोके लोके इहलोके च कामधुग्भवति अभीष्टफलभाग्भवति। तथा च धर्म्मेणैवाभीष्टफलजननात् तथाविधकाव्यं स्वनिर्म्माणद्वारा कवेः स्वज्ञानद्वारा च ज्ञातुर्धर्म्मादिप्राप्तिं प्रति कारणमिति स्वयं वेदेनापि प्रतिपादनान्न मेघदूतादीनां निष्फलत्वमिति भावः। वेदवाक्येभ्य इति हेत्वर्थे पञ्चमीबहुवचनम्। काव्याद्धर्म्मप्राप्तिः सुप्रसिद्धैवेत्यन्वयः। अर्थप्राप्तिश्च काव्यादित्यनुषज्यते। प्रत्यक्षसिद्धा धनिभ्यः सत्काव्यश्रवणादिना निर्म्मातुर्ज्ञातुश्च। कामः स्रक्चन्दनवनितादिसम्भोगः, काव्याच्च तस्य प्राप्तिरर्थद्वारैव। अर्थेन स्रगादीनां सम्भवादित्याशयः। अत्र तु काव्यं न कामप्राप्तौ अर्थो व्यापारमात्रमिति काव्यस्य नान्यथासिद्धत्वम्, व्यापारेण व्यापारिणो नान्यथासिद्धिरिति न्यायात् "धर्म्मादर्थश्च कामश्च" इति स्मृतेश्च। मोक्षप्राप्तिश्च काव्यादित्यनुषज्यते। एतज्जन्यः काव्यजन्यो यो धर्म्मस्तस्य फलं स्वर्गादि तस्य अननुसन्धानात् निर्म्माणकाले कवेः श्रवणकाले च श्रोतुरभिलाषाभावात्। न खलु केनापि स्वर्गलाभोद्देशेन काव्यं निर्म्मीयते श्रूयते वा। निष्कामेण क्रियमाणो हि धर्म्मो मोक्षाय कल्पते "युक्तः कर्म्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्।" इति स्मृतेः।

(झ) ननु "तमेवमात्मानं विदित्वातिमृत्युमेति नान्यः पन्था विद्यते अयनाय" इति श्रुत्या "नियतकारणात्तदुच्छित्तिर्ध्वान्तवत्" इति सांख्यसूत्रादिना च तत्त्वज्ञानादेव मुक्तिरिति सर्व्वतन्त्रसिद्धान्तस्तत्कथं मुक्तिं प्रति काव्यं कारणमुच्यते अन्यथा सिद्धत्वादित्याह मोक्षोपयोगीति। मोक्षोपयोगिवाक्ये मुक्तिजनक-तत्त्वज्ञानप्रतिपादकवेदान्तवाक्ये व्युत्पत्त्याधायकत्वात् नानाविधशब्दार्थज्ञानजननद्वारा ज्ञानोत्पादकत्वात्। यथा घटादिकार्य्यं प्रति कुम्भकारादेरिच्छाकृतिचेष्टाक्रियमाणासुत्तरोत्तरजन्यत्वेऽपि व्यापारान्तर्भावान्नान्यथासिद्धत्वं तथात्रापि वेदान्तवाक्यज्ञानतज्जन्यतत्त्वज्ञानयोरपि व्यापारान्तर्भावाङ्गीकारेण मुक्तिं प्रति काव्यस्य नान्यथासिद्धत्वमिति भावः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चतुर्वर्गफलप्राप्तिर्हि (१) वेदशास्त्रेभ्यो नीरसतया दुःखादेव परिणतबुद्धीनामेव जायते। परमानन्दसन्दोहजनकतया सुखादेव सुकुमारबुद्धीनामपि पुनः काव्यादेव (ञ)।

ननु तर्हि परिणतबुद्धिभिः सत्सु वेदशास्त्रेषु काव्येषु किमिति यत्नः करणीय इत्यपि न वक्तव्यम्, कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोपशमनीयत्वे कस्य वा रोगिणः सितशर्कराप्रवृत्तिः साधीयसी न स्यात्? (ट)।

किञ्च। काव्यस्योपादेयत्वमाग्नेयपुराणेऽप्युक्तम्—(ठ)

(ञ) ननु "स्वाध्यायोऽध्येतव्य" इति विध्यादिना वेदादिशास्त्राणामेव पुरुषार्थसाधनत्वमवगम्यते मुखतस्तु काव्यादेवेत्येवकारेण पुरुषार्थसाधनतायां तेषामेव व्यवच्छेदः क्वतः कथं सङ्गच्छत इत्याह पुनश्चतुर्वर्गेति। अत्रापि हि तथाहि। वेदशास्त्रेभ्य इति बहुवचनात् शास्त्रान्तरपरिग्रहः "बहुवचनान्ता गणस्य संसूचकाः" इति न्यायात्। नीरसतया वेदादिशास्त्राणां काव्यतुल्यरसशून्यतया। दुःखादेव न तु काव्यवत् सुखादित्यर्थः। परिणतबुद्धीनामेव शास्त्रान्तरपरिशीलनात् परिपक्वबुद्धीनामेव। एवशब्देन कोमलमतीनां व्यावृत्तिः। पुनः किन्तु परमानन्दसन्दोहजनकतया निरतिशयरसास्वादेन अत्यन्तामोदपरम्पराजनकतया। सुखादेव न पुनर्वेदादिवद्दुःखादित्यर्थः। सुकुमारबुद्धीनामपि न केवलं परिणतबुद्धीनामपि तु शास्त्रान्तरप्रवेशाभावेन कोमलमतीनामपि। काव्यादेव जायत इत्यन्वयः। एवशब्देन वेदादि व्यवच्छिद्यते। तथा च न वयं वेदादिशास्त्राणां सर्वथैव चतुर्वर्गसाधनत्वं व्यावर्त्तयामः, अपि तु वेदादिशास्त्रेभ्यः परिणतबुद्धीनां कष्टसृष्ट्या धर्म्मादिलाभसत्त्वेऽपि कोमलमतीनान्तु कथमपि धर्म्मादिलाभो न भवतीति तेषां पक्षे चतुर्वर्गसाधनतायां वेदादिव्यावृत्तिरिति ब्रूम इति भावः।

(ट) आशङ्कते नन्विति। तर्हि भवतापि वेदादिशास्त्राणां धर्म्मादिसाधनत्वाङ्गीकारे कृते। वेदशास्त्रेषु "स्वाध्यायोऽध्येतव्य" इति विधिसिद्धतया निःसन्देहेन चतुर्वर्गसाधनेष्वित्याशयः। यत्नः करणीयः धर्म्मादिलाभार्थं प्रवृत्तिः क्रियेत। काव्यानां प्रकृतत्वीकृततया चतुर्वर्गसाधनत्वसन्देहादिति भावः। उक्तामाशङ्कां दृष्टान्तेन परिहरति कटुकेति। कटुकौषधपदं कष्टभक्ष्यद्रव्यमात्रपरम्, सितशर्करापदञ्च सुस्वादुद्रव्यमात्रपरम्। तथा च यथा सुस्वादुद्रव्येन रोगप्रतीकारसम्भवे रोगिणः कुस्वादुद्रव्यमपहाय सुस्वादुद्रव्यमेव भोक्तुं प्रवर्त्तन्ते, तथा धर्म्मादिप्राप्तिकामाः सर्व एव नीरसदुर्बोधतया वेदादिशास्त्रमपहाय सरससुबोधतया "एकः शब्दः सुप्रयुक्तः" इत्याद्यर्थवादात् "काव्यं कर्त्तव्यम्" "काव्यं ज्ञातव्यम्" इति कल्पनीयविधिबोधिततया च वेदादिवन्निःसन्देहेनैव चतुर्वर्गसाधनेषु काव्येषु प्रवर्त्तेरन्निति भावः।

(ठ) ननु घटे पटत्वमिव काव्ये चतुर्वर्गसाधनत्वं महाकष्टेनारोप्य भवानिव कस्तत्र प्रवर्त्तता-

(१) चतुर्वर्गप्राप्तिर्हि इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा ॥" इति (ड) ।

"त्रिवर्गसाधनं नाट्यम्" इति च (ढ) । विष्णुपुराणेऽपि—(१)

"काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च ।
शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः ॥" इति (ण) ।

तेन हेतुना तस्य काव्यस्य स्वरूपं निरूप्यते । एतेनाभिधेयञ्च प्रदर्शितम् (त) ।

---

मित्यतः प्रेक्षावत्प्रवृत्त्यर्थमाप्तवचनमपि प्रमाणयितुमाह किञ्चेति । उपादेयत्वं चतुर्वर्गसाधनोपायत्वेन उत्कृष्टबुद्ध्या ग्राह्यत्वम् ।

(ड) नरत्वमिति । लोके जगति नरत्वं दुर्लभं विशेषपुण्यसापेक्षत्वात् । तत्र नरत्वे सत्यपि विद्या शास्त्रज्ञानं सुदुर्लभा, नरत्वप्रयोजकपुण्याधिकपुण्यप्रयोज्यत्वात् । तत्र विद्यायां सत्यामपि कवित्वं दुर्लभम्; पूर्वतोऽप्यधिकपुण्याधीनत्वात् । तत्र कवित्वे सत्यपि शक्तिः कवित्वशक्तिः सुदुर्लभा अतिदुष्प्रापा, सर्वाधिकपुण्यजन्यत्वादिति भावः । रसात्मकयत्किञ्चिद्वाक्यनिर्म्मातृत्वं कवित्वम् । तच्चोद्भटकाव्यकर्त्तॄणाम् । कवित्वशक्तिस्तु रसात्मकमहावाक्यनिर्म्मातृत्वम् । तच्च रघुवंशादिग्रन्थकर्त्तॄणाम् । इत्यनयोर्भेदः ।

(ढ) नन्वेतेन कवित्वस्य कवित्वशक्तेश्च धर्म्मजन्यत्वमुक्तं न पुनः काव्यस्य धर्म्मादिजनकत्वमित्याह त्रिवर्गेति । नाट्यं नटप्रयोज्यमभिनेयं नाटकादि, त्रिवर्गस्य धर्म्मार्थकामानां साधनं जनकम् । तथा च लोकानुरञ्जकतया नाटकादिदृश्यकाव्यात् धर्म्मो जायते तस्मादर्थस्तस्माच्च काम इति भावः । समानन्यायात् नाट्यपदेन श्राव्यकाव्यस्यापि संग्रहः । इति च आग्नेयपुराणे उक्तमित्यन्वयः ।

(ण) ननु त्रिवर्गसाधनं नाट्यमित्यनेनापि काव्यस्य धर्म्मार्थकामानामेव साधनत्वमुक्तं न तु मोक्षस्येत्याह विष्णुपुराणेऽपीति । काव्येति । ये केचित् दृश्यरूपाः श्राव्यरूपा वा काव्यालापा निर्म्माणकाले कविना पठनकाले अन्येन वा उच्चार्य्यमाणानि काव्यानीत्यर्थः, अखिलानि गीतकानि च एते शब्दमूर्त्तिधरस्य महात्मनो विष्णोरंशाः शब्दमयस्यावयविनो विष्णोरवयवाः । एषामपि शब्दमयत्वादिति भावः । एते इति अंशा इति प्रकृतसमानविशेषणत्वात् पुंसा निर्द्देशः "य आधारस्तदधिकरणम्" इत्यादौ तदितिः नपुंसकादिनिर्द्देशवत् । तथा च विष्णोरंशभूतं काव्यं तदवतारो रामादिरिव सर्वसाधनार्हत्वान्मोक्षमपि साधयितुमर्हतीति सर्वं समञ्जसमिति भावः ।

(त) तेनेत्यादि मूलं व्याचष्टे तेनेति । तेन चतुर्वर्गसाधनत्वेन । एतेन चतुर्वर्गेत्यादिना मूलग्रन्थेन । अत्राभिधेयं काव्यस्वरूपादि, अभिधायकश्चायं ग्रन्थः, अनयोश्चाभिधेयाभिधायकत्वरूपः सम्बन्धः । काव्यस्य प्रयोजनन्तु चतुर्वर्गप्राप्तिः, तया च सह काव्यस्य परम्परया जन्यजनकत्वरूपः सम्बन्धः । तत्प्रयोजनेनैवास्य प्रयोजनवत्त्वमित्युक्तमेव ।

---

(१) इति च विष्णुपुराणे इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत् किंस्वरूपं तावत् काव्यमित्यपेक्षायां कश्चिदाह—(१) "तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" इति (थ)।

एतच्चिन्त्यम्। तथाहि, यदि दोषरहितस्यैव काव्यत्वाङ्गीकारः (२) तदा—(द)

"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।
धिग् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिका-विलुण्ठन-वृथोच्छूनैः किमेभिर्भुजैः॥" (ध)

---

(थ) अथ निर्दोषे प्राचीनलक्षणे सति अर्वाचीनं लक्षणान्तरमनावश्यकमिति दूषणाय प्राचीनं लक्षणजातमुत्थापयितुं काव्यलक्षणं पृच्छति तत् किंस्वरूपमिति। अपेक्षायामाकाङ्क्षायाम्। कश्चित् काव्यप्रकाशकारः। अदोषौ दुःश्रवत्वादिसमस्तदोषरहितौ, सगुणौ माधुर्य्याद्यन्यतमगुणविशिष्टौ, पुनः किन्तु, क्व कुत्रचित् अनलङ्कृती अपि, अत्र अदर्थे नञ ईषत्त्वञ्च अस्पष्टत्वमभिप्रेतम्, तथा च प्रायेणैव अनुप्रासोपमाद्यन्यतमस्पष्टालङ्कारविशिष्टौ क्वचित्तु अस्पष्टालङ्कारवपीत्यर्थः। एतेन यथा कथञ्चिदलङ्कारसत्तापि विवक्षिता। शब्दश्च अर्थश्च तौ शब्दार्थौ, तत् काव्यम्। तथा च दोषाभाववत्त्वे सति गुणालङ्कारवच्छब्दार्थत्वं काव्यत्वमिति काव्यप्रकाशमते काव्यलक्षणम्। अत्र काव्यत्वं शब्दार्थोभयपर्य्याप्तं व्यासज्यवृत्तिः। तथा च शब्दं विना काव्यत्वासम्भवेन शब्दप्रतीतिवेलायामर्थप्रतीतेरप्यावश्यकत्वान्न कश्चित् दोष इति।

(द) उक्तलक्षणं दूषयितुमाह एतदिति। एतत् काव्यलक्षणं चिन्त्यं दूष्यत्वेन भावनीयमित्यर्थः। दोषं प्रतिपादयति तथाहीति। तदा अस्य श्लोकस्येत्यादिना परेणान्वयः।

(ध) निरुक्तलक्षणस्याव्याप्तिदोषं दर्शयितुं लक्ष्यमुदाहरति न्यक्कार इति। यदा रामो लङ्कायां प्रविश्य इन्द्रजितो वधपर्य्यन्तमन्वतिष्ठत्, तदा नितान्तनिर्वेदमापन्नस्य रावणस्योक्तिरियम्। त्रिभुवनविजयिनो रावणस्य मे मम यदरयः शत्रवः सन्ति, अयमेव हि न्यक्कारो धिक्कारः। अत्र एवशब्दो हिशब्दश्च द्वयमप्येकार्थं सदत्यन्तमवधारणं सूचयति। एकमात्रशत्रुसत्तायामपि यस्य निर्वेदो जायते तस्यैव मे रामलक्ष्मणसुग्रीवादयो बहव एव शत्रवो जाता इति नास्ति निर्वेदपरिसीमेति बहुवचनेन ध्वन्यते। शत्रुः प्रबलश्चेदभवत्तदापि नेदृशं दुःखमित्याह तत्रेति। तत्रापि तेष्वरिष्वपि असौ राम एकस्तापसो नितान्तनिःस्व इत्यर्थः। अत्रैकवचनेन तुच्छभूयमेकत्वं व्यज्यते। अथेदृशोऽपि दूरे चेदतिष्ठत्तदापि नैतादृशो निर्वेद इत्याह। सोऽपि तापसः, अत्रैव मदधिष्ठितायां लङ्कायामेव तिष्ठति। अत्रेति सर्व्वनाम्ना सन्निहितस्यापि किञ्चित् कर्त्तुमशक्यत्वादात्मनो नितान्ताकर्म्मण्यत्वं सूच्यते। स तापस एव राक्षसकुलं निहन्ति। तिङ्प्रत्ययेन नासौ निश्चेष्टो वर्त्तत इति व्यज्यते। अहो आश्चर्य्यम्, रावणो जीवति। अत्रापि तिङा ईदृशे वृत्तान्ते रावणस्य मरणमुचितमिति गम्यते। अहोशब्देन च रावणे मृते सति इत्यम्भूतव्यापारे किमपि

---

(१) क्वचित् आहेति नास्ति। (२) काव्यत्वमिति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अस्य श्लोकस्य विधेयाविमर्शदोषदुष्टतया काव्यत्वं न स्यात्, (न) प्रत्युत ध्वनित्वेनोत्तमकाव्यतास्याङ्गीकृता। तस्मादव्याप्तिर्लक्षणदोषः (प)।

ननु कश्चिदेवांशोऽत्र दुष्टो न पुनः सर्वोऽपि (१) इति चेत् (फ)? तर्हि यत्रांशे दोषः सोऽकाव्यत्वप्रयोजकः, यत्र ध्वनिः स उत्तमकाव्यत्वप्रयोजक इत्यंशाभ्यामुभयत आकृष्यमाणमिदं (२) काव्यमकाव्यं वा किमपि

---

नाश्चर्यमासीत्, जीविते तु महदेवाश्चर्यमिति प्रत्याय्यते। शक्रमिन्द्रमपि जितवानिति शक्रजिन्मेघनादस्तमपि धिक् धिक् नितान्तमेव निन्दामीत्यर्थः। अत्र धिग् धिगिति वीप्सिताव्ययेन तापसमपि हन्तुमक्षमत्वादिन्द्रजितोऽप्यकर्मण्यत्वं व्यज्यते। प्रबोधितवता जागरितेन। भौवादिकस्य बुधधातोः क्तवतुप्रत्ययेन निष्पन्नमिदम्। कुम्भकर्णेन वा किं साधितम्। तथा स्वर्ग एव ग्रामटिका क्षुद्रो ग्रामस्तस्या विलुण्ठनेन विशेषतो द्रव्यजातापहरणविमर्दनादिना तथा अकारणम् उच्छूना व्यक्तविक्रमाः अनवरतघर्षणात् दृढीभूतोद्रिक्तचर्माणो वा तैः, एभिर्दीर्घैर्भुजैः विंशत्या बाहुभिर्वा किं कृतमिति शेषः। क्षुद्रग्राम इति ग्रामटी अल्पार्थे टीप्रत्ययः, ततोऽपि ह्रस्वार्थे कप्रत्ययः। अनेन प्रत्ययेन अहमीदृशो बली येन मया सुविशालोऽपि स्वर्गः क्षुद्रो ग्राम इव प्रतीत आसीदिति ध्वन्यते। विलुण्ठनेत्यत्र व्युपसर्गेण लेशत एव किञ्चिदपहृत्य न विरतम्, अपि तु विशेषेण लुण्ठनं कृतमिति सूच्यते। भुजैरिति बहुवचनेन च अल्पसंख्यकभुजसत्त्वे नैदृशं दुःखमासीत्, किन्तु विंशत्या भुजैरपि किञ्चित् कर्त्तुं न शक्यत इति नास्ति दुःखस्य परिसीमेति प्रत्याय्यते। अत्रासीषामेव पदानां ध्वन्यर्था इति स्वयमेव वृत्तिकृता चतुर्थपरिच्छेदे वक्ष्यते।

(न) अस्येति। विधेयस्य वाक्यार्थे प्रधानस्य अविमर्शः अप्राधान्येन निर्देशो विधेयाविमर्शः। तथा च "मम यदरयः अयमेव न्यक्कारः" एवंक्रमेण निर्देशोचितस्य वाक्यद्वयस्य विपरीतक्रमेण निर्देशात् प्रथमे वाक्यगतो विधेयाविमर्शदोषः। तथा वृथात्वं विधेयं तस्य च समासे गुणीभावात् वृथोच्छूनैरित्यत्र पदगतो विधेयाविमर्शः। अत्र विशेषो वक्ष्यते। काव्यत्वं न स्यात् भवन्मते निर्दोषशब्दार्थयोरेव काव्यत्वाङ्गीकारादिति भावः।

(प) अथ नास्तामस्य काव्यत्वं तेन का क्षतिरित्याह प्रत्युतेति। प्रत्युत वैपरीत्येन। अस्य श्लोकस्य ध्वनित्वेन व्यङ्ग्यार्थसत्त्वेन, उत्तमकाव्यता अङ्गीकृता "इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः।" इत्युक्त्या भवतैवेति शेषः। तस्मादुक्तदोषसत्त्वेऽपि काव्यत्वाङ्गीकारात्, अव्याप्तिनाम्ना लक्षणस्य निरुक्तकाव्यलक्षणस्य दोषः।

(फ) उक्तमव्याप्तिदोषं परिहर्त्तुं शङ्कते नन्विति। अत्र श्लोके, कश्चिदेवांशः "न्यक्कारो ह्ययमेव मे यदरयः" इत्यंशः, "वृथोच्छूनैः" इत्यंशश्चेत्यर्थः। न पुनः सर्वोऽपीति। तथा च निर्दोषमंशमादाय लक्षणसमन्वयात् काव्यत्वाङ्गीकारः, ध्वनित्वाच्चोत्तमकाव्यतापीति भावः।

---

(१) सर्व एवेति पाठान्तरम्। (२) क्वचित् इदमिति नास्ति।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न स्यात् (ब)। न च कश्चिदेवांश (१) काव्यस्य दूषयन्तः श्रुतिदुष्टादयो दोषाः, अपि तु (२) सर्वमेव काव्यम् (भ)। तथाहि काव्यात्मभूतस्य रसस्यानपकर्षकत्वे तेषां दोषत्वमपि नाङ्गीक्रियते (म)। अन्यथा नित्यदोषानित्यदोषत्वव्यवस्थापि न स्यात् (य)।

(ब) उक्तमर्थं दूषयति तर्हीति। तर्हि इत्थमंशविशेषमादाय समुदायस्य काव्यत्वाङ्गीकारे। अकाव्यत्वप्रयोजकः, लक्षणसमन्वयाभावादिति भावः। यत्र निर्दोषांशे। उत्तमकाव्यत्वप्रयोजकः, तल्लक्षणयोगादित्याशयः। अंशाभ्यां सदोषनिर्दोषभागाभ्याम् उभयत आकृष्यमाणं परस्परं व्यावर्त्त्यमानं समस्तपद्यमिति शेषः। यथा नयनमात्रगतं काणत्वं पुरुषस्य निर्दोषतां व्यावर्त्त्य काणव्यवहारप्रयोजकं भवति, तथा दुष्टांशगतमकाव्यत्वं काव्यभिन्नत्वं समस्तस्यैव पद्यस्य काव्यत्वं व्यावर्त्त्य अकाव्यत्वप्रयोजकं भवतु अन्योन्याभावस्य व्याप्यवृत्तित्वात्। यथा च मुखमात्रगतं सौन्दर्यं करगतं कुणित्वदोषं व्यावर्त्त्य पुरुषस्य सुन्दरव्यपदेशप्रयोजकं भवति तथा ध्वन्यंशगतमुत्तमकाव्यत्वं दुष्टांशगतमकाव्यत्वं व्यावर्त्त्य समस्तस्यैव पद्यस्य काव्यत्वप्रयोजकं भवतु। एवञ्च सति काव्यमकाव्यं वा किमपि न स्यात्। यथा समराय पाण्डवधार्त्तराष्ट्राभ्यामनुरुध्यमानो बलरामस्तीर्थयात्राच्छलेन उदासीन आसीत् तथेदमपि पद्यं काव्याकाव्यविलक्षणमुदासीनमास्तामिति भावः।

(भ) ननु घटगतदोषेण पटोत्कर्षव्यावृत्तेरदर्शनात् अंशान्तरगतो दोषः कथमंशान्तरस्य काव्यत्वं व्यावर्त्तयेदित्याह न चेति। दोषा दोषपदवाच्याः। सर्वमेव काव्यं काव्यत्वेनाभिमतं वाक्यं दूषयन्तः श्रुतिदुष्टादयो दोषा भवन्तीत्यर्थः। भावे क्तप्रत्ययात् श्रुतिदुष्टपदेन श्रुतिदुष्टत्वबोधः। एवमन्यत्रापि।

(म) उक्तमर्थं युक्त्या प्रतिपादयति तथाहीति। अनपकर्षकत्वे निकृष्टत्वाजनकत्वे। तेषां श्रुतिदुष्टादीनाम्। तथा च "रसापकर्षका दोषाः" इति दोषसामान्यलक्षणात् एकस्मिन्नंशे विद्यमाना अपि दोषाः काव्यत्वाभिमततत्तत्समस्तवाक्यव्यापकं रसमपकर्षयन्तीति तेषामपि तत्तत्समस्तवाक्यव्यापकतया दोषत्वमङ्गीक्रियते। एवञ्च सति "न्यक्कारो ह्ययमेव मे यदरयः" इत्यत्रैव स्थितो विधेयाविमर्शदोषः समस्तपद्यव्यापकमेव रसमपकर्षयन्तीति तस्यापि व्यापकत्वाङ्गीकारेण समस्तस्यैव पद्यस्य अकाव्यत्वप्रयोजकत्वे कापि न विप्रतिपत्तिरित्याशयः।

(य) ननु "रसापकर्षका दोषाः" इति युष्मदीयदोषलक्षणेन कथमस्मदीयं काव्यलक्षणं दूषयसि, अस्मन्मते तु "विरक्तिजनका दोषाः" इत्यमेव किञ्चिद्दोषलक्षणं वाच्यं तथा च सति निरुक्तकाव्यलक्षणे युष्मदुक्तप्रकारेण नाव्याप्तिदोषः, उदाहृतपद्यस्य प्रथमवाक्यगतेन दोषेण वाक्यान्तरगतस्य काव्यत्वस्य निराकर्त्तुमशक्यत्वादव्यापकत्वादित्याह अन्यथेति। अन्यथा रसस्यानपकर्षकत्वेऽपि श्रुतिदुष्टादीनां दोषत्वाङ्गीकारे। द्वन्द्वात् त्वप्रत्ययेन नित्यदोषत्वानित्यदोषत्वयोरित्यर्थः, व्यवस्था निरूपणं न स्यात्। तथा च ये सर्वत्रैव रसमपकर्षयन्ति ते नित्यदोषाः। यथा च्युतसंस्कारतादयः। ये च क्वचित् रसमपकर्षयन्ति क्वचिच्च नापकर्ष-

(१) किञ्चिदेवांश इत्यपि पाठः क्वचित्। (२) किं तर्हि इति पाठान्तरम्।



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यदुक्तं ध्वनिकृता—"श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः ।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः ॥" (१) (र)

किञ्च । एवं काव्यं प्रविरलविषयं वा निर्विषयं वा स्यात्, सर्वथा निर्दोषस्यैकान्तमसम्भवात् (ल) ।

ननु ईषदर्थे नञः प्रयोग इति चेत्? तर्हि ईषद्दोषौ शब्दार्थौ काव्यमित्युक्ते निर्दोषयोः काव्यत्वं न स्यात् (व) । सति सम्भवे ईषद्दोषाविति चेत्? एतदपि काव्यलक्षणे न वाच्यम्, (२) रत्नादिलक्षणे कीटानु-

यन्ति ते अनित्यदोषाः । यथा श्रुतिदुष्टत्वादयः । ते हि ऋजुवक्तृः शृङ्गारे रौद्रादिरसे च प्रत्युत गुणतामेव भजन्ते । एतच्च सप्तमपरिच्छेदे वक्ष्यते । विरक्तिमावजनकत्वेन दोषत्वाङ्गीकारे तु श्रुतिदुष्टत्वादीनां रौद्रादिरसेऽपि स्वरूपतो विरक्तिजनकत्वात् तत्रापि दोषत्वेन नित्यदोषत्वमेव स्यात् । एवञ्च सति प्राचामनित्यदोषत्वनिरूपणं विलुप्येत । अतएव "रसापकर्षका दोषाः" इति दोषलक्षणमनिच्छतापि भवता वक्तव्यमित्याशयः ।

(र) प्राचामेव युक्तिसिद्धं नित्यदोषत्वानित्यदोषत्वव्यवस्थापनं प्रदर्शयितुमाह यदुक्तमिति । ध्वनिकृता अभिनवगुप्तेन । श्रुतीति । श्रुतिदुष्टादयो ये अनित्या दोषा दर्शिताः, ते ध्वन्यात्मनि व्यङ्ग्यस्वरूपे शृङ्गारे उद्धतवाच्यऋजुवक्तृकभिन्नस्थलीयशृङ्गाररस एव हेयाः परित्याज्याः, न तु रौद्रादिरस इत्यर्थः । इतीत्थं प्रकारेणोदाहृताः ।

(ल) उक्तलक्षणे न केवलमव्याप्तिदोषः, अपि त्वसम्भवतादोष एव स्यादित्याह किञ्चेति । किञ्च अपि चेत्यर्थः । एवं निर्दोषयोरेव शब्दार्थयोः काव्यत्वाङ्गीकारे । प्रविरला अत्यल्पा विषया लक्ष्याणि यस्य तत् प्रविरलविषयं स्यात् । प्रायेणैव दोषसम्भवादित्याशयः । नन्वस्तु काव्यं प्रविरलविषयम्, तेन का क्षतिरित्याह निर्विषयमिति । निर्विषयम् एकान्तत एव लक्ष्यहीनम् । निर्दोषस्य शब्दार्थोभयस्य दृष्टचरस्येत्यर्थः । लोकं पाक इत्यादिवत् एकान्तमिति असम्भवादिति गौणक्रियाया एव विशेषणम् । अक्रमताक्लिष्टत्वादिदोषाणां सर्वत्रैव सम्भवात् निरुक्तकाव्यलक्षणे असम्भवता दोष एवेत्याशयः ।

(व) अत्र शङ्कते नन्विति । "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥" इत्यनुशासनात् अनुदरा कन्येत्यादिवत् निरुक्तलक्षणे अदोषावित्यत्र ईषदर्थे नञः प्रयोग इत्यर्थः । तथा च अदोषा प्रबलदोषाभाववन्तावित्यर्थकतया उक्तोदाहरणे विधेयाविमर्शसत्त्वेऽपि नाव्याप्तिश्च्युतसंस्कारतादीनामिव प्रबलदोषत्वादिति भावः । तर्हि नञ ईषदर्थत्वाङ्गीकारे । ईषद्दल्पौ दोषौ ययोस्तौ । निर्दोषयोः सावधानेन निर्दोषीकृत्य नूतनरचितयोः शब्दार्थयोरित्यर्थः, अन्यथा "सर्वथा निर्दोषस्यैकान्तमसम्भवात्" इत्यनेन विरोधः स्यात् । काव्यत्वं न स्यात्, तथा चाव्याप्तितादवस्थ्यमेवेति भावः ।

(१) अत्र इतिशब्दः क्वचिद्दृश्यते । (२) अवाच्यम् इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वेधादिपरिहारवत् (ञ)। नहि कीटानुवेधादयो रत्नस्य रत्नत्वं व्याहन्तुमीशा, किन्तु उपादेयतारतम्यमेव कर्त्तुम्। तद्वदत्रापि (१) श्रुतिदुष्टादयः (२) काव्यस्य (ष)। उक्तञ्च—

"कीटानुविद्धरत्नादि-साधारण्येन काव्यता।
दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः॥" (३) (स)

किञ्च। शब्दार्थयोः सगुणत्वविशेषणमनुपपन्नम्, गुणानां रसैकधर्म्मत्वस्य "ये रसस्याङ्गिनो धर्म्माः शौर्य्यादय इवात्मनः" इत्यादिना तेनैव प्रतिपादितत्वात् (ह)। रसाभिव्यञ्जकत्वेन उपचारत उपपद्यत इति चेत्?

---

(ञ) पुनः शङ्कते सतीति। सम्भवे दोषस्येति शेषः। एतेन निर्द्दोषयोः शब्दार्थयोरुक्तोदाहरणस्य च काव्यत्वं सिद्धमेवेति भावः। निराकरोति एतदपीति। सति सम्भवे ईषद्दोषावित्यपीत्यर्थः। न वाच्यं न वक्तुमुचितम्। दृष्टान्तेनावाच्यत्वं प्रतिपादयति रत्नादीति। आदिपदेन स्वर्णादीनां ग्रहणम्। कीटस्यानुवेधो दंशनम्। पुनरादिपदेन श्यामिकादिपरिग्रहः। तस्य परिहारः परित्यागः। यथा रत्नलक्षणं चिकीर्षुणा "महामूल्यतेजस्त्वं रत्नत्वम्" इत्येव लक्षणं क्रियते, कीटानुवेधादिरहितत्वे सतीति विशेषणन्तु परित्यज्यते, तथा काव्यलक्षणं चिकीर्षुणा त्वयापि "गुणालङ्कारवच्छब्दार्थत्वं काव्यत्वम्" इत्येव लक्षणं वाच्यं दोषाभाववत्त्वे सतीति विशेषणन्तु परित्याज्यमित्यर्थः।

(ष) उक्तमर्थं युक्त्या प्रतिपादयति नहीति। हि यस्मात्। व्याहन्तुम् उच्छेत्तुं न ईशा न शक्ताः। भावे यप्रत्ययादुपादेयमुत्कर्षः, तस्य तारतम्यं वैषम्यं कर्त्तुमीशा इत्यन्वयः। अत्रापि विवादविषयीभूतकाव्येऽपि विद्यमानाः श्रुतिदुष्टादयो दोषास्तस्य काव्यस्य काव्यत्वं व्याहन्तुं न ईशाः, किन्तु उपादेयतारतम्यमेव कर्त्तुमीशा इत्यन्वयः। अतएव प्रबलदोषसत्त्वे काव्यत्वव्यावृत्तये सति सम्भवे ईषद्दोषाविति वक्तुमनुचितमेव तादृशदोषस्यापि काव्यत्वव्याघातासामर्थ्यादित्याशयः।

(स) ननु प्रबलदोषसत्त्वे काव्यत्वसत्तायां किं प्रमाणमित्याह उक्तञ्चेति। प्राचीनैरिति शेषः। कीटेति। दुष्टेष्वपि दोषवत्स्वपि यत्र येषु वाक्येषु, स्फुटः स्पष्टः, रसादीनाम् अनुगमः प्रतीतिः स्यात्। आदिपदेन रसाभासभावादीनां ग्रहणम्। तेषु वाक्येषु कीटानुविद्धरत्नादीनां साधारण्येन तुलनया, कीटदष्टरत्नादिष्वपि यथा रत्नादित्वं तथेत्यर्थः, काव्यता मता अङ्गीकृता काव्यज्ञैरिति शेषः।

(ह) अथोक्तकारिकायां दुष्टेष्वपीत्यत्रापि सति सम्भवे ईषद्दोषवत्स्वपीत्यर्थौ वाच्यस्तथा च सति नोक्तोदाहरणे मदीयलक्षणस्याव्याप्तिरित्याह किञ्चेति। अनुपपन्नमसङ्गतम्। अत्र हेतुमाह गुणानामिति। तेनैव काव्यप्रकाशकारेणैव, न त्वन्येन; येनोक्तिमात्रमेव परमततया नाङ्गीक्रियेतेति भावः। आत्मनः

---

(१) तद्वदत्र इति क्वचित् पाठः। (२) श्रुतिदुष्टादयोऽपि इत्यपि पाठः। (३) अत्र इतीति क्वचिदधिकः पाठः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(च) तथाप्ययुक्तम्। तथाहि तयोः काव्यस्वरूपत्वेनाभिमतयोः शब्दार्थयो रसोऽस्ति न वा? नास्ति चेत्, गुणवत्त्वमपि नास्ति, गुणानां तदन्वयव्यतिरेकानुविधायित्वात् (क)। अस्ति चेत्, कथं नोक्तं रसवन्ताविति विशेषणम् (ख)। गुणवत्त्वान्यथानुपपत्त्या एतल्लभ्यत इति चेत्? तर्हि सरसावित्येव वक्तुं युक्तम्, न सगुणाविति (ग)। नहि प्राणिमन्तो देशा इति वक्तव्ये शौर्य्यादिमन्तो देशा इति केनाप्युच्यते (घ)। ननु

---

शौर्य्यादय इव अङ्गिनः प्रधानस्य रसस्य ये धर्मास्ते गुणाः, इत्यादिना सन्दर्भेण गुणानां रसैकधर्मत्वस्य केवलरसवृत्तित्वस्य प्रतिपादितत्वात्। तथा च ये गुणाः केवलं रस एव वर्त्तन्ते, तैर्गुणैर्विशिष्टौ शब्दार्थौ कथं स्याताम्, नहि भवति घटत्वविशिष्टः पट इति भावः।

(च) अत्र शङ्कते रसेति। शब्दस्यार्थस्य च रसाभिव्यञ्जकत्वेन हेतुना, उपचारतः परम्परासम्बन्धेन, उपपद्यते शब्दार्थयोः सगुणत्वविशेषणमिति शेषः। इत्युच्यते चेदित्यर्थः। अत्रायमर्थः—शब्दार्थयोः साक्षाद्गुणाभावेऽपि स्वाश्रयरसाभिव्यञ्जकत्वरूपपरम्परासम्बन्धेन गुणवत्त्वात् सगुणत्वविशेषणमुपपद्यत एव। स्वपदं गुणपरम्।

(क) उक्तमर्थं दूषयति तथाप्ययुक्तमिति। नास्ति चेदिति। तादृशशब्दार्थयो रसो नास्तीति चेत्त्वयोच्यत इत्यर्थः। निरतिशयसुखज्ञानरूपस्य रसस्य स्ववृत्तितावच्छेदकसमवायसम्बन्धेन आत्मन्येव सत्त्वादिति भावः। तदा गुणवत्त्वमपि नास्तीत्यर्थः। तस्य रसस्य अन्वयव्यतिरेकयोरनुविधायित्वात् अनुसारित्वात्। तथा च तत्सत्त्वे तत्सत्ता अन्वयः, तदसत्त्वे तदसत्ता व्यतिरेकः। एवञ्च सति रससत्त्वे गुणसत्ता, रसासत्त्वे गुणासत्ता, ततश्च काव्यत्वेनाभिमतयोः शब्दार्थयो रसाभावे गुणानामप्यभावात् सगुणत्वविशेषणमनुपपन्नमेवेत्याशयः।

(ख) पक्षान्तराङ्गीकरणं शङ्कते अस्ति चेदिति। काव्यत्वेनाभिमतयोः शब्दार्थयोः स्वव्यञ्जकत्वसम्बन्धेन रसोऽस्तीति त्वया चेदुच्यत इत्यर्थः। दूषयति कथमिति। तर्हीति पूरणीयम्। नोक्तमिति। काव्यत्वेनाभिमतयोः शब्दार्थयो रसवत्ताया एवात्यन्तावश्यकत्वात् रसवत्तां विना काव्यत्वानङ्गीकारादित्याशयः।

(ग) पुनः शङ्कते गुणवत्त्वेति। शब्दार्थयोः सगुणत्वस्य, अन्यथानुपपत्त्या अन्वयव्यतिरेकाभ्यां रसवत्वाभावेनासम्भवेन, एतत् रसवन्ताविति विशेषणं लभ्यत इति चेत् पुनस्त्वयोच्यत इत्यर्थः। स्पष्टमनुक्तमपि रसवन्ताविति विशेषणं तात्पर्य्याल्लभ्यते, शौर्य्यादिमन्तो देशा इत्युक्ते प्राणिमत्त्ववदिति भावः। एतेन "गुणपदेन लक्षणया रसोपस्थितिः" इति रामचरणोक्तं निरस्तम्। तात्पर्य्येणार्थविशेषोपलम्भे लक्षणाया अदर्शनात्, "पीनोऽयं वटुर्दिवा न भुङ्क्ते" इत्युक्ते अर्थाद्रात्रौ भुङ्क्ते इति प्रतीतौ केनापि लक्षणानङ्गीकरणात्। दूषयति तर्हीति। तर्हि रसवत्त्वविशेषणस्यावश्यकत्वे।

(घ) व्यतिरेकदृष्टान्तेनोक्तार्थस्य युक्तत्वं प्रतिपादयति नहीति। हि यस्मात्। शौर्य्यादिमत्त्वान्यथानुपपत्त्या प्राणिमत्त्वलाभसम्भवेऽपीति शेषः। लाघवात् स्पष्टोक्तेरेव युक्तत्वादिति भावः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शब्दार्थौ सगुणावित्यनेन गुणाभिव्यञ्जकौ शब्दार्थौ काव्ये प्रयोज्यावित्यभिप्राय इति चेत्? न, गुणाभिव्यञ्जक-शब्दार्थवत्त्वस्यापि काव्ये उत्कर्षमात्राधायकत्वम्, न तु स्वरूपाधायकत्वम् (ङ)। उक्तं हि—"काव्यस्य शब्दार्थौ शरीरम्, रसादिश्चात्मा, गुणाः शौर्यादिवत्, दोषाः काणत्वादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, अलङ्काराश्च कटककुण्डलादिवत्" इति (च)।

एतेन "अनलङ्कृती पुनः क्वापि" इति यदुक्तं तदपि परास्तम्। अस्य ह्यर्थः (१) "सर्वत्र सालङ्कारौ क्वचित्तु अस्फुटालङ्कारावपि शब्दार्थौ काव्यम्" इति। तत्र सालङ्कारशब्दार्थयोरपि काव्ये उत्कर्षमात्राधायकत्वात् (छ)। एतेन "वक्रोक्तिः काव्यजीवितम्" इति वक्रोक्तिजीवितकारोक्त-

(ङ) सगुणाविति विशेषणस्याभिप्रायान्तरं शङ्कते नन्विति। तथा चोक्तप्रकारोपदेशपरमेव सगुणाविति विशेषणम्, न तु लक्षणघटकमिति भावः। दूषयति नेति। उत्कर्षमात्राधायकत्वं केवलोत्कृष्टताजनकत्वम्। स्वरूपाधायकत्वं काव्यत्वप्रयोजकत्वम्।

(च) प्राचीनमतसंवादेनोक्तमर्थं द्रढयति उक्तमिति। हि यस्मात्। काव्यस्य पुरुषस्वरूपस्येति भावः। रसादिरित्यादिपदेन रसाभासादीनां ग्रहणम्। अवयवसंस्थानविशेषवत् यथास्थाने हस्तपदादिसन्निवेशवत्। तथा च शौर्यादयो यथा पुरुषस्य अन्यथासिद्धं पुरुषत्वं न साधयन्ति किन्तूत्कर्षमात्रमेव जनयन्ति, तथा माधुर्यादयो गुणा अपि काव्यस्य अन्यथासिद्धं काव्यत्वं न साधयन्ति किन्तूत्कर्षमात्रमेव जनयन्तीति काव्यलक्षणे उक्तोपदेशायापि सगुणाविति विशेषणमनुपपन्नमेवेत्याशयः।

(छ) विरोधिनः सावशेषस्योच्छेदौचित्यात् अनलङ्कृती पुनः क्वापीति विशेषणमपि निरस्यति एतेनेति। एतेन प्रदर्शितप्राचीनमतस्य युक्तियुक्तत्वेन सर्ववादिसिद्धत्वेन च हेतुनेत्यर्थः। परास्तं निराकृतं वेदितव्यमिति शेषः। लक्षणे लक्ष्यप्रदर्शने च दोषं दर्शयितुं तन्मतसिद्धमस्य विशेषणस्यार्थमाह अस्य ह्यर्थ इति। हि तथाहि। सर्वत्रेति एतेन तन्मते काव्यत्वेनाभिमतयोः शब्दार्थयोर्यथाकथंचिदलङ्कारसत्ताप्यावश्यकीति प्रतिपादितम्। दूषयति तत्रेति। उत्कर्षमात्राधायकत्वादिति मात्रपदेन स्वरूपाधायकत्वव्यवच्छेदः। तथा च सगुणाविति विशेषणवदनुपपन्नत्वादनलङ्कृती पुनः क्वापीति विशेषणमपि परास्तमिति भावः।

(ज) काव्ये रसाद्यपेक्षयाप्यलङ्कारस्य प्राधान्यमङ्गीकुर्वतो वक्रोक्तिजीवितकारस्य मतं प्रत्याख्यातुमाह एतेनेति। एतेन काव्ये अलङ्कारस्य उत्कर्षमात्राधायकत्वेन हेतुनेत्यर्थः। काव्यस्य जीवितं जीवनं जीवनवत् रसाद्यपेक्षया प्रधानमिति यावत्। वक्रोक्तेर्वाक्यगतवैचित्र्यस्य अलङ्काररूपत्वात्। तथा

(१) अस्यार्थं इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मपि परास्तम्, वक्रोक्तेरलङ्काररूपत्वात् (ज)। यच्च क्वचिदस्फुटालङ्कारत्वे (१) उदाहृतम् (झ)।

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढ़ाः कदम्बानिलाः।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते॥" (ञ)

एतच्चिन्त्यम्। अत्र हि विभावनाविशेषोक्तिमूलस्य सन्देहसङ्करालङ्कारस्य स्फुटत्वम् (ट)।

---

च उत्कर्षमात्रजनका अलङ्काराः कथं जीवनीभवितुमर्हन्ति काव्यस्य, नहि कटककुण्डलादयोऽलङ्काराः कस्यापि जीवनानि भवन्तीति भावः।

(झ) विरोधिनो विजये तत्पक्षपातिनोऽपि विजयौचित्यात् काव्यप्रकाशस्य मूलं काव्यलक्षणं दूषयित्वा तद्वृत्तिकृतो मम्मटभट्टस्य लक्ष्यप्रदर्शनमपि दूषयति यच्चेति। क्वचिदस्फुटालङ्कारत्वे सर्वत्रेत्यादिव्याख्यासन्दर्भस्य क्वचिदित्यादिद्वितीयप्रकारविषये, यच्चोदाहृतं वृत्तिकृतेति शेषः।

(ञ) यः कौमारेति। अपरिणीतावस्थायामेव नर्मदानदीतीरे वेतसलतावेष्टिततरुतले कृतसुरतायाः परश्च तेनैव परिणीतायास्तद्गृहगतायाः कस्याश्चित् सखीं प्रति उक्तिरियम्। यो जनः, कुमार्स्यायं भावः कौमारः कन्यावस्था तं हरति सुरतेन नाशयतीति कौमारहर आसीत्, इदानीमपि स एव हि वरः परिणेता वर्त्तते। अतएव तज्जनार्थमपि नोत्कण्ठा सम्भवतीति भावः। अत्र पर्य्यायाभ्यामेवशब्दहिशब्दाभ्यामत्यन्तावधारणसूचनेन पूर्वस्य रन्तुः कथमपि नोपपतित्वाशङ्का कर्त्तव्येति सूचितम्। ता एव तत्सजातीया एव चैत्रक्षपाश्चैत्रमासीयरात्रयः। इमा वर्त्तन्त इति शेषः। अतएव तदर्थमपि नोत्कण्ठा युज्यत इत्याशयः। ते च तत्सजातीया एव च, उन्मीलिताभिः प्रस्फुटिताभिः मालतीभिः पुष्पविशेषैः तत्संसर्गैरित्यर्थः सुरभयः सुगन्धसम्पन्नाः, प्रशस्तमूढं वहनं येषां ते प्रौढ़ा मन्दाः, वायोर्मन्दवहनस्यैव प्रशस्तत्वात्, कदम्बानिलाः धूलिकदम्बवनसञ्चारिणो वायव इदानीमपि वहन्तीत्यर्थः। अतस्तदर्थमपि नोत्कण्ठा सङ्गच्छत इति भावः। विशेषसौगन्ध्यलाभाय पुनः कदम्बपदं प्रयुक्तम्। सा चैवास्मि अहमपि तदवस्थैव युवतिरस्मि। न पुनरिदानीं ततो यौवनमपक्षीणं येनोत्कण्ठा सम्भवतीत्याशयः। तथापि तत्तत्कारणसत्त्वेऽपि, तत्र रेवारोधसि नर्मदानदीतीरे, वेतसीतरुतले वेतसलतावेष्टितपादपानामधःप्रदेशे, सुरतव्यापार एव लीलाविधिः केलिक्रिया तस्मिन् विषये, चेतः कर्त्तृ, समुत्कण्ठते उत्सुकतां व्रजति। एतेन तदानीन्तनतत्सुरतात् कश्चिदनिर्वचनीय एवामोद आसीदिति ध्वनितम्।

(ट) एतदिति। एतत्तदुदाहृतं चिन्त्यं दूष्यत्वेन चिन्तनीयम्। दोषं दर्शयति अत्रेति। हि यस्मात्। अत्र श्लोके उत्कण्ठायाः कारणाभावेऽपि तदुत्पत्तेः किं विभावना, आहोस्वित् उत्कण्ठाया

---

(१) क्वचिदस्फुटालङ्कारत्वम् इति पाठभेदः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एतेन—(ठ) "अदोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन् कीर्त्तिं प्रीतिञ्च विन्दति ॥" (ड)

इत्यादीनामपि काव्यलक्षणत्वमपास्तम् । यत्तु ध्वनिकारेणोक्तम्—"काव्यस्यात्मा ध्वनिः" इति । तत् किं वस्त्वलङ्काररसादिलक्षणस्त्रिरूपो ध्वनिः काव्यस्यात्मा उत रसादिरूपमात्रो वा ? नाद्यः, (१) प्रहेलिकादावतिव्याप्तेः (ढ) । द्वितीयश्चेत् ? ओमिति ब्रूमः (ण) । ननु यदि रसादिरूपमात्र एव ध्वनिः काव्यस्यात्मा तदा—

---

अभावस्य कारणे सत्यपि तदनुत्पत्तेर्विशेषोक्तिरिति सन्देहात्तन्मूलस्य विभावनाविशेषोक्तिनिरूपितस्य । स्फुटत्वं स्पष्टत्वम् । तस्मादस्फुटालङ्कारत्वविषये उदाहरणमप्येतदसङ्गतमेवेति भावः । न च यत्र "अनायासकृशं मध्यम्" इत्यादिवत् कारणाभावबोधकः साक्षान्नञ्प्रयोगस्तत्रैव विभावनायाः स्फुटत्वम्, यत्र च "धनिनोऽपि निरुन्मादाः" इत्यादिवत् कार्य्याभावबोधकः साक्षान्नञ्प्रयोगस्तत्रैव च विशेषोक्तेः स्फुटत्वम्, अत्र तु उभयत्रापि नञ्प्रयोगाभावात्तयोरस्फुटत्वमिति वाच्यम्, उभयत्र नञ्प्रयोगाभाव एव विभावनाविशेषोक्त्योः सन्देहसङ्करस्याङ्गीकरणीयत्वात् तथैव च तस्य स्फुटत्वात्, अन्यथा तयोः सन्देहसङ्कर एव न स्यात् । किञ्च उत्कण्ठाभावरूपं कार्य्यं प्रति स एव हि वर इत्यादीनां बहूनां कारणानामुपन्यासात् समुच्चयालङ्कारस्य स्फुटत्वमकामेनापि वाच्यमिति भ्रमविजृम्भितमेवोदाहरणम् ।

(ठ) सत्काव्यप्रशंसामात्रपरां भोजदेवकृतसरस्वतीकण्ठाभरणकारिकामेव केचित्तन्मतसिद्धकाव्यलक्षणतया निश्चिन्वन्ति, तदपि दूषयति एतेनेति । एतेन उक्तयुक्तिनिचयेन । काव्यलक्षणत्वमपास्तमिति परेणान्वयः । अस्याः कारिकाया अपि काव्यप्रकाशलक्षणसमानार्थकत्वादिति भावः ।

(ड) अदोषमिति । अदोषं गुणवत् अलङ्कारैरलङ्कृतं रसान्वितञ्च काव्यं कुर्वन् कविः, कीर्त्तिं सुख्यातिं प्रीतिमानन्दञ्च विन्दति प्राप्नोति । ईदृशस्यैव परमोत्कृष्टकाव्यत्वादिति भावः ।

(ढ) ध्वनिकारमतं दूषयितुमुत्थापयति यत्त्विति । वस्त्वलङ्काररसादयो लक्षणानि स्वरूपाणि यस्य सः । आदिपदेन रसाभासादीनां ग्रहणम् । त्रिरूपस्त्रिविधः । रसादिरूपमात्र इति मात्रपदेन वस्त्वलङ्काररूपयोर्व्यवच्छेदः । दूषयति नाद्य इति । "पानीयं पातुमिच्छामि तव कुम्भाद्वरानने ! । यदि दास्यसि नेच्छामि न दास्यसि पिवाम्यहम् ॥" इति प्रहेलिकादावित्यर्थः । यदि त्वं दासी दासभार्य्या असि, तदा शूद्रस्पृष्टत्वादेतज्जलं पातुं नेच्छामीत्यर्थः । तथा चात्र दासी असीति वस्तुध्वनिसत्त्वेनात्मसत्त्वात् काव्यत्वं स्यात् । प्रकृते तु अस्य रसपरिपन्थित्वान्न काव्यत्वमिति भावः । प्रहेलिकादावित्यादिपदेन "देवदत्तो ग्रामं याति" इत्यं वाक्यादिपरिग्रहः । तथा चात्र देवदत्तगमने तद्भृत्यानुगमनरूपवस्तुव्यङ्ग्यावगतेः काव्यत्वं स्यात् ।

(ण) द्वितीयश्चेदिति । रसादिरूपमात्रो ध्वनिः काव्यस्यात्मा इति पक्षोऽङ्गीक्रियते चेदित्यर्थः । तदा

---

(१) तत्र नाद्य इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि।
मा पहिअ! रत्तिअंधअ! सज्जाए (१) मह णिमज्जहिसि॥" (त)

इत्यादौ वस्तुमात्रस्य व्यङ्ग्यत्वे (२) कथं काव्यव्यवहार इति चेत्? (३) अत्रापि रसाभासवत्तयैव (४) ब्रूमः। अन्यथा "देवदत्तो ग्रामं याति" इति वाक्ये तद्भृत्यस्य तदनुसरणरूपव्यङ्ग्यावगतेरपि काव्यत्वं स्यात्। अस्त्विति चेत्? न, रसवत एव काव्यत्वाङ्गीकारात् (थ)।

"काव्यस्य प्रयोजनं हि रसास्वादसुखपिण्ड-(५) दानद्वारेण वेदशास्त्रविमुखानां सुकुमारमतीनां राजपुत्रप्रभृतीनां विनेयानां रामादिवत् प्रवर्त्तितव्यं न रावणादिवदित्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशः" इति चिरन्तनैरप्युक्तत्वात् (द)। तथा चाग्नेयपुराणेऽप्युक्तम्—

---

वयमपि ओमिति स्वस्तीति ब्रूमः तत्पक्षमङ्गीकुर्म्म इत्यर्थः "वाक्यं रसात्मकं काव्यम्" इति लक्षणस्यैव वक्ष्यमाणत्वादित्याशयः। ओमिति स्वीकारार्थमव्ययम्। तथा च रसस्य परिपन्थित्वान्न प्रहेलिकायां रसाभावाच्च न "देवदत्तो ग्रामं याति" इत्यादिवाक्ये अतिव्याप्तिरिति बोध्यम्।

(त) उभयमतं प्रत्येव तृतीयपक्षः शङ्कते नन्विति। "श्वश्रूरत्र निमज्जति अत्राहं दिवसकं प्रलोकय। मा पथिक! रात्र्यन्धक! शय्यायां मम निमङ्क्ष्यसि॥" इति संस्कृतानुवादः। पूर्वं रात्रौ रमणाय स्वसमीप एकशय्याशायिनीं श्वश्रूं विधृत्यानर्थकारिणं प्रवासिनं रात्र्यन्धत्वेन परिचाययितात्मानम् उपपतिं प्रति कुलटाया उक्तिरियम्। अत्र शय्याया अस्मिन् पार्श्वे, अत्ता श्वश्रूः निमज्जति गाढनिद्रया जलमग्नेव तिष्ठति। अतएव ततो न किञ्चिदाशङ्कनीयमिति भावः। अत्र अस्मिन् पार्श्वे अहं स्वपिमीति शेषः। दिवसकम् एतद्दिनं प्राप्यैव प्रलोकय प्रलोक्य दृष्ट्वा अवधारयेत्यर्थः। तेन किमित्याह—हे पथिक! प्रवासिन्! रात्र्यन्धक! मम शय्यायां मा निमङ्क्ष्यसि इतस्ततो न विलुठिष्यसि। दिन एवावधारणस्य तदेव फलमिति भावः।

(थ) इत्यादाविति। वस्तुमात्रव्यङ्ग्यत्वे शय्याया यथास्थानप्रवेशरूपध्वनिसत्त्वरसरूपध्वन्यभावे चेत्यर्थः। समाधत्ते अत्रापीति। रसाभाववत्तयैव शृङ्गाररसाभासरूपध्वनिसत्त्वेनैव काव्यव्यवहार इति ब्रूम इत्यर्थः। तथा चात्र रतेरुपपतिगतत्वात् शृङ्गाररसाभासः। तच्च "उपनायकसंस्थायाम्" इत्यादिना वक्ष्यति। अन्यथा रसाद्यभावेऽपि वस्त्वलङ्कारध्वनिसत्त्वेन काव्यत्वाङ्गीकारे। काव्यत्वं स्यादिति। तथा चातिव्याप्तिरिति भावः। एतच्च प्रहेलिकादावतिव्याप्तेरित्यस्यैव प्रपञ्चार्थमुक्तम्। रसवत एव वाक्यस्येति शेषः।

---

(१) रत्तिअंधिय! सेज्जाइं इति पाठभेदौ। (२) वस्तुमात्रव्यङ्ग्यत्वे इति क्वचित् पाठः।
(३) चेन्न इत्यपि पाठः क्वचित्। (४) रसाभासवत्तयैवेति ब्रूम इति पाठान्तरम्।
(५) रसास्वादरूपसुखपिण्डेति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्।" इति (ध)। व्यक्तिविवेककारेणाप्युक्तम्—"काव्यस्यात्मनि अङ्गिनि (१) रसादिरूपे न कस्यचिद्विमतिः" इति। ध्वनिकारेणाप्युक्तम्—"न हि कवेरितिवृत्तमात्रनिर्वाहेणात्मलाभ इतिहासादेरेव तत्सिद्धेः" इत्यादि (न)।

ननु तर्हि प्रबन्धान्तर्वर्त्तिनां केषामपि नीरसानां पद्यानां काव्यत्वं न स्यादिति चेत्? न, (२) रसवत्पद्यान्तर्गतनीरसपदानामिव पद्यरसेन प्रबन्ध-

(द) अत्र प्राचीनसंवादमाह काव्यस्येति। हि तथाहि। काव्यस्य प्रयोजनम्, उपदेश इति परेणान्वयः। रसस्यास्वादो बोध एव सुखपिण्डं स्तूपीकृतं सुखं तस्य दानद्वारेण। अस्याप्युपदेश इति परेणान्वयः। वेदशास्त्रविमुखानाम् आपाततः कठिनतया वेदादिशास्त्रेभ्यो निवृत्तानाम्। विनेयानां नानाविषयेषु शिक्षणीयानाम्। तथा च रसास्वादनियन्त्रननिरतिशयसुखानुभवात् सुकुमारमतीनां प्रथमतः काव्ये प्रवृत्तिः, परञ्च दुरूहेषु वेदादिशास्त्रेषु। उक्तञ्च "स्वादुकाव्यरसोन्मिश्रं वाक्यार्थमुपभुञ्जते। प्रथमालीढमधवः पिबन्ति कटु भेषजम्॥" चिरन्तनैः प्राचीनैः। एवञ्च नीरसवाक्यस्य काव्यत्वे उक्तप्राचीनोक्तिविरोध इति भावः।

(ध) अस्मन्मतमेतदार्षसपीत्याह तथा चेति। वाचां वैदग्ध्यं वैचित्र्यं प्रधानं गुणाद्यपेक्षया श्रेष्ठं यत्र तादृशेऽपि, अत्र काव्ये रस एव जीवितं जीवनम्, न पुनरलङ्कारादिर्जीवनमित्यर्थः।

(न) बहुतरप्राचीनानामपि स्वपक्षतां दर्शयितुमाह व्यक्तीति। आत्मनि आत्मस्वरूपे, अतएव अङ्गिनि अलङ्कारादिसर्वापेक्षया प्रधाने रसादिरूपे। आदिपदेन रसाभासादिपरिग्रहः। विमतिरसम्मतिः, रसादीनां काव्यस्यात्मतयाङ्गीकारे न कस्याप्यसम्मतिरस्तीत्यर्थः। इतिवृत्तमात्रनिर्वाहेण केवलवृत्तान्तावलीकथनेन, कवेर्नात्मलाभो न कवित्वप्राप्तिः, इतिहासादेरेव सकाशात् तस्य इतिवृत्तनिर्वाहस्य सिद्धेः। तथा च रसवद्वाक्येन वर्णयिता कविः, नीरसवाक्येन वर्णयिता इतिहासकर्त्ता, एवञ्च सति कविवाक्यस्यैव प्रधानतया रसवत्त्वेन काव्यत्वमिति भावः।

(प) रसवद्वाक्यस्य काव्यत्वाङ्गीकारेऽपि अव्याप्तिमाशङ्कते नन्विति। तर्हि रसवद्वाक्यस्यैव काव्यत्वाङ्गीकारे। प्रबन्धान्तर्वर्त्तिनां रघुवंशादिग्रन्थान्तर्गतानां "वैवस्वतो मनुर्नाम माननीयो मनीषिणाम्। आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव॥" इत्यादीनां पद्यानामित्यर्थः। अत्र पद्यपदं वाक्यमात्रोपलक्षणं तेन गद्यस्यापि संग्रहः। उत्तरत्राप्येवम्। काव्यत्वं न स्यादिति। तथा च भवदीयकाव्यलक्षणेऽप्यव्याप्तिरिति भावः। समाधानमाह नेति। पद्यरसेन प्रबन्धरसेन चेत्युभयत्रैव धान्येन धनवानित्यादिवदभेदे तृतीया। तेषां नीरसपद्यानाम्। "शून्यं वासगृह"मित्यादि वक्ष्यमाणं रसवत् पद्यम्, तत्र च परिचुम्ब्येत्यादीनि सरसपदानि, तेषामेव साक्षाद्रसव्यञ्जकत्वात्। शून्यमित्यादीनि तु नीरसपदानि, तेषां साक्षाद्रसव्यञ्जकत्वाभावात्। तथा च यथा तत्पद्यरसेन तत्र स्थितानां नीरसपदानामपि स्वव्यञ्जकपदप्रतिपाद्य-

(१) अङ्गिनि इति क्वचित् पाठः। (२) क्वचित् नञ् न दृश्यते।



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रसेनैव तेषां रसवत्ताङ्गीकारात्, (प) यत्तु नीरसेष्वपि गुणाभिव्यञ्जकशब्दार्थ-(१)सद्भावाद्दोषाभावादलङ्कारसद्भावाच्च काव्यव्यवहारः, स रसादिमत्काव्य-बन्धसाम्याद्गौण एव (फ)।

यत्तु वामनेनोक्तम्—"रीतिरात्मा काव्यस्य" इति, तन्न, रीतेः सङ्घटना-विशेषत्वात् सङ्घटनायाश्च (२) अवयवसंस्थानरूपत्वात्, आत्मनश्च तद्भिन्नत्वात् (ब)। यच्च ध्वनिकारेणोक्तम्—

"अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ॥" इति (भ)।

तत्र वाच्यस्यात्मत्वं (३) "काव्यस्यात्मा ध्वनिः" इति स्ववचनविरोधा-देवापास्तम् (म)।

---

पद्यप्रतिपादकत्वसम्बन्धेन रसवत्त्वम्, तथा ग्रन्थरसेनैव तदन्तर्गतानां नीरसपद्यानां स्वव्यञ्जकपद्यप्रतिपाद्यग्रन्थ-प्रतिपादकत्वसम्बन्धेन रसवत्त्वमिति भावः। एवं गद्येष्वप्यूह्यम्।

(फ) नन्वेवमपि "क्रूरः क्रूरमयं पश्येत् साधुः साधुमयं जगत्। दर्पणेन यथा जन्तुः स्वीय-माकारमीक्षते॥" इत्यादिषु ग्रन्थानन्तर्गतेषु नीरसेषु उद्भटकाव्येष्वव्याप्तिरित्याह यत्त्विति। स्तोकं पाक इत्यादौ स्तोकमित्यादेरिव यदित्यस्य व्यवहार इति गौणक्रियाया विशेषणत्वेनैव क्लीवत्वम्। गौणक्रियाया आतिदेशिकद्रव्यत्वाभिप्रायेण तु स्तोकः पाक इत्यादिवत् परत्र स इति व्यवहारविशेषणत्वेनैव पुनः पुंसा निर्देशः। एतच्च "द्वितीयाकारकविधावेकाधिकरणं धातोः" इति सूत्रे श्रीपतिना प्रतिपादितम्। एतेन व्यवहार इत्यस्य विशेषणत्वेन यदिति क्लीवत्वानुपपत्तिशङ्कया "यदित्यव्ययं य इत्यर्थे" इति रामचरणेनोक्त-मपास्तम्, उक्तप्रकारसदुपाये सम्भवति अहेत्वर्थकयदित्यव्ययस्वीकारस्यान्याय्यत्वात्। नीरसेष्वपि "क्रूरः" इत्याद्युद्भटश्लोकेषु। रसादिमत्काव्येषु यो बन्धो गुणादीनां योजनं तत्साम्यात् तादृशगुणादियोगादित्यर्थः।

(ब) पुनरपि विरुद्धं प्राचां मतं दूषयति यत्त्विति। अवयवसंस्थानरूपत्वात् यथास्थाने हस्तपदाद्यङ्गसन्निवेशरूपत्वादित्यर्थः। प्राणिनः शरीरस्य यथास्थाने हस्तपदाद्यङ्गसन्निवेश इव काव्यशरीरस्य वाक्यस्य यथास्थाने पदविशेषसन्निवेशो हि रीतिः, सा च कथमपि तस्यात्मा भवितुं नार्हतीति भावः।

(भ) ध्वनिकारेण यदन्यविधोऽपि काव्यस्यात्मा निरूपितस्तदपि दूषयितुमाह यच्चेति। सहृदयैः-मनस्विभिः श्लाघ्यः प्रशस्यः योऽर्थः काव्यात्मा व्यवस्थितः काव्यस्यात्मत्वेन बुधैर्निरूपितः, तस्यार्थस्य वाच्य-प्रतीयमानाख्यौ उभौ द्वौ भेदौ स्मृतौ। तथा च वाच्यः अभिधेयस्वरूप एको भेदः, अपरश्च प्रतीयमानो लोकप्रतीतिमात्रसाक्षिको लक्ष्यव्यङ्ग्योभयात्मको भेद इत्यर्थः। शक्यार्थस्येश्वरेच्छाधीनत्वात् लक्ष्य-व्यङ्ग्ययोस्तु तदनधीनत्वात् ईदृशो विभाग इति बोध्यम्।

---

(१) वर्ण·· इति पाठान्तरम्। (२) सङ्घटनाविशेषत्वात् सङ्घटनायाश्च इति क्वचित् पाठः।
(३) अत्र वाच्यात्मत्वम् इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत् किं पुनः काव्यम्? इत्युच्यते—(य)

३। वाक्यं रसात्मकं काव्यम्। (र)

रसस्वरूपं निरूपयिष्यामः। रस एवात्मा साररूपतया जीवनाधायको यस्य, (१) तेन विना तस्य काव्यत्वानङ्गीकारात् (ल)। रस्यत इति रस इति व्युत्पत्तियोगाद्भावतदाभासादयोऽपि गृह्यन्ते (व)। तत्र रसो यथा—

"शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।

(म) दूषयति तत्रेति। अत्र वाच्यपदं लक्ष्यस्याप्युपलक्षणम्। तथा च वाच्यस्य शक्यार्थस्य लक्ष्यार्थस्य च आत्मत्वं काव्यात्मत्वम्। स्ववचनस्य विरोधाद्विसंवादाद्भिन्नार्थप्रतिपादकत्वादेव अपास्तम्, न तदर्थं युक्त्यन्तरं मया प्रदर्शनीयमित्यर्थः। तथा चैकस्मिन्नेव विषये परस्परभिन्नार्थवचनविन्यासेन वक्तुरुन्मत्तताप्रत्ययात् क्वापि न विश्वासः स्यादिति भावः। एतेन रसादिरूपव्यङ्ग्यार्थमात्रस्य काव्यात्मत्वमभिप्रेतञ्चेत्तदा तदेव स्वमतमिति सूचितम्।

(य) तदिति। तत्तस्मात् प्राचीनकाव्यलक्षणानां सदोषत्वात् किं पुनः काव्यं किं प्रकारं निर्दोषं काव्यलक्षणमित्यर्थः।

(र) अथ स्वाभिमतं काव्यलक्षणं दर्शयति वाक्यमिति। रसात्मकं वाक्यं काव्यम्। तथा च व्यञ्जकतासम्बन्धेन रसादिमद्वाक्यत्वं काव्यत्वम्। एवञ्च दोषालङ्कारसत्तायां तदसत्तायां वा औदासीन्यात् "न्यक्कारो ह्ययमेव मे यदरयः" इत्यादिषु सदोषेषु "यः कौमारहरः" इत्यादिषु अस्फुटालङ्कारवत्सु च वाक्येषु नाव्याप्तिः। रसाद्यभावाच्च "देवदत्तो ग्रामं याति" इत्यादिषु नातिव्याप्तिः।

(ल) लक्षणघटकरसस्वरूपजिज्ञासायामाह रसस्वरूपमिति। रसात्मकमित्यस्यार्थं विवृणोति रस एवेति। अत्र एवशब्देन ध्वनिरीत्यर्थानां प्राचीनाभिमतकाव्यात्मत्वव्यवच्छेदः। साररूपतया निरतिशयानन्दस्वभावत्वात् गुणादिसर्वापेक्षया उत्कृष्टरूपतया, जीवनाधायकः काव्यस्वरूपप्रयोजको यस्य तत् रसात्मकमिति शेषः। तेन रसेन। तस्य वाक्यस्य। काव्यत्वानङ्गीकारात् "वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्" इत्यादियुक्तियुक्त-प्राचीनमतानुसारिणो ममापि मत इति शेषः।

(व) ननु केवलरसात्मकवाक्यस्य काव्यत्वे भावाद्यात्मकवाक्येष्वव्याप्तिस्तेषामपि प्राचीनैः काव्यत्वाङ्गीकारादित्याह रस्यत इति। रस इति "रस आस्वादनस्नेहनयोः" इति चौरादिकरसधातोर्भावे अच्। व्युत्पत्तियोगात् धात्वर्थानुसारेणास्वादविषयत्वलाभादित्यर्थः। भावः तयो रसभावयोराभासश्च आदौ येषां ते। गृह्यन्ते, तेषां भावादीनामप्यास्वादविषयत्वादिति भावः।

(१) अस्य इति क्वचित् पाठः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥" (श)

अत्र हि सम्भोगशृङ्गाराख्यो रसः (ष)।

भावो यथा महापात्रराघवानन्दसान्धिविग्रहिकाणाम्—(स)

"यस्यालीयत शल्कसीम्नि जलधिः, पृष्ठे जगन्मण्डलम्,
दंष्ट्रायां धरणी, नखे दितिसुताधीशः पदे रोदसी ।
क्रोधे क्षत्रगणः, शरे दशमुखः, पाणौ प्रलम्बासुरः,
ध्याने विश्वमसावधार्मिककुलं कस्मैचिदस्मै नमः ॥" (ह)

---

(श) शून्यमिति । बाला नवविवाहिता वधूः, वासगृहं शून्यं सखीजनादिरहितं विलोक्य, शनैः मन्दं निःशब्दं यथा स्यात्तथा शयनात् शय्यातः किञ्चिदुत्थाय ईषत् पूर्वं कायमुत्तोल्य, निद्राव्याजमुपागतस्य प्रियायाः कार्य्यपरीक्षार्थं कृतनिद्रामाश्रितस्य पत्युर्मुखं चिरं बहुक्षणं निर्वर्ण्य दृष्ट्वा विस्रब्धं निःशङ्कं यथा स्यात्तथा परिचुम्ब्य तदेव पत्युर्मुखमित्यर्थः, गण्डस्थलीं पत्युस्तं कपोलदेशं जातपुलकाम् आत्मनश्चुम्बनात् सञ्जातरोमाञ्चाम् आलोक्य लज्जया नम्रमुखी स्थिता सती, हसता प्रियेण तेन पत्या चिरं चुम्बिता ।

(ष) अत्र को नाम रस इत्याह अत्रेति । हि तथाहि । अस्य विशेषो रसविवेचनप्रकरणे वक्ष्यते ।

(स) भावमुदाहर्त्तुमाह भाव इति । महापात्रो महामन्त्री । "पात्रन्तु भाजने योग्ये स्रुवादौ राजमन्त्रिणि ।" इति मेदिन्युक्तेः । सन्धिविग्रहयोरधिकारे नियुक्त इति सान्धिविग्रहिकः । पदत्रये कर्म्मधारयसमासद्वयम् । राममिश्र इत्यादौ मिश्रादिपदवत् सान्धिविग्रहिकपदस्य उपाधिविशेषत्वेन विशेष्यत्व-विवक्षया परनिपातः । गौरवाच्च बहुवचनम् । एवमन्यत्रापि ।

(ह) यस्येति । यस्य नारायणस्य मत्स्यावतारे शल्कसीम्नि गात्रचर्म्मकप्रान्ते जलधिः सागरः अलीयत अयुज्यत, सागरस्य तन्मात्रसम्बन्धात् । यस्य कूर्म्मावतारे पृष्ठे जगन्मण्डलम् अलीयत लग्नमभवत्, तत्रैव जगतोऽवस्थानात् । यस्य वराहावतारे दंष्ट्रायां दन्तमण्डले धरणी पृथिवी अलीयत क्षुद्रवस्तुव-दवातिष्ठत, सागरतो दंष्ट्रयैव धरण्या उत्तोलितत्वात् । एतेन शल्कसीमपृष्ठदंष्ट्राणां निरतिशयबृहत्त्वं सूचितम् । यस्य नरसिंहावतारे नखे दितिसुताधीशो दैत्यपतिर्हिरण्यकशिपुः अलीयत लयमगच्छत्, नखेनैव निहतत्वात् । यस्य वामनावतारे पदे चरणे रोदसी स्वर्गमर्त्त्यौ अलीयेतां लीने अभवताम्, पद्भ्यामिव स्वर्गमर्त्त्ययोर्व्याप्तत्वात् । अत्र अलीयतेत्यस्य वचनव्यत्ययेनान्वयः । यस्य परशुरामावतारे क्रोधे क्षत्रगणः अलीयत लयं प्राप्नोत्, क्रोधेनैव विनाशितत्वात् । यस्य रामावतारे शरे बाणे दशमुखो रावणः अलीयत लयमगच्छत्, बाणेनैव व्यापादितत्वात् । यस्य बलरामावतारे पाणौ हस्ते प्रलम्बासुरः अलीयत लयमलभत, तस्यापि हस्तेनैव हतत्वात् । यस्य बौद्धावतारे ध्याने विश्वं जगत् अलीयत लीनम् अन्तर्गत-मभवत्, ध्यानेन विषयीकृतत्वात् । यस्य च भगवतः कल्किनामावतारे असौ तरवारौ अधार्म्मिककुलं

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र भगवद्विषया रतिर्भावः (च)। रसाभासो यथा—

"मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्त्तमानः।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः॥" (क)

अत्र हि सम्भोगशृङ्गारस्य तिर्य्यग्विषयत्वाद्रसाभासः। एवमन्यत् (ख)। दोषाः पुनः काव्ये किंस्वरूपाः? इत्युच्यन्ते—(ग)

## ४। दोषास्तस्यापकर्षकाः। (घ)

श्रुतिदुष्टापुष्टार्थत्वादयः काणत्वखञ्जत्वादय इव शब्दार्थद्वारेण देहद्वारेणेव व्यभिचारिभावादेः स्वशब्दवाच्यत्वादयो मूर्खत्वादय (१) इव साक्षात् काव्यस्यात्मभूतं रसमपकर्षयन्तः काव्यस्यापकर्षका उच्यन्ते (२) (ङ)।

म्लेच्छसमूहः अलीयत लयमगच्छत्, तेनैव छिन्नत्वात्। अत्र कल्किरूपस्य भावित्वेऽपि अतीतकल्पाभिप्रायेण अलीयतेत्यतीतनिर्देशः। कस्मैचिदनिर्वचनीयाय अस्मै नारायणाय नमः।

(च) अत्र कीदृशो भाव इत्याह अत्रेति। भगवान् नारायण एव विषयो यस्याः सा तथोक्ता, रतिरनुरागो भावशब्दवाच्यः। अस्यापि लक्षणं वक्ष्यते।

(क) मध्विति। कुमारसम्भवे वसन्तवर्णनमिदम्। स्ववाचके भ्रमरशब्दे द्वौ रेफौ यस्य स द्विरेफो भ्रमरः, स्वां प्रियां भ्रमरीम् अनुवर्त्तमानः पक्षपवनेन शुश्रूषमाणः सन्, कुसुममेव एकं पात्रं भाजनं तस्मिन्, मधु तत्कुसुमरसं पपौ। कृष्णसारो हरिणविशेषश्च शृङ्गेण स्पर्शेन आत्मनः स्पर्शसुखेन निमीलिते मुद्रिते अक्षिणी चक्षुषी यया तां मृगीं प्रियां हरिणीम्, अकण्डूयत गात्रकण्डूयनेन शुश्रूषितवानित्यर्थः।

(ख) कथमत्र रसाभास इत्याह अत्रेति। हि तथाहि। तिर्य्यग्विषयत्वात् मनुष्येतरप्राणिगतत्वात्। रसाभासस्यापि लक्षणं वक्ष्यते। अन्यत्रावाभासादीनाप्युदाहरणम् एवमूह्यमित्यर्थः। तच्च तृतीयपरिच्छेदे द्रष्टव्यम्।

(ग) परवाचा परिचयानन्तरमाश्रयणीयजनस्य दोषगुणादिजिज्ञासावत् काव्यस्वरूपे ज्ञाते स्वभावत एव तद्गतदोषगुणादीनां जिज्ञासा जायते, एवञ्च तेषामपि वक्तव्यत्वे प्रथमं दोषावलम्बनेनैव काव्यप्रकाशलक्षणस्य दूषितत्वात् श्रोतुरपि तत्रैव प्रथममाकाङ्क्षोदयात् तामेवाकाङ्क्षामाह दोषाः पुनरिति। दोषाः किंस्वरूपाः सन्तः काव्ये अवतिष्ठन्त इत्यर्थः।

(घ) दोषा इति। "वाक्यं रसात्मकं काव्यम्" इत्यत्र काव्यमित्यस्य परपाठेन सन्निधानात् विधेयत्वेन प्राधान्याच्च अत्र तत्पदेन काव्यमेव परामृश्यते। एतच्च वृत्तिकारोऽपि "काव्यस्यापकर्षका उच्यन्ते" इत्यनेन स्वयमेवानुपदमाह। तथा च दोषास्तस्य काव्यस्य अपकर्षका रसाद्यपकर्षजननद्वारा अपकर्षजनकाः सन्तः अवतिष्ठन्त इत्यर्थः।

(१) मूर्खतादय इति पाठान्तरम्। (२) इत्युच्यन्ते इत्यपि पाठः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एषां विशेषोदाहरणानि वक्ष्यामः । गुणादयः किंस्वरूपाः ? इत्युच्यन्ते—(च)

**५ । उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः ॥ (छ)**

गुणाः शौर्यादिवत्, अलङ्काराः कटककुण्डलादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, देहद्वारेणेव शब्दार्थद्वारेण तस्यैव (१) काव्यस्यात्मभूतं रसमुत्कर्षयन्तः काव्यस्योत्कर्षका उच्यन्ते (२) (ज) । इह यद्यपि गुणानां रसधर्मत्वं तथापि गुणशब्दोऽत्र गुणाभिव्यञ्जकशब्दार्थयोरुपचर्य्यते । अतश्च "गुणाभिव्यञ्जकाः शब्दा रसस्योत्कर्षकाः" इत्युक्तं भवतीति प्रागेवोक्तम् (झ) । एषामपि विशेषोदाहरणानि वक्ष्यामः ।

---

(ङ) मूलोक्तमर्थं विवरणेनोपपादयति श्रुतीति । काणत्वखञ्जत्वादयो देहधर्मा इति साक्षात्सम्बन्धेनात्मनमपकर्षयितुं नार्हन्ति, अतस्ते यथा देहद्वारेण स्वाश्रयाश्रितत्वरूपपरम्परासम्बन्धेनात्मानमपकर्षयन्ति, तथा काव्यस्य शरीरत्वेनाभिमतयोः शब्दार्थयोर्धर्माः श्रुतिदुष्टत्वापुष्टार्थत्वादयः साक्षात्सम्बन्धेन रसादीनपकर्षयितुं नार्हन्तीति शब्दार्थद्वारेण स्वाश्रयाश्रितत्वरूपपरम्परासम्बन्धेन रसादीनपकर्षयन्ति । एवं यथा आत्मगता मूर्खत्वादयः साक्षाद्वृत्तितावच्छेदकसमवायसम्बन्धेनैवात्मनमपकर्षयन्ति, तथा रसादिगता व्यभिचारिभावादेः स्वशब्दवाच्यत्वादयो दोषाः साक्षाद्वृत्तितावच्छेदकस्वरूपसम्बन्धेनैव रसादीनपकर्षयन्तीत्यर्थः । रसमपकर्षयन्तो रसस्य निकृष्टतां जनयन्तः । तथा च रसस्य उत्कर्षापकर्षाधीनावेव काव्यस्योत्कर्षापकर्षाविति भावः ।

(च) काव्ये दोषावस्थानप्रकाराकाङ्क्षानिवृत्त्यनन्तरं तथैव श्रोतुर्गुणाद्यवस्थानप्रकाराकाङ्क्षामाह गुणादय इति । गुणादयः काव्ये किंस्वरूपाः सन्तोऽवतिष्ठन्त इति पूर्ववदेवार्थः ।

(छ) उत्कर्षेति । अत्रापि तस्येत्यनुषज्यते । तथा च तस्य काव्यस्य उत्कर्षहेतव इत्यर्थः ।

(ज) उत्कर्षहेतुत्वञ्च युक्त्या प्रतिपादयितुमाह गुणा इति । शौर्यं नामात्मगतो वैरिविजयाद्युद्यमः । आदिपदेन सत्साहसादीनां ग्रहणम् । अत्रापि पूर्ववदेवार्थ ऊहनीयः ।

(झ) ननु गुणानां रसधर्मत्वेन नीरसवाक्ये गुणाभावेऽपि कथं गुणव्यवहार इत्याह इहेत्यादि । उपचर्य्यते लक्ष्यते । तथा चात्र गुणपदं गुणाभिव्यञ्जकशब्दार्थपरम् । अतश्च उक्तप्रकारलक्षणाङ्गीकाराच्च । प्रागेवोक्तं सगुणत्वविशेषणदूषणप्रकरणे "गुणाभिव्यञ्जकशब्दार्थवत्त्वस्यापि काव्ये उत्कर्षमात्राधायकत्वम्" इत्यनेनेत्यर्थः ।

---

(१) तमेव इति क्वचित् पाठः । (२) इत्युच्यन्ते इति पाठभेदः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति श्रीमन्नारायणचरणारविन्दमधुव्रत-साहित्यार्णव-
कर्णधार-ध्वनिप्रस्थापन-परमाचार्य्य-कविसूक्तिरत्ना-
कराष्टादशभाषा-वारविलासिनीभुजङ्ग-सान्धि-
विग्रहिक-महापात्र-श्रीविश्वनाथ-कवि-
राजकृतौ साहित्यदर्पणे काव्य-
स्वरूपनिरूपणं नाम प्रथमः
परिच्छेदः ॥०॥ (ञ)

—०—

(ञ) इतीति। श्रीमतो नारायणस्य चरणमेव अरविन्दं पद्मं तस्य मधुव्रतो भ्रमरः, सततत्-सेवनात्। साहित्यं काव्यमेव अर्णवः गभीरत्वादतिविशालत्वाच्च समुद्रः तस्मिन् कर्णधारो नाविकः, तदुत्तारणात्। ध्वनिप्रस्थापनो ध्वन्यात्मककाव्यपथप्रदर्शकः। परमाचार्य्यो महानध्यापकः। कवीनां सूक्तयः शोभना वाच एव रत्नानि तेषामाकरः, ज्ञानेन तद्धारणात्, अशेषकाव्यज्ञ इत्यर्थः। शौरसेन्यादयः अष्टादश-भाषा एव वारविलासिन्यो गणिकास्तासु भुजङ्गो विटः, सर्व्वदा तत्परत्वात्, समस्तभाषाभिज्ञ इत्यर्थः। सान्धिविग्रहिकः कस्यचिन्नृपतेः सन्धिविग्रहयोरधिकारे नियुक्तः। अतएव महापात्रः प्रधानामात्यः, उत्कृष्ट-सम्प्रदानब्राह्मणो वा। विश्वनाथो विश्वनाथनामा। कवीनां राजा श्रेष्ठः कविराज इति गुणप्रयुक्तो व्यक्तिगत उपाधिः कलापचन्द्रप्रणेतुः सुषेणशर्म्मणः कविराजोपाधिवत्, न तु वैद्यजातिमात्रायत्तः कविराजेत्युपाधिः, महामात्यतया उत्कृष्टसम्प्रदानतया वा ब्राह्मणत्वस्यैवावधारणात्। साहित्यानां काव्यानां दर्पणः साहित्य-दर्पण इति ग्रन्थस्य नाम तस्मिन्। दर्पणवदत्र सर्वेषामेव साहित्यानां छायादर्शनादिदं नाम। प्रथमः परिच्छेदः समाप्त इति शेषः। एवमन्यत्रापि ज्ञेयमिति।

इति महामहोपाध्याय-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां
साहित्यदर्पणटीकायां कुसुमप्रतिमायां प्रथमः परिच्छेदः ॥०॥

—०—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# द्वितीयः परिच्छेदः ।

———:०:———

वाक्यस्वरूपमाह—(क)

१ । वाक्यं स्याद्योग्यताकाङ्क्षा-
सत्तियुक्तः पदोच्चयः । (ख)

योग्यता पदार्थानां परस्परसम्बन्धे बाधाभावः (ग)। पदोच्चयस्यैतदभावेऽपि वाक्यत्वे वह्निना सिञ्चतीत्यपि वाक्यं स्यात् (घ)। आकाङ्क्षा प्रतीतिपर्य्यवसानविरहः (ङ)। स च श्रोतुर्जिज्ञासास्वरूपः (च)।

---

(क) "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः" इत्युक्तलक्षणया उपोद्घातसङ्गत्या प्रकृतकाव्यलक्षणघटकपदार्थसमूहनिरूपणे कर्त्तव्ये तत्र प्रथमं वाक्यस्यैव बुद्धिविषयत्वात् तदेव प्रथमं निरूपयितुं मूलोक्तलक्षणपरतां प्रदर्शयन्नाह वाक्यस्वरूपमाहेति। प्रकृतकाव्यलक्षणघटकवाक्यलक्षणमाह मूलकार इत्यर्थः।

(ख) वाक्यमिति। पदोच्चयः पदसमूहः। समूहत्वञ्चानेकत्वम्। अत्र पर्य्यवसितान्वय इति पदोच्चयविशेषणं निवेशनीयम्। तथा च पर्य्यवसितान्वयत्वे सति योग्यताकाङ्क्षासत्तिमदनेकपदत्वं वाक्यमिति वाक्यलक्षणम्। पर्य्यवसितान्वयत्वे सतीति विशेषणात् "शून्यं वासगृहं विलोक्य" इत्यादिभागे अन्वयपर्य्यवसानाभावान्नातिव्याप्तिः। घटो वर्त्तते इत्यादौ च पदद्वयस्याप्यनेकपदत्वान्नाव्याप्तिः।

(ग) योग्यतां व्याचष्टे योग्यतेति। पदार्थानां पदप्रतिपाद्यानां वस्तूनाम्। अत्रापि बहुत्वस्याविवक्षितत्वात् घटो वर्त्तते इत्यादौ नाव्याप्तिः। परस्परसम्बन्धे विवक्षितपरस्परसम्बन्धविषये, बाधाभावः प्रतिबन्धकाभावः। तथा च द्वयोः पदार्थयोर्बहूनां वा पदार्थानां परस्परसम्बन्धविषये प्रतिबन्धकाभावो योग्यतेति फलितम्। एवञ्च जलेन सिञ्चतीत्यादौ सेचनक्रियायां जलकरणकत्वरूपसम्बन्धविषये जले सेचनकार्य्यकत्वसम्बन्धविषये च प्रतिबन्धकाभावाद्वाक्यत्वसिद्धिः। वह्निना सिञ्चतीत्यादौ तु सेचनक्रियायां वह्निकरणकत्वसम्बन्धविषये तत्सम्बन्धाभावरूपप्रतिबन्धकसत्त्वात् योग्यताया अभावेन न वाक्यत्वम्।

(घ) अथ कथं योग्यताया निवेश इत्याह पदोच्चयस्येति। एतदभावेऽपि योग्यताया अभावेऽपि, पदोच्चयस्य वाक्यत्वे वाक्यत्वाङ्गीकारे, वह्निना सिञ्चतीत्यपि वाक्यं स्यात् आकाङ्क्षासत्त्योः सत्त्वात् योग्यताभ्रमेणान्वयपर्य्यवसानसम्भवाच्चातिव्याप्तिः स्यादिति भावः।

(ङ) आकाङ्क्षां निरूपयति आकाङ्क्षेति। प्रतीतिपर्य्यवसानविरहः पदजन्यपदार्थप्रतीतेः—समाप्त्यभावः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निराकाङ्क्षस्य वाक्यत्वे गौरश्वः पुरुषो हस्तीत्यादीनामपि वाक्यत्वं स्यात् (छ)। आसत्तिर्बुद्ध्यविच्छेदः (ज)। बुद्धिविच्छेदेऽपि वाक्यत्वे इदानी-मुच्चरितस्य देवदत्तशब्दस्य दिनान्तरोच्चारितेन गच्छतीति पदेन सङ्गतिः स्यात् (झ)। अत्राकाङ्क्षायोग्यतयोरात्मार्थधर्म्मत्वेऽपि पदोच्चयधर्म्मत्व-मुपचारात् (ञ)।

---

(च) ननु भावरूपाया आकाङ्क्षाया अभावरूपत्वेन निरूपणे प्रतीतिविपर्य्ययो महागौरवञ्चेत्याह स चेति। स च प्रतीतिपर्य्यवसानविरहश्च श्रोतुस्तत्तत्पदश्रोतुः जिज्ञासास्वरूपः अन्वयिपदान्तरज्ञानेच्छास्वभावः। पूर्व्वन्तु "अभावविरहात्मत्वं वस्तुनः प्रतियोगिता" इति न्यायेन अभावाभावस्य प्रतियोगिस्वरूपत्वाभिप्रायेणोक्तम्, इदानीन्तु आकाङ्क्षाया भावरूपत्वेन निरूपणान्नोक्तदोष इति भावः। तथा च श्रोतुर्यत्किञ्चित्पदश्रवण-समनन्तरमेव तदन्वयिपदान्तरश्रवणेच्छा आकाङ्क्षेति सरलार्थः। एवञ्च जलेन सिञ्चतीत्यादौ श्रोतुर्जलेनेति पदश्रवणानन्तरमेव साध्यत्वेन सिञ्चतीति-पदश्रवणेच्छा जायते, तथा सिञ्चतीति-पदश्रवणानन्तरमपि साधकत्वेन जलेनेति पदश्रवणेच्छा प्रादुर्भवति।

(छ) आकाङ्क्षानिवेशस्य व्यावृत्तिमाह निराकाङ्क्षस्येति। निराकाङ्क्षस्य पदोच्चयस्य। वाक्यत्वे वाक्यत्वाङ्गीकारे। वाक्यत्वं स्यादिति। एवञ्चातिव्याप्तिः स्यादित्यर्थः। तथा च गौरित्यादौ प्रातिपदिकार्थ-मात्रबोधकप्रथमाविभक्त्यन्तपदश्रवणानन्तरम् अश्वादिपदान्तरश्रवणेच्छाविरहस्य स्वभावसिद्धत्वान्निराकाङ्क्षत्वम्। किन्तु गौरश्वः पुरुषो हस्तीत्यत्र परस्परविजातीयत्वसम्बन्धबोधे प्रतिबन्धकाभावाद्योग्यतास्त्येव, आसत्तिस्तु निर्विवादमेवास्तीति न ह्यङ्गवैकल्यम्। न च योग्यतालक्षणे तादृशानियतसम्बन्धाङ्गीकारे वह्निना सिञ्चतीत्यत्रापि सेके वह्निकरणकत्वस्य कालिकादिसम्बन्धबोधे प्रतिबन्धकाभावात् योग्यतास्तीति वाच्यम्, योग्यतालक्षणे तात्पर्य्यविषयीभूतसम्बन्धनिवेशात्।

(ज) आसत्तिं विवृणोति आसत्तिरिति। बुद्धेः पदप्रतीतेः अविच्छेदः अवियोगः। तथा च कालव्यवधानेन अनन्वयिपदान्तरेण वा अविच्छिन्नः पदप्रतीतिप्रवाह आसत्तिरित्यर्थः। एवञ्च जलेन सिञ्चतीत्यादौ तादृशप्रतीतिप्रवाहसत्त्वादासत्तेरपि सत्त्वेन वाक्यत्वम्।

(झ) आसत्तिनिवेशस्य व्यावृत्तिं दर्शयति बुद्धीति। वाक्यत्वे वाक्यत्वाङ्गीकारे। उच्चरितस्य मुखात् स्वयमेवोद्गतस्य। देवदत्तशब्दस्य उक्तकर्त्तृत्वप्रतिपादकप्रथमैकवचनान्तदेवदत्तपदस्येत्यर्थः। दिनान्तरपदं तादृशव्यवहितक्षणोपलक्षणम्, तत्र उच्चारितेन मुखादुद्गमितेन। सङ्गतिर्वाक्यत्वेन मेलनम्। एवञ्चातिव्याप्तिरिति भावः। इयन्तु कालव्यवधानेन बुद्धिविच्छेदे व्यावृत्तिः प्रदर्शिता। अनन्वयिपदान्तरेण बुद्धिविच्छेदे व्यावृत्तिर्यथा—गिरिर्भुक्तमग्निमान् देवदत्तेनेति। अत्र गिरिरग्निमानिति पदयोरनन्वयिना भुक्तमिति पदेन व्यवधानात् बुद्धिविच्छेदेन न वाक्यत्वम्। एवं भुक्तं देवदत्तेनेति पदयोरपि अग्निमानिति पदेन व्यवधानान्न वाक्यत्वम्। अन्वयिपदेन व्यवधाने तु वाक्यत्वं भवत्येव। यथा—देवदत्तो ग्रामं गच्छति।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## २। वाक्योच्चयो महावाक्यम्। (ट)

योग्यताकाङ्क्षासत्तियुक्त एव (१) (ठ)।

## ३। इत्थं वाक्यं द्विधा मतम्।

इत्थमिति वाक्यत्वेन महावाक्यत्वेन च। उक्तञ्च—

"स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते॥" इति (ड)।

---

(ञ) ननु निरुक्ताकाङ्क्षाया इच्छारूपत्वात् समवायसम्बन्धेनात्मवृत्तित्वं योग्यतायाश्च वृत्तितावच्छेदकसम्बन्धेन पदार्थवृत्तित्वमेव सिद्धं न पुनः पदोच्चयवृत्तित्वम्, तत्कथं मूलकृता योग्यताकाङ्क्षायुक्तः पदोच्चय इत्युक्तमित्याह अत्रेति। आकाङ्क्षाया इच्छारूपतया गुणत्वेन स्वयमेव स्पष्टनिरूपणात् तस्यास्यात्मवृत्तित्वस्य सर्वथैवावश्यम्भावप्रदर्शनाय आकाङ्क्षायोग्यतयोरिति पूर्वतो व्यत्ययेनाकाङ्क्षापदस्य प्रथममेवोल्लेखः। आत्मा च अर्थः पदप्रतिपाद्यार्थश्च तयोर्धर्मत्वेऽपि तद्वृत्तित्वेऽपि। अत्र यथासंख्येनान्वयः। पदोच्चयधर्मत्वं पदोच्चयवृत्तित्वम्, उपचारादुपचाराङ्गीकारादङ्गीकृतमित्यर्थः। तथा च उत्थापकत्वनिवर्त्तकत्वान्यतरसम्बन्धेनाकाङ्क्षायुक्तत्वं स्वाश्रयोपस्थापकत्वसम्बन्धेन योग्यतायुक्तत्वञ्च पदोच्चयस्याङ्गीकृतमिति भावः। आसत्तेस्तु विषयतासम्बन्धेन पदधर्मत्वात् स्वत एव तद्युक्तत्वमित्यासत्तिपदं नोपात्तम्।

(ट) वाक्ये निरूपिते तत्सजातीयतया महावाक्यस्याप्याकाङ्क्षोदयात् तदपि निरूपयति वाक्योच्चय इति। अत्रापि वाक्योच्चयः अनेकवाक्यम्।

(ठ) नन्वनेकवाक्यमात्रस्य महावाक्यत्वाङ्गीकारे "अन्धो बभूव देवदत्तः, स चन्द्रं पश्यति" इति योग्यतारहितयोः "अन्नं पचति" "नद्यां सन्तरति" इति निराकाङ्क्षयोः "चैत्रस्य पुत्रोऽभूत्, स तमुपलालयति" इति भिन्नदिनोच्चारितयोरासत्तिहीनयोरपि वाक्ययोस्तथाविधबहुवाक्यानाञ्च महावाक्यत्वं स्यादित्याह—योग्यतेत्यादि। तथा चात्रापि वाक्योच्चय इत्यस्य विशेषणत्वेन योग्यताकाङ्क्षासत्तियुक्त इत्यनुकृष्यत इति भावः। एवञ्च योग्यताकाङ्क्षासत्तिमदनेकवाक्यत्वं महावाक्यत्वमिति लक्षणं फलितम्। तथा च सत्युदाहृतेषु नातिव्याप्तिः। "चैत्रस्य पुत्रो जातः, स तमुपलालयति" इत्याद्योरव्यवधानेनोच्चारितयोर्वाक्ययोस्तु महावाक्यत्वसिद्धिः। इदमेव महावाक्यं लोके ग्रन्थनाम्ना व्यपदिश्यते। अत्र "शङ्खः पाण्डर एव" इत्यादिवत् स्वयोगव्यवस्थापने एवशब्दः।

(ड) ननु वाक्योच्चय इत्यस्यापि विशेषणत्वेन आकाङ्क्षायुक्तत्वनिवेशे स्वं स्वमर्थं बोधयित्वा विरतानां वाक्यानां वाक्यान्तरेषु निराकाङ्क्षतया महावाक्यत्वं न स्यात्तथा च सति महावाक्यलक्षणस्य असम्भवत्वेव दोष इत्याह उक्तञ्चेति। स्वार्थबोधेन समाप्तानां स्वं स्वमर्थं बोधयित्वा निराकाङ्क्षीभूतानां पुनरङ्गाङ्गित्वव्यपेक्षया गुणप्रधानभावात् पुनरप्याकाङ्क्षोदयेन हेतुना संहत्य विशिष्टवृहदेकार्थबोधकत्वेन मिलित्वा स्थितानां वाक्यानाम् एकवाक्यत्वं महावाक्यत्वेनाभिमतमेकवाक्यत्वं जायते। अर्थानां सम्मेलनात्

---

(१) इत्येव इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र वाक्यं यथा—"शून्यं वासगृहम्" इत्यादि। महावाक्यं यथा—रामायण-महाभारत-रघुवंशादि (ढ)।

पदोच्चयो वाक्यमित्युक्तम् तत् किं पदलक्षणमित्यत आह—(ण)

४। वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः॥ (त)

यथा—घटः (थ)। प्रयोगार्हेति (१) प्रातिपदिकस्य व्यवच्छेदः (द)। अनन्वितेति वाक्यमहावाक्ययोः (ध)। एकेति साकाङ्क्षानेकपदवाक्यानाम्

---

तद्बोधकवाक्यानामपि सम्मेलनमित्याशयः। तथा च "चैत्रो वनमगच्छत्, गत्वा च तत्र मृगमवधीत्, तन्मांसेन च श्राद्धञ्चकार" इत्यादौ वाक्यानां परस्परसाकाङ्क्षतया सम्मेलनादेकमहावाक्यत्वम्।

(ढ) उभयविधमेव वाक्यं निरूप्य तयोरुदाहरणमपि क्रमेणाह तत्रेति। तत्र तयोर्वाक्यमहावाक्ययोर्मध्ये।

(ण) वाक्यं निरूप्य तल्लक्षणघटकं पदम् उपोद्घातसङ्गत्या निरूपयितुमाकाङ्क्षां प्रदर्शयति पदोच्चय इत्यादि।

(त) वर्णा इति। प्रयोगार्हा वाक्यान्तर्निवेशयोग्याः। अनन्वितम् अपर्यवसितान्वयम् एकमर्थं बोधयन्तीति ते अनन्वितैकार्थबोधकाः। प्रयोगार्हाश्च ते अनन्वितैकार्थबोधकाश्चेति पश्चात् कर्मधारयः। वर्णाः स्वरव्यञ्जनस्वभावाः पदम्। तथा च प्रयोगयोग्यत्वे सति अपर्यवसितान्वयैकार्थबोधकवर्णत्वं पदत्वमिति लक्षणम्।

(थ) लक्ष्यं दर्शयति यथेति। घट इत्यस्य विभक्त्यन्तत्वेन प्रयोगयोग्यत्वात् अनन्वितकम्बुग्रीवादिमदेकार्थबोधकत्वाच्च पदत्वमिति भावः।

(द) प्रयोगार्हेत्यादीनां क्रमेण व्यावृत्तिमाह प्रयोगार्हेति। अत्र विभक्त्यन्तत्वं प्रयोगार्हत्वम्। लुप्तविभक्तिकस्यापि विभक्त्यन्तत्वाङ्गीकारात् "वाक्" इत्यादौ नाव्याप्तिः। प्रयोगार्हेति विशेषणेन प्रातिपदिकस्य व्यवच्छेदो व्यावृत्तिः क्रियत इत्यर्थः। एवमन्यत्रापि। प्रातिपदिकस्य निर्विभक्त्यन्तशब्दस्य। अत्र प्रातिपदिकपदं निर्विभक्त्यन्तधातोरप्युपलक्षणम्।

(ध) अनेति। वाक्यस्य महावाक्यस्य च समुदायस्य प्रयोगार्हत्वात् विशिष्टबृहदेकार्थबोधकत्वाच्च पदत्वप्रसक्तौ अनन्वितेति विशेषणेन तयोर्व्यवच्छेदः क्रियत इत्यर्थः। तयोः स्वस्वान्वयपर्यवसानादपर्यवसितान्वयत्वं नास्तीति भावः।

(न) एकेतीति। साकाङ्क्षाणि यानि अनेकानि पदानि वाक्यानि च तेषां समुदायस्य। अत्र अपर्यवसितान्वयत्वप्रदर्शनाय साकाङ्क्षेति विशेषणम्। तथा च "शून्यं वासगृहं विलोक्य"तिभागस्थपदसमुदायस्य प्रयोगार्हत्वात् साकाङ्क्षत्वेनापर्यवसितान्वयत्वात् अर्थबोधकत्वाच्च पदत्वप्रसक्तौ एकेति विशेषणेन

---

(१) प्रयोगार्हा इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(न)। अर्थबोधका इति क-च-ट-त-पेत्यादीनाम् (१) (प)। वर्णा इति बहुवचनमविवक्षितम् (फ)।

व्यवच्छेदः क्रियते। अत्र प्रत्येकेनार्थबोधनेन समुदायस्य बह्वर्थबोधकत्वादिति भावः। तथा "चैत्रो वह्निमुद्दीपयति, मैत्रो दारु प्रक्षिपति, देवदत्तो दर्व्वीं संघट्टयति, इत्थमिमे पचन्ति" इति महावाक्ये प्रथमवाक्यत्रयस्य प्रयोगार्हत्वात् अन्तिमवाक्यसाकाङ्क्षत्वेन विशिष्टार्थान्वयापर्य्यवसानात् अर्थबोधकत्वाच्च पदत्वप्रसक्तौ एकेति विशेषणेन तस्यापि व्यवच्छेदः क्रियते, उक्तरीत्या तस्यापि बह्वर्थबोधकत्वादित्याशयः।

(प) ननु प्रयोगार्हानन्विता एके वर्णाः पदमित्येवास्तां किमर्थबोधका इत्यनेन। एक इति एकशब्दत्वेनाभिमता इत्यर्थो वाच्यः। एवञ्च सति वाक्यमहावाक्ययोः प्रयोगार्हत्वात् विशिष्टैकार्थबोधकत्वेन एकशब्दतयाभिमतत्वाच्च पदत्वप्रसक्तौ अनन्वितेति विशेषणेन तद्वारणम्। "शून्यं वासगृहं विलोक्ये"तिभागस्थपदसमुदायस्य प्रदर्शितवाक्यत्रयस्य च साकाङ्क्षत्वेनान्वयापर्य्यवसानात् पदत्वप्रसक्तौ एकेति विशेषणेन तद्व्यावृत्तिस्तयोरनेकशब्दत्वादित्याह अर्थबोधका इतीति। क-च-ट-त-पेत्यादीनां वर्णमालागतानामित्यर्थः। केचित्तु पदघटकानामिति वदन्ति। तथाहि वर्णमालागतानां क-च-ट-त-पेत्यादीनां प्रत्येकत एवाव्ययत्वेन विभक्तिलोपेऽपि विभक्त्यन्तत्वाङ्गीकारेण प्रयोगार्हत्वात् अनन्वितत्वात् एकैकस्य एकैकशब्दतया अभिमतत्वाच्च एकैकस्यैव पदत्वप्रसक्तौ अर्थबोधका इति विशेषणेन तेषां व्यवच्छेदः क्रियते। अत्रार्थबोधकत्वम् अभिधाद्यन्यतमवृत्त्या अर्थप्रतिपादकत्वं तच्च क-च-ट-त-पादीनां नास्ति। प्रातिपदिकसंज्ञा तु तेषामर्थबोधकशब्दसाधर्म्येणार्थवत्ताङ्गीकारात्। यदा तु अभिधाद्यन्यतमवृत्त्या तेषामेकैकस्यार्थबोधकत्वं तदा तु पदत्वं भवत्येव। यथा—प्रजापत्यर्थे "क" इत्यस्य।

(फ) ननु वर्णा इति बहुवचनात् बहुवर्णानामेव पदत्वे "इः" "गौः" इत्यादावेकवर्णे द्विवर्णे च पदे अव्याप्तिरित्याह वर्णा इति। तथा च व्यक्तिभेदेन बहुवचनं प्रयुक्तमिति तादृशवर्णसामान्यस्यैव पदत्वमिति भावः।

अत्र अनन्वितत्वम् अपर्य्यवसितान्वयत्वम्, तच्च साकाङ्क्षत्वमभिप्रेतम्, तेन प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति नियमात् घटीयं कर्म्मत्वमित्यादिप्रतीतेरन्वितत्वेऽपि घटमित्यादेः साकाङ्क्षत्वादेव पदत्वम्। एकत्वन्तु एकधर्म्मावच्छिन्नत्वं साहित्यसहत्वान्यतरवत्त्वञ्च वाच्यम्। एवञ्च "घटौ" "घटाः" इत्यादीनामेकधर्म्मावच्छिन्नत्वात् "धवखदिरपलाशाः" "पुष्पवन्तौ" इत्यादीनां साहित्यवदेकार्थबोधकत्वात् "सपुत्रको भुङ्क्ते" इत्यादौ च "सपुत्रकः" इत्यादीनां सहत्ववदेकार्थबोधकत्वाच्च पदत्वमव्याहतमेव। तथा पूर्व्वपूर्व्ववर्णस्मृतिसहकारेणान्तिमवर्णस्यार्थबोधकत्वमिति प्राचां सिद्धान्ताङ्गीकारेणैव सर्व्वसामञ्जस्यात् विशेषणविभक्तेर्वास्तविकानर्थकतां प्रति कारणाभावात् तथात्वे उक्तार्थकप्रथमाविभक्तिप्रसङ्गाच्च "सुन्दरस्य देवदत्तस्य धनम्" इत्यादौ सुन्दरस्येत्यस्यापि पदत्वं सिध्यत्येव। एवञ्च वह्निना सिञ्चतीत्यादौ वह्निनेत्यादेरप्युक्तरीत्यैव पदत्वं सिध्यति। न च "द्वौ घटौ" इत्यादौ "समभेदेनान्यतरवैयर्थ्यम्" इति न्यायेन द्वावित्यादीनामनर्थकत्वे नानन्वितार्थबोधकत्वात् समुदाये अतिव्याप्तिरिति वाच्यम्, उक्तन्याये न खलु वस्तुत

(१) क-च-ट-त-पानाम् इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र—(व)

५। अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः। (भ)

एषां स्वरूपमाह—

६। वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः।
व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः॥ (म)

ता अभिधाद्याः।

---

एवान्यतरस्य वैयर्थ्यम्, अपि तु प्रयोगोपपत्त्यर्थं वैयर्थ्याङ्गीकार इत्यस्य सुवचत्वात्। अन्यथा उक्तस्थलेऽपि प्रातिपदिकसंज्ञा द्विवचनञ्च न स्यात्। अर्थवत एव प्रातिपदिकसंज्ञाविधानात् द्वयोरर्थयोरेव द्विवचनविधानाच्च। इत्यञ्च "ननु प्रकृत्यर्थान्विते"त्यादिना सन्दर्भसञ्चयेन स्वाशयं मूलमेवोन्मूल्य "असमासाङ्गसुप्तिङ्तल्लोपयुक् प्रकृतिः पदम्" इति लक्षणान्तरसृष्टौ श्राम्यता रामचरणेन कर्कटकीगर्भायितं "भक्षितेऽपि लसुने न शान्तो व्याधि"रिति न्यायविषयत्वञ्चात्मनः समासादितम्। तथाहि गौश्च अजश्चेति विग्रहे गोऽजावित्यत्र गोशब्दस्य समासाङ्गतया पदत्वाभावप्रसङ्गादव्याप्तिः "एदोत्परः पदान्ते लोपमकारः" इत्यनेन परस्य अकारस्य लोपश्च न स्यात्। तथा च क-च-ट-त-पादीनां सुब्लोपयुक्प्रकृतित्वेन पदत्वप्रसङ्गादतिव्याप्तिश्च स्यात्। यदि पुनर्लघुलक्षणमेवाशास्यते तदा वरं विभक्त्यन्तार्थवत् प्रकृतिः पदमिति पदलक्षणं ब्रूमः। तथा च "भू" "राजन्" इत्यादिधातुप्रातिपदिकयोर्विभक्त्यन्तत्वाभावात् क-च-ट-त-पादीनामर्थवत्ताभावात् वाक्यस्य महावाक्यस्य "शून्यं वासगृहं विलोक्य" इत्यादिभागस्थपदसमुदायस्य च प्रकृतित्वाभावात् पदत्वाभावेन नातिव्याप्तिः। तथा लुप्तविभक्तिकस्यापि विभक्त्यन्तत्वाङ्गीकारेण गोऽजावित्यादौ समासे विभक्तिलोपेऽपि गोशब्दस्य पदत्वान्नाव्याप्तिरिति द्रष्टव्यम्। न च तथात्वे नीलोत्पलमित्यादौ नीलोत्पलोभयशब्दस्यापि पदत्वेन वाक्यत्वापत्तिरिति वाच्यं वाक्यलक्षणे पदोच्चयविशेषणत्वेन पर्य्यवसितान्वयत्वनिवेशादेव समापकक्रियोपलम्भात् अत्र तु तदभावात्। एतन्निवेशस्य "स्वार्थबोधसमाप्तत्वमपि पदोच्चयविशेषणं बोध्यम्" इत्युक्त्या तेनाप्यङ्गीकृतत्वात् तथैव च तन्मतेऽपि समापकक्रियावश्यकतावगमादिति संक्षेपः।

(व) तत्रेति। तत्र पदलक्षणे।

(भ) अथ अर्थबोधका इत्यत्र को नामार्थः कतिविधश्च स इत्याकाङ्क्षायामुपोद्घातसङ्गत्या अर्थनिरूपणे कर्त्तव्येऽपि "पदप्रतिपाद्यत्वमर्थत्वम्" इत्यर्थलक्षणस्य सर्ववादिसम्मतत्वेनातिप्रसिद्धतया तदुपेक्ष्य नैयायिकादिभिर्विवादास्पदीभूतान् केवलान् तद्भेदानेव दर्शयति अर्थ इति।

(म) वाच्यादीनां लक्षणाकाङ्क्षायामाह एषामिति। एषां वाच्यादीनाम्, स्वरूपं लक्षणम्। तत्र अभिधाशक्तिजन्यबोधविषयत्वं वाच्यार्थत्वमित्यादि लक्षणमुन्नेयम्। नैयायिकादयो यामेव वृत्तिमाहुस्तामेवालङ्कारिकाः शक्तिनाम्ना व्यपदिशन्ति, याञ्च ते शक्तिं वदन्ति तामेवामी अभिधां ब्रुवन्तीति संज्ञाभेदेऽपि वस्तुभेदाभावात् "ता अभिधाद्यास्तिस्रः शब्दस्य शक्तयः स्यु"रित्युक्तौ न कश्चिद्विरोध इति पर्य्यालोचनीयम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

७। तत्र सङ्केतितार्थस्य बोधनादग्रिमाभिधा । (य)

उत्तमवृद्धेन मध्यमवृद्धमुद्दिश्य "गामानय" इत्युक्ते तं गवानयनप्रवृत्तमुपलभ्य बालोऽस्य वाक्यस्य "सास्नादिमत्पिण्डानयनमर्थः" इति प्रथमं प्रतिपद्यते (र)। अनन्तरञ्च "गां बधान, अश्वमानय" इत्यादावावापोद्वापाभ्यां (१) गोशब्दस्य "सास्नादिमानर्थः" आनयनशब्दस्य च "आहरणमर्थः" इति सङ्केतमवधारयति (ल)।

---

(य) अभिधां निरूपयन्नाह तत्रेति। इच्छाविशेषः सङ्केतः, तद्विषयः सङ्केतितः, संपूर्वक-कितधातोः कर्म्मणि क्तप्रत्ययात् इच्छार्थकधातोर्विषयत्वस्यैव कर्म्मत्वात्। तथा च "गोपदं सास्नादिमत्प्राणिनं बोधयतु" इतीच्छया गोरूपमर्थं निर्द्दिश्य प्रयुक्तं गोपदं गां बोधयति। तथा च शक्तिवादे गदाधरभट्टाचार्य्याः— "इदं पदमिममर्थं बोधयत्विति अस्माच्छब्दादयमर्थो बोद्धव्य इति वेच्छा सङ्केतरूपा वृत्तिः"। स्वाभाविकव्यापार इति मीमांसकादयः। यथा तथा वास्तु सङ्केतितार्थो मुख्यार्थान्नातिरिच्यते। तथा च तत्र तासु शक्तिषु मध्ये सङ्केतितार्थस्य बोधनाद्धेतोः अग्रिमा प्रथमा शक्तिरभिधा नामेत्यर्थः। एवञ्च मुख्यार्थबोधकशक्तित्वमभिधात्वमित्यभिधाया लक्षणम्।

(र) सङ्केतस्य मूललक्षणघटकतया तज्ज्ञानोपायेषु वक्तव्येषु "सङ्केतस्य ग्रहः पूर्वं वृद्धस्य व्यवहारतः। पश्चादेवोपमानाद्यैः शक्तिधीपूर्वकोऽसौ ॥" इति मीमांसोक्तेर्युक्तत्वात् प्रथमं वृद्धव्यवहारात्मकं सङ्केतग्रहोपायमाह उत्तमेति। तत्र सञ्जातसङ्केतज्ञानः प्रयोजक उत्तमवृद्धः, सञ्जातसङ्केतज्ञानः प्रयोज्यश्च मध्यमवृद्धः। अनयोः प्रयोजकप्रयोज्यभावमादायैव उत्तमत्वं मध्यमत्वञ्च व्यवस्थापितम्, प्रायेण प्रयोजकस्यैवोत्कर्षात्। असञ्जातसङ्केतज्ञानस्तु बालः। एवञ्च बालापेक्षया उत्कर्षात् प्रयोजकापेक्षया चापकर्षात् प्रयोज्यस्य मध्यमत्वं बोध्यम्। तं मध्यमवृद्धम्, गवानयने प्रवृत्तं तत्समीपगमनादिना यत्नवन्तम्। उपलभ्य दृष्ट्वा। अस्य गामानयेत्येवंरूपस्य। सास्ना गलकम्बलः, आदिपदेन शृङ्गलाङ्गूलादिपरिग्रहः, तद्वत् पिण्डं गोप्राणी तस्यानयनम्। प्रथमं प्रत्येकशब्दस्य सङ्केतज्ञानात् पूर्वम्। प्रतिपद्यते अवयवार्थव्यतिरेकेण केवलसामान्यतोऽनुमानेन बुध्यते। गामानयेति शब्दस्य दृश्यमानप्राण्यानयनमेवार्थं इत्यवगच्छामि तच्छ्रवणानन्तरमेव मध्यमवृद्धस्य दृश्यमानप्राण्यानयनप्रवृत्तिदर्शनादितिमात्रमनुमानेन बुध्यत इत्यर्थः। किन्तु तदानीमपि "गोशब्दस्य सास्नादिमानर्थः आनयशब्दस्य च आनयनमर्थः" इत्थं प्रत्येकपदसङ्केतं न प्रतिपत्तुमर्हतीति भावः।

(ल) अथ तर्हि कदा बालको गामानयेतिवाक्यगतप्रत्येकपदसङ्केतं प्रतिपद्यत इत्याह अनन्तरञ्चेति। अनन्तरञ्च तत्परक्षणमेव। अत्र उत्तमवृद्धेन पुनर्मध्यमवृद्धमुद्दिश्य "गां बधान, अश्वमानय" इत्यादावुक्ते तं पुनर्गोबन्धने अश्वानयने च प्रवृत्तमुपलभ्य इत्यमध्याहार्य्यम्। आवापः अन्वयः, उद्वापो

---

(१) आवापोद्वाराभ्यामिति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्वचिच्च प्रसिद्धपद-(१) समभिव्याहारात्। यथा—"इह प्रभिन्न-कमलोदरे मधूनि मधुकरः पिबति" इत्यत्र (ब)। क्वचिदाप्तोपदेशात्। यथा—"अयमश्वशब्दवाच्यः" इत्यत्र (श)।

व्यतिरेकः, ताभ्याम् उक्तोभयवाक्यविषयाभ्यामित्यर्थः। तथा च गां बधान इत्यत्र गोशब्दसत्तायां सास्नादिमत्प्राणिज्ञानसत्ता, आनयशब्दसत्तायाम् आहरणक्रियाज्ञानासत्ता। अश्वमानयेत्यत्र च गोशब्दासत्तायां सास्नादिमत्प्राणिज्ञानासत्ता, आनयशब्दसत्तायाञ्च आहरणक्रियाज्ञानसत्ता। यदा गामानयेत्युक्तं तदापि सास्नादिमान् प्राण्यानीतः, यदा च गां बधानेत्युक्तं तदापि च सास्नादिमान् प्राण्येव बद्धः, अतएव गोशब्दस्यैव सास्नादिमत्प्राणिनि शक्तिः। तथा गामानयेत्युक्तेऽपि गोरानयनम् अश्वमानयेत्युक्तेऽपि च अश्वस्याहरणं कृतमिति आनयशब्दस्यैव आहरणमर्थः। इत्यनुमाय गवि गोशब्दस्य आनयने चानयशब्दस्य सङ्केतमवधारयति शक्तिं निश्चिनोति बाल इति शेषः। इत्यञ्च व्यवहाराधीनशक्तिज्ञाने उक्तविधो वाग्व्यवहार एव प्रयोजक इति बोध्यम्।

(ब) सङ्केतज्ञानस्योपायान्तराण्यपि दर्शयति क्वचिदिति। प्रसिद्धस्य पूर्वावगतसङ्केतस्य पदस्य शब्दस्य समभिव्याहारात् साहित्येनोच्चारणात् बालः सन्दिग्धसङ्केतस्य शब्दस्य सङ्केतमवधारयतीति पूर्वेणान्वयः। मधुकर इह अस्मिन् प्रभिन्नकमलोदरे प्रस्फुटितपद्ममध्ये मधूनि पिबति। इत्यत्र मधु करोतीति व्युत्पत्त्या मधुकरशब्दस्य भ्रमरे सङ्केतः, उत मधुमक्षिकायामिति सन्देहे भ्रमरस्यैव पद्मे पूर्वं मधुपानदर्शनेन कमलपदसमभिव्याहारात् मधुकरशब्दस्य तस्मिन् भ्रमर एव सङ्केतमवधारयति। न च "मधुव्रतो मधुकरः" इत्यमरकोषादेव मधुकरशब्दस्य तस्मिन् भ्रमर एव सङ्केतनिश्चयात् कथं मधुमक्षिकायां सन्देह इति वाच्यम्, मधु करोतीति मधुकर इति व्याकरणानुसारात् मधुमक्षिकयैव मधुकरणेन तत्रापि सङ्केतसन्देहस्य दुर्निवारत्वात्, कोषव्याकरणयोरुभयोरपि सङ्केतग्रहोपायत्वात्।

(श) क्वचिदिति। आप्तस्य विश्वस्तजनस्य उपदेशात् बालः क्वचित् सङ्केतमवधारयतीत्यनुषज्यते। अयमश्वशब्दवाच्य इत्यत्र उपदेशे उपदेष्टुः सत्यवादित्वविश्वासाद्बालकः अश्वशब्दस्य घोटके सङ्केतमवधारयतीत्यर्थः। एतत्त्रयं प्रदर्शनमात्रपरम्, अन्येऽपि सङ्केतज्ञानोपाया यथा—"शक्तिग्रहं व्याकरणोपमान-कोषाप्तवाक्यव्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥" इति। अत्र व्याकरणाद्यथा—पक्ता। कर्त्तरि तृच्प्रत्ययेन पक्तृशब्दस्य पाककर्त्तरि सङ्केतज्ञानम्। उपमानाद्यथा—गोसदृशो गवय इति वाक्यस्मरणेन गवाकारप्राणिनो दर्शने अयं गवयशब्दवाच्य इति। कोषाद्यथा—"इन्द्रो मरुत्वान् मघवा" इत्यादिदर्शनात् मरुत्वदादिशब्दानामिन्द्रे सङ्केतज्ञानम्। कारिकायां कोषपदं गणपाठस्याप्युपलक्षणम्। तथा च "भू सत्तायाम्" इति गणपाठात् भूशब्दस्य सत्तायां सङ्केतज्ञानम्। आप्तवाक्याद्यथा—उदाहृतम् "अयमश्वशब्दवाच्य" इति। व्यवहाराद्यथोदाहृते उत्तमवृद्धेनेत्यादौ। वाक्यस्य शेषात् विधिशेषादर्थवादादित्यर्थः। यथा जैमिनेयाधिकरणमालायाम्—

---

(१) प्रसिद्धार्थपद इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तच्च सङ्केतितमर्थं बोधयन्ती शब्दस्य शक्त्यन्तरानन्तरिता शक्तिरभिधा नाम (ष)।

## ८। सङ्केतो गृह्यते जातौ गुण-द्रव्य-क्रियासु च ॥ (स)

जातिर्गोपिण्डादिषु गोत्वादिका। गुणो विशेषाधानहेतुः सिद्धो वस्तुधर्म्मः। शुक्लादयो हि गवादिकं सजातीयेभ्यः कृष्णगवादिभ्यो व्यावर्त्तयन्ति। द्रव्यशब्दा एकव्यक्तिवाचिनो हरि-हर-डित्थ-डवित्थादयः।

---

"यवमयश्चरुर्भवति" "वाराही चोपानत्" इति श्रुतिद्वयम्। तत्र आर्य्या यवशब्दं दीर्घशूके, वराहशब्दञ्च शूकरे प्रयुञ्जते। म्लेच्छास्तु यवशब्दं प्रियङ्गौ वराहशब्दञ्च कृष्णशकुनौ प्रयुञ्जते। एवञ्चोक्तश्रुत्योर्यव-वराहशब्दयोरर्थसन्देहे "यवान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति" "वराहं गावोऽनुधावन्ति" इत्यर्थवादद्वयदर्शनात् यवशब्दस्य दीर्घशूके वराहशब्दस्य च शूकरे सङ्केतज्ञानम्। विवृतेर्विवरणात् प्रतिशब्दाद्यथा—हरिर्वासुदेवः। भेकादिनानार्थतया हरिशब्दस्यार्थसन्देहे वासुदेव इति विवरणात् हरिशब्दस्य तत्र वासुदेव एव सङ्केतज्ञानम्। सिद्धपदस्य सान्निध्यतः प्रसिद्धपदसमभिव्याहाराद्यथोदाहृते इह प्रभिन्नेत्यादौ।

(ष) सङ्केतग्रहोपायान् प्रदर्श्य इदानीं मूलकारिकार्थं विवृणोति तच्चेति। तच्च प्रदर्शितप्रकारञ्च। शक्त्यन्तरानन्तरितेति अग्रिमेत्यस्य विवरणम्। शक्त्यन्तराभ्याम् अन्यशक्तिभ्यां लक्षणाव्यञ्जनाभ्याम् अनन्तरिता अतिरस्कृता पुरस्कृतेत्यर्थः। अत्रायमाशयः—अभिधेयार्थबाधमूला लक्षणा अभिधालक्षणोभयमूला च व्यञ्जना अभिधामनपेक्ष्य प्रवर्त्तितुमेव नोत्सहते, अभिधा तु ते अनपेक्ष्यैव सर्व्वत्र प्रवर्त्तत इति अग्रिमा प्रधाना अभिधेति।

(स) ननु गामानयेत्यादिषु गोशब्दादीनां गवादिगतजात्यादिषु सङ्केतग्रहे तदानयनासम्भवात् व्यक्तावेव सङ्केतग्रह इति केचित्। अपरे तु व्यक्तौ सङ्केतग्रहे शक्यतावच्छेदकगौरवं व्यभिचारश्च स्यादिति जात्यादिष्वेव सङ्केतग्रह इति वदन्ति। तदेतत् पर्य्यालोच्य काव्यप्रकाशकारेण जातावेव सङ्केतग्रहमभिप्रेत्य "सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा" इत्युक्तम्। भवन्मते तु कः सिद्धान्त इत्याह सङ्केत इति। गृह्यते ज्ञायते। वयं किल व्यक्त्युपाधिषु सङ्केतग्रहं ब्रूम इत्याशयः।

(ह) जात्यादीन् प्रदर्शयति जातिरित्यादि। गोपिण्डादिषु गोव्यक्तिप्रभृतिषु। गोत्वादिका सामान्यरूपेति शेषः। तेन शुक्लगवत्वादिर्न जातिः। विशेषाधानहेतुः इतरव्यावृत्तिप्रतिपादनहेतुः, सिद्धो नित्यो नित्यवत्प्रतीयमानो दीर्घकालस्थायीति यावत् वस्तुनो द्रव्यस्य धर्म्मः। अत्र सिद्ध इत्यनेन भोजन-व्यावृत्तिप्रतिपादिकायामपि गमनक्रियायां नातिव्याप्तिः, तस्याः साध्यतया प्रतीतेः। गुणानामितरव्यावृत्ति-हेतुत्वं दर्शयितुमाह शुक्लेति। हि तथाहि। एकव्यक्तिवाचिन इति जातिशब्दव्यवच्छेदः। पुरातनत्वा-धुनिकत्वभेदेन संज्ञा द्विविधा। तत्राद्या हरिहरादिः पुरातनी संज्ञा, द्वितीया च डित्थ-डवित्थादि-राधुनिकी संज्ञा। तत्राविशेषादुभयोरपि ग्रहणम्। आदिपदेन रामचैत्रादिपरिग्रहः। साध्यरूपाः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्रियाः साध्यरूपा वस्तुधर्म्माः पाकादयः (ङ)। एषु हि अधिश्रयणाव-श्रयणाद्यन्तादिपूर्व्वापरीभूतो व्यापारकलापः पाकादिशब्दवाच्यः (च)। एष्वेव हि व्यक्तेरुपाधिषु सङ्केतो गृह्यते, न व्यक्तौ; आनन्त्यव्यभिचारदोषा-पातात् (क)।

अथ लक्षणा (ख)।

---

कर्त्तृनिष्पाद्यस्वभावाः। अस्ति-भवत्यादीनान्तु एकगणपाठसाधर्म्म्येण साध्यरूपतयोपचारः। एतेन च सिद्धभूतगुणव्यवच्छेदः। वस्तुधर्म्मा द्रव्यवृत्तयः।

(च) ननु विक्लित्तिसाधकार्य्यैकानुष्ठान एव अधिश्रयणाद्यनेकव्यापारान्तर्भावात् तेषु कतमस्य व्यापारस्य पाकादिशब्दवाच्यत्वमित्याह एष्विति। हि तथाहि। एषु क्रियाख्यसाध्यरूपवस्तुधर्म्मेषु मध्ये। अधिश्रयणं चुल्लीमस्तके स्थाल्या आरोपणम्, अवश्रयणं चुल्लीतः स्थाल्या अवरोपणम्। अधिश्रयणाव-श्रयणे आद्यन्तौ आद्यावयवान्त्यावयवौ तदादी व्यापारौ पूर्व्वापरीभूतौ प्रथमावयवशेषावयवीभूतौ यस्य स तादृशो व्यापाराणां कलापः समूहः। अत्र प्रथमादिपदम् अवयवपरम्, द्वितीयादिपदेन गमनादि-क्रियान्तराणां गृहतो निष्क्रमणादिप्रथमावयवग्रहणम्। तृतीयादिपदेन गमनादिक्रियान्तरपरिग्रहः। सर्व्वत्र यथासंख्येनान्वयः। तथा च विक्लित्तिसाधकैकानुष्ठाने, अधिश्रयणं प्रथमावयवः, अवश्रयणमन्त्यावयवः, तुषवुषप्रक्षेपणदर्व्वीसङ्घट्टनादयश्च मध्यमावयवाः ते सर्व्वे मिलित्वा एकपाकक्रियारूपा भवन्ति। अतएव एकपाकशब्दवाच्यश्च स व्यापारकलापः। एवं गमने गृहतो निष्क्रमणं प्रथमावयवः, सेतुलङ्घनादयो मध्यावयवाः, ग्रामस्पर्शश्चान्त्यावयवः, सर्व्वे मिलित्वा एकगमनक्रियारूपा भवन्ति। तत एकगमनशब्दवाच्यश्च स व्यापारकलापः।

(क) इदानीं कारिकार्थं विवृणोति एष्वेवेति। अत्र "स एव हि वरः" इत्यादिवदत्यन्तावधारण-सूचनार्थम् एव-हि-शब्दद्वयम्। व्यक्तेरुपाधिषु व्यक्तेर्भेदकधर्म्मेषु यथासम्भवमेकैकेष्वित्यर्थः। सङ्केतो गृह्यते शक्तिर्ज्ञायते। तथा च गामानयेत्यादौ गोत्वजातावेव गोशब्दस्य सङ्केतग्रहः, अनन्तरञ्च जातिजाति-मतोरविनाभावाद्वयोग्यत्वाच्च निर्द्दिष्टाया गोव्यक्तेरेवानयनम्। एवं शुक्लादिशब्दस्य शुक्लादिगुणे, हर्य्यादि-शब्दस्य तत्तद्यक्तिरूपद्रव्ये, पाकादिशब्दस्य च उक्तरूपव्यापारकलापादौ शक्तिग्रह ऊहनीयः। एव-हि-शब्द-व्यवच्छेद्यं स्वयमेव स्पष्टयति न व्यक्ताविति। न तु व्यक्तौ सङ्केतो गृह्यत इत्यर्थः। कुत इत्याह आनन्त्येति। सङ्केतज्ञानस्य आनन्त्यं व्यभिचारश्च दोषौ तयोरापातात् उपस्थितेः। तथा च स्वामि-काल-वर्णादिभेदेन गवादिव्यक्तीनामानन्त्यात् अनन्तशक्तिकल्पनस्यावश्यकत्वेन महागौरवं स्यात्। गवादिशब्दस्य अदृष्टपूर्व्वगवादौ शक्तिग्रहाभावात् तेन तद्बोधे व्यभिचारश्च स्यात्। अस्मन्मते तु गोत्वजातौ गोशब्दस्य सङ्केतज्ञानम्, ततश्च जातेरेकत्वात् न सङ्केतज्ञानस्यानन्त्यदोषः, न वा व्यभिचारः। इत्यभिधालक्षणस्य सुबोधः संक्षेपः।

(ख) अभिधाज्ञानतः परं ज्ञेयतया तदनुजत्वात् व्यञ्जनाज्ञानतः पूर्व्वं ज्ञेयतया च तदग्रजत्वात्

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

९। मुख्यार्थबाधे तद्‌युक्तो ययाऽन्योऽर्थः प्रतीयते।
रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता॥ (ग)

"कलिङ्गः साहसिकः" इत्यादौ कलिङ्गादिशब्दो देशविशेषादिरूपे स्वार्थे असम्भवन् यया शब्दस्य शक्त्या स्वसंयुक्तान् पुरुषादीन् प्रत्याययति, यया च "गङ्गायां घोषः" इत्यादौ गङ्गादिशब्दो जलमयादिरूपार्थवाचकत्वात् प्रकृते असम्भवन् स्वस्य सामीप्यादिसम्बन्धसम्बन्धिनं तटादिं बोधयति, सा शब्दस्यार्पिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा शक्तिर्लक्षणा नाम (घ)।

---

मध्यमा लक्षणेति मध्य एव तां निरूपयितुमाह अथेति। अथ अभिधानिरूपणानन्तरं लक्षणा निरूप्यत इति शेषः।

(ग) मुख्यार्थेति। मुख्यार्थबाधे मुख्यार्थान्वयबोधस्य कुतोऽपि प्रतिबन्धे सति, रूढेः प्रसिद्धिवशात् प्रयोजनादुद्देश्यविशेषवशाद्वा यया शक्त्या तद्‌युक्तः मुख्यार्थसम्बन्धयुक्तः अन्यः शक्यतावच्छेदकभिन्नधर्म्मावच्छिन्नः अर्थः प्रतीयते, असौ सा लक्षणा नाम शक्तिः अर्पिता ईश्वरादर्वाचीनैः शब्देषु दत्ता। तथा च मुख्यार्थान्वयबोधबाधनियन्धनत्वे सति रूढिप्रयोजनान्यतरप्रयोज्य-शक्यार्थ-सम्बन्धवत्तदतिरिक्तार्थप्रतिपादक-शक्तित्वं लक्षणात्वम्। "राजत्युमावल्लभः" इत्यादौ वक्ष्यमाणे शक्यार्थसादृश्यसम्बन्धवत्त्वात् राज्ञः शङ्करवदसाधारणत्वप्रतिपादनरूपप्रयोजनसत्त्वाच्च व्यञ्जनामात्रप्रतिपाद्ये गौरीवल्लभरूपान्यार्थे अतिव्याप्तिः स्यादत उक्तं मुख्यार्थबाध इति। किन्तु तत्र मुख्यार्थबाधाभावान्नातिव्याप्तिः। "भेकः समुद्रान् पपौ" इत्यादौ मुख्यार्थबाधसत्त्वात् भेकस्यासाधारणत्वप्रतिपादनरूपप्रयोजनसत्त्वाच्च लक्षणया भेकशब्देन अगस्त्यरूपान्यार्थप्रतीतावतिव्याप्तिः स्यादत उक्तं तद्‌युक्त इति। किन्तु शक्यार्थभेकेन सह अगस्त्यस्य प्रतीतसम्बन्धाभावान्नातिव्याप्तिः। अन्योऽर्थ इत्यस्य मुख्यार्थभिन्नोऽर्थं इत्यर्थकरणे "नयनं तस्यैव नयनम्" इत्यादौ द्वितीयनयनशब्देन प्रशस्तनयनबोधनेऽपि तत्र नयनप्रतियोगिकभेदाभावादव्याप्तिः स्यादत उक्तं शक्यतावच्छेदकभिन्नधर्म्मावच्छिन्नोऽर्थ इति। तथा चात्र शक्यतावच्छेदकधर्म्मो नयनत्वं तद्भिन्नधर्म्मः प्रशस्तत्वं तदवच्छिन्नार्थबोधकत्वान्नाव्याप्तिः।

(घ) लक्ष्ये लक्षणं सङ्गमयन् अर्पिताशब्दस्यार्थं विवरीतुमाह कलिङ्ग इत्यादि। मुख्यार्थबाधं दर्शयितुमाह स्वार्थे असम्भवन्निति। स्वस्य अर्थे मुख्यार्थे सति असम्भवन् तात्पर्य्यविषयीभूताभेदसम्बन्धेनान्वयबोधं जनयितुमशक्नुवन्नित्यर्थः। तथा च साहसिकत्वं हठकारित्वं तच्च चेतनपदार्थगतो धर्म्मविशेषः। एवञ्चात्र कलिङ्गदेशगतमचेतनत्वमेव अभेदसम्बन्धेनान्वयबोधे प्रतिबन्धकमिति भावः। मुख्यार्थसम्बन्धं दर्शयितुमाह स्वसंयुक्तानिति। स्वसंयुक्तान् संयोगेनात्मनि सम्बन्धवतः। प्रकृते गङ्गायां घोष इत्युदाहृतप्रयोगे। मुख्यार्थबाधं प्रतिपादयति पुनरसम्भवन्निति। असम्भवन् आधाराधेयभावेनान्वयबोधं जनयितुमशक्नुवन्। तथाहि घोषो नामाभीरपल्ली, सा च कथं जलमय्यां गङ्गायां वर्त्तितुमुत्सहत इति भावः। एवञ्चात्र गङ्गाशब्दस्य जलमयार्थवाचकत्वमेव आधाराधेयभावेनान्वयबोधे प्रतिबन्धकम्। अतएव जलमयादिरूपार्थवाचकत्वादिति हेत्वर्थे पञ्चमी प्रयुक्ता। अत्रापि मुख्यार्थसम्बन्धं

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पूर्वत्र हेतू रूढ़िः प्रसिद्धिरेव। उत्तरत्र गङ्गातटे घोष इति प्रतिपादनादलभ्यस्य शीतत्वपावनत्वातिशयस्य बोधनरूपं प्रयोजनम् (ङ)। हेतुं विनापि यस्य कस्यचित् सम्बन्धिनो लक्षणेऽतिप्रसङ्गः स्यादित्यत उक्तम्—"रूढ़ेः प्रयोजनाद्वासौ" इति (च)।

केचित्तु "कर्म्मणि कुशलः" इति रूढ़ावुदाहरन्ति। तेषामयमभिप्रायः—"कुशं लाति" इति व्युत्पत्तिलभ्यः कुशग्राहिरूपो मुख्योऽर्थः प्रकृते असम्भवन् विवेचकत्वादिसाधर्म्म्यसम्बन्धसम्बन्धिनं दक्षरूपमर्थं बोधयति (छ)।

ज्ञापयितुमाह स्वस्येत्यादि। स्वस्य जलमयगङ्गापदार्थस्य। सामीप्यादीत्यादिशब्देन संयोगसम्बन्धग्रहणम्। सामीप्यादिसम्बन्धेन सम्बन्धिनं तदभिन्नसम्बन्धवन्तमित्यर्थः। "शब्देनोच्चार्य्यमाणेन सहजं यत् प्रतीयते। तस्य शब्दस्य तद्वस्तु ज्ञायतामर्थसंज्ञया॥" इति ब्रुवन्तो वैयाकरणा मीमांसकाश्च अभिधां स्वाभाविकं नाम शब्दव्यापारं ब्रुवन्ति, तन्मतमाश्रित्याभिहितं स्वाभाविकेतरेति। शब्दस्य स्वाभाविकव्यापारादन्येत्यर्थः। "अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छाविषयत्वं शक्तिः" इति नैयायिकमतमवलम्ब्योक्तम् ईश्वरानुद्भाविता वेति। ईश्वरेण अनुद्भाविता अनाविष्कृता ततोऽर्वाचीनैरुद्भावितेत्यर्थः।

(ङ) ननूदाहृतयोः कतरस्मिन् रूढ़िः कतरस्मिन् वा प्रयोजनं मूलमित्याह पूर्वत्रेत्यादि। पूर्वत्र कलिङ्गः साहसिक इत्यत्र। प्रसिद्धिरेव न तु प्रयोजनमित्यर्थः। तादृशवक्तृतात्पर्य्याभावेन तदसम्भवादिति भावः। उत्तरत्र गङ्गायां घोष इत्यत्र। इति प्रतिपादनात् लक्षणया एतन्मात्रबोधनात् गङ्गापदेन तटपर्य्यन्तं बोधयित्वैव लक्षणाया विरामाद्धेतोरित्यर्थः। अलभ्यस्य शाब्दबोधाविषयीभूतस्य। तच्च प्रयोजनं व्यञ्जनामात्रप्रतिपाद्यमिति बोध्यम्। दूरतीरापेक्षया सन्निहिततीरे शीतत्वपावनत्वयोरतिशयसम्भवात् तद्बोधनप्रयोजनायैवेयं लक्षणेति भावः।

(च) रूढ़ेः प्रयोजनादित्यस्य व्यावृत्तिं दर्शयितुमाह हेतुमित्यादि। सम्बन्धिनो मुख्यार्थसम्बन्धवतः। लक्षणे लक्षणया प्रतिपादने। अतिप्रसङ्गः अतिव्याप्तिः। तथा च रूढ़ेः प्रयोजनादित्यनुक्तौ "कमले चरणाघातं मुखं सुमुखि! तेऽकरोत्" इत्यत्र रूढ़िप्रयोजनयोरभावेऽपि चरणाघातपदेन निर्जितत्वलक्षणादतिव्याप्तिः प्रसज्येतेति भावः। एवञ्चेदं लक्षणाया लक्ष्यमेव नेति बोध्यम्। अतएवास्मिन् शक्तिहीनकविना लक्षणाप्रयोगादेव सप्तमपरिच्छेदे ग्रन्थिकृता एतदेव नेयार्थतादोषस्योदाहरणं प्रदर्शितं सङ्गच्छते। अत्र मुख्यार्थेन सह लक्ष्यार्थस्य निर्जयस्य समानोत्कर्षजनकत्वरूपः सम्बन्धः।

(छ) ये तु काव्यप्रकाशकारादयो रूढ़शब्दस्यापि यौगिकार्थमेव मुख्यार्थं मन्यमानाः प्रयोगे तदन्वयानुपपत्तौ लक्षणामङ्गीकुर्वन्ति तन्मतं दूषयितुमाह केचित्त्विति। कर्म्मणि कुशनिष्पाद्ये कार्य्ये भूमिकर्षणादौ। अन्यथा कुशनिष्पाद्ये यज्ञादिकर्म्मणि तन्मतसिद्धकुशग्राहिरूपयौगिकमुख्यार्थस्य अन्वयानुपपत्त्यभावात् लक्षणाप्रसक्तिरेव न स्यात्। लक्षणासुपपादयितुमाह तेषामित्यादि। व्युत्पत्तिलभ्यः प्रकृतिप्रत्यययोगबोध्यः। तथा च "रा ला दाने" इत्यादानार्थक-लाधातोः "आतोऽनुपसर्गात् कः" इति कप्रत्ययेन निष्पन्नत्वात् कुशलपदस्य कुशग्राहिरूप एव मुख्योऽर्थ इति भावः। प्रकृते "कर्म्मणि कुशलः" इत्युदाहृतप्रयोगे।

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदन्ये न मन्यन्ते, कुशग्राहिरूपार्थस्य व्युत्पत्तिलभ्यत्वेऽपि दक्षरूपस्यैव मुख्यार्थत्वात् (ज)। अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तम्, अन्यच्च प्रवृत्तिनिमित्तम् (झ)। व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे "गौः शेते" इत्यत्रापि लक्षणा स्यात्। "गमेर्डोः" इति गम्धातोर्डोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि प्रयोगात् (ञ)।

असम्भवन् भूमिकर्षणादिकर्मणि उक्तमुख्यार्थान्वयबोधं जनयितुमशक्नुवन्। लक्ष्यार्थे मुख्यार्थसम्बन्धं दर्शयितुमाह विवेचकत्वादीति। आदिपदेन स्वामिसन्तोषकत्वादिपरिग्रहः। विवेचकत्वादि साधर्म्यं समानधर्मवत्त्वं सम्बन्धस्तेन सम्बन्धिनं तदभिन्नसम्बन्धवन्तमित्यर्थः। बोधयति लक्षणया प्रतिपादयति।

(ज) दूषयति तदन्य इति। अन्ये स्वयमादयः। मुख्यार्थत्वादिति। दक्षरूपार्थस्यैव मुख्यार्थत्वावधारणादित्यर्थः। तथा च सति प्रकृते मुख्यार्थबाधाभावात् लक्षणाप्रसङ्ग एव नास्तीति भावः।

(झ) ननूक्तार्थे किं प्रमाणमित्याह अन्यदिति। हि यस्मात्। व्युत्पत्तेर्योगार्थप्रतीतेर्निमित्तं कारणं योगार्थतावच्छेदकम् अन्यत् प्रवृत्तिनिमित्ताद्भिन्नम् एवं प्रवृत्तिनिमित्तञ्च मुख्यार्थज्ञानकारणञ्च शक्यतावच्छेदकञ्च अन्यत् प्रवृत्तिनिमित्ताद्भिन्नम् एतदुभयं परस्परमत्यन्तमेव भिन्नमित्यर्थः। एतद्बोधनार्थं वोभयत्राप्यन्यशब्दप्रयोगः। तथा च प्रायेण योगार्थतावच्छेदक-शक्यतावच्छेदकयोरत्यन्तभेदाद्योगार्थ-शक्यार्थयोरप्यत्यन्तभेदः। एवञ्च कुशलशब्दस्य कुशग्राहिरूपे योगार्थे सत्यपि "कृती कुशल इत्यपि" इत्यमरकोषात् दक्षरूप एव मुख्योऽर्थः क्लृप्त इत्याशयः।

(ञ) ननु कोषवत् व्याकरणस्यापि शक्तिग्राहकत्वात् पाचकशब्दस्य पचनकर्त्तृवत् कुशलशब्दस्यापि कुशग्राहिरूप एव मुख्योऽर्थः स्वीक्रियत इत्याह व्युत्पत्तीति। व्युत्पत्तिलभ्यस्य योगार्थस्य मुख्यार्थत्वे सर्वत्र मुख्यार्थत्वस्वीकारे। आपत्तिविषयीभूतां लक्षणामुपपादयितुमाह गमेर्डोरिति। गमेर्डोरिति उणादिसूत्रेणेत्यर्थः। व्युत्पादितस्य गमनकर्त्तृरूपयोगार्थसम्पादकीकृतस्य। शयनकालेऽपि प्रयोगादिति। न खल्वेक एव गौरेकदैव गन्ता शयिता च भवितुमर्हति युगपद्गमनशयनयोः परस्परबाधादिति भावः। न चात्रापि लक्षणायामिष्टापत्तिरिति वाच्यम्, वृक्षः फलतीत्यादावपि छेदनार्थकव्रश्चधातोः कर्त्तरि सक्प्रत्ययाल्लक्षणाप्रसङ्गेन प्रायेण सर्वत्रैव लक्षणाप्रसङ्गात् तस्या अभिधातोऽपि प्रबलत्वापत्तेः। ननु कुशल-गवादिशब्दानां व्याकरणात् कुशग्राहिगन्त्रादिरूपयोगार्थग्रहणसम्भवे कोषात् दक्ष-सास्नादिमत्-प्राण्यादिरूपार्थस्य मुख्यार्थतया ग्रहणे किं विनिगमकं कोषव्याकरणयोरुभयोरेव शक्तिग्राहकतायां समान-प्रामाण्याङ्गीकारादिति चेत्? अत्रोच्यते—प्रकृतिप्रत्ययोभयप्रतीतिसापेक्षतया योगार्थप्रतीतौ गौरवम्, विलम्बश्च, किन्तु तदुभयप्रतीतिनिरपेक्षतया समुदायेन युगपदेकार्थप्रत्यायकत्वात् रूढ्यर्थप्रतीतौ लाघवम् अविलम्बश्चेति रूढ्यर्थसम्भवे योगार्थमपहाय रूढ्यर्थ एव मुख्यार्थतया अङ्गीक्रियते। तदेतामेव युक्तिमाश्रित्य भट्टपादैरुक्तम्—"लब्धात्मिका सती रूढिर्भवेद्योगापहारिणी। कल्पनीया तु लभते नात्मानं योगबाधतः॥" पाचकशब्दादौ तु तादृशरूढेरभावात् व्याकरणानुसारेण पचनकर्त्रादिरूपो योगार्थ एव मुख्यार्थतयाङ्गीक्रियत इति सर्वमवदातम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तद्भेदानाह—(ट)

**१० । मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये ।**
**स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा ॥ (ठ)**

रूढावुपादानलक्षणा यथा—श्वेतो धावति। प्रयोजने यथा—कुन्ताः प्रविशन्ति। अनयोर्हि श्वेतादिभिः कुन्तादिभिश्च अचेतनतया केवलै-र्धावनप्रवेशनक्रिययोः कर्त्तृतयाऽन्वयमलभमानैरेतत्सिद्धये आत्मसम्बन्धिनो-

(ट) तदिति। तस्याः सामान्यतो निरूपिताया लक्षणायाः, भेदान् तदन्तर्गतविशेषान् आह निरूपयति।

(ठ) मुख्यार्थस्येति। अत्र एषेति तच्छब्दसमानार्थे तच्छब्दप्रयोगादेव यथेति प्रत्येतव्यम्। एवञ्च वाक्यार्थे विषये मुख्यार्थस्य अन्वयसिद्धये यया शक्त्या इतरस्य मुख्यार्थभिन्नार्थस्य आक्षेपो मुख्यार्थवैशिष्ट्येनैव प्रतीतिः स्यात्, एषा सा आत्मनोऽपि मुख्यार्थस्यापि अपिशब्दात्तदितरार्थस्यापि च उपादानाद्ग्रहणात् ज्ञानाद्धेतोः उपादानलक्षणा उच्यत इति शेषः। उपादाने उक्तविधोपादानविषये लक्षणा उपादानलक्षणेति संज्ञा। ईदृशीं संज्ञां प्रति "आत्मनोऽप्युपादानात्" इति हेतुरुक्तः। एवञ्च मुख्यार्थ-विशिष्टतदितरार्थप्रतिपादकशब्दत्वम् उपादानलक्षणात्वमिति लक्षणं फलितम्। अतएव अजहत्-स्वार्थेति प्राचां संज्ञाप्युपपद्यते। तथा च श्वेतो धावतीत्यादौ समवायेन श्वेतगुणविशिष्टाश्वादिप्रतिपादनात् कुन्ताः प्रविशन्तीत्यादौ संयोगेन कुन्तविशिष्टपुरुषादिबोधनात् "कदली कदली" इत्यादौ द्वितीय-कदल्यादिशब्देन तत्समवेतत्वसम्बन्धेन कदल्यादिविशिष्टशैत्यगुणादिप्रत्यायनात् काकेभ्यो रक्ष्यतामन्न-मित्यादौ समानोपघातकत्वसम्बन्धेन काकविशिष्टकुक्कुरादिज्ञापनात् छत्रिणो गच्छन्तीत्यादौ च सहचरत्व-सम्बन्धेन छत्रिविशिष्टाच्छत्रादिबोधजननात् उपादानलक्षणात्वसिद्धिर्निर्विवादैव। न च काकेभ्यो रक्ष्यता-मन्नं छत्रिणो गच्छन्तीत्यादौ मुख्यार्थबाधाभावेन लक्षणायाः सामान्यलक्षणस्यैव सङ्गतेरभावात् कथं तद्विशेषलक्षणसङ्गतिरिति वाच्यं वक्तृतात्पर्य्यानुपपत्तावपि मुख्यार्थबाधावश्यम्भावात्। तथा च उप-घातकेभ्योऽन्नं रक्षणीयमित्यभिप्रेत्यैव बालेन जनन्यादिं प्रति काकेभ्यो रक्ष्यतामन्नमिति प्रयुक्तम्। तेन चोपघातकमात्रे काकपदप्रयोगान्मुख्यार्थबाधः सम्भवत्येव। अतएव भट्टपादैरुक्तम्—"काकेभ्यो रक्ष्यता-मन्नमिति बालोपदिश्यतः। उपघातप्रधानत्वात् किं श्वादिभ्यो न रक्ष्यते ॥" एवं छत्रच्छत्रिसमस्ताभि-प्रायेण छत्रिपदप्रयोगान्मुख्यार्थबाध ऊहनीयः। वक्तृतात्पर्य्यमेव हि शाब्दबोधनिरूपकम्। अतएव गङ्गायां घोष इत्यादौ गङ्गापदस्यैव तीरे लक्षणा न पुनर्घोषपदस्य मत्स्ये, तत्र वक्तृतात्पर्य्यापरि-ज्ञानादिति।

(ड) उदाहृतलक्ष्ययोर्लक्षणं सङ्गमयितुमाह अनयोरिति। हि तथाहि। अचेतनतयेति अन्वयमलभमानैरित्यनेनान्वेति। केवलैः स्वस्वांशयत्नेनाश्वपुरुषाद्याक्षेपरहितैः। अन्वयमलभमानै-रित्यन्तेन मुख्यार्थबाधो दर्शितः। तथा च चेतनान्वययोग्याभ्यां धावनप्रवेशनक्रियाभ्यां सह कर्त्तृत्वे-नान्वये श्वेतगुणकुन्तादिमतः [illegible] इत्यभिप्रायः। एतत्सिद्धये अन्वयसिद्धये। मुख्यार्थ-

CC-0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

ऽश्वादयः पुरुषादयश्चाक्षिप्यन्ते (ड)। पूर्वत्र प्रयोजनाभावात् रूढ़िः। उत्तरत्र तु कुन्तादीनामतिगहनत्वं प्रयोजनम् (ढ)। अत्र च मुख्यार्थस्यात्मनोऽप्युपादानम्, लक्षणलक्षणायान्तु परस्यैवोपलक्षणमित्यनयोर्भेदः (ण)। इयमेव "अजहत्स्वार्था" इत्युच्यते (त)।

**११। अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये।**
**उपलक्षणहेतुत्वादेषा लक्षणलक्षणा॥ (थ)**

सम्बन्धं दर्शयितुमाह आत्मसम्बन्धिन इति। आत्मनोः श्वेतगुणकुन्तास्त्रयोः सम्बन्धिनो यथाक्रमं समवायेन संयोगेन च सम्बन्धवन्तः। आक्षिप्यन्ते लक्ष्यतया आक्षिप्यन्ते प्रत्याय्यन्ते इत्यर्थः। एतेनालङ्कारिकमतेऽपि श्वेतादिशब्दानां गुणेष्वेव शक्तिरिति सूचितम्। अत्र धावनक्रियायां श्वेतगुणस्यापि सामानाधिकरण्यसम्बन्धे नान्वयसिद्धिः। एवञ्च "अत्र श्वेतो धावतीत्युदाहरणं चिन्त्यम्" इत्यादि रामचरणोक्तमेव चिन्त्यं सुधीभिः।

(ढ) ननु श्वेतो धावतीति केवलरूढ़ावेव कथमुदाहृतं प्रयोजनेऽपि किं न स्यादित्याह पूर्वत्रेति। इयन्तु सम्भाव्यमानप्रयोजनाभावमात्रज्ञापनाय पुनरुक्तिः। अतिगहनत्वम् अतिनिविड़त्वम्। इयमपि प्रयोजनस्वारूप्यमात्रप्रदर्शनाय पुनरुक्तिः।

(ण) ननूपादानलक्षणालक्षणलक्षणयोः को भेदः, येन तादृशं प्राथमिकद्वैविध्यमङ्गीक्रियत इत्याह अत्र चेति। किञ्चेति चार्थः। अत्र उपादानलक्षणायाम्। आत्मनः स्वस्य, अपिशब्दात् तदितरार्थस्य च। उपादानं ग्रहणं ज्ञानमिति यावत्। परस्यैवेत्येवकारेण आत्मनो मुख्यार्थस्य व्यवच्छेदः। केवलपरार्थस्येत्यर्थः। उपलक्षणं लक्षणया प्रतिपादनम्। उपादानलक्षणायां मुख्यार्थतदितरार्थयोरुभयोरेव प्रतीतिः, लक्षणलक्षणायान्तु केवलमुख्यार्थभिन्नार्थस्येत्यर्थः।

(त) अथ प्राचामजहत्स्वार्था नाम लक्षणा भवन्मते कतमेत्याह इयमेवेति। इयमेव अस्माकमुपादानलक्षणैव। अजहत् अत्यजन् स्वार्थौ मुख्यार्थौ यां सा अजहत्स्वार्था। आरूढ़वानर इत्यादिवद्द्वितीयान्यपदार्थे बहुव्रीहिः। श्वेतो धावतीत्यादौ श्वेतशब्दादिभिः श्वेतगुणादिरूपमुख्यार्थस्याप्यपरित्यागादिति भावः। उच्यते अन्यैरिति शेषः। तथा च शब्दशक्तिप्रकाशिकायाम्—"जहत्स्वार्थाजहत्स्वार्था निरूढ़ाधुनिकादिका। लक्षणा विविधाः प्रोक्ता लक्षकं स्यादनेकधा॥"

(थ) लक्षणलक्षणां लक्षयति अर्पणमिति। अत्रापि पूर्ववद्दययेति लभ्यते। वाक्यार्थे परस्य मुख्यार्थभिन्नार्थस्य अन्वयसिद्धये यया शक्त्या स्वस्य मुख्यार्थस्य अर्पणं परित्यागः सम्पद्यत इति शेषः, उपलक्षणहेतुत्वात् एषा सा लक्षणलक्षणा उच्यत इति शेषः। स्वान्वयिन्यनन्वयित्वम् उपलक्षणत्वम्। स्वपदं लक्षणीयपरम्। तथा च गङ्गायां घोष इत्यादौ लक्षणीयतटाद्यन्वयिनि घोषादौ गङ्गाया अनन्वयित्वात् गङ्गेत्याद्युपलक्षणम्। श्वेतो धावतीत्यादौ तु लक्षणीयाश्वाद्यन्वयिनि धावनक्रियादौ श्वेतादीनां सामानाधिकरण्येनान्वयात् नात्युपलक्षणत्वम्। तस्य उपलक्षणस्य उपलक्षणत्वस्य हेतुत्वात् स्वार्थपरित्याग-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रूढिप्रयोजनयोर्लक्षणलक्षणा यथा—कलिङ्गः साहसिकः, गङ्गायां घोष इति च (द)। अनयोर्हि पुरुषतटयोर्वाक्यार्थे अन्वयसिद्धये कलिङ्ग-गङ्गाशब्दावात्मानमर्पयतः (ध)। यथा वा—

"उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे! सुखितमास्स्व ततः शरदां शतम्॥" (न)

अत्रापकारादीनां वाक्यार्थेऽन्वयसिद्धये उपकृतादयः शब्दा आत्मानमर्पयन्ति। अपकारिणं प्रत्युपकारादिप्रतिपादनान्मुख्यार्थबाधः। वैपरीत्यलक्षणः सम्बन्धः। फलमप्यपकारातिशयः (प)।

इयमेव "जहत्स्वार्था" इत्युच्यते (फ)।

---

प्रयोजकतया कारणत्वादित्यर्थः। लक्षणे तादृशोपलक्षणत्वविषये लक्षणा लक्षणलक्षणा। एतेन अन्यार्थमात्रप्रतिपादकशक्तित्वं लक्षणलक्षणात्वमिति फलितम्।

(द) रूढीति। अत्र रूढौ 'कलिङ्गः साहसिकः' प्रयोजने च 'गङ्गायां घोषः' इति यथासंख्यं वेदितव्यम्।

(ध) उदाहृतयोर्लक्षणसङ्गतिं प्रतिपादयति अनयोरिति। हि तथाहि। अनयोर्मुख्यार्थबाधस्तत्-सम्बन्धश्च प्रागेव दर्शित इत्यवशिष्टमात्मार्पणमात्रं दर्शयति आत्मानमर्पयत इति। स्वस्वार्थपरित्यागेन पुरुषतटयोरर्थयोरात्मानं नियुञ्जाते तौ बोधयत इत्यर्थः।

(न) उक्तविसदृशं लक्ष्यान्तरं दर्शयितुमाह यथा वेति। उपकृतमिति। उपकाराय प्रेषिते जने नितान्तमपकारमेव कृत्वा प्रत्युपस्थिते प्रेषयितुः सखेदोक्तिरियम्। भवता बहु प्रचुरम् उपकृतम्, उद्देश्योपकारवैपरीत्येन दारुणमेवापकृतमिति भावः। सुजनता सौजन्यञ्च परमत्यन्तं यथा स्यात्तथा प्रथिता प्रकाशिता, सौजन्यवैपरीत्येन नितान्तदुर्जनतैव प्रथितेति भावः। तत्र तयोर्विषये किमुच्यते किं मे वक्तव्यमस्तीत्यर्थः। हे सखे! ईदृशमेव सदा विदधत् कुर्वन्, ततस्तद्विधानात् उपकारकरण-सौजन्यप्रकाशजनितपुण्यादित्यर्थः। शरदां वत्सराणां शतं यावत् सुखितं सुखं यथा स्यात्तथा, आस्स्व तिष्ठ, आचरणानुरूपं दुःखितमेव आस्स्वेत्यभिप्रायः।

(प) उदाहृते लक्षणसमन्वयं दर्शयन्नाह अत्रेति। प्रथमादिपदेन दुर्जनतादुःखितयोः परिग्रहः। द्वितीयादिपदेन सुजनतासुखितशब्दयोर्ग्रहणम्। आत्मानमर्पयन्तीति यथाक्रमम् अपकारदुर्जनता-दुःखितार्थेष्विति शेषः। लक्षणाहेतुं मुख्यार्थबाधं दर्शयति अपेति। उपकारादिप्रतिपादनादिति उपकृतादिशब्दप्रयोगेणेति शेषः। मुख्यार्थसम्बन्धं दर्शयितुमाह वैपरीत्येति। वैपरीत्यलक्षणः सम्पूर्ण-वैपरीत्यस्वरूपः। अपकारो हि उपकारस्य सम्पूर्णविपरीतो भवति। लक्षणाप्रयोजकं प्रयोजनमाह फलमिति। फलं प्रयोजनम्। अपिः समुच्चये।

(फ) ननु प्राचीनानां जहत्स्वार्था नाम लक्षणा भवन्मते कतमेत्याह इयमिति। इयमेव अस्माकं लक्षणलक्षणैव। जहत् परित्यक्तः स्वार्थो यया सा।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१२। आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा। (ब)

ताः पूर्वोक्ताश्चतुर्भेदलक्षणाः (भ)।

१३। विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत्।
सारोपा स्यान्निगीर्णस्य मता साध्यवसानिका॥ (म)

विषयिणा अनिगीर्णस्य विषयस्य तेनैव सह तादात्म्यप्रतीतिकृत् सारोपा (य)। इयमेव रूपकालङ्कारस्य वीजम् (१) (र)। रूढावुपादान-

(ब) अथालङ्कारिकसम्प्रदायसिद्धौ सारोपासाध्यवसानानामकौ लक्षणाभेदौ दर्शयितुमाह आरोपेति। शब्दोपस्थाप्यमुख्यार्थेन सह लक्ष्यार्थस्य अभेदज्ञानम् आरोपः। शब्दानुपस्थाप्यमुख्यार्थेन सह लक्ष्यार्थस्य अभेदज्ञानम् अध्यवसानम्। ताभ्यां करणाभ्यां ताः प्रत्येकमपि द्विधा भवन्ति, उक्तचतुर्विधलक्षणानां मध्ये एकैकैव सारोपात्वेन साध्यवसानात्वेन च द्विद्विप्रकारा भवतीत्यर्थः।

(भ) व्याख्यातुमाह ता इति। रूढिमूलत्वेन प्रयोजनमूलत्वेन च उपादानलक्षणा द्विविधा, तथैव लक्षणलक्षणापि द्विविधेति समुदायेन चतुर्भेदाश्चतुर्विधाः।

(म) मूलकार एव निरुक्तारोपाध्यवसानाभेदनिबन्धनं तासां प्रत्येकतः पुनर्भेदद्वयं विवृणोति विषयस्येति। अनिगीर्णस्य अतिरस्कृतस्य शब्दोपस्थापितस्येत्यर्थः, विषयस्य मुख्यार्थस्य अन्येन लक्ष्यार्थेन सह तादात्म्यप्रतीतिकृत् अभेदज्ञानजनिका लक्षणा, आरोपेण सहेति सारोपा तदाख्या स्यात्। एवमुत्तरार्द्धेऽपि विषयस्यान्यतादात्म्यप्रतीतिकृदित्यनुषञ्जनीयम्। तथा च निगीर्णस्य तिरस्कृतस्य शब्दानुपस्थापितस्येत्यर्थः विषयस्य मुख्यार्थस्य अन्यतादात्म्यप्रतीतिकृत् लक्ष्यार्थेन सह अभेदज्ञानजनिका लक्षणा, अध्यवसानेन सहेति साध्यवसाना तदाख्या स्यात्। एवञ्च शब्दोपस्थाप्यमुख्यार्थलक्ष्यार्थयोरभेदज्ञानजनकत्वं सारोपात्वम्, शब्दानुपस्थाप्यमुख्यार्थलक्ष्यार्थयोरभेदज्ञानजनकत्वं साध्यवसानात्वमिति फलितम्।

(य) अथ गौणक्रियाभूतयोरनिगीर्णनिगीर्णपदयोः कर्त्तारं निर्द्दिश्य विवृणोति विषयिणेति। विषयिणा अस्मिन् प्रकरणे लक्षणाया एव ज्ञानविषयत्वात् प्रतिपाद्यत्वसम्बन्धेन लक्षणास्वरूपविषयवता लक्ष्यार्थेनेत्यर्थः, अनिगीर्णस्य अतिरस्कृतस्य, विषयस्य स्वाभाविकशाब्दबोधविषयीभूतस्य मुख्यार्थस्य, तेनैव लक्ष्यार्थेनैव। तथा च यदा वाचकशब्दः सन्तिष्ठते तदा लक्ष्यार्थो मुख्यार्थं न निगिरति नाभ्यन्तरीकरोति। यथा—अश्वः श्वेतो धावति। अत्र श्वेतगुणविशिष्टरूपो लक्ष्यार्थो मुख्यार्थमश्वं न निगिरति साक्षादेवोपस्थितत्वात्। यदा तु वाचकशब्दो न सन्तिष्ठते तदा लक्ष्यार्थो मुख्यार्थं निगिरत्येव। यथा—श्वेतो धावति। अत्र श्वेतगुणविशिष्टरूपो लक्ष्यार्थो मुख्यार्थमश्वं निगिरति अभ्यन्तरीकरोति अनुपस्थितत्वात्। अनयैव दिशा अन्यत्रापि अनिगीर्णत्वं निगीर्णत्वञ्च बोध्यम्।

(र) इयमिति। इयं सारोपालक्षणैव रूपकालङ्कारस्य वीजम्। साध्यवसाना तु अतिशयोक्तेर्वीजमित्यपि बोध्यम्। अतएवालङ्कारिका ईदृशमभिनवं भेदं प्रदर्शयन्तीति भावः।

(१) विषयविषयिणोरित्यादिर्वीजमित्यन्तः पाठः क्वचिन्नास्ति।

CC-0. Panini Kanya Maha Vidyalaya Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लक्षणा सारोपा यथा—अश्वः श्वेतो धावति। अत्र हि श्वेतगुणवानश्वोऽनिगीर्णस्वरूपः स्वसमवेतश्वेतगुणतादात्म्येन प्रतीयते (ल)। प्रयोजने यथा—एते कुन्ताः प्रविशन्ति। अत्र सर्वनाम्ना कुन्तधारिपुरुषनिर्देशात् सारोपात्वम् (१) (व)। रूढौ लक्षणलक्षणा सारोपा यथा—कलिङ्गः पुरुषो युध्यते। अत्र कलिङ्गपुरुषयोराधाराधेयभावः सम्बन्धः (२) (श)। प्रयोजने यथा—आयुर्घृतम्। अत्रायुष्कारणमपि घृतं कार्य्यकारणभावसम्बन्धसम्बन्ध्यायुस्तादात्म्येन प्रतीयते। अन्यवैलक्षण्येनाव्यभिचारिणायुष्करत्वं प्रयोजनम् (ष)।

(ल) अत्रेति। अनिगीर्णस्वरूपः, अश्वशब्देनैवोपस्थितत्वादित्याशयः। स्वस्मिन् अश्वे समवेतः समवायसम्बन्धेन वृत्तिमान् यः श्वेतगुणः तस्य तादात्म्येन अभेदेन प्रतीयते, लक्ष्यार्थप्रतीतेः पूर्वमिति शेषः। समानविभक्तिभिरभेदप्रतीतिर्व्युत्पत्तिसिद्धत्वात् अश्वः श्वेत इत्युभयत्रापि समानप्रथमाविभक्तिनिर्देशात् श्वेतादिशब्दानां गुण एव शक्तिस्वीकाराच्चेति भावः।

(व) प्रयोजन इति। प्रयोजने उपादानलक्षणा सारोपा यथेत्यर्थः। सर्वनाम्ना एतच्छब्देन। सारोपात्वमिति। एतेन "एते कुन्ताः" इत्यत्र सर्वनाम्ना निर्देशेऽपि साक्षाद्वाचकपदेनानिर्देशात् साध्यवसानैव लक्षणेति काव्यप्रकाशमतं कटाक्षितम्। प्रत्यक्षवेलायामिदमेतदादिशब्दानां वाचकपदसमानोपस्थापकत्वनियमेनात्र निगीर्णरूपत्वाभावादित्याशयः।

(श) रूढाविति। अत्रापि पुरुषपदप्रयोगादनिगीर्णत्वं बोध्यम्। अत्र मुख्यार्थयोरचेतन-चेतनयोः कलिङ्गदेश-पुरुषयोः सामानाधिकरण्येनान्वयानुपपत्त्या मुख्यार्थबाधस्य सुबोधत्वात् केवलं मुख्यार्थसम्बन्धं दर्शयन्नाह अत्रेत्यादि।

(ष) प्रयोजन इति। प्रयोजने लक्षणलक्षणा सारोपा यथेत्यनुवर्त्तते। आयुर्घृतं पिबतीति वाक्यसमुदायः। अत्र घृतपदप्रयोगादनिगीर्णत्वम्। आयुः पिबतीति मात्रोक्तौ तु निगीर्णत्वम्। अत्रायुःपदेनायुष्करत्वं लक्ष्यते। भङ्ग्या मुख्यार्थबाधं तत्सम्बन्धञ्च दर्शयन् लक्ष्यार्थप्रतीतेः पूर्वावस्थामाह अत्रेति। आयुष्कारणमपि घृतमित्यनेन मुख्यार्थयोरायुर्घृतयोः सामानाधिकरण्येनान्वयबाधो दर्शितः। कार्य्यकारणभावसम्बन्धेन सम्बन्धि तदभिन्नसम्बन्धवत् कार्य्यतासम्बन्धवदित्यर्थः यदायुस्तस्य तादात्म्येन अभेदेन प्रतीयते, लक्षणाकरणात् पूर्वमिति शेषः। एतेन कार्य्यतारूपः सम्बन्धो दर्शितः। अस्यैव प्रयोजनाकाङ्क्षायामाह अन्येति। अन्येभ्यो घृतेतरमांसादिपदार्थेभ्यो वैलक्षण्येन आधिक्येन। अव्यभिचारिणा नियमेन। घृतपातुः सर्व्वेर्वायुर्वृद्धिदर्शनेन घृतस्यायुर्न्ननावश्यम्भावादित्याशयः।

(१) सारोपत्वमिति क्वचित् पाठः। (२) पुरुषकलिङ्गशब्दयोः···इति क्वापि पाठः। पुरुषकलिङ्गयोराधार्य्याधारसम्बन्ध इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा वा—राजकीये पुरुषे गच्छति "राजासौ गच्छति" इति। अत्र स्वस्वामिभावलक्षणः सम्बन्धः। यथा वा—हस्ताग्रमात्रेऽवयवे (१) "हस्तोऽयम्"। अत्रावयवावयविभावलक्षणः सम्बन्धः। ब्राह्मणेऽपि "तक्षासौ"। अत्र तात्कर्म्यलक्षणः सम्बन्धः। इन्द्रार्थासु स्थूणासु "अमी इन्द्राः"। अत्र तादर्थ्यलक्षणः सम्बन्धः। एवमन्यत्रापि (स)।

निगीर्णस्य पुनर्विषयस्य अन्यतादात्म्यप्रतीतिकृत् साध्यवसाना (ह)। अस्याश्चतुर्षु भेदेषु पूर्वोदाहरणान्येव (च)। तदेवमष्टप्रकारा लक्षणा (क)।

---

(स) मुख्यार्थबाधवन्मुख्यार्थसम्बन्धोऽपि लक्षणायामावश्यकः स चानियतः प्रसिद्धमात्र एव ग्राह्य इति दर्शयितुं सारोपाया एवोदाहरणान्तराणि दर्शयति यथा वेति। अत्र असावित्यनेनानिगीर्णत्वम्। राजपुरुषस्य राजवद्वेशभूषादीनामुज्ज्वलत्वं प्रयोजनम्। स्वस्वामिभावलक्षणः स्वत्वस्वामित्वरूपः। पुरुषः स्वं राजा च स्वामी। मुख्यार्थबाधयोर्पु स्पष्ट एव। हस्तोऽयमित्यत्र लक्षणाबीजं रूढिः। अयमित्यनेन चानिगीर्णत्वम्। तक्षा दारुशिल्पी हीनजातिविशेषः। असावित्यनेनानिगीर्णत्वम्। ब्राह्मणस्य तक्षवत् समस्तदारुशिल्पेषु नैपुण्यं प्रयोजनम्। तत् दारुशिल्पं कर्म्म यस्य स तत्कर्म्मा तस्य भावस्तात्कर्म्यं तत् लक्षणं स्वरूपं यस्य सः। इन्द्रार्थासु इन्द्रपूजानिमित्तं निर्म्मितासु स्थूणासु स्तम्भेषु। अमी इत्युल्लेखेनानिगीर्णत्वम्। इन्द्रवन्नमस्कार्य्यतादिकं प्रयोजनम्। स इन्द्रः अर्थः प्रयोजनं यासां तास्तदर्थास्तासां भावस्तादर्थ्यं तदेव लक्षणं स्वरूपं यस्य सः। एवमिति। अन्यत्रापि धनिनि गच्छति "कुवेरोऽयं गच्छति" इत्यादौ। अत्र प्रचुरधनवत्त्वरूपः सम्बन्धः। एवमूह्यमित्यर्थः।

(ह) मूलकारिकायाः पूर्वार्द्धविवरणपूर्वकं तदुदाहरणानि प्रदर्श्येदानीं तदुत्तरार्द्धमपि विवृणोति निगीर्णस्येति। इदन्तु कारिकाव्याख्यायामेव व्याख्यातम्।

(च) उदाहरणाकाङ्क्षायामाह अस्या इति। अस्याः साध्यवसानायाः। पूर्वोदाहरणान्येवेति। रूढ़ावुपादानलक्षणा साध्यवसाना यथा—श्वेतो धावति। अत्राश्व इत्यनुपादानात् विषयस्य निगीर्णत्वम्। एवमन्यत्रापि। प्रयोजने उपादानलक्षणा साध्यवसाना यथा—कुन्ताः प्रविशन्ति। रूढ़ौ लक्षणलक्षणा साध्यवसाना यथा—कलिङ्गः साहसिकः। प्रयोजने लक्षणलक्षणा साध्यवसाना यथा—गङ्गायां घोषः।

(क) तदेवमिति। पूर्वोक्ताः सारोपाश्चतस्रः साध्यवसानाश्च चतस्र इति मिलित्वा अष्टप्रकारा इत्यर्थः।

---

(१) अग्रमात्रे अवयवे इति क्वचित् पाठः। अग्रमात्रे हस्तावयवे, भागे इत्यपि क्वचित् पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१४। सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि।
सादृश्यात्तु मताः गौण्यस्तेन षोड़शभेदिताः॥ (ख)

ताः पूर्वोक्ता अष्टभेदा लक्षणाः। सादृश्येतरसम्बन्धाः कार्य्यकारणभावादयः। अत्र शुद्धानां पूर्वोदाहरणान्येव। रूढ़ावुपादानलक्षणा सारोपा गौणी यथा—एतानि तैलानि हेमन्ते सुखानि (ग)। अत्र तैलशब्दस्तिलभवस्नेहरूपं मुख्यार्थमुपादायैव सार्षपादिस्नेहेषु वर्त्तते (घ)। प्रयोजने यथा—राजकुमारेषु तत्सदृशेषु च गच्छत्सु "एते राजकुमारा गच्छन्ति" (ङ)। रूढ़ावुपादानलक्षणा साध्यवसाना गौणी यथा—तैलानि हेमन्ते सुखानि (च)। प्रयोजने यथा—राजकुमारा गच्छन्ति (छ)।

---

(ख) अष्टप्रकारा अपि ता लक्षणाः पुनर्द्विविधत्वेन विभजते सादृश्येतरेति। ताः सकला अपि लक्षणाः, सादृश्यात् सादृश्यसम्बन्धादितरे अन्ये सम्बन्धाः कार्य्यकारणभावादयो यासु ताः, शुद्धा उपचारामिश्रणात् केवलतया शुद्धाख्या मताः। तथा सादृश्यात् सम्बन्धाद्धेतोस्ता एव गौण्य उपचारगुणयोगात् गौणाख्या मताः। तेन हेतुना, षोड़श भेदाः प्रकारा आसां सञ्जाता इति षोड़शभेदिताः। तारकादित्वादितच्।

(ग) रूढ़ावित्यादि। अत्र एतानीत्यनेनैव सार्षपस्नेहनिर्द्देशाद्विषयस्यानिगीर्णत्वेन सारोपात्वम्। तिलस्येदं तैलमिति तैलशब्दस्य पाचकादिशब्दवत् व्याकरणानुसारेण तिलोत्पन्नस्नेहपदार्थ एव शक्तिः क्लृप्ता। एवञ्च "तैलाभ्यङ्गनिषेधे तु तिलतैलं निषिध्यते" इति परिभाषा "अतैलं सार्षपं तैलम्" इति प्रतिप्रसवश्च सङ्गच्छते। तथा चात्र सार्षपस्नेहेऽपि तत्तैलपदप्रयोगादेव मुख्यार्थबाधः। तिलोत्पन्नस्नेहपदार्थसादृश्यसम्बन्धघटितत्वाच्च गौणीत्वम्। "हेमन्ते तैलमत्यन्तं सर्वव्याधिहरं सुखम्" इति वैद्यकशास्त्रानुसारेणायं प्रयोग इति बोध्यम्।

(घ) ननु तथापि कथमत्रोपादानलक्षणेत्याह अत्रेत्यादि। वर्त्तते उपादानलक्षणयैवेति शेषः। तथा चात्र सर्षपोत्पन्नस्नेहरूपेतरार्थस्याक्षेपात् तिलोत्पन्नस्नेहरूपमुख्यार्थस्याप्युपादानाच्च उपादानलक्षणात्वम् उभयविधस्नेहस्यापि हेमन्ते सुखकरत्वादित्याशयः।

(ङ) प्रयोजन इति। अत्रानुक्तानामपि उपादानलक्षणा-सारोपा-गौणीति पदानां पूर्वतोऽनुवर्त्तनं बोध्यम्। एवमन्यत्रापि। अत्र अराजकुमारेष्वपि राजकुमारपदप्रयोगान्मुख्यार्थबाधः। राजकुमाराणामपि गमनेऽन्वयादुपादानलक्षणात्वम्। एत इत्यनेन राजकुमारभिन्नानामपि निर्द्देशेनानिगीर्णत्वात् सारोपात्वम्। सादृश्यसम्बन्धाच्च गौणीत्वम्। प्रयोजनन्तु राजकुमारतुल्यवेशभूषागमनाड़म्बरादि। अन्यत्राप्येवमनुसन्धेयम्।

(च) तैलानीति। अत्र एतानीत्यादिसर्वनाम्नापि निर्द्देशाभावाद्विषयस्य निगीर्णत्वेन साध्यवसानात्वम्।

(छ) प्रयोजन इति। अत्रापि पूर्ववत् प्रयोजनमनुसन्धेयम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रूढ़ौ लक्षणलक्षणा सारोपा गौणी यथा—राजा गौड़ेन्द्रं (१) कण्टकं शोधयति (ज)। प्रयोजने यथा—गौर्वाहीकः (झ)। रूढ़ौ लक्षणलक्षणा साध्यवसाना गौणी यथा—राजा कण्टकं शोधयति (ञ)। प्रयोजने यथा—गौर्जल्पति (ट)।

अत्र केचिदाहुः—"गोसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यन्ते। ते च गोशब्दस्य वाहीकार्थाभिधाने निमित्तीभवन्ति" (ठ)। तदयुक्तम्।

(ज) रूढ़ावित्यादि। शोधयति दमयति। अत्र तीक्ष्णाग्रवृक्षावयवविशेषे शक्तस्य कण्टकशब्दस्य गौड़ेन्द्रमित्यनेन सहाभेदनिर्देशान्मुख्यार्थबाधः। अतएव कण्टकशब्दः स्वार्थं विहाय गौड़ेन्द्रार्थे आत्मानमर्पयतीति लक्षणलक्षणात्वम्। गौड़ेन्द्रमिति शब्दोपस्थापितत्वेन विषयस्यानिगीर्णत्वात् सारोपात्वम्। स्वल्पापकारित्वरूपसादृश्यसम्बन्धाच्च गौणीत्वम्। "सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः" इत्यमरकोषादयस्तु अस्या एव निरूढ़लक्षणाया ज्ञापकाः, न तु कण्टकशब्दस्य क्षुद्रशत्रावपि शक्तिग्राहकाः "सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति" इति न्यायात् वृक्षावयव एव भूरिप्रयोगेण तदर्थस्यैव सहजतया प्रतीयमानत्वाच्च। तर्कवागीशोऽप्येवम्।

(झ) प्रयोजन इति। वाहीको हलवाहकः। तथा चात्र विजातीययोर्गोवाहीकयोरभेदेनान्वयानुपपत्तेर्मुख्यार्थबाधः। अतएव गोशब्दः स्वार्थं विहाय वाहीकार्थे आत्मानमर्पयतीति लक्षणलक्षणा। वाहीकशब्दप्रयोगेण विषयस्यानिगीर्णत्वात् सारोपा। मूढ़त्वसादृश्यसम्बन्धाच्च गौणी। मूढ़त्वातिशयस्तु प्रयोजनम्।

(ञ) रूढ़ाविति। अत्र गौड़ेन्द्रशब्दानभिधानेन विषयस्य निगीर्णत्वात् साध्यवसानात्वम्। अन्यत् सर्वं पूर्ववत्।

(ट) प्रयोजन इति। अत्रापि जल्पनं हि व्यक्तवाक्यम्, तच्च गोर्न सम्भवतीति मुख्यार्थबाधः। तेन च गोशब्दः स्वार्थं विहाय वाहीकार्थे आत्मानमर्पयतीति लक्षणलक्षणा। वाहीकशब्दानभिधानेन विषयस्य निगीर्णत्वात् साध्यवसाना। मूढ़त्वसादृश्यसम्बन्धाच्च गौणी। मूढ़त्वातिशयस्तु प्रयोजनम्।

(ठ) अथ गौर्वाहीक इत्यत्र लक्ष्यतावच्छेदकं निरूपयिष्यन् तत्र युक्तिहीनमितरेषां मतं निरसितुमाह अत्रेति। गोसहचारिणो गवि स्थिताः। जाड्यं मूर्खत्वम्, मान्द्यमपटुत्वम्, आदिपदेन च हिताहितविवेकहीनत्वादिपरिग्रहः। गुणा धर्माः। तथा चास्मिन् मते गोवृत्तिजाड्यमान्द्यादिधर्मत्वमेव लक्ष्यतावच्छेदकमिति भावः। ननु तथात्वे गोशब्दः कथं वाहीकार्थं प्रतिपादयतीत्याह ते चेति। वाहीकार्थाभिधाने अभिधया वाहीकरूपार्थप्रतिपादने, निमित्तीभवन्ति लक्षणायाः परं प्रवृत्तिनिमित्तानि भवन्ति। अतएवाभूततद्भावार्थे च्विप्रत्ययः। अत्र तेषामयमाशयः—गोशब्देन सास्नादिमत्प्राण्यर्थाभिधाने तद्वृत्ति गोत्वं यथा प्रवृत्तिनिमित्तम्, तथा उक्तप्रकारेण लक्षिता जाड्यमान्द्यादयो गुणा गवीव वाहीकेऽपि विद्यमाना इति गोशब्देन वाहीकार्थाभिधाने प्रवृत्तिनिमित्तीभवन्तीति।

(१) गौड़ेन्द्रः इति क्वचित् पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गोशब्दस्याऽगृहीतसङ्केतं वाहीकार्थमभिधातुमसामर्थ्यात् गोशब्दार्थमात्रबोधनाच्च (ड)। अभिधाया विरतत्वात् विरतायाश्च पुनरुत्थानाभावात् (ढ)। अन्ये च (१) पुनः—"गोशब्देन वाहीकार्थो नाभिधीयते, किन्तु स्वार्थसहचारिगुणसाजात्येन वाहीकार्थगता गुणा एव लक्ष्यन्ते" (ण)। तदप्यन्ये न मन्यन्ते। तथाह्यत्र गोशब्दाद्वाहीकार्थः प्रतीयते न वा?। आद्ये, (२) गोशब्दादेव वा? लक्षिताद्वा गुणादविनाभावद्वारा? (त)। तत्र न

(ड) दूषयति तदयुक्तमिति। न गृहीतो ज्ञातः सङ्केतो यस्मिन् तमिति वाहीकार्थाभिधाने सामर्थ्याभावं प्रति हेतुगर्भविशेषणम्। गोशब्दस्य वाहीकार्थे सङ्केत एव नास्तीति भावः। ननु भवन्मते गोत्वे गृहीतः सङ्केतो यथा अविनाभावाद्गोव्यक्तिमपि बोधयति, तथोक्तरीत्या लक्षितगुणवाहीकत्वयोरप्यविनाभावाद्वाहीकमपि बोधयत्वित्याह—गोशब्देति। गोशब्दार्थः सास्नादिमान् प्राणी। मात्रपदेन वाहीकव्यवच्छेदः। सर्वत्रैव गोत्वगोव्यक्त्योरविनाभावदर्शनात् गोत्वे गृहीतसङ्केतोऽपि गोशब्दो गोव्यक्तिमभिधत्ते, किन्त्वीदृशमुदाहरणं विनान्यत्र तादृशलक्षितगुणवाहीकत्वयोरविनाभावदर्शनादगृहीतसङ्केतो गोशब्दः कथं वाहीकार्थमभिदध्यात् भूरिप्रयोगदर्शनस्यैव शब्दार्थाभिधाननिश्चयनियामकत्वादिति भावः।

(ढ) नन्वत्र गोशब्दः सास्नादिमन्तमर्थमभिधाय पुनरपि वाहीकार्थमभिदधात्वित्याह अभिधाया इति। विरतत्वात् सास्नादिमन्तमर्थमभिधाय प्रक्षीणशक्तित्वात्। अथ गोरूपमर्थमभिधाय विरताप्यभिधा श्लेषादौ द्वितीयार्थमिव पुनरप्युत्थाय वाहीकार्थमभिदधात्वित्याह विरतायाश्चेति। पुनरुत्थानाभावादिति "शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभावः" इति नियमेनेति शेषः। तथा च श्लेषादौ युगपदेवोभयार्थाभिधानमङ्गीक्रियते, अत्र तु तथात्वाङ्गीकारे लक्षणैव निरर्थेति भावः। एवञ्चात्र गोवृत्तिजाड्यमान्द्यादिधर्म्मत्वं न लक्ष्यतावच्छेदकमिति प्रबन्धाशयः।

(ण) द्वितीयसम्प्रदायमतं दूषयितुमुत्थापयति अन्ये चेति। अत्राहुरित्यनुवर्त्तते। पुनःशब्दः किन्त्वर्थे। अन्ये त्वाहुरित्यर्थः। स्वस्य गोशब्दस्यार्थो गोत्वम्; एतन्मतेऽपि जातौ सङ्केताङ्गीकारात्। तस्य सहचारिणः समानाधिकरणा ये गुणा जाड्यमान्द्यादयस्तेषां साजात्येन सजातीयतया हेतुना, वाहीकार्थगता वाहीकपदार्थवृत्तयः गुणा जाड्यमान्द्यादयः। एवशब्देन गोवृत्तिगुणवाहीकार्थयोर्व्यवच्छेदः। तथा चैतन्मते वाहीकवृत्तिजाड्यमान्द्यादिधर्म्मत्वमेव लक्ष्यतावच्छेदकमिति भावः।

(त) दूषयति तदपीति। अन्ये स्वयमादयः। अत्र गौर्वाहीक इति प्रयोगे। आद्ये गोशब्दजन्यवाहीकार्थप्रतीतिपक्षाङ्गीकारे। अविनाभावो नियतसाहचर्यं तद्द्वारा। तेन गोशब्देनं लक्षितादुक्तप्रकारेण लक्षणाविषयीकृतात् गुणात् जाड्यमान्द्यादेः। तथा च गौर्वाहीक इत्यादौ किं गोशब्देनैव

(१) क्वचित् चकारो नास्ति। (२) आद्येऽपि इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रथमः, वाहीकार्थेऽस्यासङ्केतितत्वात् । न द्वितीयः, अविनाभावलभ्य-स्यार्थस्य शाब्दे अन्वये प्रवेशासम्भवात् । शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यते (थ) । न द्वितीयः । यदि हि गोशब्दाद्वाहीकार्थो न प्रतीयते, तदास्य वाहीकशब्दस्य च (१) सामानाधिकरण्यमसमञ्जसं स्यात् (द) ।

तस्मादत्र गोशब्दो मुख्यया वृत्त्या वाहीकशब्देन सहान्वयमलभमानोऽज्ञत्वादिसाधर्म्म्यसम्बन्धाद्वाहीकार्थं लक्षयति । वाहीकस्याज्ञत्वाद्यतिशय-बोधनं प्रयोजनम् (ध) ।

---

वाहीकत्वमभिधीयते ? उत गोशब्दलक्षितेन वाहीकवृत्तिजाड्यमान्द्यादिगुणेन स्वसहचरं वाहीकत्वं प्रत्याय्यते ? अनयोः कतरः पक्षोऽङ्गीक्रियत इत्यर्थः ।

(थ) उक्तमुभयपक्षमपि निरस्यति तत्रेति । तत्र तयोर्मध्ये, न प्रथमः, गोशब्देनैव वाहीकत्व-मभिधीयत इत्याद्यः पक्षो न युज्यत इत्यर्थः । अस्य गोशब्दस्य । वाहीकार्थे अगृहीतसङ्केतो गोशब्दः कथं तमभिदध्यात् बलादेव तु तदभिधानाङ्गीकारे लक्षणाङ्गीकार एव निष्फलः स्यादिति भावः । न द्वितीयः, अविनाभावद्वारा लक्षितगुणेन वाहीकार्थः प्रत्याय्यत इति पक्षोऽपि न सङ्गच्छत इत्यर्थः । अविनाभावलभ्यस्य अविनाभावद्वारा आक्षेपप्राप्यस्य अर्थस्य वाहीकार्थस्य शाब्दे शब्दप्रतिपाद्ये अन्वये प्रवेशा-सम्भवात् उपस्थित्ययोगात् । ननु कथं प्रवेशासम्भव इत्याह शाब्दीति । हि यस्मात् । शाब्दी शब्दसम्बन्धिनी शब्दोपस्थापितेत्यर्थः, आकाङ्क्षा अन्वयिशब्दान्तरश्रवणेच्छा, शब्देनैव अन्वयिशब्दान्तरेणैव प्रपूर्य्यते निवर्त्त्यते । एवशब्देन आक्षेपव्यावृत्तिः । तथा च यथा ग्राममिति शब्दोपस्थापिता आकाङ्क्षा गच्छती-त्यन्वयिशब्दान्तरेणैव प्रपूर्य्यते, न पुनराक्षेपलभ्येन गमनेन, तथा वाहीकवृत्तिगुणलक्षकगोशब्दोपस्थापिता आकाङ्क्षा तदन्वयिवाहीकशब्देनैव प्रपूर्य्यते, न पुनराक्षेपलभ्येन वाहीकार्थेनेत्यत्र प्रतीतिरेव साक्षिणी-त्याशयः ।

(द) न द्वितीय इति । गोशब्दाद्वाहीकार्थो न प्रतीयत इति मूलद्वितीयपक्षाङ्गीकारोऽपि न सङ्गच्छत इत्यर्थः । अत्र हेतुमाह यदीत्यादि । हि तथाहि । अस्य गोशब्दस्य । असमञ्जसमयुक्तम् । तथा च समानविभक्तिमत्त्वं हि शाब्दं सामानाधिकरण्यं तच्च शब्दार्थानामभेदप्रत्यायकम् । यथा—धनी चैत्र इति । एवञ्च यदि गोशब्दाद्वाहीकार्थो न प्रतीयते, प्रतीयते तु गोशब्दाद्गोत्वं वाहीकशब्दाच्च वाहीकत्वं तदा त्वनयोरभेदबोधकसामानाधिकरण्यासम्भवात् समानप्रथमाविभक्तिद्वयप्रयोगः अयुक्त एव स्यादिति भावः । अतएव वाहीकवृत्तिजाड्यमान्द्यादिगुणत्वमपि न लक्ष्यतावच्छेदकमिति प्रबन्धाशयः ।

(ध) इदानीं स्वसिद्धान्तमाह तस्मादिति । उक्तमतद्वयस्य दोषग्रस्तत्वादित्यर्थः । मुख्यया वृत्त्या अभिधया । अन्वयम् अभेदसम्बन्धेनान्वयम् । अलभमान इत्यनेन मुख्यार्थबाधो दर्शितः । अज्ञत्वादीत्यादि-शब्देन अपटुत्वादिसंग्रहः । एतेन मुख्यार्थसम्बन्धोऽपि दर्शितः । वाहीकार्थं लक्षयतीति । एतेन

---

(१) वाहीकस्येति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इयञ्च गुणयोगात् "गौणी" इत्युच्यते। पूर्व्वा तु उपचारामिश्रणात् शुद्धा (न)। उपचारो हि नाम अत्यन्तं विशकलितयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनमात्रम् (१) (प)। यथा—अग्निर्माणवकयोः (फ)। शुक्लपटयोस्तु नात्यन्तभेदप्रतीतिः (२)। तस्मादेवमादिषु शुद्धैव लक्षणा (ब)।

---

स्वमते वाहीकत्वमेव लक्ष्यतावच्छेदकमिति सूचितम्। वाहीके जाड्यमान्द्यादिप्रतीतिस्तु तत्तद्धर्म्मवतो गोः सादृश्यादेव तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वस्यैव सादृश्यपदार्थत्वात्। किं मूला लक्षणेयमिति जिज्ञासायामाह वाहीकस्येत्यादि।

(न) नन्वनयोर्गौणी-शुद्धेति संज्ञानिर्द्देशे किं वीजमित्याह इयञ्चेति। इयञ्च "एतानि तैलानि हेमन्ते सुखानि" इत्यादौ प्रदर्शिता च। लक्ष्ये शक्यस्य सादृश्यसम्बन्धी गुणस्तद्योगात् तद्वत्त्वात्। दायभागटीकायां श्रीकृष्णोऽपि—"शक्यस्य सादृश्यात्मकः सम्बन्धो गुणस्तदधीना या लक्षणा सा गौणी" इत्याह स्म। एवञ्चात्र उपचारमिश्रणमस्तीति ज्ञेयम्। पूर्वा तु कारिकायां प्रथमोक्ता तु।

(प) अथ को नामायमुपचार इत्याह उपेति। हि तथाहि। विशेषेण शकलं खण्डं भेदः अनयोः सञ्जातमिति विशकलितौ तयोः, वस्तुतो नितान्तभिन्नयोः पदार्थयोरित्यर्थः। एवञ्च इतच्प्रत्ययोन्नेयसञ्जातक्रियाविशेषणत्वादत्यन्तमित्यत्र द्वितीया। सादृश्यातिशयमहिम्ना बहुतरधर्म्मघटितसादृश्यप्रभावेण भेदप्रतीतिस्थगनमात्रं भेदज्ञानविराममात्रम्, न त्वभेदारोप एवोपचार इत्यर्थः। तथा च मात्रपदेन "अभेदारोप उपचारः" इति परकीयोपचारलक्षणमनभीष्टमिति सूचितम्। तादृशलक्षणे हि "आयुर्घृतम्" इत्यादौ शुद्धालक्षणास्थले अभेदारोपसत्त्वेनोपचारसत्त्वाद्गौणीलक्षणाप्रसङ्गेनातिव्याप्तिप्रसङ्गः स्यात्। स्वमते तु भेदज्ञानविरामाभावान्न गौणीलक्षणाप्रसङ्ग इति ध्येयम्।

(फ) उपचारस्य उदाहरणमाह यथेति। वैजात्येन अत्यन्तभिन्नयोरप्यग्निमाणवकयोः पवित्रत्वतेजस्वित्व-पीतवर्णत्वादि-बहुतर-धर्म्म-घटित-सादृश्यप्रभावेण भेदप्रतीतेर्विरामसत्त्वादुपचारः समुन्नेय इति भावः। नवोपनीतो ब्रह्मचारी माणवकः।

(ब) ननूपचारलक्षणे अत्यन्तपदेन किं व्यावर्त्त्यत इत्याह शुक्लपटयोरिति। तुशब्देन अग्निमाणवकयोरित्युदाहरणादस्य भेदः सूचितः। तथा च शुक्लपटयोर्गुणत्वद्रव्यत्वाभ्यां वैजात्ये सत्यपि "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इत्यभिधानात् शुक्लादिशब्दानां गुणिवाचकत्वमते सर्व्वथैव भेदाभावात् गुणवाचकत्वमतेऽपि च निरूढलक्षणाङ्गीकारादग्निमाणवकयोरिवात्यन्तभेदप्रतीत्यभावात् नास्त्युपचार इत्याशयः। तस्मादुपचाराभावात्, एवमादिषु शुक्लः पट इत्यादिषु शुद्धैव लक्षणा, न तु गौणीत्यर्थः। तत्रोपचारयोरावश्यकत्वादिति भावः।

यदा तु गौणी लक्षणैव शब्दार्थयोः शोभातिशायिनी, तदा सैव रूपकालङ्कारतां भजते। यथा—बाहुलता पाणिपद्ममिति। शोभानतिशायिनी चेत्तदा तु लक्षणामात्रम्। यथा—गौर्वाहीकः। वैचित्र्य-

---

(१) भेदप्रतीतिविस्मरणमात्रमिति पाठान्तरम्। (२) अत्यन्तं भेदप्रतीतिरित्यपि पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**१५ । व्यङ्ग्यस्य गूढ़ागूढ़त्वाद्द्विधा स्युः फललक्षणाः । (भ)**

प्रयोजने या अष्टभेदा लक्षणा दर्शितास्ताः प्रयोजनरूपव्यङ्ग्यस्य गूढ़ागूढ़तया प्रत्येकं द्विधा भूत्वा षोड़श भेदाः । तत्र गूढ़ः—काव्यार्थभावनापरिपक्वबुद्धिविभवमात्रवेद्यः । यथा—"उपकृतं बहु तत्र" इति (म) । अगूढ़ः—अतिस्पष्टतया सर्व्वजनसंवेद्यः । यथा—

"उपदिशति कामिनीनां यौवनमद एव ललितानि ॥" (य)

अत्र "उपदिशति" इत्यनेन "आविष्करोति" इति लक्ष्यते । आविष्कारातिशयश्चाभिधेयवत् स्फुटं प्रतीयते (र) ।

**१६ । धर्म्मिधर्म्मगतत्वेन फलस्यैता अपि द्विधा । (ल)**

---

जनकधर्म्मस्यैवालङ्कारत्वस्य वक्ष्यमाणत्वात् । एवञ्च "ननु गौणलक्षणातो रूपकालङ्कारस्य को भेदः" इत्यादिना रामचरणस्य विचारावतारणं जल्पनमात्रमेव ।

(भ) प्रकारभेदेन पुनरपि लक्षणां विभजते व्यङ्ग्यस्येति । फलं प्रयोजनं तन्मूला लक्षणाः फललक्षणाः, व्यङ्ग्यस्य व्यञ्जनावृत्तिप्रतिपाद्यस्य तस्यैव फलात्मकप्रयोजनस्य गूढ़ागूढ़त्वात् द्विधा स्युः । अत्र व्यङ्ग्यस्येत्यनेन लक्षणामूलीभूतं प्रयोजनं व्यञ्जनावृत्तिमात्रप्रतिपाद्यं भवतीति सूचितम् ।

(म) गूढ़त्वमगूढ़त्वञ्च निर्वक्ति तत्रेति । तत्र तयोर्मध्ये । प्रयोजनरूपव्यङ्ग्यार्थ इत्यध्याहार्य्यविशेषणत्वात् गूढ़ इति पुंसा निर्देशः । काव्यार्थानां भावनया अनुशीलनेन परिपक्वा निपुणीभूता, या बुद्धिस्तस्या विभवमात्रेण चमतामात्रेण वेद्यः, न त्वपरिपक्वबुद्धिवेद्य इत्यर्थः । अतस्तादृशव्यक्तिपक्षे गूढ़ इत्याशयः । उपकृतमित्यस्य अपकृतमित्यर्थकतया लक्ष्यत्वे अपकारातिशयात्मकप्रयोजनरूपव्यङ्ग्यार्थं तादृशपरिपक्वबुद्धय एव विदन्तीति भावः ।

(य) "श्रीपरिचयाज्जड़ा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥"

इति काव्यप्रकाशे श्लोकसमुदायः ।

अर्थस्तु— जड़ा अज्ञा अपि जनाः श्रीपरिचयात् धनसम्पत्तिलाभात् हेतोः विदग्धचरितानां विचक्षणलोकचरित्राणाम् अभिज्ञा भवन्ति, विचक्षणलोकवत् व्यवहर्त्तुं शक्नुवन्तीत्यर्थः । तथा च यौवनमद एव कामिनीनां ललितानि लीलाविलासादिसुकुमारचेष्टितानि उपदिशति आविष्करोति । यथा यौवनमद एव कामिनीनां ललितान्याविष्करोति तथा श्रीपरिचय एव जड़ानां विदग्धव्यवहाराभिज्ञतामाविष्करोतीति भावः ।

(र) लक्ष्यार्थं दर्शयितुमाह अत्रेति । उपदेशो हि परशिक्षार्था वाक्, स च चेतनकार्य्या इत्यचेतनस्य यौवनमदस्य तत्कर्त्तृत्वासम्भवान्मुख्यार्थबाध इत्युपपूर्वदिशधातुः स्वार्थं विहाय आविष्कारार्थे आत्मानमर्पयतीति लक्षणलक्षणा । आविष्कारातिशयश्च प्रयोजनस्वरूप इत्यर्थः । अभिधेयवत् वाच्यार्थवत् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एता अनन्तरोक्ताः षोड़शभेदा लक्षणाः फलस्य धर्म्मिगतत्वेन धर्म्मगतत्वेन च प्रत्येकं द्विधा भूत्वा द्वात्रिंशद्भेदाः । दिङ्मात्रं यथा—(१) (व)

"स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढ़ं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा ! हा देवि ! धीरा भव ॥" (श)

अत्रात्यन्तदुःखसहिष्णुरूपे रामे धर्म्मिणि लक्ष्ये तस्यैवातिशयः फलम् (ष)।

---

(ल) पुनर्विभजते धर्म्मीति । एताः पूर्वोक्ताः प्रयोजनमूलाः षोड़शप्रकारा अपि लक्षणाः, फलस्य मूलभूतप्रयोजनस्य धर्म्मिधर्म्मगतत्वेन क्वचित् धर्म्मिवृत्तित्वेन क्वचित् धर्म्मवृत्तित्वेन च प्रत्येकमेव द्विधा भवन्ति ।

(व) एता इति । अनन्तरोक्ता अव्यवहितपूर्वोक्ताः । दिङ्मात्रमनयोरेकैकप्रकारमात्रमुदाहरणं प्रदर्श्यत इत्यर्थः । एवमन्यत्रापि ज्ञेयम् ।

(श) स्निग्धेति । सीताविरहार्त्तस्य रामचन्द्रस्योक्तिरियम् । स्निग्धया अरुक्षया श्यामलया च कान्त्या स्वकीयशोभया लिप्तं व्याप्तं वियदाकाशं यैस्ते, वेल्लन्त्यः अधोविचरन्त्यः बलाका बकपङ्क्तयो येषां ते तथोक्ताश्च घना मेघाः, कामं पर्य्याप्तं यथा स्यात्तथा सन्तु भवन्तु । तथा शीकरिणो जलविन्दुवाहिनो वाता वायवश्च कामं सन्तु । तथा कला मधुरास्फुटाः, पयोदा मेघा एव सुहृद आनन्दजनकत्वेन बन्धवो येषां तेषां मयूराणाम् आनन्दकेका आमोदजनितकेकारवाश्च कामं सन्तु । अमी नितरामेवोद्दीपकाः सर्वथैवाविर्भवन्त्वित्यर्थः । ननु तथात्वे भवतो महत् कष्टमेव भविष्यतीत्यत्राह दृढ़मित्यादि । दृढ़मतिमात्रं कठोरहृदयः अहं रामोऽस्मि, अतएव सर्वं सहे सोढ़ुं शक्नोमि । तु किन्तु वैदेही नितान्तकोमलमना सीता, कथं भविष्यति ईदृशघनादिदर्शने मां विना कीदृशी भविष्यति । अत्यन्तमेवाधीरा भविष्यतीति भावः । अतएव हहेति महाविषादद्योतकमव्ययम् । हा देवि ! सीते ! धीरा भव ईदृशेऽपि व्यापारे धैर्य्यावलम्बिनी भव ।

(ष) अत्र यतो रामोऽस्मि अतएव सर्वं सहे इति सर्वसहनं प्रति केवलरामस्य हेतुत्वानुपपत्तेर्मुख्यार्थबाधः । अथवा सर्वं सहे इत्युत्तमपुरुषनिर्द्देशेनैवात्मपरिचये सत्यपि पुनस्तदर्थमेव रामोऽस्मीत्यभिधाने तात्पर्य्यानुपपत्तेर्मुख्यार्थबाधः । अतएव दशरथनन्दनरूपस्य मुख्यार्थस्यापि वाक्यार्थे अन्वयसिद्धये अत्यन्तदुःखसहिष्णुत्वरूपेतरार्थस्याक्षेपादुपादानलक्षणेति विविच्याह अत्रेति । एवञ्चात्र अत्यन्तदुःखसहिष्णुत्वमेव लक्ष्यतावच्छेदकं बोध्यम् । धर्म्मिणि अत्यन्तदुःखसहिष्णुत्वरूपधर्म्मवति । लक्ष्ये लक्षणाप्रतिपाद्ये । तस्यैव रामस्य, अतिशयो दुःखसहिष्णुत्वविषयकोत्कर्षः फलं प्रयोजनम् । अतएवात्र लक्षणायाः फलं धर्म्मिगतमित्यवधेयम् ।

---

(१) क्रमेणोदाहरति इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"गङ्गायां घोषः" इत्यत्र तटादिषु लक्ष्येषु शीतत्वपावनत्वादिरूपधर्मस्यातिशयः फलम् (स) ।

१७ । तदेवं लक्षणाभेदाश्चत्वारिंशन्मता बुधैः । (ह)

रूढ़ावष्टौ फले द्वात्रिंशदिति चत्वारिंशल्लक्षणाभेदाः ।

किञ्च—(च)

१८ । पदवाक्यगतत्वेन प्रत्येकं ता अपि द्विधा ॥ (क)

ता अनन्तरोक्ताः । तत्र पदगतत्वेन यथा—गङ्गायां घोषः । वाक्यगतत्वेन यथा—"उपकृतं बहु तत्र" इति । एवमशीतिप्रकारा लक्षणा (ख) ।

---

(स) फलस्य धर्मगतत्वमुदाहर्तुमाह गङ्गायामिति । प्रसिद्धलक्ष्यप्रदर्शनार्थमेवेदमुदाहृतम् । अन्यथोक्तश्लोके लेपनस्य तरलपदार्थनिष्पाद्यत्वेन मुख्यार्थबाधात् लिप्तपदस्य व्याप्तौ लक्षणायां व्याप्तेरतिशयरूपस्य फलस्य व्याप्तिधर्मगतत्वात् तदेवोदाहृतं पर्य्याप्तं स्यात् ।

(ह) उक्ता लक्षणाः संख्यया सङ्कलयितुमाह तदेवमिति । सङ्गतिकं स्पष्टमेतत् ।

(च) ता अपि लक्षणाः पुनर्द्वैविध्येन विभक्तुमाह किञ्चेति । अपि चेत्यर्थः ।

(क) पदेति । पदवाक्यगतत्वेन क्वचित् पदवृत्तित्वेन क्वचिद्वाक्यवृत्तित्वेन चेत्यर्थः । "वाक्ये न सा शक्तिर्न वा लक्षणा" इति चिरन्तनोक्तेर्यद्यपि शक्तिवत् लक्षणाया अपि वाक्यगतत्वं न सम्भवति, तथापि वाक्यस्थबहुपदगतलक्षणाया एव व्यापकत्वेन वाक्यगतत्वमुपचर्य्यते । तर्कवागीशोऽप्येवम् । अतएव वृत्तिकता वाक्यगतत्वे "उपकृतं बहु तत्र" इत्याद्युदाहृतम् । अत्र हि "उपकृत-सुजनता-सुखिते"ति पदत्रय एव लक्षणेति ।

(ख) अशीतिप्रकारेति । तथा च—

| नामानि । | | उदाहरणानि । |
|---|---|---|
| १ । रूढ़ौ उपादानलक्षणा सारोपा शुद्धा | ... | अश्वः श्वेतो धावति । |
| २ । रूढ़ौ उपादानलक्षणा साध्यवसाना शुद्धा | ... | श्वेतो धावति । |
| ३ । रूढ़ौ लक्षणलक्षणा सारोपा शुद्धा | ... | कलिङ्गः पुरुषो युध्यते । |
| ४ । रूढ़ौ लक्षणलक्षणा साध्यवसाना शुद्धा | ... | कलिङ्गः साहसिकः । |
| ५ । रूढ़ौ उपादानलक्षणा सारोपा गौणी | ... | एतानि तैलानि हेमन्ते सुखानि । |
| ६ । रूढ़ौ उपादानलक्षणा साध्यवसाना गौणी | ... | तैलानि हेमन्ते सुखानि । |
| ७ । रूढ़ौ लक्षणलक्षणा सारोपा गौणी | ... | राजा गौड़ेन्द्रं कण्टकं शोधयति । |
| ८ । रूढ़ौ लक्षणलक्षणा साध्यवसाना गौणी | ... | राजा कण्टकं शोधयति । |

इमा एवाष्टौ केवलरूढ़िमूलाः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ व्यञ्जना (ग)।

१६। विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च॥ (घ)

"शब्द-बुद्धि-कर्म्मणां विरम्य व्यापाराभावः" इति नयेन अभिधा-लक्षणा-तात्पर्य्याख्यासु तिसृषु वृत्तिषु स्वं स्वमर्थं बोधयित्वा उपक्षीणासु, यया

| नामानि। | | उदाहरणानि। |
|---|---|---|
| १। प्रयोजने उपादानलक्षणा सारोपा शुद्धा | ... | एते कुन्ताः प्रविशन्ति। |
| २। प्रयोजने उपादानलक्षणा साध्यवसाना शुद्धा | ... | कुन्ताः प्रविशन्ति। |
| ३। प्रयोजने लक्षणलक्षणा सारोपा शुद्धा | ... | आयुर्घृतम्। |
| ४। प्रयोजने लक्षणलक्षणा साध्यवसाना शुद्धा | ... | आयुः पिबति। |
| ५। प्रयोजने उपादानलक्षणा सारोपा गौणी | ... | एते राजकुमारा गच्छन्ति। |
| ६। प्रयोजने उपादानलक्षणा साध्यवसाना गौणी | ... | राजकुमारा गच्छन्ति। |
| ७। प्रयोजने लक्षणलक्षणा सारोपा गौणी | ... | गौर्वाहीकः। |
| ८। प्रयोजने लक्षणलक्षणा साध्यवसाना गौणी | ... | गौर्जल्पति। |

एता अष्टौ प्रयोजनमूला लक्षणाः।

ताश्च तस्य प्रयोजनस्य गूढ़त्वेन ("उपकृतं बहु तत्र" इत्यादौ) अगूढ़त्वेन च ("उपदिशति कामिनीनां यौवनमद एव ललितानि" इत्यादौ) प्रत्येकं द्विधा भूत्वा षोड़शप्रकारा भवन्ति। ता अपि तत्प्रयोजनस्य धर्म्मिगतत्वेन ("रामोऽस्मि सर्वं सहे" इत्यादौ) धर्म्मगतत्वेन च (गङ्गायां घोषः) इत्यादौ प्रत्येकं द्विविधाः सत्यो द्वात्रिंशद्विधा जायन्ते। ताश्च प्रयोजनमूला द्वात्रिंशत्प्रकारा उक्ताभिः रूढ़मूलाभिरष्टभिः सह मिलित्वा चत्वारिंशत्प्रकाराः सम्पद्यन्ते। ताश्च सर्वाः पदगतत्वेन (गङ्गायां घोषः इत्यादौ) वाक्यगतत्वेन च ("उपकृतं बहु तत्र" इत्यादौ) पुनः प्रत्येकं द्विधा भूत्वा समुदायेन अशीतिप्रकारा भवन्ति।

(ग) अथ लक्षणानिरूपणानन्तरं तदनुजारूपत्वात् "व्यङ्ग्यो व्यञ्जनया" इत्युद्देशक्रमप्राप्तत्वाच्च व्यञ्जना निरूप्यत इति शेषः।

(घ) विरतास्विति। अभिधाद्यासु अभिधा-लक्षणा-तात्पर्य्यरूपासु तिसृष्वेव वृत्तिषु विरतासु सतीषु, यया वृत्त्या अपरः शक्य-लक्ष्य-तात्पर्य्यार्थभिन्नः अर्थो बोध्यते, सा शब्दस्य अर्थादिकस्य च व्यञ्जना नाम वृत्तिः शक्तिरुच्यत इति शेषः। एतेन वाच्यादिभिन्नार्थप्रतिपादकशक्तित्वं व्यञ्जनात्वमिति लक्षणं फलितम्। आदिशब्देन लक्ष्यार्थतात्पर्य्यार्थयोर्ग्रहणम्। अत्र वाच्यत्वस्य केवलान्वयित्वेऽपि तत्तत्पदनिष्ठवाचकता-निरूपितवाच्यत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वमर्थस्य विवक्षितमिति नाप्रसिद्धिः। उदाहरणम् इतिकर्तव्यमेव दर्शयिष्यते।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अपरः (१) अन्योऽर्थो बोध्यते, सा शब्दस्यार्थस्य प्रकृतिप्रत्ययादेश्च वृत्ति-र्व्यञ्जन-ध्वनन-गमन-प्रत्यायनादिव्यपदेशविषयो (२) व्यञ्जना नाम (ङ)।

तत्र—(च)

२०। अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा। (छ)

(ङ) अभिधादीनां प्रातिस्विकार्थप्रतिपादनानन्तरं विरामे प्राचीनसंवादमुपन्यस्य विवृणोति शब्द-बुद्धीत्यादि। शब्दो घटादिः, बुद्धिः प्रत्यक्षादिः, कर्म्म च यागादि, तेषाम्, विरम्य सकृन्मात्रस्वस्वविषय-प्रतिपादनानन्तरमुपरम्य उपक्षीणीभूय अगोचरतां गतानामिति शेषः व्यापाराभावः पुनस्तत्तद्विषयप्रतिपादनाभाव उपक्षीणत्वे नायोग्यत्वादिति भावः। एतच्च शब्दानित्यतावादिनां मतमाश्रित्याभिहितम्। तथा च सकृदुच्चरितो घटशब्दः सकृदेव कम्बुग्रीवादिमन्तमर्थमभिधायोपक्षीणो न पुनस्तमभिदध्यात्। अतएवोक्तम्—"सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति" इति। वह्निमान् धूमादित्यादौ सकृदुत्पन्नं धूमप्रत्यक्षं सकृदेव वह्नेरनुमानं जनयित्वोपक्षीणं न पुनस्तज्जनयेत्। तथा सकृदनुष्ठितोऽश्वमेधयागः स्वर्गजननयोग्यमदृष्टं सकृदेव साधयित्वोपक्षीणो न पुनस्तत् साधयेदिति। अतएव इषोरिवैषां पुनः पुनः प्रातिस्विकविषय-प्रतिपादनात्मकव्यापारनिरासः। एवञ्च शब्दानामिव तद्गतवृत्तीनामपि तृतीयक्षणविलयः अतएव सिद्ध इति बोध्यम्। अतएव वृत्तावुक्तम्—"उपक्षीणासु" इति। शब्दनित्यतावादिमतेऽपि शब्दानामिव तद्गतवृत्तीनामपि प्रत्युच्चारणेनाविर्भावस्तद्विरामेण च तिरोभाव इति नाभिधानधारापत्तिः अतएव तन्मते तु "सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति" इति सुष्ठु सङ्गच्छते। एतन्मते तु विरम्येत्यस्य शब्दान्वये तिरोभूयेत्यर्थः। नयेन मीमांसकनीत्या। केचित्तु शब्दबुद्धिः शब्दज्ञानमेव कर्म्म व्यापारो यासां ता अभिधालक्षणातात्पर्याख्यास्तासां विरम्य स्वं स्वमर्थं बोधयित्वा उपक्षीणीभूय व्यापाराभावः पुनर्बोधनसामर्थ्याभाव इत्यर्थमाचक्षते। अर्थादिकस्येति कारिकोक्तादिपदग्राह्यं दर्शयति प्रकृतिप्रत्ययादेश्चेति। अत्राप्यादिपदेन सम्बोधनभङ्ग्यादि-परिग्रहः। व्यञ्जनं व्यङ्ग्यार्थबोधनम्, ध्वननं ध्वन्यर्थप्रतिपादनम्, गमनम् अवगतिजननम्, प्रत्यायनं प्रतीति-प्रतिपादनम्, आदिपदात् सूचनादयश्च ये व्यपदेशाः संज्ञास्तेषां विषयो वाच्या। विषयशब्दस्य नित्य-पुंस्त्वात् स्त्रीविशेषणत्वेऽपि पुंस्त्वम्।

(च) व्यञ्जनां विभक्तुमाह तत्रेति। तत्र व्यञ्जनाविषये अयं विभाग इति शेषः।

(छ) अभिधेति। अभिधालक्षणे मूले कारणे यस्याः सा। शाब्दी व्यञ्जना द्विविधा—अभिधामूला लक्षणामूला चेत्यर्थः। अत्र हि संयोगादयो वक्ष्यमाणा नियामकाः अनेकार्थस्य शब्दस्य एकमर्थं केवल-मभिधेयतया नियमयन्त्येव न पुनरर्थान्तराभिधानयोग्यामभिधामुपमर्दयन्त्यपि। तथात्वे कदाचिदपि तदर्थान्तरमभिधा नाभिदध्यादतः संयोगादिभिः प्रतिबद्धाभिधानशक्तिमभिधामुपजीव्य प्रवर्त्तमानायाः सिद्धमभिधामूलत्वं व्यञ्जनायाः। न च संयोगादीनेकतरार्थनियामकाननादृत्य व्यञ्जनाप्यनादरणीया, आदरणीया च द्वितीयार्थाभिधाने अभिधैवेति वाच्यम्। व्यञ्जनावृत्तिसमादरयुक्तीनां पञ्चमपरिच्छेदे बहुधा

(१) क्वचित् अपर इति नास्ति। (२) विषया इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अभिधामूलामाह—

२१। अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते।
एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रया॥ (ज)

आद्यशब्दाद्विप्रयोगादयः। उक्तं हि—(झ)

"संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥" (ञ)

"सशङ्खचक्रो हरिः" इत्यत्र शङ्खचक्रसंयोगेन हरिशब्दो विष्णुमेवाभिधत्ते (ट)। "अशङ्खचक्रो हरिः" इति तद्वियोगेन तमेव (ठ)। "भीमार्ज्जुनौ"

---

दर्शयिष्यमाणत्वात्। एवमभिनिष्पन्नाया लक्षणायाः प्रयोजनप्रत्यायनेन लक्षणाज्ञानसापेक्षज्ञानकतया लक्षणामूलत्वमप्यस्याः सिद्धमित्युन्नेयम्।

(ज) अनेकार्थस्येति। अनेकार्थस्य शब्दस्य एकत्र एकस्मिन्नर्थे संयोगाद्यैर्नियामकैः पदार्थैः करणैः नियन्त्रिते अभिधया नियम्य प्रतिपादिते सति, अन्यस्य तत्तच्छब्दप्रतिपाद्यापरार्थस्य धीहेतुर्ज्ञानकारणं या वृत्तिः सा अभिधाश्रया अभिधामूला व्यञ्जना स्यात्। संयोगादिनियमितभिन्नशक्यार्थप्रतिपादकत्वमभिधामूलव्यञ्जनात्वमिति निष्कर्षः।

(झ) आद्येति। विप्रयोगादयो गृह्यन्त इति शेषः। के ते विप्रयोगादय इत्याह उक्तमिति।

(ञ) संयोग इत्यादि। संयोगः समभिव्याहृतपदार्थानां प्रायेण संयोगसम्बन्धः। विप्रयोगः प्रायेण संयोगापन्नानां समभिव्याहृतपदार्थानां कदाचिद्वियोगः। साहचर्य्यं समभिव्याहृतपदार्थानां प्रायेण कर्त्तव्येषु सहचरत्वम्। विरोधिता समभिव्याहृतपदार्थानां बद्धवैरता। अर्थस्तात्पर्य्यम्। प्रकरणं प्रस्तावः। लिङ्गं सम्भाव्यमानो धर्म्मविशेषः। अन्यस्य सन्दिग्धार्थकभिन्नस्य शब्दस्य समानविभक्त्यन्तपदस्य सन्निधिरव्यवधानम्। सामर्थ्यं समभिव्याहृतपदार्थशक्तिः। औचिती योग्यता। देशः समभिव्याहृतपदार्थानामाश्रयस्थानम्। कालः समभिव्याहृतपदार्थानामाधारीभूतः समयः। व्यक्तिः स्त्रीत्वपुंस्त्वनपुंसकत्वान्यतमरूपा शब्दस्वभावोपस्थितिः। स्वर उदात्ताद्यन्यतमः। आदिशब्दात् हस्तादिभङ्गीप्रभृतयश्च। शब्दार्थस्य शक्यार्थस्य अनवच्छेदे अनेकत्वात् सन्देहेन विशेषनिश्चयाभावे, विशेषस्मृतेर्निश्चयेनैकतरज्ञानस्य हेतवः प्रत्येकमेव कारणानि।

(ट) संयोगमुदाहरति सशङ्खेति। अत्र हरिर्विष्णुर्भेकादिर्वेति सन्देहे इति शेषः। एवशब्देन भेकादिव्यवच्छेदः।

(ठ) वियोगं दर्शयति अशङ्खेति। अत्रापि पूर्ववत् सन्देह इति शेषः। तयोः शङ्खचक्रयोर्वियोगेन तं विष्णुमेव अभिधत्त इत्यवगम्यते। प्रायशः वियोगलक्षणे प्रायेण संयोगापन्नानामिति विशेषणात्

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति अर्ज्जुनः पार्थः (ड)। "कर्णार्ज्जुनौ" इति कर्णः सूतपुत्रः (ढ)। "स्थाणुं वन्दे" इति स्थाणुः शिवः (ण)। "सर्व्वं जानाति देवः" इति देवो भवान् (त)। "कुपितो मकरध्वजः" इति मकरध्वजः कामः (थ)। "देवः पुरारिः" इति पुरारिः शिवः (द)। "मधुना मत्तः पिकः" इति मधुर्वसन्तः (ध)। "यातु (१) वो दयिता मुखम्" इति मुखं साम्मुख्यम् (न)। "विभाति गगने चन्द्रः" इति चन्द्रः शशी (प)। "निशि चित्रभानुः" इति चित्रभानुर्वह्निः (फ)। "भाति रथाङ्गम्" इति नपुंसकव्यक्त्या रथाङ्गं चक्रम् (ब)।

---

भेकादिभिः शङ्खचक्रयोर्वियोगे सत्यपि नात्र हरिशब्दस्यानभिधत्त्वे, तैः सह शङ्खचक्रयोः प्रायिकसंयोगानापन्नत्वात्।

(ड) साहचर्य्यं दर्शयति भीममिति। अत्र अर्ज्जुनः कार्त्तवीर्य्यः पार्थो वेति सन्देहे भीमसाहचर्य्यात् अर्ज्जुनः पार्थस्तृतीयपाण्डव एव।

(ढ) विरोधितां दर्शयति कर्णेति। अत्र कर्णः किं श्रवणेन्द्रियम् अथवा सूतपुत्र इति सन्देहे अर्ज्जुनेन सह बद्धवैरत्वात् कर्णः सूतपुत्रो राधेय एव।

(ण) अर्थं दर्शयति स्थाणुमिति। स्थाणुः शिवः शाखादिहीनतरुर्वेति सन्देहे वन्दे-पदप्रयोगतात्पर्य्यात् स्थाणुः शिव एव।

(त) प्रकरणं दर्शयति सर्वमिति। अत्र देवः किममरजातिः किंवा राजेति सन्देहे प्रकरणात् देवो भवान् सर्वेषामेव भवच्छब्दप्रयोगयोग्यो राजेत्यर्थः।

(थ) लिङ्गं दर्शयति कुपित इति। अत्र मकरध्वजः कामः समुद्रो वेति संशये प्राणिधर्म्मकोपलिङ्गात् मकरध्वजः काम एव।

(द) अन्यशब्दसन्निधिं दर्शयति देव इति। अत्र पुरारिः किं त्रिपुरासुरहन्ता शिवः अथवा शत्रुपुरनाशकस्तदन्यः कश्चिदिति सन्देहे देवतावाचकसमानविभक्त्यन्तदेवपदसान्निध्यात् पुरारिः शिव एव।

(ध) सामर्थ्यमाह मधुनेति। मधुना मद्येन वसन्तकालेन वेति संशये पिकमादने वसन्तकालस्यैव सामर्थ्यात् मधुर्वसन्तः काल एव।

(न) औचितीं दर्शयति यात्विति। अत्र दयिता प्रिया वो युष्माकं तवेत्यर्थः मुखं वदनं यातु प्रविशतु इत्येवार्थः, अथवा मानमपहाय मुखं साम्मुख्यं यातु प्राप्नोतु इत्यर्थ इति सन्देहे दयितायाः साम्मुख्यप्राप्तेरेव योग्यत्वात् मुखं साम्मुख्यमित्येवार्थः।

(प) देशमाह विभातीति। अत्र "कर्पूरश्चन्द्रसंज्ञकः" इत्यमरकोषात् चन्द्रः कर्पूरः शशी वेति संशये शशिन एव गगनदेशसम्भवात् चन्द्रः शशी।

(फ) कालमुदाहरति निशीति। अत्र चित्रभानुः सूर्य्यो वह्निर्वेति सन्देहे वह्नेरेव निशाकालाधिकरणतासम्भवात् चित्रभानुर्वह्निः।

---

(१) पातु इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वरस्तु वेद एव विशेषप्रतीतिकृत्, न काव्य इति तस्य विषये नोदाहृतम् (भ)। इदञ्च केऽप्यसहमाना आहुः—"स्वरोऽपि काक्वादिरूपः काव्ये विशेषप्रतीतिकृदेव, उदात्तादिरूपोऽपि मुनेः पाठोक्तदिशा शृङ्गारादिरसविशेषप्रतीतिकृदेवेत्येतद्विषय उदाहरणमुचितमेव" इति (म)। तन्न, तथाहि (१) स्वराः काक्वादय उदात्तादयो वा व्यङ्ग्यरूपमेव विशेषं प्रत्याययन्ति, न खलु प्रकृतोक्तमनेकार्थशब्दस्यैकार्थ-(२) नियन्त्रणरूपं विशेषम् (य)। किञ्च यदि यत्र क्वचिदनेकार्थशब्दानां प्रकरणादिनियमाभावादनियन्त्रितयोरप्यर्थयोरनुरूपस्वरवशेनैकत्र नियमनं वाच्यम्, तदा तथाविधस्थले श्लेषानङ्गीकारप्रसङ्गः, न च तथा (र)। अतएवाहुः श्लेषनिरूपणप्रस्तावे—

(ब) व्यक्तिं दर्शयति भातीति। अत्र रथाङ्गं चक्रम्, अथवा "रथाङ्गाह्वयनामकः" इत्यमरप्रामाण्यात् चक्रवाकनामा पक्षीति संशये नपुंसकव्यक्त्या नपुंसकलिङ्गेन रथाङ्गं चक्रमेव न तु पक्षी, तद्वाचकस्य पुंलिङ्गत्वात्।

(भ) स्वरोदाहरणं किमित्यपेक्षायामाह स्वरस्त्विति। विशेषप्रतीतिकृत् उदाहृतवदेकतरार्थनियामकः। यथा इन्द्रशत्रुरित्यादौ उदात्तस्वरप्रयोगात् इन्द्रः शत्रुर्यस्येति बहुव्रीहिप्रतीत्या इन्द्र एव वृत्रासुरस्य शत्रुः शासितेति प्रतीयते, समाहारप्रयोगात्तु इन्द्रस्य शत्रुरिति षष्ठीतत्पुरुषप्रतीत्या वृत्रासुर एव इन्द्रस्य शत्रुः शासितेत्यवगम्यते। नोदाहृतं प्रामाणिकप्राचीनालङ्कारिकैरिति शेषः। अस्यालङ्कारशास्त्रस्य साङ्गोपाङ्गकाव्यमात्रनिरूपणपरत्वात्, अतएव मयापि नोदाहृतमिति भावः।

(म) इदञ्चेति। उक्तं प्राचीनमतञ्चेत्यर्थः। केऽपि भट्टप्रभृतयः। विकृतस्वरः काकुः। आदिपदेन अनुनासिकप्रभृतिपरिग्रहः। विशेषप्रतीतिकृदेव "नेष्यति सखि! सुरभिसमयेऽसौ" इत्यादौ 'एष्यत्येव' इति विशेषार्थबोधजनक एव। उदात्तादीत्यादिशब्देन अनुदात्तसमाहारयोर्ग्रहणम्। उदात्त उच्चस्वरः, अनुदात्तो नीचस्वरः, समाहारश्च मध्यमस्वर इति। मुनेर्नाट्याचार्य्यस्य भरतस्य पाठोक्तदिशा उक्तिप्रकारेणेत्यर्थः। तथा च—"हास्यशृङ्गारयोः स्वरितोदात्तम्, वीररौद्राद्भुतेषु उदात्तस्वरितम्, करुणबीभत्स-भयानकेषु अनुदात्तस्वरितमुपपादयेत्" इति। स्वरितमिश्र उदात्तः स्वरितोदात्तस्तम्, प्रथमतः स्वरितं क्रमशश्चोदात्तमुपपादयेदित्यर्थः। अन्ययोरप्येवं व्याख्यानम्।

(य) उक्तमर्थं दूषयति तन्नेति। न खलु न त्वित्यर्थः। प्रकृतोक्तमेतत्प्रकरणोक्तम्। एकार्थनियन्त्रणरूपं विशेषमिति। तथा च "विशेषस्मृतिहेतवः" इत्यत्र विशेषपदेन प्रकृतार्थविशेष एव गृह्यते, न पुनर्व्यङ्ग्यार्थविशेष इति भावः।

(र) ननु प्रकृतार्थविशेषग्रहणे विनिगमनाभावात् ह्यन्यार्थविशेषोऽपि ग्रहीतुं शक्यत इत्याह किञ्चेति। अनियन्त्रितयोरनियमितयोरप्यर्थयोर्मध्ये। एकत्रेति षष्ठीसप्तम्योरर्थयोर्भेदाभावात् एकस्यार्थस्येत्यर्थः।

(१) क्वचित् तथाहि इति नास्ति। (२) एकार्थे इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"काव्यमार्गे स्वरो न गण्यत इति च नयः" इत्यलमुपजीव्यानां मान्यानां व्याख्यानेषु कटाक्षनिक्षेपेण (ल)। आदिशब्दात् "एतावन्मात्रस्तनी" इत्यादौ हस्तादिचेष्टादिभिः स्तनादीनां कमलकोरकाद्याकारत्वम् (व)। एवमेकस्मिन्नर्थे अभिधया नियन्त्रिते या शब्दस्यान्यार्थबुद्धिहेतुः शक्तिः, सा अभिधामूला व्यञ्जना (श)। यथा मम तातपादानां महापात्र-चतुर्दशभाषाविलासिनी-भुजङ्ग-महाकवीश्वर-श्रीचन्द्रशेखर-सान्धिविग्रहिकाणाम्—

> "दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसा
> प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभिः।
> नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढ़ां रुचिं धारयन्
> गामाक्रम्य विभूतिभूषिततनू राजत्युमावल्लभः॥" (ष)

---

तथाविधस्थल इति "प्रवर्त्तयन् क्रियाः साध्वीर्मालिन्यं हरितां हरन्। महसा भूयसा दीप्तो विराजति विभाकरः॥" इत्यादौ प्रकरणादिनियमाभावात् द्वयोरपि राजसूर्ययोर्वाच्यत्वेनार्थश्लेषस्थले "विराजति विभाकरः ?" इति काकुकल्पनेन न विराजति विभाकर इति प्रतीत्या सूर्यस्य विराजनाभावासम्भवात् राज्ञ एव तु तत्सम्भवात् राजपक्षनियतत्वेनानेकार्थवाचनाभावात् अर्थश्लेषाद्यनङ्गीकारप्रसङ्ग इत्यर्थः। तथा चाव्याप्तिरिति भावः। अथेदं श्लेषस्य लक्ष्यमेव नाङ्गीक्रियत इति कथमव्याप्तिरित्याह न चेति। तथा श्लेषानङ्गीकारप्रसङ्गो न चेत्यर्थः। सर्वैरेवालङ्कारिकैरत्र श्लेषस्याङ्गीकारादिति भावः।

(ल) अतएवेति। अत्र सर्वैः श्लेषाङ्गीकारादेवेत्यर्थः। काव्यमार्गे काव्यविषये स्वरः काकुप्रभृतिरुदात्तप्रभृतिर्वा, न गण्यते शक्यार्थविशेषनियामकत्वेन न गृह्यते। इति च नय इत्येव प्राचीनपरम्पराप्रसिद्धा नीतिः। उपजीव्यानाम् अवलम्ब्यानाम्, अतएव मान्यानामित्यर्थः। कटाक्षनिक्षेपेण दोषसूचककुटिलदृष्टिपातेनालम्। स्वोपजीव्यानां न्यूनत्वे स्वस्यापि न्यूनत्वापत्तेरिति भावः।

(व) आदिशब्दादिति। स्वरादय इत्यत्र आदिशब्दादित्यर्थः। हस्तादिचेष्टादयो गृह्यन्त इति शेषः। तत्फलमाह एतावदिति। अत्र एतावन्मात्रेतिपदस्यार्थसन्देहे वक्तुर्हस्तस्य कमलकोरकाकारविन्यासरूपचेष्टादर्शनात् श्रोत्रा स्तनस्य कमलकोरकाकारत्वं प्रतीयत इति भावः।

(श) इदानीं मूलकारिकार्थं विवृणोति एवमिति। एवमेभिः संयोगाद्यैः।

(ष) दुर्गेति। दुर्गैः परिखाप्राचीरादिभिः स्वकीयवेष्टनस्थलैः, अलङ्घितः अनतिक्रान्तः शत्रुभिरनिवारित इत्यर्थः विग्रहो युद्धं यस्य सः, शत्रूणां दुर्गं भित्त्वापि तैः सह युद्धकारीत्यर्थः। अन्यत्र तु दुर्गया पार्वत्या अलङ्घितः अपरित्यक्तः विग्रहः शरीरं यस्य सः, अर्द्धनारीश्वरत्वेन पार्वत्या देहार्द्धदेह इत्यर्थः। तेजसा देहकान्त्या मनसिजं कन्दर्पं सम्मीलयन् लज्जया सङ्कोचयन् कन्दर्पादपि सुन्दर इति तात्पर्यम्। अन्यत्र तु तेजसा तृतीयनयनवर्चसा मनसिजं कन्दर्पं सम्मीलयन् अचेतयन् विनाशयन्नित्यर्थः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र प्रकरणेनाभिधया (१) उमावल्लभशब्दस्य उमानाम्नी (२) महादेवी तद्वल्लभभानुदेवनृपतिरूपेऽर्थे नियन्त्रिते व्यञ्जनयैव गौरीवल्लभरूपोऽर्थो बोध्यते। एवमन्यत् (स)।

लक्षणामूलामाह—

२२। **लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम्।**
**यया प्रत्याय्यते सा स्याद्व्यञ्जना लक्षणाश्रया ॥ (ह)**

"गङ्गायां घोषः" इत्यादौ जलमयाद्यर्थबोधनादभिधायां (३) तटाद्यर्थ-बोधनाच्च लक्षणायां विरतायां यया शीतत्वपावनत्वाद्यतिशयादिर्बोध्यते, सा लक्षणामूला व्यञ्जना (क्ष)।

---

प्रोद्यत् भयेनोपागच्छत् राजकं विपक्षराजगणं लाति अभयदानेन गृह्णातीति प्रोद्यद्राजकलः शरणागतरक्षक इत्यर्थः। अन्यत्र तु प्रोद्यती उदयमाना राज्ञश्चन्द्रस्य कला यस्मिन् सः, चन्द्रशेखरः। गृहीतगरिमा गुणातिशयात् समाजेषु प्राप्तगौरवः। अन्यत्र तु ईश्वरत्वात् जगत्सु प्राप्तगौरवः। भोगिभिः सुखिभिः पुरुषैः अन्यत्र तु सर्पैः विष्वक् सर्वतः वृतः परिवेष्टितः। न क्षत्रेशेषु क्षत्रियश्रेष्ठेष्वपि कृतम् ईक्षणं गणत्वेन दृष्टिपातो येन सः। अत्र "गमिकर्म्मीकृतनैकनीवृता" इत्यादिवदभावार्थक-न-शब्देन समासात् नकारलोपाभावः। अन्यत्र तु नक्षत्रेशेन तारापतिना चन्द्रेण कृतम् ईक्षणं चक्षुर्येन सः, शशिसूर्य्याग्नि-नेत्रत्वात्। गिरिगुरौ कैलासेश्वरे शिवे गाढ़ां रुचिं प्रबलां भक्तिं धारयन् वहन्। अन्यत्र तु गिरिर्हिमाद्रिरेव गुरुः श्वशुरस्तस्मिन् गाढ़ां रुचिम् अत्यन्तमनुरागं धारयन् आश्रयन्। तथा विभूत्या सम्पदा सम्पज्जनित-नानालङ्कारेण। अन्यत्र तु भस्मना भूषिता तनुः शरीरं यस्य सः। उमानाम्नी महिषी पार्वती च तस्याः पतिः भानुदेवो नाम राजा शिवश्च। गां पृथिवीम् आक्रम्य बलेनायत्तीकृत्य, अन्यत्र तु गां वृषभम्, आक्रम्य आरुह्य, राजति दीप्यते।

(स) उदाहृते लक्षणं सङ्गमयितुमाह अत्रेति। प्रकरणेन भानुदेवराजस्तुतिप्रस्तावेन करणेन, अभिधया कर्त्र्या। महादेवी पट्टमहिषी। अन्यत् संयोगादिनियन्त्रणस्थलीयमभिधामूलव्यञ्जनोदाहरणम् एवमूह्यमित्यर्थः।

(ह) लक्षणेति। यस्य प्रयोजनस्य कृते निमित्ते यत्प्रयोजनसूचनायेत्यर्थः लक्षणा प्रयोजनमूला उपास्यते आश्रीयते, तत्तु प्रयोजनं यया व्यञ्जनया प्रत्याय्यते, सा व्यञ्जना लक्षणाश्रया लक्षणामूला स्यात्। एतेन लक्षणाहेतुभूतप्रयोजनबोधकत्वं लक्षणामूलव्यञ्जनात्वमिति फलितम्।

---

(१) अभिधेये इति पाठान्तरम्। (२) उमा नाम इत्यपि पाठः।

(३) अत्र विरतायामिति क्वचिदधिकः पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं शाब्दीं व्यञ्जनामुक्त्वा आर्थीं व्यञ्जनामाह—

२३ । वक्तृ-बोद्धव्य-वाक्यानामन्यसन्निधिवाच्ययोः ।
प्रस्ताव-देश-कालानां काकोश्चेष्टादिकस्य च ।
वैशिष्ट्यादन्यमर्थं या बोधयेत् सार्थसम्भवा ॥ (क)

व्यञ्जनेति सम्बध्यते । तत्र वक्तृ-वाक्य-प्रस्ताव-देश-कालवैशिष्ट्ये यथा मम—

"कालो मधुः कुपित एष च पुष्पधन्वा
धीरा वहन्ति रतिखेदहराः समीराः ।
केलीवनीयमपि वञ्जुलकुञ्जमञ्जु-
र्दूरे पतिः कथय किं करणीयमद्य ॥" (ख)

अत्रैतं देशं प्रति शीघ्रं प्रच्छन्नकामुकस्त्वया प्रेष्यतामिति सखीं प्रति कयाचिद्व्यज्यते (१) ।

बोद्धव्यवैशिष्ट्ये यथा—

---

(च) अस्या लक्ष्यं दर्शयति गङ्गायां घोष इति । तत्र लक्षणं योजयति जलेति । अभिधायामित्यस्य विरतायामिति परेणान्वयः । "शब्द-बुद्धि-कर्मणां विरम्य व्यापाराभावः" इत्युक्तन्यायादिति भावः । शब्दगताभिधालक्षणामूलकत्वादुक्तद्विविधा शाब्दी व्यञ्जनेति बोध्यम् ।

(क) वक्त्रिति । वक्ता उच्चारयिता, बोद्धव्यः श्रोता, वाक्यं वक्तुर्वचनञ्च तेषाम्, अन्यसन्निधिर्योग्यजन-सान्निध्यं वाच्यमभिप्रेतार्थस्तेन लक्ष्यव्यङ्ग्ययोरपि संग्रहः तयोः, प्रस्तावः प्रकरणम्, देशः स्थानम्, कालः समयश्च तेषाम्, काकोर्विकृतस्वरस्य चेष्टादिकस्य अङ्गभङ्ग्यादेश्च, आदिशब्दात् निर्देष्टत्वादेश्च, वैशिष्ट्यात् साधारणतो यत्किञ्चिद्विलक्षणात् हेतोर्या व्यञ्जना अन्यम् उपस्थितेतरमर्थं बोधयेत् सा अर्थसम्भवा आर्थी व्यञ्जना स्यात् । अर्थस्तात्पर्यं तद्गतत्वादियमार्थी ।

(ख) काल इति । कालो मधुर्वसन्तः । एषोऽनुभूयमानः पुष्पधन्वा मदनश्च कुपितः, अत्यन्त-पीड़कत्वादिति भावः । धीरा मन्दाः, अतएव रतिखेदहराः रमणपरिश्रमहरणयोग्याः समीरा वायवो वहन्ति । इयमपि, केलीवनी क्षुद्रमुद्यानं वञ्जुलकुञ्जेन अशोकशाखावृतस्थानेन मञ्जुर्मनोहरा । दूरे च पतिः, अतएव अद्य किं करणीयं तत् त्वं कथय ।

अत्र वक्तृनायिकायाः कामुकत्वम्, वाक्यस्य रिरंसाबोधकत्वम्, प्रस्तावस्य रतिकथाप्रसङ्गः, देशकालयोश्च नितान्तोद्दीपकत्वं तत्तत्साधारणतो वैशिष्ट्यमनुसन्धेयम् ।

---

(१) दीव्यत इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरः
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि ! दूति ! बान्धवजनस्याज्ञातपीड़ागमे !
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥" (ग)

अत्र तदन्तिकमेव गतासीति (१) विपरीतलक्षणया लक्ष्यम् (घ)। तस्य च रन्तुमिति व्यङ्ग्यं प्रतिपाद्यं दूतीवैश्याद्बोध्यते (ङ)।

अन्यसन्निधिवैशिष्ट्ये यथा—

"उअ णिच्चल ! णिप्पन्दा भिसिणीपत्तम्मि रेहइ वलाआ ।
णिम्मल-मरगअ-भाअण-परिट्ठिआ सङ्खसुत्तिव्व ॥" (च)

---

(ग) निःशेषेति। उपनायकमुपानेतुं प्रेषितां तत्सम्भोगविमर्द्देन मृष्टाङ्गरागामागतां दूतीं प्रति कस्याश्चित् सेर्ष्योक्तिरियम्। मम आग्रहेण तव प्रियतमो नागत इत्थं मिथ्या वदतीति सा, तत्सम्बोधनम्। मम बान्धवजनस्य स्वयम्भूताया मम न ज्ञातः पीड़ागमो मदनवेदनोद्भवो यया तत्सम्बोधनम्। हे दूति ! तव स्तनतटं निःशेषेण साकल्येन च्युतश्चन्दनो यस्य तत् तादृशम्। तव अधरो निर्मृष्टरागः प्रोञ्छितालक्तक-रक्तिमा। तव नेत्रे नयनद्वयं दूरम् अत्यन्तम् अनञ्जने कज्जलहीने। तथा तव इयं तन्वी कृशा तनुः शरीरं पुलकिता सञ्जातरोमाञ्चा। अतएव त्वम् इतो मत्समीपात् स्नातुं वापीं दीर्घिकामेव गतासि, पुनः किन्तु तस्य अधमस्य नीचनायकस्य अन्तिकं न गतासीत्यन्वयः।

(घ) अत्रेत्यादि। अयमाशयः—स्नानेन ललाटचन्दनस्यापि च्युतिसम्भवे स्तनचन्दनच्युतिमात्रोक्तेः तथा स्नानेन अधरोष्ठयोरुभयोरेव रागलोपसम्भवे केवलाधरस्य रागलोपाभिधानात् एवं स्नानेन शैतोदयात् तत्क्षणमेव रोमाञ्चसम्भवे बहुपरक्षणेऽपि तत्कथनात् तात्पर्य्यानुपपत्तेर्मुख्यार्थबाधः। अतएव "उपकृतं बहु तव" इत्यादिवत् विपरीतलक्षणा। सा च प्रयोजनमूला, प्रयोजनन्तु रमणम्, वैपरीत्यलक्षणाय सम्बन्धः। अभावार्थस्य नञो भावार्थत्वेन लक्षणाङ्गीकारात् गमनवृत्तिभावत्वमेव लक्ष्यतावच्छेदकम्। अतएव न गतासीत्यस्य गतासीति प्रतीतिरिति। लक्ष्यं प्रतिपाद्यम्।

(ङ) तस्येति। किञ्चेति चार्थः। तस्य गतासीत्यस्य, रन्तुमिति व्यङ्ग्यं रन्तुमित्यन्वययोग्यपदबोध्यं रमणम्, प्रतिपाद्यं वीणातन्त्रीणामनुरणनजननन्यायेन सूचनीयम्। दूतीवैशिष्ट्यादिति। ; उरःकरविमर्द्देन स्तनतटस्यैव निःशेषचन्दनच्युतिः, चुम्बनेन अधरस्यैव रागभ्रंशो नेत्रयोः कज्जललेपलोपश्च, स्मरणा-दिदानीमपि तदानन्दसन्दोहानुवृत्त्या देहरोमाञ्च इत्येतच्चतुष्टयमेव स्नातापेक्षया दूत्या वैशिष्ट्यम्।

(च) उअ इत्यादि। "ऊह निश्चल ! निष्पन्दा बिसिनीपत्रे राजते बलाका। निर्म्मलमरकत-भाजनपरिस्थिता शङ्खशुक्तिरिव ॥" इति संस्कृतानुवादः। जनागमनशङ्कया पूर्वकृतसङ्केतस्थानत्वसन्देहेन

---

(१) रन्तुं गतासीति क्वचित् पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र बलाकाया निष्पन्दत्वेन(१) विश्वस्तत्वम्, तेनास्य देशस्य विजनत्वम्, अतः सङ्केतस्थानमेतदिति कयापि सन्निहितप्रच्छन्नकामुकं प्रत्युच्यते। अत्रैव स्थानविजनत्वरूप-व्यङ्ग्यार्थवैशिष्ट्यं प्रयोजकम् (२) (छ)।

"भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते।" इत्युक्तप्रकारायाः काकोर्भेदा आकरादिभ्यो ज्ञातव्याः (ज)।

एतद्वैशिष्ट्ये यथा—

"गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम्।

अलिकुलकोकिलललिते नैष्यति (३) सखि! सुरभिसमयेऽसौ॥" (झ)

रमणीयमहीनम् आसन्नमुपपतिं प्रति रमणसत्वरायाः कस्याश्चिदुक्तिरियम्। हे निश्चल! इदानीमेव रमणारम्भे कर्त्तव्येऽपि जनागमनशङ्कया निरुद्यम! निर्म्मलं यन्मरकतस्य मणेर्भाजनं पात्रं तत्र परिस्थिता वर्त्तमाना शङ्खशुक्तिः शङ्खपुटकमिव निष्पन्दा बलाका बकपक्षिणी बिसिनीपत्रे पद्मिनीपत्रोपरि राजते विद्यते। इति त्वम् ऊह तर्कय पश्येत्यर्थः।

(छ) अत्रेति। विश्वस्तत्वं निःशङ्कत्वेन बलाकाया एवाश्वस्तचित्तत्वम्। एतत्, न पुनरन्यदिति भावः। प्रच्छन्नकामुको गुप्तकामी, अतएवोपनायकः। उच्यते उक्तिवत् स्पष्टं व्यज्यते। सान्निध्यं तावदव्यवधानं तस्य चात्र प्रच्छन्नकामुकज्ञातत्वमेव वैशिष्ट्यम्, तद्भिन्नव्यक्तिसन्निधाने ईदृशोक्तेर्निष्फलत्वादिति भावः। अत्रैव उक्तश्लोक एव, स्थाननिर्जनत्वरूपस्य व्यङ्ग्यार्थस्य अनायासबोध्यस्येत्यर्थः वैशिष्ट्यमाधिक्यम्, प्रयोजकम् अन्यसन्निधिवैशिष्ट्यमूलकव्यञ्जनाया निष्पादकं वेदितव्यमिति शेषः। स्थानस्यातिनिर्जनत्वरूपव्यङ्ग्यार्थेनैव सान्निध्यगतप्रच्छन्नकामुकज्ञातत्वरूपवैशिष्ट्यस्य निष्पादितत्वादित्याशयः।

वाच्यवैशिष्ट्ये यथा मम विराजसरोजिनीनाटिकायाम्—

"जातः पर्वविधुर्विधुन्तुदभयान्मुक्त्वा कलङ्कं मुखं
भूते पङ्करुहः कुचौ च कलिके भीत्या हिमांशोः करात्।
कान्तः किन्तु पिबेत्तदेव हि मुखं मर्द्देत् करेणैव तौ
सर्वः क्लेशमुपैत्यदृष्टवशतो हन्तान्यजन्मन्यपि॥"

अत्र चन्द्रस्य कलङ्कपरित्यागपूर्वकसरोजिनीवदनताप्राप्तिरूपवाच्यार्थ-वैशिष्ट्याद्वदनस्य निष्कलङ्कसौन्दर्य्यं बोध्यते।

(ज) परोक्तं काकोः सामान्यलक्षणमाह भिन्नेति। भिन्नकण्ठध्वनिर्विकृतकण्ठस्वरः। आकरेभ्यो भरतादिप्रणीतमूलग्रन्थेभ्यः।

(झ) गुर्विति। भाविविरहाशङ्किन्या नायिकायाः सखीसन्निधावात्मन एवात्माश्वासनोक्तिरियम्। हे सखि! असौ मम पतिः गुरुपरतन्त्रतया पितुरधीनत्वेन हेतुना इदानीं दूरतरं देशं गन्तुमुद्यतः,

(१) निःस्पन्दत्वेन इत्यपि पाठः। (२) प्रयोजनमिति पाठान्तरम्। (३) नैष्यतीति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र नैष्यत्यपि तर्हि एष्यत्येवेति काक्वा व्यज्यते (ञ)।

चेष्टावैशिष्ट्ये यथा—

"सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥" (ट)

अत्र सन्ध्या सङ्केतकाल इति पद्मनिमीलनादिचेष्टया कयाचित् द्योत्यते। एवं वक्त्रादीनां व्यस्तसमस्तानां वैशिष्ट्ये बोद्धव्यम् (ठ)।

## २४ । त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता । (ड)

अर्थानां वाच्यलक्ष्यव्यङ्ग्यत्वेन त्रिरूपतया सर्वा अप्यनन्तरोक्ता व्यञ्जनास्त्रिविधाः। तत्र वाच्यार्थस्य व्यञ्जना यथा—"कालो मधुः" इत्यादि। लक्ष्यार्थस्य यथा—"निःशेषच्युतचन्दनम्" इत्यादि। व्यङ्ग्यार्थस्य यथा—"उअ णिच्चल !" इत्यादि। प्रकृतिप्रत्ययादिव्यञ्जकत्वन्तु प्रपञ्चयिष्यते।

## २५ । शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः ।
## एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ॥ (ढ)

---

किन्तु अलिकुलेन भ्रमरगणेन कोकिलेन च तयोर्गानेनेत्यर्थः ललिते मनोरमे सुरभिसमये वसन्तकाले न एष्यति आगमिष्यति।

(ञ) अत्र व्यङ्ग्यार्थं दर्शयितुमाह अत्रेति। अपिशब्दः प्रश्ने; नैष्यति किमित्यर्थः। तर्हि तदा सुरभिसमये। अत्र भयशोकादिजनितकाकोरपेक्षया अस्याः काकोः सम्भावनासूचकत्वरूपं वैशिष्ट्यं बोध्यम्।

(ट) सङ्केतेति। विदग्धया चतुरया नायिकया विटमुपनायकं सङ्केतकाले रमणाय सङ्केतितव्यसमयबोधे मनो मनोवृत्तिर्यस्य तं रमणस्य कः समय इति बोद्धुमिच्छन्तमित्यर्थः ज्ञात्वा तदीयनयनेङ्गितादिना अवगम्य हसन्त्याम् आनन्देन विस्तृतीभवद्भ्यां नेत्राभ्यामर्पितं दत्तं सूचितम् आकूतं स्वाभिप्रायो यस्मिन् कर्म्मणि तद्यथा तथा लीलापद्मं हस्तस्थितं विन्यासोपकरणरूपं पद्मं निमीलितं मुद्रितम्।

(ठ) अत्रेति। आदिशब्देन नेत्रविस्तारणग्रहणम्। अत्र नेत्रार्पिताकूतत्वमेव चेष्टावैशिष्ट्यम्। वक्त्रादीनां कारिकोक्तवक्तृप्रभृतीनां मध्ये व्यस्तानामेकैकेषां समस्तानाम् एकपद्यादौ कियतां सर्वेषां वा मिलितानाम्। अत्र संख्यानियमो नादृतः। अतएव वक्तृप्रभृतिकतिपयवैशिष्ट्ये कालो मधुरित्यादि एकैकवैशिष्ट्ये च निःशेषेत्याद्युदाहृतमित्याशयः।

(ड) आर्थव्यञ्जनाया भेदमाह त्रैविध्यादिति। अर्थानां त्रैविध्यात् वाच्यलक्ष्यव्यङ्ग्यत्वेन त्रिप्रकारत्वात् इयमार्थी व्यञ्जना प्रत्येकमुक्तानां मध्ये एकैकैव त्रिविधा मता। तथा चासंख्येयप्रकारेयं व्यञ्जनेति भावः।

(ढ) अथ व्यञ्जनायाः शाब्दत्वार्थत्वभेदव्यवस्थायां विनिगमनाभावे सत्येव पूर्वार्द्धेनाह ... उत्तरार्द्धेन

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यतः शब्दो व्यञ्जकत्वेऽर्थान्तरमपेक्षते, अर्थोऽपि शब्दम् । तदेकस्य व्यञ्जकत्वे अन्यस्य सहकारिता अवश्यमङ्गीकर्त्तव्या (ण) ।

२६ । अभिधादित्रयोपाधिवैशिष्ट्यात्त्रिविधो मतः ।
शब्दोऽपि वाचकस्तद्वल्लक्षको व्यञ्जकस्तथा ॥ (त)

अभिधोपाधिको वाचकः । लक्षणोपाधिको लक्षकः । व्यञ्जनोपाधिको व्यञ्जकः ।

---

तत्सिद्धान्तमाह शब्देति । शब्दबोध्यः शब्दप्रतिपाद्यो यः कश्चिदर्थः व्यनक्ति अर्थान्तरं व्यक्तं करोति । यथा—"सङ्केतकालमनसम्" इत्यादौ लीलापद्मनिमीलनरूपो वाच्यार्थः "सन्ध्या सङ्केतकालः" इति स्वभिन्नमर्थं व्यक्तीकरोति । तथा च अर्थनिरूपितत्वमार्थव्यञ्जनात्वमिति वक्तुं न शक्यते तस्याः शब्देनापि निरूपितत्वात् । अतो व्यञ्जनाया आर्थत्वव्यवस्थायां विनिगमकं नास्तीति भावः । तथा अर्थान्तराश्रयः व्यङ्ग्येतरार्थप्रतिपादकः शब्दोऽपि व्यनक्ति अर्थान्तरं व्यक्तं करोति । यथा—"गङ्गाया घोषः" इत्यत्र गङ्गाशब्दो जलमयरूपवाच्यार्थ-तीररूपलक्ष्यार्थभिन्नं शीतत्वपावनत्वाद्यतिशयरूपमर्थं व्यनक्ति तत्र शब्द-निरूपितत्वं शाब्दव्यञ्जनात्वमित्यपि नावधारयितुं शक्यते उक्तव्यञ्जनाया अर्थेनापि निरूपितत्वात् । अतो व्यञ्जनायाः शाब्दत्वभेदव्यवस्थायामपि विनिगमनाभाव इत्याशयः ।

तत्कस्मात् शब्दार्थयोर्नित्यसम्बन्धेन द्वयोरेव परस्परसापेक्षत्वादित्यर्थः । एकस्य व्यञ्जकत्वे एकतरस्य साक्षाद्व्यञ्जने अन्यस्य व्यवहितस्यान्यतरस्य सहकारिता अङ्गीक्रियत इति शेषः । तथा च यत्रार्थः साक्षाद्व्यनक्ति तत्र शब्दः सहकारी, यत्र तु शब्दः साक्षाद्व्यनक्ति तत्रार्थः सहकारी, तद्भिन्नत्वे सति तज्जन्यजनकाप्रधानत्वं सहकारित्वमिति लक्षणादिति भावः । एतेन साक्षादर्थमूलत्वमार्थव्यञ्जनात्वं साक्षाच्छब्दमूलत्वञ्च शाब्द-व्यञ्जनात्वमिति दर्शितम् । तथा च लीलापद्मनिमीलनरूपार्थप्रतीत्यनन्तरमेव "सन्ध्या सङ्केतकालः" इति व्यङ्ग्यार्थप्रतीतेस्तत्रार्थव्यञ्जना । "राजत्युमावल्लभः" "गङ्गायां घोषः" इत्यादौ च शब्दज्ञानानन्तरमेव तत्तद्-व्यङ्ग्यार्थप्रतीतेस्तत्र तत्र शाब्दव्यञ्जनेति संक्षेपः ।

(ण) व्याचष्टे यत इति । अर्थान्तरं व्यङ्ग्येतरमर्थम् । अपेक्षते नियतोपस्थाप्यत्वादिति भावः । शब्दम् अपेक्षत इत्यन्वयः । तत् ततः । अवश्यमङ्गीकर्त्तव्येति शब्दार्थयोर्नित्यसम्बन्धादिति भावः ।

(त) अभिधेति । उपाधिर्भेदकं विशेषणमिति च नार्थान्तरम् । अभिधादित्रयरूपो य उपाधि-स्तद्वैशिष्ट्यात् अभिधालक्षणाव्यञ्जनानां मध्ये एकैकविशेषणविशिष्टत्वादित्यर्थः, शब्दोऽपि वाचको लक्षको व्यञ्जकश्चेति त्रिविधो मतः । "गङ्गायां घोषमत्स्यौ स्तः" इत्यादौ युगपदेव वाच्यार्थलक्ष्यार्थयोः प्रतीतेर्युगप-देवाभिधालक्षणयोरपि प्रवृत्त्यङ्गीकारेण एकस्यैव गङ्गाशब्दस्य वाचकत्वलक्षकत्वाङ्गीकारवत् "राजत्युमावल्लभः" इत्यादावपि भानुदेवनृपतिरूपवाच्यार्थस्य महादेवरूपव्यङ्ग्यार्थस्य च युगपदेव प्रतीतेर्युगपदेवाभिधाव्यञ्जनयोः प्रवृत्त्यङ्गीकारेण एकस्यैव उमावल्लभशब्दस्य युगपदेव वाचकत्वं व्यञ्जकत्वञ्चाङ्गीकार्य्यम् । तथा च व्यङ्ग्यार्थसत्त्वे सर्वत्रैव व्यञ्जनासाङ्कर्य्यमवश्यमभ्युपेयमिति भाव्यम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

किञ्च—(थ)

२७। तात्पर्य्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने।
तात्पर्य्यार्थं तदर्थञ्च वाक्यं तद्बोधकं परे॥ (द)

अभिधाया एकैकपदार्थबोधनविरामात् (१) वाक्यार्थरूपस्य पदार्थान्वयस्य बोधिका तात्पर्य्यं नाम वृत्तिस्तदर्थश्च तात्पर्य्यार्थः तद्बोधकञ्च वाक्यमित्यभिहितान्वयवादिनां मतम् (ध)।

इति साहित्यदर्पणे वाक्यस्वरूपनिरूपणो नाम
द्वितीयः परिच्छेदः॥०॥

———०———

(थ) मतान्तरे वृत्त्यन्तरमभिधातुमाह किञ्चेति। अपि चेत्यर्थः।

(द) तात्पर्य्येति। परे प्राञ्चो नैयायिकाः पदार्थानामन्वयबोधने अभिधया लक्षणया वा उपस्थापितानामर्थानां परस्परयथासम्भवसम्बन्धबोधननिमित्तं तात्पर्य्याख्यां तात्पर्य्यनाम्नीं वृत्तिं शक्तिमाहुः। तथा तस्यास्तात्पर्य्यवृत्तेरर्थं प्रतिपाद्यं तात्पर्य्यार्थम्, तथा वाक्यमेव तस्य तात्पर्य्यार्थस्य बोधकम् उपस्थापकञ्च आहुः। तात्पर्य्यवृत्तिप्रतिपाद्योऽर्थस्तात्पर्य्यार्थः, तत्तात्पर्य्यार्थबोधकञ्च वाक्यमेव न तु अभिधादिभिरिव वाक्यघटकः शब्द इत्याहुरित्यर्थः।

(ध) विरमणेत्यभिधाया इति। अत्राभिधापदं लक्षणाया अप्युपलक्षणम्। विरामादिति। "शब्द-बुद्धि-कर्म्मणां विरम्य व्यापाराभावः" इत्युक्तन्यायेनेति भावः। बोधिकेति। घटमित्यादौ घटशब्देन केवलं कम्बुग्रीवादिमन्तं पदार्थम्, अम्विभक्त्या च केवलं कर्म्मत्वमभिधाय अभिधा विरता; ततश्च तद्घटे तत्कर्म्मत्वस्य वृत्तित्वं केन बोध्यते, चैत्रो ग्रामं गच्छतीत्यादौ तथैवाभिधाया विरामात् ग्रामकर्म्मकगमनानुकूलकृतिमान् चैत्र इत्थं सम्बन्धश्च केन प्रत्याय्यते; अतस्तत्तदन्वयमात्रबोधिका खल्वियं तात्पर्य्यवृत्तिरिति भावः। अतएव प्राचीननैयायिका अभिहितान्वयवादिनः। नव्यास्तु इमामेव तात्पर्य्यवृत्तिं संसर्गमर्य्यादामाचक्षते। अन्विताभिधानवादिनस्तु मीमांसका योग्यतयैव यथासम्भवमन्वयमापन्नानर्थान् ते ते शब्दा अभिधया लक्षणया वा बोधयन्तीति ब्रुवाणा गौरवपरिजिहीर्षया तात्पर्य्यवृत्तिं नाङ्गीकुर्वन्तीति तन्मतमेव स्वमतमिति सूचनाय कारिकायां पर इत्युक्तमिति।

इति महामहोपाध्याय-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां
साहित्यदर्पणटीकायां कुसुमप्रतिमायां द्वितीयः परिच्छेदः॥०॥

———०———

(१) विरमादित्यपि पाठः।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# तृतीयः परिच्छेदः ।

——:०:——

अथ कोऽयं रस इत्युच्यते—(क)

१ । विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा ।
रसतामेति रत्यादिः स्थायी भावः (१) सचेतसाम् ॥ (ख)

विभावादयो वक्ष्यन्ते । सात्त्विकाश्चानुभावरूपत्वात् न पृथगुक्ताः (ग)। व्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतो व्यक्तीकृत एव रसो न तु

(क) "वाक्यं रसात्मकं काव्यम्" इति प्रकृतकाव्यलक्षणसिद्धिचिन्तात्मकोपोद्घातसङ्गत्यैव रसं निरूपयितुं प्रक्रमते अथेति । अत्राथशब्दो रसनिरूपणारम्भे, वाक्यनिरूपणानन्तर्य्यस्याभिधानक्रमेणैव प्राप्तत्वात् । अथ काव्यलक्षणघटकीभूतो रसः क इत्याकाङ्क्षायामुच्यते मूलकृतेति शेषः ।

(ख) विभावेनेति । अत्र विभावः काव्यान्तर्गतनायकनायिकादिश्चन्द्रचन्दनादिरुद्दीपकपदार्थश्च । अनुभावः अनुरागादिप्रकाशकः स्तम्भघर्म्मादिः । सञ्चारी भावो निर्वेदादिः । स्थायी भावो भावान्तरैरनुपमर्द्दनीयो नायकादिगतानुरागादिः । अत्र विभावादिपदेन तत्तज्ज्ञानं लक्ष्यते । तथा च विभावेन विभावज्ञानेन, अनुभावेन अनुभावज्ञानेन, सञ्चारिणा सञ्चारिभावज्ञानेन च व्यक्तः स्वयं स्वयं तद्रूपेण परिणम्य पिण्डीभावेन प्रकाशितः, सचेतसां स्वज्ञानयोग्यमनस्विसामाजिकानां रत्यादिः अनुरागप्रभृतिः स्थायी भावः स्थायिभावज्ञानं रसतामेति प्राप्नोति । युगपद्विभावादिज्ञानमेव सामाजिकेषु रसरूपेण भासत इत्यर्थः ।

(ग) ननु सात्त्विकभावानामपि रसघटकतया वक्ष्यमाणत्वात् कथं कारिकायां सात्त्विकेनेति नोच्यत इत्याह सात्त्विकाश्चेति । न पृथगुक्ता इति अनुभावग्रहणेनैव प्राप्तत्वादिति भावः । "सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः ।" इति वक्ष्यमाणेन सममस्य विरोधं तत्रैव परिहरिष्यामः ।

(घ) अथ घटदीपयोरिव सर्वत्रैव व्यङ्ग्यव्यञ्जकयोर्भेददर्शनादत्रापि विभावादेर्व्यञ्जकत्वेन रसस्य च व्यङ्ग्यत्वेन भेदावश्यम्भावात् "ततः संवलितः सर्वो विभावादिः सचेतसाम् । प्रपाणकरसन्यायाच्चर्व्यमाणो रसो भवेत् ॥" इत्यभेदो वक्ष्यमाणः कथं सङ्गच्छत इत्याह व्यक्त इति । दध्यादीत्यादिपदेन घटादिग्रहणम् । यथा दुग्धम् अम्लयोगात् दधिरूपेण परिणम्य आत्मानं दधित्वेन व्यनक्ति, यथा वा मृत्तिका कुलालव्यापारात् घटरूपेण परिणम्य आत्मानं घटत्वेन व्यनक्ति, तथा सामाजिकवृत्तिर्विभावादिबोधः काव्यनाट्यगतवाग्भङ्गीवशात् रूपान्तरेण निरतिशयसुखमयज्ञानत्वेन परिणतः सन् आत्मनैवात्मा रसत्वेन व्यक्तीकृत एव रस उच्यत इत्यर्थः । अतश्च विभावादिपदस्य तत्तज्ज्ञानत्वेन लक्षणा ग्रन्थकृतैव सूचिता

(१) स्थायिभाव इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दीपेन घट इव पूर्वसिद्धो व्यज्यते (घ)। तदुक्तं लोचनकारैः—"रसाः प्रतीयन्त इति त्वोदनं पचतीतिवद्व्यवहारः" इति (ङ)। अत्र च रत्यादिपदोपादानादेव स्थायित्वे प्राप्ते पुनः स्थायिपदोपादानं रत्यादीनामपि रसान्तरेष्वस्थायित्वप्रतिपादनार्थम्। ततश्च हासक्रोधादयः शृङ्गारवीरादौ व्यभिचारिण एव। तदुक्तम्—"रसावस्थः परं भावः स्थायितां प्रतिपद्यते" इति (च)।

अस्य स्वरूपकथनगर्भ आस्वादनप्रकारः (१) कथ्यते (छ)।

२। सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः॥
लोकोत्तरचमत्कार-प्राणः कैश्चित् प्रमातृभिः।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥ (ज)

---

सूचयिष्यते च। एतेन रामचरणस्य विकृतव्याख्यायामपि कष्टकल्पनं द्रष्टुरपि कष्टकरमिति सुधीभिर्विभावनीयम्। एवशब्दव्यवच्छेद्यं स्वयमेवाह न त्विति। पूर्वसिद्धो दीपेन व्यक्तीकरणात् पूर्वं निष्पन्नः। विभावादिज्ञानात् पूर्वं रसस्यानिष्पन्नत्वादित्याशयः।

(ङ) रसस्य ज्ञानरूपत्वे प्राचामपि सम्मतिं दर्शयति तदुक्तमिति। रसस्य ज्ञानरूपत्वं स्पष्टं सूचितमित्यर्थः। यथा—प्रथमपाक एव ओदनं पचतीति प्रयोगे तण्डुलानां पाकेनैव निष्पन्नस्य ओदनस्य पाकानुपपत्त्या पचतीत्यस्य निर्वर्त्तयतीत्यर्थे व्यवहारः, तथा काव्यश्रवणादौ "रसाः प्रतीयन्ते" इति प्रयोगे ज्ञानरूपत्वेन प्रतीतिरूपाणामेव रसानां प्रतीत्यनुपपत्त्या प्रतीयन्त इत्यस्य रसात्मकप्रतीतयः क्रियन्त इत्यर्थे व्यवहार इत्याशयः।

(च) स्थायित्वे प्राप्त इति। "रतिर्हासश्च शोकश्च" इत्यादिना रत्यादीनामेव स्थायिभावत्वस्य वक्ष्यमाणत्वादिति भावः। व्यभिचारिण एव न तु स्थायिन इत्यर्थः। तथा च वक्ष्यति—"शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः। शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः॥" इत्यादि। अत्र प्राचीनसंवादमाह तदुक्तमिति। रस एवावस्था स्वरूपं यस्य स रसावस्थो भावः परं केवलं स्थायितां प्रतिपद्यते प्राप्नोति। इदन्तु स्थायिभावस्य परिचायकमात्रं न तु लक्षणम्। अतएवात्र तन्मते नेतरेतराश्रयदोषः।

(छ) अस्येति। अस्य निरुक्तरसस्य स्वरूपकथनं निखिलाकारनिरूपणं गर्भे वाक्यमध्ये यस्य सः, आस्वादनस्य प्रकारः अनुभवस्याकारः।

---

(१)···आस्वादप्रकार···इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते" इत्युक्तप्रकारो वाह्यमेय-विमुखतापादकः कश्चनान्तरो धर्मः सत्त्वम्, तस्योद्रेकः रजस्तमसी अभि-भूयाविर्भावः। अत्र च हेतुस्तथाविधालौकिककाव्यार्थपरिशीलनम् (झ)। अखण्ड इत्येक एवायं विभावादिरत्यादिप्रकाशसुखचमत्कारात्मकः। अत्र हेतुं वक्ष्यामः (ञ)। स्वप्रकाशत्वाद्यपि वक्ष्यमाणरीत्या (ट)। चिन्मय

---

(ज) सत्त्वोद्रेकादिति। कैश्चित् कियद्भिः। पुण्यवद्भिरेव न तु सर्वैरित्यभिप्रायः। प्रमातृभि-र्ज्ञातृभिर्जनैः, सत्त्वस्य तदाख्यगुणस्य उद्रेकात् तादृशमधुरकाव्यश्रवणादिवशेनाविर्भावात् अखण्डः विभा-वादिसमूहालम्बनात्मकत्वादेक एव न पुनस्तत्तद्विषयभेदेन भिन्नभिन्नः, स्वेन आत्मनैव प्रकाशत इति स्वप्रकाशः, न तु ज्ञानान्तरप्रकाश्य इत्यर्थः। आनन्दचिन्मय आमोदमिश्रितज्ञानरूपः। वेद्यान्तरस्य अन्यज्ञेयपदार्थस्य स्पर्शशून्यस्तत्काले सम्पर्करहितः। ब्रह्मास्वादस्य ब्रह्मज्ञानस्य सहोदरः समानः। आनन्दमयत्वादेवेति भावः। तथा लोकोत्तरः अलौकिकः चमत्कारो विस्मय एव प्राणो जीवनरूपो यस्य सः। अयं रसः। इत्यन्तं स्वरूपकथनमिति बोध्यम्। स्वाकारवत् निजशरीरवत् अभिन्नत्वेन एकत्वेन आस्वाद्यते अनुभूयते। यथा—देहात्मानौ वस्तुतो भिन्नावपि अहं गच्छामीत्यभिन्नत्वेन प्रतीयेते, तथा नायकादीनां नायिकादि-गतरत्यादितः स्वस्वरत्यादिराश्रयादिभेदेन भिन्नोऽपि तथाविधवाग्भङ्ग्यादिव्यापारसामर्थ्यादभिन्नत्वेन सामाजिकैः प्रतीयत इत्यर्थः। तथा च वक्ष्यति—"परस्य न परस्येति ममेति न ममेति च। तदास्वादे विभावादेः परिच्छेदो न विद्यते॥" अनेनास्वादनप्रकार उक्तः। रसस्य अमृततुल्यत्वसूचनाय आस्वाद्यत इत्युक्तम्।

एतेन आनन्दचमत्कारमयत्वे सति विभावादिसमूहालम्बनज्ञानत्वं रसत्वमिति रसलक्षणं फलितम्।

(झ) अथ विवरणाय प्रथमं सत्त्वपदार्थं निरूपयितुं सरस्वतीकण्ठाभरणोक्तं प्रमाणयति रज इति। रजस्तमोभ्यां चित्तस्य क्षिप्तमूढभावजनकाभ्यां रजोगुणतमोगुणाभ्यामस्पृष्टम् एकाग्रतावशादसंपृक्तं मनो मनोनिष्ठधर्मविशेषः सत्त्वम्। वाह्यमेयानि काव्यभिन्नवहिर्वर्त्तिज्ञेयवस्तूनि घटपटादीनि तेभ्यो विमुखतापादकश्चित्तवृत्तेर्निवृत्तिजनकः। कश्चन प्रत्यक्षतः परिचाययितुमशक्यः। अन्तरमन्तःकरणं तस्यायमित्यान्तरः। अत्र रजस्तमसी अभिभूय सत्त्वस्याविर्भावे। तथाविधो दृष्टश्रुतप्रकारः अलौकिकः अतिशयचमत्कारी यः काव्यार्थो दृश्यश्रव्यकाव्यरूपो विषयस्तस्य परिशीलनम् एकाग्रतया श्रवणं दर्शनञ्च। रसास्वादहेतुभूतसत्त्वोद्रेकं प्रति तदानीं हेत्वन्तरासम्भवादिति भावः।

(ञ) अखण्डशब्दार्थं व्याचष्टे अखण्ड इतीति। विभावादीत्यादिपदेन अनुभावसञ्चारिभावयो-र्ग्रहणम्। रत्यादीत्यादिपदेन च हासादिस्थायिभावान्तराणां परिग्रहः। विभावादित्रयं कारणगणः, रत्यादिकस्तु कार्य्यगण इति कार्य्यकारणभेदेन गणयोर्द्वित्वादादिपदद्वयं प्रयुक्तम्। विभावादिरत्यादीनां प्रकाशस्तत्तद्विषयकज्ञानं सुखमानन्दः चमत्कारो विस्मयश्चात्मा स्वरूपं यस्य सः, तादृशः अयं रस एक एव, न तु घटपटादिज्ञानमिव भिन्नभिन्न इत्यर्थः। अत्र रसस्याखण्डत्वे, हेतुं समूहालम्बनत्वरूपम्।

(ट) ननु न्यायमते ज्ञानात्मकस्य रसस्य ज्ञानान्तरप्रकाश्यत्वात् कथं स्वप्रकाशत्वमुपपद्यत इत्याह

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति स्वरूपार्थे मयट् (ठ)। चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्य्यायः। तत्प्राणत्वञ्चास्मद्वृद्धप्रपितामह-सहृदयगोष्ठी-गरिष्ठ-कवि-पण्डित-मुख्य-श्रीमन्नारायणपादैरुक्तम्। तदाह धर्म्मदत्तः स्वग्रन्थे—(ड)

"रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते।
तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः।
तस्मादद्भुतमेवाह कृती नारायणो रसम्॥" इति (ढ)।

केचिदिति प्राक्तनपुण्यशालिभिः। यदुक्तम्—"पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिम्" (ण)। यद्यपि "स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः" इत्युक्तदिशा रसस्यास्वादानतिरिक्तत्वमुक्तम्, तथापि "रसः स्वाद्यते" इति काल्पनिकं भेदमुररीकृत्य कर्म्मकर्त्तरि वा प्रयोगः (त)। तदुक्तम्—

स्वप्रकाशत्वादीति। आदिपदेन आनन्दचिन्मयत्वयोर्ग्रहणम्। अपिशब्दः समुच्चये। तथा च रसस्याखण्डताया हेतुवत् स्वप्रकाशत्वाद्यपि वक्ष्यमाणरीत्या ज्ञेयमिति शेषः।

(ठ) अथ चिन्मय इति कस्मिन्नर्थे मयट्प्रत्यय इत्याह चिन्मय इतीति। इन्द्वान्मयट्प्रत्ययेन आनन्दमयश्चिन्मयश्च रस इति लभ्यते।

(ड) प्रथमकारिकाया द्वितीयार्द्धस्य सुगमार्थकतया तदुल्लङ्घ्य द्वितीयकारिकार्थं विवृणोति चमत्कार इति। चित्तं विस्तीर्य्यते स्वप्रतीतिकाले दीर्घमिव क्रियते अनेनेति चित्तविस्तारस्तद्रूपः। विस्मयो विस्मयशब्दः अपरः पर्य्यायः द्वितीयः स्ववाचको यस्य सः। तत्प्राणत्वञ्च रसस्य तच्चमत्कारसारत्वञ्च। यत्किञ्चिद्वर्णयिता कविः, पण्डाख्यबुद्धिविशिष्टस्तु पण्डितः। तथा चामरकोषटीकायां रघुनाथः—"वेद-वेदान्त-साहित्य-तर्कसिद्धान्तगामिनी। बुद्धिः पण्डा इति ख्याता तद्योगात् पण्डितः स्मृतः॥" एवञ्च "संख्यावान् पण्डितः कविः" इत्यमरकोषादावेकपर्य्यायत्वेऽपि वस्तुतो भेदादेव कविपण्डितेति शब्दोद्वयोपन्यासः। धर्म्मदत्तस्तु नारायणस्यान्तेवासीति सम्प्रदायसिद्धिः।

(ढ) रस इति। सर्वत्र सर्वस्मिन्नपि रसे चमत्कारो विस्मयः सारः स्थिरांशः अनुभूयते विस्मय एव सारतया प्रतीयत इत्यर्थः। तत्तस्मात् रसे चमत्कारस्य सारत्वे सति रसोऽपि सर्वत्र सर्वेषु काव्येषु अद्भुतश्चमत्कारी बुधैः स्वीक्रियत इति शेषः। यथा—धने सति धनी देवदत्त इति तद्वदिति भावः। तस्मात् बुधगणस्वीकारात् कृती पण्डितो नारायणोऽपि रसमद्भुतमेवाह।

(ण) केचिदित्यादि। कारणीभूतप्राक्तनपुण्यहीनानां कार्य्यभूतसुखमयरसभोगासम्भवादिति भावः। योगिवत् पुण्यवन्तो जनाः, रससन्ततिं शृङ्गारादिरसपरम्परां ब्रह्मज्ञानामृतधाराञ्च प्रमिण्वन्ति सम्यगनुभवन्ति।

(त) "स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः" इति मूलोक्तिं प्रत्यनुपपत्तिमाशङ्कते यद्यपीति। काव्यार्थसम्भेदात् काव्यरूपविषयानुभवात् आत्मनि आनन्दसमुद्भवः संमुद्भूतानन्दः स्वादः। इत्युक्तदिशा इत्यमुक्तेन स्वादलक्षणेन रसस्य आस्वादानतिरिक्तत्वम् आस्वादादभिन्नत्वमुक्तम्। रसस्यापि काव्यार्थानु-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"रस्यमानतामात्रसारत्वात् प्रकाशशरीरादनन्य एव हि रसः" इति (थ)। एवमन्यत्राप्येवंविधस्थलेषूपचारेण प्रयोगा ज्ञेयाः (द)।

नन्वेतावता रसस्याज्ञेयत्वमुक्तं भवतीति व्यञ्जनायाश्च ज्ञानविशेषत्वात् द्वयोरैक्यमापतितम्। ततश्च—(ध)

"स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः।
यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात्॥" (न)

इत्युक्तदिशा घटप्रदीपवत् व्यङ्ग्यव्यञ्जकयोः पार्थक्यमेवेति कथं रसस्य व्यङ्ग्यतेति चेत् (प) सत्यमुक्तम्। अतएवाहुः—"विलक्षण एवायं

भवजनितानन्दरूपत्वादिति भावः। तथा च "द्राक्षा स्वाद्यते" इत्यादौ सर्वत्रैव स्वाद्यस्वादनयोः कर्म्मक्रिययोर्भेदात् रसः स्वाद्यते इत्यत्र तु तयोरभेदः कथमुपपद्यत इत्याशङ्कार्थः। समाधत्ते तथापीति। काल्पनिकं राहोः शिर इत्यादिवदलीकं भेदम् उररीकृत्य स्वीकृत्य विद्यमानस्य कर्त्तुः प्रयोग इत्यन्वयः। उक्तभेदस्यालीकत्वादस्वरसमाशङ्क्य पक्षान्तरमाह कर्म्मकर्त्तरि वेति। यथा—"भिद्यते कुशूलः स्वयमेव" इत्यादौ कुशूलः स्वयमेव भिन्नो भवतीत्यर्थः, तथा रसः स्वाद्यते इत्यादावपि रसः स्वयमेव स्वस्वरूपस्वादविषयो भवतीत्यर्थः। "अहं सर्वज्ञानी इत्यहं जाने" इत्यादौ विषयविषयिणोर्ज्ञानयोरभेददर्शनादिति भावः।

(थ) नन्वेवमादिकष्टस्वीकारापेक्षया वरं केवलानन्दरूप एव रसो निरुच्यतामित्याह तदुक्तमिति। रस्यमानतामात्रस्य केवलास्वादरूपस्य सारत्वात् सारत्वेन सर्वैरनुभूयमानत्वाद्धेतोः प्रकाशशरीरात् ज्ञानस्वरूपात् अनन्य एव अभिन्न एव। अतः प्राचीनैर्ज्ञानरूपतयापि रसस्य निरुक्तत्वात् कथमस्माभिः केवलानन्दरूपत्वेन निरुच्यतेति भावः।

(द) एवमिति। अन्यत्र अन्येष्वपि। "न जायते तदास्वादः" "तदास्वादे विभावादेः" इत्यादिष्वपि। एवमुपचारेण काल्पनिकभेदाङ्गीकारेण कर्म्मकर्त्तरि प्रयोगाङ्गीकारेण वा।

(ध) अनुपपत्त्यन्तरमाशङ्कते नन्विति। एतावता यद्यपीत्यादिग्रन्थेन। अज्ञेयत्वं स्वभिन्नज्ञानाविषयत्वम् अपि तु स्वाभिन्नज्ञानविषयत्वात् ज्ञानविशेषरूपत्वमेवेत्यर्थः। उक्तं भवति तात्पर्य्यलब्धं भवति। द्वयो रसव्यञ्जनयोः। • ततश्चेत्यस्य "कथं रसस्य व्यङ्ग्यता" इति परेणान्वयः।

(न) रसव्यञ्जनयोरैक्ये इष्टापत्तिमाशङ्क्य तद्बाधकं प्राचीनसिद्धान्तं दर्शयितुमाह स्वज्ञानेनेति। अर्थे व्यङ्ग्यपदार्थे सिद्धे कुतोऽपि कारणात् प्रागेव निष्पन्ने सत्येव यः स्वस्य व्यञ्जकत्वेनाभिमतवस्तुनः ज्ञानेन द्वारा अन्यस्य व्यङ्ग्यस्य धीहेतुः प्रत्यक्षादिज्ञानजनकः स व्यञ्जको मतः। स्वप्रत्यक्षादिद्वारा सिद्धवस्तुज्ञापकत्वं व्यञ्जकत्वमिति निष्कर्षः। अस्यैवोदाहरणमाह यथा—दीप इति। दण्डचक्रादिभिः प्रागेव निष्पन्नस्य घटस्य दीपो यथा व्यञ्जक इत्यर्थः। अन्यथाभावे असिद्धवस्तुनोऽपि धीहेतुत्वेन व्यञ्जकत्वाङ्गीकारे, अस्य व्यञ्जकस्य दीपादेः, कारकादुत्पादकात् दण्डचक्रादिकारणपदार्थात् को विशेषो भेदः, अपि तु कोऽपि नेत्यर्थः। दण्डादीनामपि उत्पादनद्वारा घटादिधीहेतुत्वादिति भावः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कृतिष्वपि भेदेभ्यः स्वादनाख्यः कश्चिद्व्यापारः (१)। अतएव हि रसनास्वादनचमत्करणादयो विलक्षणा एव व्यपदेशाः” इति (फ)। अभिधादिविलक्षणव्यापारमात्र-(२) प्रसाधनग्रहिलैरस्माभी रसादीनां व्यङ्ग्यत्वमुक्तं भवतीति (ब)।

ननु तर्हि करुणादीनां रसानां दुःखमयत्वाद्रसत्वं न स्यादित्युच्यते (भ)।

---

(प) इतीति। इत्युक्तदिशा इत्थं प्राचां व्यञ्जकलक्षणेन। व्यनक्तीति व्यञ्जकः, व्यज्यतेऽनयेति च व्यञ्जना इति शब्दभेदेऽप्यर्थभेदाभावात् व्यञ्जकलक्षणेनैव व्यञ्जनालक्षणमिति बोध्यम्। पार्थक्यमेव भिन्नत्वमेव। अतो रसव्यञ्जनयोरैक्ये नेष्टापत्तिः सम्भवतीति भावः। इति हेतोः। उक्तयुक्त्या रसव्यञ्जनयोरुभयोरेव ज्ञानविशेषरूपत्वेनैकरूपत्वापातात् व्यञ्जनया वृत्त्या कथं रसस्य व्यङ्ग्यता स्यात्। एकस्यैव कर्तृत्वकर्मत्वासम्भवादिति चेदुच्यत इत्यर्थः।

(फ) उक्तामनुपपत्तिमभ्युपगम्याह सत्यमुक्तमिति। अतएव उक्तयुक्त्या व्यञ्जनया रसस्य व्यङ्ग्यत्वासम्भवादेव। आहुरभिनवगुप्तमतावलम्बिन इति शेषः। कृतिः क्रिया कर्तृनिष्पाद्या स्वादनरूपा, ग्रपयः शक्यलक्ष्यव्यङ्ग्यार्थज्ञानानुकूलव्यापारा अभिधालक्षणाव्यञ्जनास्तद्रूपा ये भेदा विशेषास्तेभ्यो विलक्षण एव सम्पूर्णभिन्न एव। स्वाद्यते स्वादाख्यरसो बोध्यतेऽनेनेति स्वादनं तदाख्यः अयं रसमात्रबोधकः कश्चिद्व्यापारः अङ्गीक्रियत इति शेषः। स्वादनमिति करणे युट्प्रत्ययान्न क्रियाबोधकमत एव क्रियारूपस्वादनाद्भिन्नम्, अभिधाद्यन्यतमव्यापारेण च रसस्य बोधयितुमशक्यत्वात् तेभ्योऽपि च स्वादनं भिन्नमिति भावः। अतएव रसमात्रबोधकस्वादनाख्यव्यापारस्य अभिधादिभ्यो विलक्षणत्वादेव। रस्यतेऽनेनेति रसनमित्येवं सर्वत्रैव करणे युट्प्रत्ययः। रसनम् आस्वादनं चमत्करणञ्च आदिर्येषां ते। आदिपदेन विस्मयनादिपरिग्रहः। विलक्षणा एव अभिधादिव्यपदेशेभ्यः सम्पूर्णभिन्ना एव, व्यपदेशा अस्मदङ्गीकृतस्वादनाख्यवृत्तेः संज्ञाः। तथा च पञ्चमे वक्ष्यति—“रसव्यक्तौ पुनर्वृत्तिं रसनाख्यां परे विदुः” इति। वस्तुभेदे तत्संज्ञाया अपि भेदस्य युक्तत्वादित्याशयः। इति इत्यन्तेनाहुरित्यन्वयः।

(ब) ननु तर्हि भवन्तोऽपि किं तन्मतानुसारेण केवलरसबोधनाय स्वादनाख्यमभिनवं व्यापारमङ्गीकुर्वन्तीत्याह अभिधादीति। अत्र किन्तुशब्दः अध्याहार्य्यः। आदिशब्देन लक्षणातात्पर्य्ययोर्ग्रहणम्। तथा च अभिधादिभ्यो विलक्षणो भिन्नो यो व्यापारो व्यञ्जना नाम तन्मात्रस्य प्रसाधनाय सिद्धिकरणाय ग्रहिलैर्यत्नवद्भिः अस्माभिर्नवीनालङ्कारिकैः। रसादीनामित्यादिपदेन रसाभासादिपरिग्रहः। व्यङ्ग्यत्वं व्यञ्जनामात्रबोध्यत्वम्। तथा च पञ्चमपरिच्छेदे वक्ष्यति—“वृत्तीनां विश्रान्तेरभिधातात्पर्य्यलक्षणाख्यानाम्। अङ्गीकार्य्या तुर्य्या वृत्तिर्बोधे रसादीनाम्॥” अतो न वयं रसादिबोधनाय स्वादनाख्यं व्यापारमङ्गीकुर्म्मः। रसव्यञ्जनयोरैक्यापत्तिपरिहारस्तु तयोर्लक्षणानुसन्धानेनैव स्पष्टमनुसन्धेय इति भावः।

---

(१) अत्र इतीति क्वचिदधिकः पाठः। (२)···व्यापारता अत्र इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

३ । करुणादावपि रसे जायते यत् परं सुखम् ।
सचेतसामनुभवः प्रमाणं तत्र केवलम् ॥ (म)

आदिशब्दाद्वीभत्स-भयानकादयः (य) ।

तथाप्यसहृदयानां मुखमुद्रणाय पक्षान्तरमुच्यते (र) ।

४ । किञ्च, तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः । (ल)

नहि कश्चित् सचेता आत्मनो दुःखाय प्रवर्त्तते । करुणादिषु च सकलस्यापि साभिनिवेशप्रवृत्तिदर्शनात् सुखमयत्वमेव (१) (व) ।

---

(भ) स्वकीयरसलक्षणे अव्याप्तिमाशङ्कते नन्विति । तर्हि रसस्यानन्दमयत्वाङ्गीकारे । दुःखमयत्वात् अश्रुपातघृणाभयादिदर्शनेन दुःखमयत्वनिश्चयादित्यर्थः । रसत्वं न स्यादिति । तथा चाव्याप्तिरिति भावः ।

(म) करुणादाविति । करुणादौ रसेऽपि यत् परमत्यन्तं सुखं जायते तत्र विषये, सचेतसां रसावस्थाभिज्ञमनस्विनाम् अनुभवः केवलं प्रमाणम् । तथा च तादृशमनस्विनः करुणादिरसेऽपि सुखमनुभवन्तीति तेषां दुःखमयत्वाभावान्नाव्याप्तिरिति भावः ।

(य) कारिकार्थस्य सुबोधतया केवलादिशब्दग्राह्यं दर्शयति आदिशब्दादिति । वृत्तिस्थादिपदेन तु विप्रलम्भशृङ्गारान्तर्गत-मान-प्रवास-करुणात्मक-भेदत्रयस्य रौद्ररसस्य च ग्रहणम् । तेषाञ्च समुदायेन बहुत्वाद्बहुवचनमपि सङ्गच्छते ।

(र) ननु केवलसचेतसामनुभवस्य करुणादिरसानां सुखमयत्वं प्रति प्रमाणत्वे अचेतसां पक्षे दुःखमयत्वादव्याप्तितादवस्थ्यमेवेत्यत आह तथापीति । यद्यप्यसचेतसः करुणादिरसानां सुखमयत्वं नानुभवन्ति तथापीत्यर्थः । असहृदयानाम् अप्रशस्तमनसां रसतत्त्वं बोद्धुमसमर्थानामित्यर्थः । मुखमुद्रणाय अव्याप्तिदोषं प्रकटयितुं व्यादत्तानां मुखानां सङ्कोचनाय । वयन्तु करुणादिरसेषु सुखवं परीत्य न दुःखमेवानुभवाम इति भवदीयरसलक्षणे अव्याप्तिरेवेत्यसचेतसां प्रगल्भोक्तिनिरासायेत्यर्थः ।

(ल) किञ्चेति । अपि चेत्यर्थः । यदा यदि तेषु करुणादिरसेषु दुःखं स्यात्, तदा कोऽपि जनः तदुन्मुखः तेषु उत्सुकः करुणादिरस-प्रधानकाव्यनाट्यश्रवणदर्शनार्थं प्रवृत्तिमान् न स्यादित्यर्थः । अतो नाव्याप्तिरिति भावः ।

(व) अथ दुःखमङ्गीकृत्यैव कौतुकार्थं प्रवर्त्तिष्यत इत्याह नहीति । सचेताः सुखदुःखविवेचनक्षमो जनः । नहि प्रवर्त्तत इति । दुःखस्य सदैवात्मनः प्रतिकूलत्वादिति भावः । चकारः किन्त्वर्थे । साभिनिवेशप्रवृत्तिदर्शनात् करुणादिरसेष्वपि आग्रहसहकारेणोद्यमदर्शनात् । सुखस्य सदैवात्मानुकूलतया तत्रैव प्रवृत्तिसम्भवादित्याशयः ।

---

(१) सुखमयत्वमेवेति पाठः क्वचिन्नास्ति ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनुपपत्त्यन्तरमाह—(ञ)

५। तथा रामायणादीनां भविता दुःखहेतुता ॥ (ष)

करुणरसस्य दुःखहेतुत्वे (१) करुणरसप्रधानरामायणादिप्रबन्धानामपि दुःखहेतुत्वप्रसङ्गः स्यात् (स)।

ननु कथं दुःखकारणेभ्यः सुखोत्पत्तिरित्याह—(२) (ह)

६। हेतुत्वं शोकहर्षादेर्गतेभ्यो लोकसंश्रयात्।
शोकहर्षादयो लोके जायन्तां नाम लौकिकाः॥
अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात्।
सुखं सञ्जायते तेभ्यः सर्वेभ्योऽपीति का क्षतिः॥ (च)

ये खलु रामवनवासादयो लोके 'दुःखकारणानि' इत्युच्यन्ते, त एव हि

(ञ) अनुपेति। करुणादिरसानां दुःखमयत्वाङ्गीकारे इति शेषः।

(ष) तथेति। अपि चेत्यर्थः। आदिपदेन करुणविप्रलम्भप्रधानोत्तररामचरितादिग्रहणम्।

(स) करुणेति। अत्र करुणपदम् उक्तबीभत्सादीनामप्युपलक्षणम्। दुःखहेतुत्वप्रसङ्गः स्यादिति। तथा च रामायणादिषु सर्वेषामेव प्रवृत्त्यभावेन लोकसमाजेभ्यस्तेषां विलोपः सम्पद्येतेति भावः। अतः किञ्चेत्यादिना सह न पौनरुक्त्यम्।

(ह) अथ करुणादिरसानामगत्या सुखमयत्वमङ्गीकृत्य पूर्वपक्षी पुनस्तेषां कार्यकारणभावानुपपत्तिमाशङ्कते नन्विति। दुःखकारणेभ्यो रामादिविभावादिभ्यः।

(च) हेतुत्वमिति। एष खलु प्राणिजगतो नियमः, यदेकस्य शोकहर्षादिदर्शने अन्यस्य शोकहर्षादयो जायन्त इति। तथा च लोकसंश्रयात् तथाविधप्राणिजगन्नियमात् शोकहर्षादेर्हेतुत्वं गतेभ्यः रामवनवासराज्याभिषेकोद्योगादिभ्यो लोके लोकसमाजे लौकिका लोकस्वभावसिद्धाः शोकहर्षादयो जायन्तां नाम। तथा च दुःखकारणेभ्यो दुःखस्यैवोत्पत्तिरिति काव्यातिरिक्तस्थल एव नियम इत्याशयः। किन्तु काव्यसंश्रयात् दृश्य-श्रव्योभयविधकाव्यान्तर्निवेशवशात् अलौकिकविभावत्वं शोकहर्षादेर्लोकविलक्षणकारणत्वं प्राप्तेभ्यः सर्वेभ्योऽपि तेभ्यो रामवनवासराज्याभिषेकोद्योगादिभ्यः सुखमेव सञ्जायत इत्यत्र का क्षतिरनुपपत्तिः। कविरचनाचातुर्यमेवात्र दुःखकारणे सत्यपि सुखोत्पत्तौ कारणमिति भावः। तथा च सामाजिकाः साधुकाव्यसेवनवेलायामात्मवृत्तीनिव रामवनवासादीननुभवन्तो नितरामश्रूणि मुञ्चन्तोऽपि चमत्कारिकविरचनाचातुरीप्रणोदिताः सुखसागरे प्लवन्त इति तु तत्त्वम्।

(१)···दुःखहेतुत्वादिति पाठान्तरम्। (२) ननु हर्षशोकादिकारणेभ्यो हर्षशोकादय एव जायन्त इति व्याप्तिः, तत्कथं विभावादिभ्यः सुखोत्पत्तिरिति पाठभेदः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

काव्यनाट्यसमर्पिता अलौकिकविभावनव्यापारवत्तया कारणशब्दवाच्यत्वं विहाय अलौकिकविभावशब्दवाच्यत्वं भजन्ते । तेभ्यश्च सुरते दन्तघातादिभ्य इव सुखमेव जायते । अतश्च लौकिकशोकहर्षादिकारणेभ्यो लौकिकशोकहर्षादयो जायन्त इति लोक एव प्रतिनियमः । काव्ये पुनः सर्वेभ्योऽपि विभावादिभ्यः सुखमेव जायते इति नियमान्न कश्चिद्दोषः (क) ।

कथं तर्हि हरिश्चन्द्रादिचरितस्य काव्यनाट्ययोरपि दर्शनश्रवणाभ्यामश्रुपातादयो जायन्त इत्युच्यते—(ख)

७ । अश्रुपातादयस्तद्वद्द्रुतत्वाच्चेतसो मताः ॥ (ग)

तर्हि कथं काव्यतः सर्वेषामीदृशो रसाभिव्यक्तिर्न जायत इत्यत आह—(१) (घ)

८ । न जायते तदास्वादो विना रत्यादिवासनाम् । (ङ)

वासना चेदानीन्तनी प्राक्तनी च रसास्वादहेतुः (च) । तत्र यदि

---

(क) आशयं विवृणोति य इत्यादि । लोके तदानीन्तनलोकसमाजे । काव्यनाट्ययोः समर्पिताः कविना ग्रथिताः । अलौकिको वाग्भङ्गीमात्रजन्यतया लौकिकविभावनव्यापाराद्विसदृशो यो विभावनव्यापारः सामाजिककर्त्तृकानुभवो विषयतासम्बन्धेन तद्वत्तया हेतुना । भजन्त इति । अतएवालङ्कारिकाः कारणशब्दं विहाय विभावादिशब्दं प्रयुञ्जत इति भावः ।

(ख) अनुपपत्त्यन्तरमाशङ्कते कथमिति । तर्हि करुणादिरसद्योतकविभावादिभ्योऽपि सुखोत्पत्तिस्वीकारे । काव्यनाट्ययोरित्यत्रासत्तिक्रमेणान्वयः । तथा च नाट्यदर्शनेन तद्भिन्नश्रव्यकाव्ये च श्रवणेनेत्यर्थः । अश्रुपातादय इत्यादिशब्देन उच्छ्वासादिग्रहणम् । कथं जायन्त इति । अश्रुपातादीनां केवलदुःखेनैव सम्भवादिति भावः ।

(ग) अश्रिवति । चेतसो द्रुतत्वात् रसानन्देन गलितप्रायत्वात्, तद्वत् सुखोत्पत्तिवत् सामाजिकानामश्रुपातादयो मताः । ते खल्वश्रुपातादय आनन्दजनिता एवेत्याशयः ।

(घ) अपरामनुपपत्तिमाशङ्कते तर्हीति । तर्हि रसानां सुखमयत्वे सिद्धे । रसाभिव्यक्तिः रसबोधः कथं न जायते, कारणसत्त्वे कार्य्योत्पत्तेरवश्यम्भावादित्यभिप्रायः ।

(ङ) नेति । रत्यादिवासनां रतिहासादिसम्बन्धसहकृतकाव्यार्थज्ञानेच्छां विना तस्य रसस्य आस्वादोऽनुभवो न जायते । तथा च स्वयमनुरागादिलेशेनाप्यसम्बद्धचित्तः कथं परकीयमनुरागादिकं परिचिनुयात् कथं वा स्वयमनुरागादिमानपि चिन्तान्तरेणाभिभूतकाव्यार्थज्ञानेच्छो रसमनुभवेदिति भावः ।

---

(१) इत्याह इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आद्या न स्यात्, तदा श्रोत्रिय-जरन्मीमांसकादीनामपि स (१) स्यात्। यदि द्वितीया न स्यात्, तदा यद्रागिणामपि केषाञ्चिद्रसोद्बोधो न दृश्यते, तन्न स्यात् (छ)। उक्तञ्च धर्म्मदत्तेन—

"सवासनानां सभ्यानां रसस्यास्वादनं भवेत्।
निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसन्निभाः॥" इति (ज)।

ननु कथं रामादिरत्याद्युद्बोधकारणैः सीतादिभिः (२) सामाजिकरत्याद्युद्बोध इत्युच्यते (झ)।

(च) वासनापदार्थं सविभागं निरूपयति वासना चेति। रसास्वादहेतुर्वासनेत्यन्वयः। रसास्वादहेतुस्तु स्वचित्ते रतिहासादिसम्बन्धसहकृतकाव्यार्थज्ञानेच्छा। काव्यार्थज्ञानेच्छयैव नाट्यदर्शनादौ प्रवृत्तानामपि श्रोत्रियादीनां रसास्वादो भवितुमर्हतीत्यत उक्तं स्वचित्ते रतिहासादिसम्बन्ध इति। तेषां सर्वदैव व्यापारान्तराभिनिविष्टतया चित्ते स्वतो रतिहासादिसम्बन्धाभावान्न रसास्वादः। नाट्यदर्शनादिवेलायामपि प्रियतमानुरागचिन्तादिनिमग्नचित्तस्य रसास्वादो भवितुमर्हतीत्यतश्चोक्तं काव्यार्थज्ञानेच्छेति। तदानीं तस्य प्रियतमानुरागचिन्तया काव्यार्थज्ञानेच्छाया उपमर्द्दितत्वान्न रसास्वादः। सा च वासना द्विविधा— इदानीन्तनी काव्यनाट्यश्रवणदर्शनकालवर्त्तिनी, प्राक्तनी पूर्वकालवर्त्तिनी च।

(छ) उक्तद्विविधैव वासना रसास्वादं प्रति हेतुरेतदेवाह तत्रेति। तत्र तयोर्मध्ये। आद्या इदानीन्तनी। "एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा। षट्कर्म्मनिरतो विप्रः श्रोत्रियो नाम धर्म्मवित्॥" इति देवलोक्तो ब्राह्मणविशेषः श्रोत्रियः, जरन् वृद्धतमः, मीमांसकः कर्म्ममीमांसामतानुसारेण सर्वदा यागाद्यभिनिविष्टो ब्रह्ममीमांसामतानुसारेण ब्रह्मज्ञानाभिनिविष्टश्च, आदिपदेन च उन्मत्तादिपरिग्रहः, तेषाम्। स रसास्वादः स्यात् प्रसज्येत। वास्तविकपक्षे त्वमीषां शिष्यादिनिर्बन्धेन काव्यार्थज्ञानेच्छया तत्र तत्र प्रवृत्तानामपि रसास्वादो न स्यात् स्वचित्ते रत्यादिसम्बन्धाभावात्। यौवनादौ कादाचित्करतिहासादिसम्बन्धमात्ररूपा प्राक्तनी वासना त्वमीषामासीदेवेति बोध्यम्। द्वितीया प्राक्तनी वासना। रागिणामपि काव्यार्थज्ञानेन तत्तत्समय एव चित्ते समुत्पद्यमान-रतिहासादिसम्बन्धवतां केषाञ्चिद्बालकादीनाम्। रसोद्बोधो रसास्वादः। तत् रसोद्बोधादर्शनम्, न स्यात्। किन्तु रसोद्बोधदर्शनमेव प्रसज्येत, इदानीन्तनवासनासत्त्वादित्यर्थः। वास्तविकपक्षे तु तेषामपि प्राक्तनवासनाया अभावेन रसास्वादो न स्यादिति तत्त्वम्।

(ज) सवासनानामिति। सवासनानां युगपदुभयविधयैव वासनया विशिष्टानां सभ्यानां रसस्य आस्वादनम् अनुभवो भवेत्। तु किन्तु निर्वासना उक्तद्विविधवासनाहीनाः सभ्याः, रङ्गान्तः रङ्गालयमध्ये, काष्ठं दारुमयस्तम्भादि, कुड्यं भित्तिः, अश्मा पाषाणः, तेषां सन्निभास्तुल्याः सर्वथैव रसोद्बोधविहीना इत्यर्थः।

(झ) विषयान्तरमाशङ्कते नन्विति। अत्र निरूपकभेदे कथं कार्य्यकारणभाव इत्याशङ्कार्थः।

---

(१) सा इति पाठभेदः। (२) क्वचित् सीतादिभिरिति नास्ति।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

९ । व्यापारोऽस्ति विभावादेर्नाम्ना साधारणीकृतिः ॥
तत्प्रभावेण यस्यासन् पाथोधिप्लवनादयः ।
प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते ॥ (ञ)

ननु कथं मनुष्यमात्रस्य समुद्रलङ्घनादावुत्साहोद्बोध इत्युच्यते (ट) ।

१० । उत्साहादिसमुद्बोधः साधारण्याभिमानतः ।
नृणामपि समुद्रादि-लङ्घनादौ न दुष्यति ॥ (ठ)

रत्यादयोऽपि साधारण्येनैव (१) प्रतीयन्त इत्याह—(ड)

(ञ) व्यापार इति । विभावादेरित्यादिपदेन अनुभावसञ्चारिभावयोर्ग्रहणम् । तथा च विभावानुभावसञ्चारिभावानां नाम्ना साधारणीकृतिः साधारणीकृतिनामकः कश्चिद्व्यापारः ममता अस्तीति फलदर्शनादङ्गीक्रियत इति शेषः । तस्य व्यापारस्य प्रभावेण सामर्थ्येन प्रमाता काव्यनाट्यश्रवणदर्शनकारी सामाजिकः, यस्य रामस्य पाथोधिप्लवनादयः सीतापहारिणो रावणस्य निग्रहार्थं सेतुना समुद्रतरणादय आसन्, तस्य रामस्य अभेदेन एकरूपत्वेन स्वात्मानं स्वं प्रतिपद्यते बुध्यते । असाधारणोऽपि साधारणः क्रियते अनयेति साधारणीकृतिः, कालादिभेदेन वस्तुतो भिन्नयोरपि विभावादिसामाजिकयोरभिन्नताज्ञानजनक इत्यर्थः । तथा च काव्यनाट्यश्रवणदर्शनकारी सामाजिको जनः विभावादेस्तत्साधारणीकृतिनामकव्यापारेण तत्तत्काव्यनिवेशितरामादिरूपत्वेनात्मानं बुध्यत इति सरलार्थः । एवञ्च स्फटिके सन्निहितजवाकुसुमलौहित्यमिव सामाजिकात्मनि सीतादिकृतो रामादिरत्यादिरेव प्रतिबिम्बतीति नोक्ताशङ्कावकाश इति भावः ।

(ट) सीतादिभिः सामाजिकरत्यादौ कार्य्यकारणभावानुपपत्तिं निरस्य इदानीं सामाजिकानामशक्यविषयोत्साहाद्यनुपपत्तिं शङ्कते नन्विति । मनुष्यमात्रस्येति मात्रपदेन दुष्करकार्य्यसाधकतपोबलादिव्यवच्छेदः । आदिपदेन च रावणवधादिपरिग्रहः । तथा च काव्यनाट्यश्रवणदर्शनकारिणः सामान्यमनुष्यस्य सर्वथैवाशक्ये समुद्रलङ्घने देवताभिरपि कर्त्तुमशक्ये रावणवधादौ च कथमुत्साहस्य उद्बोध आविर्भाव इत्यर्थः ।

(ठ) उत्साहेति । नृणामपि सामान्यमनुष्याणामपि साधारण्याभिमानतः काव्यश्रवणादिवेलायां विभावादेस्तत्साधारणीकृतिनामकव्यापारेण आत्मनो रामादिभ्यः अभिन्नत्वज्ञानतः समुद्रादिलङ्घनादौ उत्साहादीनां समुद्बोधः सम्यगाविर्भावो न दुष्यति सङ्गच्छत इत्यर्थः । उत्साहादीत्यादिपदेन क्रोधादिपरिग्रहः । समुद्रादीत्यादिपदेन च वनपर्वतादिग्रहणम् । तृतीयादिपदग्राह्यन्तूक्तमेव ।

(ड) अथ प्रचण्डस्वभावोत्साहादिस्थायिभावैर्वैव विभावादेरयं साधारणीकृतिव्यापारोऽङ्गीक्रियते

(१) साधारण्येन इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**११। साधारण्येन रत्यादिरपि तद्वत् प्रतीयते। (ढ)**

रत्यादेरपि स्वात्मगतत्वेन प्रतीतौ सभ्यानां व्रीड़ातङ्कादिर्भवेत्, परगतत्वेन त्वरस्यतापातः (ण)।

विभावादयोऽपि प्रथमतः साधारण्येन प्रतीयन्त इत्याह—(त)

**१२। परस्य न परस्येति ममेति न ममेति च।**
**तदास्वादे विभावादेः परिच्छेदो न विद्यते॥ (थ)**

ननु तथापि कथमेवमलौकिकत्वमेतेषां विभावादीनामित्युच्यते (द)।

---

आहोस्विदन्यथापीत्याह रत्यादयोऽपीति। साधारण्येनैव साधारण्याभिमानेनैव। प्रतीयन्ते सामाजिकैरिति शेषः।

(ढ) साधेति। साधारण्येन तत्साधारणीकृतिव्यापारवशात् विभावादिभिः सह आत्मनः अभिन्नत्वज्ञानेन तद्वत् समुद्रलङ्घनादावुत्साहादिवत् रत्यादिरपि प्रतीयते सभ्यैरिति शेषः।

(ण) अत्रानुकूलप्रतिकूलतर्कौ दर्शयन्नाह रत्यादेरिति। हि तथाहि। सभ्यानाम् आत्मगतत्वेन केवलस्ववृत्तित्वेन रत्यादेः प्रतीतौ सत्यामेव व्रीड़ा गुरुजनादिसन्निधानात् (स्ववृत्तित्वेन रतिप्रतीतौ) लज्जा, (भयप्रतीतौ) आतङ्क आतङ्कजनितरोमाञ्चादिः, आदिशब्दात् (हासादिप्रतीतौ) हास्यादिश्च भवेदित्यर्थः। तु किन्तु। परगतत्वेन केवलनायकादिनिष्ठत्वेन रत्यादेः प्रतीतौ अरस्यतापातः अरसत्वापत्तिः, ततश्च व्रीड़ातङ्कादिर्न भवेदित्यर्थः। अतएव काव्यनाट्यश्रवणदर्शनवेलायां सभ्यानां व्रीड़ातङ्कादिदर्शनात् रत्यादिकोमलस्थायिभावेष्वपि साधारणीकृतिनामकव्यापारोऽस्त्येवेत्यङ्गीक्रियत इत्याशयः।

(त) विभेति। न केवलं रत्यादयः स्थायिभावाः किन्तु विभावादयोऽपीत्यर्थः। आदिशब्दादनुभावसञ्चारिभावयोर्ग्रहणम्। प्रथमतो रसास्वादारम्भात् पूर्वम्, साधारण्येन विभावादिभिः सह आत्मनोऽभिन्नत्वेन प्रतीयन्ते सामाजिकैरिति शेषः। रसास्वादारम्भे तु नात्मनो न वा विभावादीनां पृथग्-ज्ञानं जायत इति भावः।

(थ) परस्येति। तस्य रसस्य आस्वादे भाविनि सति रसास्वादात् पूर्वमित्यर्थः। इति अयम् अभिनीयमान उच्यमानो वा समुद्रलङ्घनादिव्यापारः, परस्य रामादिनायकादेरासीत्, इति अयं पुनर्वर्त्तमानो दर्शनादिव्यापारः, न परस्य नैव रामादिनायकादेः, ; तथा इति अयं दर्शनादिव्यापारो ममैव इति अयं समुद्रलङ्घनादिव्यापारः पुनः नैव मम; इत्थं क्रियाकालादिभेदेन विभावादेः परिच्छेदः आत्मना सह भेदज्ञानं न विद्यते सभ्यस्य न वर्त्तते। अत्र इतिशब्दद्वयस्यैव काकाक्षिगोलकन्यायेन उभयत्रैवान्वयः। रामादिनायकादिभिः सह सामाजिकस्य अत्यन्तभेदसूचनार्थं द्विविधाया अपि क्रियाया व्यत्ययतोऽपि भेदं दर्शयितुं द्विविधोक्तिरिति दिक्। न च "प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते" इत्यनेन सहास्य पुनरुक्तत्वमिति वाच्यम्, उद्देश्यभेदेनासकृदप्युक्तौ पुनरुक्तत्वदोषानङ्गीकारात्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१३। विभावनादिव्यापारमलौकिकमुपेयुषाम्।
अलौकिकत्वमेतेषां भूषणं न तु दूषणम्॥ (ध)

आदिशब्दादनुभावनसञ्चारणे। तत्र विभावनं रत्यादेर्विशेषेणास्वादाङ्कुरणयोग्यतानयनम्। अनुभावनमेवम्भूतस्य रत्यादेः समनन्तरमेव रसादिरूपतया भावनम्। सञ्चारणं तथाभूतस्यैव सम्यक् चारणम् (न)।

विभावादीनां यथासंख्यं कारण-कार्य्यसहकारित्वे कथं त्रयाणामेव रसोद्बोधे कारणत्वमित्युच्यते (प)।

१४। कारण-कार्य्य-सञ्चारिरूपा (१) अपि हि लोकतः।
रसोद्बोधे विभावाद्याः कारणान्येव ते मताः॥ (फ)

---

(द) अथ "लोकोत्तरचमत्कारप्राण" इत्यनेन रसस्यालौकिकत्वमुक्तं "तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयम्" इत्यनेन वक्ष्यति च। ततश्च लौकिकेभ्यो विभावादिभ्यः कथमलौकिकरसोत्पत्तिरित्याशङ्का-निरासाय विभावादीनामप्यलौकिकत्वं साधयितुं पृच्छति नन्विति। तथापि साधारणीकृत्याख्यव्यापारेण उक्तानुपपत्तिसमूहनिरासे सत्यपि। एवं रसाविर्भावानुकूलम्।

(ध) विभेति। अलौकिकं सभ्यलोकेषु पूर्वमविद्यमानं विभावनादिव्यापारम् उपेयुषां कारणता-सम्बन्धेन प्राप्तवताम् एतेषां विभावादीनामपि अलौकिकत्वम् अङ्गीकृतं भूषणं भूषणवदुपकारकं रसावि-र्भावानुकूलमेवेत्यर्थः; न तु दूषणं मूर्खतादिलौकिकदोषवत् न रसाविर्भावप्रतिकूलमिति यावत्। उभयोरपि रसविभावाद्योरलौकिकत्वेन समानत्वादिति भावः।

(न) विभवेति आदिशब्दादिति। अनुभावनसञ्चारणे एतद्द्वयं ग्राह्यमित्यर्थः। आस्वादाङ्कुरणं रसस्य सूक्ष्मरूपेणोत्पत्तिस्तस्य योग्यताया नयनं प्रापणम्। एवम्भूतस्य रसत्वेनाङ्कुरणयोग्यताप्राप्तस्य। समनन्तरमेव रसत्वेनाङ्कुरणयोग्यताप्राप्तेः परक्षणमेव। रसादीत्यादिपदेन भावरसाभासादिपरिग्रहः। भावनम् प्रतिपादनम्। तथाभूतस्य सम्पूर्णरूपेण रसतां प्राप्तस्य, एतस्य रत्यादेः, सम्यक् चारणं परिपुष्टीकारणम्।

(प) रसनिष्पत्तिं प्रति विभावादीनां त्रयाणामेव कारणत्वमुपपादयितुं पृच्छति विभावादीनामिति। आदिशब्देन अनुभावसञ्चारिभावयोर्ग्रहणम्। अत्र यथासंख्यमर्थकृतं वेदितव्यम्। तथा च सीतादि-विभावो रामादिगतरत्यादेः कारणम्, रामादिगतस्तम्भस्वेदाद्यनुभावश्च तदीयरत्यादेः कार्य्यम्, सीतादिगत-चापल्यहर्षादिसञ्चारिभावश्च रामादिगतरत्यादेः सहकारि कारणम्। एवञ्च सति विभावसञ्चारिभावयोरेव रत्यादेः रसरूपतया परिणतेः कारणत्वमुपपद्यते, न तु तत्कार्य्यभूतस्य अनुभावस्यापीत्याशङ्कार्थः।

(फ) कारणेति। ते विभावाद्या विभावानुभावसञ्चारिभावा लोकतो हि लौकिकनियमानु-

---

(१) कारणं कार्य्यसञ्चारिरूपाः, कार्य्यकारणसञ्चारिरूपा इति पाठभेदौ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ननु तर्हि कथं रसास्वादे तेषामेकः प्रतिभास इत्युच्यते (ब)।

१५। प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते।
ततः सम्बलितः (१) सर्वो विभावादिः सचेतसाम्।
प्रपाणकरसन्यायाच्चर्व्यमाणो रसो भवेत्॥ (भ)

यथा खण्डमरिचादीनां सम्मेलनादपूर्व इव कश्चिदास्वादः प्रपाणकरसे सञ्जायते, विभावादिसम्मेलनादिहापि तथेत्यर्थः (म)।

सारेणैव कारणकार्य्यसञ्चारिरूपा अपि यथासंख्येन रत्यादेः कारणकार्य्यसहकारिकारणस्वरूपाः सन्तोऽपि रसोद्बोधे तस्य रत्यादेः सामाजिकेषु रसत्वेनाविर्भावे कारणान्येव मताः प्रत्येकमेव हेतवोऽङ्गीकृताः। तथा च सामाजिकानां शृङ्गारादिरसास्वादं प्रति हर्षचापन्यादिसहकृतसीतादिविभावस्य यथा कारणत्वम्, तथा रामादिगतस्तम्भस्वेदाद्यनुभावानामपि कारणत्वम्; तद्दर्शनेनापि सामाजिकानां रसस्य पुष्टीकृतत्वादित्याशयः।

(ब) अत्र शङ्कते नन्विति। तर्हि रसविभावादीनां यथाक्रमं कार्य्यकारणत्वे सति। रसास्वादे सामाजिकानां रसप्रतीतिवेलायां तेषां रसतत्कारणविभावादीनां कथमेकः प्रतिभास एकरसरूपत्वेन ज्ञानम्, कार्य्यकारणयोर्भेदेन तज्ज्ञानस्यापि भेदस्यावश्यकत्वादिति भावः।

(भ) प्रतीयमान इति। प्रथमं सभ्यानां रसतया प्रतीतेः पूर्वम्, प्रतीयमानः सर्वो विभावादिः प्रत्येकम् एकैको हेतुः रत्यादिं प्रति कारणमुच्यते। ततः परं सभ्यानां रसतया प्रतीतिवेलायां सम्बलितः सम्मिलितः सर्वो विभावादिरेव चर्व्यमाणो व्यञ्जनया ज्ञायमानो भक्ष्यमाणश्च प्रपाणकरसन्यायात् प्रपाणकाख्यद्रवसादृश्यात् सचेतसां सभ्यानां रसो भवेत्।

(म) दृष्टान्तमुपन्यस्य विवृणोति यथेति। खण्डम् इक्षुशर्करानिर्म्मितखण्डम्, मरिचं स्वनामख्यातद्रव्यम्, आदिपदेन च आमिक्षा-(छाना) कर्पूरयोः परिग्रहः। अपूर्व इवेति इवशब्द उत्प्रेक्षायाम्। इक्षु-शर्कराखण्ड-मरिचचूर्णामिक्षा-कर्पूरैर्निर्म्मितं प्रपाणकं नाम कश्चित् द्रवविशेषस्तदानीं प्रचलित आसीत्, तस्य रसे रसनाग्राह्यरसाख्यगुणे। विभावादिसम्मेलनाज्जायमाने इति शेषः। इह शृङ्गारादिरसेऽपि। तथा च यथा प्रथमं खण्डमरिचादीनां चतुर्णां प्रत्येकमास्वादवेलायां प्रतीयमानो मधुरादिविभिन्नरसः कारणावस्था, परन्तु तेषामेव सम्मेलनेन जायमानस्य प्रपाणकस्यास्वादवेलायां पूर्वविलक्षणः कश्चित् प्रतीयमानो रसः कार्य्यावस्था; तथा प्रथमं विभावादीनां प्रत्येकतः प्रतीतिः कारणावस्था, परन्तु तेषामेव समूहत्वेन प्रतीतिः सभ्यानां शृङ्गारादिरसाख्यकार्य्यावस्थेति कालभेदे रसत्वेनैकप्रतिभासे न काचिदनुपपत्तिरिति भावः।

---

(१) सम्मिलित इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ननु यदि विभावानुभावव्यभिचारिभिर्मिलितैरेव रसस्तत् कथं तेषाम् (१) एकस्य द्वयोर्वा सद्भावेऽपि (२) स्यादित्युच्यते (य)।

१६। सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत्।
झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते॥ (र)

अन्यसमाक्षेपश्च प्रकरणादिवशात् (ल)। यथा—

"दीर्घाक्षं शरदिन्दुकान्तिवदनं बाहू नतावंसयोः
संक्षिप्तं निविडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव।
मध्यः पाणिमितो नितम्बि जघनं (३) पादावुदग्राङ्गुली (४)
छन्दो नर्त्तयितुर्यथैव मनसः सृष्टं तथास्या वपुः॥" (व)

अत्र मालविकामभिलषतोऽग्निमित्रस्य मालविकारूपविभावमात्र-

(य) अनुपपत्यन्तरमाशङ्कते नन्विति। स रसः कथं स्यादित्यर्थः। तथा च यथा दण्डचक्रादीनां मुख्यकारणसहकारिकारणानां मध्ये कस्यचिदसद्भावेऽपि घटकार्य्यानिष्पत्तिः, तथा विभावादीनां मध्येऽपि कस्यचिदसद्भावे रसानिष्पत्तिरित्याशङ्कार्थः।

(र) सद्भाव इति। विभावादेर्मध्ये चेत् यदि द्वयोरेकस्य वा सद्भावो विद्यमानता भवेत्, तदा झटिति तत्क्षणादेव श्रवणक्षण एव अन्यस्य अविद्यमानस्य भावस्य समाक्षेपे ज्ञाने सति दोषो रसानिष्पत्त्याशङ्का न विद्यते।

(ल) ननु अन्यसमाक्षेपः कुतः स्यादित्याह अन्येति। प्रकरणादिवशात् व्यञ्जनयेति शेषः। तथा च विभावादीनामेकस्मिन् विद्यमानेऽपि अविद्यमानस्य अन्यस्य अन्ययोरन्येषां वा व्यञ्जनया ज्ञानं स्वाभाविकमेवेति भावः।

(व) दीर्घाक्षमिति। मालविकाया नृत्यारम्भकाले अग्निमित्रकर्त्तृकतद्वर्णनमिदम्। अस्या मालविकाया वदनं दीर्घाक्षम् आयतलोचनम्, शरदिन्दुकान्ति शरच्चन्द्रसमानशोभान्वितञ्च। बाहू भुजौ अंसयोः स्कन्धद्वये नतौ नम्रौ, पुरुषस्कन्धवत् नोन्नतमूलावित्यर्थः। उरो वक्षःस्थलं निविडौ घनौ उन्नतौ च स्तनौ यत्र तत्तथोक्तमपि सत् संक्षिप्तं सङ्कुचितम्। नृत्यारम्भकाले नर्त्तकीगणो वक्षः सङ्कोचयतीति द्रष्टव्यम्। पार्श्वे उदरपार्श्वद्वयं प्रमृष्टे इव समानत्वात् केनचित् पाणिना परिमार्जिते इव। मध्यः कटिदेशः पाणिमितः मुष्टिपरिमितः नितान्तक्षीण इत्यर्थः। जघनम् ऊरुद्वयं नितम्बि विशालनितम्बद्वययुक्तम्। पादौ चरणौ उदग्रा उन्नता अङ्गुल्यो ययोस्तौ। अतएव नर्त्तयितुर्नृत्यशिक्षकस्य गणदासाख्यनाट्याचार्य्यस्य मनसो यथैव छन्दः अभिप्राय आसीत्, तथा तेनैव प्रकारेण अस्या मालविकाया वपुः शरीरं सृष्टं गणदासेन नृत्योपयोगि कृत्वा घटितम्।

(१) क्वचित् तेषाम् इति नास्ति। (२) न इत्यपि क्वचित् प्रामादिकः पाठः।
(३) अमितञ्च जघनमिति पाठान्तरम्। (४) अरालाङ्गुली इति पाठभेदः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वर्णनेऽपि सञ्चारिणामौत्सुक्यादीनामनुभावानाञ्च नयनविस्फारादीनामौचित्यादेवाक्षेपः (अ)। एवमन्याक्षेपेऽप्यूह्यम् (ष)।

"अनुकार्य्यगतो रसः" इति वदतः प्रत्याह—(स)

१७। पारिमित्याल्लौकिकत्वात् सान्तरायतया तथा।
अनुकार्य्यस्य रत्यादेरुद्बोधो न रसो भवेत्॥ (ह)

सीतादिदर्शनादिजो रामादिरत्याद्युद्बोधो हि परिमितो लौकिको नाट्यकाव्यदर्शनादेः सान्तरायश्च, तस्मात् कथं रसरूपतामियात्? रसस्यैतद्धर्म्मत्रितयविलक्षणधर्म्मकत्वात् (१) (क्ष)।

---

(अ) अन्यसमाक्षेपं दर्शयितुमाह अत्रेति। मालविकारूपविभावमात्रस्य मालविकात्मककेवलालम्बनविभावस्य वर्णनेऽपि। औचित्यात् योग्यत्वात् आक्षेपो वाच्यार्थं वैशिष्ट्यहेतुकव्यञ्जनया ज्ञानम्।

(ष) एवमिति। यथा मम वङ्गीयप्रतापनाटके प्रतापादित्यं प्रति शङ्करोक्तिः—

"कश्चित् प्रतापः किल पश्चिमोद्गतः परः प्रतापोऽप्युदितोऽस्तु पूर्वतः।
द्वयोः प्रतापाद्युगपत् प्रवर्त्तितात् चिरं प्रतापी यवनस्य नश्यतु॥"

अत्र शङ्करचक्रवर्त्तिनो युद्धोत्साहरूपः स्थायिभाव उक्तः। किन्तु वङ्गीयनवावरूप आलम्बनविभावः, तदत्याचाररूप उद्दीपनविभावः, सहायान्वेषणादिरूपोऽनुभावः, धृतिस्मृतिप्रभृतिः सञ्चारिभावश्च नोक्त इति तेषामाक्षेपेण सामाजिकेषु स शङ्करोत्साहो वीररसतामापद्यते।

(स) रसस्य अनुकार्य्यगतत्वं निराकर्त्तुमाह अनुकार्य्येति। अनुकार्य्यः अभिनयरूपानुकरणक्रियायाः कर्म्मभूतः। एतदुपलक्षणं श्रव्यकाव्यप्रधानप्रतिपाद्यस्य। स पुनर्वास्तविकरामादिः, तद्गतस्तन्निष्ठः सीतादिविषयको रत्यादिरेव रसपदवाच्य इत्यर्थः। तन्मते काव्यनाट्यश्रवणदर्शनाभ्यां तदर्थप्रतीतिरेव सभ्यानामानन्दं जनयतीति ज्ञेयम्।

(ह) पारीति। पारिमित्यात् परिमितत्वात्, लौकिकत्वात् वास्तविकलोकनिष्ठत्वात्, तथा सान्तरायतया सविघ्नतया। अत्राप्यनुकार्य्यपदं श्रव्यकाव्ये प्रधानप्रतिपाद्यस्याप्युपलक्षणम्। तेन नाट्ये अनुकार्य्यस्य श्रव्ये च काव्ये प्रधानतया प्रतिपाद्यस्य रामादेः रत्यादेः सीतादिविषयकानुरागप्रभृतेः उद्बोध आविर्भावो रसो न भवेत्।

(क्ष) व्याचष्टे सीतादीति। हि यस्मात्। सीतादिदर्शनादिजः जनकादिगृहे प्रकृतसीतादिदर्शनतद्गुणश्रवणादिजातः, रामादीनां प्रकृतरामादीनां रत्याद्युद्बोधः प्रकृतानुरागादीनामाविर्भावः, परिमितः रामादितत्तदेकव्यक्तिमात्रनिष्ठत्वेन परिमितत्वात् स्वल्पः, लौकिकः प्रकृततत्तल्लोकनिष्ठत्वात् तत्तद्व्यक्तेरचमत्कारी, नाट्यकाव्ययोर्दर्शनादेः आदिपदाच्छ्रवणस्य च सान्तरायश्च तदानीमेव स्वस्वविषयकनाट्य-

---

(१) रसस्य एतद्धर्म्मकत्वात् इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनुकर्त्तृगतत्वञ्चास्य निरस्यति (क)।

१८। शिक्षाभ्यासादिमात्रेण राघवादेः स्वरूपताम्।
दर्शयन् नर्त्तको नैव रसस्यास्वादको भवेत्॥ (ख)

किञ्च—(ग)

१९। काव्यार्थभावनेनायमपि सभ्यपदास्पदम्। (घ)

---

काव्ययोरुत्पत्त्यसम्भवरूपविघ्नग्रस्तश्च। इयात् प्राप्नुयात्। स वास्तविकरत्याद्युद्बोध इति शेषः। रसस्य एतद्धर्म्मवितयात् परिमितत्व-लौकिकत्व-सान्तरायत्वरूपधर्म्मत्रयात् विलक्षणा विपरीता धर्म्मा यस्य तत्त्वात् अपरिमितत्वालौकिकत्वनिरन्तरायत्वरूपधर्म्मवत्त्वादित्यर्थः। अत्रायमाशयः—रसस्तावदपरिमितः परमचमत्कारी काव्यनाट्यश्रवणदर्शनजन्यश्चेति सर्ववादिसम्मतम्। तथा च रामस्य सीतां प्रत्यनुरागो राममात्रनिष्ठत्वात् स्वल्पः, सततमेव सीतां प्रत्युत्कण्ठाजनकतया चमत्कर्त्तुमेवासमर्थः, तथा तत्काल एव तद्विषयककाव्यानुत्पत्तेः काव्यश्रवणादिजन्यताप्यत्यर्थेति सोऽनुरागो रामे कथं शृङ्गाररसो भवितुमर्हति। किन्तु कालभेदेन सभाभेदेन च सभ्यानामपरिमितत्वात् ज्ञानसम्बन्धेन सभ्यवृत्तिः सोऽनुरागोऽपि अपरिमितः, कविकौशलादिदर्शनेन परमचमत्कारी, काव्यनाट्यश्रवणदर्शनजन्यत्वे निरन्तरायश्चेति रसस्य सभ्यवृत्तित्वमेवाङ्गीकार्य्यमिति। एवमन्यान्यरसेऽप्यूह्यम्।

(क) अथ तर्हि रसस्यानुकर्त्तृवृत्तित्वमेवाङ्गीक्रियताम्। तथा च कालादिभेदेन तेषामनेकत्वादपरिमितत्वादिकमपि रसस्य सिध्यतीत्याह अन्विति। किञ्चेति चार्थः। अनुकर्त्तारः प्रकृतरामादीनामभिनयकर्त्तारो नटाः श्रव्यकाव्ये वाचयितारश्च, तद्गतत्वं तद्वृत्तित्वम्, अस्य रसस्य।

(ख) शिक्षेति। नर्त्तक इति जातावेकवचनम्। शिक्षकादभिनयोपदेशग्रहणं शिक्षा। शिक्षितविषयस्य पौनःपुन्येनानुशीलनमभ्यासः। आदिशब्देन निजनैपुण्यादिग्रहणम्। मात्रपदेनाभिनीयमानकाव्यार्थज्ञानव्यावृत्तिः। तथा च नर्त्तको नटः शिक्षाभ्यासादिमात्रेण राघवादेः आदिपदाद्दुष्मन्तादेश्च स्वरूपतां वनवासादिव्यापारं दर्शयन् अभिनयन् रसस्य आस्वादको बोद्धा न भवेत्। अभिनयसौन्दर्य्यसम्पादन एव सततव्यापृतचित्तत्वेन तेषां काव्यार्थभावनया एवासम्भवादिति भावः। श्रव्यकाव्ये वाचकोऽपि यथायथवाचनव्यापृतचित्तत्वेन न रसस्यास्वादको भवेदिति बोध्यम्। अतएव तद्वृत्तित्वं रसस्य कथमपि न सम्भवतीति कारिकाशयः।

(ग) अथ काव्यार्थभावनापूर्वकाभिनयकारी नटोऽपि किं रसस्यास्वादको न भवेदित्याह किञ्चेति।

(घ) तत्रेष्टापत्तिमाह काव्यार्थेति। काव्यार्थभावनेन अभिनीयमानकाव्यार्थबोधेन तत्पूर्वकमेवेत्यर्थः। अभिनयन्निति शेषः। अयं नर्त्तकोऽपि सभ्यपदास्पदं वास्तविकरसग्राहिसभ्यस्थानीयं स्वीक्रियत इति शेषः। एवञ्च श्रव्यकाव्येऽपि तादृशवाचको रसस्यास्वादको भवेदिति भाव्यम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यदि पुनर्नटोऽपि काव्यार्थभावनया रामादिस्वरूपतामात्मनो दर्शयेत्, तदा सोऽपि सभ्यमध्य एव गण्यते (ङ) ।

२० । नायं ज्ञाप्यः स्वसत्तायां प्रतीत्यव्यभिचारतः ॥ (च)

यो हि ज्ञाप्यो घटादिः स सन्नपि कदाचिदज्ञातो भवति । न ह्ययं तथा, प्रतीतिमन्तरेणाभावात् (छ) ।

२१ । यस्मादेष विभावादि-समूहालम्बनात्मकः ।
तस्मान्न कार्य्यः—(ज)

यदि रसः कार्य्यः स्यात्, तदा विभावादिज्ञानकारणक एव स्यात् (झ) । ततश्च रसप्रतीतिकाले विभावादयो न प्रतीयेरन्, कारणज्ञानतत्कार्य्यज्ञानयो-

---

(ङ) यदीति । रामादीनामनुकार्य्याणां स्वरूपतां वनवासादिव्यवहारम् । दर्शयेदभिनयेत् । सभ्यमध्य एव गण्यत इति । तदापि तस्य सभ्यश्रेण्यन्तर्गतत्वेनैव रसस्यास्वादकत्वमङ्गीक्रियत इत्याशयः । अतो ज्ञानसम्बन्धेन सामाजिकवृत्तिरेव नायकादिरत्यादिस्थायिभावो रस इति स्थितम् ।

(च) अथ प्रागुक्तं रसस्य स्वप्रकाशत्वमुपपादयितुं तदितरधर्म्मान्निराकरोति नायमिति । अयं रसो न ज्ञाप्यो न स्वभिन्नप्रत्यक्षविषयः, स्वस्य रसस्य सत्तायामवस्थानकाले, प्रतीतेरव्यभिचारतः सामाजिकानां तत्प्रतीतेर्व्यभिचाराभावात् स्वस्वचित्तेषु रसस्य सत्ताकाले सामाजिकानां सर्वदैव तत्प्रतीतिसत्त्वादित्यर्थः ।

(छ) आशयमात्रं विवृणोति यो हीति । हि तथाहि । य इत्यद्विरुक्तोऽपि सामर्थ्यात् वीप्सार्थं गमयति । सन्नपि विद्यमानोऽपि । कदाचित् ज्ञातुः पटादिज्ञानकाले निद्रादिकाले वा । अयं रसो नहि तथा न तादृशः, विद्यमानोऽप्यज्ञातो नहि भवतीत्यर्थः । प्रतीतिमन्तरेण स्वस्वरूपप्रतीतिं विना अभावा-दविद्यमानत्वात् । तथा च यो यः पदार्थो ज्ञाप्यः स स स्वप्रतीत्यभावकालेऽपि तिष्ठति । यथा—घटादिः । रसस्तु स्वप्रतीत्यभावकाले नावतिष्ठत एव, विभावादिप्रतीतिमात्ररूपत्वात् । अतएव रसो न ज्ञाप्य इति सरलार्थः । इत्थञ्च "रसो न ज्ञाप्यः सत्ताकाले प्रतीत्यभावाभावात्" इति प्रयोगः ।

(ज) अथ तर्हि विभावादिज्ञानजन्य एव रसोऽस्त्वित्याह यस्मादिति । यस्मात् एष रसः, विभावादि-समूहो विभावानुभावसञ्चारिभावात्मकसमुदाय एवालम्बनं विषयो यस्य तद्विभावादिसमूहावलम्बनं ज्ञानं तदेव आत्मा स्वरूपं यस्य स तथोक्तः, तस्मान्न कार्य्यो न विभावादिज्ञानजन्यः । ध्वंसे सत्यपि प्रागभाव इव रसो न जन्य इत्याशयः ।

(झ) रसस्य विभावादिज्ञानजन्यत्वे बाधमुपन्यस्य व्याचष्टे यदीति । कार्य्यो जन्यः । विभावादि-ज्ञानमेव कारणं जनकं यस्य सः । 'विभावादिज्ञानेनैव रसो जन्य'इत्यर्थः । अयोग्यत्वेन कारणान्तरा-सम्भवादिति भावः ।


CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

युगपददर्शनात् । नहि चन्दनस्पर्शज्ञानं तज्जन्यसुखज्ञानञ्चैकदा सम्भवति (ञ) । रसस्य च विभावादिसमूहालम्बनात्मकतयैव प्रतीतेर्न विभावादिज्ञानकारणकत्वमित्यभिप्रायः (ट) ।

२२ । नो नित्यः पूर्वसंवेदनोज्झितः ।
असंवेदनकाले हि न भावोऽप्यस्य विद्यते ॥ (ठ)

न खलु नित्यस्य वस्तुनोऽसंवेदनकालेऽसम्भवः (ड) ।

(ञ) नन्वस्तु विभावादिज्ञानकारणक एव रसः का क्षतिरित्याह तत्रयेति । न प्रतीयेरन् सभ्यानां विभावादिप्रतीतयो न जायेरन् । रसो यदि विभावादिज्ञानकारणकः स्यात् तदा विभावादिज्ञानोत्पत्तिकालोत्पन्नप्रतीतिको न स्यादिति तर्कोऽनुसन्धेयः । तर्कानुकूलव्याप्तिं ग्राहयति कारणेति । अत्र दृष्टान्तमाह नहीति । हि तथाहि । न सम्भवतीत्यन्वयः युगपददर्शनात् युगपदुत्पत्त्यदर्शनात् ज्ञानानां यौगपद्यासम्भवादित्याशयः । अत्र दृष्टान्तमाह नहीति ।

(ट) ननु कार्यकारणयोरेव घटदण्डयोर्युगपदेव प्रत्यक्षदर्शनात् विभावादिकारणज्ञानं रसरूपतत्कार्यज्ञानञ्च युगपदेव सभ्यानां भविष्यतीत्याह रसस्य चेति । किञ्चेति चार्थः । विभावादिसमूहालम्बनात्मकतयैव विभावादिसमूहालम्बनज्ञानरूपेणैव । एवशब्देन विभावादिसमूहालम्बनज्ञानरसज्ञानयोर्भेदो व्यवच्छिद्यते । विभावादिसमूहालम्बनज्ञानमेव हि रसस्तत् कथं विभावादिज्ञानं रसं प्रति कारणं भवितुमर्हति, स्वं प्रति स्वस्य कारणत्वासम्भवादिति भावः । तथा च रसो न विभावादिज्ञानजन्यः तदनतिरिक्तविषयक-विभावादिज्ञानस्वरूपत्वादिति प्रयोगः ।

(ठ) अथ तर्हि गगनादिवन्नित्य एवास्तु रस इत्याह नो नित्य इति । एष इति पूर्वस्मादनुवर्त्तते । हि यस्मात् एष रसः, पूर्वसंवेदनेन तत्तत्कालात् पूर्वपूर्वकालवर्त्तिना ज्ञानेन उज्झितो रहितः, तस्मात् नो नित्यः । यथा गमनकाले गगनज्ञानं जायते, तथा तत्पूर्वमवस्थानकालेऽपि तज्ज्ञानं जातमिति गगनं नित्यम् । किन्तु काव्यनाट्यश्रवणदर्शनवेलायामेव सभ्यानां रसज्ञानं जायते तत्पूर्वं सभायां गमनकाले तु तज्ज्ञानं न जातमतो रसो न नित्य इति सरलार्थः ।

ननु इदानीं देवदत्तभवने शाकुन्तलाभिनयदर्शनवेलायां चैत्रेण य एव रसो ज्ञातः, तत्पूर्वं पूर्वकाले मैत्रादिभवनेऽपि शाकुन्तलाभिनयदर्शनवेलायां चैत्रेण स एव रसो बहुशो ज्ञातः ; अतएव गगनवत् पूर्वसंवेदनोज्झितत्वाभावात् रसोऽपि नित्य एव स्यादित्याह असंवेदनेति । हि यस्मात् अस्य रसस्य असंवेदनकाले अप्रतीतिसमयेऽपि भावः सत्ता न विद्यते विभावादिप्रतीतिमात्ररूपत्वादिति भावः, तस्मान्नो नित्य इति पूर्वेणान्वयः ।

(ड) पूर्वसंवेदनोज्झित इत्यस्य हेतोः प्रागुक्तदोषेणाकिञ्चित्करत्वात् असंवेदनकाले इत्यादिकं द्वितीयमेव हेतुमादाय रसस्यानित्यत्वं साधयितुं नित्ये वैपरीत्यं दर्शयति न खल्विति । असंवेदनकाले अप्रतीतिसमये, न खलु नित्यस्य वस्तुनः असम्भवः अभावः, अपि तु सम्भवः सत्तैव विद्यत इत्यर्थः । तथा

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२३। नापि भविष्यन् साक्षादानन्दमयस्वप्रकाशरूपत्वात्।
कार्य्यज्ञाप्यविलक्षणभावान्नो वर्त्तमानोऽपि॥ (ढ) *
२४। विभावादिपरामर्श-विषयत्वात् सचेतसाम्।
परानन्दमयत्वेन संवेद्यत्वादपि स्फुटम्॥
न निर्विकल्पकं ज्ञानं तस्य ग्राहकमिष्यते। (ण)

च घटादिप्रतीतिसमये गगनस्य प्रतीत्यभावेऽपि सत्त्वान्नित्यत्वम्, प्रतीतिमात्ररूपस्य रसस्य तु अप्रतीतिसमये असत्त्वादनित्यत्वमिति भावः। एवञ्च रसो न नित्यः अप्रतीतिवेलायामसत्त्वादिति प्रयोगः।

(ढ) अथ काव्यनाट्यश्रवणदर्शनतः परं विभावादिस्मरणात्मकज्ञानमेव रसो भवत्वित्याह नापीति। रसो नापि भविष्यन् नापि भावी काव्यनाट्यश्रवणदर्शनकालतः परवर्त्तिकाले विभावादिस्मृतिरूपो रस इत्यपि नेत्यर्थः। साक्षात् काव्यनाट्यश्रवणदर्शनकालयोरेव प्रत्यक्षीभूतमानन्दमयं स्वप्रकाशञ्च रूपं स्वरूपं यस्य तस्य भावस्तस्मात्। तथा च रसस्य स्मृतिरूपत्वेन परभावित्वे काव्यनाट्यश्रवणदर्शनकालयोरेव तस्य प्रत्यक्षं न स्यात् स्मरणकाले तादृशानन्दाभावादानन्दमयत्वं स्मरणेन प्रकाशितत्वात् स्वप्रकाशरूपत्वञ्च न स्यादिति भावः। इत्थञ्च रसो न स्मृतिरूपत्वेन भावी साक्षादानन्दमयस्वप्रकाशरूपत्वादिति प्रयोगः।

अथ तर्हि नियतविद्यमानरूपो वर्त्तमान एवास्त्वित्याह कार्य्येति। रसो नापि वर्त्तमानो घटादिवन्नियतविद्यमानः सिद्ध इति यावत्; कार्य्यं जन्यं ज्ञाप्यं जन्यज्ञानविषयीभूतं तयोर्विलक्षणभावादिलक्षणत्वात्। तथा च घटो जन्यो ज्ञाप्यश्चेति वर्त्तमानः, गगनमजन्यमपि ज्ञाप्यमिति वर्त्तमानमेव, किन्तु रसो न जन्यो न वा ज्ञाप्य इति न वर्त्तमानोऽपीति भावः। एवञ्च रसो न वर्त्तमानः कार्य्यज्ञाप्यत्वाभावादिति प्रयोगः। कार्य्यत्वं ज्ञाप्यत्वञ्चास्य प्रागेव निराकृतम्। आर्य्यानिबद्धा कारिकेयं सुबोधेति मत्वा वृत्तौ न किञ्चिद्विवृतम्।

(ण) ननु तदा रसो निर्विकल्पाख्यज्ञानविषय एवास्तु। तथा च युगपत् घटघटत्वे इति ज्ञानं यथा निर्विकल्पकज्ञानं तथा काव्यनाट्यश्रवणदर्शनकालयोर्युगपत् रसरसत्वे इति ज्ञानं निर्विकल्पकज्ञानम्, तेन ज्ञेय एव रसो भविष्यति किं स्वप्रकाशात्मकज्ञानरूपत्वाङ्गीकारेणेत्याह विभावादीति। प्रकारताविशेष्यताशून्यं सम्बन्धानवगाहि ज्ञानं निर्विकल्पकज्ञानम्, तत्, तस्य रसस्य ग्राहकं ज्ञापकं न इष्यते रसो निर्विकल्पकज्ञानविषयोऽपि नेत्यर्थः। कुत इत्याह विभावादीति हेतुद्वयम्। विभावादीनां परामर्शो ज्ञानमेव विषयो विशेष्यरूपेण ज्ञेयो यस्य तस्य भावस्तस्मात्, तथा सचेतसां मनस्विसभ्यानां परानन्दमयत्वेन नितान्तसुखमयत्वप्रकारेण स्फुटं स्पष्टं संवेद्यत्वादपि ज्ञेयत्वाच्च। तथा च निर्विकल्पकज्ञानविषये प्रकारता विशेष्यता च न भासते। उक्तञ्च—"प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत्।" अत्र तु विभावादिज्ञाने विशेष्यता परमानन्द

* कारिकेयम् अनेकपाठवैषम्यास्पदीकृत्य क्वचित् पुस्तके वृत्तिभावं प्रापिता।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२५ । तथाभिलापसंसर्ग-योग्यत्वविरहान्न च ।
सविकल्पकसंवेद्यः—(त)

सविकल्पकज्ञानसंवेद्यानां हि वचनप्रयोगयोग्यता, न तु रसस्य तथा (थ) ।

२६ । साक्षात्कारतया न च ।
परोक्षस्तत्प्रकाशो नापरोक्षः शब्दसम्भवात् ॥ (द)

---

मयत्वे च प्रकारता भासत इति रसो न निर्विकल्पकज्ञानविषयोऽपि भवितुमर्हतीति भावः । एवञ्च रसो न निर्विकल्पकज्ञानविषयः परमानन्दमयत्व-प्रकारक-विभावादिज्ञानविशेष्यकज्ञानमात्रविषयत्वादिति प्रयोगः । एषापि साङ्केतिकारिका सुगमेति मत्वा वृत्तौ न विवृता ।

(त) अथैवं सति अयं घट इति घटत्वप्रकारकघटविशेष्यकज्ञानसाधारणपरमानन्दमयत्वप्रकारक-विभावादिज्ञानविशेष्यकसविकल्पकज्ञानविषय एव रसः स्वीक्रियतामित्याह तथेति । तथा च अपि चेत्यर्थः । प्रकारताविशेष्यताशालि सम्बन्धावगाहि ज्ञानं सविकल्पकज्ञानम् । रसस्तादृशसविकल्पकज्ञानेन संवेद्यो ज्ञेयोऽपि न, अभिलापो वाक्यं तेन संसर्गो व्यवहारस्तस्य योग्यत्वविरहात् रसस्य व्यङ्ग्यत्वेन वाचकत्वघटकशब्दै-र्व्यवहारयोग्यत्वाभावात् । तथा च यो यो वाचकत्वघटकशब्दैर्व्यवहारयोग्यः स स सविकल्पकज्ञानज्ञेयः । यथा—घटः । काव्यनाट्यश्रवणदर्शनकालीनो रसस्तु तत्तत्काव्यव्यङ्ग्य एव, न तु वाचकत्वघटकशब्दव्यवहार-योग्य इत्याशयः । एवञ्च रसो न सविकल्पकज्ञानविषयः अभिलापव्यवहारयोग्यत्वाभावादिति प्रयोगः । यद्यपि विभावादिपरामर्शविषयत्वात् परानन्दमयत्वेन संवेद्यत्वादपीति पूर्वोक्तहेतुद्वयेन रसस्य सविकल्पकज्ञान-विषयत्वमेवायातम्, तथापि सविकल्पकज्ञानविषयवाच्यलक्ष्यान्यतरस्वरूपघटादिभ्यो रसस्य व्यङ्ग्यस्वरूपं वैषम्यं दर्शयितुमिदमभिहितमिति बोध्यम् ।

(थ) व्याचष्टे सविकल्पकेति । हि तथाहि । सविकल्पकसंवेद्यानां घटादीनाम्, वचनप्रयोगयोग्यता "अयं घट" इति वाक्यव्यवहारयोग्यता अस्तीति शेषः । रसस्य तु न तथा न वचनप्रयोगयोग्यता व्यङ्ग्यत्वा-दित्याशयः ।

(द) ननु तर्हि भावनाख्यसंस्कारादिवदतीन्द्रिय एवास्तु रस इत्याह साक्षादिति । किञ्चेति चार्थः । साक्षात्कारतया साक्षादनुभवरूपतया हेतुना, तस्य रसस्य प्रकाशो ज्ञानं न परोक्षो नातीन्द्रियः । तथा च रसज्ञानं न परोक्षं काव्यनाट्यश्रवणदर्शनकालयोः साक्षादनुभवरूपत्वादिति प्रयोगः ।

अथ तदा रसः प्रत्यक्षज्ञानमेवाङ्गीक्रियतामित्याह नापरोक्ष इति । तस्य रसस्य प्रकाशो न अपरोक्षः न परोक्षविपरीतः प्रत्यक्षस्वरूपः, शब्दसम्भवात् केवलकाव्यात्मकशब्दजातत्वात् । तथा च यद्यज्ज्ञानं केवलशब्दजन्यं तत्तन्न प्रत्यक्षस्वरूपम् । यथा—वैवस्वतो नाम मनुरासीदिति । इत्यञ्च रसो न प्रत्यक्षस्वरूपः केवलशब्दसम्भवादिति प्रयोगः । अत्रापि काव्यनाट्यश्रवणदर्शनकालयोर्मानसिकप्रत्यक्षीभूतस्य रसस्य

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत् कथय कीदृगस्य तत्त्वमेवमश्रुतादृष्टपूर्वनिरूपणप्रकारस्ये-त्याह—(ध)

२७। तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयम्। (न)

तत् किं पुनः प्रमाणं तस्य सद्भावे इत्याह—(प)

२८। प्रमाणं चर्वणैवात्र स्वाभिन्ने विदुषां मतम्॥ (फ)

चर्वणा आस्वादनम्। तच्च "स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः" इत्युक्तप्रकारकम् (ब)।

ननु यदि रसो न कार्यस्तत्कथं महर्षिणा—"विभावानुभावव्यभिचारि-संयोगाद्रसनिष्पत्तिः" इति लक्षणं कृतमित्युच्यते (भ)।

२९। निष्पत्त्या चर्वणस्यास्य निष्पत्तिरुपचारतः। (म)

---

घटादिप्रत्यक्षान्तरवैषम्यमात्रप्रदर्शनायेदमुपन्यस्तम्, अन्यथा साक्षात्कारतयेति पूर्वोक्तहेतुर्नोपपद्यत इति ध्येयम्।

(ध) इत्यत्र रसे ज्ञाप्यत्वादिसम्भाव्यमानसामान्यधर्माणां प्रायेण प्रत्याख्यानाद्विस्मयापन्नो जिज्ञासुः पृच्छति तदिति। तदित्यर्थः। एवमित्थम्, न श्रुतौ न दृष्टौ च पूर्वमित्यश्रुतादृष्टपूर्वौ निरूपणप्रकारौ निर्वचनसामान्यधर्मौ यस्य तस्य। अस्य रसस्य। तत्त्वं स्वरूपम्।

(न) तस्मादिति। तस्मात् रसे ज्ञाप्यत्वादिलौकिकधर्माणां निरासात् सहृदयैः सभ्यैः, अयं रसः अलौकिकः सत्यं लौकिकसाधारणज्ञानविलक्षण एव वेद्यो ज्ञेयः। तद्विलक्षणमेव च रसस्य तत्त्वमिति भावः।

(प) तादृशञ्च तत्त्वमवगन्तुमक्षमः पृच्छति तत् किमिति। तस्य रसस्य सद्भावे अस्तित्वे।

(फ) प्रमाणमिति। स्वा चर्वणा तदभिन्ने तत्स्वरूपे आस्वादमात्रस्वरूप इत्यर्थः, अत्र रसे रसस्य सद्भावे, विदुषां सहृदयसभ्यानां चर्वणैव काव्यनाट्यश्रवणदर्शनकालयोः आस्वादनमेव प्रमाणं मतम्। काव्यार्थज्ञानवेलायां रसप्रतीतिरेव तदस्तित्वे प्रमाणमिति निष्कर्षः।

(ब) अथ का नाम चर्वणेत्याह चर्वणेति। आस्वादनञ्च किमित्याह तच्चेति। स्वाद इत्यादिकन्तु प्रागेव व्याख्यातम्।

(भ) "यस्मादेष विभावादिसमूहालम्बनात्मकः। तस्मान्न कार्यः" इत्यनेनानुमितं रसस्य कार्यत्वाभावं प्रति शङ्कते नन्विति। महर्षिणा भरतेन। विभावानुभावव्यभिचारिणां संयोगात् सम्मेलनात् रसस्य निष्पत्तिरुत्पत्तिर्भवति। उत्पत्तिमत्त्वमेव कार्यत्वम्। एवञ्च परमाप्तमहर्षिभरतस्योक्त्या सह भवदुक्ते-र्विरोध इति भावः।

(म) निष्पत्त्येति। चर्वणस्य आस्वादनस्य निष्पत्त्या काव्यनाट्यश्रवणदर्शनकालयोरुत्पत्त्या उप-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यद्यपि रसाभिन्नतया चर्वणस्यापि न कार्य्यत्वम्, तथापि तस्य कादाचित्कतया उपचरितेन कार्य्यत्वेन कार्य्यत्वमुपचर्य्यते (य)।

**३०। अवाच्यत्वादिकं तस्य वक्ष्ये व्यञ्जनरूपणे। (र)**

तस्य रसस्य। आदिशब्दादलक्ष्यत्वादि (ल)।

ननु यदि मिलिता रत्यादयो रसास्तत् कथमस्य स्वप्रकाशत्वं कथं वा अखण्डत्वम्? इत्याह—(व)

**३१। रत्यादिर्ज्ञानतादात्म्यादेव यस्माद्रसो भवेत्।**
**अतोऽस्य (१) स्वप्रकाशत्वमखण्डत्वञ्च सिध्यति (श)**

---

चारतो रसतदास्वादनयोरभेदारोपात् अस्य रसस्य निष्पत्तिर्महर्षेर्निष्पत्त्युक्तिः सङ्गच्छत इति शेषः। वस्तुतस्तु रसस्य कार्य्यत्वं नास्त्येवेति भावः।

(य) ननु सर्वैरेव रसस्य तदास्वादनरूपचर्वणस्य च अभिन्नत्वमेवाङ्गीकृतम्, तथा च रसस्य कार्य्यत्वाभावे तच्चर्वणस्य कार्य्यत्वरूपा निष्पत्तिः कथं सङ्गच्छत इत्याह यद्यपीति। चर्वणस्यापि न केवलं रसस्य तदास्वादनस्यापीत्यर्थः, न कार्य्यत्वं न कार्य्यत्वरूपा निष्पत्तिः। उपपद्यत इति शेषः। कादाचित्कतया कदाचिदाविर्भूतत्वपुरस्कारेण, उपचरितेन घटादिकार्य्यत्वसदृशतया लक्षितेन कार्य्यत्वेन जन्यत्वेन। इयमभेदे तृतीया। तदभिन्नं कार्य्यत्वमित्यर्थः, तस्य चर्वणस्य उपचर्य्यते आरोप्यते। तथा च काव्यनाट्यश्रवणदर्शनकालमात्राविर्भूतत्वरूपमौपचारिकं कार्य्यत्वं चर्वणस्याङ्गीक्रियत इति सरलार्थः। न पुनश्चर्वणस्यापि वस्तुतः कार्य्यत्वमस्तीति भावः। न चेदं "तस्मान्न कार्य्यः" इत्यतः परमेव प्रासङ्गिकत्वेन वक्तुमुचितमासीदिति वाच्यम्, प्रत्याख्यानप्रकरणे समाधानोक्तेरत्यन्तानौचित्यात्।

(र) अथ काव्येन रसस्य वाच्यत्वसम्भवेऽपि "तथाभिलापसंसर्गयोग्यत्वविरहात्" इत्यनेन अवाच्यत्वमुक्तं कथं सङ्गच्छत इत्याह अवाच्यत्वादिकमिति। व्यञ्जनरूपणे पञ्चमपरिच्छेदे।

(ल) तस्येति। अलक्ष्यत्वादीत्यादिशब्देन च अतात्पर्य्यार्थत्वग्रहणम्।

(व) अनुपपत्त्यन्तरमाशङ्कते नन्विति। मिलिता विभावानुभावसञ्चारिभावैः संश्लिष्टाः। तत् तदा। अस्य रसस्य। स्वप्रकाशत्वं "सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः" इत्यनेनोक्तम् आत्मनैव प्रकाशमानत्वं कथ सङ्गच्छत इति शेषः, काव्यश्रवणादिवेलायां ज्ञानेन प्रकाश्यत्वादिति भावः। कथं वा अखण्डत्वम् एकमात्ररूपत्व सङ्गच्छते, विभावादिभेदेन नानारूपत्वस्यैव सम्भवादित्याशयः।

(श) रत्यादिरिति। ज्ञानतादात्म्यादिति ल्यब्लोपे पञ्चमी। तथा च यस्मात्, ज्ञानतादात्म्यादेव काव्यश्रवणादिवेलायां स्वस्वविषयकज्ञानस्वरूपत्वं पुरस्कृत्यैव विद्यमानो रत्यादिः, रसो भवेत् विभावादिसमूहालम्बनज्ञानमेव रसो भवेदित्यर्थः। अतो हेतोः, अस्य रसस्य, स्वप्रकाशत्वम् अखण्डत्वञ्च सिध्यति, वेदान्तमते ज्ञानस्य स्वप्रकाशत्वरूपत्वात् उक्तरीत्या अखण्डत्वरूपत्वाच्चेति भावः।

---

(१) ततोऽस्य इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यदि रत्यादिकं प्रकाशशरीरादतिरिक्तं स्यात्, तदैवास्य स्वप्रकाशत्वं न सिध्येत्। न च तथा, तादात्म्याङ्गीकारात् (ष)।

यदुक्तम्—"यद्यपि रसानन्यतया चर्वणा न कार्य्या, तथापि कादाचित्कतया कार्य्यत्वमुपकल्प्य तदेकात्मन्यनादिवासनापरिणतिरूपे रत्यादिभावेऽपि (१) व्यवहारः" इति (२) (स)। "सुखादितादात्म्याङ्गीकारे चास्माकीं सिद्धान्तशय्यामधिशय्य दिव्यं वर्षसहस्रं प्रमोदनिद्रामुपेयाः"

---

(ष) साधकतर्कमुपन्यस्य व्याचष्टे यदीति। रत्यादिकं "विभावेनानुभावेन" इत्यादिकारिकायामुक्तं रतिविभावादिभावद्वन्द्वम्, प्रकाशशरीरात् प्रकाशापरपर्य्यायज्ञानस्वरूपात्, अतिरिक्तं रत्यादिपदस्य शक्यार्थग्रहणेन भिन्नम्। अस्य रसस्य स्वप्रकाशत्वम् आत्मनैव प्रकाशमानत्वं न सिध्येत्, शक्यार्थग्रहणात् रत्यादिमात्रलाभेन तस्य ज्ञानप्रकाश्यत्वादिति भावः। तथा न च, रत्यादिकं प्रकाशशरीरादतिरिक्तं नैवेत्यर्थः, तादात्म्याङ्गीकारात् रत्यादितज्ज्ञानयोरभेदस्वीकारात्, तत्कारिकायां विभावादिपदेन लक्षणया तत्तज्ज्ञानग्रहणादिति भावः।

(स) रत्यादितज्ज्ञानयोस्तादात्म्याङ्गीकारे प्राचीनसंवादमाह यदुक्तमिति। रसादनन्यतया अभिन्नतया। न कार्य्या न जन्या। कादाचित्कतया कदाचिज्जाततया। इयमप्यभेदे तृतीया। कदाचिदाविर्भूतत्वरूपमित्यर्थः। कार्य्यत्वं जन्यत्वमुपकल्प्य तस्यां चर्वणायामारोप्य, तदेकात्मनि चर्वणास्वरूपे, अनादिवासना सभ्यानां नित्यभूतः संस्कारविशेषः तस्याः परिणतिरूपे, काव्यश्रवणादिकाले अवस्थान्तरप्राप्तिस्वरूपे, रत्यादिभावे तत्तत्काले रसत्वेनाभिमते रतिहासप्रभृतिस्थायिभावेऽपि व्यवहारश्चर्वणाया इति शेषः। एतेन रत्यादितज्ज्ञानयोस्तादात्म्यमङ्गीकृतमिति बोध्यम्, आस्वादनापरपर्य्यायचर्वणाया ज्ञानरूपत्वात्।

(ह) ननु तथापि रसस्य स्वोक्तमानन्दमयत्वं चिन्मयत्वं चमत्कारप्राणत्वञ्च कथं सिध्यतीत्याह सुखादीति। आदिपदेन चिच्चमत्कारयोर्ग्रहणम्। सुखादीनां तादात्म्याङ्गीकारे त्वयापि रसस्याभेदस्वीकारे। इयन्तु तत्कालीनमन्यमालङ्कारिकं प्रति एतत्सन्दर्भवक्तुरुक्तिरिति बोध्यम्। आस्माकीम् अस्मत्सम्बन्धिनीम्, सिद्धान्तः "रसः सुखमयश्चिन्मयश्चमत्कारमयश्च" इति निर्णय एव शय्या निरुद्वेगस्थानत्वादिति भावः, तामधिशय्य आश्रित्य दिव्यं स्वर्गीयं "मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः" इत्येतत्क्रमेण दैवपरिमाणेन परिमितमित्यर्थः, वर्षसहस्रं यावत् प्रमोद आनन्द एव वादप्रतिवादयोरसम्भवताजनकतया निद्रा तामुपेयाः-प्राप्नुयाः। रसे सुखादितादात्म्याङ्गीकारस्य नितान्तनिर्द्दोषतया विरोधिभिर्दोषोद्भावनद्वारा व्यस्तीकरणासम्भवादिति भावः। इति च उक्तमिति पूर्वेणान्वयः। न चैतेन प्राचीनानामपि रसे सुखादितादात्म्याङ्गीकारमात्रमेवायातं न तु विजातीयानां सुखचिच्चमत्काराणां रसतादात्म्याङ्गीकारे हेतुरप्यवगत इति वाच्यम्, "ब्रह्मास्वादसहोदरः" इत्यनेनैव रसस्य ब्रह्मज्ञानतुल्यत्वाभिधानात् ब्रह्मज्ञानस्य च सुख-

---

(१) रत्यादिभावेऽपि इति क्वचित् पाठः। (२) इति भाव [illegible] पाठः।

CC-0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

इति च (ङ)। "अभिन्नोऽपि स प्रमात्रा वासनोपनीतरत्यादितादात्म्येन गोचरीकृतः" इति च (च)। ज्ञानस्य स्वप्रकाशत्वमनङ्गीकुर्वतामुपरि वेदान्तिभिरेव निपातनीयो दण्डः (क)। तादात्म्यादेवास्य अखण्डत्वम्। रत्यादयो हि प्रथममेकैकशः प्रतीयमानाः सर्वेऽप्येकीभूताः स्फुरन्त एव रसतामापद्यन्ते (ख)। तदुक्तम्—

"विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः ।
प्रतीयमानाः प्रथमं खण्डशो यान्त्यखण्डताम् ॥" (ग)

---

चिच्चमत्कारमयत्वात्। तथा च श्रुतिः—"सत्यं ज्ञानमानन्दं ब्रह्म" इति। "आश्चर्यवत् पश्यति कश्चिदेनम्" इति च।

(च) उक्तसिद्धान्तस्य दृढीकरणाय सभ्यानुभवसिद्धरत्यादितादात्म्यज्ञापकं प्राचीनप्रवादान्तरमाह अभिन्न इति। अभिन्नोऽपि आस्वादनस्वरूपोऽपि, स रसः, प्रमात्रा स्वविषयकप्रमाज्ञानयोग्येन सभ्यजनेन, वासनया संस्कारेण उपनीतः काव्यश्रवणादिवेलायामुपस्थापितो यो रत्यादिस्तस्य तादात्म्येन अभेदेन गोचरीकृतः स्वज्ञानविषयीकृतः। अत्र तादृशः सभ्य एव प्रमाणमिति भावः। इति चोक्तमिति सम्बन्धः।

(क) ननु "अहं घटज्ञानवानिति जानामि" इत्यत्र परज्ञानेन पूर्वज्ञानस्येव यस्य कस्यचित् ज्ञानस्यैव ज्ञानान्तरप्रकाश्यत्वात् कथं रसज्ञानस्य स्वप्रकाशत्वमुच्यते इत्याह ज्ञानस्येति। अनङ्गीकुर्वतां नैयायिकानामित्यर्थः। ते हि उक्तरीत्या सर्वमेव ज्ञानं ज्ञानान्तरप्रकाश्यमङ्गीकुर्वन्ति। तथा च अनुव्यवसायवादचिन्तामणौ गङ्गेशोपाध्यायाः—"व्यवसायस्यार्थमात्रविषयत्वमनुभूयते न तु स्वविषयत्वमपि गौरवेण तस्य स्वविषयभानतया प्रत्यक्षहेतुत्वात्॥" तत्रैव च—"विवादाध्यासितमिन्द्रियजन्यं ज्ञानं नैतज्ज्ञानविषयताश्रय एतज्जनकेन्द्रियसन्निकर्षानाश्रयत्वात्" इति। उपरि सिद्धान्ते। वेदान्तिभिर्ब्रह्ममीमांसाभिज्ञैर्वाचस्पतिमिश्रादिभिः। दण्डः अपराधिप्रसक्तदण्डस्वरूपो दोषः। तथा च उक्तस्थले पूर्वज्ञानस्य परज्ञानेन, तस्य परज्ञानस्यापि तत्परज्ञानेन—इत्थं परपरज्ञानेन पूर्वपूर्वज्ञानस्य प्रकाश्यत्वाङ्गीकारे अनवस्थादोषप्रसङ्गः। अतएव सर्वेषामेव ज्ञानानां स्वप्रकाशत्वमेवाङ्गीकर्त्तव्यमिति युक्तियुक्तमेव वेदान्तसिद्धान्तमाहृत्य अस्माभिरपि रसात्मकज्ञानस्य स्वप्रकाशत्वमेवाङ्गीक्रियत इत्याशयः। तथा च शारीरकशाङ्करभाष्यभामत्यामध्यासप्रकरणे वाचस्पतिमिश्राः—"एवमुत्तरोत्तराण्यपि ज्ञानानि जडानीत्यनवस्था। तस्मादपराधीनप्रकाशा संविदुपेतव्या" इति संक्षेपः।

(ख) अथ तथापि विभावादिविषयभेदेन भेदात् रसस्य खण्डखण्डत्वप्रसक्तौ कथमखण्डत्वं सिध्यतीत्याह तादात्म्यादिति। समूहालम्बनज्ञानरूपत्वेनाभेदादेव, अस्य रसस्य, अखण्डत्वमेकरूपत्वं सिध्यतीति शेषः। अत्र हेतुमाह रत्यादय इति। आदिशब्देन हासादिस्थायिभावान्तराणां विभावानुभावव्यभिचारिभावानाञ्च ग्रहणम्। हि यस्मात्। प्रथमं काव्यश्रवणादिप्रारम्भे। एकीभूताः समूहत्वेनैकालम्बनीभूताः, स्फुरन्त एव चिन्मयत्वं प्राप्नुवन्त एव। न पुनः प्रत्येकतः स्फुरन्त इत्येवकारार्थः। रसतामापद्यन्त इति। अत्र सहृदयानां प्रतीतिरेव साक्षिणीति भावः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"परमार्थतस्त्वखण्ड एवायं वेदान्तप्रसिद्ध-ब्रह्मतत्त्ववद्वेदितव्यः" इति च (घ)।

अथ के ते विभावानुभावव्यभिचारिण इत्यपेक्षायां विभावमाह—(ङ)

३२। रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः। (च)

ये हि लोके रामादिगतरतिहासादीनामुद्बोधकारणानि सीतादयस्त एव काव्ये नाट्ये च निवेशिताः सन्तः "विभाव्यन्ते आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते सामाजिकरत्यादिभावा एभिः" इति विभावा उच्यन्ते। तदुक्तं भर्तृहरिणा—(छ)

"शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान्।
प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते॥" इति (ज)।

---

(ग) विभावा इति। विभावा अनुभावाः सात्त्विका व्यभिचारिणश्च भावाः, प्रथमं काव्यश्रवणादि-प्रारम्भे खण्डशो भिन्नभिन्नत्वेन प्रतीयमानाः सन्तः अखण्डतां व्यञ्जनाजन्यैकज्ञानविषयत्वेन एकरूपत्वं यान्ति प्राप्नुवन्ति। सात्त्विकभावानामनुभावान्तर्गतत्वेऽपि गोबलीवर्दन्यायान्भेदमङ्गीकृत्य सात्त्विका इति पृथगुक्तम्।

(घ) उक्तार्थे प्राचीनसंवादान्तरमाह परमेति। अयं रसः। वेदान्तप्रसिद्धौ ब्रह्मपदार्थौ यथा व्यवहारदशायां गोमानुषाद्युपाधिभेदेन खण्डत्वप्रतीतावपि वस्तुतः अखण्ड एव, तथा काव्यश्रवणाद्यारम्भ-काले विभावादिभेदेन खण्डत्वप्रतीतावपि क्रमशो व्यञ्जनाजन्यैकज्ञानकाले रसोऽपि वस्तुतः अखण्ड एवेत्यर्थः। एतेन रसस्य वेद्यान्तरस्पर्शशून्यत्वं ब्रह्मास्वादतुल्यत्वम् अलौकिकत्वञ्च प्रतिपादितमिति भाव्यम्।

(ङ) अथ सोपपत्तिकं रसस्वरूपं निरूप्य इदानीं प्रसङ्गसङ्गत्या रसलक्षणघटकविभावादिपदार्थान् क्रमशो निरूपयितुमाह अथेति। अथ सोपपत्तिकरसनिरूपणानन्तरम्। अपेक्षायामाकाङ्क्षायाम्।

(च) रत्यादीति। लोके लोकसमाजे ये रत्यादीनां रति-हास-शोक-क्रोधोत्साह-भय-जुगुप्सा-विस्मय-शम-स्नेहानां स्थायिभावानामुद्बोधका आविर्भावकाः, त एव काव्यनाट्ययोर्निवेशिताः सन्तः विभावा विभावसंज्ञा उच्यन्ते। नाट्यं नटप्रयोज्यं नाटकादि। अत्र काव्यपदेनैव नाट्यलाभेऽपि पुनर्नाट्यपदोपादानं काव्येषु तेषां प्राधान्यसूचनार्थं गोवृषन्यायात्।

(छ) विवृणोति ये हीति। सामाजिकरत्यादिभावाः काव्यश्रवणादिवेलायां स्वस्वविषयकज्ञान-सम्बन्धेन सामाजिकवृत्तयो रत्यादयः स्थायिभावाः, आस्वादाङ्कुरप्रादुर्भावयोग्याः अङ्कुरतुल्यसूक्ष्मभावेन रस-स्योत्पत्तौ सम्भवपराः। इनन्त-भूधातोरुत्पादनार्थत्वात् क्रियन्त इति प्रतिशब्दः। काव्ये नाट्ये वेति शेषः। एभिरिति करणे तृतीया। तथा च विभाव इति इनन्त-भूधातोः "अकर्त्तरि च कारके संज्ञायाम्" इति करणे घञ्प्रत्यय इति सूचितम्। विभावसंज्ञावतां काव्यनाट्यनिवेशितपात्राणां रत्याद्युद्बोधकत्वे प्राचां संवाद-माह तदुक्तमिति।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तद्भेदावाह—(झ)

३३ । आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ ॥ (ञ)

स्पष्टम् (ट)। तत्र—(ठ)

३४ । आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात् । (ड)

आदिशब्दान्नायिकाप्रतिनायकादयः। अत्र यो यस्य रसस्य विभावः स तत्स्वरूपवर्णने वक्ष्यते ।

तत्र नायकः ।

३५ । त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।

दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता ॥ (ढ)

दक्षः क्षिप्रकारी। शीलं सद्वृत्तम्। एवमादिगुणसम्पन्नो नेता नायको भवति (ण)।

---

(ज) शब्दैरिति। शब्दैः काव्यान्तर्गतपदैः उपहितानि उपस्थापितानि रूपाणि स्वभावा येषां तान्, अतएव बुद्धेः शाब्दबोधस्य विषयतां गतानपि तान् कंसादीन् प्रत्यक्षानिव साधनत्वेन वीररसोद्बोधकत्वेन मन्यते सभ्यजन इति शेषः ।

(झ) तदिति। तस्य विभावस्य भेदौ प्रकारद्वयम्। एवमन्यत्रापि बोध्यम् ।

(ञ) आलम्बनेति। तस्य विभावस्य। उभौ द्वौ ।

(ट) स्पष्टमिति। एतत् कारिकार्द्धं स्पष्टं सुबोधम्। अतएव न व्याख्यायत इति भावः। इत्थमपरत्रापि ज्ञेयम् ।

(ठ) तत्रेति। तयोरालम्बनोद्दीपनयोर्मध्ये इत्यर्थः। अन्यत्रापीत्थमनुसन्धेयम् ।

(ड) आलम्बनमिति। तं नायकादिम् आलम्ब्य आश्रित्य रसस्य उद्गमात् सभ्यचित्ते आविर्भावात्। एतेन रसप्रकृतिभूतरत्याद्याश्रयत्वमालम्बनविभावत्वमिति लक्षणं सूचितम् ।

(ढ) त्यागीति। त्यागी दानशीलः, कृती कर्मकुशलः, कुलीनः सत्कुलोत्पन्नः, सुश्रीको बुद्धिमान्, "लक्ष्मी-सरस्वती-धी-त्रिवर्गसम्पद्विभूति-शोभासु। उपकरणवेशरचनाविधासु च श्रीरिति प्रथिता॥" इति तिथितत्त्वधृतव्याडिवचनात्। अन्यथा सौन्दर्य्यवानित्यर्थकत्वे रूपशब्देन पौनरुक्त्यम्। धनसमृद्धिमानित्यर्थकत्वे च मृच्छकटिकादौ दरिद्रचारुदत्तादीनां नायकत्वं न स्यात्। रूपं सौन्दर्य्यं यौवनम् अपरिणतवयस्कत्वम् उत्साह उद्यमश्च ते अस्य सन्तीति सः। दक्षः अनलसः, अनुरक्ता लोका यस्मिन् सः। तेजो वक्ष्यमाण-लक्षणं परकृतनिन्दाद्यसहिष्णुत्वम्, वैदग्ध्यम् अभिज्ञता शीलं सच्चरित्रं तानि अस्य सन्तीति सः। नेता नायकः ।

(ण) कृतिदक्षशब्दयोः पर्य्यायतया पौनरुक्त्यमाशङ्क्य व्याचष्टे दक्ष इति। क्षिप्रकारी शीघ्रमेव

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तद्भेदानाह—

३६ । धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च ।
धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः ॥ (त)

स्पष्टम् । तत्र (१) धीरोदात्तः (थ) ।

३७ । अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान् निगूढ़मानो धीरोदात्तो दृढ़व्रतः कथितः ॥ (द)

अविकत्थनोऽनात्मश्लाघाकरः । महासत्त्वो हर्षशोकाद्यनभिभूतस्वभावः । निगूढ़मानो विनयच्छन्नगर्वः । दृढ़व्रतोऽङ्गीकृतनिर्वाहकः । यथा—रामयुधिष्ठिरादिः ।

अथ धीरोद्धतः ।

३८ । मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः ।
आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः ॥ (ध)

---

कार्य्यसम्पादकः अनलस इत्यर्थः । शीलशब्दस्य स्वभावार्थकतानिरासायाह शीलमिति । सद्वृत्तं सच्चरित्रम् । एवमादीत्यादिशब्देन धार्म्मिकतादिपरिग्रहः ।

(त) धीरोदात्त इति । धीरः सन्नुदात्तः सर्वथैवोन्नतस्वभावो धीरोदात्तः । धीरः सन्नुद्धतः अविनीतस्वभावो धीरोद्धतः । धीरः सन् ललितः कोमलस्वभावो धीरललितः । धीरः सन् प्रशान्तो विनीतस्वभावो धीरप्रशान्तः । इति इत्थं प्रथमः प्रधानः अयं चतुश्चतुर्विधः भेदो विभाग उक्तः । अत्र धीरोदात्तादिशब्दानां योगरूढ़त्वात् सर्वत्र धीरपदप्रयोगेण वैचित्र्यहानावपि न दोषः ।

(थ) अथ धीरोदात्तादीनामुक्तान्वर्थानुसारेण यथाकथञ्चित् प्राप्तलक्षणत्वेऽपि विशेषतो निरूपयितुमाह तत्रेति । तेषु चतुर्विधेषु नायकेषु मध्ये धीरोदात्तो निरूप्यत इति शेषः । एवमन्यत्रापि ज्ञेयम् ।

(द) अवीति । अविकत्थन आत्मप्रशंसाकरणहीनः, क्षमावान् क्षमागुणशाली अपकारिणः प्रत्यपकारसामर्थ्ये सत्यपि तद्दवैमुख्यं क्षमा । अतिगम्भीरः अन्यैर्दुर्बोधाभिप्रायः, महासत्त्वो हर्षशोकादिभिरनुद्वेलितचित्तः, स्थेयान् अस्थिरताकारणे सत्यपि कर्त्तव्येषु नितान्तस्थिरप्रकृतिः, निगूढ़मानः सत्यपि गर्वे विनयेन तत्तिरोधायकः, दृढ़व्रतः सत्यप्रतिज्ञो नायकः धीरोदात्तः कथितः ।

(ध) मायेति । मायापरः परप्रतारणासक्तः, प्रचण्ड उग्रस्वभावः, चपलः अस्थिरप्रकृतिः, अहङ्कारदर्पौ भूयिष्ठौ बहुलौ यस्य सः, आत्मश्लाघानिरतः निजप्रशंसाकरणासक्तः । ननु भीमसेनस्य परप्रतारणाया

---

(१) अत्र इति क्वचित् पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा भीमसेनादिः ।

अथ धीरललितः ।

३९ । निश्चिन्तो मृदुरनिशं

कलापरो धीरललितः स्यात् । (न)

कला नृत्यादिका । यथा—रत्नावल्यादौ वत्सराजादिः ।

अथ धीरप्रशान्तः ।

४० । सामान्यगुणैर्भूयान्

द्विजादिको धीरप्रशान्तः स्यात् ॥ (प)

यथा—मालतीमाधवादौ माधवादिः ।

एषाञ्च शृङ्गारिरूपत्वे भेदानाह—(फ)

४१ । एभिर्दक्षिणधृष्टानुकूलशठरूपिभिस्तु षोड़शधा । (ब)

तत्र तेषां धीरोदात्तादीनां प्रत्येकं दक्षिणधृष्टानुकूलशठत्वेन षोड़शप्रकारो नायकः (भ) ।

---

प्रदर्शनात् कथं धीरोद्धतत्वम्? कथं वा आत्मगोपनरूपप्रतारणया वालिवधात् रामस्य, "अश्वत्थामा हत इति गजः" इति वाक्प्रतारणया द्रोणवधाच्च युधिष्ठिरस्य न धीरोद्धतत्वम्? सत्यमेव स्वाभाविकाहङ्कारदर्पभूयिष्ठत्वमेव धीरोद्धतलक्षणम्, तदितरोपादानन्तु सम्भवतामात्रप्रदर्शनार्थम्। अतो नोक्तदोषद्वयम्। मुद्राराक्षसादौ च मलयकेतुप्रभृतीनां तादृशाहङ्कारदर्पभूयिष्ठत्वाद्धीरोद्धतत्वेन प्रतिनायकत्वमपि सिद्धमिति सुधीभिर्विभावनीयम्।

(न) निश्चिन्त इति। निश्चिन्तो मन्त्रिप्रभृतिषु विन्यस्तभारत्वात् निरुद्वेगचित्तः, मृदुः कोमलस्वभावः, अनिशं कलापरः सर्वदा नृत्यगीतादिपरायणः।

(प) सामान्येति। सामान्यगुणैस्त्यागित्वादिभिर्नायकसाधारणगुणैः भूयान् परिपूर्ण इत्यर्थः, द्विजादिको ब्राह्मणप्रभृतिर्नायको धीरप्रशान्तः स्यात्। तथा च "धीरोदात्तादित्रितयभिन्नो नायको धीरप्रशान्त इत्यभिप्रायः" इति सुष्ठूक्तमेव तर्कवागीशेन।

(फ) धीरोदात्तादीनां चतुर्विधानामेव नायकानां शृङ्गाररसविषये प्रत्येकत एव पुनश्चतुर्विधत्वं निरूपयितुमाह एषामिति। भेदान् अवान्तरप्रकारान्।

(ब) एभिरिति। एभिर्धीरोदात्तादिभिः प्रत्येकमेव दक्षिणधृष्टानुकूलशठरूपिभिः सद्भिः समुदायेन षोड़शधा षोड़शप्रकाराः प्राप्यन्त इति शेषः। अन्यान्यरसेषु तु चतुर्द्धैवेत्याशयः।

(भ) तत्रेति। तत्र शृङ्गारिरूपत्वे।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

४२ । एषु त्वनेकमहिलासु

समरागो दक्षिणः कथितः ॥ (म)

द्वयोस्त्रिचतुःप्रभृतिषु नायिकासु तुल्यानुरागो दक्षिणनायकः (य) । यथा—

"स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसुः
द्यूतै रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च ।
इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते
देवेनाप्रतिपत्तिमूढ़मनसा द्वित्राः स्थितं नाड़िकाः ॥" (र)

४३ । कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः ।

दृष्टदोषोऽपि मिथ्यावाक् कथितो धृष्टनायकः ॥ (ल)

(म) दक्षिणनायकं लक्षयति एष्विति । एषु तु दक्षिणादिचतुर्षु मध्ये अनेकमहिलासु भोग्यत्व-परिणीतत्वनिर्विशेषासु अनेकस्त्रीषु समः समानो रागः अनुरागो यस्य स तादृशो नायको दक्षिणः कथितः ।

(य) द्वयोरिति । द्वयोर्नायिकयोः त्रिचतुःप्रभृतिषु वा नायिकासु । अनेकशब्दस्य एकाधिकबोधकत्वा-दिति भावः ।

(र) स्नातेति । सखीं प्रति राज्ञो दाक्षिण्यं विवक्षन्त्याः कस्याश्चित् प्रतिहार्य्या उक्तिरियम् । अद्य कुन्तलेश्वरसुता कुन्तलदेशीयराजतनया तद्रूपैका भार्य्या, स्नाता ऋतुस्नाता तिष्ठति भवत्सङ्गमलाभाय वर्त्तते । अतस्तस्यां गमनमद्य वैधमेव "ऋतौ भार्य्यामुपेयात्" इति नियमविधेरिति भावः । अङ्गराजस्वसुः अङ्गदेशीय-राजभगिन्याः तद्रूपैकभार्य्यायाः, अद्य वारः नियमक्रमेण भवतः प्राप्तिदिनम् । अतस्तत्रापि गमनमुचित-मित्याशयः । कमलया तदाख्यया कयापि भार्य्यया, इयं रात्रिः द्यूतैर्जिता भवता सममक्षक्रीड़ायामिमां रात्रिमात्मप्राप्यत्वेन पणीकृत्य तज्जयेनेयमात्मनीना कृतेत्यर्थः । अतः सापि गमनार्हेति भावः । तथा अद्य देवी महिषी प्रसाद्या केनापि कारणेन कृतमानत्वादनुनेया । इति इत्थं विज्ञाय अन्तःपुरस्य सुन्दरीः प्रति रमणीगणमभिलक्ष्य मया विज्ञापिते तत्तद्वृत्तान्तविज्ञापने कृते सति देवेन राज्ञा अप्रतिपत्त्या कर्त्तव्यनिर्णया-भावेन मूढ़म् आकुलं मनो यस्य तादृशेन सता, द्वे वा त्रीणि वा परिमाणान्येषामिति द्वित्राः नाड़िका दण्डान् स्थितं कर्त्तव्यनिर्णयाय तूष्णीं वृत्तम् ।

अत्र चतसृष्वेव नायिकासु समानानुरागत्वेनैव कर्त्तव्यमूढ़त्वात् राज्ञो दक्षिणनायकत्वम् ।

(ल) कृतागा इति । कृतागा अपि केनापि कार्य्येण प्रियतमानिकटे कृतापराधोऽपि सन् निःशङ्कः । धृष्टनायकस्यैदमेकं लक्षणम् । तर्जितोऽपि प्रियतमया तर्जनादिना अपमानितोऽपि सन् न लज्जितः । इदं द्वितीयं लक्षणम् । तथा प्रियतमया दृष्टो दोषोऽन्यासक्तिप्रभृतिर्यस्य स तादृशः सन्नपि मिथ्यावाक् 'नाहमत्रासक्तः' इति मिथ्यावादी । इदं तृतीयं लक्षणम् । इति त्रिविधो धृष्टनायकः कथित इत्यर्थः । तथापि धृष्टत्व-रूपेणैकविध एवेति बोध्यम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा मम ।

"शोणं वीक्ष्य मुखं विचुम्बितुमहं यातः समीपं ततः
पादेन प्रहृतं तया सपदि तं धृत्वा सहासे मयि ।
किञ्चित्तत्र विधातुमक्षमतया वाष्पं त्यजन्त्याः (१) सखे !
ध्यातश्चेतसि कौतुकं वितनुते कोपोऽपि वामभ्रुवः ॥" (व)

४४ । अनुकूल एकनिरतः—(श)

एकस्यामेव नायिकायामासक्तोऽनुकूलनायकः । यथा—

"अस्माकं सखि ! वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं
नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः ।
किन्त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो नान्यतो
दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम् ॥" (ष)

---

(व) तत्राद्ययोरुदाहरणमाह शोणमिति । स्थानान्तरे सख्युः समीपे कस्याप्युक्तिरेषा । हे सखे ! अहं प्रियाया मुखं शोणं ममापराधेनैव रक्तवर्णं वीक्ष्य तदेव विचुम्बितुं तस्याः समीपं यातो गतः । ततः परं तया प्रियया पादेन प्रहृतं मदङ्गमिति शेषः । मयि तु सपदि तत्क्षणात् तं पादं धृत्वा सहासे हास्यं कुर्वति सति, तत्र तदानीं किञ्चिदपि विधातुं कर्त्तुम् अक्षमतया हेतुना, वाष्पम् अश्रुजलं त्यजन्त्याः वामभ्रुवः सुन्दर्य्यास्तस्याः कोपोऽपि चेतसि ध्यातः स्मृतः सन् कौतुकं वितनुते वर्द्धयति ।

अत्र निजापराधेनैव रक्तवर्णीभूतं मुखम्, तदेव च चुम्बितुं तदन्तिकगमनात् निःशङ्कत्वेनास्मिन् नायके प्रथमलक्षणसङ्गतिः । तथा पादप्रहारेणापमाने सत्यपि तत्कारणेन लज्जाया अभावात् द्वितीयलक्षणमपि सङ्गच्छते । तृतीयलक्षणस्योदाहरणं यथा मालविकाग्निमित्रे—

"अलमन्यथा गृहीत्वा न खलु मनस्विनि ! मया प्रयुक्तमिदम् ।
प्रायः समानविद्याः परस्परयशःपुरोभागाः ॥"

अत्र स्वभावतो दक्षिणस्याप्यग्निमित्रस्य तदानीं मालविकायामासक्तिरूपे दोषे महिष्या दृष्टेऽपि दृष्टश-मिथ्यावचनात्तदवसरे धृष्टनायकत्वम् ।

(श) अन्विति । अस्यार्थो वृत्तावेव स्पष्टीकृतः ।

(ष) अस्माकमिति । आत्मनः पतिप्रियत्वं प्रकटयितुं कस्या अपि सखीं प्रतीयमुक्तिः । हे सखि ! अस्माकं "वास्मदर्य्येति" वहुवचनात् ममेत्यर्थः वाससी परिधेयमुत्तरीयञ्च वसनद्वयं न रुचिरे न सुन्दरे, ग्रैवेयकं कण्ठाभरणं न उज्ज्वलं न द्युतिमत्, गतिर्गमनं नो वक्रा न हावभावव्यञ्जिका कुटिला, हसितं हास्यं न उद्धतं प्रियतमहृदयाकर्षणक्षममतिरिक्तम्, तथा कश्चिन्मदोऽपि यौवनाद्यहङ्कारजनितश्चित्तविकारोऽपि

---

(१) सृजन्त्या इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

४५। शठोऽयमेकत्र बद्धभावो यः।
दर्शितबहिरनुरागो विप्रियमन्यत्र गूढ़माचरति ॥ (स)

यः पुनरेकस्यामेव नायिकायां बद्धभावो द्वयोरपि नायिकयोर्बहिर्दर्शितानुरागोऽन्यस्यां नायिकायां गूढ़ं विप्रियमाचरति स शठनायकः (ह)। यथा—

"शठाऽन्यस्याः (१) काञ्चीमणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः।
तदेतत् क्वाचक्षे घृतमधुमयत्वद्बहुवचो
विषेणाघूर्णन्ती किमपि न सखी मे गणयति ॥" (च)

---

नैवास्ति। किन्तु तथापि अन्ये जनाः अन्यान्ययुवतिजनाः अस्या ममेत्यर्थः प्रियः पतिः सुभगोऽपि सुन्दरोऽपि सुन्दरत्वेनान्यरमणीनां प्रियः सन्नपीत्यर्थः अन्यतः अन्यस्यां रमण्यां दृष्टिं न निक्षिपति केवलायां मय्येव निरतत्वान्न ददातीति वदन्ति। इयता अनेन प्रवादेन विश्वं विश्वभूमण्डलस्थं रमणीगणमित्यर्थः दुःखितं दुःखेन स्थितं मन्यामहे, मत्प्रियेणानवलोकनादिति भावः।

अस्य नायकस्य अस्यामेकस्यामेव वक्तृनायिकायां निरतत्वादनुकूलनायकत्वम्।

(स) शठ इति। अस्याप्यर्थो वृत्तावेव विवृतः।

(ह) य इति। यो नायकः। पुनःशब्दस्त्वर्थे। बद्धभावः परमार्थतो धृतानुरागः। यस्यां नायिकायां बद्धभावस्तामादाय द्वयोरिति बोध्यम्। बहिः सुरतभिन्नविषये दर्शितानुरागः प्रियवाक्यादिनेत्यर्थः। अन्यस्यां यस्यां बद्धभावस्तद्भिन्नायाम्, गूढ़ं गुप्तम्, विप्रियमप्रियम्।

(च) शठेति। कश्चिन्नायकं प्रति दूत्या उक्तिरियम्। हे शठ! धूर्त्त! त्वम् आश्लिष्यन्नेव मम सखीमालिङ्गन्नेव, अन्यस्याः आगच्छन्त्या अपरस्या नायिकायाः काञ्चीमणिरणितं रशनादामस्वरत्न-शब्दम् आकर्ण्य, सहसा यत् प्रशिथिलः श्लथीभूतो भुजग्रन्थिः आलिङ्गनकालीनबाहुवेष्टनं यस्य स तथोक्तः अभवः भूतवानसि। तदेतत् तव आचरणं क्व कस्मिन् जने आचक्षे ब्रवीमि, तादृशजनालाभात् कुत्रापि न आख्यातुमर्हामीति भावः। घृतमधुमयं परस्परमिश्रितघृतमधुतुल्यं तव यत् बहु नानाप्रकारं वचस्तदेव विषं परस्परमिश्रितयोर्घृतमधुनोर्विषतुल्यापकारजननादिति भावः। तेन आघूर्णन्ती विमुह्यन्ती मे मम सखी किमपि तव तत्त्वं न गणयति नावधारयितुं शक्नोतीत्यर्थः। अन्यथा तवेदृग्बहिरादरग्रहणाद्-विरमेदिति भावः।

अत्र आगच्छन्त्यां नायिकायां वास्तविकबद्धभावतया केवलालिङ्गनरूपबहिरनुरागप्रदर्शनेन अन्यस्यां नायिकायां गूढ़विप्रियाचरणादस्य नायकस्य शठनायकत्वम्।

---

(१) शठः इति क्वचित् प्रथमान्तः पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

४६ । एषाञ्च त्रैविध्यात् सर्वेषामुत्तमाधममध्यमत्वेन ।
उक्ता नायकभेदाश्चत्वारिंशत्तथाष्टौ च ॥ (क)

सर्वेषामुक्तषोड़शभेदानाम् (ख) ।

अथ प्रसङ्गादेतेषां सहायानाह—(ग)

४७ । दूरानुवर्त्तिनि स्यात् तस्य प्रासङ्गिकेतिवृत्ते तु ।
किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्द्दाख्यः ॥ (घ)

तस्य नायकस्य बहुव्यापिनि प्रसङ्गसङ्गते इतिवृत्ते अनन्तरोक्तैर्नायकसामान्यगुणैः किञ्चिदूनः पीठमर्द्दनामा सहायो भवति । यथा—रामचन्द्रादीनां सुग्रीवादयः (ङ) ।

अथ शृङ्गारसहायाः (च) ।

---

(क) एषामिति । किञ्चेति चार्थः । एषां सर्वेषां शृङ्गारिनायकानां प्रत्येकत एव उत्तमाधममध्यमत्वेन त्रैविध्यात् त्रिप्रकारत्वात् नायकभेदाः चत्वारिंशत् तथा अष्टौ च अष्टचत्वारिंशत्प्रकारा इत्यर्थः उक्ताः ।

(ख) सर्वेषामिति । धीरोदात्तादीनां चतुर्णां प्रत्येकत एव शृङ्गाररसे दक्षिणधृष्टानुकूलशठरूपत्वेन चतुर्विधत्वात् समुदायेन ये षोड़शभेदा उक्तास्तेषामित्यर्थः । एतेन शृङ्गारभिन्नरसेषु धीरोदात्तादिचतुर्विधा एव नायका इति बोध्यम् ।

(ग) अथेति । अथ नायकनिरूपणानन्तरम् । प्रसङ्गात् नायकसम्बन्धे किमपरं ज्ञातव्यमस्तीत्याकाङ्क्षोदयेन प्रसङ्गसङ्गतेः । अतएवात्र प्रकरणे नायकसहायनिरूपणं नासङ्गतमित्याशयः । एतेषां नायकानाम् ।

(घ) दूरेति । तस्य नायकस्य दूरानुवर्त्तिनि दूरपर्य्यन्तस्थायिनि अत्यन्तविस्तृते इत्यर्थः । प्रासङ्गिकेतिवृत्ते प्रसङ्गवशादुत्थापिते चरित्रे किञ्चित् तस्य नायकस्य गुणैस्त्यागित्वादिभिर्हीनो न्यून एव प्रायेण तत्तुल्यगुणवानेव, न तु नितान्तनिकृष्ट इत्यर्थः, पीठं समानस्थानं मर्द्दयति अवस्थानेन पीड़यतीति व्युत्पत्त्या पीठमर्द्दसदाख्यः अस्य नायकस्य सहायः स्यात् शृङ्गारेतररसेष्विति शेषः । तुशब्दः पादपूरणे । अत्र अस्य नायकस्येति पुंस्त्वमविवक्षितम् । तेन स्त्रीणामपि पीठमर्द्दाख्यसहायः स्यादेवेति ज्ञेयम् । अतएव मालविकाग्निमित्रे धारिणीदेव्याः शान्तरसादौ पीठमर्द्दिका कौशिकी निबद्धा ।

(ङ) तस्येति । बहुव्यापिनि अत्यन्तविस्तृते, प्रसङ्गसङ्गते प्रसङ्गक्रमेण प्राप्ते । अनन्तरोक्तैः पूर्वोक्तैः नायकसामान्यगुणैस्त्यागित्वकृतित्वादिभिः । सुग्रीवादयः पीठमर्द्दाः । सीतोद्धारादिविस्तृतचरित्रे साहाय्यकरणादित्याशयः ।

(च) अथेति । रसान्तरेषु नायकसहायकथनानन्तरमित्यर्थः । शृङ्गारे रसे सहाया नायकस्येत्यर्थः । उच्यन्त इति शेषः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

४८। शृङ्गारेऽस्य (१) सहाया विटचेटविदूषकाद्याः।
भक्ता नर्म्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः॥ (छ)

आदिशब्दान्मालाकार-रजक-ताम्बूलिक-गान्धिकादयः (ज)।

तत्र विटः (झ)।

४९। सम्भोगहीनसम्पद्विटस्तु धूर्त्तः कलैकदेशज्ञः।
वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्॥ (ञ)

चेटः प्रसिद्ध एव (ट)।

---

(छ) शृङ्गार इति। भक्ता नायकं प्रत्यनुरक्ताः, नर्म्मसु परिहासादिषु निपुणाः, कुपितवधूनां मानिनीनां नायिकानां मानभञ्जना मानापनोदनसमर्थाः शुद्धा नायककार्य्यं प्रति औदासीन्यादिदोषरहिताः, विट-चेट-विदूषकाद्याः शृङ्गारे रसे अस्य नायकस्य सहायाः स्युः। अत्रापि अस्येति पुंस्त्वमविवक्षितम्। तेन स्त्रीणामपि यथासम्भवं विटादयः सहायाः स्युरिति वेदितव्यम्। अतएव मृच्छकटिके वसन्तसेनाया अपि विटः सहायी दृश्यते। तेन च विटः सहायी मृच्छकटिके, चेटः सहायी मालतीमाधवादौ कलहंसादिः, विदूषकः सहायः शाकुन्तलादौ।

(ज) आदीति। यद्यपि मूले आद्यशब्द एव प्रयुक्तस्तथापि तस्य प्रकृतित्वात् आदिशब्दादिति वृत्तावुक्तम्। ताम्बूलविक्रयी ताम्बूलिकः, गन्धविक्रयी गान्धिकः। अत्राप्यादिशब्देन सुहृदादयो गृह्यन्ते, मालतीमाधवादौ मकरन्दादिना सुहृदा नायकस्य साहाय्यदर्शनात्।

(झ) तत्रेति। तत्र तेषु विटादिषु मध्ये विटो निरूप्यत इति शेषः।

(ञ) सम्भोगेति। शृङ्गारसहायगणनभेदबोधकस्तुशब्दः। सम्भोगेन प्रचुरतरव्ययं विधाय सम्यग् भोगेन हीना त्यक्ता विनाशिता सम्पत् धनसम्पत्तिर्येन सः। अतएवायं स्वजीविकार्थमेव सहायभावे-नापरमाश्रयति। धूर्त्तः कूटचरित्रो द्यूतासक्तो वा, कलानां नृत्यगीतादिकलाविद्यानाम् एकदेशज्ञः प्रायेण कियत्कियदंशाभिज्ञः, वेशे वेश्यालये ये उपचारा व्यवहारास्तेषु कुशलो निपुणः, वाग्मी वक्ता, मधुरो लोकप्रियः। अथ अथ च तथेत्यर्थः। गोष्ठ्यां सभायां बहुमतो लोकैः समादृतः विटः स्यात्। उदाहरणं मृच्छकटिके।

(ट) चेट इति। प्रसिद्ध एव भृत्यत्वेन सर्व्वजनविदित एव। अतएवास्य लक्षणकरणं नावश्यक-

---

(१) शृङ्गारस्येति पाठान्तरम्।



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**५० । कुसुमवसन्ताद्यभिधः कर्म्मवपुर्वेशभाषाद्यैः ।**

**हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्म्मज्ञः ॥ (ठ)**

स्वकर्म्म भोजनादि (ड) ।

अर्थचिन्तने सहायमाह—(१) (ढ)

**५१ । मन्त्री स्यादर्थानां चिन्तायाम्—(ण)**

अर्थास्तन्त्रावापादयः (२) (त) । यत्त्वत्र सहायकथनप्रस्तावे—"मन्त्री स्वञ्चोभयञ्चापि सखा तस्यार्थचिन्तने" इति केनचिल्लक्षणं कृतम्, तदपि राज्ञोऽर्थचिन्तनोपायप्रकरणे लक्षितव्यम्, न तु सहायकथनप्रकरणे नायकस्य

मिति भावः । तथा चामरः—"भृत्ये दासेर-दासेय-दास-गोप्यक-चेटकाः ।" उदाहरणं मालती-माधवादौ ।

(ठ) विदूषकं निरूपयति कुसुमेति । कुसुमवसन्तादिरभिधा नाम यस्य सः । यत्किञ्चित् पुष्प-वाचकशब्दनामा वसन्तकालवाचकशब्दनामा वेत्यर्थः । आदिशब्दादन्यविधनामापि । कर्म्मणा कार्य्येण वपुषा शरीरचेष्टया, वेशेन वसनभूषणविन्यासादिना, भाषाद्यैर्वाक्यप्रभृतिभिः, आद्यशब्दात् चिह्नविशेषादिभिः, हास्यकरः लोकानां हास्यजनकः, कलहरतिर्विवादप्रियः, तथा स्वकर्म्म निजकार्य्यं भोजनादिकं जानाति सर्वकर्म्मभ्यः प्रधानतया कर्त्तव्यत्वेन बुध्यत इति स्वकर्म्मज्ञः, नायकसहायो विदूषकः स्यात् ।

वसन्तकालवाचकशब्दनामा यथा—शाकुन्तले माधव्य इति । अन्यविधनामा यथा—मालविकाग्निमित्रे गौतम इति ।

(ड) अस्पष्टार्थत्वात् केवलं स्वकर्म्मशब्दं व्याचष्टे स्वकर्म्मेति । आदिशब्देन धनग्रहणादि-परिग्रहः ।

(ढ) अर्थेति । अर्थानां स्वपरराज्येषु कर्त्तव्यानां चिन्तने निरूपणे ।

(ण) मन्त्रीति । मन्त्री नायकस्य राज्ञः अर्थानां चिन्तायां सहायः स्यादित्यर्थः ।

(त) ननु कारिकायामर्थशब्दस्य कोऽर्थं इत्याह अर्था इति । निजराज्ये कर्त्तव्यं कर्म्म तन्त्रम्, परराज्ये कर्त्तव्यञ्च आवापः । आदिशब्दात् व्यवहारदर्शनादयो गृह्यन्ते ।

(थ) नायकसहायकथनप्रकरणे प्रकरणान्तरीयलक्षणकथनमभियुक्तानां दूषयितुमुत्थापयति यत्त्विति । तस्य राज्ञः अर्थचिन्तने कर्त्तव्यपर्य्यालोचने मन्त्री केवलो मन्त्री, स्वञ्च केवलः स्वयञ्च, उभयञ्चापि परस्परं मिलित्वा द्वयमपि, सखा सहाय इत्यर्थः । अर्थचिन्तनस्य कर्त्तव्यपर्य्यालोचनस्य ये उपायाः साधकास्तेषां प्रकरणे कथनप्रस्तावे, लक्षितव्यं तल्लक्षणं कर्त्तव्यम् । तथैव तस्य प्राकरणिकत्वासम्भवादिति भावः ।

(१) अर्थचिन्तनसहायमिति पाठान्तरम् ।

(२) मन्त्री स्यादर्थचिन्तायामर्थास्तन्त्रावपादयः इति मूलद्वयोः संयोगघटितं पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(थ)। "अर्थचिन्तने मन्त्री सहायः" इत्युक्तेऽपि नायकस्यार्थत एव सिद्धत्वात् (द)। यदप्युक्तम्—"मन्त्रिणा ललितः शेषा मन्त्रिस्वायत्तसिद्धयः" तदपि स्वलक्षणकथनेनैव (१) धीरललितस्य मन्त्रिमात्रायत्तार्थचिन्तनोपपत्तेर्गतार्थम् (ध)। न चार्थचिन्तने तस्य मन्त्री सहायः, किन्तु स्वयमेव निष्पादकः, तस्यार्थचिन्तनाद्यभावात् (न)।

अथान्तःपुरसहायाः (प)।

५२। तद्वदवरोधे (२)।

वामन-षण्ड-किरात-म्लेच्छाभीराः शकारकुब्जाद्याः ॥ (फ)

नायकस्य सहायकथनप्रकरणे तु न लक्षितव्यमित्यन्वयः। नायकस्यात्मानं प्रति आत्मनः सहायत्वासम्भवात् सहायत्वस्य भिन्नव्यक्तिनिष्ठत्वादित्याशयः।

(द) अथ सखिशब्दप्रतिपाद्यसहायत्वं केवलमन्त्रिण एव न पुनरात्मन इति चेत्तत्राह अर्थेति। इत्युक्तेऽपि उक्तकारिकाङ्गस्य इत्थमर्थकरणेऽपि। अर्थत एव सिद्धत्वात् तात्पर्य्यत एव लब्धत्वात्, "स्वस्योभयश्चापि" इत्यभिधानं व्यर्थं स्यादिति शेषः। तत्रायमाशयः—सहायत्वं हि सहभावेन स्वकार्य्यसाधकत्वम्, तच्च स्वयं कार्य्याकरणे न सम्भवति सहभावाभावात्। अतः "अर्थचिन्तने मन्त्री सहायः" इतिमात्रोक्तावपि आत्मनोऽपि अर्थचिन्तनप्राप्तत्वात् "स्वस्योभयश्चापि" इति व्यर्थमेव स्यादिति।

(ध) पुनस्तेषामेव फलितार्थान्तरकथनस्य निरर्थकतां प्रतिपादयितुमाह यदपीति। ललितो धीरललितरूपो नायकः मन्त्रिणा आयत्तसिद्धिरिति शेषः। धीरललितनायकस्य कार्य्यसिद्धिर्मन्त्रिमात्राधीनेत्यर्थः। शेषा अवशिष्टा धीरोदात्तादयो नायकाः, मन्त्रिणां स्वेषामात्मनाञ्च आयत्ता अधीना सिद्धिर्येषां ते तथोक्ताः। धीरोदात्त-धीरोद्धत-धीरप्रशान्ताख्यास्त्रयो नायकाः मन्त्रिभिः सह स्वयं स्वयमेव कार्य्यं पर्य्यालोचयन्तीत्यर्थः। स्वस्य धीरललितस्य यल्लक्षणं "निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्" इत्थं लक्षणं तस्य कथनेनैव धीरललितस्य मन्त्रिमात्रायत्तं यदर्थचिन्तनं तस्योपपत्तेः अन्यथा निश्चिन्तत्वासम्भवेन प्राप्तत्वात् गतार्थं चरितार्थम्। अतो मन्त्रिणा ललित इत्यभिधानं निरर्थकमेवेति भावः।

(न) अथ धीरललितस्याप्यर्थचिन्तने मन्त्री सहाय एव भविष्यतीत्याह न चेति। तस्य धीरललितस्य स्वयमेव मन्त्र्येव, निष्पादकः कार्य्यसाधकः। तस्य धीरललितस्य, अर्थचिन्तनाद्यभावात् स्वयं कार्य्यपर्य्यालोचनया अभावात्। तथात्वे निश्चिन्तत्वानुपपत्तिरिति भावः।

(प) अथेति। अन्तःपुरे सहायाः नायकस्य रमणीनां पर्य्यवेक्षणादिकार्य्यकराः। कथ्यन्त इति शेषः।

---

(१) अत्र लक्षितस्येत्यधिकः क्वचित् पाठः।

(२) तद्वदवरोध इति पाठः कुत्रचित् पुस्तके हृत्तावन्तर्निवेशितो दृश्यते।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

५३ । मदमूर्खताभिमानी दुष्कुलतैश्वर्य्यसंयुक्तः ।
सोऽयमनूढ़ाभ्राता राज्ञः श्यालः शकार इत्युक्तः ॥ (ब)

आद्यशब्दान्मूकादयः (भ) । तत्र षण्ड-वामन-किरात-कुब्जादयो यथा रत्नावल्याम्—

"नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।
पर्य्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥" (म)

शकारो मृच्छकटिकादिषु प्रसिद्धः । अन्येऽपि यथादर्शनं ज्ञातव्याः (य) ।

---

(फ) तद्वदिति । तद्वत् तथा । अवरोधे अन्तःपुरे । वामनः खर्वाकृतिः, षण्ढो जन्मक्लीवः कृतक्लीवश्च, किराती हीनजातिविशेषः, म्लेच्छः स्वनामख्यातः, आभीरो गोपालः, शकारो वक्ष्यमाणलक्षणः, कुब्जो वक्राकृतिः, तदाद्या नायकस्य अन्तःपुरे सहायाः स्युरित्यर्थः ।

(ब) एषां मध्ये शकारस्यैवाप्रसिद्धार्थकतया केवलं तमेव लक्षयति मदेति । मदो मत्तता, मूर्खता, अभिमानोऽहङ्कारश्च ते अस्य सन्तीति सः । दुष्कुलता नीचवंशोद्भवता ऐश्वर्य्यं धनसमृद्धिश्च ताभ्यां संयुक्तः सम्बद्धः अनूढ़ायाः अपरिणीतायाः भोग्यमात्ररूपाया रमण्या भ्राता । अतएवास्य आदरातिशयात् मदाभिमानयोः सम्भव इति बोध्यम् । स आलङ्कारिकप्रसिद्धः, अयं राज्ञः श्यालः श्यालकः शकार इत्युक्तः ।

(भ) आद्येति । पूर्वकारिकायां कुब्जाद्या इत्याद्यशब्दादित्यर्थः । अत्राप्यादिशब्दात् स्त्रीणां स्वभावत एवानुरागानर्हा वृद्धकुरूपादयो गृह्यन्ते ।

(म) नष्टमिति । रत्नावलीनाटिकायां वानरभयेन अन्तःपुरस्य सम्भ्रान्ततावर्णनेयम् । मनुष्येषु मध्ये गणनाभावात् स्वेषामगण्यत्वात् त्रपां पलायनादिजनितां लज्जाम् अपास्य परित्यज्य त्रासाद्भयादिति सर्वत्र सम्बन्धनीयम् । वर्षवरैर्नपुंसकैः नष्टं पलायितम् । अयं वामनः खर्वाकृति पुरुषः, कञ्चुकिनो वृद्धब्राह्मणस्य यत् कञ्चुकं वृहदङ्गावरणं तस्य अन्तरभ्यन्तरं विशति । किरातैः पर्य्यन्ताश्रयिभिर्नगरप्रान्तगामिभिः सद्भिः, निजस्य नाम्नः किराततेति स्ववाचकपदस्य सदृशं योग्यं कृतम् । किरं प्रान्तदेशम् अतन्तीति किराता इति व्युत्पत्तेरिति भावः । तथा आत्मनामीक्षणं वानरकर्त्तृकदर्शनम् आशङ्कन्त इति ते तथाभूताः कुब्जा जनाः, शनकैर्मन्दं मन्दं नीचतयैव स्वभावखर्वत्वेऽपि पुनः खर्वीकृतदेहतया यान्ति पलायन्ते ।

(य) शकार इति । अन्ये अवशिष्टा म्लेच्छाभीरमूकादयः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ दण्डसहायाः ।

५४ । दण्डे (१) सुहृत्कुमाराटविकाः
सामन्तसैनिकाद्याश्च । (र)

दुष्टनिग्रहो दण्डः । स्पष्टम् ।

अथ धर्म्मसहायाः ।

५५ । ऋत्विक्पुरोधसः स्युर्ब्रह्मविदस्तापसास्तथा धर्म्मे ॥ (ल)

ब्रह्मविदो वेदविद आत्मविदो वा (व) ।

तत्र च—(२)

५६ । उत्तमाः पीठमर्द्दाद्याः—(श)

आद्यशब्दान्मन्त्रिपुरोहितादयः ।

५७ । मध्यौ विटविदूषकौ ।
तथा शकारचेटाद्या अधमाः परिकीर्त्तिताः ॥ (ष)

आद्यशब्दात्ताम्बूलिकगान्धिकादयः ।

(र) दण्ड इति । सुहृदो मित्राणि, कुमाराः पुत्राः, आटविका वनेचराः, सामन्ता अधीना राजानः, सैनिकाः सैन्याः, आद्यशब्दात् सेनापतिप्रभृतयश्च दण्डे दुष्टनिग्रहे शत्रुविजयादौ नायकस्य सहायाः स्युः । तत्र सुहृदो रामायणादौ रामादीनां सुग्रीवादयः । कुमारा महाभारतादौ युधिष्ठिरादीनामभिमन्युप्रभृतयः । वनेचराः किरातार्ज्जुनीयादौ शिवादीनाम् । सामन्तसैनिकसेनापतिप्रभृतयो मुद्राराक्षसादौ मलयकेतुप्रभृतीनाम् ।

(ल) ऋत्विगिति । ऋत्विजस्तत्तत्कर्म्ममात्रे वृता याज्ञिकाः, पुरोधसः चिरवृताः पुरोहिताः, ब्रह्मविदो वृत्तौ दर्शिताः, तथा तापसास्तपस्विनश्च धर्म्मे नायकस्य सहायाः स्युः । तत्र ऋत्विजो दशरथादीनां पुत्रेष्ट्यादौ ऋष्यशृङ्गादयः । पुरोधसस्तेषामेव वशिष्ठादयः । ब्रह्मविदः परीक्षितादीनां शुकादयः । तापसा दशरथादीनां विश्वामित्रादयः ।

(व) "वेदस्तत्त्वं तपो ब्रह्म" इत्यमरोक्तेरत्र ब्रह्मशब्दस्य वेदपरत्वम् आत्मपरत्वं वा उभयमपि घटत इत्याह ब्रह्मेत्यादि । आत्मविदस्तत्त्वज्ञाः ।

(श) अथ नायकसहायान् विभजते उत्तमा इति । प्रायेण नायकतुल्यगुणवत्त्वात् पीठमर्द्दस्य विद्यादिगुणवत्त्वादुच्चजातीयत्वाच्च मन्त्रिपुरोहितादीनामुत्तमत्वमित्याशयः ।

(ष) मध्याविति । मध्यौ मध्यमौ । तत्र विटस्य वाग्मित्वादिगुणवत्त्वात् धूर्त्तत्वादिदोषवत्त्वाच्च

(१) दण्डे त्विति क्वचित् पाठः । (२) क्वचित् चकारो नास्ति ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ प्रसङ्गाद्दूतानां विभागगर्भं लक्षणमाह—(ग)

५८। निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः ।
कार्य्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि तथाविधाः ॥ (ङ)

अत्र कार्य्यप्रेष्यो दूत इति लक्षणम् (च)। तत्र—

५९। उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् ।
सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्थस्तु स स्मृतः ॥ (छ)

उभयोरिति येन प्रेषितो यदन्तिकं प्रेषितश्च ।

६०। मितार्थभाषी कार्य्यस्य सिद्धिकारी मितार्थकः ।
यावद्भाषितसन्देशहारः सन्देशहारकः ॥ (ज)

मध्यमत्वम्। विदूषकस्यापि विश्वस्तत्वादिगुणवत्त्वात् कलहप्रियत्वादिदोषवत्त्वाच्च मध्यमत्वम्। शकारस्य तु मदमूर्खतादिगुरुतरदोषवत्त्वात् चेटादीनाञ्चापकृष्टकार्य्यकरणादधमत्वमित्यभिप्रायः ।

(ग) अथेति। प्रसङ्गात् दूतस्यापि सहायविशेषत्वेन सहायकथनप्रकरणे अनुपेक्षणीयत्वात्। विभागो गर्भं मध्ये यस्य तत्तादृशञ्च तत् लक्षणञ्चेति तत्तथोक्तम् ।

(ङ) निसृष्टार्थ इति। कार्य्यप्रेष्यो दूत इत्येतन्मात्रं दूतलक्षणम्। स च त्रिधा—निसृष्टार्थो मितार्थः सन्देशहारकश्च। दूत्यश्चापि तथाविधास्तद्वत्त्रिविधा इत्यर्थः। यथा—निसृष्टार्था मितार्था सन्देशहारिका चेति ।

(च) तत्रेति। कार्य्याय वार्त्ताप्रदानाय तदादानाय वा प्रेष्यः प्रेरणीयः। अत्र प्रेष्य इत्यनेन यस्य प्रेषणमेव प्रधानं कर्म्म तादृशो नियोज्यो लभ्यते। तेन कदाचित् सेवादासस्य कस्यचिदाह्वातुं प्रेषितस्यापि न दूतत्वं तस्य प्रेषणस्य प्रधानकर्म्मत्वाभावात् सेवाया एव तु तस्य प्रधानकर्म्मत्वात् ।

(छ) उभयोरिति। स्वयम् आत्मनैव उभयोर्भावम् अभिप्रायम् उन्नीय अवधृत्य उत्तरं वदति, उभाभ्यामुक्तादतिरिक्तविषये उभयोरपि प्रश्ने जाते तयोरभिप्रायमनुमाय उत्तरं वदतीत्यर्थः। उभौ तु वृत्तावेव विहतौ कार्य्यञ्च सुश्लिष्टं सुसङ्गतं कुरुते स निसृष्टार्थो दूतः स्मृतः। निसृष्टः स्वबुद्धिस्वभावेनैव निष्पादितः अर्थः स्वामिप्रयोजनं येन स निसृष्टार्थः। अयञ्च दूतेषूत्तमः महाबुद्धिमत्त्वात् सुश्लिष्टकार्य्यकारित्वाच्च। निसृष्टार्था दूत्यपि एवंलक्षणैव। माघकाव्ये शिशुपालेन कृष्णान्तिकं प्रेषितो निसृष्टार्थो दूतः। मालतीमाधवे लवङ्गिका निसृष्टार्था दूती ।

(ज) मितार्थेति। मितार्थभाषी अल्पभाषी, अथ च कार्य्यस्य सिद्धिकारी मितार्थको मितार्थनामा दूतः। अयन्तु दूतेषु मध्यमः निसृष्टार्थवद्बुद्धिमत्त्वाभावात् अथ च कार्य्यसिद्धिकारित्वात्। मितार्था दूत्यपि एवंलक्षणैव। तत्र किराताञ्जुनीये प्राथमिको वनेचरो मितार्थो दूतः। शाकुन्तले मिश्रकेशी

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ सात्त्विका नायकगुणाः (१) (ग)।

६१। शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी।
ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः॥ (घ)

तत्र—

६२। शूरता दक्षता सत्यं महोत्साहोऽनुरागिता।
नीचे घृणाऽधिके स्पर्द्धा यतः शोभेति तां विदुः॥ (ङ)

तत्रानुरागिता यथा—

"अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत्।
उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित्॥" (च)

एवमन्यत्रापि (२) (छ)।

---

मेनकाया मितार्थाख्या दूती। प्रेरकेण यावद्भाषितं तावदेव सन्देशो वाचिकं तं हरति नयतीति स सन्देशहारको दूतः। अयन्तु दूतेष्वधमः कार्य्यसिद्धिकारित्वाभावात्। सन्देशहारिका दूत्यपि एवं लक्षणैव। मालतीमाधवे चतुर्थाङ्के नन्दनप्रेषितः पुरुषः सन्देशहारको दूतः। मालविकाग्निमित्रे चतुर्थाङ्के इरावती-समीपे धारिणीप्रेषिता नागरिका सन्देशहारिका दूती।

(ग) अथेति। सात्त्विकाः सत्त्वगुणोत्पन्नाः। एतन्निरूपणमपि प्रसङ्गादेवेति बोध्यम्।

(घ) शोभेति। यद्यपि वक्ष्यमाणाः स्तम्भस्वेदादयोऽपि सत्त्वजा एव तथापि ते स्त्रीपुरुषोभयसम्भाव्याः; इमे शोभादयस्तु केवलपुरुषसम्भाव्या एवेति ज्ञापयितुमाह पौरुषा इति। पौरुषा नायक-मात्रगताः।

(ङ) शूरतेति। यत इति प्रथमान्तात् तस्प्रत्ययः, तेन या यत् य इति यथासम्भवमूह्यम्। पुरुषस्य शूरता वीरत्वम्, दक्षता सर्वकार्य्येषु नैपुण्यम्, सत्यं वाचा कर्म्मणा वा सत्यव्यवहारः, महोत्साहो गुरुतरोद्यमः, अनुरागिता लोकेषु स्नेहवत्त्वम्, नीचे स्वापेक्षया दुर्बले घृणा दया, अधिके स्वापेक्षया प्रबले स्पर्द्धा जिगीषा जायते, तां शोभेति विदुस्तां शोभां वदन्तीत्यर्थः। शूरतादीनामन्यतमत्त्वं शोभात्वमिति वृत्तिकृतामाशयः प्रतीयते केवलानुरागितायामुदाहरणस्य दर्शितत्वात् एवमन्यत्रापीत्युक्तत्वाच्च।

(च) अहमिति। रघुवंशे अजस्य वर्णनमिदम्। प्रकृतिषु प्रजासु मध्ये सर्वो जनः "अहमेव महीपतेरजस्य मतः स्नेहपात्रतया अभिमतः" इति इत्थमचिन्तयत्। एतादृक् चिन्तायां कारणमाह—उदधे-रिति। निम्नगाशतेषु नदीसमूहेषु उदधेः समुद्रस्येव क्वचिदपि जने अस्य अजस्य विमानना अवज्ञा नाभवत् अजः कमपि जनं नावज्ञातवान् अपि तु सर्वमेव समादृतवानित्यर्थः। अतः सर्वेषां तादृशी चिन्ता सम्भव-त्येवेति भावः। एतेन अजः अनुरागितारूपशोभाख्यसात्त्विकगुणवानासीदिति सूचितम्।

---

(१) सात्त्विकनायकगुणा इति पाठान्तरम्। (२) एवमन्यदपीति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ विलासः ।

६३ । धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः । (ज)

"दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एषः (१) ॥" (झ)

६४ । संक्षोभेष्वप्यनुद्वेगो माधुर्य्यं परिकीर्त्तितम् ॥ (ञ)

ऊह्यमुदाहरणम् (ट) ।

६५ । भीशोकक्रोधहर्षाद्यैर्गाम्भीर्य्यं निर्विकारता । (ठ)

---

(छ) एवमिति । अन्यत्र शूरतादिष्वपि एवमुदाहरणमूह्यमित्यर्थः । तत्र शूरतायामुदाहरणं यथा मम रुक्मिणीहरणमहाकाव्ये—

"रणाङ्गनं प्रति गतिमावतोऽपि यो जयश्रियं प्रथममभिश्रियन्नधात् ।
उषामसौ प्रथममुपैत्यहर्पतिः परं ततस्तिमिरततिं हिनस्ति हि ॥"

दक्षतादीनामुदाहरणान्यनुसन्धेयानि ।

(ज) धीरेति । विलासे विलासाख्यसात्त्विकगुणे स्थिते सति पुरुषस्य दृष्टिः धीरा अचञ्चला, गतिश्चित्रा आश्चर्य्या, वचो वाक्यञ्च सस्मितं जायते । एतेन धीरदृष्टिप्रभृत्यन्यतमजनकत्वं विलासत्वमिति लक्षणं फलितम् ।

(झ) दृष्टिरिति । उत्तररामचरिते कुशमवलोक्य रामस्योक्तिरियम् । दृष्टिः अस्य कुमारस्य दृष्टिपातः, तृणीकृतः तृणवदतितुच्छतया गणितः जगत्त्रयस्य त्रिभुवनस्य सत्त्वानां प्राणिनां सारो बलं यया सा तथोक्ता । धीरा सधैर्य्या अव्याकुलेति यावत् उद्धता सदर्पा गतिः अस्य पादक्षेपः धरित्रीं भूमिं नमयतीव । कौमारके शैशवेऽपि वयसि गिरिवत् पर्वत इव गुरुतां गौरवं भारवत्त्वमित्यर्थः दधानो वहन् अयं बालकः किं वीरो रसः, उत अथवा एष दर्पः एति मूर्त्तिमानहङ्कार आगच्छति ।

अत्र धीरदृष्टिविचित्रगतिजनकरूपो विलासः कुशस्य प्रतिपादितः ।

(ञ) समिति । संक्षोभेष्वपि उद्वेगकारणाविर्भावेष्वपि अनुद्वेगो माधुर्य्यं परिकीर्त्तितम् ।

(ट) ऊह्यमिति । तदुदाहरणं यथा मम रुक्मिणीहरणे—

"हरिरगणितसैन्यं धावदाच्छाद्य भूमिं हरिणगणसमानं विप्रकृष्टाद्विलोक्य ।
चकितचलितचित्तां सम्यगाश्वास्य कान्तां झटिति चलमकार्षीत् सम्मुखे तं श्रताङ्गम् ॥"

---

(१) एव इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥" (ड)

६६ । व्यवसायादचलनं धैर्य्यं विघ्ने महत्यपि ॥ (ढ)

यथा—"श्रुताप्सरोगीतिरपि क्षणेऽस्मिन् हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥" (ण)

६७ । अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् ।
प्राणात्ययेऽप्यसहनं तत् तेजः समुदाहृतम् ॥
वाग्वेशयोर्मधुरता तद्वच्छृङ्गारचेष्टितं ललितम् ।
दानं सप्रियभाषणमौदार्य्यं शत्रुमित्रयोः समता ॥ (त)

---

(ठ) भीति । भीर्भयम् । आद्यशब्दाद्भर्त्सनादयो गृह्यन्ते । भीशोकक्रोधहर्षाद्यैरपि निर्विकारता विकाराभावो गाम्भीर्य्यम् । यद्यपि उद्वेगोऽपि विकारविशेषस्तथापि तस्य चित्तविकाररूपत्वात् । अत्र तु विकारपदेन आकृतिविकारस्यैव विवक्षितत्वात् न अनुद्वेगनिर्विकारतयोरैक्यापत्तिरिति दिक् । एवञ्च चित्तस्य निर्विकारता माधुर्य्यम्, आकृतेर्निर्विकारता गाम्भीर्य्यमिति फलितम् ।

(ड) आहूतस्येति । राज्ये अभिषेकाय आहूतस्य परमेव च वनाय विसृष्टस्य परित्यक्तस्य तस्य रामस्य स्वल्पोऽपि आकारस्य विभ्रमो वैलक्षण्यं मया न लक्षितः ।

अत्र अभिषेकायाह्वाने हर्षेण मुखाद्युत्फुल्लतारूपविकारसम्भवेऽपि तदभावात् वनाय विसर्जने च शोकेन मुखमालिन्यरूपविकारसम्भवेऽपि तदभावाच्च रामस्य गाम्भीर्य्यं द्योतितम् ।

(ढ) व्यवेति । महति विघ्ने उपस्थितेऽपीत्यर्थः । व्यवसायात् कर्त्तव्यात् अचलनम् अस्खलनं धैर्य्यम् ।

(ण) श्रुतेति । कुमारसम्भवे तृतीयसर्गे श्लोकोऽयम् । अस्मिन् क्षणे वसन्ताविर्भावकाले हरो महादेवः श्रुता अप्सरसां गीतिः स्मरोद्दीपकं गानं येन स तथोक्तः सन्नपि प्रसंख्यानपरः समाधिपरायणो बभूव । हि यस्मात्, आत्मेश्वराणां जितेन्द्रियाणां विघ्नाः जातु कदाचिदपि समाधिभेदे योगभ्रंशने प्रभावः समर्थाः न भवन्ति ।

अत्र अप्सरसां गानश्रवणरूपे महाविघ्ने उपस्थितेऽपि हरस्य योगादस्खलनरूपं धैर्य्यं दर्शितम् ।

(त) अधीति । प्राणात्यये प्राणनाशसम्भवेऽपि, परेण शत्रुणा प्रयुक्तस्य विहितस्य, अधिक्षेपो निन्दावादः, अपमानः असम्मानः, आदिशब्दात् अन्यप्रकारापकारश्च तस्य यत् असहनं तत् तेजः समुदाहृतम् उक्तम् । वाग्वेशयोर्मधुरता सौन्दर्य्यम्, तद्वत् मधुरताशालि शृङ्गारचेष्टितं कामुकव्यवहारः ललितम् । वाचो मधुरता वेशस्य मधुरता शृङ्गारचेष्टितञ्च एतेषामेकैकमेव ललितमित्यर्थः । सप्रियभाषणं

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एषामप्युदाहरणान्यूह्यानि (ग) ।

६ । अथ नायिका त्रिविधा स्वाऽन्या साधारणी स्त्रीति (१) ।
नायकसामान्यगुणैर्भवति यथासम्भवैर्युक्ता ॥ (ङ)

नायिका पुनर्नायकसामान्यगुणैस्त्यागादिभिर्यथासम्भवैर्युक्ता भवति । सा च स्वस्त्री अन्यस्त्री साधारणस्त्रीति त्रिविधा (च) ।

तत्र स्वस्त्री ।

---

प्रियवाक्यसहितं दानं शत्रुमित्रयोः समता समानदर्शिता च औदार्यम् । अनयोरपि प्रत्येकमेव औदार्यमित्यर्थः ।

(ग) एषामिति । एषां तेजोललितौदार्याणाम् । तत्र तेजस उदाहरणं यथा मम वङ्गीयनाटके—

"विद्रावितद्विपकुलो नियतेर्नियोगात् पञ्चाननः पतति यद्यपि वागुरायाम् ।
स्पर्द्धां तथापि सहते हरिणस्य किं स्वित् आहत्य प्रत्युत करेण करोत्यजीवम् ॥"

अत्र प्राणात्ययसम्भवेऽपि शङ्करकृतनिन्दाया असहनरूपं तेजो नवावस्य ।

शृङ्गारचेष्टितरूपं ललितं यथा रघुवंशे—

"विलासिनीविभ्रमदन्तपत्रमापाण्डुरं केतकबर्हमन्यः ।
प्रियानितम्बोचितसन्निवेशैर्विपाटयामास युवा नखाग्रैः ॥"

सप्रियभाषणदानरूपमौदार्यं यथा मम रुक्मिणीहरणमहाकाव्ये—

"स्वं हयुतां बहुसंस्कृतिशुद्धामाहुतिमद्य परामिव कन्याम् ।
श्रीहरये शुचये शुचये वा सम्भविताऽस्मि ददच्चरितार्थः ॥"

(ङ) "आलम्बनं नायकादिः" इत्यत्रादिशब्देन नायिकादयः परिगृहीताः, तत्र क्रमप्राप्तामिदानीं नायिकामाह अथेति । अथ सहायादिसमेत-नायकनिरूपणानन्तरं निरूपणीया नायिकेत्यर्थः । यथासम्भवैर्नायकसामान्यगुणैर्युक्ता स्त्री नायिकेति नायिकालक्षणम् । अत्र यथासम्भवैरित्यनेन दक्षतोत्साहतेजोरूपाणां त्रयाणामेव नायकगुणानां नायिकायां वर्जनमभिप्रेतम्, तेषां पुरुषस्यैव सात्त्विकगुणमध्ये परिगणनात् । सा च नायिका इति इत्थं त्रिविधा—स्वा स्वकीया स्त्री, अन्या अन्यदीया स्त्री, साधारणी सकलजनभोगयोग्या स्त्री च ।

(च) नायिकेति । त्यागादिभिरित्यादिशब्देन "त्यागी कृती कुलीनः" इत्यादिकारिकायामुक्तानामुत्साहदक्षतातेजोव्यतिरिक्तानां सर्वेषामेव गुणानां ग्रहणम् ।

---

(१) साधारणस्त्रीति क्वचित् पाठः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

६९। विनयार्ज्जवादियुक्ता
गृहकर्म्मपरा पतिव्रता स्वीया। (न)

यथा—"लज्जापज्जत्तपसाहणाइं परभत्तिणिप्पिवासाइं।
अविणअदुम्मेहाइं धसाण घरे कलत्ताइं॥" (प)

७०। सापि कथिता त्रिभेदा (१)
मुग्धा मध्या प्रगल्भेति॥ (फ)

तत्र—

७१। प्रथमावतीर्णयौवनमदनविकारा रतौ वामा।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा॥ (ब)

---

(न) विनयेति। विनयो नम्रता, आर्जवं सरलता, आदिशब्दात् सदाचारादिगुणग्रहणम्, तैर्युक्ता, गृहकर्म्मपरा गृहस्थोपयोगिकार्य्यव्यापृता पतिव्रता सती स्त्री स्वीया स्वकीयाख्या नायिका। अत्र विनयार्जवादियुक्तेत्यनेन अविनीतादीनाम्; गृहकर्म्मपरेत्यनेन उदासीनायाः, पतिव्रतेत्यनेन च व्यभिचारिण्या व्यावृत्तिः। न च तादृशीनामपि स्वस्त्रीत्वात् स्वीयात्वमिति वाच्यम्, स्वस्त्रीविशेषाणामेव स्वीयात्वावधारणात्, एतदर्थमेव विनयेत्यादिलक्षणकरणात्, अन्यथा "स्वस्त्री स्वीया" इत्येतन्मात्रमेव लक्षणं कुर्य्यात्। अत्र प्रथमचरणस्य एकादशमात्रामात्रयथिततया आर्य्याभङ्गोऽपि सूत्रप्रायत्वान्न तादृशदोषावह इति चिन्त्यम्।

(प) लज्जेति। "लज्जापर्य्याप्तप्रसाधनानि परभर्तृनिष्पिपासानि। अविनयदुर्म्मेधानि धन्यानां गृहे कलत्राणि॥" इति संस्कृतानुवादः। लज्जैव पर्य्याप्तं यथेष्टं प्रसाधनं भूषणं येषां तानि, परभर्तृषु अन्यासां पतिषु निष्पिपासानि निरभिलाषाणि, अविनयेषु रुक्षव्यवहारेषु दुर्म्मेधानि अनभिज्ञानीत्यर्थः कलत्राणि भार्य्या धन्यानां जनानां गृहे एव भवन्ति।

(फ) सापीति। न केवलं नायिका त्रिविधा सा स्वीयापि। मुग्धा मध्या प्रगल्भा इति इत्थं त्रिभेदा त्रिप्रकारा कथिता। केचित्तु अपिशब्दात् अन्यदीया साधारणस्त्री च मुग्धा मध्या प्रगल्भेति त्रिविधा भवतीति वदन्ति।

(ब) लक्षणगर्भान् मुग्धाया विभागानाह प्रथमेति। अङ्कुरितस्मरादिमन्नायिकात्वं मुग्धात्वमिति मुग्धायाः सामान्यलक्षणम्। सा च पञ्चविधा—प्रथमावतीर्णयौवना, प्रथमावतीर्णमदनविकारा, रतौ वामा, माने मृदुः, समधिकलज्जावती चेति। तत्र रतौ वामा सुरते प्रतिकूला। माने मृदुः प्रणयकोपेऽपि कोमला, न तु मध्यादिवत् प्रखरस्वभावेत्यर्थः। आसां नामानुरूपाण्येव लक्षणानि ज्ञेयानि। एतत्पञ्चविधत्वन्तु ग्रन्थकारस्यैवाभिप्रेतमिति वृत्तिलिखनभङ्गीदर्शनादेवोन्नीयते। एवञ्च यौवनञ्च मदन-

(१) त्रिविधेति क्वचित् पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र प्रथमावतीर्णयौवना यथा मम तातपादानाम्—

"मध्यस्य प्रथिमानमेति जघनं वक्षोजयोर्मन्दता
दूरं यात्युदरञ्च रोमलतिका नेत्रार्जवं धावति।
कन्दर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तं क्षणा-
दङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः॥" (भ)

प्रथमावतीर्णमदनविकारा यथा मम प्रभावतीपरिणये—

"दत्ते सालसमन्थरं भुवि पदं निर्याति नान्तःपुरात्
नोद्दामं हसति क्षणात् कलयते ह्रीयन्त्रणां कामपि।
किञ्चिद्भावगभीरवक्रिमलवस्पृष्टं मनाग् भाषते
सभ्रूभङ्गमुदीक्षते प्रियकथामुल्लासयन्तीं सखीम्॥" (म)

रतौ वामा यथा—

"दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते।

---

विकारश्च यौवनमदनविकारौ, प्रथमावतीर्णौ नूतनोपस्थितौ यौवनमदनविकारौ यस्याः सा तथोक्ता, इति समासेऽपि उक्तद्विविधत्वं विवक्षितमिति बोध्यम्।

(भ) मध्यस्येति। जघनं कर्तृ मध्यस्य कटिदेशस्य प्रथिमानं शैशवकालीयस्थूलताम् एति प्राप्नोति। मध्यदेशोऽपि जघनस्य शैशवकालीयक्षशतां प्राप्नोतीति भावः। वक्षोजयोः स्तनयोः, मन्दता अल्पता कर्त्री दूरमत्यन्तं यथा स्यात्तथा उदरं याति प्राप्नोति। उदरस्य च स्थूलता स्तनौ प्राप्नोतीति भावः। तथा रोमलतिका रोमश्रेणी नेत्रयोरार्जवं शैशवकालीयां सरलतां धावति गच्छति प्राप्नोति। नेत्रे च रोमश्रेण्याः शैशवकालीयां कुटिलतां प्राप्नुत इति भावः। अतएव सुभ्रुवः सुन्दरभ्रूयुगशालिन्या नवनायिकाया अङ्गानि कर्तृणि कन्दर्पं मदनं नूतनं यथा स्यात्तथा मनोराज्ये अभिषिक्तं परिवीक्ष्य दृष्ट्वा क्षणात् तत्क्षणादेव परस्परं निर्लुण्ठनं परस्परवस्त्वपहरणं विदधते कुर्वन्तीव। राज्ये नवाभिषिक्तं राजानमवेक्ष्य प्रमोदमग्ना प्रजा इवेत्याशयः।

अत्र जघनस्थूलतादिप्राप्त्यारम्भवर्णनेनास्याः प्रथमावतीर्णयौवनत्वं सूचितम्।

(म) दत्त इति। सा प्रभावती भुवि अलसवत् मन्थरं मन्दं यथा स्यात्तथा पदं दत्ते चरणमर्पयति, अन्तःपुरात् न निर्याति न निर्गच्छति, उद्दाममुत्कटं न हसति, क्षणात् क्षणे क्षणे कामपि अनिर्वचनीयां ह्रीयन्त्रणां लज्जाकृतपीडां कलयते प्रकाशयति अनुभवति वा, किञ्चिद्भावेन केनाप्यनिर्वचनीयाभिप्रायेण गभीरेण अन्येषां दुर्बोधेन वक्रिमलवेन कुटिलतालेशेन च स्पृष्टं युक्तं यथा स्यात्तथा मनाक् अल्पं भाषते, तथा प्रियस्य पत्युः कथाम् उल्लासयन्तीम् उत्थापयन्तीं सखीं सभ्रूभङ्गं यथा स्यात्तथा उदीक्षते मुखमुन्नमय्य पश्यति।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव सम्प्रति मम प्रीत्यै नवोढ़ा प्रिया ॥" (य)

माने मृदुर्यथा—"सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलना वक्रोक्तिसंसूचनम्।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरस्रुभिः ॥" (र)

समधिकलज्जावती यथा—"दत्ते सालसमन्थरम्" इत्यत्र श्लोके (१०८ पृष्ठे) (ल)।

अत्र समधिकलज्जावतीत्वेनापि (१) लब्धाया रतिवामताया विच्छित्ति-विशेषवत्तया पुनः कथनम् (व)।

---

अत्र क्रीयन्त्वणामित्यनेन अङ्कुरितस्यापि कामस्य तत्कालीनप्रबललज्जया तिरोधानसूचनात् प्रियकथो-त्थापनात् सभ्रूभङ्गोदीक्षणेन कामाभिलाषसूचनाच्चास्याः प्रथमावतीर्णमदनविकारत्वमुन्नेयम्।

(य) दृष्टेति। नवोढ़ा अचिरपरिणीता प्रिया, मया दृष्टा सत्येव दृष्टिम् अधो ददाति अर्पयति, आभाषिता मया आलपिता सती आलापं न कुरुते, शय्यायां परिवृत्य मद्दिशि पृष्ठं दत्त्वा तिष्ठति, मया बलादालिङ्गिता सती वेपते कम्पते, सखीषु वासभवनात् निर्यान्तीषु निर्गच्छन्तीषु सतीषु निर्गन्तुमेव ईहते चेष्टते। सर्वत्रैव लज्जातिरेकादिति भावः। इत्थञ्च वामतयैव रतौ प्रतिकूलतयैव सम्प्रति मम प्रीत्यै प्रमोदाय जाता। अतीवकौतुकजननादिति भावः।

अत्र तु रतौ वामत्वं स्पष्टमेवोक्तम्।

(र) सेति। सा बाला पत्युः प्रथमापराधः अपरस्त्रीसंसर्गरूपापराधस्य प्रथमज्ञानं तस्य समये, सख्येन सौहार्द्देन य उपदेशः सखीजनकर्तृक-मानकरणशिक्षादानं तं विना, सविभ्रमाः सविलासाः अङ्गानां वलनाः पत्यौ धर्त्तुमुद्यते अपसारणानि वक्रोक्तिस्तदपराधव्यञ्जकोक्तिः संसूचनं प्रकाशनञ्च नो जानाति स्वयं नावगच्छति। किन्तु स्वच्छैरतिनिर्म्मलैः अच्छयोर्विमलयोः कपोलयोर्गण्डयोः मूलादुपरिभागात् गलितैः, लुठन्तः लगन्तः लोलाश्चञ्चला अलकाश्चूर्णकुन्तला येषु तैः अस्रुभिः पर्यस्ते स्फोतीकृत्य नामिते नेत्रोत्पले यस्याः सा तथोक्ता सती केवलमेव रोदिति।

अत्र पतिं प्रति रूक्षव्यवहारमपहाय केवलरोदनादस्या मानेऽपि मृदुत्वम्।

(ल) समेति। एवञ्च "दत्ते सालसमन्थरम्" इत्यादिश्लोकप्रतिपादितनायिकायाः प्रथमावतीर्णमदन-विकाररूपत्वं समधिकलज्जावतीरूपत्वञ्चाङ्गीकृतमिति बोध्यम्। तथा च वक्ष्यति—"क्वचिदन्योन्यसाङ्कर्य्यमासां लक्ष्येषु दृश्यते।"

(व) ननु लज्जाया रतिवामताप्रयोजकत्वात् समधिकलज्जावती नायिकास्वीकारेणैव रतिवामत्व-

---

(१) समधिकलज्जावत्त्वेनापीति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ मध्या ।

७२ । मध्या विचित्रसुरता प्ररूढ़स्मरयौवना ।
ईषत्प्रगल्भवचना मध्यमव्रीड़िता मता ॥ (श्र)

तत्र विचित्रसुरता यथा—

"कान्ते तथा कथमपि प्रथितं मृगाक्ष्या चातुर्य्यमुद्धतमनोभवया रतेषु ।
तत्कूजितान्यनुवदद्भिरनेकवारं शिष्यायितं गृहकपोतशतैर्यथास्याः ॥" (ष)

प्ररूढ़स्मरा यथा अत्रैवोदाहरणे (स) ।

प्ररूढ़यौवना यथा मम ।

"नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि पाणिद्वयं
वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः ।

---

नायिकालाभात् कथं रतिवामाख्यप्रकारान्तरस्वीकार इत्याह अत्रेति । लब्धाया गतार्थाया: । विच्छित्ति-विशेषवत्तया रतिवामत्वरूपेणैव चमत्कारातिशयवत्तया हेतुना । पुनः कथनं रतिवामाख्यप्रकारान्तर कथनम् । समधिकलज्जावतीति नायिकाविशेषस्य संज्ञात्वात् समधिकलज्जावतीत्वेनेत्यत्र न पुंवद्भावः ।

(श्र) मध्येति । मुग्धापेक्षया किञ्चिदधिकस्मरादिमत्त्वं मध्यात्वमिति मध्यायाः सामान्यलक्षणम् । एषापि पञ्चविधा—विचित्रसुरता, प्ररूढ़स्मरा, प्ररूढ़यौवना, ईषत्प्रगल्भवचना, मध्यमव्रीड़िता चेति । एतत् पञ्चविधत्वमपि वृत्तावुदाहरणदर्शनादुन्नीयते । एवञ्चात्रापि स्मरश्च यौवनञ्चेति स्मरयौवने प्ररूढ़े मुग्धापेक्षया अतिरेकेणोत्पन्ने स्मरयौवने यस्या मध्यायाः सेति समासेऽपि उक्तद्विविधत्वं विवक्षितम् । ईषत्प्रगल्भमल्पधृष्टं वचनं यस्याः सा । मध्यमा व्रीड़ा लज्जा अस्याः सञ्जातेति मध्यमव्रीड़िता ।

(ष) कान्त इति । उद्धतः अतिरेकेण जातो मनोभवः कामो यस्यास्तया मृगाक्ष्या हरिणनयनया रतेषु बहुतररतिक्रीड़ासु कान्ते पत्यौ पतिं प्रतीत्यर्थः, तथा तेन प्रकारेण कथमपि अनिर्वचनीयं चातुर्य्यं शब्दनैपुण्यं प्रथितं प्रकटितम्, यथा गृहकपोतशतैर्गृहपालितपारावतगणैः अनेकवारं तत्कूजितानि तान् रमणकालीनाव्यक्तशब्दान् अनुवदद्भिरनुकुर्वद्भिः सद्भिः अस्याः शिष्यायितं शिष्यवदाचरितम् । शिष्या यथा गुरुवाक्यमाकर्ण्य तदनुकुर्वन्ति, गृहकपोता अपि तथा नायिकाया रमणकालीनाव्यक्तशब्दान्निशम्यताननेकवारमनुचक्रुरित्यर्थः ।

अत्र तादृशकूजितकरणादेवास्या विचित्रसुरतात्वमिति बोध्यम् ।

(स) प्ररूढ़ेति । अत्रैवोदाहरणे "कान्ते तथा" इत्याद्युक्तश्लोके व्यक्ता नायिका प्ररूढ़स्मरापि सम्भवतीत्यथः । उद्धतमनोभवयेत्यनेन मुग्धापेक्षयातिरेकेण स्मरोत्पत्तिवर्णनादिति भावः । एवञ्चात्र विचित्र सुरताप्ररूढ़स्मरयोः साङ्कर्य्यमुन्नेयम् ।

(ह) नेत्रे इति । तस्या रमण्याः नेत्रे चक्षुषी खञ्जनगञ्जने खञ्जनाख्यपक्षिनिन्दिनी ततोऽपि सुन्दरे इत्यर्थः, पाणिद्वयं करतलद्वयं सरसिजप्रत्यर्थि पद्मसदृशम्, वक्षोजौ स्तनद्वयं करिकुम्भयोः विभ्रमकरीं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कान्तिः काञ्चनचम्पकप्रतिनिधिर्वाणी सुधास्पर्द्धिनी (१)
स्मेरेन्दीवरदामसोदरवपुस्तस्याः कटाक्षच्छटा ॥" (ङ)

एवमन्यत्रापि (च)।

अथ प्रगल्भा।

७३। स्मरान्धा गाढ़तारुण्या समस्तरतकोविदा।
भावोन्नता दरव्रीड़ा प्रगल्भाक्रान्तनायका ॥ (क)

स्मरान्धा यथा—"धन्यासि या कथयसि प्रियसङ्गमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः! शपामि यदि किञ्चिदपि स्मरामि ॥" (ख)

पूर्वसादृश्यात् विशेषेण भ्रान्तिजनिकाम् अत्युन्नतिम् अत्यन्तोन्नतत्वं गच्छतः प्राप्नुतः, कान्तिर्देहद्युतिः काञ्चन-चम्पकयोः स्वर्णचम्पककुसुमप्रभयोः प्रतिनिधिः सदृशी, वाणी वाक्यं सुधास्पर्द्धिनी अमृततुल्या, तथा कटाक्ष-च्छटा कुटिलदृष्टिपरम्परा स्मेरस्य प्रस्फुटितस्य इन्दीवरदाम्नो नीलोत्पलमालायाः सोदरं तुल्यं वपुराकृतिर्यस्याः सा तादृशी।

अत्र प्रथमावतीर्णयौवनापेक्षया अस्याः स्तनोन्नतिप्रभृत्यतिरेकात् प्ररूढ़यौवनात्वम्।

(च) एवमिति। अन्यत्रापि अन्ययोरपि ईषत्प्रगल्भवचनामध्यमव्रीड़ितयोः एवमुदाहरणमूहनीय-मिति शेषः। अत्र ईषत्प्रगल्भवचना यथा मम वियोगवैभवाख्ये खण्डकाव्ये—

"पुनरपि तव पाणौ नार्पयाम्यंशुकं मे, परिचयपरिहानात्तेऽद्य वासो वसानाम्।
उषसि गृहकृतिस्थामालयी मां निरीक्ष्य, कृतकलकलनादा न्यायसीं वक्तुमीषुः ॥"

मध्यमव्रीड़िता यथा मम रुक्मिणीहरणमहाकाव्ये—

"पयसि सकुचमग्ना काप्यनुविग्नमग्ना कटितटपरिमुक्तं धावयन्ती दुकूलम्।
गतवति बहुनीचे वातनुन्ने प्रवाहे प्रविततनिखिलाङ्गी लज्जया द्राङ् ममज्ज ॥"

(क) स्मरान्धेति। निरतिशयस्मरादिमत्त्वं प्रगल्भात्वमिति प्रगल्भायाः सामान्यलक्षणम्। इयन्तु षड्विधा—स्मरान्धा, गाढ़तारुण्या, समस्तरतकोविदा, भावोन्नता, दरव्रीड़ा, आक्रान्तनायका चेति। एतत् षड्विधत्वमपि वृत्तौ षड्विधोदाहरणदर्शनादुन्नीयते। तत्र स्मरान्धा मदनावेगेन संज्ञाहीनप्राया। गाढ़-तारुण्या सम्पूर्णावतीर्णयौवना। समस्तरतकोविदा सर्वप्रकारसुरताभिज्ञा। भावोन्नता भ्रूभङ्गाद्यनुभावै-रुत्कर्षा। दरव्रीड़ा स्वल्पलज्जा। आक्रान्तनायका रमणायावद्धवल्लभा।

(ख) धन्येति। सखीगणमध्ये रमणकालीनमात्मनः प्रियालापकरणं विव्रखतीं काञ्चित् प्रति कस्याश्चिदुक्तिरियम्। प्रियः प्रीतिप्रदः सङ्गमो रमणं यस्यास्तत्सम्बोधनम्। एतेन रमणेन परमप्रीतिप्रदान-

(१) सुधास्यन्दिनी इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गाढ़तारुण्या यथा—

"अत्युन्नतस्तनमुरो नयने सुदीर्घे
वक्रे भ्रुवावतितरां वचनं ततोऽपि।
मध्योऽधिकं तनुरनूनगुरुर्नितम्बो
मन्दा गतिः किमपि चाद्भुतयौवनायाः॥" (ग)

समस्तरतकोविदा (१) यथा—

"क्वचित्ताम्बूलाक्तः क्वचिदगुरुपङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः।
वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः
स्त्रियाः सर्वावस्थं कथयति रतं प्रच्छदपटः॥" (घ)

---

समये तत्रैव मग्नतया विषयान्तरालापकरणं दुष्करमेवेति ध्वनितम्। तथा च हे प्रियसङ्गमे! या त्वं रतान्तरेष्वपि विस्रम्भेन विश्वासेन चाटुकशतानि बहुप्रियवाक्यानि कथयसि, सा त्वं धन्यासि। तु किन्तु, हे सख्यः! शपामि अहं शपथं करोमि। कुर्वत्याह नीवीमिति। प्रियेण करे हस्ते नीवीं मम परिहितवसनग्रन्थिं प्रति प्रणिहिते तन्मोचनाय व्यापारिते सति यदि किञ्चिदपि स्मरामि।

अत्र नीवीं प्रति करप्रणिधानमात्रमेव मदनावेगेन संज्ञाहीनप्रायत्वादियं वक्री नायिका स्मरान्धा।

अत्र "शपथे शप" इत्यनेनात्मनेपदविषयत्वेऽपि परस्मैपदप्रयोगात् शपामीत्यपप्रयोग एव।

(ग) अत्युन्नतेति। अद्भुतयौवनाया अस्या रमण्याः उरो वक्षः अत्युन्नतौ स्तनौ यत्र तत् तथोक्तम्, नयने चक्षुषी सुदीर्घे, भ्रुवौ वक्रे कुटिले, वचनं वाक्यं ततोऽपि भ्रूद्वयादपि अतितरामत्यन्तं वक्रमित्यर्थः, मध्यः कटिदेशः अधिकं तनुः अतीवकृशः, नितम्बः अनूनगुरुरत्यन्तविशालः, गतिश्च किमपि अनिर्वचनीया मन्दा मन्थरा।

इयमत्युन्नतस्तनत्वात् अनूनगुरुनितम्बत्वाच्च गाढ़तारुण्या।

(घ) क्वचिदिति। क्वचित् नायकस्कन्धन्यासदेशे ताम्बूलाक्तः ताम्बूलरसरञ्जितः। एतेन विपरीतरतिः सूचिता। तत्रैव नायकोपरि न्युब्जभावेन पतनात् तच्चुम्बनसमये च विवृतवदनायास्ताम्बूलरसस्य संसनसम्भवात्। क्वचित् कस्मिंश्चिदंशे अगुरुपङ्कस्य स्तनलिप्तकृष्णागुरुद्रवस्य अङ्केन चिह्नेन मलिनः। अनेन नायकं पृष्ठे निधाय कृता रतिः सूचिता। तदैवास्तरणपटे स्तनयोर्लग्नतासम्भवात्। क्वचित् कस्मिन्नपि भागे चूर्णम् ऊरुलिप्तशुष्कचन्दनरेणुं तत्सौरभमित्यर्थः उद्गिरति प्रकटयतीति चूर्णोद्गारी। एतेनोपविश्य कृता रतिः सूचिता। तत्रैव नायकोरुपरि नायिकोरुसंघर्षेण तन्निम्नलिप्तचूर्णक्षरणसम्भवात्। ऊरुलिप्तचूर्णक्षरणस्य रत्यन्तरेषु सम्भवेऽपि पारिशेष्यादेवात्र उपवेशननियतः पद्मासनाख्यबन्धो गृह्यते। क्वचिदपि च प्रदेशे सालक्तकानि लाक्षारससहितानि पदानि पदतलचिह्नानि यत्र सः। अनेन दण्डाय-

---

(१) विविधसुरताज्ञ इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भावोन्नता यथा—

"मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्जनैः
रभसरचितैः (१) अङ्गन्यासैर्महोत्सवबन्धुभिः।
असकृदसकृत्स्फारस्फारैरपाङ्गविलोकितैः
त्रिभुवनजये सा पञ्चेषोः करोति सहायताम्॥" (ङ)

स्वल्पव्रीड़ा यथा—"धन्यासि या कथयसि" इत्यत्रैव (१११ पृष्ठे) (च)।

आक्रान्तनायका यथा—

"स्वामिन्! भङ्गुरयालकं सतिलकं भालं विलासिन्! कुरु
प्राणेश! त्रुटितं पयोधरतटे हारं पुनर्योजय।
इत्युक्त्वा सुरतावसानसमये सम्पूर्णचन्द्रानना
स्पृष्टा तेन तथैव जातपुलका प्राप्ता पुनर्मोहनम्॥" (छ)

---

मानया कृता रतिः सूचिता, तत्रैव आस्तरणवस्त्रे पदतलचिह्नपतनसम्भवात्। वलीभङ्गानामुदरपार्श्वस्थ-वक्रत्रिवलीनामाभोगैश्चन्दनादिलेपचिह्नविस्तारैरुपलक्षित इत्यर्थः। एतेन पार्श्वशयितया कृता रतिः सूचिता, तत्रैव त्रिवलीलेपचिह्नपतनसम्भवात्। अलकेभ्यश्चूर्णकुन्तलेभ्यः पतितैः संघर्षाद्विच्युतैः शीर्णकुसुमैर्मर्दित-पुष्पैश्चोपलक्षितः। अनेन च उत्तानशयितया कृता रतिः सूचिता, तत्रैव हि शिरःसंघर्षेण केशस्थ-कुसुमानां पतनशीर्णत्वयोः सम्भवात्। ईदृशः प्रच्छदपटः शय्योपरिस्थमास्तरणवस्त्रं सर्वावस्थं सर्वप्रकारं स्त्रिया रतं रतिं कथयति द्योतयति।

अतएवेयं समस्तरतकोविदा।

(ङ) मधुरेति। सा कामिनी सभ्रूभङ्गैः भ्रूविलाससहितैः मधुरवचनैः, कृतानि अङ्गुलीनां तर्जनानि भङ्गीविशेषा येषु तैः, रभसरचितैः हर्षेण कृतैः, महोत्सवस्य बन्धुभिः सहायैः युवकनयनानन्द-करैरित्यर्थः अङ्गन्यासैरङ्गविक्षेपैः, तथा असकृदसकृत् वारंवारं स्फारस्फारैः दीर्घदीर्घैः अपाङ्ग-विलोकितैः कुटिलकटाक्षपातैः, त्रिभुवनजये पञ्चेषोर्मदनस्य सहायतां साहाय्यं करोति। ईदृशभाव-दर्शनेनैव त्रिभुवनजनानां मदनवशीभूतत्वादिति भावः।

अत्र भ्रूभङ्गाद्यनुभावैरपरयुवतीभ्य उत्कर्षलाभादियं भावोन्नता।

(च) स्वल्पेति। सखीसमाजे आत्मनो रमणकालीनावस्थायाः स्पष्टकथनात् धन्यासीत्यादिश्लोकस्य वक्त्री नायिका दरव्रीड़ारूपापीत्यर्थः। एवञ्चेयं स्मरान्धादरव्रीड़योः सङ्कीर्णरूपेत्यवधेयम्।

(छ) स्वामिन्निति। सम्पूर्णचन्द्र इव आननं यस्याः सा तथोक्ता कामिनी, सुरतावसानसमये हे स्वामिन्! अलकं मदीयं स्खलितकेशं भङ्गुरय भङ्गुरं कुरु पुनरपि पूर्ववत् संयमयेत्यर्थः, तत्रैव

---

(१) अलसवलितैरिति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मध्याप्रगल्भयोर्भेदान्तराण्याह—

७४ । ते धीरा चाप्यधीरा च धीराधीरेति षड्‌विधे । (ज)

ते मध्याप्रगल्भे (झ) ।

तत्र—

७५ । प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा दहेद्रुषा ।
धीराधीरा तु रुदितैरधीरा परुषोक्तिभिः ॥ (ञ)

तत्र मध्या धीरा यथा—

"तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद्दुकूलं दधानः ।
मदधिवसतिमागाः कामिनां मण्डनश्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन ॥" (ट)

---

रमणविमर्द्देन स्खलनादिति भावः । हे विलासिन् ! भालं मदीयं ललाटं सतिलकं कुरु ललाटे पुनरपि पूर्ववत् तिलकमङ्कयेत्यर्थः, तवैव ललाटमर्द्देन तिलकप्रोञ्छनादित्याशयः । हे प्राणेश ! त्रुटितं छिन्नं हारं पयोधरतटे मम स्तनप्रदेशे पुनर्योजय, तवैव विमर्द्देन छिन्नत्वादिति भावः । इत्युक्त्वा विद्यमाना, तेन नायकेन तथैव उक्तप्रकारेणैव तेषु स्थानेषु स्पृष्टा, अतएव जातपुलका उत्पन्नरोमाञ्चा सती पुनर्मोहनं पुनरपि सुरतामोदेन विषयान्तरज्ञानहीनतां प्राप्ता पुनरपि रतौ प्रवृत्तेत्यर्थः ।

अत्र रतिश्रमेण निश्चेष्टीभूतस्य नायकस्य स्वामिन्नित्यादिना पुनराक्रमणादियमाक्रान्तनायका ।

(ज) ते इति । ते मध्याप्रगल्भे प्रत्येकमेव धीरा च अधीरा च धीराधीरा च इति इत्थं षड्‌विधे भवतः । तथा च मध्या त्रिविधा—धीरा अधीरा धीराधीरा च । प्रगल्भापि त्रिविधा—धीरा अधीरा धीराधीरा च । तत्र धीरा चासौ अधीरा चेति धीराधीरा क्वचित् धैर्यवती क्वचित् अधैर्यवती च ।

(झ) ते इति द्विवचनान्ततया प्रक्रान्तानां स्वीयादीनां मध्ये द्वयोर्ग्रहणे कर्त्तव्ये सन्निहितत्वात् मध्याप्रगल्भयोरेव ग्रहणमित्यभिप्रेत्याह ते मध्याप्रगल्भे इति ।

(ञ) धीरादीनां लक्षणोपयोगि कार्य्यमाह प्रियमिति । मध्या धीरा नायिका रुषा अन्यरमण्यासक्तिप्रतीतिजनितक्रोधेन, सोत्प्रासेन मन्दस्मितेन या वक्रोक्तिर्व्यङ्ग्यभाषणं तया प्रियं पतिं दहेत् सन्तापयेत् । मध्या धीराधीरा तु रुषा रुदितैः क्रन्दनैः प्रियं दहेत् । मध्या अधीरा तु रुषा परुषोक्तिभिः कटुवाक्यैः प्रियं दहेदित्यर्थः । एतेन स्मितपूर्वकवक्रोक्तिद्वारा नायकसन्तापजनिका मध्या धीरा, रोदनद्वारा नायकसन्तापजनिका मध्या धीराधीरा, कटूक्तिद्वारा नायकसन्तापजनिका मध्या अधीरेति लक्षणान्यवसीयन्ते ।

(ट) तदिति । अन्यरमण्याः सम्भोगं विधाय तदीयवसनं परिधायागते नायके नायिकाया उक्तिरियं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मध्यैव धीराधीरा यथा—

"बाले ! नाथ ! विमुञ्च मानिनि ! रुषं, रोषान्मया किं कृतं
खेदोऽस्मासु, न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।
तत् किं रोदिषि गद्‌गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम, का तवास्मि दयिता, नास्मीत्यतो रुद्यते ॥" (ठ)

इयमेवाधीरा यथा—(ड)

"सार्द्धं मनोरथशतैस्तव धूर्त्त ! कान्ता
सैव स्थिता मनसि कृत्रिमहावरम्या ।
अस्माकमस्ति न च कश्चिदिहावकाश-
स्तस्मात् कृतं चरणपातविड़म्बनाभिः ॥" (ढ)

---

शिशुपालवधे । त्वं मम प्रिया इति यदवादीस्त्वमुक्तवान् तत् अवितथं सत्यमेव । यद्यस्मात् प्रियजनेन प्रियया अन्यरमण्या परिभुक्तं परिहितं दुकूलं वसनं दधानः परिदधानः सन् त्वं मम अधिवसतिं गृहम् आगा आगतवान् । हि तथाहि, कामिनां जनानां मण्डनश्रीर्भूषणजनितशोभा वल्लभायाः प्रियाया आलोकनेन सफलत्वं व्रजति प्राप्नोति । तथा च मत्कर्त्तृकदर्शनेनैव तवेदमन्यरमणीपरिहितवसनपरिधानं सफलं जातं येनाहं तव प्रियेति भावः ।

अत्रोन्नेयस्मितपूर्वकेदृशवक्रोक्तिद्वारा नायकसन्तापजननादियं वक्री नायिका मध्या धीरा ।

(ठ) बाले इति । अन्यासक्तनायकस्य तद्‌वृत्तान्तावगमेन रुदत्या नायिकायाश्च उक्तिप्रत्युक्तिरूपमिदं पद्यम् । हे बाले ! इति नायककृतं सम्बोधनम् । हे नाथ ! इति नायिकाकृतं प्रतिसम्बोधनम् । हे मानिनि ! रुषं विमुञ्च इति नायकस्य सानुनयोक्तिः । मया रोषात् तव किं कृतम् इति नायिकायाः सखेदोक्तिः । अस्मासु मयीत्यर्थः खेदो रोषात् रोदनेन कष्टं कृत इत्यन्वयः । इयं प्रेमज्ञापिका नायकस्योक्तिः । भवान् मे मह्यं न अपराध्यति, किन्तु सर्वे एवापराधा मयि, अतो रोषाभावेन त्वयि मे खेदकरणमसम्भवमेवेति भावः । इति सकष्टा वक्रा च नायिकायाः प्रत्युक्तिः । तत्तदा ममापराधाभावे किं कस्मात् गद्‌गदेन वचसा अस्फुटवाक्येन रोदिषि इति नायकस्योक्तिः । कस्य अग्रतः समीपे मया रुद्यत इति प्रेमभङ्गसूचिका नायिकायाः प्रत्युक्तिः । नन्वित्यनुनये । मम अग्रत एतत् रुद्यते इति नायकस्योक्तिः । अहं तव का अस्मि इति नायिकाया निःसम्पर्कव्यञ्जिका प्रत्युक्तिः । त्वं मम दयिता प्रियासि इति पूर्ववत् प्रेमास्तित्वबोधिका नायकस्योक्तिः । अहं तव न दयितास्मि त्वदासक्तिविषयत्वाभावादिति भावः, इत्यतः कारणात् मया रुद्यते इति सातिकष्टा नायिकायाः प्रत्युक्तिः ।

अत्र यथायथोत्तरदानात् धैर्यं रोदनाच्चाधैर्यं प्रत्येतव्यम् । तथा चेयं रोदनेन नायकसन्तापजननात् मध्या धीराधीरा ।

(ड) इयमिति । इयमेव मध्यैव ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

७६ । प्रगल्भा यदि धीरा स्याच्छन्नकोपाकृतिस्तदा ।
उदास्ते सुरते तत्र दर्शयन्त्यादरान् वहिः ॥ (ण)

तत्र प्रिये (त)। यथा—

"एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरतः
ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि (१) संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥" (थ)

७७ । धीराधीरा तु सोल्लुण्ठभाषितैः खेदयेदमुम् । (द)

---

(ढ) सार्द्धमिति । परनायिकासम्भोगानन्तरमागत्य सापराधतया चरणपतितं नायकं प्रति कस्याश्चित् सरोषोक्तिरियम् । हे धूर्त्त ! कृत्रिमहावेन अस्वाभाविकलीलयैव रम्या मनोहरा । एतेनात्मनः स्वाभाविकमेव रम्यत्वं सूचितम् । सैव कान्ता, मनोरथशतैः त्वदीयैरेव नानाविलाससम्भोगाभिलाषैः सार्द्धं सह तव मनसि स्थिता । अतएव इह तव मनसि अस्माकं ममेत्यर्थः कश्चिदपि अवकाशः अवस्थितिस्थानं न चास्ति, तयैव कान्तया तव मनसः सर्वस्थानव्यापनादिति भावः । तस्मात् हेतोः, चरणपातविड़म्बनाभिः मम चरणे तव पतनरूपालीकोपद्रवैः कृतम् अलम्, इत्थं विड़म्बना न कुरु इत्यर्थः ।

अत्र हृश्यपरुषोक्तिद्वारा नायकसन्तापजननादियं मध्या अधीरा ।

(ण) प्रगल्भेति । प्रगल्भा नायिका यदि धीरा स्यात् तदा छन्ना कृत्रिमहास्यादिना संवृता कोपाकृतिः कोपजनितमुखरक्तिमाद्याकारो यया सा, तथा तत्र प्रिये नायके वहिरादरान् दर्शयन्ती सती रुषा सुरते उदास्ते उदासीना भवति अनुत्सुका तिष्ठतीत्यर्थः । एतेन संवृतकोपचिह्ना सती वहिरादरप्रदर्शिनी सुरतोदासीना नायिका धीराप्रगल्भेति लक्षणमप्यवसीयते ।

(त) कारिकास्थ-तत्रेत्यस्यार्थमाह तत्रेति । अयमर्थश्च "प्रियं सोत्प्रासवक्रोक्त्या" इत्यत्र प्रियस्य प्रक्रान्तत्वात् सर्वनामशब्दानाञ्च प्रक्रान्तवाचित्वादिति बोध्यम् ।

(थ) एकत्रेति । चतुरया नायिकया अन्यरमण्यासक्तं कान्तमागच्छन्तमालोक्येत्यर्थाल्लभ्यते, दूरत एव प्रत्युद्गमात् अभ्युत्थानात् एकत्र स्थाने आसनेन उपवेशनेन संस्थितिरवस्थानं परिहृता वर्जिता, ताम्बूलानयनच्छलेन स्थानान्तरगमनादिति शेषः रभसाश्लेषोऽपि सत्वरालिङ्गनमपि संविघ्नितः प्रतिबद्धः, तथा अन्तिके कान्तस्य निकटे परिजनं भृत्यं व्यापारयन्त्या शुश्रूषार्थं नियोजयन्त्या सत्या आलापोऽपि न मिश्रितः तदालापेन सह न योजितः पुरुषान्तरसन्निधानात् लज्जाव्याजेन आलापो न कृत इत्यर्थः, इत्थञ्च कान्तं नवागतं पतिं प्रति उपचारतः उपयुक्तव्यवहारैरेव कोपः कृतार्थीकृतः सफलीकृतः । एतेन सुरतौदासीन्यमपि सूचितम् ।

अतएवेयं नायिका धीरा प्रगल्भा ।

---

(१) रभसात् श्लेषोऽपि इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अमुं नायकम् (ध)। यथा मम।

"अनलङ्कृतोऽपि सुन्दर! हरसि मनो मे यतः प्रसभम्।
किं पुनरलङ्कृतस्त्वं सम्प्रति नखरक्षतैस्तस्याः॥" (न)

७८। तर्जयेत्ताड़येदन्या—(प)

अन्या अधीरा। यथा—"शोणं वीक्ष्य मुखम्" (८४पृष्ठे) इत्यत्रैव (फ)। अत्र च सर्वत्र रुषेत्यनुवर्त्तते (ब)।

७९। प्रत्येकं ता अपि द्विधा।
कनिष्ठज्येष्ठरूपत्वान्नायकप्रणयं प्रति॥ (भ)

ता अनन्तरोक्ताः षड़्भेदा नायिकाः (म)। यथा—

---

(द) धीरेति। धीराधीरा तु प्रगल्भा रुषा सोल्लुण्ठभाषितैः आपाततः प्रियवत्प्रतीयमानैरपि वस्तुतः अप्रियैर्वाक्यैः अमुं नायकं खेदयेत् सन्तापयेत्। तथा च सोल्लुण्ठभाषणद्वारा नायकसन्तापजनिका नायिका धीराधीरा प्रगल्भेति लक्षणम्।

(ध) अमुमिति। प्रियमित्यस्य प्रक्रान्तत्वेऽपि प्रतिपाद्यभेदाभावात् अमुं नायकमित्युक्तौ न दोषः।

(न) अनलमिति। अन्यरमणीनखक्षतचिह्नितं नायकं प्रति नायिकाया उक्तिरियम्। हे सुन्दर! त्वम् अनलङ्कृतोऽपि भूषणैरभूषितोऽपि यतो मे मम मनः प्रसभं बलेन हरसि, अतः सम्प्रति तस्याः कामिन्याः नखरक्षतैः रमणकालीननखाघातचिह्नैः अलङ्कृतो भूषितः सन् हरसीत्यत्र किं पुनर्वक्तव्यमित्यर्थः।

ईदृशसोल्लुण्ठभाषणादेवेयं वक्त्री नायिका धीराधीरा प्रगल्भा।

(प) तर्जयेदिति। अन्या अधीरा प्रगल्भा नायिका रुषा तर्जयेत् नायकं भर्त्सयेत् ताड़येत् प्रहरेद्वा। तेन च नायकस्य तर्जनताड़नान्यतरकारिणी नायिका अधीरा प्रगल्भा।

(फ) शोणमिति। अत्र नायकं प्रति पादप्रहारादियं नायिका अधीरा प्रगल्भा।

(ब) अत्रेति। अत्र च सर्वत्र एषु च सर्वेषु धीराधीरादीनां कार्य्येषु लक्षणेषु चेत्यर्थः, रुषेत्यनुवर्त्तते "प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा दहेद्‌ रुषा" इत्यत इति शेषः। एतेन मानाख्यविप्रलम्भशृङ्गाररस एव मध्याप्रगल्भयोर्धीरादिभेदाः, न पुनरन्येषु रसेष्विति दर्शितम्।

(भ) प्रत्येकमिति। ताः पूर्वोक्ता धीरादिषट्प्रकारा अपि मध्याप्रगल्भा नायिकाः प्रत्येकम् एकैका एव नायकप्रणयं प्रति नायकानुरागविषये कनिष्ठज्येष्ठरूपत्वात् अल्पाधिकत्वात् नायकस्य अल्पानुरागभागित्वात् अधिकानुरागभागित्वाच्चेत्यर्थः द्विधा भवन्ति।

(म) ता इति। अनन्तरोक्ताः पूर्वोक्ताः, षड्भेदा धीरादिषट्प्रकाराः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरात्
एकस्या नयने पिधाय विहितक्रीड़ानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः (१) सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्त्तोऽपरां चुम्बति ॥" (य)

८० । मध्याप्रगल्भयोर्भेदास्तस्माद्द्वादश कीर्त्तिताः ।
मुग्धा त्वेकैव तेन स्युः स्वीयाभेदास्त्रयोदश ॥ (र)

८१ । परकीया द्विधा प्रोक्ता परोढ़ा कन्यका तथा । (ल)

तत्र—(व)

८२ । यात्रादिनिरतान्योढ़ा कुलटा गलितत्रपा । (श)

(य) दृष्टेति । धूर्त्तो नायकः, प्रियतमे भार्य्याद्वयम् एकस्मिन् आसने संस्थिते उपविष्टे दृष्ट्वा दूरादवलोक्य, आदरात् आगमननिःशब्दत्वं प्रति यत्नात्, पश्चादुपेत्य पृष्ठदेशादागत्य, विहितं कृतं क्रीड़ानुबन्धः खेलारम्भ एव छलं येन स तथोक्तः सन् एकस्या भार्य्यायाः नयने नेत्रद्वयं पिधाय पाणिभ्यामाच्छाद्य, ईषदल्पं यथा स्यात्तथा वक्रिता वक्रीकृता कन्धरा ग्रीवा येन स तादृशः सपुलकः सरोमाञ्चश्च सन्, प्रेम्णा प्रणयेन उल्लसत् उत्फुल्लत् मानसं मनो यस्यास्ताम्, तथा अन्तर्हासेन अभ्यन्तरप्रकाशेन लसती स्फीतीभवती कपोलफलके गण्डयुगलं यस्यास्तां तथोक्तामपरां भार्य्यां चुम्बति ।

अत्र नायकप्रणयं प्रति प्रथमा कनिष्ठा चुम्बने वञ्चितत्वात्, द्वितीया तु ज्येष्ठा चुम्बनेन चरितार्थत्वात् । अत्र मध्याप्रगल्भाधीरादीनां कियत्यपि लक्षणे न प्राप्तेऽपि तदखिलसम्भावनयैवेदमुदाहृतम् । नायकप्रणयं प्रति कनिष्ठज्येष्ठरूपत्वप्रदर्शनस्यैवात्र प्रधानोद्देश्यत्वादिति बोध्यम् ।

(र) मध्येति । तस्मात् उक्तप्रकारभेदप्रदर्शनात् मध्याप्रगल्भयोर्द्वादश भेदाः प्रकाराः कीर्त्तिताः । मुग्धा तु एकैव एकप्रकारैव, तेन हेतुना, स्वीयाया नायिकाया भेदाः प्रकाराः त्रयोदश स्युः । अत्र मूलमात्रप्रदर्शितान् प्रधानभेदानादायैव त्रयोदश इत्युक्तम्, अस्माभिस्तु स्वीयादीनां प्रत्येकत एव प्रथमावतीर्णयौवनादयः अवान्तरभेदाः प्रदर्शिता इति न किञ्चिदसामञ्जस्यमिति बोध्यम् ।

(ल) परेति । परकीया अन्यदीया इति च नार्थान्तरम् । परोढ़ा परपरिणीता कन्यका अजातविवाहा । कन्यकायास्तु पित्राद्यधीनतया परकीयात्वम् ।

(व) तत्रेति । तत्र तयोः परोढ़ाकन्यकयोर्मध्ये, परोढ़ाया लक्षणमाहेति शेषः ।

(श) यात्रेति । अन्योढ़ा परोढ़ा । सा च द्विविधा—एका गलितत्रपा निर्लज्जा यात्रादिनिरता महोत्सवादौ नृत्यगीतादिप्रवृत्ता, द्वितीया तु गृहस्थापि गलितत्रपा कुलटा पुरुषान्तरगामिनी । एवञ्च गलितत्रपेति उभयोरेव विशेषणमिति बोध्यम् । यात्रादिनिरता नटीप्रभृतिः ।

(१) ईषद्वक्रिमकन्धर इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"स्वामी निश्वसितेऽप्यसूयति मनोजिघ्रः सपत्नीजनः
श्वश्रूरिङ्गितदैवतं नयनयोरीहालिहो यातरः।
तद्दूरादयमञ्जलिः किमधुना दृग्भङ्गिभावेन ते
वैदग्धीमधुर! प्रबन्धरसिक! व्यर्थोऽयमत्र श्रमः॥" (प)

अत्र हि मम परिणीता अन्नाच्छादनादिदातृतया स्वाम्येव, न तु वल्लभः; त्वन्तु वैदग्धोमधुरत्वेन प्रबन्धरसिकतया च (१) मम वल्लभोऽसीत्यादिव्यङ्ग्यार्थवशादस्याः परनायकविषया रतिः प्रतीयते (स)

८३। कन्या त्वजातोपयमा सलज्जा नवयौवना॥ (ह)

अस्याश्च पित्राद्यायतत्वात् परकीयात्वम्। यथा—मालतीमाधवादौ मालत्यादिः (च)।

---

(प) कुलटाया उदाहरणमाह स्वामीति। स्वामी परिणेता निश्वसितेऽपि मम निश्वासपरित्यागेऽपि असूयति दोषमाविष्करोति, उपपतिमप्राप्येयं निश्वसितीत्यनुमानादिति भावः। सपत्नीजनः मनोजिघ्रः सर्वदा मम मनोऽभिप्रायमनुसन्धत्त इत्यर्थः। "घेड्दृशिपाघ्राध्मः शः" इति घ्राधातोः शप्रत्ययं तस्य जिघ्रादेशः। श्वश्रूः इङ्गितस्य हस्तसङ्केतादेः दैवतं देवतावत् सर्वं भावम् अवगच्छतीत्यर्थः यातरो भ्रातृश्वशुरदेवराणां पत्न्यः नयनयोर्मम नेत्रयोः ईहां चेष्टां कटाक्षपातादिकं लिहन्ति साकल्येनानुसन्दधत इति ताः। तत्तस्मात् दूरादेव अयमञ्जलिर्मया कृत इति शेषः। ते तव अधुना दृग्भङ्गिभावेन नयनसङ्केतेन किं फलमिति शेषः। वैदग्ध्या चातुर्येण मधुरः अतीवमनोहरस्तत्सम्बोधनम्। प्रबन्धेषु पद्मासनादिप्रकृष्टरतिबन्धेषु रसिक आग्रहान्वितस्तत्सम्बोधनम्। अत्र स्थाने अयं तव श्रमो नयनभङ्ग्यादिप्रयासो व्यर्थः, उक्तप्रकारनानाप्रतिबन्धकवशेन मयेदानीं तवाभिलाषस्य पूरयितुमशक्यत्वादिति भावः।

(स) नन्वियं वक्त्री नायिका कुलटेति कथं निर्णीयते "व्यर्थोऽयमत्र श्रमः" इत्यनेन दुरभिसन्धिमत्परपुरुषनिरासस्यापि वक्तुं शक्यत्वादित्याह अत्रेत्यादि। स्वाम्येव प्रभुरेव, न तु वल्लभो न तु प्रियः। वैदग्धीमधुरत्वेन चातुर्य्यनिबन्धनातीवमनोहरत्वेन, प्रबन्धरसिकतया उत्कृष्टरतिबन्धोत्सुकतया च। रतिरनुरागः। न केवलमुक्तविधव्यङ्ग्यार्थवशात् परनायकविषया रतिः प्रतीयते अपि तु अधुनापदात् कालान्तरे अत्रपदात् स्थानान्तरे च श्रमसार्थकमासीदिति व्यङ्ग्यार्थप्रतीत्यापि परनायकविषया रतिः प्रतीयत इति बोध्यम्।

(ह) कन्येति। अजातोपयमा अजातविवाहा।

(च) ननु कन्याया एवं लक्षणे कथं परकीयात्वमित्याह अस्या इति। एतेन अनुरागविषयीभूतपुरुषापेक्षया भिन्नजनाधीनत्वं परकीयात्वमिति सूचितम्।

---

(१) वैदग्धीमधुरप्रबन्धरसिकतया चेति पाठान्तरम्। क्वचिच्च तथा पाठे चकारो नास्ति।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

८४ । धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका ॥ (क)

८५ । निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि ।
वित्तमात्रं समालोक्य सा रागं दर्शयेद्बहिः ॥
काममङ्गीकृतमपि परिक्षीणधनं नरम् ।
मात्रा निष्क्रामयेदेषा पुनः सन्धानकाम्यया ॥
तस्कराः पण्डकाः (१) मूर्खाः सुखप्राप्तधनास्तथा ।
लिङ्गिनश्छन्नकामाद्या आसां प्रायेण वल्लभाः ॥
एषापि मदनायत्ता क्वापि सत्यानुरागिणी ।
रक्तायां वा विरक्तायां रतमस्यां सुदुर्लभम् ॥ (ख)

(क) साधारणस्त्रीरूपां नायिकां लक्षयति धीरेति । धीरा शिक्षिता, कलासु नृत्यगीतादिषु, प्रगल्भा दक्षा, वेश्या सामान्यनायिका साधारणस्त्रीरूपा नायिका स्यात् । तत्र वेश्या सामान्यनायिका इत्येतावन्मात्रमेव लक्षणं धीरा कलाप्रगल्भेति तु तस्या एव भेदद्वयमिति बोध्यम् ।

(ख) वेश्यां परिचाययितुं तत्स्वभावमाह निर्गुणानित्यादि । सा वेश्या निर्गुणानपि पुरुषान् न द्वेष्टि न बहिर्विद्वेषं दर्शयति तेभ्यो धनलाभलोभादिति भावः । गुणिष्वपि पुरुषेषु न रज्यति नानुरक्ता भवति तथात्वे अनुरागिण्येव पुरुषे रन्तुमिच्छौ धनलाभासम्भव इत्याशयः । वित्तमात्रं स्वकामिनः पुरुषस्य धनमात्रं समालोक्य बहिः न पुनरन्तरेणापीत्यर्थः रागमनुरागं दर्शयेत्, केवलधनलाभेच्छयेत्यभिप्रायः । एतेन केवलधनलाभलोभिन पुरुषमात्रकामुकी वेश्येति दर्शितम् । एषा वेश्या कामं पर्याप्तं यथा स्यात्तथा अङ्गीकृतमपि रन्तृत्वेन स्वीकृतमपि परिक्षीणधनं कारणान्तरेण आत्मन एव प्रदानेन वा नष्टधनं नरं स्वकामुकं पुरुषं पुनः सन्धानकाम्यया पुनरपि धनप्रदानादेव सङ्गमेच्छया मात्रा जनन्या द्वारा निष्क्रामयेत् दूरीकारयेत् । तस्कराश्चौराः, पण्डका वातरोगेण विनष्टाण्डकोषाः, मूर्खाः सर्वप्रकारविद्याहीनाः, सुखेन अनायासेन प्राप्तं धनं यैस्ते, तथा लिङ्गिनो रक्तपटधारिप्रभृतयो भण्डाः, छन्नकामा गोपनेन रमणाभिलाषिणः पुरुषाः तदाद्याः प्रायेण आसां वेश्यानां वल्लभा रन्तारः । एषा वेश्यापि मदनायत्ता सती क्वापि कस्मिन्नपि पुरुषे सत्यानुरागिणी यथार्थमेवानुरक्ता स्यात् । रक्तायामनुरक्तायां विरक्तायां वा अस्यां वेश्यायां रतं सुरतं सदुर्लभम् । विरक्तायां विरागादेव रक्तायामपि अधिकरमणेन शरीरक्षयशङ्कया तया नानाच्छलकरणादिति भावः । एतत्तु प्रायिकाभिप्रायेणाभिहितम्, अतएव न स्यादित्यनुक्त्वा सुदुर्लभमित्युक्तम् ।

(१) पण्ड्रकाः, षण्डका इति पाठभेदौ ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पण्डको वातरोगपण्ढादिः (१)। छन्नं प्रच्छन्नं ये कामयन्ते ते छन्नकामाः। तत्र रागहीना यथा—नटकमेलकादौ मदनमञ्जर्य्यादिः। रक्ता यथा—मृच्छकटिकादौ वसन्तसेनादिः (ग)।

पुनश्च (घ)।

८६। अवस्थाभिर्भवन्त्यष्टावेताः षोड़शभेदिताः।
स्वाधीनभर्त्तृका तद्वत् खण्डिताऽथाभिसारिका॥
कलहान्तरिता विप्रलब्धा प्रोषितभर्त्तृका।
अन्या वासकसज्जा स्याद्विरहोत्कण्ठिता तथा॥ (ङ)

तत्र—(च)

८७। कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम्।
विचित्रविभ्रमासक्ता सा स्यात् स्वाधीनभर्त्तृका॥ (छ)

---

(ग) अत्रास्पष्टार्थपदद्वयं व्याचष्टे पण्डक इति। वातरोगेण पण्डो नष्टाण्डकोषतया नपुंसकप्रायः। अल्पः पण्डः पण्डकः अल्पार्थे कप्रत्ययः। तथा च चरकः—"वायुग्निदोषाद्‌वृषणौ तु यस्य नाशं गतौ वातिकपण्डकः सः।" अमरकोषश्च—"क्लीवं पण्डो नपुंसकम्।" मूले पण्डका इति बहुवचनं गणार्थं प्रयुक्तम्, अत्रादिशब्देन च स एव गणो गृह्यते। केचिन्नपुंसकजनाः पैतृकधनाधिकाराद्यर्थमात्मनः पुरुषत्वख्यापनाय वेश्यालयं प्रविशन्ति तत्प्रभृतिरत्र गणः। प्रच्छन्नं गुप्तं यथा स्यात्तथा। "न रज्यति गुणिष्वपि" इत्यस्योदाहरणमाह रागहीना यथेति। "क्वापि सत्यानुरागिणी" इत्यस्योदाहरणमाह रक्ता यथेति।

(घ) पुनश्चेति। पुनश्च तासामेव भेदानाहेति शेषः।

(ङ) अवस्थाभिरिति। षोड़श भेदा आसां सञ्जाता इति षोड़शभेदिताः। षोड़श भेदाश्च स्वीयास्त्रयोदश, परोढ़ाकन्यकारूपे परकीये द्वे, एका च साधारणस्त्रीति। एताः षोड़शभेदिता अपि नायिकाः पुनरवस्थाभिरष्टभिः प्रकारैरष्टौ अष्टविधा भवन्ति। ता आह स्वाधीनेत्यादि।

(च) तत्रेति। तासु मध्ये इत्यर्थः।

(छ) कान्त इति। रतिगुणेन अनुरागरूपगुणेन आकृष्टः कान्तः पतिः यस्या अन्तिकं न जहाति, विचित्रविभ्रमासक्ता नानाविधविलासनिरता सा नायिका स्वाधीनभर्त्तृका स्यात्। स्वस्या आत्मनः अधीनो भर्त्ता यस्याः सेति व्युत्पत्तिः।

---

(१) पण्डका वातरोगपण्डादिः, पण्डका वातरोगपाण्डादिरित्यपि पाठभेदौ।



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"अस्माकं सखि! वाससी" इत्यादि (८४ पृष्ठे) (ज)।

८८। पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः।
सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता॥ (झ)

यथा—"तदवितथमवादीः" इत्यादिः (११४ पृष्ठे) (ञ)।

८९। अभिसारयते कान्तं या मन्मथवशंवदा।
स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका॥ (ट)

क्रमाद्यथा—

"न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि।
निपुणं तथैनमभिगम्य (१) वदेः अभिदूति काचिदिति सन्दिदिशे॥" (ठ)

"उत्क्षिप्तं करकङ्कणद्वयमिदं बद्धा दृढं मेखला
यत्नेन प्रतिपादिता मुखरयोर्मञ्जीरयोर्मूकता।

(ज) यथेति। "अस्माकं"मित्यादिश्लोके "अस्याः प्रियो नान्यतो दृष्टिं निक्षिपति" इत्यनेन कान्तस्य रतिगुणाकृष्टत्वेन तदन्तिकापरित्यागात् वक्त्री नायिका स्वाधीनभर्तृका।

(झ) पार्श्वमिति। प्रियः पतिः अन्यस्या नायिकायाः सम्भोगचिह्नं नखक्षततदीयवसनपरिधानादिकं यस्य सञ्जातमिति तादृशः सन् यस्याः पार्श्वं समीपम् एति आगच्छति, ईर्ष्यया कषायिता विकृतीकृत-हृदया सा नायिका खण्डितेति धीरैः कथिता। खण्डिता अवसरे परित्यक्तेति व्युत्पत्तिः।

(ञ) यथेति। अत्र अन्यनायिकावसनपरिधानरूपसम्भोगचिह्नितस्य पत्युरागमनात् ईर्ष्याकषायिता वक्त्री नायिका खण्डिता।

(ट) अभीति। या स्त्री मन्मथवशंवदा मदनायत्ता सती कान्तं वल्लभं पुरुषम् अभिसारयते आत्मनोऽभिमुखं गमयति दूत्यादिना आनयति, या वा स्वयमेव अभिसरति कान्ताभिमुखं याति, एषा सा धीरैरभिसारिका उक्ता। अत्र व्युत्पत्तिः स्पष्टा। इयन्तु अभिसारणकरणेन अभिसरणकरणेन च द्विविधा। अतएवाह क्रमादिति।

(ठ) न चेति। स प्रियतमो यथा मे लघुताञ्च नावगच्छति कामार्त्ततया स्वयमेव दूतीप्रेरणादिति भावः। यथा च मयि करुणां कुरुते अभिगम्येत्याशयः। एनं प्रियतमम् अभिगम्य त्वं तथा निपुणं सनैपुण्यं यथा स्यात्तथा वदेः। काचित् कामिनी अभिदूति दूत्याः सकाशे इति सन्दिदिशे वाचिकं प्रेषितवती। सन्दिदिशे इति व्यतीहारे आत्मनेपदम्।

अभिसारणकरणादियं वक्त्री नायिका प्रथमलक्षणा अभिसारिका।

(ड) उत्क्षिप्तमिति। हे प्रियसखि! इदं करकङ्कणद्वयम् उत्क्षिप्तं मणिबन्धादुपरिभागे

(१) अवगम्य इति क्वचित् पाठः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आरब्धे रभसान्मया प्रियसखि! क्रीड़ाभिसारोत्सवे
चण्डालस्तिमिरावगुण्ठनपटक्षेपं विधत्ते विधुः॥" (ड)

९० । संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा ।
अवगुण्ठनसंवीता कुलजाभिसरेद्यदि ॥ (ढ)

९१ । विचित्रोज्ज्वलवेशा तु रणन्नूपुरकङ्कणा (१) ।
प्रमोदस्मेरवदना स्याद्वेश्याभिसरेद्यदि ॥ (ण)

९२ । मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना ।
आविद्धगतिसञ्चारा (२) स्यात् प्रेष्याभिसरेद्यदि ॥ (त)

तत्राद्ये "उत्क्षिप्तम्" इत्यादि (१२२ पृष्ठे)। अन्ययोः (३) जह्यमुदाहरणम् (थ)।

---

उत्तोल्य धृतम्। यथा च शब्दो न भवेदिति भावः। एवमन्यत्रापि। मेखला काञ्ची दृढं बद्धा। मुखरयोः शब्दायमानयोः मञ्जीरयोर्नूपुरयोः मूकता निःशब्दता यत्नेन तद्दुत्तोलनेन प्रतिपादिता कृता। इत्यञ्च मया रभसात् हर्षात् क्रीड़ाभिसारोत्सवे विहाराय अभिसरणरूपोत्सवे आरब्धे सति, चण्डाल-यण्डालवत् क्रूरस्वभावो विधुश्चन्द्रः तिमिरमन्धकार एवावरकत्वात् अवगुण्ठनपटस्तस्य क्षेपं हठादुदयेनोत्सारणं विधत्ते अतीतसामीप्ये वर्त्तमाना अकरोदित्यर्थः। अतो नाभिसरणं पूर्णमासीदिति भावः।

इयं वक्री नायिका स्वयमभिसरणात् द्वितीयलक्षणा अभिसारिका।

(ढ) स्वयमभिसरणप्रसङ्गे कुलजादिभेदेनाभिसरणप्रकारभेदानाह संलीनेति। यदि कुलजा अभिसरेत्, तदा सा स्वेषु गात्रेषु अङ्गेषु संलीना सङ्कोचितसर्वाङ्गीत्यर्थः, मूकीकृतविभूषणा निःशब्दीकृतालङ्कारा, अवगुण्ठनेन संवीता आवृता च स्यात्, अन्यकर्तृकपरिचयभयादिति भावः।

(ण) विचित्रेति। यदि वेश्या अभिसरेत्, तदा सा विचित्र उज्ज्वलश्च वेशो यस्याः सा, रणती शब्दायमाने नूपुरकङ्कणे यस्याः सा, तथा प्रमोदेन आनन्देन स्मेरं प्रफुल्लं वदनं यस्याः सा तादृशी च स्यात्। द्रष्टॄणामपि मनोमोहनायेति भावः।

(त) मदेति। यदि प्रेष्या दासी अभिसरेत् तदा सा मदेन मदनमत्ततया स्खलितो विकृतः संलापो भाषणं यस्याः सा, विभ्रमेण विलासेन उत्फुल्ले लोचने यस्याः सा, तथा आविद्धया स्खलितया गत्या पादक्षेपेण सञ्चारो गमनं यस्याः सा तादृशी च स्यात्। अत्यन्तकामातुरत्वादिति भावः।

(थ) तत्रेति। तत्र तेषु अभिसरणप्रकारेषु मध्ये, आद्ये कुलजाया अभिसरणप्रकारे, "उत्क्षिप्तम्"

---

(१) चलन्नूपुरनिस्वना इति पाठान्तरम्। (२) आविद्धगतिसञ्चारा इति क्वचित् पाठः।
(३) अन्ययोरित्यपि पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रसङ्गादभिसारस्थानानि कथ्यन्ते ।

९३ । चेत्रं वाटी भग्नदेवालयो दूतीगृहं वनम् ।
मालयश्च (१) श्मशानञ्च नद्यादीनां तटी तथा ॥
एवं कृताभिसाराणां पुंश्चलीनां विनोदने ।
स्थानान्यष्टौ तथा ध्वान्तच्छन्ने षु क्वचिदाश्रयः (२) ॥ (द)

९४ । चाटुकारमपि प्राणनाथं रोषादपास्य या ।
पश्चात्तापमवाप्नोति कलहान्तरिता तु सा ॥ (ध)

यथा मम तातपादानाम्—

"नो चाटुश्रवणं कृतं न च दृशा हारोऽन्तिके वोच्चितः
कान्तस्य प्रियहेतवे निजसखीवाचोऽपि दूरीकृताः ।

---

इत्यादि पद्यम् उदाहरणमित्यर्थः । अन्ययोर्वेश्याप्रेष्ययोः अभिसरणप्रकारद्वये उदाहरणमूह्यमनुसन्धेयम् । तत्र क्रमादुदाहरणं यथा—

"अपद्मा श्रीरेषा प्रहरणमनङ्गस्य ललितम्, कुलस्त्रीणां शोको मदनवरवृक्षस्य कुसुमम् ।
सलीलं गच्छन्ती रतिसमयलज्जाप्रणयिनी, रतिश्चैव रङ्गे प्रियपथिकसार्थैरनुगता ॥"

"ताम्बूलाक्तं दशनमसकृद्दर्शयन्तीह चेटी, घोटीकेषाधिकृतविकृतं हेतुहीनं हसन्ती ।
स्थानस्थानस्खलितपदविन्यासमाभासमाना, यूनामग्रे वसति कुटिलं नर्त्तितोच्चैर्नितम्बम् ॥"

(द) चेत्रमिति । चेत्रम् आवरणोपयोगिशस्यमयभूमिः । वाटी निर्जनवास्तुस्थानम् । "वाटी वास्तौ गृहोद्याने" इति हेमोक्तेः । मा लक्ष्मीः शोभा लीयते अवतिष्ठते अस्मिन्निति व्युत्पत्त्या मालयमुपवनम् । कृताभिसाराणां पुंश्चलीनां कुलटानां विनोदने मनोमोदने एवमेतानि अष्टौ स्थानानि सम्पद्यन्ते, तथा ध्वान्तच्छन्नेषु अन्येष्वपि अन्धकारावृतेषु क्वचित् केषुचित् गृहादिषु आश्रयः अवलम्बनं विनोदने सम्पद्यते ।

(ध) चाटिवति । या नायिका रोषात् चाटुकारमपि प्रियवाक्यवादिनमपि प्राणनाथं कान्तम् अपास्य परित्यज्य पश्चात्तापम् अनुतापमवाप्नोति, सा कलहान्तरिता । कलहेन अन्तरिता व्यवहितेति व्युत्पत्तिः ।

(न) नो इति । याचमानस्यापि कान्तस्य रोषात् प्रत्याख्यानेन पश्चात्तापमवाप्तायाः कस्याश्चित्

---

(१) मालापश्च, मालामश्च, मालापञ्च इति पाठान्तराणि । (२) ध्वान्तच्छन्ने क्वचिदाश्रये इति पाठभेदः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पादान्ते विनिपत्य तत्क्षणमसौ गच्छन् मया मूढ़या
पाणिभ्यामवरुध्य हन्त ! सहसा कण्ठे कथं नार्पितः ॥" (न)

९५ । प्रियः कृत्वापि सङ्केतं यस्या नायाति सन्निधिम् ।
विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता ॥ (प)

यथा—"उत्तिष्ठ दूति ! यामो यामो यातस्तथापि नायातः ।
याऽतः परमपि जीवेत् जीवितनाथो भवेत् तस्याः ॥" (फ)

९६ । नानाकार्य्यवशाद्यस्या दूरदेशं गतः पतिः ।
सा मनोभवदुःखार्त्ता भवेत् प्रोषितभर्त्तृका ॥ (ब)

यथा—"तां जानीयाः (१) परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।

---

सखीं प्रति उक्तिरियम् । चाटोः कान्तोक्तप्रियवाक्यस्यापि श्रवणं नो न कृतम् । अन्तिके निकटे हारो मम प्रसादनाय तेन दीयमाना मुक्तामाला हृश्या चक्षुषापि न च वीक्षिता मया न दृष्टः, तथा कान्तस्य प्रियहेतवे सन्तोषविधानाय निजसख्याः वाचोऽपि उपदेशवाक्यान्यपि दूरीकृताः परिहृताः । असौ कान्तः पादान्ते मम प्रसन्नतासम्पादनाय चरणसमीपे विनिपत्य तत्क्षणमेव गच्छन् मम प्रसन्नताया अदर्शनादिति भावः, मूढ़या मया पाणिभ्यामवरुध्य सहसा तदानीमेव कथं कण्ठे नार्पितो नारोपितः । हन्तेति खेदे ।

अत्रानुनयपरायणप्रियपरित्यागेनानुतापप्राप्तेरियं वक्री नायिका कलहान्तरिता ।

(प) प्रिय इति । प्रियो वल्लभो जनः सङ्केतं कृत्वापि यस्याः सन्निधिं नायाति नागच्छति, तेनैव तु नितान्तमवमानिता सा विप्रलब्धा ज्ञेया । विप्रलब्धा प्रतारितेति व्युत्पत्तिः ।

(फ) उत्तिष्ठेति । सङ्केतस्थानमागत्य वल्लभविलम्बमवेक्षमाणाया नायिकाया दूतीं प्रति सखेदोक्तिरियम् । हे दूति ! उत्तिष्ठ, वयं यामो गच्छामः, येन, यामः अत्रागमनावधिरेकः प्रहरो यातो गतः, तथापि नायातः स वल्लभो नागतः । अतः परमपि या जीवेत्, स जीवितनाथः प्राणेश्वरस्तस्या भवेत् । मदनवेदनया अतः परं नाहं जीवामि स च मे न भवेदिति भावः ।

अत्र सङ्केतं कृत्वापि प्रियस्यानागमनादियं वक्री नायिका विप्रलब्धा ।

(ब) नानेति । यस्याः पतिः नानाकार्य्यवशात् विद्याधनार्जनपरनियोगादिनिमित्तात् दूरदेशं गतः, मनोभवदुःखार्त्ता कामपीड़ातुरा सा नायिका प्रोषितभर्त्तृका भवेत् । प्रोषितो विदेशं गतो भर्त्ता यस्याः सा प्रोषितभर्त्तृकेति व्युत्पत्तिः ।

(भ) तामिति । कुवेरशापेन भार्य्यामपहाय दूरदेशं गतस्य कस्यचिद्यक्षस्य मेघं प्रति उक्तिरियं

---

(१) जानीथा इति मूलपुस्तकेषु पाठो दृश्यते ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गाढ़ोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥" (भ)

९७। कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि ।
सा तु वासकसज्जा स्याद्विदितप्रियसङ्गमा ॥ (म)

यथा राघवानन्दानां नाटके—

"विदूरे केयूरे कुरु करयुगे रत्नवलयै-
रलं गुर्वी ग्रीवाभरणलतिकेयं किमनया ।
नवामेकामेकावलिमयि ! मयि त्वं विरचये-
र्न पथ्यं नेपथ्यं बहुतरमनङ्गोत्सवविधौ ॥" (य)

९८। आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः (१)।
तदनागमदुःखार्त्ता विरहोत्कण्ठिता तु सा ॥ (र)

मेघदूते। सहचरे मयि दूरीभूते, खसहचरे चक्रवाके दूरीभूते एकाकिकाकिनीं चक्रवाकीं पक्षिणीमिव स्थिताम्, परिमितकथां मितभाषिणीं तां पूर्ववर्णितां नायिकां मे मम द्वितीयं जीवितं जीवनं जानीया बुध्येथाः इदानीं वर्णिताकृतिर्वर्षमध्ये दृष्टेऽपि त्वया न किञ्चिदाशङ्कनीयमित्याह गाढ़ोत्कण्ठामिति। गुरुषु विरहेण विशालीभूतेषु एषु दिवसेषु गच्छत्सु सत्सु गाढ़ोत्कण्ठां मदर्थमतीवोत्कण्ठितां तां बालां शिशिर-मथितां तुषारपातेन विकलीकृतां पद्मिनीं वा इव अन्यरूपां चीणमलिनामित्यर्थः जातां मन्ये। "वा स्याद्विकल्पोपमयोः" इति विश्वः।

अत्र कुवेरशापनियोगेन भर्त्तुर्दूरदेशगमनात् वर्णितेयं नायिका प्रोषितभर्त्तृका।

(म) कुरुत इति। सज्जिते कुसुमचन्दनादिभिः परिशोभिते वासवेश्मनि यस्या मण्डनं प्रसाधनं कुरुते सखीजनादिति शेषः, विदितप्रियसङ्गमा सा तु नायिका वासकसज्जा स्यात्। वासके वासवेश्मनि सज्जा यस्याः सेति व्युत्पत्तिः।

(य) विदूरे इति। प्रसाधयन्तीं सखीं प्रति शयनभवनयियासोः कस्याश्चिदुक्तिरियम्। केयूरे अङ्गदद्वयं विदूरे दूरं गते कुरु केयूरद्वयं न परिधापयेत्यर्थः। करयुगे रत्नवलयैः अलं न प्रयोजनम्। इयं ग्रीवाभरणलतिका कण्ठमाला गुर्वी महती आलिङ्गनप्रतिबन्धिकेति भावः, अतः अनया किं प्रयोजन-मित्यर्थः। अयि सखि! त्वं मयि एकाम् एकलहरीकाम् एकावलिं हारं नवां नूतनग्रथितां विरचयेः कुर्य्याः। अनङ्गोत्सवविधौ बहुतरं नेपथ्यं वेशः न पथ्यं न हितकरम्, साकल्येनालिङ्गनप्रतिबन्धादिति भावः।

अत्र वासगृहे मण्डनकरणादियं वर्णिता नायिका वासकसज्जा।

(१) चेत् प्रिय इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"किं रुद्धः प्रियया कयाचिदथवा सख्या ममोद्वेजितः
किं वा कारणगौरवं किमपि यन्नाद्यागतो वल्लभः ।
इत्यालोच्य मृगीदृशा करतले विन्यस्य वक्त्राम्बुजं
दीर्घं निश्वसितं (१) चिरञ्च रुदितं क्षिप्ताश्च पुष्पस्रजः ॥" (ल)

९९ । इति साष्टाविंशतिशतमुत्तममध्यमाधमस्वरूपतः ।
चतुरधिकाशीतियुतं शतत्रयं नायिकाभेदानां स्यात् ॥ (व)

---

(र) आगन्तुमिति । यस्याः प्रियो वल्लभः आगन्तुं कृतचित्तोऽपि कृताङ्गीकारोऽपीत्यर्थः दैवात् दैववशेन प्रतिबन्धात् नायाति नागच्छति, तस्य प्रियस्य अनागमेन अनागमनेन दुःखार्त्ता सा तु नायिका विरहोत्कण्ठिता भवेत् । विरहेण दैवकृतविच्छेदेन उत्कण्ठितेति विरहोत्कण्ठिता ।

(ल) किं रुद्ध इति । निर्द्दिष्टसमये अतीतेऽपि अनागतं वल्लभमवेक्ष्य कस्याश्चित् सखेदोक्तिरियम् । कयाचित् अन्यया प्रियया किं रुद्धः अत्रागन्तुं प्रतिबद्धः, अथवा ममैव सख्या दूतीभूतया उद्वेजितो वाक्यवैषम्येण अपरक्तीकृतः, किं वा किमपि अज्ञातपूर्वं कारणगौरवं प्रयोजनगुरुत्वं गुरुतरं प्रयोजनमित्यर्थः तमागन्तुं प्रतिबध्नातीति शेषः । यद्यस्मात् अद्य वल्लभो नागतः । इति मनसि आलोच्य मृगीदृशा नायिकया वक्त्राम्बुजं मुखपद्मं करतले विन्यस्य दीर्घं निश्वसितं चिरमनेकक्षणञ्च रुदितम्, पुष्पस्रजो रत्यर्थं धृताः कुसुममालाश्च क्षिप्ता गात्राद्विकीर्णाः ।

अत्रागन्तुमङ्गीकारकारिणोऽपि प्रियस्यानागमनाद्दुःखार्त्तेयं वक्त्री नायिका विरहोत्कण्ठिता ।

(व) इदानीं समुदायेन नायिकाभेदान् संख्यातुमाह इतीति । इति इत्थम्, अष्टाविंशत्या सहेति साष्टाविंशति शतम्, अनेन स्वाधीनभर्त्तृकात्वाद्यष्टप्रकारपर्य्यन्तकथनेन एकशताष्टाविंशतिप्रकारा नायिका भवन्तीत्यर्थः । तथा च मध्या—धीरा अधीरा धीराधीरा चेति त्रिविधा, प्रगल्भा च—धीरा अधीरा धीराधीरा चेति त्रिविधा इति षड्विधा सती पुनर्नायकस्य अल्पानुरागित्वात् अधिकानुरागभागित्वाच्च प्रत्येकमेव द्विविधा सती समुदायेन द्वादशविधा मध्या प्रगल्भा च ; मुग्धा तु एकविधैव इति मिलिता स्वीया एव त्रयोदशविधाः । परोढाकन्यकाभेदेन परकीया द्विविधा । साधारणस्त्री तु एकविधैव । ताश्च मिलिता समुदायेन षोड़शविधाः । पुनश्च ताः प्रत्येकमेव स्वाधीनभर्त्तृकात्वप्रभृत्यष्टभेदभिन्नाः सत्यः समुदायेन एकशताष्टाविंशतिप्रकारा भवन्ति, षोड़शानामष्टभिर्गुणने एकशताष्टाविंशतिसम्भवात् ।

पुनश्च तासामपि प्रत्येकमेव उत्तमत्वेन मध्यमत्वेन अधमत्वेन च भेदत्रयमाह उत्तमेति । प्रदर्शितप्रकारेण एकशताष्टाविंशतिप्रकाराणामपि तासां नायिकानां प्रत्येकमेव सौन्दर्य्यादिगुणतारतम्येन उत्तममध्यमाधमस्वरूपतो हेतोः शेषसमुदायेन नायिकाभेदानां चतुरधिकाशीतियुतं शतत्रयं स्यात् । तथा च साकल्येन नायिकाः त्रिशतचतुरशीतिप्रकारा इत्यर्थः, अष्टाविंशत्यधिकशतस्य त्रिभिर्गुणने त्रिशतचतुरशीतिसम्भवात् । अत्र नायकस्य अल्पानुरागभागित्वेन अधिकानुरागभागित्वेन च भेदद्वयकल्पनम्

---

(१) निःश्वसितमित्यपि पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इह च "परस्त्रियौ कन्यकान्योढ़े (१). सङ्केतात् पूर्वं विरहोत्कण्ठिते, पश्चाद्विदूषकादिना सहाभिसरन्त्यावभिसारिके, कुतोऽपि सङ्केतितस्थानमप्राप्ते नायके विप्रलब्धे इति त्र्यवस्थैवानयोरस्वाधीनप्रिययोरवस्थान्तरायोगात्" इति कश्चित् (श्र)।

उत्तमादिभेदत्रयकल्पनञ्च सम्यङ्निर्द्धारयितुमशक्यत्वादनियतत्वाच्च अनावश्यकमिव प्रतिभातीति पर्य्यालोचनीयम्।

(श्र) उक्तसंख्यकनायिकाप्रकारेभ्यो न्यूनप्रकारान् कश्चिन्निर्द्दिशति भङ्ग्या तन्मतं निरसितुमाह इह चेति। इह च नायिकाभेदनिरूपणप्रकरणे इति कश्चिदाहेति परेणान्वयः। परस्त्रियावित्यादिकस्तदीयो ग्रन्थः। पराधीनस्त्रियौ परस्त्रियौ। तत्र कन्यका पित्राद्यधीना, अन्योढ़ा च पत्याद्यधीना। सङ्केतात् रमणाय स्थाननिर्द्देशात्। विरहोत्कण्ठिते इति प्रथमाद्विवचनान्तं पदम्, स्यातामिति शेषः। एवमभिसारिके विप्रलब्धे इत्यनयोरपि ज्ञेयम्। अभिसरन्त्यावित्युपलक्षणम्, दूत्यादिना परपुरुषमभिसारयन्त्यावपि अभिसारिके स्याताम्। नायके कुतोऽपि कारणात् सङ्केतितस्थानमप्राप्ते विप्रलब्धे स्यातामित्यर्थः। न स्वस्या आत्मनः अधीनः प्रियो वल्लभः परपुरुषो ययोस्तयोः अस्वाधीनप्रिययोः परत्वादेव अनायत्तनायकयोरित्यर्थः अनयोः कन्यकान्योढ़योः, अवस्थान्तरायोगात् स्वाधीनभर्त्तृकात्वादीनामन्यासां पञ्चानामवस्थानामसम्भवात्, इति त्र्यवस्थैव त्रयः प्रकारा एव। तथा च कन्यका परोढ़ा च विरहोत्कण्ठिता, अभिसारिका, विप्रलब्धा च भवितुमर्हति, न पुनरन्यविधेत्यर्थः। तथा च तस्यायमाशयः—अनर्थपातशङ्कया परकन्यापरोढ़योरन्तिके परपुरुषस्य सततावस्थानासम्भवेन तयोर्न स्वाधीनभर्त्तृकात्वम्, निजस्त्रीसम्भोगस्य नियतसम्भाव्यमानत्वेन तच्चिह्नितस्यापि परपुरुषस्य समीपागमने ईर्ष्याया असम्भवान्न तयोः खण्डितात्वम्, स्वस्त्रीसम्भोगस्य अवश्यम्भावात्, तत्र रोषाभावेन परपुरुषस्य त्यागासम्भवान्न कलहान्तरितात्वम्, दूरस्थस्यैव परपुरुषस्य पुनर्दूरदेशगमनासम्भवान्न प्रोषितभर्त्तृकात्वम्, पत्युरसन्निधाने अनिष्टपातशङ्कया परार्थं मण्डनासम्भवान्न वा वासकसज्जात्वम्। तेन परोढ़ाकन्यकयोः प्रत्येकमेव उक्तपञ्चप्रकारासम्भवात् समुदायेन दशप्रकारासम्भवेन एकशताष्टादशप्रकारा नायिकाः। ताश्च पुनरुत्तममध्यमाधमभेदात् त्रिशतचतुःपञ्चाशत्प्रकाराः साकल्येन भवन्तीति।

ग्रन्थकारस्तु कश्चिदित्यनेन उल्लुण्ठनव्यञ्जकं स्मितं कृत्वा तन्मतं निरस्यति। तथा च ग्रन्थकर्त्तुरयमाशयः—कन्यायाः पितृगृहे परोढ़ायाश्च पतिगृहे कर्म्मान्तरनियुक्तस्य पितुः पत्युश्च विश्वस्तस्य परपुरुषस्य सततमेवान्तिकावस्थानसम्भवात् तयोः कन्यकापरोढ़योः स्वाधीनभर्त्तृकात्वं सम्भवति। अत्र उभयमतेऽपि भर्त्तृपदं वल्लभपरम्। स्त्रीमात्रस्यैवायं स्वभावो यत् वल्लभपुरुषस्य अन्यस्त्रीसम्भोगं न सहत इति, तेन स्वस्त्रीसम्भोगचिह्नितस्यापि वल्लभीभूतपरपुरुषस्य समीपागमने कन्यकापरोढ़योरीर्ष्यासम्भवात् खण्डितात्वम्। तत एव स्वस्त्रीसम्भोगेनापि रोषसम्भवात् तादृशपरपुरुषत्यागसम्भवेन तयोः कलहान्तरितात्वम्। तादृश-

(१) कन्यकोढ़े इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१००। क्वचिदन्योन्यसाङ्कर्य्यमासां लक्ष्येषु दृश्यते। (य)

यथा—"न खलु वयममुष्य दानयोग्याः
पिबति च पाति च याऽसकौ रहस्त्वाम्।
विट! (१) विटपममुं ददस्व तस्यै
भवति यतः सदृशोश्चिराय योगः॥" (स)

"तव कितव! किमाहितैर्वृथा नः क्षितिरुहपल्लवपुष्पकर्णपूरैः।
ननु जनविदितैर्भवद्व्यलीकैश्चिरपरिपूरितमेव कर्णयुग्मम्॥" (ह)

"मुहुरुपहसितामिवालिनादैर्वितरसि नः कलिकां किमर्थमेनाम्।
वसतिमुपगतेन धाम्नि तस्याः शठ! कलिरेष महांस्त्वयाद्य दत्तः (२)॥" (क्ष)

परपुरुषस्य दूरदेशगमनेन मनोभवदुःखार्त्तत्वसम्भवात् प्रोषितभर्त्तृकात्वम्। अत्रापि भर्त्तृपदं वल्लभपरम्। पत्युरसन्निधानेऽपि छलान्तरेण तादृशपरपुरुषार्थमेव मण्डनसम्भवात् कन्यकापरोढयोर्वासकसज्जात्वमपीति। अतएव साष्टाविंशतिशतमिति चतुरधिकाशीतियुतं शतत्रयमिति च संख्या निर्द्दिष्टेति।

(य) क्वचिदिति। क्वचित् केषुचित् लक्ष्येषु महाकविनिबद्धप्रयोगेषु, आसां नायिकानाम् अन्योन्य-साङ्कर्य्यमेकस्यामेव लक्षणद्वयादिसम्मेलनं दृश्यते। अतो लक्षणानां लक्ष्यानुसारेण निबन्धनीयतया अस्माभिरपि तत् साङ्कर्य्यमङ्गीक्रियते, तेन तत्तत्सङ्कीर्णाख्यैव तादृशी नायिकेति भावः।

(स) नेति। कुसुमकिशलयशोभितां तरुशाखां दातुं प्रवृत्तं नायकं प्रति कस्याश्चिदुक्तिरियम्। हे विट! परस्त्रीकामुक! वयं खलु अमुष्य विटपस्य दानयोग्या न भवामः। असकौ असौ या वल्लभा रहो निर्जनस्थाने त्वां पिबति सम्भुनक्ति पाति वल्लभान्तरेभ्यो रक्षति निवारयति च, तस्यै वल्लभायै अमुं विटपं शाखां ददस्व। यतश्चिराय सदृशोस्तुल्ययोः पदार्थयोरेव योगः सम्मेलनं भवति। "विटं त्वां पिबति पाति चेति व्युत्पत्तिद्वयेन सैव विटपी अयमपि विटप इति तुल्ययोर्योगो योग्यो भवती"ति तर्कवागीशोक्त एव भावः।

(ह) तवेति। हे कितव! धूर्त्त! वृथा निष्फलम् आहितैर्मत्कर्णयोर्विन्यस्तैः तव सम्बन्धिभिः क्षितिरुहाणां वृक्षाणां पल्लवपुष्पाण्येव कर्णपूराः कर्णभूषणानि तैः, नः अस्माकं ममेत्यर्थः किं प्रयोजनं सिध्येत् अपि तु किमपि नेत्यर्थः। तत्प्रयोजनस्य अन्यथैव सिद्धत्वादिति भावः। ननु तत्प्रयोजनं कथमन्यथा सिद्धमित्याह नन्विति। जनविदितैः सर्वलोकविज्ञातैः भवद्व्यलीकैः परदारगमनात् तव अप्रिय-वाक्यैः मम कर्णयुग्मं चिरपरिपूरितमेव। अतएव धारणस्थानाभावात् कर्णभूषणार्थं पल्लवपुष्पप्रदानमिदं निष्फलमेवेति भावः।

(क्ष) मुहुरिति। अलिनादैः एतत्कलिकाया एवोपरिस्थितभ्रमररवैः मुहुर्वारं वारमुपहसिता-

(१) व्रज इति मूलशिशुपालवधकाव्ये पाठः। (२) क्वचिदयं श्लोको न दृश्यते।



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"इति गदितवती रुषा जघान स्फुरितमनोरमपक्ष्मकेसरेण ।
श्रवणनियमितेन कान्तमन्या सममसिताम्बुरुहेण चक्षुषा च ॥" (क)

इयं हि वक्रोक्त्या परुषवचनेन कर्णोत्पलताड़नेन च धीरमध्यताऽधीरमध्यताऽधीरप्रगल्भताभिः सङ्कीर्णा (ख) । एवमन्यत्राप्यूह्यम् (ग) ।

**१०१ । इतरा अप्यसंख्यास्ता नोक्ता विस्तरशङ्कया ॥ (घ)**

ता नायिकाः ।

अथासामलङ्काराः (ङ) ।

---

मिव "एषा कलिका तव वञ्चनार्थैव" इत्थम् उपहस्यमानामिव विद्यमानामेनां कलिकां कुसुमकोरकं किमर्थं नः अस्मभ्यं वितरसि ददासि । यतो हि, हे शठ ! त्वया तस्याः परनायिकायाः धाम्नि भवने वसतिं वासम् उपगतेन प्राप्तेन सता, अद्य एष महान् कलिः कलहः आवयोर्विवाद इति यावत् कलिका च दत्तः । अतः स्वदत्त एव महति कलौ स्थिते किमर्थमपरकलिदानमिति भावः । "कलिः स्त्री कलिकायां ना शूराजिकलहे युगे" इति मेदिनी । श्लेषे स्त्रीप्रत्ययो न विवक्षितः ।

(क) इतीति । इति उक्तप्रकारं गदितवती उक्तवती अन्या रमणी रुषा रोषेण, स्फुरितानि दीप्तानि मनोरमाणि च पक्ष्माणि लोमानि केसराणि किञ्जल्का इव पक्ष्माणीव केसराणि च यस्य तेन तादृशेन, श्रवणनियमितेन कर्णधृतेन कर्णपर्यन्तं विस्तारितेन च असिताम्बुरुहेण नीलोत्पलेन चक्षुषा च समं युगपदेव कान्तं वल्लभं जघान ताड़यामास ।

(ख) इयमिति । हि तथाहि । इयं "न खलु" इत्यादिश्लोकत्रयस्य वक्त्री नायिका । अत्र वक्रोक्त्यादीनां धीरमध्यतेत्यादिभिर्यथासंख्येनान्वयः । तथा च वक्रोक्त्या विटपक्षव्यङ्ग्येन प्रथमश्लोकरूपकुटिलवाक्येन धीरमध्यता "प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा दहेद्रुषा" इति लक्षणात् । परुषवचनेन "तव कितव" इत्यादिश्लोकद्वयात्मककटुवाक्येन अधीरमध्यता "अधीरा परुषोक्तिभिः" इति लक्षणात् । कर्णोत्पलताड़नेन "इति निगदितवती" इत्यादिश्लोकविवृतेनेत्यर्थः अधीरप्रगल्भता, "तर्जयेत्ताड़येदन्या" इति लक्षणादिति भावः । महाकविमाघेन अस्य श्लोकचतुष्टयस्य शिशुपालवधकाव्यसप्तमसर्गे निबद्धत्वादिदं साङ्कर्य्यमङ्गीकार्य्यमित्याशयः ।

(ग) एवमिति । अन्यत्र यथोत्तररामचरिते सीता प्रथमं स्वाधीनभर्त्तृकात्वेन परश्च प्रोषितभर्त्तृकात्वेन सङ्कीर्णा । यथा वा मालविकाग्निमित्रे "इरावती—पूरेहि पूरेहि । असोओ कुसुमं ण दंसेदि अअं उण ण पुप्फइ फलइ ज्जेव" इति परुषवचनेन अधीरमध्यतया अनन्तरमेव च काञ्चीदाम्ना ताड़नेन अधीरप्रगल्भतया सङ्कीर्णा ।

(घ) इतरा इति । इतरा रसमञ्जरीग्रन्थादिगणिता दिव्यादिव्यादयः ।

(ङ) अथेति । अथ नायिकानिरूपणानन्तरम्, प्रसङ्गसङ्गत्या आसां नायिकानामलङ्कारा निरूप्यन्त इति शेषः । कटककुण्डलादिवन्मनोहरत्वजनकतासाधर्म्याद्भावादयोऽप्यलङ्कारा उच्यन्ते ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१०२ । यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः ।
अलङ्कारास्तत्र भाव-हाव-हेलास्त्रयोऽङ्गजाः ॥
शोभा कान्तिश्च दीप्तिश्च माधुर्य्यञ्च प्रगल्भता ।
औदार्य्यं धैर्य्यमित्येते सप्तैव स्युरयत्नजाः ॥
लीला विलासो विच्छित्तिर्विव्वोकः किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः ॥
विकृतं (१) तपनं मौग्ध्यं विक्षेपश्च कुतूहलम् ।
हसितं चकितं केलिरित्यष्टादशसंख्यकाः ॥
स्वभावजाश्च भावाद्या दश पुंसां भवन्त्यपि । (च)

पूर्वे भावादयो धैर्य्यान्ता दश नायकानामपि सम्भवन्ति, किन्तु सर्वेऽप्यमी-नायिकाश्रिता एव विच्छित्तिविशेषं पुष्णन्ति (छ) ।

तत्र भावः ।

१०३ । निर्विकारात्मके चित्ते भावः प्रथमविक्रिया ॥ (ज)

जन्मतः प्रभृति निर्विकारे मनसि उद्बुद्धमात्रो विकारो भावः (झ) । यथा—

(च) यौवन इति । सत्त्वजाः शृङ्गाराभिव्यञ्जकसत्त्वगुणोत्पन्नाः । तासां नायिकानाम् । तत्र तेषु अलङ्कारेषु मध्ये भाव-हाव-हेला इमे त्रयोऽलङ्काराः अङ्गजाः । वक्ष्यमाणलक्षणानुसारेण भावादीनां त्रयाणां चित्तमात्रजातत्वेऽपि भ्रूनेत्राद्यङ्गेषु तेषां क्रियाप्रकाशादङ्गजा इत्युच्यन्ते । अयत्नजाः शरीरमनसोः स्वभाव-सिद्धाः । स्वभावजा रत्यादि-स्थायिभावस्वभावजन्याः, चकाराद्दयथासम्भवं क्वचिमाश्च । अत्र अङ्गजा-यत्नज-स्वभावजेति संज्ञात्रयकरणम् "उक्ताः स्त्रीणामलङ्कारा अङ्गजाश्च स्वभावजाः" इत्याद्यनुभावपरिचायककारिकाया-मङ्गजस्वभावजालङ्कारग्रहणे अयत्नजालङ्कारव्यावृत्त्यर्थं तत्कारिकासंक्षेपार्थञ्चेति बोध्यम् ।

(छ) "भावाद्या दश पुंसां भवन्त्यपि" इति कारिकांशं व्याचष्टे पूर्वं इति । पूर्वे प्रथमोक्ताः । सम्भवन्ति लक्षणसमन्वयादिति भावः । अमी भावादयोऽलङ्काराः, नायिकाश्रिता एव नायिकास्थिता एव, विच्छित्तिविशेषं वैचित्र्यातिशयम् । अतो नायिकाश्रिता एव वर्णनीया इति भावः ।

(ज) निर्विकारेति । निर्विकारात्मके बालत्वेन रत्याद्यनभिज्ञतया सर्वथा विकाररहिते चित्ते प्रथम-विक्रिया कुतोऽपि कारणात् प्राथमिकी विकारो भाव इत्युच्यते ।

(१) विहृतमिति क्वचित् पाठः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"स एव सुरभिः कालः स एव मलयानिलः ।
सैवेयमबला किन्तु मनोऽन्यदिव दृश्यते ॥" (ञ)

अथ हावः ।

१०४ । भ्रूनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः ।
भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते ॥ (ट)

यथा—"विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥" (ठ)

अथ हेला ।

१०५ । हेलात्यन्तसमालक्ष्य-विकारः स्यात् स एव च । (ड)

स एव भाव एव । यथा—

"तह से झत्ति पउत्ता वहुए सव्वङ्गविब्भमा सअला ।
संसइअमुद्धभावा होइ चिरं जह सहीणम्पि ॥" (ढ)

---

(झ) जन्मत इति । उद्बुद्धभावः प्रकाशितभावः अङ्कुरितभाव इति यावत् ।

(ञ) स इति । स एव सुरभिः कालो वसन्तसमयः, स एव मलयानिलो दक्षिणवायुः, सैवेयमबला स्त्री, किन्तु मनोऽन्यदिव दृश्यते, पूर्ववत् सारल्येनालापाद्यकरणादिति भावः ।

अत्र मनोऽन्यदिवेत्यनेन मनसि प्रथमविकाररूपो भावो द्योत्यते ।

(ट) भ्रूनेत्रादीति । आदिशब्दान्मुखादिपरिग्रहः । भ्रूनेत्रादीनां विकारैः सङ्कोचनकटाक्षपातस्मितादिभिः सम्भोगेच्छाप्रकाशकः सुरतसुखलाभेच्छाज्ञापकः अल्पं यथा स्यात्तथा संलक्ष्यस्तैरेव भ्रूनेत्रादिविकारैरन्यैरनुमेयो विकारः अन्यथाभावो विवृञ्चिर्यस्य स तादृशः पूर्वोक्तो भाव एव हाव उच्यते ।

(ठ) विवृण्वतीति । शैलसुतापि पार्वत्यपि स्फुरन्ति क्रमाद्विकसन्ति यानि बालकदम्बानि नूतनकदम्बकुसुमानि तत्कल्पैः तेषां सदृशैः रोमाञ्चितैरित्यर्थः, अङ्गैरवयवैः भावं हरसन्दर्शनात् प्राथमिकमनोविकारं विवृण्वती प्रकटयन्ती, पर्यस्ते हरं प्रति सञ्चालिते विलोचने नयने येन तेन तादृशेन चारुतरेण मुखेन साचीकृता वक्रीकृता सती शिवं प्रति वक्रभावेन मुखं स्थापयित्वेत्यर्थः तस्थौ ।

अत्र पार्वत्याः किञ्चिद्रोमाञ्चकटाक्षपाताभ्यां प्राथमिकमनोविकारस्य वहिरल्पसंलक्ष्यत्वात् हावः ।

(ड) हेलेति । अत्यन्तसमालक्ष्यः अन्यैः सम्पूर्णं विज्ञेयः विकारो विवृञ्चिर्यस्य स तादृशः स पूर्वोक्तो भाव एव च हेला स्यात् । तथा च अवहिःप्रकाशितो जातमात्रो मनोविकारो भावः, किञ्चिद्बहिःप्रकाशितो मनोविकारो हावः, बहिःपूर्णप्रकाशितो मनोविकारो हेलेति निष्कर्षः । तेनैषां लक्षणानां परस्परं नातिव्याप्तिः ।

(ढ) तह इति । "तथा तस्या झटिति प्रवृत्ता बध्वाः सर्वाङ्गविभ्रमाः सकलाः । संशयितमुग्ध-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ शोभा।

१०६। रूपयौवनलालित्य-भोगाद्यैरङ्गभूषणम्।
शोभा प्रोक्ता—(ण)

अत्र यौवनशोभा यथा—

"असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साऽथ वयः प्रपेदे॥" (त)

एवमन्यत्रापि (थ)।

अथ कान्तिः।

---

भावा भवति चिरं यथा सखीनामपि॥" इति संस्कृतानुवादः। तस्या वध्वाः नवविवाहितायाः झटिति सहसैव सकलाः सर्वाङ्गेषु विभ्रमाः कटाक्षपातादिविलासाः तथा प्रवृत्ताः सञ्जाताः, यथा सखीनामपि चिरं संशयितः सम्पूर्णमतीतो नवेति संशयविषयीभूतो मुग्धभावः शैशवीयनिर्विकारता यस्याः सा तथोक्ता भवति। सखीनामिति "वर्त्तमानाधिकरणयोः सौत्रे" इति कर्त्तरि षष्ठी।

अत्र वध्वाः सर्वाङ्गेषु सकलविभ्रमाणां दर्शनेन मनोविकारस्य सम्पूर्णलक्ष्यतया हेला।

(ण) रूपेति। रूपं सौन्दर्य्यम्, यौवनं तारुण्यम्, लालित्यं कोमलता, भोगः कुसुमचन्दनादिधारण-जनितसुखम् आद्यशब्दात् वस्त्रालङ्कारादयश्च तैरङ्गानां भूषणं शोभनं शोभा प्रोक्ता।

(त) असम्भृतमिति। अथ शैशवात् परं सा पार्वती अङ्गयष्टेर्देहलतिकायाः असम्भृतं मण्डनम् अकृत्रिमं भूषणं मदस्य मत्ततायाः अनासवाख्यं मद्यनामरहितं करणं साधनं तथा कामस्य पुष्पव्यतिरिक्त-मन्त्रम् अस्त्रस्वरूपम्, बाल्यात् परं परवर्त्ति वयो यौवनं प्रपेदे प्राप। इति कुमारसम्भवे।

अत्र पार्वत्या यौवनेनैव अङ्गानां भूषणात् शोभा नामालङ्कारः।

(थ) एवमिति। अन्यत्रापि रूपलालित्यभोगादीनामन्यतमेन भूषणेऽपि एवमूह्यमित्यर्थः। तत्र रूपशोभा यथा मम विराजसरोजिनीनाटिकायाम्—

"शशिकला सकला तनुमण्डले नयनयोरनयोरसितोत्पले।
विकसितञ्च सितं कमलं मुखे समुदये च सुवर्णलता मता॥"

कोमलताशोभा यथा नैषधे—

"शिरीषकोषादपि कोमलाया वेधा विधायाङ्गमशेषमस्याः।
प्राप्तप्रकर्षः सुकुमारसर्गे समापयद्वाचि मृदुत्वमुद्राम्॥"

अलङ्कारशोभा यथा कुमारसम्भवे—

"कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य।
अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः॥"

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१०७। सैव कान्तिर्मन्मथाप्यायितद्युतिः (१) ॥ (द)

मन्मथोन्मेषेणातिविस्तीर्णा शोभैव कान्तिरुच्यते। यथा—

"नेत्रे खञ्जनगञ्जने" इत्यादि (११० पृष्ठे) (ध)।

अथ दीप्तिः।

१०८। कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते। (न)

यथा मम चन्द्रकलानामनाटिकायां चन्द्रकलावर्णनम्—

"तारुण्यस्य विलासः समधिकलावण्यसम्पदो हासः।
धरणितलस्याभरणं युवजनमनसो वशीकरणम्॥" (प)

अथ माधुर्य्यम्।

१०९। सर्वावस्थाविशेषेषु (२) माधुर्य्यं रमणीयता॥ (फ)

यथा—"सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥" (ब)

---

(द) सैवेति। मन्मथेन मन्मथाविर्भावेन आप्यायिता परिवर्द्धिता द्युतिर्दीप्तिर्यस्याः सा तथोक्ता, सा शोभैव कान्तिरुच्यते।

(ध) मन्मथेति। मन्मथोन्मेषेण कामाविर्भावेन। "नेत्रे खञ्जनगञ्जने" इत्यादिश्लोकस्य प्रतिपाद्यनायिकायाः रूपशोभायाः कामाविर्भावेन वर्द्धनात् कान्तिः।

(न) कान्तिरिति। अतिविस्तीर्णा कान्तिरेव दीप्तिरित्यभिधीयते इत्यन्वयः।

(प) तारुण्यस्येति। तारुण्यस्य यौवनस्य विलासः प्रकाशः यौवनस्यातिशयप्रकाशस्थानमित्यर्थः। समधिकाया लावण्यसम्पदः हासः विकासः अतिशयविकासस्थानम्। धरणितलस्य आभरणम् अतिशयेन अलङ्काररूपा। तथा युवजनानां मनसो वशीकरणम् अतिशयवशीकरणहेतुः।

अत्र अतिशयत्वस्य लक्षणाप्रयोजनत्वात् वर्णितरमण्या दीप्तिरलङ्कारः।

(फ) सर्वेति। सर्वेषु अवस्थाविशेषेषु अलङ्कारादिषु सत्सु असत्सु वेत्यर्थः रमणीयता सौन्दर्य्यं माधुर्य्यं नामालङ्कारः।

(ब) सरसिजमिति। शैवलेन अनुविद्धं संश्लिष्टमपि सरसिजं पद्मं रम्यं सुन्दरम्। मलिनमपि हिमांशोश्चन्द्रस्य लक्ष्म हरिणचिह्नं कर्तृ लक्ष्मीं शोभां तनोति वर्द्धयति। इयमपि तन्वी कृशाङ्गी

---

(१) मन्मथाप्यायिता-द्युतिरिति पाठान्तरम्। (२) सर्वावस्थाविशेषे तु इत्यपि पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ प्रगल्भता ।

१११० । निःसाध्वसत्वं प्रागल्भ्यम्—(भ)

यथा—"समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि ।
दष्टाश्च दंशनैः कान्तं दासीकुर्वन्ति योषितः ॥" (म)

अथ औदार्य्यम् ।

१११ । औदार्य्यं विनयः सदा ॥ (य)

"न ब्रूते परुषां गिरं वितनुते न भ्रूयुगं भङ्गुरं
नोत्तंसं क्षिपति क्षितौ श्रवणतः सा मे स्फुटेऽप्यागसि ।
कान्ता गर्भगृहे गवाक्षविवरव्यापारिताक्ष्या वहिः
सख्या वक्त्रमभि प्रयच्छति परं पर्य्यश्रुणी लोचने ॥" (र)

अथ धैर्य्यम् ।

---

शकुन्तला वल्कलेनापि धृतेन तरुत्वचापि अधिकमनोज्ञा । हि यस्मात् मधुराणां स्वभावसुन्दरीणामाकृतीनां रूपाणां किमिव वस्तु न मण्डनं न भूषणं भवति, अपि तु सर्वमेव मण्डनं भवतीत्यर्थः । इति शाकुन्तले ।

अत्र शकुन्तलाया वल्कलधारणेऽपि सौन्दर्य्यान्माधुर्य्यं नामालङ्कारः ।

(भ) निरिति । निःसाध्वसत्वं धृष्टताचरणे निर्भयत्वम्, प्रागल्भ्यं प्रगल्भता ।

(म) समेति । योषितः कामिनीविशेषाः समाश्लिष्टाः कान्तेन समालिङ्गिताः सत्य एव समाश्लेषैः प्रत्यालिङ्गनैः, चुम्बिताः सत्य एव चुम्बनैः प्रतिचुम्बनैः दष्टा ओष्ठेषु दन्तक्षताश्च सत्य एव दंशनैः ओष्ठेषु प्रतिदन्तक्षतनैः कान्तं प्रियं दासीकुर्वन्ति दासवत् वशीकुर्वन्ति ।

अत्र प्रत्यालिङ्गनादौ कामिनीविशेषाणां निर्भयत्वात् प्रगल्भता नामालङ्कारः ।

(य) औदार्य्यमिति । सदा सर्वदा सम्भवे असम्भवेऽपीत्यर्थः विनयो नम्रता अनौद्धत्यम् औदार्य्यम् ।

(र) नेति । सखायं प्रति प्रियतमां प्रशंसतः कस्यचिदुक्तिरियम् । मे मम आगसि कस्मिंश्चिदपराधे स्फुटे प्रकाशितेऽपि, सा कान्ता प्रियतमा परुषां गिरं रूक्षं वचनं न ब्रूते, भ्रूयुगं भङ्गुरं कोपसूचककौटिल्ययुक्तं न वितनुते न करोति, तथा श्रवणतः कर्णात् उत्तंसं भूषणं कुण्डलादिकं क्षितौ भूतले न क्षिपति । परं केवलं गर्भगृहे गृहमध्ये वहिर्वहिर्देशात् गवाक्षविवरेण व्यापारिते घटनादर्शनाय निक्षिप्ते अक्षिणी चक्षुषी यया तस्याः सख्याः वक्त्रं मुखम् अभि लक्ष्यीकृत्य परिगतानि बाहुल्येनागतानि अश्रूणि ययोस्ते पर्य्यश्रुणी लोचने नयनद्वयं प्रयच्छति अर्पयति केवलं सखीमुखमवलोकत इत्यर्थः ।

अत्र कान्तस्यापराधेन रूक्षव्यवहारसम्भवेऽपि तदभावात् प्रतिपाद्यमाननायिकाया औदार्य्यं नामालङ्कारः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

११२। मुक्तात्मश्लाघना धैर्य्यं मनोवृत्तिरचञ्चला ॥ (ल)

यथा—"ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी

दहतु मदनः किं वा मृत्योः परेण विधास्यति (१)।

मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया

कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥" (व)

अथ लीला।

११३। अङ्गैर्वेशैरलङ्कारैः प्रेमिभिः (२) वचनैरपि।

प्रीतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः ॥ (श)

यथा—"मृणालव्यालवलया वेणीबन्धकपर्द्दिनी।

हरानुकारिणी पातु लीलया पार्वती जगत् ॥" (ष)

(ल) मुक्तेति। मुक्ता परित्यक्ता आत्मश्लाघना आत्मप्रशंसा यस्यां सा तथोक्ता अचञ्चला मनोवृत्तिः धैर्य्यम्।

(व) ज्वलत्विति। मालतीमाधवे लवङ्गिकां प्रति मालत्या उक्तिरियम्। रात्रौ रात्रौ सर्वास्वेव रात्रिषु, गगने अखण्डकलः पूर्णमण्डलः शशी ज्वलतु मादृशजनपक्षे वह्निरिव ज्वालावान् भवतु, तथा मदनोऽपि दहतु। शशी मदनश्च मृत्योः परेण अधिकं किं वा विधास्यति करिष्यति। मृत्युपर्य्यन्तविधानमेव तयोः क्षमतासाध्यं तच्च ममेष्टमेवेति भावः। मम तु श्लाघ्यः सर्वजनप्रशंसनीयस्तातो दयितः प्रियः, तथा अमलान्वया निर्द्दोषवंशोत्पन्ना जननी दयिता, तथा अमलिनं कलङ्कहीनं कुलञ्च दयितम्। तु किन्तु अयं लक्ष्यीभूतो जनो माधवो नैव दयितः, येन हि दर्शनमात्रेणैव कष्टं ददातीति भावः। तथा जीवितम् आत्मजीवनञ्च नैव दयितम्, येन न गच्छति तद्गमने नेदृक् कष्टं स्यादिति भावः। परेणेत्यधिकार्थमव्ययम्।

अत्र तादृशविरहसन्तापे सत्यपि "न च जीवितम्" इत्यनेन आत्मश्लाघापरित्यागेन मालत्या अचञ्चलमनोवृत्तेर्धैर्य्यं नामालङ्कारः।

(श) अङ्गैरिति। प्रीतिप्रयोजितैः आमोदनिबन्धनैः अङ्गैरङ्गभङ्गिभिः वेशैः अलङ्कारैः तथा प्रेमिभिः प्रणयसूचकैः वचनैरपि प्रियस्य कान्तस्य अनुकृतिम् अनुकरणं लीलां विदुः।

(ष) मृणालेति। मृणालमेव व्यालः सर्पस्तद्रूपं वलयं यस्याः सा, वेणीबन्धो बद्धः केशकलाप एव कपर्द्दो जटाजूटः अस्या अस्तीति सा तादृशी, अतएव लीलया हरस्य शिवस्य अनुकारिणी पार्वती जगत् पातु रक्षतु।

(१) विधास्यत इत्यपि पाठः। (२) प्रेमभिरिति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ विलासः ।

११४ । यानस्थानासनादीनां मुखनेत्रादिकर्म्मणाम् ।
विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना ॥ (ख)

यथा—"अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्रमुल्लसितविभ्रममायताक्ष्याः (१) ।
तद्भूरिसात्त्विकविकारमपास्तधैर्य्य-
माचार्य्यकं किमपि मान्मथमाविरासीत् ॥" (छ)

अथ विच्छित्तिः ।

११५ । स्तोकाप्याकल्परचना विच्छित्तिः कान्तिपोषकृत् । (च)

यथा—"स्वच्छाम्भःस्नपनविधौतमङ्गमोष्ठ-
स्ताम्बूलद्युतिविशदो विलासिनीनाम् ।
वासस्तु प्रतनुविविक्तमस्त्वितीयान्
आकल्पो यदि कुसुमेषुणा न शून्यः ॥" (क)

---

अत्र व्यालवलयेनेव मृणालवलयेनालङ्कारेण कपर्द्दनेव वेणीबन्धेन वेशेन च हरस्यानुकरणात् पार्व्वत्या लीला नामालङ्कारः ।

(ख) यानेति । इष्टस्य प्रियतमस्य सन्दर्शनम्, आदिशब्दात् तदागमनवार्त्ताश्रवणादिपरिग्रहः, तेन, यानं गमनं स्थानम् अवस्थानम् आसनम् उपवेशनम् आदिशब्दात् शयनादिकञ्च तेषाम्, तथा मुखनेत्रादीनामङ्गानां कर्म्माणि विन्यासास्तेषां विशेषो वैचित्रं विलासः स्यात् ।

(छ) अत्रेति । मालतीमाधवे मकरन्दं प्रति माधवस्योक्तिरियम् । अत्रान्तरे अस्मिन्नवसरे आयताक्ष्या मालत्याः किमपि अनिर्व्वचनीयम्, वाग्विभवं वाक्शक्तिम् अतिवृत्तम् अतीतं वैचित्रं यस्य तत्, उल्लसितः प्रकाशितः विभ्रमो विलासो यस्मिन् तत्, भूरिः प्रचुरः सात्त्विकविकारः स्तम्भादिसात्त्विकभावो यत्र तत्, अपास्तं दूरीकृतं धैर्य्यं येन तत्, अतएव विजयि जयशीलम्, तत् प्रसिद्धम्, मान्मथं कामसम्बन्धि आचार्य्यकम् आचार्य्यभावः मन्मथदत्तशिक्षेत्यर्थः आविरासीत् प्रादुर्भूतम् ।

अत्र माधवमवलोक्य नानाविधनेत्रादिभङ्गिवैचित्रान्मालत्या विलासो नामालङ्कारः ।

(च) स्तोकेति । कान्तिपोषकृत् शोभावृद्धिकरी स्तोकापि अल्पापि आकल्परचना वेशकरणं विच्छित्तिः ।

(क) स्वच्छेति । विलासिनीनां रमणीनाम् अङ्गं गात्रं स्वच्छाम्भसा निर्म्मलजलेन यत् स्नपनं

---

(१) उत्पलाक्ष्या इति पाठान्तरम् ।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ विव्वोकः ।

११६ । विव्वोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः ॥ (ख)

यथा—"यासां सत्यपि सद्गुणानुसरणे दोषानुवृत्तिः परा
या: प्राणान् वरमर्पयन्ति न पुनः सम्पूर्णदृष्टिं प्रिये ।
अत्यन्ताभिमतेऽपि वस्तुनि विधिर्यासां निषेधात्मक-
स्तास्त्रैलोक्यविलक्षणप्रकृतयो वामाः प्रसीदन्तु ते ॥" (ग)

अथ किलकिञ्चितम् ।

११७ । स्मित-शुष्करुदित-हसित-त्रास-क्रोध-श्रमादीनाम् ।
साङ्कर्य्यं किलकिञ्चितम् अभीष्टतमसङ्गमादिजाद्धर्षात् ॥ (घ)

यथा—"पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः ।
कामिनः स्म कुरुते करभोरुर्हारि शुष्करुदितञ्च सुखेऽपि ॥" (ङ)

प्रक्षालनं तेन विधौतं परिष्कृतम्, ओष्ठः ताम्बूलस्य द्युत्या रागेण विशदः सुन्दरः, तथा वासो वसनन्तु प्रतनु सूक्ष्मम् अथ च विविक्तं परिष्कृतम् अस्तु भवतु । इतीयान् इत्येतावन्मात्र एव आकल्पो वेशः पर्य्याप्त इति शेषः, यदि स आकल्पः कुसुमेषुणा कामेन शून्यो रहितः, स्यात् । सकाम उक्तविधः स्वल्पोऽपि वेशः पर्य्याप्त एव तावतैव यथेष्टकान्तिपोषणादिति भावः ।

अत्र रमणीविशेषाणामङ्गपरिष्काराद्युक्तविधस्वल्पवेशेनैव कान्तिपोषणाद्विच्छित्तिः ।

(ख) विव्वोक इति । इष्टेऽपि प्रियेऽपि वस्तुनि पदार्थे अतिगर्वेण अनादरः आग्रहशून्यता विव्वोकः ।

(ग) यासामिति । कामुकं सखायं प्रति कस्यचिदुक्तिरियम् । सद्गुणानुसरणे परेषां सद्गुण-ग्रहणसामर्थ्ये सत्यपि यासां परा केवला दोषानुवृत्तिः दोषानुसन्धानम्, याः वरं प्राणान् अर्पयन्ति अर्पयितुं शक्नुवन्ति, न पुनः प्रियं जने सम्पूर्णदृष्टिम् अर्पयन्ति । यासाञ्च अत्यन्ताभिमतेऽपि वस्तूनि वसनभूषणादौ दातुमुपस्थापिते इति शेषः, निषेधात्मकः "न तद्दातव्यम्" इति निषेधरूपो विधिः । त्रैलोक्ये त्रिभुवनमध्ये विलक्षणप्रकृतयो विभिन्नस्वभावास्ता वामाः स्त्रियः ते तव सम्बन्धे प्रसीदन्तु ।

अत्र स्त्रीविशेषाणामिष्टेऽपि वसनभूषणादौ अनादरात् विव्वोकः ।

(घ) स्मितेति । अभीष्टतमस्य प्रियतमजनस्य सङ्गमः सम्मेलनम् आदिशब्दात तद्दर्शनं तदागमन-श्रवणञ्च, तेभ्यो जायत इति तस्मात् हर्षादामोदात् स्मितम् ईषद्धास्यं शुष्करुदितं पुरातनरोदनं हसितं हास्यं त्रासो भयं क्रोधः प्रणयकोपः श्रमस्त्वरया श्रान्तिः आदिशब्दात् जड़तादयश्च तेषां साङ्कर्य्यं यथासम्भवं सम्मेलनं किलकिञ्चितं भवेत् ।

(ङ) पाणीति । करभः करिकर इव ऊरुर्यस्याः सा करभोरुः कान्ता कामिनी नायकस्य पाणेः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ मोट्टायितम् ।

११८ । तद्भावभाविते चित्ते वल्लभस्य कथादिषु ।
मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम् (१) ॥ (च)

यथा—"सुभग ! त्वत्कथारम्भे कर्णकण्डूतिलालसा ।
उज्जृम्भवदनाम्भोजा भिनत्त्यङ्गानि साङ्गना ॥" (छ)

अथ कुट्टमितम् ।

११९ । केशस्तनाधरादीनां ग्रहे हर्षेऽपि सम्भ्रमात् ।
प्राहुः कुट्टमितं नाम शिरः-कर-विधूननम् ॥ (ज)

यथा—"पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे ।
पर्य्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण ॥" (झ)

कटिवसनमोचनाय प्रवृत्तहस्तस्य रोधं बाधाम्, मधुरं स्मितं गर्भे मध्ये यासां तास्तथोक्ता भर्त्सनातिरस्कारांश्च, तथा सुखे सुखमयव्यापारेऽपि हारि मनोहरं शुष्करुदितञ्च पुरातनरोदनञ्च, अविरोधिता अप्रतिबद्धा वाञ्छा नायकाभिलाषो यस्मिन् कर्म्मणि तद्यथा तथा कुरुते स्म ।

अत्र स्मितशुष्करुदितयोः साङ्कर्य्यात् श्लोकप्रतिपाद्यनायिकायाः किलकिञ्चितम् ।

(च) तद्भावेति । वल्लभस्य प्रियजनस्य कथा सखीभिः सह चरित्रालापः, आदिशब्दात् चित्रदर्शनं स्मरणञ्च तेषु प्रवृत्तेषु सत्सु, चित्ते नायिकाया मनसि तस्य वल्लभस्य भावेन आकारेङ्गितादिना स्मृतेनेत्यर्थः भाविते व्याप्ते सति, कर्णकण्डूयनम् आदिशब्दात् जृम्भादिकञ्च मोट्टायितम् इति प्राहुः । आलङ्कारिका इति शेषः ।

(छ) सुभगेति । सखायं प्रति कस्यचित् कान्ताप्रणयसूचिकोक्तिरियम् । हे सुभग ! पत्नीप्रिय ! त्वत्कथारम्भे सति सखीभिः सह तव चरित्रालापे प्रवृत्ते सति, कर्णस्य कण्डूतौ कण्डूयने लालसा अभिलाषिणी सा अङ्गना तव कान्ता, उद्गता जृम्भा यस्मिन् तत् तादृशं वदनाम्भोजं मुखपद्मं यस्याः सा तथोक्ता सती अङ्गानि भिनत्ति अङ्गानां मोट्टायितं करोतीत्यर्थः ।

अत्र प्रतिपाद्यमानाङ्गनायाः कर्णकण्डूयनजृम्भादिकरणात् मोट्टायितम् ।

(ज) केशेति । केशाः स्तनौ अधरश्च आदिशब्दात् हस्तादयश्च तेषां ग्रहे नायकेन ग्रहणे कृते हर्षे आनन्देऽपि सति, सम्भ्रमात् त्वरातः शिरःकरविधूननं निषेधसूचकं मस्तकस्य हस्तयोर्वा कम्पनं कुट्टमितं प्राहुः ।

(झ) पल्लवेति । अभीष्टे वल्लभजने, पल्लवस्य उपमित्या तुलनया यत् साम्यं समानत्वं तेन सपक्षं पल्लवस्येव सुवृत्तस्वरूपम् अधरबिम्बं दष्टवति चुम्बितवति सति, रुजा वेदनया सह वर्त्तत इति सरुक्, तेनेव,

(१) कर्णकण्डूयनादिभिरिति क्वचित् पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ विभ्रमः ।

१२० । त्वरया हर्षरागादेर्दयितागमनादिषु ।

अस्थाने भूषणादीनां विन्यासो विभ्रमो मतः ॥ (ञ)

यथा—"श्रुत्वायान्तं बहिः कान्तमसमाप्तविभूषया ।

भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः ॥" (ट)

अथ ललितम् ।

१२१ । सुकुमारतयाऽङ्गानां विन्यासो ललितं भवेत् । (ठ)

यथा—"गुरुतरकलनूपुरानुनादं सललितनर्त्तितवामपादपद्मा ।

इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम ॥" (ड)

अथ मदः ।

१२२ । मदो विकारः सौभाग्य-यौवनाद्यवलेपजः ॥ (ढ)

---

तथा तारलोलं करकम्पनात् अतीवचञ्चलं वलयं कङ्कणं यत्र तादृशेन तरुण्याः करेण हस्तेन पर्य्यकूजि सर्वतः शब्दितम् । इति शिशुपालवधकाव्यस्य दशमे ।

अत्र प्रतिपाद्यमाननायिकायाः करकम्पनात् कुट्टमितं नामालङ्कारः ।

(ञ) त्वरयेति । दयितस्य वल्लभजनस्य आगमनम् आदिशब्दात् महोत्सवदर्शनादिश्च तेषु, हर्ष आनन्दः रागोऽनुरागः आदिशब्दात् सख्या आमन्त्रणादिश्च तस्मात् हेतोः, त्वरया आवेगेन, अस्थाने भूषणानि अलङ्काराः आदिशब्दात् अनुलेपनादयश्च तेषां विन्यासः विभ्रमो मतः ।

(ट) श्रुत्वेति । बहिर्द्देशे कान्तम् आयान्तं श्रुत्वा असमाप्तविभूषया कयाचिन्नायिकया, भाले ललाटे अञ्जनं चक्षुषोर्देयं कज्जलं कृतं दत्तम्, दृशोश्चक्षुषोः लाक्षा करचरणादिषु देयमलक्तकं कृता दत्ता, तथा कपोले गण्डे ललाटकर्त्तव्यस्तिलकः कृतः ।

अत्र हर्षात् त्वरया अञ्जनादीनामस्थानेषु विन्यासात् विभ्रमः ।

(ठ) सुकुमारेति । अङ्गानां सुकुमारतया कोमलभावेन विन्यासो विक्षेपः ललितं भवेत् ।

(ड) गुर्विति । अथ अनन्तरम् । सललितं कोमलभावेनेत्यर्थः नर्त्तितं नृत्ये इव विन्यस्तं वामं पादपद्मं यया सा तथोक्ता नायिका, अनतिलोलं नातिचञ्चलम् इतरत् दक्षिणं पदम् आदधाना भूमौ विन्यसन्ती सती, गुरुतरः अतिमहान् कलो मधुरास्फुटश्च अनुनादो रवो यस्मिन् कर्म्मणि तद्यथा तथा, मन्मथमन्थरं कामावेशेन मन्दञ्च जगाम ।

अत्र कोमलभावेन चरणयोर्विन्यासात् प्रतिपाद्यनायिकाया ललितं नामालङ्कारः ।

(ढ) मद इति । सौभाग्यं भर्त्तृप्रियत्वं यौवनं वयः आदिशब्दात् उत्कृष्टवसनभूषणादयश्च तेषामवलेपजः अहङ्कारात् जातो विकारो मदः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अन्यापि किं न खलु भाजनमीदृशीनां
वैरी न चेद्भवति वेपथुरन्तरायः ॥" (ण)

अथ विहृतम् ।

१२३ । वक्तव्यकालेऽप्यवचो व्रीड़या विहृतं मतम् । (त)

यथा—"दूरागतेन कुशलं पृष्टा नोवाच सा मया किञ्चित् ।
पर्य्यश्रुणी तु नयने तस्याः कथयाम्बभूवतुः सर्वम् ॥" (थ)

अथ तपनम् ।

१२४ । तपनं प्रियविच्छेदे स्मरावेशोत्थचेष्टितम् (१) ॥ (द)

यथा मम—"श्वासान् मुञ्चति भूतले विलुठति त्वन्मार्गमालोकते
दीर्घं रोदिति विक्षिपत्यत इतः चामां भुजावल्लरीम् ।
किञ्च प्राणसमान ! काङ्क्षितवतो स्वप्नेऽपि ते सङ्गमं
निद्रां वाञ्छति न प्रयच्छति पुनर्दग्धो विधिस्तामपि ॥" (ध)

---

(ण) मेति । आत्मनो भर्तृप्रियत्वगर्वं प्रकटयन्तीं काञ्चित् प्रति कस्याश्चिदुक्तिरियम् । मम कपोलतले गण्डदेशे कान्तेन वल्लभेन स्वहस्तेन लिखिता चित्रिता मञ्जरी तदाकारचित्रविशेषः चकास्ति विभाति इति हेतोः गर्वं भर्तृप्रियत्वाभिमानं मा उद्वह न कुरु । यस्मात् चेद्यदि वेपथुः कान्तस्पर्शजनितः कम्पो वैरी शत्रुरिव अन्तरायस्तादृशचित्रप्रतिबन्धको न भवति, तदा अन्यापि अहमपीति भावः ईदृशीनां मञ्जरीणां भाजनं पात्रं किं न खलु भवेत्, अपि तु भवेदेवेत्यर्थः ।

अत्र वक्तृबोद्धव्ययोरुभयोरपि नायिकयोः सौभाग्यगर्वजनितविकारान्मदः ।

(त) वक्तव्येति । वक्तव्यकालेऽपि वक्तुं समयेऽपि व्रीड़या लज्जया अवचः अभाषणं विहृतं मतम् ।

(थ) दूरेति । सखायं प्रति कस्यचिदुक्तिरियम् । मया दूरादागतेन सता कुशलं पृष्टा । प्रच्छिर्द्विकर्मकः । सा मम कान्ता किञ्चिदपि नोवाच । तु किन्तु पर्य्यश्रुणी अश्रुप्लुते तस्याः नयने नेत्रद्वयं सर्वं विरहकालीनं दुःखं कथयाम्बभूवतुः सूचयामासतुरित्यर्थः ।

अत्र पत्युः प्रश्नानन्तरं तदुत्तरस्यौचित्येऽपि नायिकायास्तदकरणाद्विहृतम् ।

(द) तपनमिति । प्रियस्य वल्लभजनस्य विच्छेदे विरहे स्मरावेशोत्थचेष्टितं कामाविर्भावादुत्पन्नो व्यवहारः तपनं भवेत् ।

---

(१) स्मरावेगोत्थचेष्टितमिति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ मौग्ध्यम् ।

१२५ । अज्ञानादिव या पृच्छा प्रतीतस्यापि वस्तुनः ।
वल्लभस्य पुरः प्रोक्तं मौग्ध्यं तत्तत्त्ववेदिभिः ॥ (न)

यथा—"के द्रुमास्ते क्व वा ग्रामे सन्ति केन प्ररोपिताः ।
नाथ ! मत्कङ्कणन्यस्तं येषां मुक्ताफलं फलम् ॥" (प)

अथ विक्षेपः ।

१२६ । भूषाणामर्द्धरचना वृथा विष्वगवेक्षणम् ।
रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके ॥ (फ)

यथा—"धम्मिलमर्द्धमुक्तं कलयति तिलकं तथा शकलम् ।
किञ्चिद्वदति रहस्यं चकितं विष्वगवलोकते (१) तन्वी ॥" (ब)

---

(ध) श्वासानिति । विदेशस्थं वल्लभं प्रति नायिकादूत्या उक्तिरियम् । हे प्राणसमान ! स्वप्रियायाः प्राणतुल्य ! तव प्रिया श्वासान् मुञ्चति निश्वासान् परित्यजति, भूतले विलुठति, त्वन्मार्गं तवागमनपथम् आलोकते पश्यति, दीर्घं दीर्घकालं रोदिति, अतं इत इतस्ततः क्षामां विरहेण क्षीणां भुजावल्लरीं बाहुमञ्जरीं विक्षिपति । किञ्च अपि च, स्वप्नेऽपि ते तव सङ्गमं काङ्क्षितवती, तथा निद्रां वाञ्छति, किन्तु दग्धो विधिस्तां निद्रामपि न प्रयच्छति तस्यै न ददाति ।

अत्र कामावेशेन निश्वासत्यागादिव्यवहारात् प्रतिपाद्यनायिकायास्तपनम् ।

(न) अज्ञानादिति । प्रतीतस्यापि पूर्वं ज्ञातस्यापि वस्तुनः अज्ञानादिव वल्लभस्य प्रियजनस्य पुरः अग्रे या पृच्छा प्रश्नः, तत्त्ववेदिभिर्नायिकालङ्काराभिज्ञैः तत् मौग्ध्यं प्रोक्तम् ।

(प) क इति । हे नाथ ! मत्कङ्कणन्यस्तं मदीयवलये निखातं मुक्ताफलं मौक्तिकं येषां द्रुमाणां फलम्, ते द्रुमा वृक्षाः के ? क्व कस्मिन् वा ग्रामे सन्ति ? केन वा जनेन प्ररोपिताः ? ।

अत्र पूर्वमेव ज्ञातस्यापि मुक्ताफलानां शुक्तिकादौ जातत्वस्य तदज्ञानादिव पुनः प्रश्नकरणात् वक्तृ-नायिकाया मौग्ध्यम् ।

(फ) भूषाणामिति । भूषाणामर्द्धरचना वेशानामर्द्धांशमात्रकरणम्, वृथा अनर्थकं विष्वक् सर्वतः अवेक्षणं दृष्टिपातः, तथा दयितस्य अन्तिके ईषत् किञ्चित् रहस्यस्य गोपनीयवृत्तान्तस्य आख्यानं कथनञ्च विक्षेपः स्यात् ।

(ब) धम्मिल्लमिति । तन्वी कृशाङ्गी नायिका, धम्मिल्लं बद्धकेशपाशम् अर्द्धमुक्तम् अर्द्धांशस्खलितं कलयति करोति अर्द्धस्खलितभावेन धम्मिल्लं रचयतीत्यर्थः । तथा शकलं खण्डभूतं तिलकं कलयति

---

(१) विष्वग् विलोकते इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ कुतूहलम् ।

१२७ । रम्यवस्तुसमालोके लोलता स्यात् कुतूहलम् । (भ)

यथा—"प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव ।
उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्कां पदवीं ततान ॥" (म)

अथ हसितम् ।

१२८ । हसितन्तु वृथा हासो यौवनोद्भेदसम्भवः ॥ (य)

यथा—"अकस्मादेव तन्वङ्गी जहास यदियं पुनः ।
नूनं प्रसूनबाणोऽस्यां स्वाराज्यमधितिष्ठति ॥" (र)

अथ चकितम् ।

१२९ । कुतोऽपि दयितस्याग्रे चकितं भयसम्भ्रमः । (ल)

यथा—"त्रस्यन्ती चलशफरीविघट्टितोरुः
वामोरूरतिशयमवाप विभ्रमस्य ।

---

करोति ललाटे तिलकस्यार्द्रमात्रं निर्म्मिणोतीत्यर्थः । रहस्यं गोपनीयवृत्तान्तं किञ्चित् अस्फुटं वदति । तथा चकितं यथा स्यात्तथा विष्वक् सर्वतः अवलोकते ।

अत्र प्रतिपाद्यमाननायिकाया विक्षेपः स्पष्टः ।

(भ) रम्येति । रम्यवस्तुनः समालोके दर्शने लोलता चित्तचाञ्चल्यम् आग्रहः कुतूहलं स्यात् ।

(म) प्रसाधिकेति । काचित् पुरकामिनी, प्रसाधिकया अलङ्कर्त्र्या स्त्रिया आलम्बितम् अलक्तकेन रञ्जनाय धृतं द्रवः अचिरदत्तत्वात्तरलः रागी लाक्षारसो यत्र तादृशमेव अग्रपादं चरणाग्रम् आक्षिप्य आकृष्य नीत्वा, उत्सृष्टा त्वरावशात् परित्यक्ता लीलागतिर्लीलया मन्थरगमनं यया सा तादृशी सती, आगवाक्षात् गवाक्षद्वारपर्य्यन्तं पदवीं पन्थानम् अलक्तकाङ्कां लाक्षारसचिह्नितां ततान विस्तारयामास । इति रघुवंश-सप्तमसर्गे ।

अत्र प्रतिपाद्यमाननायिकाया अजेन्दुमतीदर्शनायाग्रहात् कुतूहलम् ।

(य) हसितमिति । यौवनस्य उद्भेदसम्भव आविर्भावजातः वृथा निष्प्रयोजनो हासो हसितम् ।

(र) अकस्मादिति । सहसा हसन्तीं नवीनतरुणीमवलोक्य कस्यचिदुत्प्रेक्षेयम् । इयं तन्वङ्गी कृशाङ्गी नायिका, अकस्मादेव अनिर्द्दिष्टकारणादेव यत् पुनर्जहास, तत् नूनं निश्चितं प्रसूनबाणो मदनः अस्यां नायिकायां स्वाराज्यं स्वर्गराज्यम् अधितिष्ठति आश्रयति निजं स्वर्गीयमाधिपत्यमस्यामारोपयतीत्यर्थः ।

अत्र निरर्थकहासात् प्रतिपाद्यमाननायिकाया हसितं नामालङ्कारः ।

(ल) कुत इति । दयितस्याग्रे वल्लभजनस्यान्तिके कुतोऽपि स्वल्पकारणात् भयेन सम्भ्रमो व्यस्तता चकितं स्यात् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लुभ्यन्ति प्रसभमहो विनापि हेतो:
लीलाभिः किमु सति कारणे तरुण्यः ॥" (व)

अथ केलिः ।

१३० । विहारे सह कान्तेन क्रीड़ितं केलिरुच्यते ॥ (श)

यथा—"व्यपोहितुं लोचनतो मुखानिलैरपारयन्तं किल पुष्पजं रजः ।
पयोधरेणोरसि काचिदुन्मनाः प्रियं जघानोन्नतपीवरस्तनी ॥" (ष)

अथ मुग्धाकन्यकयोरनुरागेङ्गितानि (स) ।

१३१ । दृष्टा दर्शयति व्रीड़ां सम्मुखं नैव पश्यति ।
प्रच्छन्नं वा भ्रमन्तं वा-तिक्रान्तं (१) पश्यति प्रियम् ॥
बहुधा पृच्छ्यमानापि मन्दमन्दमधोमुखी ।
सगद्गदस्वरं किञ्चित् प्रियं प्रायेण भाषते ॥

(व) वसन्तीति । प्रियतमया सह जलक्रीड़ां विधाय उत्थितस्य कस्यचित् सखायं प्रति उक्तिरियम् । चला जलाभ्यन्तरे भ्रमणशीला या शफरी प्रोष्ठीमत्स्यस्तया विघट्टिते गात्रेण संघृष्टे ऊरू यस्याः सा तथोक्ता, अतएव त्रसन्ती भयं प्राप्नुवती, वामोरुः सुन्दरोरुयुगा कान्ता, विभ्रमस्य जलान्तर एव विशेषेण भ्रमणस्य अतिशयमाधिक्यम् अवाप । अहो आश्चर्यम्, तरुण्यो हेतोर्विनापि लीलाभिरात्मशृङ्गारचेष्टाविशेषैरेव प्रसभं हठात् लुभ्यन्ति अस्थिरा भवन्ति, कारणे सति तत्र्वोभे किमु वक्तव्यमित्यर्थः ।

अत्र प्रोष्ठीमत्स्यसंघर्षमात्रेणैव भयसम्भ्रमात् प्रतिपाद्यनायिकायाश्चकितम् ।

(श) विहार इति । विहारे रतिप्रसङ्गे कान्तेन सह यत् क्रीड़ितं किञ्चित् तादृशखेलनं तत् केलिरुच्यते ।

(ष) व्यपोहितुमिति । उन्नतपीवरस्तनी काचिन्नायिका उन्मनाः सुरतार्थम् उत्कण्ठितचित्ता सती, मुखानिलैर्वदनमारुतैः लोचनतो निजनयनात् पुष्पजं रजः कुतोऽपि प्रविष्टं कुसुमपरागं व्यपोहितुं दूरीकर्त्तुम् अपारयन्तम् अशक्नुवन्तं प्रियं नायकं किल पयोधरेण स्तनेन उरसि वक्षसि जघान प्रहृतवती । असामर्थ्यापराधदण्डदानच्छलेनेति भावः ।

अत्र नायकवक्षसि पयोधरेणाघातरूपक्रीड़नात् प्रतिपाद्यनायिकायाः केलिः ।

(स) अथेति । मुग्धाकन्यकयोः प्रागुक्तलक्षणयोः, अनुरागेङ्गितानि अनुरागेणाविष्कृतव्यवहाराः प्रदर्श्यन्त इति शेषः । नायिकानिरूपणप्रकरणे तेषां प्रासङ्गिकत्वादिति भावः ।

(ह) दृष्टेति । प्रिये अनुरागिणी प्रियं प्रत्यनुरक्ता बाला मुग्धा कन्यका च, दृष्टा प्रियेणेति

(१) तिर्य्यक् इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अन्यैः प्रवर्त्तितां शश्वत् सावधाना च तत्कथाम् ।
शृणोत्यन्यत्र दत्ताक्षी प्रिये बालानुरागिणी ॥ (ङ)

अथ सकलानामपि नायिकानामनुरागेङ्गितानि (च) ।

१३२ । चिराय सविधे स्थानं प्रियस्य बहु मन्यते ।
विलोचनपथञ्चास्य न गच्छत्यनलङ्कृता ॥
क्वापि कुन्तल-संव्यान-संयमव्यपदेशतः ।
बाहुमूलं स्तनौ नाभि-पङ्कजं दर्शयेत् स्फुटम् ॥
आच्छादयति वागाद्यैः प्रियस्य परिचारकान् ।
विश्वसितस्य मित्रेषु बहुमानं करोति च ॥
सखीमध्ये गुणान् ब्रूते स्वधनं प्रददाति च ।
सुप्ते स्वपिति दुःखेऽस्य दुःखं धत्ते सुखे सुखम् ॥

---

शेषः, व्रीड़ां लज्जां दर्शयति मुखनमनादिनेति भावः। सम्मुखं यथा स्यात्तथा आभिमुख्येनेत्यर्थः प्रियं नैव पश्यति लज्जावशात्। किन्तु अतिक्रान्तं सम्मुखात् प्रस्थितम्, प्रच्छन्नं निकटेऽपि तरुलतादिना किञ्चिदन्तरितम्, भ्रमन्तम् अनतिदूरे विचरन्तं वा प्रियं पश्यति। बहुधा विषयविशेषं पृच्छ्यमानापि अधोमुखी सती, मन्दमन्दं सगद्गदस्वरम् अस्फुटस्वरञ्च प्रायेण प्रियं किञ्चिदल्पं भाषते। गुरुतरप्रयोजने तु सति बहुतरमपि भाषत इति प्रायेणेत्यनेन सूचितम्। सावधाना एकाग्रचित्ता अन्यत्र दिशि दत्ताक्षी दत्तदृष्टिश्च सती, अन्यैः प्रवर्त्तिताम् आरब्धां तस्य प्रियस्य कथां शश्वत् सर्वदा शृणोति।

(च) अथेति। सकलानां सर्वविधानामपि। एतेन मुग्धाकन्यकयोरपि वक्ष्यमाणा व्यवहाराः सम्भवन्तीति दर्शितम्। अत्रापि अनुरागेङ्गितानीत्यस्य पूर्ववदेवार्थः।

(छ) चिरायेति। अत्र अनुरक्ता नितम्बिनीति वक्ष्यमाणपदं सर्वत्र कर्तृतयान्वेति। प्रियस्य सविधे सकाशे, चिराय स्थानम् अवस्थितिं बहु मन्यते प्रियत्वेन मन्यते। अनलङ्कृता सती, अस्य प्रियस्य विलोचनपथं दृष्टिपथञ्च न गच्छति। क्वापि प्रगल्भा कुन्तलानां केशानां संव्यानस्य परिधानवसनस्य च संयमो बन्धनं परिधानञ्च तदेव व्यपदेशश्छलं तस्मात्। तत्र कुन्तलसंयमव्यपदेशेन बाहुमूलं स्तनौ च स्फुटं दर्शयेत् अधोवसनपरिधानव्यपदेशेन च नाभिपङ्कजं दर्शयेदित्यर्थः। प्रियमिति शेषः। "संव्यानं छादने वस्त्रे" इति हेमचन्द्रः। अतएव "कुन्तलेति। केशसमूहबन्धनच्छलेनेत्यर्थः।" इति रामचरणोक्तं हेयम्। वागाद्यैः प्रियवाक्यवसनभूषणदानादिना, प्रियस्य परिचारकान् सेवकान् आच्छादयति अभ्यन्तरीकरोति स्वानुगतान् करोतीत्यर्थः। अस्य प्रियस्य मित्रेषु विश्वसिति, तेषामेव मित्राणां बहुमानम् अत्यादरञ्च

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्थिता दृष्टिपथे शश्वत् प्रिये पश्यति दूरतः ।
आभाषते परिजनं सम्मुखे (१) स्मरविक्रियम् ॥
यत्किञ्चिदपि संवीक्ष्य कुरुते हसितं मुधा ।
कर्णकण्डूयनं तद्वत् कवरीमोक्षसंयमौ ॥
जृम्भते स्फोटयत्यङ्गं बालमाश्लिष्य चुम्बति ।
भाले तथा वयस्याया रचयेत् तिलकक्रियाम् ॥
अङ्गुष्ठाग्रेण लिखति सकटाक्षं निरीक्षते ।
दशति स्वाधरञ्चापि ब्रूते प्रियमधोमुखी ॥
न मुञ्चति च तं देशं नायको यत्र दृश्यते ।
आगच्छति गृहञ्चास्य कार्य्यव्याजेन केनचित् ॥
दत्तं किमपि कान्तेन धृत्वाङ्गे मुहुरीक्षते ।
नित्यं हृष्यति तद्योगे वियोगे मलिना कृशा ॥

---

...रोति । सखीमध्ये प्रियस्य गुणान् ब्रूते स्वधनं पित्रादिदत्तमात्मद्रव्यं प्रियाय प्रददाति च । प्रिये सुप्ते ...ं स्वपिति । अस्य प्रियस्य दुःखे दुःखं सुखे च सुखं धत्ते लभते । प्रिये पश्यति सति दूरतस्तस्य दृष्टिपथे स्थिता सती सम्मुखे विद्यमानं परिजनं स्मरस्य कामस्य विक्रिया विकारो रोमाञ्चादिर्यस्मिन् कर्मणि तद् यथा तथा शश्वत् बहुकालं यावत् आभाषते आलपति । यत् किञ्चिदपि वस्तु संवीक्ष्य मुधा वृथा हसितं हास्यं कुरुते । तद्वत् कर्णकण्डूयनं कवरीमोक्षसंयमौ बद्धकेशपाशस्य मोचनं मुक्तानाञ्च तेषां बन्धनं कुरुत इत्यन्वयः । जृम्भते जृम्भां करोति, अङ्गं स्फोटयति अङ्गुल्यादिकमाक्षिप्य शब्दयति । बालम् आश्लिष्य तमेव चुम्बति । तथा वयस्याया भाले तिलकक्रियां रचयेत् कुर्य्यात् । चरणस्य अङ्गुष्ठाग्रेण भूमिं लिखति । सकटाक्षं प्रियं निरीक्षते । स्वाधरञ्च दशति स्वदन्तैरिति शेषः । एतावत्पर्य्यन्तं प्रिये पश्यतीत्यनेनान्वीयते । अधोमुखी सती प्रियं ब्रूते यत्र स्थित्वा नायकः प्रियो दृश्यते, तं देशं न च मुञ्चति त्यजति । केनचित् कार्य्यव्याजेन अस्य प्रियस्य गृहमागच्छति च । कान्तेन दत्तं किमपि वसनं भूषणं वा अङ्गे धृत्वा मुहुरीक्षते । तस्य प्रियस्य योगे नित्यं सर्वदा हृष्यति, तस्य प्रियस्य वियोगे मलिना कृशा च भवति । तस्य प्रियस्य शीलं स्वभावं बहु मन्यते आद्रियते । तस्य प्रियस्य प्रियं प्रीतिकरं वस्तु आत्मनोऽपि प्रियं मन्यते । प्रियस्य निकटे अल्पमूल्यानि वस्तूनि प्रार्थयति । अन्यथा यदि तस्य मनःपीड़ा

---

(१) सम्मुखमिति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मन्यते बहु तच्छीलं तत्प्रियं मन्यते प्रियम्।
प्रार्थयत्यल्पमूल्यानि (१) सुप्ता न परिवर्त्तते॥
विकारान् सात्त्विकानस्य सम्मुखी चाधिगच्छति (२)।
भाषते सूनृतं स्निग्ध-(३) मनुरक्ता नितम्बिनी॥ (क)

१३३। एतेष्वधिकलज्जानि चेष्टितानि नवस्त्रियाः।
मध्यव्रीड़ानि मध्यायाः स्रंसमानत्रपाणि तु।
अन्यस्त्रियाः प्रगल्भायास्तथा स्युर्वारयोषितः॥ (ख)

दिङ्मात्रं यथा मम (ग)।

"अन्तिकगतमपि मामियमवलोकयतीव हन्त! दृष्टापि।
सरसनखक्षतमण्डितमाविष्कुरुते भुजामूलम्॥" (घ)

स्यादिति भावः। सुप्ता सती न परिवर्त्तते प्रियदिशि पृष्ठं न स्थापयतीत्यर्थः। अस्य प्रियस्य सम्मुखी सती सात्त्विकान् विकारान् स्तम्भस्वेदप्रभृतीन् अधिगच्छति देहे प्राप्नोति। तथा स्निग्धं सस्नेहं यथा स्यात्तथा सूनृतं सत्यप्रियवाक्यं भाषते, प्रियमिति शेषः।

(ख) उक्तानां साधारणचेष्टितानामिदानीं मुग्धादिभेदेन नियममाह एतेष्विति। एतेषु नायकसमीपावस्थानप्रभृतिषु चेष्टितेषु मध्ये नवस्त्रिया मुग्धायाः कन्यकायाश्च चेष्टितानि व्यवहाराः अधिकलज्जानि भवन्ति। मध्यायाश्चेष्टितानि मध्यव्रीड़ानि मुग्धाद्यपेक्षया स्वल्पलज्जानि प्रगल्भाद्यपेक्षया तु अधिकलज्जानीत्यर्थः। अन्यस्त्रियाः परोढ़ामात्रस्य प्रगल्भायाः प्रागुक्तलक्षणप्रगल्भाख्यस्वकीयायाः तथा वारयोषितः साधारणस्त्रीरूपाया वेश्यायास्तु चेष्टितानि, स्रंसमाना गलिता त्रपा लज्जा येषु तादृशानि भवन्ति।

(ग) दिङ्मात्रमिति। एषामेकप्रकारमात्रमुदाहरणमित्यर्थः। अन्येषामुदाहरणानि तु ग्रन्थगौरवपरिजिहीर्षया उदाहर्त्तुं परिहृतानीति भावः। अस्माभिरपि।

(घ) अन्तिकेति। हन्तेति नायिकाया भावदर्शनेन वक्तुर्हर्षं द्योतयति। मया दृष्टापि इयं नायिका, अन्तिकगतं मामपि अवलोकयतीव, न पुनर्लज्जावशादेकान्तत एव दृष्टिमर्घो ददातीति भावः। तथा सरसेन अचिरजातत्वादार्द्रेण नखक्षतेन मण्डितं भूषितं भुजामूलं स्तनाभोगश्लिष्टं बाहुमूलम् आविष्कुरुते आविष्कृत्य मां दर्शयतीत्यर्थः। कुन्तलसंयमव्यपदेशेनेति भावः। अतएवेदं "क्वापि कुन्तलसंव्यानेत्यादिः" उदाहरणमिति बोध्यम्।

अत्र प्रतिपाद्यमानेयं नायिका मध्या अवलोकयतीवेत्यनेन मध्यव्रीड़त्वसूचनात्।

---

(१) प्रार्थयते इत्यपि पाठः। (२) नाधिगच्छति इति क्वचित् पाठः।
(३) स्निग्धामिति पुस्तकान्तरे पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तथा (ङ) ।

१३४ । लेख्यप्रस्थापनैः स्निग्धैर्वीक्षितैर्मृदुभाषितैः ।
दूतीसम्प्रेषणैर्नार्य्या भावाभिव्यक्तिरिष्यते ॥ (च)

दूत्यश्च ।

१३५ । दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी ।
बाला प्रव्रजिता कारुः शिल्पिन्याद्याः स्वयं तथा ॥ (छ)

कारुः रजकीप्रभृतिः । शिल्पिनी चित्रकारादिस्त्री । आदिशब्दात् ताम्बूलिक-गान्धिक-स्त्रीप्रभृतयः (ज) ।

तत्र सखी यथा—"श्वासान् मुञ्चति" इत्यादि (१४१ पृष्ठे) ।

स्वयं दूती यथा मम—

"पन्थिअ ! पिआसिओ विअ लच्छीअसि जासि ता किमसत्तो ।
ण मणं वि वारओ इध अत्थि घरे घणरसं पिअन्ताणं ॥" (झ)

---

(ङ) तथेति । पूर्ववत् सकलानामपि नायिकानामित्यर्थः ।

(च) लेख्येति । लेख्यप्रस्थापनैर्लिपिप्रेरणैः स्निग्धैर्वीक्षितैः सानुरागदृष्टिपातैः, मृदुभाषितैः अनुच्चस्वरोक्तिभिः, दूतीसम्प्रेषणैश्च नार्य्या भावाभिव्यक्तिरभिप्रायप्रकाश इष्यते । तत्र लेख्यप्रस्थापनेन यथा मम रुक्मिणीहरणे—

"पशुरश्मि हीनसदसन्मतिः किल पशुपाल ! पालयतु मां तथार्थिनीम् ।
अशिशुः सती नहि यथा पशूपम ! शिशुपालपार्थिववशगामिनी स्त्रिये ॥"

स्निग्धवीक्षितेन यथा मालतीमाधवे—

"अलसवलितमुग्धस्निग्धनिष्पन्दमन्दैरधिकविकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षैरपहृतमपविद्धं पीतमुन्मूलितञ्च ॥"

मृदुभाषितेन यथा नैषधे—

"यस्मिन्नलस्पृष्टकमेत्य दृष्टा भूयोऽपि तं देशमगान्मृगाक्षी ।
निपत्य तत्रास्य धरारजःस्थे पदे प्रसीदेति शनैरवादीत् ॥"

दूतीसम्प्रेषणेन यथा—"श्वासान् मुञ्चति" इत्यादि ।

(छ) दूत्य इति । नटी नृत्यजीविका । धात्रेयी धात्रीतनया । प्रतिवेशिनी एकपल्लीवासिनी । बाला अज्ञातसंसारभावा बालिका । प्रव्रजिता सन्न्यासिनी ।

(ज) आदीति । अत्रापि आद्यशब्दप्रकृतित्वेन अभिन्नार्थत्वेन गणग्रहणे प्रसिद्धत्वेन च मूले आद्यशब्दे स्थितेऽपि आदिशब्दादित्युक्तम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एताश्च नायिकाविषये नायकानामपि दूत्यो भवन्ति ।

दूतीगुणानाह—

१३६ । कलाकौशलमुत्साहो भक्तिश्चित्तज्ञतास्मृतिः ।
माधुर्य्यं नर्म्मविज्ञानं वाग्मिता चेति तद्गुणाः ॥ (ञ)

एता अपि यथौचित्यादुत्तमाधममध्यमाः ।

एता दूत्यः ।

अथ प्रतिनायकः (ट) ।

१३७ । धीरोद्धतः पापकारी व्यसनी प्रतिनायकः । (ठ)

यथा—रामस्य रावणः ।

---

(झ) पन्थिप इति । "पथिक ! पिपासित इव लक्ष्यसे यासि तत् किमन्यत्र । न मनागपि वारक इहास्ति गृहे घनरसं पिबताम् ॥" इति संस्कृतानुवादः । कामार्त्तमिव कञ्चित् पान्थमवलोक्य कुलटाया उक्तिरियम् । हे पथिक ! त्वं पिपासितस्तृषित इव कामार्त्त इव च लक्ष्यसे, तत्तदा अन्यत्र किं यासि । इह मम गृहे घनरसं मेघजलं गाढ़शृङ्गारञ्च पिबतां पानं कुर्व्वताम् अनुभवताञ्च जनानां मनाक् अल्पमपि वारकः प्रतिषेधको नास्ति । तद्यथेष्ट पिबेति भावः । पिपासा अस्य सञ्जातेति पिपासितः, तारकादित्वादितच् ।

अत्र आत्मनैव दूतीकार्य्यकरणादियं वक्री नायिका स्वयं दूती ।

(ञ) कलेति । कला नृत्यगीतादिविद्या, कौशलं सर्व्वकार्य्येषु नैपुण्यं कलासु कौशलं वा, उत्साहः कार्य्येषु उद्यमः, भक्तिः प्रेरकं प्रति अनुरागः, चित्तज्ञता प्रेरकस्य अभिप्रायाभिज्ञता, स्मृतिः स्मरणशक्तिः, माधुर्य्यं सुदृश्यत्वम्, नर्म्मविज्ञानं हासकौतुकाद्यभिज्ञता, वाग्मिता वाक्पटुत्वञ्चेति तस्या दूत्याः गुणाः । न केवलं नायिका एता दूत्योऽपि यथौचित्यात् यथासम्भवात् उत्तमाधममध्यमा इति त्रिविधा भवन्ति ।

(ट) "आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात्" इत्यत्र आदिशब्देन नायिकाप्रतिनायकादयो गृहीताः, तेन नायिकानिरूपणानन्तरं प्रतिनायकनिरूपणस्य क्रमप्राप्तत्वात् तं निरूपयितुमाह अथेति । अथ नायिकानिरूपणानन्तरं प्रतिनायको निरूप्यत इति शेषः ।

(ठ) धीरोद्धत इति । धीरोद्धतः प्रागुक्तलक्षणः, पापकारी पापानुष्ठायी, व्यसनी मनूक्ताष्टादशप्रकार-व्यसनस्य अन्यतमप्रकारवान्, नायकस्य प्रतिपक्षः प्रतिनायकः । व्यसनान्याह मनुः—"मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो मदः । तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥" तत्र पैशुन्यम् अविज्ञातपरदोषाविष्करणम् । तथा च परमहितैषिणोऽपि मन्त्रिणो राक्षसस्य अविज्ञातात्मद्रोहरूपदोषाविष्करणेन व्यसनित्वात् पापकारित्वाञ्च मुद्राराक्षसे मलयकेतोः प्रतिनायकत्वसिद्धिः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथोद्दीपनविभावाः (१) (ड) ।

१३८ । उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये ॥ (ढ)

ते च—(२)

१३९ । आलम्बनस्य चेष्टाद्या देशकालादयस्तथा । (ण)

चेष्टाद्या इत्यादिशब्दाद्रूपभूषणादयः । कालादीत्यादिशब्दाच्चन्द्र-चन्दन-कोकिलालाप-भ्रमरझङ्कारादयः (त) । तत्र चन्द्रो यथा मम ।

"करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य ।
विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः ॥" (थ)

यो यस्य रसस्योद्दीपनविभावः स तत्स्वरूपवर्णने वक्ष्यते ।

---

(ड) अथेति । अथ नायकनायिकाप्रतिनायकात्मकालम्बनविभावनिरूपणानन्तरम् "आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ" इत्युद्देशक्रमप्राप्ता उद्दीपनविभावा निरूप्यन्त इत्यर्थः । व्यक्तिभेदाद्बहुवचनम् ।

(ढ) उद्दीपनेति । ये पदार्था रसमुद्दीपयन्ति आलम्बनविभावैर्नवाङ्कुरितं रसं परिपुष्टिं प्रापयन्ति ते उद्दीपनविभावाः ।

(ण) ननूक्तवाक्येन रसोद्दीपकत्वमुद्दीपनविभावत्वमिति लक्षणं पर्यवस्यति, तथा च इति विभावादिना व्यक्तो रत्यादी रसः रसोद्दीपकयोद्दीपनविभाव इति इतरेतराश्रयदोषापत्तिरित्यतो लक्षणाभिप्रायेण स्पष्टयति आलम्बनस्येति । आलम्बनस्य नायकनायिकादेः चेष्टाद्याः करनयनभङ्गीप्रभृतयः तथा देशकालादयश्च ते उद्दीपनविभावा भवन्ति । एतेन आलम्बनभिन्नत्वे सति रत्याद्युद्दीपकत्वम् उद्दीपनविभावत्वमिति लक्षणं सूचितम् । एवञ्च "रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः" इति साधारणलक्षणमपि सङ्गच्छते । आलम्बनभिन्नत्वञ्च आलम्बनस्येति षष्ठीविभक्तिनिर्देशेनैव द्योतितम् । चेष्टाद्या इत्यादिकन्तु उक्तलक्षणस्यैव स्पष्टीकरणायोक्तमिति बोध्यम् ।

(त) चेष्टाद्या इति । रूपभूषणादय इत्यादिशब्देन पुनर्वीरादिरसेषु वर्मशस्त्रधारणादीनां ग्रहणम् । भ्रमरझङ्कारादय इत्यादिशब्देन च तेष्वेव वीरादिषु सिंहनादादीनां परिग्रहः ।

(थ) करमिति । अयं सुधांशुश्चन्द्रः तद्वत् कोमलसुन्दरो नायकश्च. गलितम् आत्मप्रकाशेन नायिकयापसारणेन च अपसृतं तमःपटलमन्धकारनिकर एव अंशुकं वसनं यस्मात् तस्मिन्, उदयमहीधर उदयपर्वत एव स्तनस्तस्य अग्रे उपरिभागे चुचुके च करं किरणं हस्तञ्च निवेश्य दत्त्वा विकसितं कुमुदमेव ईक्षणं चक्षुर्यस्य तत्तादृशम् अमरेशदिश इन्द्रदिशः प्राच्याः धनिसुतारूपनायिकायाश्च मुखम् अग्रभागं वदनञ्च विचुम्बति स्पृशति निःस्ते च ।

अत्र चन्द्रस्य सामाजिकचित्तेषु रसरूपतया परिणममानरतेरुद्दीपकत्वादुद्दीपनविभावत्वम् ।

---

(१) अत्र ते च इति क्वचित् पाठः । (२) अत्र च पुनः ते च इति क्वचिन्नास्ति ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथानुभावाः (द)।

१४०। उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन्।
लोके यः कार्य्यरूपः सोऽनुभावः काव्यनाट्ययोः॥ (ध)

यः खलु लोके सीतादिचन्द्रादिभिः स्वैः स्वैरालम्बनोद्दीपनकारणैः रामादेरन्तरुद्बुद्धं रत्यादिकं बहिः प्रकाशयन् कार्य्यमित्युच्यते स काव्यनाट्ययोः पुनरनुभावः (न)।

कः पुनरसौ इत्याह—

१४१। उक्ताः स्त्रीणामलङ्कारा अङ्गजाश्च स्वभावजाः।
तद्रूपाः सात्त्विकाभावास्तथा चेष्टाः परा अपि॥ (प)

---

(द) अथेति। अथ आलम्बनोद्दीपनोभयात्मकविभावनिरूपणानन्तरं "विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा" इति प्रथमकारिकोक्तक्रमानुसारेण अनुभावा निरूप्यन्त इत्यर्थः। अत्रापि व्यक्तिभेदाद्बहुवचनम्।

(ध) उद्बुद्धमिति। स्वैः स्वैर्वृत्तिविवृतैः कारणैः उद्बुद्धम् उत्पादितं भावं रत्यादिस्थायिभावं बहिः प्रकाशयन् जनान्तरेष्वनुमापयन् लोके लौकिकदशायां यः कार्य्यरूपः स्थायिभावजन्यस्वरूपः स पुनः काव्यनाट्ययोर्निवेशितः सन् अनुभाव उच्यते। एतेन जन्यतया स्थायिभावानुमापकत्वं स्थायिभावजन्यत्वं वा अनुभावत्वमिति लक्षणं सूचितम्। अत्र लोके कार्य्यरूप इत्यनेन सामाजिकचित्तेषु तस्यैव रत्यादिस्थायिभावस्यालौकिकरसदशायामनुभावोऽपि कारणमेवेति द्योतितम्। अतएव "कारणकार्य्यसञ्चारिरूपा अपि हि लोकतः। रसोद्बोधे विभावाद्याः कारणान्येव ते मताः॥" इति प्रागुक्तं सङ्गच्छते। अनुभाव इति पुनर्जात्यपेक्षयैकवचनम्।

(न) व्याचष्टे य इति। लोके लौकिकदशायाम्। प्रथमादिपदेन शृङ्गारे शकुन्तलादीनां वीरादिषु च रावणादीनां ग्रहणम्। द्वितीयादिपदेन शृङ्गारे चन्दनादीनां वीरादिषु च रावणादिचेष्टादीनां परिग्रहः। अत्र यथासंख्येनान्वयः। तथा च सीतादीनि आलम्बनरूपकारणानि, चन्द्रादीनि च उद्दीपनकारणानि। रामादेरित्यादिपदेन शृङ्गारे दुष्मन्तादीनां वीरादिषु च युधिष्ठिरादीनां ग्रहणम्। अन्तरुद्बुद्धम् अन्तःकरणे उत्पादितम्। कारिकोक्तभावमित्यस्यार्थमाह—रत्यादिकमिति। आदिपदेन उत्साहादिस्थायिभावान्तराणि गृह्यन्ते।

(प) उक्ता इति। अत्र स्त्रीणामित्युपलक्षणं पुंसामपि यथासम्भवमलङ्कारा ग्राह्याः। अतएवोक्तम्—"भावाद्या दश पुंसां भवन्त्यपि" इति। अङ्गजा भाव-हाव-हेलाख्यास्त्रयः, स्वभावजाश्च लीलाविलासादयोऽष्टादश ये स्त्रीणां यथासम्भवं पुंसाञ्च अलङ्कारा उक्ताः "यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः" इत्यादिना प्रागभिहिताः, ये च सात्त्विका भावाः स्तम्भस्वेदादयो वक्ष्यमाणाः, तथा परा अन्या अपि या चेष्टा

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तद्रूपा अनुभावस्वरूपाः। अत्र च (१) यो यस्य रसस्यानुभावः स तत्स्वरूपवर्णने वक्ष्यते।

तत्र सात्त्विकाः।

**१४२। विकाराः सत्त्वसम्भूताः सात्त्विकाः परिकीर्त्तिताः। (फ)**

सत्त्वं नाम स्वात्मविश्रामप्रकाशकारी कश्चनान्तरो धर्म्मः (ब)।

**१४३। सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः॥ (भ)**

गोबलीवर्द्दन्यायेनेति शेषः (म)।

के ते इत्याह—

---

रत्यादिमती जनस्य कटाक्षादयः, ते तद्रूपा अनुभावस्वरूपा ज्ञेयाः। रत्यादिस्थायिभावजन्यत्वाभावात् शोभाकान्त्यादयः सप्त नानुभावा भवितुमर्हन्ति। अतएव अयत्नजानां शोभाकान्त्यादिसप्तानां व्यावृत्त्यर्थम् "अङ्गजाश्च स्वभावजा" इतिमात्रमुक्तम्।

(फ) विकारा इति। सत्त्वेन गुणेन सम्भूताः सञ्जाताः विकारा अन्यथाभावाः सात्त्विकाः परिकीर्त्तिताः।

(ब) ननु किं तावत् सत्त्वमित्याह सत्त्वमिति। स्वस्य सामाजिकस्य आत्मनि विश्रामोऽवस्थानं यस्य स रसतदाभासादिः तस्य प्रकाशं कर्त्तुं शीलं यस्येति स तथोक्तः। आन्तरः अन्तःकरणवर्त्ती। तथा च सांख्यकारिका—"सत्त्वं लघु प्रकाशकमिष्टम्" इत्यादिः। "रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते" इत्यस्य सरस्वतीकण्ठाभरणोक्तत्वात् लक्षणादुष्टत्वात् व्यवहितत्वाच्चेदं स्वमतमभिहितमिति बोध्यम्।

(भ) ननु सात्त्विकभावानामनुभावरूपत्वे "विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः" इति प्राक्-प्रदर्शितप्राचीनकारिकायां कथं सात्त्विका इति पृथगुपादानं सङ्गच्छत इत्याह सत्त्वेति। ते सात्त्विका भावाः सत्त्वमात्रोद्भवत्वात् केवलसत्त्वगुणजातत्वात् अनुभावतो निरुक्तानुभावात् भिन्ना अपि। अपिशब्देन अभिन्ना अपीति द्योत्यते। अतएव "तद्रूपाः सात्त्विका भावाः" इति प्रागुक्तमपि सङ्गच्छते।

(म) नन्वेकस्मिन्नेव सात्त्विकभावे अनुभावभिन्नत्वं तदभिन्नत्वञ्च कथमुपपद्यते, व्याप्यवृत्त्योर्भेदाभेदयोर्विरोधेनैकत्रावस्थानासम्भवादित्याह गोबलीवर्द्देति। बलीवर्द्दो वृषभः। तथा च यथा बलीवर्द्दे धेनुरूपाया गोर्भेदः, वृषभरूपस्य तु गोरभेदः, तथा स्तम्भस्वेदादिसात्त्विकभावे भावहावादिरूपानुभावस्य भेदः स्तम्भस्वेदादिरूपानुभावस्य तु अभेद इति। एवञ्च सात्त्विकभावानामनुभावाभिन्नत्वपक्षे "सात्त्विकाश्चानुभावरूपत्वान्न पृथगुक्ताः" इति स्वयं प्रागुक्तम्, अनुभावभिन्नत्वपक्षे च "विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः" इति प्राचीनोक्तञ्च सङ्गच्छते।

---

(१) तत्र चेति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१४४। स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः॥ (य)

तत्र—

१४५। स्तम्भश्चेष्टाप्रतीघातो भयहर्षामयादिभिः।
वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिभिः॥
हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया।
मद-सम्मद-पीड़ाद्यैर्वैस्वर्य्यं गद्गदं विदुः॥
राग-द्वेष-श्रमादिभ्यः कम्पो गात्रस्य वेपथुः।
विषाद-मद-रोषाद्यैर्वर्णान्यत्वं विवर्णता॥
अश्रु नेत्रोद्भवं वारि क्रोधदुःखप्रहर्षजम्।
प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः॥ (र)

यथा मम।

"तनुस्पर्शादस्या दरमुकुलिते हन्त! नयने
उदञ्चद्रोमाञ्चं व्रजति जड़तामङ्गमखिलम्।
कपोलौ घर्म्मार्द्रौ ध्रुवमुपरताशेषविषयं
मनः सान्द्रानन्दं स्पृशति झटिति ब्रह्म परमम्॥" (ल)

---

(य) स्तम्भ इति। वैवर्ण्यं विकृतवर्णता।

(र) स्तम्भ इति। आमयो रोगः। एषु सर्वत्रैवादिशब्देन गाढ़ानुरागादि यथासम्भवस्थायि-भावान्तराणां ग्रहणम्। तेन स्तम्भादिषु निरुक्तानुभावलक्षणस्य नाव्याप्तिः। आमयादिजन्यानां स्तम्भादीनान्तु रसव्यञ्जकनिरुक्तानुभावरूपत्वाभावेऽपि केवलसम्भवप्रदर्शनार्थमुक्तमिति बोध्यम्। चेष्टाप्रतीघातो दैहिक-क्रियानिवृत्तिः स्तम्भः। रतिः सुरतम्, घर्म्मो ग्रीष्मः। वपुर्जलोद्गमो देहतो जलाविर्भावः। रोमविक्रिया रोमोद्गमो रोमाञ्चः। मदो मत्तता, सम्मद आनन्दः। वैस्वर्य्यं स्वरभङ्गम्। रागोऽनुरागः। प्रहर्ष आनन्दभावम्। तेनानुरागानन्दस्यापि ग्रहणात् अश्रुण्यपि निरुक्तानुभावलक्षणस्य नाव्याप्तिः। सुखदुःखाभ्यां सुखेन दुःखेन वा चेष्टाया दैहिकक्रियाया ज्ञानस्य च निराकृतिर्विलोपः प्रलयः। प्रलयेऽपि पूर्ववदनुभाव-लक्षणस्य सङ्गतिः।

(ल) तन्विति। कृतनायिकासम्भोगस्य नायकस्य निजावस्थावर्णनमिदम्। हन्तेति हर्षे। अस्याः



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवमन्यत् (व) ।

अथ व्यभिचारिणः (श) ।

१४६ । विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।

स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च तद्भिदाः ॥ (ष)

स्थिरतया वर्त्तमाने हि रत्यादौ निर्वेदादयः प्रादुर्भावतिरोभावाभ्यामाभिमुख्येन चरणाद्व्यभिचारिणः कथ्यन्ते (स) ।

के ते इत्याह—

---

प्रियायास्तनुस्पर्शात् नयने नेत्रद्वयं दरमुकुलिते ईषन्मुद्रिते । उदञ्चन्त उत्पद्यमाना रोमाञ्चा यत्र तादृशम् अखिलम् अङ्गं जड़तां स्तब्धतां व्रजति । अनेन रोमाञ्चस्तम्भावभिहितौ । कपोलौ घर्मेणार्द्रौ जाताविति स्वेद उक्तः । उपरता निवृत्ता अशेषा विषया यस्मात्तादृशं मनः ध्रुवं निश्चितं सान्द्रानन्दं घनानन्दस्वरूपं परमं ब्रह्म झटिति स्पृशति अधिगच्छति ब्रह्मानन्दवद्घनानन्दे प्रलीयत इत्यर्थः । अनेन प्रलय उक्तः ।

(व) एवमिति । अन्यदपि एवमूह्यमित्यर्थः । तथा च—"बाले ! नाथ ! विमुञ्च मानिनि ! रुषम्" इत्यत्र स्वरभङ्गः । "मा गर्वमुद्वह" इत्यत्र वेपथुः । "क्षीणं वीक्ष्य मुखम्" इत्यत्र वैवर्ण्यमश्रु च इति तर्कवागीशः ।

(श) अथेति । अथ अनुभावनिरूपणानन्तरम्, "विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा" इति प्रथमकारिकोक्तक्रमानुसारेण व्यभिचारिणो भावा निरूप्यन्त इत्यर्थः । तत्र सञ्चारी व्यभिचारीति नार्थान्तरम् ।

(ष) विशेषादिति । विशेषात् विभावानुभावापेक्षया अतिरेकात् इदन्तु व्यभिचारिशब्दस्यान्तर्गतविशब्दस्यार्थकथनम् । आभिमुख्येन रसपुष्टिं प्रत्यानुकूल्येन । एतच्च अभिशब्दस्यार्थप्रदर्शनम् । चरन्तः प्रवर्त्तमानाः, तथा स्थायिनि भावे कदाचिदुन्मग्ना जले बुद्बुदा इव प्रादुर्भूताः, निर्मग्ना जले बुद्बुदा इव च पुनस्तिरोभूता भावा व्यभिचारिणः कथ्यन्ते । तथा च विभावानुभावापेक्षया विशेषेण रसपुष्टिजनकभावत्वं व्यभिचारित्वमिति लक्षणम् । एवञ्च स्थायिन्युन्मग्ननिर्मग्ना इति स्वभावकथनमात्रम् । तत्र निर्वेदादीनां व्यभिचारिणां विशेषेण रसपुष्टिजनने सभ्यानां प्रतीतिरेव साक्षिणीति द्रष्टव्यम् । तस्य व्यभिचारिणो भिदा भेदास्त्रयस्त्रिंशत् । इदमप्युपलक्षणं रत्यादयोऽपि रसान्तरेषु व्यभिचारिणो भवन्तीति बोध्यम् । तथा च वक्ष्यति—"एते च त्रयस्त्रिंशद्व्यभिचारिभेदा इति यदुक्तं तदुपलक्षणमित्याह । रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः" इति । एवञ्च "त्रयस्त्रिंशदिति न्यूनसंख्याया व्यवच्छेदकं न त्वधिकसंख्यायाः । अतएवोक्तम्—"हासक्रोधादयः शृङ्गारवीरादौ व्यभिचारिण एवे"ति । तेन "एतदर्थमत्र चकार उपन्यस्तः" इति रामचरणोक्तं मूलविरोधादपास्तम् । चकारस्तु पुनरर्थे सार्थक एव ।

(स) लक्षणोपयोगिफलितार्थमाह स्थिरेति । स्थिरतया रसान्तरोपस्थितिं यावत् प्रवाहवत् स्थायित्वेन । आभिमुख्येन रसपुष्टिजननायानुकूल्येन चरणात् प्रवर्त्तनात् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१४७ । निर्वेदावेगदैन्यश्रममदजड़ता औग्र्यमोहौ विबोधः
स्वप्नापस्मारगर्वा मरणमलसतामर्षनिद्रावहित्थाः ।
औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधिसन्त्रासलज्जा
हर्षासूयाविषादाः सधृतिचपलताग्लानिचिन्तावितर्काः ॥ (ह)

तत्र निर्वेदः ।

१४८ । तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमानना (१) ।
दैन्यचिन्ताश्रुनिश्वासवैवर्ण्योच्छ्वसितादिकृत् ॥ (च)

तत्र तत्त्वज्ञानान्निर्वेदो यथा—

"मृत्कुम्भवालुकारन्ध्र-पिधानरचनार्थिना ।
दक्षिणावर्त्तशङ्खोऽयं हन्त ! चूर्णीकृतो मया ॥" (क)

अथावेगः ।

१४९ । आवेगः सम्भ्रमस्तत्र वर्षजे पिण्डिताङ्गता (२) ।
उत्पातजे स्त्रस्तताङ्गे धूमाद्याकुलताग्निजे ॥

(ह) निर्वेदेति । औग्र्यम् उग्रता । स्मृतिमतिसहिता इति सहितशब्दः सधृतीति सत्वप्राप्तसहशब्दश्च स्रग्धराच्छन्दःपूरणार्थः ।

(च) अथ शिष्टव्युत्पत्त्यर्थं निर्वेदादीनां हेतुकार्य्यनिर्द्देशसमेतं क्रमशो लक्षणमाह तत्त्वेति । तत्त्वज्ञानं यथार्थज्ञानम् आपत् ईर्ष्या आदिशब्दात् उत्कटाशाभङ्गादिश्च तस्मात् तेर्जायमाना, दैन्यं चिन्ता अश्रु निश्वासः वैवर्ण्यम् उच्छ्वसितं हताशभावः आदिशब्दात् प्रव्रज्यादिश्च तं करोतीति सा तथोक्ता, स्वावमानना निजवुद्धिकर्म्मादावज्ञा निर्वेदः ।

(क) मृदिति । संसारकर्म्मणा प्रायेणातिवाहितजीवनस्य कस्यचित् सखेदोक्तिरियम् । मृत्कुम्भस्य मृत्तिकानिर्म्मितकलसस्य यत् वालुकारन्ध्रं वालुकावत् छिद्रं तस्य पिधानरचनार्थिना आवरणकरणेच्छुना मया, हन्तेति खेदे, अयं देहलक्षणो दक्षिणावर्त्तशङ्खः महामूल्यः शङ्खविशेषः चूर्णीकृतः तत् पिधानोपयोगि-चूर्णपदार्थो विहितः ।

अत्र नितान्ततुच्छमृत्कुम्भवालुकारन्ध्रपिधानाय महामूल्यदक्षिणावर्त्तशङ्खचूर्णीकरणमिव नितान्ततुच्छ-संसाराभावपूरणाय परमपुरुषार्थलाभोपयोगिमानवजीवनातिवाहनमतीवान्याय्यं जातमिति यथार्थज्ञानेन स्वकर्म्मण्यवज्ञाकरणान्निर्वेदः ।

(१) स्वावमाननमिति पाठान्तरम् । (२) पीडिताङ्गता इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

राजविद्रवजादेस्तु शस्त्रनागादियोजनम् ।
गजादेः स्तम्भकम्पादिः पांश्वाद्याकुलतानिलात् ॥
इष्टाद्धर्षाः शुचोऽनिष्टाज्ज्ञेयाश्चान्ये यथायथम् । (ख)

तत्र शत्रुजो यथा—

"अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनपेक्ष्य भरताग्रजो यतः ।
क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकाम् ॥" (ग)

एवमन्यदूह्यम् (घ) ।

अथ दैन्यम् ।

१५० । दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादिकृत् ॥ (ङ)

(ख) आवेग इति । सम्भ्रमस्त्वरा आवेग इत्यावेगलक्षणम् । तस्य व्युत्पत्तिर्वैचित्र्यार्थं कतिपयानि कारणानि कार्य्याणि चाह तत्रेत्यादि । तत्र आवेगे वर्षजे वृष्टिजाते सति लोकानां पिण्डिताङ्गता सर्वाङ्गानामार्द्रतानिवारणाय सङ्कुचिताङ्गता भवति । उत्पातस्त्रिविधः—दिव्य-नाभस भौमभेदात् । तत्र अपर्वणि चन्द्रसूर्य्यग्रहणादिर्दिव्यः, वज्रोल्कापातनिर्घातादिर्नाभसः, भूमिकम्पादिर्भौमः । तत्र उत्पातजे सन्निहितनाभसोत्पातजाते आवेगे अङ्गे स्रस्तता तत्तेजसा शिथिलता जायते । अग्निजे आवेगे धूमेन आदिशब्दात् सन्तापादिना च आकुलता जायते । राजविद्रवजात् आदिशब्देन शत्रुजादेश्च आवेगात् शस्त्राणाम् आयुधानां नागानां हस्तिनाम् आदिशब्दात् उपयुक्तप्रतीकारोपायानाञ्च योजनं संग्रहणं जायते । गजादेः सकाशात् आवेगे सति स्तम्भः कम्पः आदिशब्दात् मूर्च्छादिश्च भवति । अनिलाद्वातात् आवेगे जायमाने पांशुभिर्धूलिभिः आदिशब्दात् तृणपर्णादिभिश्च आकुलता भवति । इष्टात् प्रियसङ्गमादिकारणात् आवेगे सति हर्षा जायन्ते । अनिष्टात् प्रियविच्छेदादिकारणात् आवेगे सति शुचः शोकाः प्रादुर्भवन्ति । अन्ये च सकार्य्यकारणा आवेगा यथायथं ज्ञेयाः । तथा च अलीकयशोलिप्सावेगे ग्रन्थकृतामफलमनल्पजल्पनम् । यथा अत्रैव विश्वनाथस्य ।

(ग) अर्घ्यमिति । रघुवंशे रामसंहारायोपस्थितस्य परशुरामस्य कार्य्यवर्णनमिदम् । स परशुरामः, अर्घ्यम् अर्घ्यं गृहाणेति शेषः इतिवादिनं नृपं दशरथम् अनपेक्ष्य अवज्ञाय यतो यस्मिन् स्थाने भरताग्रजो रामो वर्त्तते, ततः तस्मिन् स्थाने, क्षत्रेषु क्षत्रियेषु कोप एव दहनो वह्निस्तस्य अर्च्चिषं शिखास्वरूपाम् उदग्रतारकाम् उन्नततारां दृशं नयनं सन्दधे शरमिव सन्दधाति स्म ।

अत्र अर्घ्यमर्घ्यमिति वीप्सार्थोक्तितो दशरथस्य परशुरामरूपशत्रुज आवेगः ।

(घ) एवमिति । यथा मम वङ्गीयप्रतापनाटके—

"इयं मूर्त्तिमती नीतिः साक्षादिव सतीस्थितिः । प्राणैर्न त्यज्यते [illegible] धर्मसंस्थापनक्षमा ॥"

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र प्रतापादित्यस्य प्रियपत्नीविच्छेदजात आवेगः । अन्यत्राप्येवम् ।

यथा—"वृद्धोऽन्धः पतिरेष मञ्चकगतः स्थूणावशेषं गृहं
कालोऽभ्यर्णजलागमः कुशलिनी वत्सस्य वार्त्तापि नो।
यत्नात् सञ्चिततैलविन्दुघटिका भग्नेति पर्य्याकुला
दृष्ट्वा गर्भभरालसां निजवधूं श्वश्रूश्चिरं रोदिति॥" (च)

अथ श्रमः।

१५१। खेदो रत्यध्वगत्यादेः श्वासनिद्रादिकृच्छ्रमः। (छ)

यथा—"सद्यः पुरीपरिसरे च शिरीषमृद्वी
गत्वा जवात् त्रिचतुराणि पदानि सीता।
गन्तव्यमस्ति कियदित्यसकृद्‌ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम्॥" (ज)

अथ मदः।

(ङ) दौर्गत्येति। दौर्गत्येन दारिद्र्येण आद्यशब्दात् प्रभुतर्जनादिभिश्च जातम्, मलिनतां मुखादिमालिन्यम् आदिशब्दात् मनोदुःखादिकञ्च करोतीति तत् तादृशम् अनौजस्यं मनसो बलशून्यता दैन्यम्।

(च) वृद्ध इति। वृद्धः अन्धश्च एष मम पतिः मञ्चकगतः चलितुमशक्तत्वात् सर्वदैव खट्वास्थितः। अतएव वर्त्तमानदुःखप्रतीकारासमर्थ इति भावः। गृहं स्थूणावशेषं स्तम्भमात्रावशिष्टम्। अतो वृष्टि-पातस्यावश्यम्भावादस्मिन् गृहे स्थितिरप्यसम्भवेत्याशयः। कालः अभ्यर्णजलागमः सन्निहितवर्षाकालः। अतएव वृष्टिपातकष्टभोगस्य विलम्बोऽपि नास्तीत्याशयः। वत्सस्य उपार्जनाय देशान्तरं गतस्य पुत्रस्य कुशलिनी मङ्गलज्ञापिका वार्त्तापि नो प्राप्यत इति शेषः। अतस्तदपि महाशङ्काकारणमित्यभिप्रायः। तथा यत्नात् सञ्चितानां तैलविन्दूनां घटिका क्षुद्रपात्रं भग्ना इति हेतोः पर्य्याकुला अतीवविकला श्वश्रूः, निजवधूं स्नुषां गर्भभरालसां दृष्ट्वा चिरं रोदिति।

अत्र दैन्यं स्पष्टम्।

(छ) खेद इति। रतिः सुरतम् अध्वगतिर्दूरपथगमनम् आदिशब्दात् वृक्षच्छेदनादिकञ्च तस्मात् जातः, श्वासं दीर्घश्वासं निद्राम् आदिशब्दादवसादञ्च करोतीति स तादृशः खेद आयासः श्रमः।

(ज) सद्य इति। अयोध्यातः सीतारामयोर्वनप्रस्थानकालीनावस्थावर्णनमिदम्। शिरीषमृद्वी शिरीषकुसुमवत् कोमलाङ्गी सीता, पुरीपरिसरे च अयोध्याप्रान्त एव सद्यस्तत्क्षणात् जवात् वेगात् त्रिचतुराणि पदानि गत्वा, अन्यत् कियद्गन्तव्यमस्ति वनोपस्थिताविति शेषः इति असकृत् वारं वारं ब्रुवाणा सती, रामस्य अश्रुणां नयनजलस्य प्रथमावतारं प्राथमिकाविर्भावं कृतवती।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र कियद्गन्तव्यमस्तीति मुहुःकथनादेव सीताया अवसादप्रतीतेः श्रमः।

१५२ । सम्मोहानन्दसम्भेद मदो मद्योपयोगजः ॥

अमुना चोत्तमः शेते मध्यो हसति गायति ।

अधमप्रकृतिश्चापि परुषं वक्ति रोदिति ॥ (झ)

यथा—"प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचना-रमणीयः ।

गूढ़सूचितरहस्यसहासः सुभ्रुवां प्रववृते परिहासः ॥" (ञ)

अथ जड़ता ।

१५३ । अप्रतिपत्तिर्जड़ता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।

अनिमिषनयननिरीक्षण-तूष्णीम्भावादयस्तत्र ॥ (ट)

यथा मम कुवलयाश्वचरिते प्राकृतकाव्ये—

"णवरिअ तं जुअजुअलं अण्णोण्णणिहिदसजलमन्थरदिट्ठिं ।

आलेक्खअप्पिदं विअ खणमेत्तं तत्थ ट्ठिअं मुत्तसङ्गं (१) ॥" (ठ)

---

(झ) सम्मोहेति । मद्यस्य स्वनामख्यातस्य उपयोगजः पानाज्जातः, सम्मोहानन्दयोः सम्भेदो मेलनं मदः । तस्य कार्य्यमाह अमुनेत्यादि । अमुना मदेन उत्तमो धीरप्रकृतिः शेते शयनमात्रं करोति । मध्यो मध्यप्रकृतिर्जनः हसति गायति च । अधमप्रकृतिरधीरस्वभावो जनश्च परुषं वक्ति अपि च रोदिति ।

(ञ) प्रातिभमिति । "त्रिसरकं त्रिवारमधुपानम्" इति मल्लिनाथः । तेन त्रिवारमद्यपानेन प्रातिभं बुद्धिप्रभावविशेषं गतानां प्राप्तानां सुभ्रुवां कामिनीनां वक्रवाक्यरचनया व्यङ्ग्योक्त्या रमणीयः, गूढ़ानि पूर्वं लज्जावशात् संवृतानि सूचितानि इदानीं मदवशात् प्रकाशितानि रहस्यानि रमणादिगुप्त-व्यापारा यस्मिन् स चासौ सहासश्चेति स तथोक्तः परिहासो नर्म्मकेलिः प्रववृते प्रवृत्तः । श्लोकोऽयं शिशुपालवध-दशमसर्गे ।

अत्र रमणीनां हासकरणान्मदः । ताश्च मध्याः ।

(ट) अप्रतीति । इष्टानिष्टयोर्दर्शनानि श्रुतयः श्रवणानि च ताभिः । व्यक्तिभेदाद्बहुवचनम् । अप्रतिपत्तिः कर्त्तव्यमूढ़ता जड़ता स्यात् । तत्र जड़तायां सत्याम् अनिमिषेण नयनेन निरीक्षणं तूष्णीम्भावः आदिशब्दान्निष्पन्दतादयश्च जायन्ते ।

(ठ) णवरिअं इति । णवरिअं इति केवलार्थं देशीयभाषा । "केवलं तद्युवयुगलम् अन्योन्य-निहितसजलमन्थरदृष्टि । आलेख्यार्पितमिव क्षणमात्रं तत्र स्थितं मुक्तसङ्गम् ॥" इति संस्कृतानुवादः । केवलं तत् मुक्तसङ्गं त्यक्तसंसर्गं युवयुगलं युवकयुवतिद्वयम् अन्योन्यस्मिन् निहिता स्थापिता सजला

---

(१) आलक्खणी पिअं, आलिक्खणी पिअं । अखरणं, अखसणं इति पाठभेदाः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ उग्रता।

१५४। शौर्य्यापराधादिभवं भवेच्चण्डत्वमुग्रता।

तत्र स्वेदः शिरःकम्प-तर्जनाताड़नादयः॥ (ड)

यथा—"प्रणयिसखीसलीलपरिहासरसाधिगतै-

र्ललितशिरीषपुष्पहननैरपि ताम्यति यत्।

वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः

पततु शिरस्यकाण्डयमदण्ड इवैष भुजः॥" (ढ)

अथ मोहः।

१५५। मोहो विचित्तताभीति-दुःखावेगानुचिन्तनैः।

घूर्णनापातपतन-भ्रमणादर्शनादिकृत्॥ (ण)

यथा—"तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम्।

अज्ञातभर्तृव्यसना मुहूर्त्तं कृतोपकारेव रतिर्बभूव॥" (त)

---

अस्तुस्तिक्ता मन्थरा निर्निमेषा दृष्टिर्येन तत्, अतएव आलेख्यकार्पितं चित्रपटे स्थापितमिव तत्र क्षणमात्रं स्थितम्।

अत्र परस्परयोर्विष्टदर्शनेन कर्त्तव्यमूढ़तया जड़ता।

(ड) शौर्य्येति। शौर्य्यं शूरवीरत्वं परस्यापराधः आदिशब्दात् परकृतापकारादिकञ्च तस्माद्भवतीति तत्तथोक्तम्, चण्डत्वम् अत्यन्तकोपनत्वम् उग्रता भवेत्। तत्र उग्रतायां सत्यां स्वेदो घर्म्मजलं शिरसः कम्पः तर्जना ताड़ना आदिशब्दात् हत्यादयश्च जायन्ते।

(ढ) प्रणयीति। मालतीमाधवे मालतीं हन्तुमुद्यतमघोरघण्टमुद्दिश्य माधवस्योक्तिरियम्। यत् वपुः प्रणयिनीनां सखीनां सलीलो यः परिहासस्तत्र रसेन रागेण स्वेच्छयेत्यर्थः अधिगतैः प्राप्तैः, ललितस्य कोमलस्य शिरीषपुष्पस्य हननैः प्रहारैरपि ताम्यति व्यथामापद्यते। तत्र मालत्या वपुषि वधाय शस्त्रं खड्गम् उपक्षिपतः पातयतस्तव शिरसि, अकाण्डे अनवसरे पतनशील इत्यर्थः यमदण्ड इव एष भुजो मम समुष्टिबन्धी दक्षिणहस्तः पततु।

अत्र अघोरघण्टस्य मालतीहननोद्यमरूपापराधेन माधवस्य उग्रता।

(ण) मोह इति। भीतिः दुःखम् आवेगः अनुचिन्तनम् उत्कटचिन्ता तैर्जाता, घूर्णनां नेत्रघूर्णनम्, पातपतनं भूतलावलुण्ठनम्, भ्रमणं पर्य्यटनम्, अदर्शनं प्रच्छन्नतामज्ञानं वा आदिशब्दात् आत्महत्यादिकञ्च करोतीति सा तथोक्ता विचित्तता विषमचित्तवृत्तिता मोहः।

(त) तीव्रेति। कुमारसम्भवे मदनभस्मानन्तरं रतेरवस्थावर्णनमिदम्। रतिर्मदनभार्य्या, तीव्रात् अभिषङ्गात् भर्तृमरणशोकात् प्रभवेण जातेन, इन्द्रियाणां वृत्तिं रूपादिविषयग्रहणव्यापारं संस्तम्भयता अवरुन्धता

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ विबोधः ।

१५६ । निद्रापगमहेतुभ्यो विबोधश्चेतनागमः ।
जृम्भाङ्गभङ्गनयन-मीलनाङ्गावलोककृत् ॥ (थ)

यथा—"चिररतिपरिखेदात् प्राप्तनिद्रासुखानां
चरममपि शयित्वा पूर्वमेव प्रबुद्धाः ।
अपरिचलितगात्राः कुर्वते न प्रियाणाम्
अशिथिल-(१) भुजचक्राश्लेषभेदं तरुण्यः ॥" (द)

अथ स्वप्नः ।

१५७ । स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः ।
कोपावेग-भय-ग्लानि-सुखदुःखादिकारकः ॥ (ध)

यथा—"मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
र्लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेन ।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिशलयेष्वश्रुलेशाः पतन्ति ॥" (न)

---

मोहेन, अज्ञातं भर्त्तुर्मदनस्य व्यसनं विपन्मरणं यया सा तादृशी सती मुहूर्त्तं किञ्चित्कालं कृतोपकारेव बभूव ।

अत्र रत्या अज्ञानकारी भर्तृमरणदुःखजातो मोहः ।

(थ) निद्रेति । निद्रापगमहेतुभ्यः शयननियमपराह्वानादिभ्यः जात इति शेषः, जृम्भाम्, अङ्गभङ्गं गात्रप्रसारणम्, नयनयोर्मीलनम् उन्मीलनम्, अङ्गानाम् अवलोकं निरीक्षणञ्च करोति निष्पादयतीति स तथोक्तः, चेतनागमश्चैतन्यलाभो विबोधः ।

(द) चिरेति । शिशुपालवधे प्रभातवर्णनेयम् । चरमं परं शयित्वापि पूर्वमेव प्रबुद्धा जागरिता-स्तरुण्यः, अपरिचलितगात्राः प्रियनिद्राभङ्गभयान्निष्पन्ददेहाः सत्यः, चिररतिपरिखेदात् बहुकालरमणपरिश्रमात् प्राप्तनिद्रासुखानां प्रियाणां पतीनाम्, अशिथिलेन भुजचक्रेण बाहुमण्डलेन य आश्लेषः आलिङ्गनं तस्य भेदं स्खलनं न कुर्वते ।

अत्र तरुणीनां समयनियमान्नयनोन्मीलनकारी चेतनागमो विबोधः ।

(ध) स्वप्न इति । कोपावेग-भय-ग्लानि-सुखदुःखादिकारकः, आदिशब्दाद्दृश्यमानतादिकारकश्च, निद्रामुपेतस्य जनस्य यो विषयानुभवः पदार्थज्ञानं स तु स्वप्नः ।

---

(१) अशिथिलेति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ अपस्मारः।

१५८। मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः।
भूपातकम्पप्रस्वेद-फेनलालादिकारकः॥ (प)

यथा—"आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारवृहत्तरङ्गम्।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के॥" (फ)

अथ गर्वः।

१५९। गर्वो मदः प्रभावश्री-विद्यासत्कुलतादिजः।
अवज्ञासविलासाङ्ग-दर्शनाविनयादिकृत्॥ (ब)

यथा—"धृतायुधो यावदहं तावदन्यैः किमायुधैः।
यद्वा न सिद्धमस्त्रेण मम तत् केन साध्यताम्॥" (भ)

(न) मामिति। मेघदूते यक्षस्योक्तिरियम्। मया स्वप्नसन्दर्शनेन कथमपि अतिकष्टेन लब्धायास्तव निर्द्दयाश्लेषहेतोर्गाढ़ालिङ्गनाय आकाशे प्रणिहितभुजम् उत्तोलितबाहुं मां पश्यन्तीनां स्थलीदेवतानां वनदेवतानां मुक्तावत् स्थूलाः अश्रुलेशा नयनजलविन्दवः, तरुकिशलयेषु बहुशो बहुवारं न पतन्ति इति न खलु अपि तु पतन्त्येव। ममावस्थामवलोक्य वनदेवता अपि रुदन्तीत्यर्थः।

अत्र यक्षस्य आकाशे भुजप्रणिधानकारी प्रियतमारूपविषयानुभवः स्वप्नः।

(प) मन इति। ग्रहाणां शनिप्रभृतीनाम् आदिशब्दात् भूतादीनाञ्च, आवेशनात् अधिष्ठानात् आदिशब्देन वात-पित्त-कफवैषम्याच्च जायत इति सः, भूपातम्, कम्पम्, प्रस्वेदं घर्म्मवारि, फेनम्, लालाम्, आदिशब्दात् अचैतन्यञ्च करोतीति सः, मनसः क्षेपो विषयग्रहणासामर्थ्यम् अपस्मारः। अतएव मोहाद्भेदः।

(फ) आश्लिष्टेति। शिशुपालवधे समुद्रवर्णनेयम्। असौ कृष्णः, आश्लिष्टभूमिम् आलिङ्गितभूतलम्, उच्चैः रसितारं शब्दायमानम्, ललन्तः स्रंसमाना भुजाकारा बृहन्तस्तरङ्गा यस्य तम्, फेनायमानं फेनमुद्वमन्तम्, आपगानां नदीनां पतिं समुद्रम्, अपस्मारिणम् अपस्माररोगवन्तम् आशशङ्के उत्प्रेक्षितवान्।

अत्र सम्भाव्यमानग्रहावेशादिजाती भूपातफेनकारक उपमानव्यक्तेरपस्मारः।

(ब) गर्व इति। प्रभावः प्रतापः, श्रीः सौन्दर्य्यम्, विद्या शास्त्रादिज्ञानम्, सत्कुलता निर्म्मलवंशोत्पत्तिः, आदिशब्दात् शौर्य्यादिश्च तस्माज्जायत इति सः, अवज्ञां परेषु अवहेलाम्, सविलासम् अङ्गदर्शनम्, अविनयम् अशिष्टाचारम् आदिशब्दात् आत्मप्रशंसादिञ्च करोतीति सः, मन्दः अभिमानी गर्वः।

(भ) धृतेति। वेणीसंहारे कर्णस्य उक्तिरियम्। यावदहं धृतायुधः स्थितः तावत् अन्यैरन्यधृतैः आयुधैः किं प्रयोजनम्। यद्वा कार्य्यं मम अस्त्रेण न सिद्धम्, तत् कार्य्यं केन जनेन साध्यताम्, अपि तु केनापि नेत्यर्थः।

अत्र वक्तुरश्वत्थामः शौर्य्यजात आत्मप्रशंसाकारी अहङ्कारी गर्वः।


CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ मरणम् ।

१६० । शराद्यैर्मरणं जीव-त्यागोऽङ्गपतनादिकृत् । (म)

यथा—"राममन्मथशरेण ताड़िता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥" (य)

अथ आलस्यम् ।

१६१ । आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भासितादिकृत् ॥ (र)

यथा—"न तथा भूषयत्यङ्गं न तथा भाषते सखीम् ।
जृम्भते मुहुरासीना बाला गर्भभरालसा ॥" (ल)

अथ अमर्षः ।

१६२ । निन्दाक्षेपापमानादेरमर्षोऽभिनिविष्टता ।
नेत्ररागशिरःकम्प-भ्रूभङ्गोत्तर्जनादिकृत् ॥ (व)

यथा—"प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात् ।
न त्वेवं दूषयिष्यामि शस्त्रग्रहमहाव्रतम् ॥" (श)

---

(म) शरेति । शराद्यैर्बाणाघातलगुड़प्रहारादिभिर्जातः, अङ्गपतनादिकृत् भूतलपतनरुधिराक्ततादिजनकः, जीवस्य जीवनस्य त्यागो मरणम् ।

(य) रामेति । रघुवंशे ताड़कावधवर्णनेयम् । सा निशाचरी राक्षसी ताड़का निशाभिसरणकारिणी नायिका च, दुःसहेन, रामो मन्मथ इव राम इव च वीरो मन्मथः कामस्तस्य शरेण हृदये ताड़िता, अतएव गन्धवत् दुर्गन्धि सुगन्धि च रुधिरं चन्दनमिव रुधिरमिव च चन्दनं तेन उक्षिता सिक्ताङ्गी सती, जीवितेशस्य यमस्य प्राणनाथस्य च वसतिं गृहं जगाम ।

अत्र शराघातेन ताड़काया मरणं स्पष्टम् ।

(र) आलस्यमिति । श्रम आयासः, गर्भो गर्भधारणम् आद्यशब्दात् रात्रिजागरणादयश्च तैर्जातम्, जृम्भाम्, आसितम् उपवेशनम् आदिशब्दात् शयनादिकञ्च करोति निष्पादयतीति तत् तादृशं जाड्यम् अवसाद आलस्यम् ।

(ल) नेति । गर्भभरालसा बाला तथा पूर्वमिव अङ्गं न भूषयति, सखीमपि तथा पूर्वमिव न भाषते नालपति, केवलम् आसीना उपविष्टा सती मुहुर्वारं वारं जृम्भते ।

अत्र बालाया गर्भधारणजातं जृम्भोपवेशनकारि आलस्यम् ।

(व) निन्देति । निन्दा शान्तभावेन दोषकथनम्, आक्षेप उग्रभावेन दोषकथनात्मकं भर्त्सनम्, अपमानो गौरवहानिकरणम्, आदिशब्दात् चेत्रकलत्रहरणादिः, तस्मात् जातेति शेषः । नेत्रयो रागं लौहित्यम्, शिरःकम्पम्, भ्रूभङ्गम्, उत्तर्जनं वाचा भीतिप्रदर्शनम् आदिशब्दात् प्रतिज्ञाप्रहारादिञ्च करोति निष्पादयतीति सा तथोक्ता, अभिनिविष्टता निन्दादिकारिणो निग्रहायाग्रहः अमर्षः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ निद्रा।

१६३। चेतःसम्मीलनं निद्रा श्रमक्लममदादिजम् (१)।

जृम्भाक्षिमीलनोच्छ्वास-गात्रभङ्गादिकारणम्॥ (घ)

यथा—"सार्थं कानर्थकपदं ब्रुवती मन्थराक्षरम्।

निद्रार्द्धमीलिताक्षी सा लिखितेवास्ति मे हृदि॥" (ङ)

अथ अवहित्था।

१६४। भयगौरवलज्जादेर्हर्षाद्याकारगुप्तिरवहित्था।

व्यापारान्तरसक्त्यन्यथावभाषणविलोकनादिकरी॥ (छ)

यथा—"एवंवादिनि (२) देवर्षौ पार्श्वे पितुरधोमुखी।

लीलाकमलपत्राणि गणयामास पार्वती॥" (च)

---

(ग) प्रायेति। महावीरचरिते वशिष्ठविश्वामित्रादीन् प्रति परशुरामस्योक्तिरियम्। पूज्यानां वो युष्माकं व्यतिक्रमात् शस्त्रत्यागोपदेशरूपवाक्यलङ्घनात् वरं प्रायश्चित्तं चरिष्यामि, तु किन्तु एवमनेन युष्माकमनुरोधेन शस्त्रग्रह एव महाव्रतम् अवश्यकर्त्तव्यकार्य्यं तत् न दूषयिष्यामि तत्परित्यागेन क्षपयिष्यामि। गुरुवाक्यलङ्घनतो महाव्रतपरित्यागस्य गुरुतरपापजनकत्वादिति भावः। "पापक्षयमात्रसाधनत्वेन विधिबोधितं कर्म्म प्रायश्चित्तम्" इति प्रायश्चित्ततत्त्वे स्मार्त्तः।

अत्र रामेण हरधनुर्भङ्गात्तस्य च स्वगुरोरपमानेन रामं प्रति परशुरामस्य ईदृशप्रतिज्ञाकारी अमर्षः।

(घ) चेत इति। श्रम आयासः, क्लमः अवसादः, मदो मद्यपानजनितमत्तता, आदिशब्दात् औषधविशेषभक्षणादयश्च तेभ्यो जायत इति तत्। जृम्भायाः, अक्षिमीलनस्य नयनमुद्रणस्य, उच्छ्वासस्य दीर्घश्वासस्य, गात्रभङ्गस्य अङ्गप्रसारणस्य, आदिशब्दात् शयनादेश्च कारणम्, चेतसः सम्मीलनं मेध्यानामकनाड़ीसंयोगेन निश्चलत्वं निद्रा।

(ङ) सार्थकेति। सख्युः समीपे विरहिण उक्तिरियम्। निद्रया अर्द्धमीलिते अर्द्धमुद्रिते अक्षिणी चक्षुषी यस्याः सा, मन्थराक्षरम् अस्पष्टवर्णं यथा स्यात् तथा, एवं सार्थकानि अनर्थकानि च पदानि यस्मिन् कर्म्मणि तद्यथा तथा ब्रुवती सा कान्ता, मे मम हृदि लिखिता चित्रितेवास्ति।

अत्र सम्भाव्यमानरतिश्रमजाता अक्षिमीलनकारिणी नायिकाया निद्रा।

(छ) भयेति। भयं गौरवं लज्जा आदिशब्दात् वसनावरणादिश्च तस्माज्जाता। व्यापारान्तरे अन्यकार्य्ये सक्तिम् आसक्तिम्, अन्यथा अवभाषणं विलोकनम् आदिशब्दात् अपसरणादिकञ्च करोतीति सा। हर्षाकारो मुखप्रफुल्लतादिः आद्यशब्दात् कामाद्याकारा रोमाञ्चादयश्च तेषां गुप्तिर्गोपनम् अवहित्था।

---

(१) श्रमक्लममदादिजा इति पाठान्तरम्। (२) एवंवदति इति मूले पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ औत्सुक्यम् ।

**१६५ । इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता ।**
**चित्ततापत्वरास्वेद-दीर्घनिश्वसितादिकृत् ॥ (क)**

यथा—"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढ़ाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥" (ख)

अत्र यत् काव्यप्रकाशकारेण रसस्य प्राधान्यमित्युक्तम्, तद्रसनधर्म्म-योगित्वाद्व्यभिचारिभावस्यापि रसशब्दवाच्यत्वेन गतार्थं मन्तव्यम् (ग) ।

अथ उन्मादः ।

**१६६ । चित्तसम्मोह उन्मादः कामशोकभयादिभिः ।**
**अस्थानहासरुदित-गीतप्रलपनादिकृत् ॥ (घ)**

---

(च) एवमिति । कुमारसम्भवे नारदहिमालययोः पार्वतीविवाहविषयक-संलापकाले सन्निहितायास्तस्याः कार्य्यवर्णनमिदम् । देवर्षौ नारदे एवंवादिनि सति, पार्वती पितुर्हिमालयस्य पार्श्वे अधोमुखी स्थिता सती लीलाकमलपत्राणि हस्तस्थखेलापद्मपत्राणि गणयामास ।

अत्र स्वविवाहसंलापश्रवणेन मुखादिप्रफुल्लतारूपहर्षाकारस्य लज्जावशात् लीलाकमलपत्रगणनव्याजेन गोपनात् पार्वत्या अवहित्था ।

(क) इष्टेति । इष्टस्य अभिलषितपदार्थस्य अनवाप्तेरप्राप्तेर्हेतोर्जाता, चित्ततापं त्वरां स्वेदं दीर्घनिश्वसितम् आदिशब्दात् तत्प्राप्तिचेष्टादिकञ्च करोतीति सा, कालक्षेपासहिष्णुता औत्सुक्यम् ।

(ख) य इति । इदन्तु प्रागेव (१४श पृष्ठे) व्याख्यातम् ।

अत्र वक्तृनायिकाया रेवारोधसि वेतसीतरुतले पुनरिष्टस्य सुरतस्याप्राप्तेरौत्सुक्यम् ।

(ग) ननु काव्यप्रकाशवृत्तिकृता मम्मटभट्टेन इदमेव पद्यमुदाहृत्य "अत्र···रसस्य च प्राधान्यात्" इत्यनेन रसस्य प्राधान्यमङ्गीकृतम्, भवता पुनरत्रोदाहृत्य औत्सुक्याख्यव्यभिचारिभावस्यैव प्राधान्यं सूच्यत इत्याप्ततरेण सह ते विरोध इत्याह अत्रेति । रसनधर्म्मयोगित्वात् आस्वादनक्रियायाः कर्म्मत्वरूपधर्म्मवत्त्वात् । गतार्थं मदभिप्रेतार्थेन सह सम्मिलितार्थम् । तथा च अत्र स्थितौत्सुक्यरूपव्यभिचारिभावस्यापि आस्वादन-योग्यत्वेन रसरूपत्वात् "रसस्य च प्राधान्यात्" इत्युक्त्या काव्यप्रकाशकारेणापि तादृशरसस्यैव प्राधान्य-मङ्गीकृतम्, न पुनः स्थायिभावात्मकरसस्य, तस्य अनुभावापुष्टत्वादचमत्कारित्वाच्च अतो न कश्चिद्विरोध इति भावः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा मम। "भ्रातर्द्विरेफ! भवता भ्रमता समन्तात्

प्राणाधिका प्रियतमा मम वीक्षिता किम्?।

(झङ्कारमनुभूय सानन्दम्)

ब्रूषे किमोमिति सखे! कथयाशु तन्मे

किं किं व्यवस्यति कुतोऽस्ति च कीदृशीयम्॥" (ङ)

अथ शङ्का।

१६७। परक्रौर्य्यात्मदोषाद्यैः शङ्कानर्थस्य तर्कणम्।
वैवर्ण्यकम्पवैस्वर्य्य-पार्श्वालोकास्यशोषकृत्॥ (च)

यथा मम। "प्राणेशेन प्रहितनखरेष्वङ्गकेषु क्षपान्ते

जातातङ्का रचयति चिरं चन्दनालेपनानि।

धत्ते लाक्षामसकृदधरे दत्तदन्तावघाते

क्षामाङ्गीयं चकितमभितश्चक्षुषी विक्षिपन्ती॥" (छ)

(घ) चित्तेति। कामः शोकः भयम् आदिशब्दात् वात-पित्त-कफवैषम्यादयश्च तैर्जातः, अस्थाने हासं रुदितं गीतं प्रलपनम् आदिशब्दात् परप्रहारादिकञ्च करोतीति स तादृशः, चित्तस्य सम्मोहः पदार्थानां यथार्थज्ञानकरणासामर्थ्यम् उन्मादः।

(ङ) भ्रातरिति। हे भ्रातर्द्विरेफ! भ्रमर! समन्तात् भ्रमता भवता, मम प्राणाधिका प्रियतमा किं वीक्षिता क्वापि दृष्टा?। झङ्कारमनुभूय सानन्दमिति कविवाक्यम्। तथा च भ्रमरस्य झङ्कारमेव ओम्शब्दं मत्वा नायकः पुनराहेत्यर्थः। किम् ओमिति ब्रूषे? ओमिति स्वीकारार्थमव्ययम्। तथा च "मया वीक्षिता" इति किं स्वीकरोषीत्यर्थः। तत्तदा हे सखे! आशु शीघ्रं मे मह्यं कथय, इयं मम प्रियतमा किं किं व्यवस्यति चेष्टते करोतीत्यर्थः। कुतः कुत्र चास्ति। कीदृशी च सेति।

अत्र भ्रमरस्य प्रत्युत्तरदानाक्षमत्वरूपयथार्थज्ञानकरणासामर्थ्यात् वक्तृनायकस्य उक्तविधप्रलापकारी कामजनित उन्मादः।

(च) परेति। परक्रौर्य्यं परकृतहिंसा आत्मदोषः आद्यशब्दात् दैवकृतोत्पातादयश्च तैर्जातम्, वैवर्ण्यं विकृतवर्णताम्, कम्पं शरीरकम्पनम्, वैस्वर्य्यं विकृतस्वरत्वम्, पार्श्वे अवलोकं दृष्टिम् आस्यशोषं मुखशोषणञ्च करोतीति तत् तादृशम्, अनर्थस्य तर्कणं विपदः सम्भावना शङ्का।

(छ) प्राणेशेनेति। क्षपान्ते प्रभातकाले, जात आतङ्कः पश्यन्तीनां सखीनाम् उपहासाशङ्का यस्याः सा जातातङ्का इयं क्षामाङ्गी कृशाङ्गी, चकितं यथा स्यात्तथा अभितः सर्वतः चक्षुषी विक्षिपन्ती सती, सखीनामेव दृश्यमानतङ्केनेति भावः, प्राणेशेन कान्तेन प्रहितानि दत्तानि नखराणि नखचिह्नानि येषु तादृशेषु अङ्गकेषु स्तनादिषु चन्दनानाम् आलेपनानि रचयति करोति। तथा प्राणेशेन दत्ता दन्तावघाता यस्मिन् तादृशे अधरे च असकृत् वारं वारं लाक्षाम् अलक्तकरागं धत्ते।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ स्मृतिः ।

१६८ । सदृशज्ञानचिन्ताद्यैर्भूसमुन्नमनादिकृत् ।
स्मृतिः पूर्वानुभूतार्थ-विषयज्ञानमुच्यते ॥ (ज)

यथा मम । "मयि सकपटं किञ्चित् क्वापि प्रणीतविलोचने
किमपि नयनं प्राप्ते तिर्य्यग्विजृम्भिततारकम् ।
स्मितमुपगतामालीं दृष्ट्वा सलज्जमवाञ्चितं
कुवलयदृशः स्मेरं स्मेरं स्मरामि तदाननम् ॥" (झ)

अथ मतिः ।

१६९ । नीतिमार्गानुसृत्यादेरर्थनिर्द्धारणं मतिः ।
स्मेरता धृतिसन्तोषौ बहुमानश्च तद्भवाः ॥ (ञ)

यथा—"असंशयं क्षत्रपरिग्रहक्षमा यदार्य्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥" (ट)

---

अत्र प्रतिपाद्यमाननायिकया सख्याद्युपहासरूपानर्थस्य तर्कणात् शङ्का ।

(ज) सदृशेति । सदृशस्य वस्तुनो ज्ञानं दर्शनम्, चिन्ता भावना, -आद्यशब्दात् परकृतवर्णनादयश्च तैर्जातम्, भ्रुवोः समुन्नमनम् आदिशब्दात् मुखभङ्गिविशेषादिकञ्च करोतीति तत्तथोक्तम्, पूर्वानुभूतः अर्थः पदार्थ एव विषयो यस्य तत्तादृशं ज्ञानं स्मृतिरुच्यते ।

(झ) मयीति । सख्युः समीपे प्रवासिनः कस्यचिदुक्तिरियम् । क्वापि कस्मिन्नपि स्थाने सकपटं यथा स्यात्तथा प्रणीते प्रेरिते विलोचने चक्षुषी येन तादृशे मयि कथमपि केनापि प्रकारेण भित्त्याद्यन्तरालेन नयनं नयनपथं प्राप्ते सति, तिर्य्यक् वक्रं यथा स्यात्तथा विजृम्भिते प्रेरिते तारके यस्य तत्तादृशम्, स्मितमुपगतां तथाभूतावस्थया ईषत् हास्यं कुर्वतीम् आलिं सखीं दृष्ट्वा सलज्जम्, अतएव अवाञ्चितमवनतीकृतम्, स्मेरं स्मेरं प्रफुल्लप्रकारम्, तत् कुवलयदृशो नीलोत्पलनयनायाः प्रियाया आननं स्मरामि ।

अत्र नायकस्य भावनावशेन पूर्वदृष्टनायिकामुखस्मरणात् स्मृतिः ।

(ञ) नीतीति । नीतिमार्गानुसृतेः नीतिशास्त्रानुसारात् आदिशब्देन अनुमानादेश्च हेतोः अर्थनिर्द्धारणं पदार्थनिश्चयो मतिः । स्मेरता ईषद्धास्यम्, धृतिर्धैर्य्यम्, सन्तोषो हर्षः, बहुमान आदरश्च, एते तस्या मतेर्भवन्तीति तद्भवाः ।

(ट) असंशयमिति । अभिज्ञानशकुन्तले शकुन्तलामवलोक्य दुष्मन्तस्योक्तिरियम् । इयं शकुन्तला असंशयं निश्चितं क्षत्रपरिग्रहक्षमा क्षत्रियजातेः परिणययोग्या, यद्यस्मात् आर्य्यं निर्द्दोषं मे मम मनः अस्याम् अभिलाषि जातमिति शेषः । हि तथाहि, सन्देहपदेषु संशयविषयेषु वस्तुषु सताम् अन्तःकरणप्रवृत्तय एव प्रमाणं विशेषनिर्णयक्षमा इत्यर्थः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ व्याधिः।

१७०। व्याधिर्ज्वरादिर्वाताद्यैर्भूमीच्छोत्कम्पनादिकृत्। (ठ)

तत्र दाहमयत्वे भूमीच्छादयः। शैत्यमयत्वे उत्कम्पनादयः। स्पष्टमुदाहरणम् (ड)।

अथ त्रासः।

१७१। निर्घातविद्युदुल्काद्यैस्त्रासः कम्पादिकारकः॥ (ढ)

यथा—"परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः।
उपाययुः कम्पितपाणिपल्लवा सखीजनस्यापि विलोकनीयताम्॥" (ण)

अथ व्रीड़ा।

१७२। धार्ष्ट्याभावो व्रीड़ा वदनानमनादिकृद्दुराचारात्। (त)

यथा—"मयि सकपटम्" इत्यादि (१६६ पृष्ठे) (थ)।

---

अत्र दुष्मन्तस्य अनुमानेन शकुन्तलायाः क्षत्रियजातिपरिणययोग्यत्वनिर्द्धारणान्मतिः।

(ठ) व्याधिरिति। वाताद्यैर्वातपित्तकफवैषम्यादिभिर्जातः, भूमीच्छां भूतलावलुण्ठनेच्छाम् उत्कम्पनम् आदिशब्दात् पिपासादिकञ्च करोतीति स तथोक्तो ज्वरादी रोगो व्याधिः।

(ड) व्याधिः कार्य्यं व्यवस्थापयति तत्रेति। तत्र व्याधौ। उदाहरणं यथा—

"दत्त्वा कटाक्षमेणाक्ष्या गृहीतं हृदयं मम। मयापि हृदयं दत्त्वा गृहीतो मदनज्वरः॥"

अत्र नायकस्य नायिकादर्शनात् कामावेशेन वातादिवैषम्यात् सन्तापरूपो ज्वरः।

(ढ) निर्घात इति। वायुनाहतो भूमिस्पर्शी वायुविशेषो निर्घातः, विद्युत् सौदामिनी, गगनचारी लम्बमानतेजःपुञ्जश्च उल्का, आद्यशब्दात् भूमिकम्पादिग्रहणम्। तैर्जातः कम्पम् आदिशब्दात् मूर्च्छादिकञ्च करोतीति सः, त्रासो भयमेव त्रासः। तत्र निर्घातोल्कयोः स्वरूपं तिथितत्त्वे अनुसन्धेयम्।

(ण) परीति। जलकेलिवर्णनेयम्। परिस्फुरद्भिर्विचरद्भिः मीनैर्विघट्टितास्ताड़िता ऊरव ऊरुदेशा यासां ताः, अतएव त्रासेन विलोलदृष्टयश्चञ्चलनयनाः, सुराङ्गना अप्सरसः, कम्पितपाणिपल्लवाः सत्यः, सखीजनस्यापि नायकानां का कथेति भावः, विलोकनीयतां कौतुकेन दृश्यताम् उपाययुः प्राप्तवत्यः।

अत्र सुराङ्गनानां मीनविघट्टनात् पाणिकम्पकारी त्रासः।

(त) धार्ष्ट्येति। दुराचारात् आत्मनः सहसा स्तननितम्बप्रकाशादिदुर्व्यवहारात् अन्यस्य वा कपटदर्शनादिदुर्व्यवहारात् हेतोः, वदनानमनम् आदिशब्दादपसरणादिकञ्च करोतीति स तादृशः, धार्ष्ट्याभावः प्रगल्भताशून्यत्वं सङ्कुचितत्वमिति यावत् व्रीड़ा।

(थ) यथेति। "मयि सकपटम्" इत्यादौ नायकनिरीक्षणात् नायिकाया वदनानमनकारिणी व्रीड़ा।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ हर्षः ।

१७३ । हर्षस्त्विष्टावाप्तेर्मनःप्रसादोऽश्रुगद्गदादिकरः ॥ (द)

यथा—

"समीक्ष्य पुत्रस्य चिरात् पिता मुखं निधानकुम्भस्य यथैव दुर्गतः ।
मुदा शरीरे प्रबभूव नात्मनः पयोधिरिन्दूदयमूर्च्छितो यथा ॥" (ध)

अथ असूया ।

१७४ । असूयान्यगुणर्द्धीनामौद्धत्यादसहिष्णुता ।
दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादिकृत् ॥ (न)

यथा—"अथ तत्र पाण्डुतनयेन सदसि विहितं मधुद्विषः ।
मानमसहत न चेदिपतिः परवृद्धिमत्सरि मनो हि मानिनाम् ॥" (प)

अथ विषादः ।

१७५ । उपायाभावजन्मा तु विषादः सत्त्वसंक्षयः ।
निश्वासोच्छ्वासहृत्ताप-सहायान्वेषणादिकृत् ॥ (फ)

---

(द) हर्ष इति । इष्टस्य अभिलषितवस्तुनः अवाप्तेः प्राप्तेर्हेतोः, अश्रुगद्गदम् अस्फुटभाषणम् आदि-शब्दात् हास्यादिकञ्च करोतीति स तादृशः, मनःप्रसादश्चित्तस्य प्रसन्नता हर्षः ।

(ध) समीक्ष्येति । रघुवंशे रघौ जाते दिलीपस्य हर्षवर्णनमिदम् । दुर्गतो निःस्वो जनः निधान-कुम्भस्य यथा धनपूर्णकलसस्येव, पिता दिलीपः चिरात् परं पुत्रस्य मुखं निरीक्ष्येव, इन्दोरुदयेन मूर्च्छितो वृद्धिं प्राप्तः पयोधिः समुद्रो यथा, तथा मुदा आनन्देन आत्मनः शरीरे न प्रबभूव देहसञ्चालने न शशाकेत्यर्थः । समुद्रोऽपि तदानीं न सञ्चलति ।

अत्र दिलीपस्य पुत्रलाभेन हर्षः ।

(न) असूयेति । दोषोद्घोषं तादृशस्य अन्यस्यैव दोषवर्णनं भ्रुवोर्विभेदं कौटिल्यम् अवज्ञाम् अवहेलां क्रोधेङ्गितं क्रोधलक्षणं नयनलौहित्यादिम् आदिशब्दात् अपकारादिञ्च करोतीति सा तथोक्ता, औद्धत्यात् आत्मनोऽपि गुणादिविषयकादहङ्कारात् अन्यस्य गुणानां विद्यासौन्दर्य्यादीनामृद्धीनां धनादिसम्पत्तीनाञ्च या असहिष्णुता सा असूया ।

(प) अथेति । श्लोकोऽयं शिशुपालवधकाव्ये । अथ अर्घ्यदानानन्तरम्, चेदिपतिः शिशुपालः, तत्र सदसि सभायां पाण्डुतनयेन युधिष्ठिरेण विहितं कृतं मधुद्विषः कृष्णस्य मानम् अर्घ्यदानेन गौरवं न असहत । हि यस्मात् मानिनां तेजस्विनां मनः परेषां वृद्धौ अभ्युदये मत्सरि विद्वेषि जायते ।

अत्र कृष्णस्य सम्मानसम्पत्तेरसहिष्णुत्वात् शिशुपालस्यासूया ।

(फ) उपायेति । उपायानाम् अनर्थनिवारणहेतूनाम् अभावात् जन्म यस्य स तथोक्तः, निश्वासम्

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा मम ।

"एसा कुड़िलघणेण चिउरकड़ापेण तुह णिवद्धा वेणी ।
मह सहि ! दारइ दंसइ आअसजट्ठिव्व कालउरइंव्व हिअअं ॥" (ब)

अथ धृतिः ।

१७६ । ज्ञानाभीष्टागमाद्यैस्तु सम्पूर्णस्पृहता धृतिः ।
सौहित्यवचनोल्लास-सहासप्रतिभादिकृत् ॥ (भ)

यथा मम ;

"कृत्वा दीननिपीड़नां निजजने बद्ध्वा वचोविग्रहं
नैवालोच्य गरीयसीरपि चिरादामुष्मिकीर्यातनाः ।
द्रव्यौघाः परिसञ्चिताः खलु मया यस्याः कृते साम्प्रतं
नीवाराञ्जलिनापि केवलमहो ! सेयं कृतार्था तनुः ॥" (म)

अथ चपलता ।

---

उच्छ्वासं हताशतां हृत्तापं मनःसन्तापं सहायान्वेषणम् आदिशब्दात् अश्रुपातादिकञ्च करोतीति स तादृशः, सत्त्वसंचय् उद्यमनाशो विषादः ।

(ब) एसा इति । "एषा कुटिलघनेन चिकुरकलापेन तव निबद्धा वेणी । मम सखि ! दारयति दशति आयसयष्टिरिव कालोरगीव हृदयम् ॥" इति संस्कृतानुवादः । विरहाचिरमेव एकमात्रवेणीधारिणीं नायिकां प्रति सख्या उक्तिरियम् । हे सखि ! कुटिलो वक्रश्चासौ घनो निविड़श्चेति तेन चिकुरकलापेन केशपाशेन निबद्धा एषा तव वेणी, आयसयष्टिरिव लौहशलाकेव मम हृदयं दारयति, तथा कालोरगी कृष्ण-वर्णभुजङ्गीव मम हृदयं दशति च, तव विरहसन्तापसूचकत्वादिति भावः ।

अत्र विरहसन्तापनिवारणोपायाभावात् वक्तृनायिकाया विषादः ।

(भ) ज्ञानेति । ज्ञानेन तत्त्वज्ञानेन अभीष्टागमेन प्रियजनागमनेन आद्यशब्दात् विपन्निवृत्तिप्रभृतिभिश्च जाता, सौहित्यवचनं तृप्तिबोधकं वाक्यम् उल्लासम् आह्लादं सहासप्रतिभां हास्यं बुद्धिविकासञ्च आदिशब्दात् शान्तिप्रभृतिञ्च करोतीति सा तथोक्ता, सम्पूर्णस्पृहता पूर्णकामता धृतिः ।

(म) कृत्वेति । पूर्वमसदुपायेन धनानि सञ्चित्य वार्द्धके वयसि वनवासिनः सतः कस्यचिदुक्ति-रियम् । दीनानां दरिद्राणामपि निपीड़नां कृत्वा, निजजने वचोविग्रहं वाक्कलहं बद्ध्वा विधाय, गरीयसीरपि आमुष्मिकीः पारलौकिकीः चिरात् दीर्घकालस्थायिनीः यातना नरकपीड़ाः नैवालोच्य अविविच्य मया यस्यास्तनोः कृते निमित्ते द्रव्यौघा धनसमूहाः परिसञ्चिताः, साम्प्रतं सेयं तनुः शरीरं केवलं नीवाराञ्जलिनापि अञ्जलिपरिमिततृणधान्यतण्डुलेनापि कृतार्था क्षुन्निवारणादिति भावः, अहो इदमाश्चर्य्यमेवेत्यर्थः ।

अत्र वक्तृपुरुषस्य तत्त्वज्ञानवशेन नीवाराञ्जलिनापि पूर्णकामत्वात् धृतिः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१७७ । मात्सर्य्यद्वेषरागादेश्चापल्यं त्वनवस्थितिः ।
तत्र भर्त्सनपारुष्य-स्वच्छन्दाचरणादयः ॥ (य)

यथा—"अन्यासु तावदुपमर्द्दसहासु भृङ्ग !
लोलं विनोदय मनः सुमनोलतासु ।
मुग्धामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं नवमालिकायाः ॥" (र)

अथ ग्लानिः ।

१७८ । रत्यायासमनस्ताप-क्षुत्पिपासादिसम्भवा ।
ग्लानिर्निष्प्राणताकम्प-कार्श्यानुत्साहतादिकृत् ॥ (ल)

यथा—"किशलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्म्मः केतकीगर्भपत्रम् ॥" (व)

---

(य) मात्सर्य्येति । मात्सर्य्यात् क्रोधात् क्षुद्रत्वाद्वा द्वेषात् रागात् आदिशब्देन उन्मादादेश्च हेतोः अनवस्थितिरस्थिरता चापल्यं चपलता । तत्र चापल्ये सति भर्त्सनम्, पारुष्यं निष्ठुरता, स्वच्छन्दाचरणम् इच्छानुसारेण व्यवहारः, आदिशब्दात् प्रव्रज्यादयश्च जायन्ते ।

(र) अन्यास्विति । अनागतयौवनां बालिकामेव रमयितारं कमपि हठकामुकं प्रति भ्रमरायोपदेश-च्छलेन कस्यचिदुक्तिरियम् । हे भृङ्ग ! भ्रमर ! पक्षे हे हठकामुक ! उपमर्द्दसहासु तव पदभर-सहनसमर्थासु कुचमर्द्दनादिसहनसमर्थासु च अन्यासु तावत् सुमनोलतासु प्रस्फुटितकुसुमवल्लीषु युवतिषु च लोलं चपलं स्वकीयं मनः विनोदय मधुपानेन रमणेन च आनन्दय । मुग्धां मनोहरां सुरतमूढाञ्च, अजात-रजसम् अनुत्पन्नपरागाम् अनुत्पन्नार्त्तवाञ्च नवमालिकायाः कलिकां कस्याश्चिद्बालिकां कन्याञ्च किं कथं व्यर्थम् आशापूरणाभावादनर्थकं कदर्थयसि दूषयसि ।

अत्र भ्रमरस्य हठकामुकस्य च रागवशात् स्वच्छन्दाचरणहेतुभूतं मनसः अस्थिरतारूपं चापल्यम् ।

(ल) रतीति । रतेः सुरतात् आयासादन्यविधपरिश्रमात्, मनस्तापात् क्षुधः क्षुधायाः पिपासायाः आदिशब्दात् रोगादेश्च सम्भवतीति सा तथोक्ता, कम्पं कार्श्यम् अनुत्साहतान् आदिशब्दात् मौनादिञ्च करोतीति सा तादृशी या निष्प्राणता देहस्य दुर्बलता सा ग्लानिः ।

(व) किशलयमिति । उत्तररामचरिते गोदावरीकूलान्निष्क्रामन्तीं सीतामवलोक्य मुरलाया उक्तिरियम् । हृदयमेव कोमलत्वात् कुसुमं तत् शोषयतीति हृदयकुसुमशोषी दारुणो दीर्घशोकः, बन्धनात् वृन्तात् विप्रलूनं विच्छिन्नम्, मुग्धं मनोहरं किशलयमिव स्थितम्, अस्याः सीतायाः परिपाण्डु नितान्त-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ चिन्ता ।

१७९ । ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत् । (श)

यथा मम । "कमलेण विअसिएण संजोएन्ती विरोहिणं ससिविम्बं ।
करअलपल्लत्थमुही किं चिन्तेसि सुमुहि ! अन्तराहिअहिअआ ॥" (ष)

अथ वितर्कः ।

१८० । तर्को विचारः सन्देहाद्भ्रूशिरोऽङ्गुलिनर्त्तकः ॥ (स)

यथा—"किं रुद्धः प्रियया" इत्यादि (१२७ पृष्ठे) (ह) ।

एते च त्रयस्त्रिंशद्व्यभिचारिभेदा इति यदुक्तं तदुपलक्षणमित्याह—(च)

१८१ । रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः । (क)

---

श्वेतच्छायं धाम (?) कृशं शरीरं शरद्विजः शरत्कालोत्पन्नः घर्म्म आतपः केतक्याः पुष्पस्य गर्भपत्रमिव ग्लपयति ग्लानिं नयति ।

अत्र मनस्तापसम्भवा कार्श्यकारिणी देहद्युतिलतारूपा सीताया ग्लानिः ।

(श) ध्यानमिति । हितस्य अनाप्तेरप्राप्तेर्हेतोर्जातम्, शून्यतां जगतः शून्यत्वप्रतीतिं श्वासं तापञ्च करोतीति तत्तादृशं यत् ध्यानं भावना सा चिन्ता ।

(ष) कमलेण इति । "कमलेन विकसितेन संयोजयन्ती विरोधिनं शशिविम्बम् । करतलपर्यस्त-मुखी किं चिन्तयसि सुमुखि ! अन्तराहितहृदया ॥" इति संस्कृतानुवादः । पतिचिन्तानिमग्नां विरहिणीं प्रति सख्या उक्तिरियम् । हे सुमुखि ! अन्तरभ्यन्तर एव आहितं स्थापितं हृदयं मनो यया सा तादृशी, तथा करतले पर्य्यस्तं पतितं मुखं यस्याः सा तथोक्ता त्वम्, अतएव विकसितेन कमलेन पद्मेन तस्य विरोधिनं सङ्कोचकारित्वात् शत्रुं शशिविम्बं चन्द्रमण्डलं संयोजयन्ती सती किं चिन्तयसि । तथा च करतलमेव विकसितं कमलं मुखमेव च शशिविम्बः, तेन तादृशे करतले मुखस्थापनात् कमले तद्विरोधी शशिविम्बः संयोजित एवेति भावः ।

अत्र प्रतिपाद्यमाननायिकाया हितस्य प्रियसङ्गमस्याप्राप्तेश्चिन्ता ।

(स) तर्क इति । सन्देहाज्जातः, भ्रूशिरोऽङ्गुलीनां नर्त्तकः परिचालकः यो विचारो बहुप्रकारज्ञानं स तर्को वितर्कः ।

(ह) यथेति । "किं रुद्धः प्रियया" इत्यादिश्लोके नायिकायाः प्रियानागमनविषये बहुप्रकारज्ञाना-द्वितर्कः ।

(च) एत इति । "त्रयस्त्रिंशच्च तद्भिदाः" इति पूर्वोक्तस्यार्थमादायैव इदमुक्तम्—"एते च त्रयस्त्रिंश-द्व्यभिचारिभेदाः" इति, न पुनरधरत एव तादृशमुक्तमिति बोध्यम् ।

(क) रत्यादय इति । अनियते निजस्थितेरावश्यकतारहिते रसे स्वभिन्नस्थायिभाववति रसे इत्यर्थः, रत्यादयोऽपि रतिहासादीनां स्थायिभावानां मध्ये एकैके स्थायिभावा अपि व्यभिचारिणो व्यभिचारिभावाः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तथाहि—शृङ्गारे अनुच्छिद्यमानतयावस्थानात् रतिरेव स्थायिशब्द-वाच्या, हासः पुनरुत्पद्यमानो व्यभिचार्य्येव व्यभिचारिलक्षणयोगात्। तदुक्तम्—"रसावस्थः परं भावः स्थायितां प्रतिपद्यते" इति (१) (ख)।

तत् कस्य स्थायिनः कस्मिन् रसे सञ्चारित्वमित्याह—(ग)

१८२। शृङ्गार-वीरयोर्हासो वीरे क्रोधस्तथा मतः॥
शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः।
इत्याद्यन्यत् समुन्नेयं स्वयं भावितबुद्धिभिः॥ (घ)

अथ स्थायिभावः (२) (ङ)।

१८३। अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः।
आस्वादाङ्कुरकन्दोऽसौ भावः स्थायीति सम्मतः॥ (च)

---

स्युः। तथा च एकस्मिन् रसे अपररसीयः स्थायिभावोऽपि यथासम्भवं व्यभिचारिभावो भवितुमर्हतीति सरलार्थः। अतएव "त्रयस्त्रिंशच्च तद्भिदाः" इति यदुक्तं तत् तदन्यूनोपलक्षणम्, ततोऽधिकसंख्याया एव सम्भवादिति भावः।

(ख) उदाहरति तथाहीति। अनुच्छिद्यमानतया प्रधानत्वात् भावान्तरैरोच्छेत्तुमशक्यतया अविच्छिन्न-भावेनेत्यर्थः। उत्पद्यमानः कदाचिज्जायमानः। उपलक्षणमेतत् परं विलीयमानश्च। व्यभिचार्य्येव न पुनः स्थायीत्येवशब्दार्थः तल्लक्षणायोगादिति भावः। व्यभिचारिलक्षणयोगादिति विशेषेण तत्तद्रसपुष्टि-जनकतया "विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः" इति लक्षणसङ्गमनादित्यर्थः। रसावस्थ इत्यादिकन्तु प्रागेव व्याख्यातम्।

(ग) तदिति। सञ्चारित्वं व्यभिचारिभावत्वम्। तथा च पूर्वकारिकार्द्धस्य विवरणात्मिका परकारिकेति भावः।

(घ) शृङ्गारेति। शृङ्गारवीरयो रसयोः हासो हास्यरसीयः स्थायिभावः व्यभिचारितया मतः, तथा वीरे रसे क्रोधो रौद्ररसीयः स्थायिभावः व्यभिचारितया मतः। पुनः शान्ते रसे जुगुप्सा बीभत्सरसीयः स्थायिभावः व्यभिचारितया कथिता। इत्यादि अन्यत् भावितबुद्धिभिरलङ्कारशास्त्ररञ्जितबुद्धिभिः समुन्नेय-मनुसन्धेयम्। तथा च हास्ये विस्मयः, करुणे भयम्, रौद्रे हासः, भयानके शोकश्च व्यभिचारी भवतीति यथासम्भवं बोध्यम्।

(ङ) अथेति। अथ व्यभिचारिभावनिरूपणानन्तरम्—"विभावेनानुभावेन व्यक्तः" इत्यादिप्रथम-कारिकायामुद्दिष्टः स्थायिभाव इदानीं शेष एव निरूप्यत इत्यर्थः।

(च) अविरुद्धा इति। अविरुद्धा अप्रतिकूला अनुकूला इति यावत्, विरुद्धाः प्रतिकूला वा

---

(१) क्वचित् इतिशब्दो नास्ति। (२) अथ स्थायी भावः इत्यपि पाठः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यदुक्तम्—"स्रक्सूत्रवृत्त्या भावानामन्येषामनुगामुकः।
न तिरोधीयते स्थायी तैरसौ पुष्यते परम् ॥" इति (छ)।

तद्भेदानाह—

१८४। रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च ॥ (ज)

तत्र—

१८५। रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम्।
वागादिवैकृताच्चेतोविकासो हास इष्यते ॥
इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्।
प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोध इष्यते ॥
कार्य्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते।
रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम् ॥

---

भावाः यं भावं तिरोधातुम् आवरीतुं स्वज्ञानावसरेऽपि ज्ञानागोचरीकर्त्तुमित्यर्थः अक्षमाः स्वेषामप्रधानत्वादसमर्थाः, आस्वादाङ्कुरकन्दः सूक्ष्मतया रसोत्पत्तेर्मूलम्, असौ भावः स्थायी इति सम्मतः स्थायिभाव इति नाम्ना अभिप्रेतः। तथा च चन्द्रचन्दनादय उद्दीपनविभावाः शोभाविलासादयोऽनुभावाः, आवेगादयो व्यभिचारिभावा वा अनुकूलाः सन्तोऽपि धारावाहिकभावेन प्रवर्त्तमानां रतिं कदापि तिरोधातुं न शक्नुवन्ति, एवं हिंस्रचेष्टादयो भयानकोद्दीपनविभावाः प्रलयादयोऽनुभावाः मरणादयो व्यभिचारिभावा वा प्रतिकूलाः सन्तोऽपि रतिं तिरोधातुं नार्हन्ति ; अतएव रतिः स्थायी भावः। एवं हासादिष्वपि ज्ञेयम्। एवञ्च स्थिरतरत्वे सति रसमूलत्वं स्थायिभावत्वमिति लक्षणं पर्य्यवसितम्। हासस्य हास्यरसमूलत्वेऽपि शृङ्गारे व्यभिचारितया अस्थिरत्वात् शृङ्गारवेलायां तत्र नातिव्याप्तिः। अकाव्यनिबद्धताया लौकिकरतेः स्थिरतरत्वेऽपि रसमूलत्वाभावात्तत्रापि नातिव्याप्तिः।

(छ) अत्र प्राचीनसंवादमाह यदुक्तमिति। स्रक्सूत्रवृत्त्या मालान्तर्गतसूत्रसादृश्येन अन्येषामनुभावादीनां भावानामनुगामुकः समाप्तिं यावदनुसरणकारी स्थायी भावः तैरन्यैर्भावैर्न तिरोधीयते नापोह्यते, परन्तु पुष्यते पुष्टिमेव प्राप्यते।

(ज) रतिरिति। अत्र रसानामष्टविधत्वस्य स्वसम्मततया स्थायिभावा अपि स्वमते अष्टविधेति सूचयितुम् "अष्टौ प्रोक्ताः" इत्यभिधाय पुनः "शमोऽपि च" इत्यभिहितम्। अपि चेत्यनेन वत्सलताया अपि संग्रहः। तथा च भरतमतस्यातिप्रामाणिकतया तन्मतसिद्धः शमो वत्सलता च वरं स्थायिभावतया अङ्गीक्रियते न पुनरन्येषामित्यभिप्रायः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दोषेक्षणादिभिर्गर्हा जुगुप्सा विषयोद्भवा (१) ।
विविधेषु पदार्थेषु लोकसीमातिवर्त्तिषु ॥
विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः ।
शमो निरीहावस्थायामात्मविश्रामजं (२) सुखम् ॥ (झ)

यथा—मालतीमाधवे रतिः । नटकमेलके हासः । रामायणे शोकः । महाभारते शमः । एवमन्येऽपि (ञ) ।

एते हि एतेष्वन्तरा उत्पद्यमानैस्तैस्तैर्विरुद्धैरविरुद्धैश्च भावैरनुच्छिन्नाः प्रत्युत परिपुष्टा एव सहृदयानुभवसिद्धाः (ट) ।

किञ्च—(ठ)

---

(झ) रत्यादिपदार्थान् क्रमशो विवृण्वन्नाह रतिरिति । मनसः अनुकूले सुखकरे अर्थे वस्तुनि मनसः प्रवणायितं संसक्तवदाचरितम् अनुराग इत्यर्थः रतिः । वागादीनां वचोभङ्गिप्रभृतीनां वैकृताद्विकारात् चेतसो विकाशः प्रसारणवद्भावः हास इष्यते । इष्टनाशादिभिर्हेतुभिः चेतसो वैक्लव्यं विह्वलत्वं शोकशब्दभाक् शोकपदवाच्यं शोक इत्यर्थः । प्रतिकूलेषु विरोधिषु तैक्ष्ण्यस्य उग्रताया अवबोधोऽवबोधजनकचित्तविकारविशेषः प्रतिकूलेषु अपचिकीर्षया चित्तस्य ज्वलत्प्रायत्वमित्यर्थः क्रोध इष्यते । कार्य्यारम्भेषु स्थेयान् संरम्भः स्थिरतर उद्यम उत्साह उच्यते । रौद्रशक्त्या उग्रपदार्थयोग्यतया जनितं चित्तस्य वैक्लव्यदं विह्वलताजनकं तर्कणमिति शेषः भयम् । विषयोद्भवा ज्ञेयपदार्थजन्या दोषाणाम् ईक्षणादिभिर्दर्शनस्पर्शनादिभिर्या गर्हा घृणा सा जुगुप्सा । विविधेषु लोकसीमातिवर्त्तिषु अलौकिकेषु पदार्थेषु इन्द्रजालव्यापारादिषु ज्ञातेषु ज्ञायमानेषु वा यश्चेतसो विस्फारः प्रसारणवद्भावः स तु विस्मय उदाहृतः । अतएव हासादस्य भेदः । निरीहावस्थायां वैराग्यदशायाम् आत्मनि परमात्मनि विश्रामजं चित्तावस्थानजन्यं सुखं शमः । वत्सलता च स्नेह इति बोध्यम् ।

(ञ) एवमिति । अन्येऽपि एवमूह्या इत्यर्थः । तथा च—शिशुपालवधपञ्चदशे क्रोधः । वेणीसंहारे उत्साहः । शाकुन्तलपञ्चमाङ्कांशावतारे जालुकस्य भयम् । मालतीमाधवपञ्चमाङ्के श्मशाने जुगुप्सा । एवञ्च "मालतीमाधवे रतिः" इति यदुक्तं तत् प्रधानाभिप्रायेणेति बोध्यम् । उत्तररामचरितसप्तमाङ्के विस्मयः । रघुवंशद्वितीयसर्गस्य कियत्यंशे च वत्सलता ।

(ट) अवसरक्रमेणेदानीं "विरुद्धा अविरुद्धा वा" इत्यादिकारिकां व्याचष्टे एत इति । एते रत्यादयः स्थायिभावाः, एतेषु एतत्स्थायिभावपरिणतिरूपरसेषु अन्तरा मध्ये मध्ये । विरुद्धैः प्रतिकूलैः अविरुद्धैरनुकूलैश्च भावैरुद्दीपनादिभिः अनुच्छिन्ना अतिरोहिताः । ननु कथं परिपुष्टा इति ज्ञायत इत्याह सहृदयेत्यादि ।

(ठ) किञ्चेति । अपि चेत्यर्थः ।

---

(१) विस्मयोद्भवा इति क्वचित् पाठः । (२) स्वात्मविश्रामजं इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१८६। नानाभिनयसम्बन्धान् भावयन्ति रसान् यतः।
तस्माद्भावा अमी प्रोक्ताः स्थायिसञ्चारिसात्त्विकाः॥ (ड)

यदुक्तम्—"सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनम्।" (ढ)

अथ रसस्य भेदानाह—(ण)

१८७। शृङ्गार-हास्य-करुण-रौद्र-वीर-भयानकाः।
बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः॥ (त)

तत्र शृङ्गारः।

१८८। शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः।
उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते॥

---

(ड) नानेति। यतो यस्मात्। दृश्यकाव्ये अभिनयस्तावदवस्थानुकरणम्, श्रव्यकाव्ये तु पठनं श्रवणं वा। तेन सम्बन्धो व्यङ्ग्यव्यञ्जकभावो येषां तान् नाना रसान् भावयन्ति प्रतिपादयन्ति; तस्मादमी स्थायिसञ्चारिसात्त्विकाः भावा भावसंज्ञकाः प्रोक्ताः। अत्र सात्त्विकपदमनुभावमात्रपरम्। बहुवचनाच्च विभावस्यापि ग्रहणमिति बोध्यम्।

(ढ) अथ स्वाभिमते विभावादीनां भावसंज्ञकत्वे प्राचामपि सम्मतिमाह यदुक्तमिति। काव्यनाट्ययोः दुष्टनिग्रहशिष्टानुग्रहादिप्रतिपादनेन सुखम्, क्वचित् सज्जनपीड़नादिप्रदर्शनेन दुःखम्, आदिशब्देन शान्त्यादयश्च गृह्यन्ते। तथा च यस्मात् सुखदुःखादिभिर्भावैर्धर्मैः तद्भावभावनं सभ्यानां तत्तन्मयत्वप्रतिपादनं तस्मात् विभावादिसमुदायो भावो भावसंज्ञकः। भावयति सभ्यान् सुखित्वदुःखित्वादिरूपेण प्रतिपादयति परिणमयतीत्यर्थयोगादित्याशयः।

(ण) अथेति। अथ विभावादिरसव्यञ्जकगणनिरूपणानन्तरम्, प्रसङ्गसङ्गत्या तद्व्यङ्ग्यस्य रसस्य प्रकारानाहेत्यर्थः।

(त) शृङ्गारेति। षोड़शप्रकारा रसा इति गोस्वामिनः। दशप्रकारा इति भरत-रुद्रटौ। नवप्रकारा इति रत्नकोषादयः। अष्टप्रकारा इत्यमर-काव्यप्रकाशकारादयो बहवः। चत्वार एवेत्यभियुक्ताः। ग्रन्थगौरवपरिजिहीर्षया त्वमीषां विवरणं परिहृतम्। तथा च रसानामष्टविधत्वस्य बहुवादिसम्मततया युक्तिसिद्धतया च स्वमतेऽप्यष्टविधत्वमेवेति सूचयितुम् "अष्टौ रसाः" इत्युक्त्वा वाक्यान्तरेण परमतत्वसूचनाय "शान्तस्तथा मतः" इति भङ्गीविशेषेणोक्तम्। अत्रापि तथापदेन भरतसम्मतो वत्सलोऽपि गृह्यते। एवञ्च भरतमुनेरादिमतया महाप्रामाणिकतया च तत्सम्मतः शान्तो वत्सलश्च रसतया वरं कियदङ्गीक्रियते न पुनर्गोस्वामिनां प्रेमादिरपीत्याशयः सूचितः। इत्थञ्च सर्वैरेवालङ्कारिकादिभिः रसप्रकारगणनायां शृङ्गारस्यैव प्रथमनिर्देशात् शृङ्गार एवादिरसत्वेन गीयत इति बोध्यम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परोढ़ां वर्जयित्वात्र वेश्यां चाननुरागिणीम् ।
आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः ॥
चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम् ।
भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्त्तितः ॥
त्यक्त्वौग्र्यमरणालस्यजुगुप्सा व्यभिचारिणः ।
स्थायी भावो रतिः श्यामवर्णोऽयं विष्णुदैवतः ॥ (थ)

यथा—"शून्यं वासगृहम्" इत्यादि । अत्र उक्तस्वरूपः पतिः उक्तस्वरूपा च बाला आलम्बनविभावौ । शून्यं वासगृहमुद्दीपनविभावः । चुम्बनमनुभावः । लज्जाहासौ व्यभिचारिणौ । एतैरभिव्यक्तः सहृदयरतिभावः शृङ्गाररसरूपतां भजते (द) ।

---

(थ) उद्देशक्रमेण शृङ्गारादीनां लक्षणमाह शृङ्गमिति । हि तथाहि । मन्मथोद्भेदः कामोद्रेकः शृङ्गम् । कामोद्रेकार्थे शृङ्गशब्दस्य आलङ्कारिकाणां रूढ़िरिति भावः । तस्य शृङ्गस्य आगमनं प्राप्तिरेव हेतुर्यस्य सः शृङ्गारो रसः, प्रायेण बाहुल्येन उत्तमा प्रकृतिर्मूलम् आलम्बनं यस्य स तादृश इष्यते । प्रायपदेन तत् सूचितम्—यत्, अधमालम्बनेनापि शृङ्गारो भवत्येव किन्तु स शृङ्गाराभासव्यपदेश्यः, तथा च वक्ष्यति—"अधमपात्रतिर्य्यगादिगते" इति । एवञ्च शृङ्गम् ऋच्छति स्वकारणत्वेन प्राप्नोतीति शृङ्गारः शृङ्गशब्दोपपदात् ऋधातोः कर्म्मण्यण् । अत्र शृङ्गारे परोढ़ां परपरिणीतां स्त्रियम् अननुरागिणीं वेश्याञ्च वर्जयित्वा विद्यमाना अन्याः सर्वा नायिकाः दक्षिणाद्याः सर्वे नायकाश्च आलम्बनं स्युरित्यन्वयः । एतेन परकीयायाः कन्याया अनुरागिण्या वेश्यायाश्च आलम्बनत्वमनुमतम् । परोढ़ायाम् अननुरागिण्यां वेश्यायाञ्च रतौ तु शृङ्गाराभासत्वमित्यपि सूचितम् । रोलम्बरुतं भ्रमरगुञ्जनम् आदिशब्दात् कोकिलकूजनादिकञ्च उद्दीपनम् उद्दीपनविभावः । नायकनायिकयोर्भ्रूविक्षेपः कटाक्षः आदिशब्दात् हस्तसङ्केतादिश्च । औग्र्यं मरणम् आलस्यं जुगुप्सां बीभत्सरसस्थायिभावरूपां घृणाञ्च त्यक्त्वा विद्यमाना अपरे सर्वेऽपि निर्वेदादयो व्यभिचारिणो भावाः स्युः । अतएवास्माभिः स्थायिभावविवरणे मरणादयो व्यभिचारिभावाः प्रतिकूला इत्युक्तम् । रतिः प्रागुक्तलक्षणा अनुराग इत्यर्थः स्थायी भावः । विष्णुर्दैवतं देवता अस्येति विष्णुदैवतः । तथा च नायकनायिकयोरन्योन्यरतिनिबन्धनमसाधारणं सुखं जायते सुखमात्रमेव च केवलसत्त्वगुणजन्यम्, सत्त्वगुणाधिष्ठाता च विष्णुरित्यतः द्वयोरपि प्रधानत्वाच्च शृङ्गाररसो विष्णुदैवत एव न्याय्य इति भावः । अतएवायं श्यामवर्ण इति बोध्यम् । दैवतावदृश्यभावेन पूर्णाविश्वादर्शीकारितया कल्पनामात्रमेतत् रसस्य माहात्म्यसूचनाय । अन्यथा ज्ञानमात्ररूपस्य रसस्य श्यामवर्णत्वाद्यनुपपत्तिरिति ध्येयम् । एवमन्यत्रापि ।

(द) लक्ष्यं प्रदर्श्य तत्र लक्षणं सङ्गमयितुमाह यथेति । सहृदयेषु रसज्ञानसमर्थसामाजिकेषु रतिभावः अमत्कारिविभावैर[illegible]भावः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तद्भेदावाह—

१८९ । विप्रलम्भोऽथ सम्भोग इत्येष द्विविधो मतः । (ध)

तत्र—

१९० । यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ । (न)

अभीष्टं नायकं नायिकां वा ।

१९१ । स च पूर्वराग-मान-प्रवास-करुणात्मकश्चतुर्द्धा स्यात् ॥ (प)

तत्र—

१९२ । श्रवणाद्दर्शनाद्वापि मिथः संरूढ़रागयोः ।

दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥ (फ)

१९३ । श्रवणन्तु भवेत्तत्र दूत-वन्दि-सखीमुखात् ।

इन्द्रजाले च चित्रे च साक्षात् स्वप्ने च दर्शनम् ॥ (ब)

---

(ध) विप्रेति । एष शृङ्गारः । विप्रलभ्यते कामेन प्रतार्य्यते नायको नायिका च यस्मिन्निति विप्रलम्भः । सम्भुज्यते परस्परमुपभुज्यते यस्मिन्निति च सम्भोगः ।

(न) यत्रेति । यत्र शृङ्गारे रतिर्नायकनायिकयोरन्योन्यानुरागः प्रकृष्टा अतीववृद्धिं प्राप्ता, तु किन्तु अभीष्टं नायिका नायकं नायको वा अभीष्टां नायिकां न उपैति विघ्नविशेषात् यथेच्छं न प्राप्नोति, असौ स विप्रलम्भः शृङ्गारः स्यात् । सङ्गमप्रतिबन्धसहकृतप्रकृष्टरतिनिबन्धनः शृङ्गारो विप्रलम्भ इत्यर्थः ।

(प) स इति । स च सोऽपि विप्रलम्भ इत्यर्थः ।

(फ) श्रवणादिति । गुणानां श्रवणात् रूपस्य दर्शनाद्वापि मिथः परस्परं संरूढ़रागयोरुत्पन्नानुरागयोर्नायकनायिकयोः परस्परमप्राप्तौ यो दशाविशेषः स पूर्वराग उच्यते । स्वध्वंसानधिकरणकालीन-प्राप्तिप्रागभावकालवृत्तिरवस्थाविशेषः परस्परं सञ्जातानुरागयोर्नायकनायिकयोः पूर्वराग इत्यर्थः । स्वपदं प्राप्तिपरम् । तेन प्राप्त्यनन्तरवर्त्तिप्रवासे नातिव्याप्तिः, तत्परवर्त्तिप्राप्तेः स्वध्वंसाधिकरणकालीनत्वात् । अतएवायं पूर्वरागः कन्यारूपायामेव नायिकायां सम्भवति । यथा—मालतीमाधवादौ । प्राप्तेः पूर्वस्मिन् काले रागः पूर्वरागः ।

(ब) श्रवणमिति । तत्र पूर्वरागे । अत्र दूतपदं दूत्या अपि वन्दिपदञ्च द्विजादीनामपि चोपलक्षणम् । तत्र दूतवन्द्यादिमुखेभ्यः श्रवणं नैषधे नलदमयन्त्योः । सखीमुखाच्च श्रवणं मालतीमाधवे बुद्धरक्षितामुखात् मकरन्दस्य मदयन्तिकया । इन्द्रजाले दर्शनम्—"कथमीक्षे कुरङ्गाक्षीम्" इत्यादिवक्ष्यमाण-श्लोके नायकेन नायिकायाः । चित्रे दर्शनम्—मालविकाग्निमित्रे मालविकाया अग्निमित्रेण ।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१९४ । अभिलाषश्चिन्ता स्मृतिगुणकथनोद्वेगसम्प्रलापाश्च ।
उन्मादोऽथ व्याधिर्जड़ता मृतिरिति दशात्र कामदशाः ॥ (भ)

१९५ । अभिलाषः स्पृहा चिन्ता प्राप्त्युपायादिचिन्तनम् ।
उन्मादश्चापरिच्छेदश्चेतनाचेतनेष्वपि ॥
अलक्ष्यवाक् प्रलापः स्याच्चेतसो भ्रमणाद्भृशम् ।
व्याधिस्तु दीर्घनिश्वास-पाण्डुताकृशतादयः ॥
जड़ता हीनचेष्टत्वमङ्गानां मनसस्तथा । (म)

शेषं स्पष्टम् । क्रमेणोदाहरणानि (य) ।

"प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढ़रागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।
यास्वन्तःकरणस्य वाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥" (र)

---

साक्षाद्दर्शनम्—शाकुन्तले दुष्मन्तशकुन्तलयोः । स्वप्ने दर्शनम्—श्रीभागवते हरिवंशे च अनिरुद्धस्य उषया ।

(भ) अभीति । अत्र पूर्वरागे, दश दशप्रकाराः, कामदशाः कामोत्पादितरतिजन्या नायक-नायिकयोरवस्थाः । मृतिर्मरणम् ।

(म) उक्तकामदशागणनकारिकानिविष्टान्यस्पष्टपदानि व्याचष्टे मूलकार एव अभिलाष इति । स्पृहा प्राप्तीच्छा । नायकनायिकयोः परस्परमेवेति शेषः । एवमन्यत्रापि । आदिपदेन रहस्यप्रकाशे तदुपयुक्तोत्तरा-दीनां ग्रहणम् । चेतनाचेतनेष्वपि पदार्थेषु अपरिच्छेदो विशेषनिश्चयाभाव उन्मादः । एतेनायुर्वेदोक्त उन्मादो न ग्राह्य इति सूचितम् । चेतसो भृशमत्यन्तं भ्रमणादस्थिरत्वात् अलक्ष्यवाक् लक्ष्यशून्यं भाषणं प्रलापः कारिकोक्तसम्प्रलापः स्यात् । दीर्घनिश्वासः, शरीरस्य पाण्डुता कृशता, आदिशब्दात् मुखमालिन्या-दयश्च व्याधिः । न पुनरायुर्वेदोक्तो ज्वरादिरिति भावः । अङ्गानां हस्तपदादीनां हीनचेष्टत्वं स्वस्वकार्य्या-क्षमत्वम्, मनसो हीनचेष्टत्वम् अन्यभावनाशून्यत्वञ्च जड़ता स्यात् ।

(य) शेषमिति । शेषम् अवशिष्टं स्मृति-गुणकथनोद्वेग-मृतिरूपं चतुष्टयं स्पष्टं प्रसिद्धार्थम् । अतएवामी न व्याख्याता इति भावः । क्रमेणोदाहरणानि अभिलाषादिकामदशानामित्यर्थः ।

(र) प्रेमार्द्रा इति । मालतीमाधवे मालतीमुद्दिश्य श्मशानावतीर्णस्य माधवस्योक्तिरियम् । प्रेमा अनुरागाङ्कुरः तेन आर्द्राः सरसाः, प्रणयम् अङ्कुरावस्थातः किञ्चिदतिरिक्तमनुरागं स्पृशन्ति भजन्त इति प्रणयस्पृशः, तथा परिचयात् अयमीदृश इति विशेषज्ञानात् उद्गाढः अतीवघनो यो रागः अनुरागस्तस्य उदय-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र मालतीसाक्षाद्दर्शनप्ररूढरागस्य माधवस्याभिलाषः ।

"कथमीक्षे कुरङ्गाक्षीं साक्षाल्लक्ष्मीं मनोभुवः ।
इति चिन्ताकुलः कान्तो निद्रां नैति निशीथिनीम् ॥" (ल)

अत्र कस्याश्चिन्नायिकाया इन्द्रजालदर्शनप्ररूढरागस्य नायकस्य चिन्ता । इदं मम । "मयि सकपटम्" इत्यादौ (१६६ पृष्ठे) स्मृतिः । "नेत्रे खञ्जनगञ्जने" इत्यादौ (११० पृष्ठे) गुणकथनम् । "श्वासान् मुञ्चति" इत्यादौ (१४१ पृष्ठे) उद्वेगः ।

"त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत ।
क्व नीलकण्ठ ! व्रजसीत्यलक्ष्यवाक् असत्यकण्ठार्पितबाहुबन्धना ॥" (व)

अत्र प्रलापः । "भ्रातर्द्विरेफ !" इत्यादौ (१६५ पृष्ठे) उन्मादः ।

"पाण्डु क्षामं वदनं हृदयं सरसं तवालसञ्च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं (१) सखि ! हृदन्तः ॥" (श)

---

उत्पत्तिर्यासु ताः, निसर्गमधुराः स्वभावमनोहराः, मुग्धदृशः सुन्दरनयनाया मालत्याः, तास्ताः पूर्वानुभूताः चेष्टाः कटाक्षादयो मयि भवेयुः । इत्येवाशंसेति भावः । अतएव आशंसया "कथमस्याः पुनरपि तादृशकटाक्षनिक्षेपगोचरो भवेयम्" इत्यादिरूपया भावनया परिकल्पितासु निर्मितास्वपि यासु चेष्टासु क्षणात् बाह्यकरणानां चक्षुरादीनां व्यापारं वृत्तिं रूपादिस्वस्वविषयग्रहणसामर्थ्यं रोद्धुं शीलं यस्य सः, तथा सान्द्रो घन आनन्दो यस्मिन् सः, अन्तःकरणस्य चित्तस्य लयो विलीनता भवति तन्मयता भवतीत्यर्थः ।

(ल) कथमिति । इन्द्रजालदृष्टस्वरूपां नायिकां प्रति कामिदूत्या उक्तिरियम् । मनोभुवो मदनस्यापि लक्ष्मीमाराध्य लक्ष्मीरूपां कुरङ्गाक्षीं हरिणलोचनां कथं केन प्रकारेण साक्षात् प्रत्यक्षमीक्षे अवलोकयामि ; इति चिन्तया आकुलो व्यग्रः कान्तो नायकः निशीथिनीं समस्तां रात्रिं व्याप्यापि निद्रां न एति प्राप्नोति ।

(व) त्रिभागेति । कुमारसम्भवे शिवानुरक्तायाः पार्वत्या अवस्थावर्णनमिदम् । त्रिभागस्तृतीयो भागः वृत्तिविषये संख्याशब्दानां पूरणार्थत्वात् शेषोऽवशिष्टो यासां तासु च निशासु क्षणं क्षणकालं यावत् नेत्रे निमील्य मुद्रयित्वा हे नीलकण्ठ ! त्वं क्व कुत्र व्रजसि इति इत्थम् अलक्ष्या निर्विषया वाक् वाक्यं यस्याः सा पार्वती, असत्ये मिथ्याभूते कण्ठे शिवस्य कण्ठदेशे बाहुबन्धनं भुजाभ्यामालिङ्गनं यस्याः सा तादृशी सती, सहसैव व्यबुध्यत जागरितवती । "अत्र प्रलापः" इति विश्वनाथः । मल्लिनाथस्तु "एतेन जागरोन्मादौ सूचितौ" इत्याह स्म । तदपि सङ्गच्छते तयोरपि सम्भवात् ।

(श) पाण्ड्विति । हे सखि ! पाण्डु पाण्डुवर्णं क्षामं क्षीणञ्च तव वदनम्, सरसं सानुरागं

---

(१) क्षत्रियरोगमिति क्वचित् पाठः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र व्याधिः ।

"भिसिणीअलसअणोए णिहिअं सव्वं सुणिच्चलं अङ्गं ।
दीहो णोसासहरो एसो साहेइ जीअइत्ति परं ॥" (ष)

अत्र जड़ता । इदं मम ।

१९६ । रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते ॥
जातप्रायन्तु तद्वाच्यं चेतसा काङ्क्षितं तथा ।
वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः ॥ (स)

तत्र आद्यं यथा—(ह)

"शेफालिकां विदलितामवलोक्य तन्वी-
प्राणान् कथञ्चिदपि धारयितुं प्रभूता ।
आकर्ण्य सम्प्रति रुतं चरणायुधानां
किं वा भविष्यति न वेद्मि तपस्विनी सा ॥" (क्ष)

---

तव हृदयम्, तथा अलसं कार्श्यावहं तव वपुः शरीरञ्च हृदन्तः तवैव हृदयाभ्यन्तरे चेप्सितरोगं शरीरजातं कञ्चित् व्याधिम् आवेदयति ज्ञापयति मदनवेदनां सूचयतीत्यर्थः ।

(ष) भिसिणी इति । अत्यन्तकामार्त्तां काञ्चिदवलोक्य सख्यन्तरं प्रति सख्या उक्तिरियम् । "बिसिनीदलशयनीये निहितं सर्वं सुनिश्चलमङ्गम् । दीर्घो निश्वासभर एष साधयति जीवति इति परम् ॥" इति संस्कृतानुवादः । बिसिनीदलशयनीये पद्मिनीपत्रशय्यायां निहितं स्थापितं सर्वमङ्गं सुनिश्चलम् अत्यन्तनिस्पन्दम् । अतएव एतत् मृतव्यक्तेः समानमिति भावः, परं किन्तु एष दीर्घो निश्वासानां भरः अतिशय इयं जीवति इति साधयति अनुमापयति ।

(स) ननु मरणस्यापि कामदशात्वे कविभिः कथं तन्न वर्णितमित्याह रसेति । वर्ण्यते कविभिरिति शेषः । तथा च मरणवर्णने शृङ्गारं विच्छिद्य करुण एवाविर्भवति शोकस्थायिभावोपगमादिति भावः । तर्हि कामदशागणनायां मरणोल्लेखस्य किं प्रयोजनमित्याह जातेति । तत् मरणम् । चेतसा काङ्क्षितञ्च तन्मरणं वाच्यमित्यन्वयः । ननु तर्हि कादम्बर्यां पुण्डरीकस्य मरणं कथं बाणभट्टेन वर्णितमित्याह वर्ण्यतेऽपीति । अदूरतो मरणक्षणात्तस्य नातिदूरे यदि प्रत्युज्जीवनम् आलम्बनस्य पुनरप्युज्जीवनं स्यात् तदा मरणं वर्ण्यतेऽपीत्यर्थः । तथा च तस्मिन्नवसरे समुत्पन्नोऽपि शोकः क्षणिकतया दुर्बलत्वात् अविच्छिन्नप्रवाहां प्रबलां रतिं नोच्छेत्तुमर्हतीति तत्रापि शृङ्गार एव रस इत्यभिप्रायः । केचित्तु तादृशावसरेऽपि करुणमेवाङ्गीकुर्वन्तीति वक्ष्यति एवञ्चोक्तकामदशागणनकारिकायां मृतिपदं जातप्रायमरणपरम् आकाङ्क्षितमरणपरं सन्निहितपुनर्जीवनकमरणपरञ्चेति बोध्यम् ।

(ह) तत्रेति । तत्र उक्तत्रिविधमरणेषु मध्ये आद्यं जातप्रायमरणं यथेत्यर्थः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्वितीयं यथा—(क)

"रोलम्बाः परिपूरयन्तु हरितो झङ्कारकोलाहलैः
मन्दं मन्दमुपैतु चन्दनवनीजातो नभस्वानपि ।
माद्यन्तः कलयन्तु चूतशिखरे केलीपिकाः पञ्चमं
प्राणाः सत्वरमश्मसारकठिना गच्छन्तु गच्छन्त्वमी ॥" (ख)

ममैतौ। तृतीयं यथा—कादम्बर्य्यां महाश्वेतापुण्डरीकवृत्तान्ते। एष च प्रकारः करुणविप्रलम्भविषय इति वक्ष्यामः (ग)। केचित्तु—

"नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ।
उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः ॥"

इत्याहुः (घ)।

---

(घ) शेफेति। रात्रिशेषे नायकमुपागम्य नायिकादूत्या उक्तिरियम्। तन्वी क्षीणाङ्गी तपस्विनी शोच्या च सा नायिका शेफालिकां तदाख्यं कुसुमं विदलितां प्रस्फुटिताम् अवलोक्य कथञ्चिदपि महाकष्टेनेत्यर्थः प्राणान् धारयितुं प्रभूता समर्था आसीत्। रात्रिप्रथमभाग एव शेफालिकाया विकासेन परतस्त्वदागमनस्य सम्भावितत्वादिति भावः। सम्प्रति तु रात्रिशेषे चरणायुधानां कुक्कुटानां रुतं रवम् आकर्ण्य श्रुत्वा किं वा भविष्यति इति न वेद्मि जानामि। इदानीं रात्रेः प्रभातप्रायत्वेन तवागमनं प्रति नैराश्यान्मृतप्रायैव भविष्यतीति भावः।

अत्र किं वा भविष्यतीत्यनेन नायिकाया जातप्रायं मरणं वर्णितम्।

(क) द्वितीयमिति। चेतसाकाङ्क्षितमरणं यथेत्यर्थः।

(ख) रोलम्बा इति। रोलम्बा भ्रमराः झङ्कारकोलाहलैः हरितो दिशः परिपूरयन्तु। चन्दनवनीजातश्चन्दनकाननोत्पन्नः नभस्वान् वायुरपि मन्दं मन्दम् उपैतु आगच्छतु। केलीपिकाः कौतुकाय गृहपालिताः कोकिलाः माद्यन्तो वसन्तस्वभावेन मत्ताः सन्तः चूतशिखरे आम्रतरूपरि पञ्चमं स्वरं कलयन्तु आविष्कुर्वन्तु। अश्मसारकठिनाः पाषाणसारांशवत् कठोराः अमी मदीयाः प्राणाः सत्वरं गच्छन्तु गच्छन्तु।

अत्र कामवेदनामसहमानया नायिकया चेतसा मरणमाकाङ्क्षितम्।

(ग) तृतीयमिति। तृतीयं सन्निहितपुनर्जीवनकमरणम्। महाश्वेतापुण्डरीकवृत्तान्ते हि पुण्डरीकः प्रथमं मृतः परमदूर एव पुनर्जीवितः। तत्र हि ग्रन्थगौरवेण दूरत्वेऽपि उपाख्यानभागेनादूरत्वमेवेति द्रष्टव्यम्। वक्ष्यामः करुणविप्रलम्भलक्षणस्य वृत्ताविति शेषः।

(घ) नयनेति। प्रथमं नयनप्रीतिर्नयनाभ्यां दर्शनेनैवानन्दः, नायकनायिकयोरिति शेषः। अन्यत्रा-प्येवम्। ततः चित्तस्य आसङ्गः परस्परमासक्तिः। अथ अनन्तरम्, सङ्कल्पः "इत्थं संयोक्ष्ये" इत्येवं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१९७। आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः। (ङ)

इङ्गितान्युक्तानि (च)। यथा—रत्नावल्यां सागरिकावत्सराजयोः।

आदौ पुरुषानुरागे सम्भवत्यप्येवमधिकं हृदयङ्गमं भवति (छ)।

१९८। नीली कुसुम्भं मञ्जिष्ठा (१) पूर्वरागोऽपि च त्रिधा॥ (ज)

१९९। न चातिशोभते यन्नापैति प्रेम मनोगतम्।

तं नीलीरागमाख्यान्ति (२) यथा श्रीरामसीतयोः॥ (झ)

२००। कुसुम्भरागं तं प्राहुर्यदपैति च शोभते। (ञ)

---

मनसा कल्पना। निद्राच्छेदो रात्रावपि निद्राराहित्यम्। तनुता देहस्य क्षीणता। विषयनिवृत्तिर्भोग्यपदार्थेषु वैराग्यम्। त्रपाया लज्जाया नाशः। उन्मादः प्रागुक्तलक्षण एव। मूर्च्छा अचैतन्यम्। मृतिर्मरणम्। सर्वत्र भवेदित्यनुषज्यते। एवम्प्रकाराणामनङ्गीकारबीजन्तु महाकविनिबन्धेषु प्रायेणादर्शनम्।

(ङ) आदाविति। रागोऽनुरागः। वाच्यो वर्णनीयः। पश्चात्तस्याः स्त्रिया इङ्गितैः पुंसो रागो वाच्य इत्यन्वयः।

(च) इङ्गितानीति। उक्तानि "दृष्टा दर्शयति व्रीड़ाम्" इत्यादिना प्रागुक्तेन सन्दर्भद्वयेनेति शेषः। एवञ्च "इङ्गितान्युक्तानीति अभिलाषादिरूपाणीत्यर्थः" इति रामचरणोक्तं हेयम्, अभिलाषादीनां तेष्विङ्गितेष्वगणनात्।

(छ) ननु आदौ किं पुरुषस्यानुराग एव न भवति येनादौ स्त्रिया एव रागो वाच्य इत्युपदिश्यत इत्याह आदाविति। एवम् आदौ स्त्रिया एव रागस्य वाच्यत्वे। हृदयङ्गमं मनोहरं भवति काव्यमिति शेषः।

(ज) पूर्वरागमपि विभजते नीलीति। नीलीरागः कुसुम्भरागो मञ्जिष्ठारागश्चेति त्रिधेत्यर्थः।

(झ) तत्र नीलीरागं लक्षयति न चेति। मनोगतं नायकनायिकयोश्चित्तगतं यत् प्रेम अनुरागः न अपैति कुतोऽपि कारणाच्चित्तान्न प्रच्यवते, न च अतिशोभते कटाक्षादिकं वहिर्विकारं प्रकाश्य सखिजनसमाजे वा नातिसुन्दरायते, धैर्यलज्जाभ्यामिति शेषः. तं नीलीरागम् आख्यान्ति ब्रुवन्ति आलङ्कारिका इति शेषः। यथा—नीलीवृक्ष-(नीलगाछ) द्रवेण कृतं वस्त्रादिषु रञ्जनं जलादिना नापैति नवातिशोभते तद्वदयमपि नीलीरागाख्यः पूर्वराग इति भावः। अतएव औपम्यगर्भोऽयं नीलीरागशब्दः पूर्वरागभेदे योगरूढः। उदाहरति यथेति। श्रीराम-सीतयोर्हि परिणयात् पूर्वं श्रवणादिना जातमन्योन्यं प्रेम, हरधनुर्भङ्गविघ्ने नापि नापेतं धैर्यलज्जाभ्यां सखिजनसमाजेऽपि न प्रकाशितवहिर्विकारमासीत्।

(ञ) कुसुम्भरागं लक्षयति कुसुम्भेति। नायकनायिकयोर्यत् प्रेम अपैति कारणविशेषेण चित्ता-

---

(१) नीलीकुसुम्भमञ्जिष्ठाः इति पाठान्तरम्। (२) तन्नीलीरागमाख्यातम् इति क्वचित् पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२०१। मञ्जिष्ठारागमाहुस्तं यन्नापैत्यतिशोभते ॥ (ट)

अथ मानः।

२०२। मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः। (ठ)

२०३। द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि ॥

प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विना। (ड)

द्वयोरिति नायकस्य नायिकायाश्च उभयोश्च प्रणयमानो वर्णनीयः। उदाहरणम्। तत्र नायकस्य यथा—

"अलीअपसुत्तअ! विणिमीलिअच्छ! देसु सुहअ! मज्झ ओआसं।
गण्डपरिउम्बणपुलइअङ्ग! ण उणो चिराइस्सं ॥" (ढ)

---

दपसरति, शोभते वहिर्विकारप्रकाशेन सखिजनसमाजे सुन्दरायते च; तं कुसुम्भरागं प्राहुः। यथा—कुसुम्भ-(कुसुमफल) द्रवेण कृतं वस्त्रादिषु रञ्जनं जलादिना भ्रश्यति स्थितिकाले शोभते च तद्वदयमपि पूर्वरागभेद इत्यभिप्रायः। अतएव अयं शब्दोऽपि पूर्ववत् योगरूढः। यथा मम विराजसरोजिन्यां हरिदश्वसरोजिन्योः। तयोर्हि परस्परप्राप्त्युपायाभावेन दानवादिप्रतिबन्धेन च प्रेम क्वचिदन्तर्हितम्, क्वचित् सखिजनसमाजे शोभितञ्च।

(ट) मञ्जिष्ठारागं लक्षयति मञ्जिष्ठेति। नायकनायिकयोर्यत् प्रेम न अपैति विशेषविघ्नेनापि विनाशं गच्छति अतिशोभते वहिः प्रचुरतरविकारप्रकाशेन सखिजनसमाजे अतीवसुन्दरायते च, तं मञ्जिष्ठारागम् आहुः। यथा स्वनामख्यातमञ्जिष्ठाद्रवेण कृतं वस्त्रादिषु रञ्जनं कुतोऽपि नापैति अतीव शोभते च तद्वदयमपि पूर्वरागभेद इत्यर्थः। तेनायमपि मञ्जिष्ठारागशब्द औपम्यगर्भः पूर्वरागभेदे योगरूढः। यथा—मालतीमाधवे माधवमालत्योः। तयोरपि हि राजकृतानुरोधादिना प्रेम नापेतं वहिरत्यन्तविकारप्रकाशेनातीवशोभितञ्च।

(ठ) पूर्वरागं निरूप्येदानीं मानं निरूपयति मान इति। कोपो मान इति मानस्य सामान्यलक्षणम्। तथा च अनुरागे सति कोपो नाम इत्यर्थः। तेनोदासीनस्य उदासीनाया वा कोपमात्रे नातिव्याप्तिः। तु किन्तु, प्रणयेर्ष्यासमुद्भवः स मानः द्वेधा प्रणयमान ईर्ष्यामानश्चेति द्विविधः।

(ड) तत्र प्रणयमानं लक्षयति द्वयोरिति। कारणं कोपस्य स्वाभाविकहेतुम् अपराधादिकं विनापि प्रेम्णः प्रणयस्य कुटिलगामित्वात् वक्रगतित्वात् वैचित्र्याद्धेतोरित्यर्थः सुमहति प्रमोदे परस्परसम्भोगजनितानन्दे सत्यपि द्वयोः नायकस्य नायिकायाः तयोरुभयोरेव वा यः कोपः स प्रणयमानः स्यात्। प्रणये सति मानः प्रणयमानः। प्रेम्णः कुटिलगामित्वादिति कोपं प्रति कारणं दर्शितम्।

(ढ) अलीअ इति। "अलीकप्रसुप्तक! विनिमीलिताक्ष! देहि सुभग! मह्यमवकाशम्। गण्डपरिचुम्बनपुलकिताङ्ग! न पुनश्चिरयिष्यामि ॥" इति संस्कृतानुवादः। आत्मनो विलम्बादागमनेन मानात् कपटनिद्रितं नायकं प्रति नायिकायाः सानुनयोक्तिरियम्। हे अलीकप्रसुप्तक! मिथ्यानिद्रित!

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नायिकायां यथा—कुमारसम्भवे सन्ध्यावर्णनावसरे (ण) ।

उभयोर्यथा—

"पणअकुविआण दोह्व वि अलीअपसुत्ताण माणइल्लाण ।
णिच्चलणिरुद्धणीसासदिण्णकण्णाण को मल्लो ॥" (त)

अनुनयपर्यन्तासहत्वे त्वस्य न विप्रलम्भभेदता, किन्तु सम्भोगसञ्चारीर्ष्याख्यभावत्वम् (१) (थ) । यथा—

"भ्रूभङ्गे (२) रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते ।
कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिन् जने ॥" (द)

हे विनिमीलिताक्ष ! अत्यन्तमुद्रितनयन ! हे सुभग ! प्रिय ! मह्यम् अवकाशं शयनाय स्थानं देहि । गण्डे परिचुम्बनेन पुलकितानि रोमाञ्चितानि अङ्गानि यस्य तत्सम्बोधनम् । अहं पुनर्न चिरयिष्यामि शयनायागन्तुं न विलम्बिष्ये ।

अत्र नायिकाया विलम्बेन नायकस्य प्रणयकोपरूपो मानः ।

(ण) नायिकाया इति । तत्र हि अष्टमसर्गे सन्ध्यावर्णनावसरे सन्ध्यानियमाय गन्तुं प्रार्थयमानं हरं प्रति पार्वत्याः प्रणयमानो वर्णितः ।

(त) पणअ इति । "प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानविज्ञयोः । निश्चलनिरुद्धनिश्वासदत्तकर्णयोः को मल्लः ॥" इति संस्कृतानुवादः । प्रणयकुपितयोः, अतएव अलीकप्रसुप्तयोर्मिथ्यानिद्रितयोः, मानविज्ञयोर्मानकरणविचक्षणयोः, तथा निश्चलं यथा स्यात्तथा निरुद्धे निश्वासे निश्वासशब्दे दत्तौ कर्णौ याभ्यां तयोः, द्वयोरपि नायकनायिकयोर्मध्ये को मल्लः को मल्लवत् प्रधानसहिष्णुरिति सखीं प्रति सख्यन्तरस्य प्रश्नः ।

अत्र नायकनायिकयोरुभयोरेव प्रणयकोपरूपो मानः ।

(थ) मानकरणचेष्टामात्रस्य मानत्वं न स्यादित्याह अनुनयेति । एकस्य मानभङ्गाय अपरस्य प्रियवाक्यादिकमनुनयः, तत्पर्यन्तासहत्वे मानस्य तत्पर्यन्तमप्यस्थायित्वे अनुनयात् प्रागेव सम्भाषणमात्रेण मानस्य भङ्गुरत्वे इत्यर्थः, अस्य मानस्य मानचेष्टाया इत्यर्थः, न विप्रलम्भभेदता न मानाख्यविप्रलम्भशृङ्गारविशेषत्वम् । सम्भोगे सम्भोगाख्यशृङ्गारे सञ्चारी व्यभिचारिरूपो य ईर्ष्याख्यभावः असूयाख्यभावः तत्त्वम् । तथा च तादृशी मानकरणचेष्टा न मानाख्यविप्रलम्भशृङ्गारः अनुनयरूपफलोपधायकत्वाभावात् । किन्तु तत्र सम्भोगशृङ्गार एव रसः, मानचेष्टा तु असूयाख्यव्यभिचारिभावरूपा सम्भोगस्यैव परिपोषणादिति भावः । एतेन अनुनयपर्यन्तमेव प्रणयकोपस्य स्थायित्वे तस्यैव मानत्वमिति सूचितम् ।

(द) भ्रूभङ्ग इति । मानमुपदिशन्तीं सखीं प्रति कस्याश्चिदुक्तिरियम् । भ्रूभङ्गे मानसूचके

(१) सञ्चार्य्याख्यभावत्वम् सञ्चारीर्ष्यात्वभावत्वम् इति पाठभेदौ । (२) भ्रूभेदे इत्यपि पाठः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा वा—"एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम्।
दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः॥" (ध)

२०४। पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते॥
ईर्ष्यामानो भवेत् स्त्रीणां तत्र त्वनुमितिस्त्रिधा।
उत्स्वप्नायित-भोगाङ्क-गोत्रस्खलनसम्भवा॥ (न)

तत्र दृष्टे यथा—"विनयति सुदृशो दृशोः परागं
प्रणयिनि कौसुममाननानिलेन।
तदहितयुवतेरभीक्ष्णमक्ष्णो-
र्द्वयमपि रोषरजोभिरापुपूरे॥" (प)

---

भ्रुवोः कौटिल्ये रचितेऽपि यत्नात् कृतेऽपि दृष्टिर्मम नयनम् अधिकं सोत्कण्ठं यथा स्यात्तथा उद्वीक्षते कान्तमिति शेषः। वाचि आलापे यत्नेन रुद्धायामपि इदं मम दग्धाननं सस्मितं जायते। तथा चेतसि कार्कश्यं काठिन्यं गमितेऽपि यत्नेन प्रापितेऽपि तनुर्मम शरीरं रोमाञ्चमालम्बते। अतएव तस्मिन् जने मम कान्ते दृष्टे सति कथं मानस्य निर्वहणं निर्वाहो भविष्यति, अपि तु कथमपि नेत्यर्थः।

अत्र वक्तृनायिकाया नायककर्त्तृकानुनयात् प्रागेव मानस्य भङ्गः।

(ध) एकस्मिन्निति। एकस्मिन् शयने शयनीये पराङ्मुखतया परस्परवैमुख्येन स्थितयोरिति शेषः, वीतोत्तरं परित्यक्तोत्तरप्रत्युत्तरं तूष्णीमित्यर्थः ताम्यतोर्मनसि सन्तप्यमानयोः, अन्योन्यस्य हृदि अनुनये अनुनयकरणेच्छायां स्थितेऽपि गौरवं स्वां स्वां दृढ़तां संरक्षतोः, तथा शनकैः अपाङ्गवलनात् नेत्रप्रान्तसञ्चालनात् मिश्रीभवन्ति संयुज्यमानानि चक्षूंषि ययोस्तयोः, दम्पत्योः सहासं यथा स्यात्तथा रभसेन वेगेन व्यासक्तः प्रवृत्तः कण्ठग्रह आलिङ्गनं यस्मिन् स तादृशः सन् मानकलिः प्रणयकोपकलहो भग्नः।

अत्रापि नायकनायिकयोः परस्परमनुनयात् प्रागेव मानस्य भङ्गः।

(न) ईर्ष्यामानं लक्षयति पत्युरिति। पत्युः अन्यप्रियायाम् आसङ्गे आसक्तौ दृष्टे अनुमिते अथवा श्रुते सति स्त्रीणां यः प्रणयकोपः स ईर्ष्यामानो भवेत्। एष तु स्त्रीणामेव सम्भवतीति प्रदर्शनार्थैव स्त्रीणामित्युक्तम्। पुरुषाणान्तु पत्न्या अन्यपुरुषासङ्गे दृष्टे अनुमिते श्रुते वा प्रणयमुपमर्द्य केवलक्रोधस्यैव जायमानत्वात् रत्यभावेन शृङ्गाररूपत्वस्याभावात्। तत्र तु तेषु दर्शनादिषु मध्ये तु अनुमितिरनुमानम् उत्स्वप्नायितभोगाङ्क-गोत्रस्खलनसम्भवा सती त्रिधा भवति। तथा च पत्युरन्यप्रियासङ्गवशात् स्वप्ने तस्या उत्कीर्त्तनम् उत्स्वप्नायितम्, अन्यप्रियासम्भोगचिह्नदर्शनं भोगाङ्को भोगाङ्कदर्शनम्, स्वनाम्नि उच्चारयितव्ये आसङ्गवशादन्यप्रियाया नामोच्चारणं गोत्रस्खलनम्। एवञ्च उत्स्वप्नायितसम्भवा, भोगाङ्कदर्शनसम्भवा, गोत्रस्खलनसम्भवा चेति त्रिविधा अनुमितिः।


CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सम्भोगचिह्नेनानुमिते यथा—

"नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुम् ॥" (फ)

एवमन्यत्र (ब) ।

**२०५ । सामभेदोऽथ दानञ्च नत्युपेक्षे रसान्तरम् ।**
**तद्भङ्गाय पतिः कुर्य्यात् षडुपायानिति क्रमात् ॥ (भ)**

(प) विनयतीति । प्रणयिनि प्रियतमे आननानिलेन मुखवायुना सुदृशः सुन्दरनयनाया एकस्याः प्रियायाः दृग्गोचरयोः कौसुमं पुष्पसम्बन्धिनं परागं रेणुं विनयति दूरीकुर्वति सति, तस्याः सुदृशो नायिकाया अहितयुवतेः सन्निहितायाः सपत्न्याः अक्ष्णोर्द्वयं नेत्रयुगलमपि रोषरजोभिः कोपपरागैः अभीक्ष्णं वारं वारम् आपुपूरे परिपूर्णम् । श्लोकोऽयं शिशुपालवधसप्तमसर्गे ।

अत्र पत्युः प्रथमप्रियायामासङ्गे दृष्टे द्वितीयाया ईर्ष्यामानः ।

(फ) नवेति । नवानि नूतनानि नखपदानि अन्यनायिकानखक्षतचिह्नानि यस्मिन् तादृशम् अङ्गम् अंशुकेन वसनेन गोपयसि, तथा अन्यनायिकया दन्तैर्दष्टम् ओष्ठं पाणिना स्थगयसि संवृणोषि । किन्तु प्रतिदिशं विसर्पन् वायुना प्रसरन् अपरस्त्रीसङ्गशंसी अन्यनायिकासम्भोगसूचकः नवपरिमलगन्धो नूतनविमर्द्द-सौरभं केन प्रकारेण वरीतुं गोपयितुं त्वया शक्यः, अपि तु केनापि नेत्यर्थः । श्लोकोऽयं शिशुपालवधस्यैका-दशसर्गे ।

अत्र सम्भोगचिह्नदर्शनेन पत्युरन्यप्रियासङ्गे अनुमिते वक्तृनायिकाया ईर्ष्यामानः ।

(ब) एवमिति । अन्यत्र पत्युरन्यप्रियासङ्गे उत्स्वप्नायितेनानुमिते गोत्रस्खलनेनानुमिते च श्रुते च एवमुदाहरणमूह्यमित्यर्थः । तत्र उत्स्वप्नायितेनानुमिते यथा मम विराजसरोजिन्याम्—

"देवी । सढ ! सिविणप्पलावी ज्जेव पमाणं ।"

अत्र हि स्वप्ने राज्ञः सरोजिन्या उत्कीर्त्तनात् देव्या ईर्ष्यामानः ।

गोत्रस्खलनेनानुमिते यथा शिशुपालवधे—

"स्फुटमिदमभिचारमन्त्र एव प्रतियुवतेरभिधानमङ्गनानाम् ।
वरतनुरमुनोपहूय पत्या मृदुकुसुमेन यदाहताप्यमूर्च्छत् ॥"

अत्र पत्या सपत्नीनाम्ना आत्मन आह्वानेनैव मूर्च्छनात् नायिकाया ईर्ष्यामानः ।

श्रुते यथा तत्रैव—"तव कितव ! किमाहितैर्वृथा नः क्षितिरुहपल्लवपुष्पकर्णपूरैः ।
नतु जनविदितैर्भवद्व्यलीकैश्चिरपरिपूरितमेव कर्णयुग्मम् ॥"

अत्र पत्युरन्यप्रियासङ्गश्रवणात् नायिकाया ईर्ष्यामानः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२०६। तत्र प्रियवचः साम-भेदस्तत्सख्युपार्जनम्।
दानं व्याजेन भूषादेः पादयोः पतनं नतिः॥
सामादौ तु परिक्षीणे स्यादुपेक्षावधीरणम् (१)।
रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरम्॥ (म)

यथा—"नो चाटु श्रवणं कृतम्" इत्यादि (२) (१२४ पृष्ठे)। अत्र सामादयः पञ्च सूचिताः (य)। रसान्तरमूह्यम् (र)।

अथ प्रवासः।

२०७। प्रवासो भिन्नदेशित्वं (३) कार्य्याच्छापाच्च सम्भ्रमात्।
तत्राङ्गचेलमालिन्यमेकवेणीधरं शिरः॥
निश्वासोच्छ्वासरुदितभूमिपातादि जायते। (ल)

---

(भ) अथ कस्तावन्मानभङ्गोपाय इत्याह सामेति। साम, भेदः, दानम्, नतिः, उपेक्षा, रसान्तरम् अन्यरसावतारणञ्च इति षट् उपायाः। तथा च पतिः तस्य प्रणयिन्या मानस्य भङ्गाय इति उक्तान् षट् उपायान् क्रमात् क्रमशः पूर्वपूर्वस्य सफलत्वाभावे परपरानित्यर्थः कुर्य्यात्।

(म) स्वयमेव सामादीन् व्याचष्टे तत्रेति। तत्र तेषु सामादिषु मध्ये। प्रियवचः मानिनीं प्रति प्रीतिकरं वाक्यं साम। तस्या मानिन्याः सखीनाम् उपार्जनं स्वपक्षीकरणं भेदः। व्याजेन केनचिच्छलेन भूषादेरलङ्कारवसनादेः दानं मानिन्यै अर्पणमिति शेषः। मानिन्याः पादयोः पतनं नतिः। सामादौ सामादिचतुष्टये परिक्षीणे निष्फले तु सति, अवधीरणम् अवज्ञा तद्रूपा उपेक्षा स्यात्। तथा रभसः कापि त्वरा, त्रासो भयम्, हर्षं आनन्दः, आदिशब्दात् अनिष्टप्रदर्शनादिः, तस्मात् अनुष्ठितात् जातः कोपभ्रंशो मानभङ्गोपायः रसान्तरम् अन्यरसावतारणं स्यात्।

(य) यथेति। तत्र "नो चाटु श्रवणे कृतम्" इत्यनेनात्मनो मानभङ्गाय पत्युः साम सूचितम्। "न च दृशा हारोऽन्तिके वीक्षितः" इत्यनेन दानं सूचितम्। "कान्तस्य प्रियहेतवे निजसखीवाचोऽपि दूरीकृताः" इत्यनेन तत्सख्युपार्जनरूपो भेदः सूचितः। "पादान्ते विनिपत्य" इत्यनेन नतिः सूचिता। "गच्छन्" इत्यनेन च उपेक्षा सूचितेति द्रष्टव्यम्।

(र) रसान्तरमूह्यमिति। यथा मालविकाग्निमित्रे चतुर्थाङ्कशेषे वसुलक्ष्म्या वानरकृतत्रासवार्त्तयैव इरावत्या मानभङ्गः।

(ल) प्रवास इति। कार्य्यात् नायकनायिकयोरन्यतरस्य उभयोरेव वा कर्त्तव्यानुरोधात् शापात्

---

(१) अवधारणमिति क्वचित् पाठः। (२) नो चाटु श्रवणं कृतम् इति तु प्राक् पठितम्।

(३) भिन्नदेशत्वमिति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

किञ्च—(व)

२०८ । अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशताऽरुचिः ॥
अधृतिः स्यादनालम्बस्तन्मयोन्मादमूर्च्छनाः ।
मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह ॥ (श)

२०९ । असौष्ठवं मलापत्तिस्तापस्तु विरहज्वरः ।
अरुचिर्वस्तुवैराग्यं सर्वत्रारागिताऽधृतिः ॥
अनालम्बनता चापि शून्यता मनसः स्मृता ।
तन्मयं तत्प्रकाशो हि वाह्याभ्यन्तरतस्तथा ॥ (ष)

शेषं स्पष्टम् (स)। एकदेशतो यथा मम तातपादानाम्—(ह)

---

अभिसम्पातात् सम्भ्रमात् राजविप्लवादिनिमित्तकलरावशाच्च यत्र भिन्नदेशित्वं तयोः परस्परभिन्नदेशवासित्वं स तादृशो विप्रलम्भः प्रवासः। यत्रावस्थानकाले इच्छामात्रेणाभीष्टो न लभ्यते स एव भिन्नदेशः, तेन नायकनायिकयोः सन्निहितपरस्पर-भिन्नगृहादाववस्थानेऽपि प्रवासत्वापत्तिर्निरस्ता। अयमेव विरह इत्युच्यते। तत्र प्रवासे अङ्गानां हस्तपदादीनां चेलस्य वसनस्य च मालिन्यम्, शिरो मस्तकम् एकवेणीधरम्, निश्वासः, उच्छ्वासो हताशता, रुदितं रोदनम्, भूमौ पातः, आदिशब्दात् मन्दोत्कण्ठादिकञ्च जायते नायकनायिकयोर्यथासम्भवमिति शेषः। अमी चाङ्गमालिन्यादयोऽनुभावाः।

(व) कामदशात्वेन विजातीयानि अनुभावान्तराण्यभिधातुमाह किञ्चेति। अपि चेत्यर्थः। "मतान्तरमाह किञ्च" इति रामचरणोक्तन्तु न युक्तिसहम्, असौष्ठवादीनां परमतत्वे "असौष्ठवं मलापत्तिः" इत्यादिना मूलेनैव व्याख्यानासम्भवात् क्वापि परमतस्य मूलेन व्याख्यानादर्शनात्।

(श) अङ्गेष्विति। इह प्रवासे। तन्मयं तन्मयीभावः तेन उन्मादो मूर्च्छना मूर्च्छाश्च। अतश्च दशसंख्याया नाधिक्यं व्यक्तिभेदाद्बहुवचनम्। एतेन तन्मयमिति पृथगनुभावत्वेन मत्वा "दशेत्यत्र एकादशेति विज्ञेयम्। एवञ्च ज्ञेयेत्यत्र एकेति पाठः कल्पनीयः" इति रामचरणेन विह्वलतयोक्तं हेयम्। किञ्च तथात्वे "अङ्गासौष्ठवादीनामपि दशानाम्" इति वक्ष्यमाणवृत्तिग्रन्थः "दश कामदशा" इति प्रसिद्धिश्च नोपपद्यते।

(ष) असौष्ठवादीन्यस्पष्टपदानि व्याचष्टे असौष्ठवमिति। मलापत्तिः अङ्गानां संस्काराभावात् मृत्तिकादिमलप्राप्तिः असौष्ठवम्। पूर्वोक्तमङ्गमालिन्यन्तु विरहसन्तापेनाङ्गानां वैवर्ण्यमतो न पौनरुक्त्यम्। विरहज्वरो वियोगजनितसन्तापः। वस्तुनि पूर्वं मादृते विलासद्रव्ये वैराग्यं निस्पृहता अरुचिः। सर्वत्र स्नानभोजनादौ अरागिता निस्पृहता अधृतिः। इत्थञ्चारुच्यधृत्योर्नैकार्थत्वम्। मनसः शून्यता अनालम्बनता अनालम्बः स्मृता। वाह्ये वहिर्देशे अभ्यन्तरे चित्तमध्ये चेति वाह्याभ्यन्तरतः तस्य अभीष्टस्य प्रकाशो भावनावशाज्जातं तन्मयं तन्मयीभावः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"चिन्ताभिः स्तिमितं मनः करतले लीना कपोलस्थली
प्रत्यूषक्षणदेशपाण्डु वदनं श्वासैकखिन्नोऽधरः ।
अम्भःशीकरपद्मिनीकिशलयैर्नोपैति तापः शमं
कोऽस्याः प्रार्थितदुर्लभोऽस्ति सहते दीनां दशामीदृशीम् ॥" (च)

२१० । भावी भवन् भूत इति त्रिधा स्यात्तत्र कार्य्यजः ॥ (क)

कार्य्यजस्य बुद्धिपूर्वकत्वात् त्रैविध्यम् (ख) । तत्र भावी यथा मम ।

"यामः सुन्दरि ! याहि पान्थ ! दयिते ! शोकं वृथा मा कृथाः
शोकस्ते गमने कुतो मम ? ततो वाष्पं कथं मुञ्चसि ? ।
शीघ्रं न व्रजसीति मां गमयितुं कस्मादियं ते त्वरा ?
भूयानस्य सह त्वया जिगमिषोर्जीवस्य मे सम्भ्रमः ॥" (ग)

---

(ङ) शेषमिति । शेषम् अवशिष्टम् उन्मादमूर्च्छनामृतिरूपं पदत्रयं स्पष्टम्, अतो न मूले व्याख्यातमिति भावः ।

(छ) एकेति । एकदेशतः असौष्ठवादिदशविधकामदशासु मध्ये कतिपयानाम्, तापपाण्डुताऽनालम्बानामुदाहरणं यथेत्यर्थः । अन्येषामुदाहरणानि तूह्यानीति भावः ।

(च) चिन्ताभिरिति । विरहिण्या अवस्थामवलोक्य कञ्चित् प्रति तत्सख्या उक्तिरियम् । अस्या मनः चिन्ताभिः स्तिमितं निश्चलम् । अनेन अनालम्बः सूचितः । कपोलस्थली गण्डदेशः करतले लीना निभृतं स्थिता । वदनं प्रत्यूषस्य प्रभातकालस्य यः क्षणदाया रात्रेरीशः पतिश्चन्द्रस्तद्वत् पाण्डु । एतेन पाण्डुता उक्ता । अधरः श्वासेन एकं मुख्यमत्यन्तमित्यर्थः खिन्नः क्लान्तः । तापः शरीरसन्तापः अम्भसां जलानां शीकरा बिन्दवो येषु तादृशैः पद्मिनीकिशलयैर्नलिनीदलैरपि शमं शान्तिं नोपैति न लभते । अमुना तापोऽभिहितः । को जनः अस्याः प्रार्थितः सन् दुर्लभोऽस्ति यः ईदृशीं दीनां शोचनीयां दशां सहते ।

(क) भावीति । तत्र तेषु कार्य्यज-शापज सम्भ्रमजरूपेषु त्रिविधेषु प्रवासेषु मध्ये कार्य्यजः प्रवासः भावी उत्पत्स्यमानः, भवन् उत्पद्यमानः, भूत उत्पन्नश्चेति त्रिधा स्यात् । अत्र विरहप्रकाशकालापेक्षया भावित्वादिकं बोध्यम् ।

(ख) ननु शापज-सम्भ्रमजयोरपि प्रवासयोरतीतादिकालत्रयसम्बन्धसम्भवात् कथं केवलकार्य्यजस्य त्रैविध्यमभिधीयत इत्याह कार्य्यजस्येति । बुद्धिपूर्वकत्वात् इष्टसाधनताज्ञानप्रयोज्यतया कर्त्तुरिच्छानुसारित्वात् । एतदुक्तं भवति—कर्त्रा यद्यतीत एव कार्य्यमिष्टसाधनतया ज्ञातम्, तदा अतीत एव प्रवासः कृतः, वर्त्तमाने चेद्वर्त्तमान एव क्रियते, भविष्यति चेद्भविष्यत्येव करिष्यते च । शापज-सम्भ्रमजयोस्तु परव्यापाराधीनत्वात् केवलपरेच्छानुसारित्वेन तत्तत्कालसम्बन्धमात्रमेवेति । अतएव शापज-सम्भ्रमजयोः प्रवासयोरेकैकविधत्वमेवेति भावः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भवन् यथा—"प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं (१)
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित ! प्रियसुहृत् सार्थः किमु त्यज्यते॥" (घ)

भूतो यथा—"चिन्ताभिः स्तिमितम्" इत्यादि (१८८ पृष्ठे) (ङ)।

शापाद्यथा—"तां जानीयाः" इत्यादि (१२५ पृष्ठे) (च)।

---

(ग) याम इति। विदेशं गन्तुमिच्छोर्नायकस्य तद्विरहमसहिष्यमानाया नायिकायाश्च उक्तिप्रत्युक्तिरूपमिदं पद्यम्। हे सुन्दरि! वयं याम इति भविष्यत्सामीप्ये वर्त्तमाना। हे पान्थ! याहि। अत पान्थेति सम्बोधनेनात्मनि नायकस्य प्रेमाभावः सूचितः। हे दयिते! वृथा शोकं मा कृथाः न कुरुष्व। अचिरादेवाहमागमिष्यामीति भावः। ते तव गमने मम कुतः शोकः? ततस्तदा कथं वाष्पम् अस्रु मुञ्चसि? त्वं शीघ्रं न व्रजसि इति हेतोर्वाष्पं मुञ्चामीति शेषः। मां गमयितुं ते तव कस्मादियं त्वरा? त्वया सह जिगमिषोर्गन्तुमिच्छोरस्य मे मम जीवस्य जीवनस्य भूयान् अत्यन्तः सम्भ्रमस्त्वरा वर्त्तते। अतएव मम त्वां गमयितुमियं त्वरेति भावः।

अत्र नायिकाया विरहप्रकाशकेहशोक्तिकालापेक्षया भाविनि काले नायकस्य प्रवासः "यामः सुन्दरि!" इत्यनेन सूचितः।

(घ) प्रस्थानमिति। नायके विदेशं गच्छति स्वजीवनं प्रति नायिकाया उक्तिरियम्। प्रियतमे यातुं विदेशे गन्तुं निश्चितं निश्चयवृत्तिमत् कृतं चेतो येन तादृशे सति, वलयैः करकङ्कणैः प्रस्थानं कृतं गन्तुं यात्रा कृता। बहुदिनपूर्वावधि प्रियतमगमनालोचनेन विरहभावनया देहस्य कृशीभूतत्वात् करात् वलयभ्रंशः प्रवृत्त इति भावः। मम प्रियसखैर्विरहसहचरत्वाद्बन्धुभूतैः अस्रैर्नयनजलैः अजस्रं निरन्तरं गतं प्रस्थितम्। विरहभावनया प्रागेव पतितुं प्रवृत्तमिति भावः। धृत्या धैर्य्येण क्षणमपि न आसितम् अवस्थितम्। विरहशङ्कया प्रागेवाधीरास्मीत्याशयः। चित्तेन पुरः प्रियतमस्याग्रत एव गन्तुं व्यवसितम् उद्यतम्। प्रियतमावस्थानदेशे तस्य परमप्यवश्यगन्तव्यत्वादित्यभिप्रायः। इत्थञ्च समं युगपदेव सर्वे प्रस्थिताः कृतयात्राः। अतएव हे जीवित! जीवन! तव अवश्यं गन्तव्ये सति प्रियसुहृत् एकत्रावस्थानात् प्रियबन्धुभूतः सार्थः वलयादिसङ्गिवर्गः किमु कथं त्यज्यते। सङ्गिभिः सह गमने प्रयासाल्पत्वात् इदानीमेव तवापि गमनमुचितमिति भावः।

अत्र विरहप्रकाशप्रवासारम्भयोरेक एव वर्त्तमानकाल इति भवन् प्रवासः।

(ङ) भूत इति। "चिन्ताभिः स्तिमितं मनः" इत्यादौ विरहप्रकाशकालापेक्षया पूर्वमेव प्रवासस्योत्पन्नत्वाद्भूतः प्रवासः।

(च) शापजप्रवासमुदाहरति शापादिति। तामित्यादौ कुवेरशापाद्यक्षस्य प्रवासः।

---

(१) नतम् इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सम्भ्रमो दिव्यमानुषनिर्घातोत्पातादिजः। यथा—विक्रमोर्वश्यामुर्वशीपुरूरवसोः (छ)।

अत्र पूर्वरागोक्तानामभिलाषादीनामत्रोक्तानाञ्चाङ्गासौष्ठवादीनामपि दशानामुभयेषामपि उभयत्र सम्भवेऽपि चिरन्तनप्रसिद्ध्या विविच्य प्रतिपादनम् (ज)।

अथ करुणः (१)।

२११। यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये।
विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः॥ (झ)

यथा—कादम्बर्यां पुण्डरीकमहाश्वेतावृत्तान्ते (ञ)।

पुनरलभ्ये शरीरान्तरेण वा लभ्ये तु करुणाख्य एव रसः (ट)।

(छ) सम्भ्रमजं प्रवासमुदाहर्तुं सम्भ्रमपरिचयाय प्राक् तत्कारणानि निर्दिशति सम्भ्रम इति। दिव्यो देवताविद्युदादिः, मानुषो राजादिः, निर्घातो वायुताड़ितो वायुः स्वनामख्यातः, तेभ्य उत्पात उपद्रवः आदिशब्दाद्भूमिकम्पादिस्तस्माज्जातः सम्भ्रमस्त्वरेत्यर्थः। विक्रमोर्वशीत्रोटके हि पुरूरवसा सह काननविहारकाले उर्वशी नग्नपार्वतीसहचरशिवनियमप्रभावेण लतात्वं गता, तेन दिव्योत्पातजातसम्भ्रमात् उर्वशीपुरूरवसोर्भिन्नदेशित्वरूपः प्रवासः।

(ज) नन्वभिलाषादीनां पूर्वरागे अङ्गासौष्ठवादीनाञ्च प्रवासे नियमनस्य किं बीजम्, उभयत्रापि उभयेषां सम्भवादित्याह अत्रेति। दशानां दशसंख्यकानाम्। न च दशानां कामदशानामित्यर्थो वाच्यः उभयेषामिति पुंलिङ्गत्वानुपपत्तेः। तथा च उभयेषां कामक्रान्तभावानामित्यर्थः। उभयत्र पूर्वरागे प्रवासे च। चिरन्तनप्रसिद्ध्या प्राचीनालङ्कारिकप्रसिद्धिवशेन विविच्य पृथग्भावेन नियम्य।

(झ) यूनोरिति। युवा च युवतिश्च युवानौ तयोर्यूनोर्नायकनायिकयोरित्यर्थः, लोकान्तरं गतवति एकतरस्मिन् नायके नायिकाजने वा पुनर्लभ्ये जीवता जनेन पुनः प्राप्ये सति, एकस्तयोरेकतरो जीवितजनः यदा विमनायते शोकेन विषीदति तदा तस्य शोकमिश्रितरतिस्थायिभावः करुणविप्रलम्भाख्यः शृङ्गारो भवेत्। मरणानन्तरं पुनः प्राप्यविषयकशोकमिश्रितरतिः करुणविप्रलम्भ इत्यर्थः।

(ञ) उदाहरति यथेति। तत्र हि प्रथमं पुण्डरीको मृतः, नातिदूरे चासौ महाश्वेतया पुनः प्राप्तः। एवञ्च तत्र पुण्डरीकस्य मरणात् पुनर्जीवनप्राप्तौ ग्रन्थगतातिदूरत्वेऽपि उपाख्यानगतातिदूरत्वाभावात् "वर्षशतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः" इत्युक्तेन सह न विरोध इति बोध्यम्।

(ट) पुनर्लभ्ये इत्यस्य व्यावृत्तिमाह पुनरिति। करुणाख्य एव शुद्धकरुण एव, न पुनः करुणविप्रलम्भाख्यशृङ्गार इत्यर्थः। तत्र पुनः सङ्गमाशाया अभावेन शोकमात्रस्यैव स्थायिभावत्वादिति भावः।

(१) अथ करुणविप्रलम्भ इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

किञ्चात्राकाशसरस्वतोभाषानन्तरमेव शृङ्गारः, सङ्गमप्रत्याशया (१) रतेरुद्भवात् । प्रथमस्तु (२) करुण एवेत्यभियुक्ता मन्यन्ते (ठ)। यच्चात्र "सङ्गमप्रत्याशानन्तरमपि भवतो विप्रलम्भशृङ्गारस्य प्रवासाख्यो भेद एव" इति केचिदाहुः । तदन्ये मरणरूपविशेषसम्भवात् तद्भिन्नमपि (३) मन्यन्ते (ड)।

अथ सम्भोगः ।

२१२ । दर्शनस्पर्शनादीनि निषेवेते विलासिनौ ।
यत्रानुरक्तावन्योन्यं सम्भोगोऽयमुदाहृतः ॥ (ढ)

(ठ) प्राचीनमतमाह किञ्चेति । अत्र कादम्बर्यां पुण्डरीकमहाश्वेतावृत्तान्ते । आकाशसरस्वतीभाषानन्तरमेव "वत्से ! महाश्वेते ! न परित्याज्यास्त्वया प्राणाः, पुनरपि तवानेन सह भविष्यति समागमः" इत्यम् आकाशवर्त्तिनः पुरुषस्य वाक्यभाषणानन्तरमेव । सङ्गमप्रत्याशया पुण्डरीकेण सह पुनः सम्मेलनाशया । रतेरुद्भवात् महाश्वेताया इति शेषः । प्रथमो महाश्वेतायाः प्राथमिको भावः पुण्डरीकस्य मरणादारभ्य आकाशवाणीश्रवणपर्यन्तो महाश्वेताया भाव इत्यर्थः, करुण एव शोकमात्रस्थायिभावत्वात् शुद्धकरुण एव । अभियुक्ता प्राचीनतया मान्याः । अत्रेदमस्वरसवीजमवधेयम्—यथा उदासीनस्य मरणे उदासीनायाः शोकासम्भवात् तत्रापि प्रथमं महाश्वेताया रतिमूल एव शोकः आकाशवाणीश्रवणानन्तरञ्च पुनरेव रतिः इत्युभयत एव जायमानाभ्यां रतिभ्यां मध्यवर्त्तिनः शोकस्य अस्थायिप्रायीकृतत्वात्तन्निबन्धनः करुणः कुत्राप्यंशे नोपपद्यत इति । किञ्च पूर्वापरवृत्तान्ताभिज्ञानां सामाजिकानां चित्तेषु शोकमिश्रितरतिभावस्यैव स्थायितयाविर्भावात् सर्वांश एव तत्र करुणविप्रलम्भलक्षणयोगात् । शोकमिश्रितरतिस्थायिभावकत्वादेवास्य करुणविप्रलम्भ इति नाम । उत्तररामचरितेऽप्यनयैव रीत्या करुणविप्रलम्भः प्रधानरस इति बोध्यम् ।

(ड) मतान्तरद्वयमाह यच्चेति । अत्र पुण्डरीकमहाश्वेतावृत्तान्ते । सङ्गमप्रत्याशानन्तरमपि तादृशाकाशवाणीश्रवणेनेति शेषः । भवतो जायमानस्य । प्रवासाख्यो भेद एव न पुनः करुणविप्रलम्भ इत्यर्थः । नायकनायिकयोः परस्परभिन्नदेशावस्थानेन प्रवासलक्षणयोगादिति तेषामाशयः । तदन्ये तद्भिन्नाश्च केचित् । मरणरूपस्य विशेषस्य प्रवासावृत्तिधर्म्मस्य सम्भवात् पुण्डरीकमहाश्वेतावृत्तान्ते सत्त्वात् तद्भिन्नमपि प्रवासभिन्नमपि अतिरिक्तं कञ्चित् प्रकारमित्यर्थः । न पुनस्ते स्वाङ्गीकृतं करुणविप्रलम्भमपि तत्र मन्यन्त इति भावः । अनयोर्मतयोरपीदमस्वरसवीजम्, प्रवासे मरणधर्म्माभावात् पुण्डरीकमहाश्वेतावृत्तान्ते न प्रवासः ; पूर्वराग-मान-प्रवास-करुणात्मकचतुष्टयभिन्नस्य विप्रलम्भभेदस्य प्राचीनैरनङ्गीकारादतिरिक्तप्रकारोऽपि तत्र न सङ्गच्छत इति ।

(१) सङ्गमप्रत्याशायामिति पाठान्तरम् । (२) प्रथमन्तु, अयन्तु इति पाठभेदौ ।
(३) तद्भिन्नमेवेति इति क्वचित् पाठः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आदिशब्दादन्योन्याधरपानचुम्बनादयः।

यथा—"शून्यं वासगृहम्" इत्यादि (१८ पृष्ठे) (ण)।

२१३। सङ्ख्यातुमशक्यतया चुम्बनपरिरम्भणादिबहुभेदात्।

अयमेक एव धीरैः कथितः सम्भोगशृङ्गारः॥ (त)

२१४। तत्र स्यादृतुषट्कं चन्द्रादित्यौ तथोदयास्तमयः।

जलकेलि-वनविहार-प्रभात-मधुपान-यामिनीप्रभृतिः॥

अनुलेपनभूषाद्या वाच्यं शुचि मेध्यमन्यच्च। (थ)

तथा च भरतः—"यत् किञ्चिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तत् सर्वं शृङ्गारे उपयुज्यते" (१) इति (द)।

---

(ढ) दर्शनेति। अन्योन्य परस्परम् अनुरक्तौ विलासिनौ भोगसुखलालसौ स्त्रीपुंसौ यत्र रतौ सत्याम् अन्योन्यं दर्शनस्पर्शनादीनि निषेवेते अनुभवतः, अयं स सम्भोगः सम्भोगशृङ्गार उदाहृतः। अनुरक्तयोः प्रत्यक्षभोगानुभावको रतिभावः सम्भोगशृङ्गार इति निष्कर्षः। तत्र दर्शनस्पर्शनादीनीत्यनेन विप्रलम्भे नातिव्याप्तिः। पूर्वरागमानयोः कदाचिद्दर्शनादौ सत्यपि तस्योत्कण्ठाव्याहततया वास्तविकभोगरूपत्वा-भावात्तत्र नातिप्रसङ्गः। अनुरक्तावित्यनेन उदासीनयोः स्त्रीपुंसयोः परस्परदर्शनादौ नातिव्याप्तिः। अन्योन्य-मित्यनेन च एकस्यानुरागस्थलीयशृङ्गाराभासे नातिव्याप्तिः।

(ण) उदाहरणमाह यथेति। "शून्यं वासगृहम्" इत्यादौ चुम्बनात्मकप्रत्यक्षभोगरूपानुभावशालित्वात् नायकनायिकयो रतिभावः सामाजिकेषु सम्भोगशृङ्गाररूपतां भजते।

(त) नन्वयं कतिविध इत्याह संख्यातुमिति। चुम्बनपरिरम्भणादीनामनुभावानां बहुभेदात् असंख्य-प्रकारत्वात् संख्यातुं तैर्भेदैरेव सम्भोगस्य भेदानां निर्द्देष्टुम् अशक्यतया हेतुना धीरैरयं सम्भोगशृङ्गार एक एकविध एव कथितः।

(थ) अथास्योद्दीपनविभावानाह तत्रेति। तत्र सम्भोगशृङ्गारे। ऋतूनां वसन्तादीनां षट्कम्, चन्द्रादित्यौ, तथा तयोः, उदयेन युक्तः अस्तमय इत्युदयास्तमयः, मध्यपदलोपी समासः। तथा जलकेलिः, वनविहारः, प्रभातम्, मधुनो मद्यस्य पानम्, यामिनी रात्रिः, प्रभृतिशब्दात् अट्टालिकादिश्च उद्दीपनविभावः स्यादित्यर्थः। तथा अनुलेपनं चन्दनादि, भूषा अलङ्कारः, आद्यशब्दात् वसनादयश्च उद्दीपनविभावाः स्युः। तथा शुचि निर्म्मलम्, मेध्यं पवित्रम्, अन्यत् पद्मादिकञ्च वाच्यं सम्भोगशृङ्गारस्य उद्दीपकतया वर्णनीयम्।

(द) ननु शुचिमेध्ययोः सम्भोगोद्दीपने कथं योग्यतेत्याह तथा चेति। शुचि निर्म्मलं दर्पणादि, मेध्यं पवित्रं चन्दनादि, उज्ज्वलं भूषणादि, दर्शनीयं सुन्दरम् आलेख्यादि। उपयुज्यते उद्दीपकत्वेन योग्यं

---

(१) शृङ्गारेणोपमीयते उपयुज्यते, शृङ्गारेणोपमीयते इति पाठभेदौ।



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

किञ्च—(ध)

२१५ । कथितश्चतुर्विधोऽसावानन्तर्य्यात्तु पूर्वरागादेः ॥ (न)

यदुक्तम्—"न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते ।
कषायिते हि वस्त्रादौ भूयान् रागो विवर्द्धते ॥" (प)

तत्र पूर्वरागानन्तरं सम्भोगो यथा—कुमारसम्भवे पार्वतीपरमेश्वरयोः (फ)। प्रवासानन्तरं सम्भोगो यथा मम तातपादानाम्—

"क्षेमं ते ननु पक्ष्मलाक्षि ! किमस्त्रं क्खेमं मदङ्गं दिढ़ं
एतादृक् कृशता कुतः ? तुह पुणो पुट्टं सरीरं जदो ।
केनाहं पृथुलः प्रिये ! पणइणीदेहस्स सम्मीलना-
त्वत्तः सुभ्रु ! न कापि मे, जइ इदं क्खेमं कुदो पुच्छसि ? ॥" (ब)

भवति । शुच्यादिपदार्थानां शृङ्गारोद्दीपनयोग्यतायां प्रत्यक्षसाक्षिकत्वान्महर्षिभरतेनाप्युक्ततया मयाप्युक्तमित्याशयः ।

(ध) ननु पूर्वरागानन्तर्य्यादिना सम्भोगस्य चतुर्विधत्वसम्भवेऽपि कथमेकविधत्वमङ्गीक्रियते इत्यपेक्षायामिष्टापत्तिमाह किञ्चेति ।

(न) कथित इति । असौ सम्भोगः पूर्वरागादेरानन्तर्य्यात्तु चतुर्विधो मयापि कथित एव स्यादित्यन्वयः । तथा च पूर्वरागानन्तरवर्त्ती, मानानन्तरवर्त्ती, प्रवासानन्तरवर्त्ती, करुणविप्रलम्भानन्तरवर्त्ती चेति चतुर्विधः सम्भोगशृङ्गारः । तत्तदनन्तरवर्त्तित्वे तु सम्भोगस्य पुष्टिरेव स्यादिति तच्चतुर्विधत्वे ममापीष्टा पत्तिरिति भावः ।

(प) अत्र प्राचीनसंवादमाह यदुक्तमिति । विप्रलम्भेन विप्रलम्भशृङ्गारसम्पर्केण विना सम्भोगः शृङ्गारः पुष्टिं न अश्नुते प्राप्नोति । हि तथाहि । वस्त्रादौ कषायिते कषायेण रञ्जिते रागो भूयान् सन् विवर्द्धते । एवञ्च विप्रलम्भसम्पर्काभावे सम्भोगस्य तादृशी पुष्टिर्न भवतीति सूचितम् ।

(फ) तत्रेति । कुमारसम्भवे अष्टमसर्गे पार्वतीपरमेश्वरयोः सम्भोगो द्रष्टव्यः ।

(ब) क्षेममिति । विदेशादागतस्य नायकस्य संस्कृतेन गृहस्थिताया नायिकायाश्च प्राकृतेन उक्तिप्रत्युक्तिरूपमिदं पद्यम् । हे पक्ष्मलाक्षि ! सुन्दरलोमविशिष्टनयने ! ते तव क्षेमं मङ्गलं ननु किम् ? । "कृशकं क्षेमं मदङ्गं दृढम्" इत्यनुवादः । मदङ्गं यत् दृढमत्यन्तं कृशकं जातं तदेव क्षेमम् । कुतस्तव एतादृक् कृशता ? । "तव पुनः पुष्टं शरीरं यतः" इत्यनुवादः । यतस्तव शरीरं पुष्टम्, अतएव मम कृशता जातेत्यर्थः । हे प्रिये ! अहं केन कारणेन पृथुलः स्थूलः अस्मीति शेषः । "प्रणयिनीदेहस्य सम्मीलनात्" इत्यनुवादः । तत्र प्रवास एव अन्यस्याः प्रियाया देहस्य संयोगात् त्वं पृथुलोऽसीत्यर्थः । हे सुभ्रु ! त्वत्तः सकाशात् त्वां विनेत्यर्थः कापि मे मम न प्रणयिन्यस्तीति शेषः । "यदि इदं क्षेमं कुतः पृच्छसि" इत्यनुवादः । इदं यदि अहमेव केवलं यदि तव प्रणयिनीत्यर्थः, तदा कुतः कथं क्षेमं पृच्छसि, प्रणयिनो विरहे प्रणयिन्याः क्षेमाभावस्य सर्वजनविदिततया तव तत्प्रश्न एव नोपपद्यत इति भावः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवमन्यत्राप्यूह्यम् (भ)।

अथ हासः (१)।

२१६। विकृताकारवाग्वेशचेष्टादेः कुहकाद्भवेत् (२)।
हासो (३) हास्यस्थायिभावः श्वेतः प्रमथदैवतः॥
विकृताकारवाक्चेष्टं यमालोक्य हसेज्जनः।
तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम्॥
अनुभावोऽक्षिसङ्कोच-वदनस्मेरतादिकः (४)।
निद्रालस्यावहित्थाद्या अत्र स्युर्व्यभिचारिणः॥ (म)

२१७। ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च।
नीचानामपहसितं तथातिहसितञ्च षड्भेदाः॥ (य)

---

(भ) एवमिति। अन्यत्र मानानन्तरसम्भोगे करुणविप्रलम्भानन्तरसम्भोगे च एवमुदाहरणम् ऊह्यमित्यर्थः। तत्र मानानन्तरं सम्भोगो यथा माघकाव्यनवमे—

"सुदृशः सरसव्यलीकतप्तः तरसा श्लिष्टवतः सयौवनोष्मा।
कथमप्यभवत् स्मरानलोष्णः स्तनभारो न नखम्पचः प्रियस्य॥"

करुणविप्रलम्भानन्तरं सम्भोगो यथा—कादम्बरीपराद्धे कादम्बरीचन्द्रापीड़योर्महाश्वेतापुण्डरीकयोश्च।

(म) विकृतेति। विकृतः स्वाभाविकविपरीतः आकारः, वाक्, वेशः, चेष्टा हस्तादिभङ्गी, आदिशब्दात् चिह्नादिश्च यस्य तादृशात् कुहकात् कौतुककराज्जनात्। इदञ्च तादृशाकारादिप्रतिपादककाव्यस्याप्युपलक्षणं बोध्यम्। हासो हास्यरसो भवेत्। स च, हास्यं प्रागुक्तलक्षणो हासः स्थायिभावो यस्य स तादृशः। अतएव श्वेतः शुभ्रवर्णः। "धवलता वर्ण्यते हासकीर्त्योः" इति वक्ष्यमाणकविसमयात्। प्रमथः शिवानुचरो दैवतम् अधिष्ठात्री देवता यस्य सः, प्रमथगणस्य हास्यकौतुकनिरतत्वात्। विकृता आकारवाक्चेष्टा यस्य तादृशं यं पदार्थम् आलोक्य जनो हसेत्, अत्र हास्यरसे तत् आलम्बनम् आलम्बनविभावं प्राहुः। अत्र "य आधारस्तदधिकरणम्" इत्यादिवत् तदिति प्रकृतस्यमानलिङ्गभागित्वान्नपुंसकम्। तस्य पदार्थस्य चेष्टा विकृताकारवाग्भङ्गीकरणादिरूपा उद्दीपनम् उद्दीपनविभावो मतम्। अक्षिसङ्कोचः वदनस्मेरता आदिशब्दात् मुखावरणादिश्च अनुभावः। निद्रा आलस्यम्, अवहित्था आद्यशब्दात् श्रमादयश्च अत्र हास्यरसे व्यभिचारिणो भावाः स्युः।

---

(१) हास्य इति पाठान्तरम्। (२) कुतुकाद्भवेदित्यपि पाठः। (३) हास्य इति पाठभेदः।

(४) स्मेरतादय इति क्वचित् पाठः।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२१८। ईषद्विकासिनयनं स्मितं स्यात् स्पन्दिताधरम् ।
किञ्चिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ॥
मधुरस्वरं विहसितं सांसशिरःकम्पमवहसितम् ।
अपहसितं सास्राक्षं विक्षिप्ताङ्गञ्च (१) भवत्यतिहसितम् ॥ (र)

यथा मम ।

"गुरोर्गिरः पञ्च दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयञ्च ।
अमी समाघ्राय च तर्कवादान् समागताः कुक्कुटमिश्रपादाः ॥" (ल)

अस्य नटकमेलकप्रभृतिषु परिपोषो द्रष्टव्यः (व) ।

(य) षथ प्रकृतिभेदेन हास्यभेदानाह ज्येष्ठानामिति । ज्येष्ठानाम् उत्तमप्रकृतीनां जनानां स्मित हसितञ्च ने स्याताम् । तदधिकहास्ये सभ्यताभङ्गभयादिति भावः । मध्यानां जनानां विहसितम् अवहसितञ्च ते स्याताम् । तयोर्मध्यमहास्यत्वेन मध्यप्रकृतीनामेव सम्भवादित्यभिप्रायः । नीचानाम् अधम प्रकृतीनां जनानाम् अपहसितं तथा अतिहसितञ्च स्यात् । अतिरिक्तहास्ये नासभ्यताप्रतीतावपि तेषां तत्र भयाभावादित्याशयः । इत्थं हास्यस्य षड्भेदाः प्रकाराः स्युः ।

(र) स्मितादीन् लक्षयति ईषदिति । तत्र तेषु हास्येषु मध्ये ईषद्विकासिनी अल्पमात्रविस्फारिते नयने यस्मिन् तत्, तथा ईषत्स्पन्दितः अधरो यस्मिन् तत् तादृशं हास्यं स्मितं स्यात् । किञ्चिल्लक्ष्या ईषद्दृश्या द्विजा दन्ता यस्मिन् तत् तादृशं हास्यं बुधैः हसितं कथितम् । मधुरः सुश्राव्यः स्वरो यस्मिन् तत् तादृशं हास्यं विहसितम् । अंसयोः स्कन्धयोः शिरसो मस्तकस्य च कम्पेन सहेति तत्तथोक्तं हास्यम् अवहसितम् । अस्रे अश्रुयुक्ते अक्षिणी यत्र तत् सास्राक्षं हास्यम् अपहसितम् । तथा विक्षिप्तानि सञ्चालितानि अङ्गानि यस्मिन् तत् तथोक्तं हास्यञ्च अतिहसितं भवति ।

(ल) गुरोरिति । कश्चित् कुक्कुटवाकुमागतमवलोक्य कस्यचित् शास्त्रालोचननिरतसुहृत्सभायां सकौतुकोक्तिरियम् । अमी कुक्कुटमिश्रपादाः पक्षिविशेषरूपत्राह्मणश्रेष्ठचरणाः । सोल्लुण्ठनोक्तिरियम् । पञ्च दिनानि यावत् पञ्चभिरेव दिनैरित्यर्थः, गुरोर्मीमांसकविशेषस्य गिरो वाक्यानि तत्प्रणीतपूर्वमीमांसा-ग्रन्थान् अधीत्य, दिनत्रयं यावच्च वेदान्तशास्त्राणि उत्तरमीमांसाग्रन्थान् अधीत्य, तर्कवादान् नव्यन्यायादीनि तर्कशास्त्राणि समाघ्राय च समागताः । अतोऽस्मै प्रधानोपाध्याययोग्यमासनं दातव्यमिति वक्तुराशयः ।

अत्र भङ्गीविशेषेण वक्ता आलम्बनविभावः, तस्य भङ्गी ईदृशं वाक्यञ्च उद्दीपनविभावः, वक्तुरक्षि-सङ्कोचादिरनुभावः आक्षेपलभ्यः, तथैव हर्षादिर्व्यभिचारिभावः, हासश्च स्थायिभावः—एते सभ्येषु हास्य-रसरूपतां भजन्ते ।

(व) अस्येति । अस्य हास्यरसस्य । प्रभृतिशब्दात् हास्यार्णवादिषु च । परिपोषो विस्तारः ।

(१) क्वचित् चकारोऽयं नास्ति ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र च (अ) ।

२१९ । यस्य हासः स चेत् क्वापि साक्षान्नैव निबध्यते ।
तथाप्येष विभावादिः सामर्थ्यादुपलभ्यते (१) ॥
अभेदेन विभावादिः साधारण्यात् प्रतीयते ।
सामाजिकैस्ततो हास्यरसोऽयमनुभूयते ॥ (ष)

एवमन्येष्वपि रसेषु बोद्धव्यम् (स) ।

अथ करुणः ।

२२० । इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् ।
धीरैः कपोतवर्णोऽयं कथितो यमदैवतः ॥
शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम् (२) ।
तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः ॥
अनुभावा दैवनिन्दा-भूपातक्रन्दितादयः ।
वैवर्ण्योच्छ्वासनिश्वास-स्तम्भप्रलपनानि च ॥

(अ) ननु "गुरोर्गिरः" इत्याद्युदाहृतश्लोके आलम्बनत्वेनाभिमतस्य वक्तुः उद्दीपनत्वेनाभिमतानां तदीयभङ्गीनाम् अनुभावत्वेनाभिमतानां तदीयाक्षिसङ्कोचादीनाञ्च शब्देनानुपात्तत्वात् कथममीषां प्रतीतिरित्याह अत्र चेति । अत्र हास्यरसे । किञ्चेति चार्थः ।

(ष) यस्येति । यस्य हासः यदालम्बनको हास इत्यर्थः स चेत् क्वापि कस्मिन्नपि वाक्ये साक्षात् वाचकपदेन नैव निबध्यते नैवोच्यते, तथापि एष स विभावादिरालम्बनविभावादिर्गणः आदिपदेन अनुभाव-सञ्चारिणोर्ग्रहणम्, सामर्थ्यात् "आलम्बनादिमन्तरेणायं हासो नोपपद्यते" इत्यनुपपत्तिज्ञानात् उपलभ्यते प्रतीयते सामाजिकैरिति वक्ष्यमाणेनान्वयः । ततः सामाजिकैः साधारण्यात् पूर्वोक्तसाधारणीकृतिनामकव्यापार-सामर्थ्यात् विभावादिः स आलम्बनादिः अभेदेन आत्माभिन्नत्वेन प्रतीयते ; ततश्च अयं हास्यरसः अनुभूयते । अयमर्थः पूर्वमुक्तोऽपि व्यवहितत्वादिह पुनः स्मार्य्यत इत्यपौनरुक्त्यम् ।

(स) एवमिति । बोधप्रकारस्तु "व्यापारोऽस्ति विभावादेः" इत्यादौ "सद्भावश्चेद्विभावादेः" इत्यादौ च प्रागेव दर्शितः ।

(ह) इष्टेति । इष्टानां पुत्रधनादीनां नाशात् अनिष्टानां महोत्पातादीनाम् आप्तेः प्राप्तेश्च

(१) विभावादेः सामर्थ्यात्, विभावादिसामर्थ्यात् इति पाठभेदौ । (२) मूर्त्तिरिति क्वचित् पाठः ।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**निर्वेदमोहापस्मार-व्याधिग्लानिस्मृतिश्रमाः ।**
**विषादजड़तोन्माद-चिन्ताद्या व्यभिचारिणः ॥ (ङ)**

शोच्यं विनष्टबन्धुप्रभृति । यथा मम राघवविलासे—(१)

"विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः ।
अनयोर्घटना विधेः स्फुटं ननु खड्गेन शिरीषकर्त्तनम् ॥" (च)

अत्र हि रामवनवासजनितशोकार्त्तस्य दशरथस्य दैवनिन्दा । एवं बन्धुवियोग-विभवनाशादावप्युदाहार्य्यम् (क) । परिपोषस्तु महाभारते स्त्रीपर्व्वणि द्रष्टव्यः ।

---

अन्यतरस्मात् कारणात् करुणाख्यो रसो भवेत् । धीरैरयं करुणरसः कपीतवर्णो गृहपारावतवर्णो मलिनवर्ण इति यावत् । शोकस्यायिभावकत्वात् शोकस्य च पापजन्यत्वात् पापस्य च "मालिन्यं व्योम्नि पापे" इति कविसमयेन मलिनत्वात् यमदैवतत्वाच्च इत्याशयः । यमो दैवतं देवता अस्येति यमदैवतश्च कथितः । शोकस्य यमजन्यत्वादित्यभिप्रायः । अत्र करुणरसे शोकः स्थायिभावः स्यात् । शोच्यं शोकविषयीभूतं नष्ट-पुत्रधनादिकं वस्तु आलम्बनं मतम् । तस्य नष्टपुत्रधनादेः दाहस्थितायां दहनम् आदिशब्दात् अपहरणादिका च अवस्था उद्दीपनम् उद्दीपनविभावः । दैवनिन्दा भूपातः क्रन्दितम् आदिशब्दात् दुःखबोधक-भाषणादयश्च वैवर्ण्योच्छ्वासनिश्वासस्तम्भप्रलपनानि च अनुभावाः । आद्यपदेन मरणादयश्च व्यभिचारिणः स्युः ।

(च) विपिन इति । वनगमनोद्यतं रामं प्रति दशरथस्योक्तिरियम् । हे वत्स ! विपिने महारण्ये तव जटानिबन्धनं मुनिव्रताचरणाय जटाधारणं क्व, इदं मनोहरं सुकुमारं वपुः शरीरञ्च क्व । अनेन वपुषा तादृशकष्टकरणं नितरामसम्भवमेवेति भावः । विधेर्विधातुः । कर्त्तरि षष्ठी । अनयोर्जटाबन्धन-सुकुमारवपुषोर्घटना एकत्र सृष्टिः स्फुटं स्पष्टं ननु निश्चितं खड्गेन शिरीषस्य अतिकोमलकुसुमविशेषस्य कर्त्तनं च्छेदनम् । शिरीषे खड्गप्रहार इव ईदृशे वपुषि मुनिव्रताचरणव्यवस्था अतीवदुःसहेति विधातु-रप्यतीवाविवेकित्वमिति भावः ।

अत्र राम आलम्बनविभावः, तस्य वनगमनोद्यम उद्दीपनविभावः आक्षेपलभ्यः, शोकः स्थायिभावः, इयं दैवनिन्दा अनुभावः, ग्लानिविषादाद्या व्यभिचारिभावाश्च आक्षेपलभ्याः ।

(क) एवमिति । आदिशब्दात् अनिष्टप्राप्तेर्ग्रहणम् । तत्र बन्धुवियोगे यथा रघुवंशे—

"स्रगियं यदि जीवितापहा, हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेत्, अमृतं वा विषमीश्वरेच्छया ॥"

विभवनाशे यथा मत्पितामहकाशीचन्द्रवाचस्पतिपादानाम्—

"निष्पन्नमन्नं विविधैरुपायैर्गव्यं न लभ्यं मनसापि सत्यम् ।
सूपोऽपि पूपायत एव नित्यं चिन्नापि पद्मामृतवद्विभाति ॥"

---

(१) राघवविलापे इत्यपि पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अस्य करुणविप्रलम्भाद्भेदमाह—(ख)

२२१ । शोकस्थायितया भिन्नो विप्रलम्भादयं रसः ।
विप्रलम्भे रतिः स्थायी पुनः सम्भोगहेतुकः ॥ (ग)

अथ रौद्रः ।

२२२ । रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः ।
आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम् ॥
मुष्टिप्रहारपतन-विकृतच्छेदावदारणैश्चैव ।
संग्रामसम्भ्रमाद्यैरस्योद्दीप्तिर्भवेत् प्रौढ़ा ॥
भ्रूविभङ्गोष्ठनिर्दंश-बाहुस्फोटनतर्जनाः ।
आत्मावदानकथनमायुधोत्क्षेपणानि च ॥
अनुभावास्तथाक्षेप-क्रूरसन्दर्शनादयः ।
उग्रतावेगरोमाञ्च-स्वेदवेपथवो मदः ॥
मोहामर्षादयस्तत्र (१) भावाः स्युर्व्यभिचारिणः । (घ)

---

अनिष्टप्राप्तौ यथा मम वङ्गीयप्रतापनाटके—

"मातः ! शङ्करवल्लभे ! त्वमसि यन्नित्यं सतीनां गतिः
मुग्धां शङ्करवल्लभामतिसतीं श्रीशङ्करध्यायिनीम् ।
कल्याणीं ननु रक्ष रक्ष चपलं कल्याणि ! बालाबलां
स्वर्गस्येव विधर्म्मिभिर्दितिसुतैरापद्यमानां श्रियम् ॥"

(ख) ननु करुणविप्रलम्भशृङ्गारेऽपि शोकस्य सत्त्वात् तत्रास्यातिव्याप्तिरित्याह अस्येति ।

(ग) शोकेति । अयं करुणो रसः शोकस्थायितया केवलशोकस्थायिभावकतया हेतुना विप्रलम्भात् करुणविप्रलम्भशृङ्गारात् भिन्नः । ननु करुणविप्रलम्भेऽपि स्थायिरूपेणैव शोकोऽस्तीत्याह विप्रलम्भ इति । विप्रलम्भे करुणविप्रलम्भशृङ्गारे पुनः सम्भोगस्य हेतुको हेतुभूतः । स्वार्थे कप्रत्ययः । रतिरनुरागः, स्थायी स्थायिभावः, शोकस्त्वप्रधानभावेन केवलः सहचरः, इह तु शोक एव प्रधानः रतिस्तु नास्त्येवेति भेद इत्याशयः ।

(घ) रौद्र इति । रौद्रो रौद्ररसः, क्रोधः प्रागुक्तलक्षणः स्थायी भावो यस्य सः । रक्तो लोहितवर्णः, क्रोधस्य रजोगुणजन्यत्वात् रजोगुणस्य च लोहितवर्णत्वात् । "काम एष क्रोध एष रजोगुणसमुद्भवः" इति

---

(१) धर्म्मदानयुद्धैरिति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्य्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥" (ङ)

अस्य युद्धवीराद्भेदमाह—(च)

२२३ । रक्तास्यनेत्रता चात्र भेदिनी युद्धवीरतः ॥ (छ)

---

गीतोक्तेः, "अजामेकां लोहितशुक्लकृष्णाम्" इति श्रुतेश्चेति भावः । रुद्रो हरः अधिदैवतम् अधिष्ठात्री देवता अस्येति रुद्राधिदैवतः क्रोधस्य संहारकारणतया जगत्संहारिणो रुद्रस्यैव तदधिदैवतत्वौचित्यादित्याशयः । तत्र रौद्ररसे अरिः शत्रुः आलम्बनम् आलम्बनविभावः, तस्य अरेः चेष्टा क्रोधनिबन्धना क्रिया उद्दीपनम् उद्दीपनविभावः । अरेश्चेष्टाविशेषे उद्दीप्तिविशेषं दर्शयति मुष्टीति । मुष्टिप्रहारः इदन्तु देहहारकप्रहार-मात्रोपलक्षणम् । पतनमाक्रमणम्, विकृतं विरुद्धकार्य्यकरणम्, छेदस्तरवारादिना स्वसैन्यादेश्छेदनम्, अवदारणं शूलादिना स्वसैन्यादेर्विदारणम् । तथा संग्रामसम्भ्रमेण समराय त्वरया, आद्यशब्दात् शिविर-विध्वंसादिभिश्च अस्य रौद्ररसस्य प्रौढ़ा महती उद्दीप्तिर्भवेत् । अतएव मुष्टिप्रहारादीनि भेदनीत्यादिभ्यो विशेषोद्दीपनानीति भावः । भ्रूविभङ्गो भ्रुकुटिकरणम्, ओष्ठनिर्दंशः अधरदंशनम्, बाहुस्फोटनं बाहा-स्फालनम्, तर्जना भयप्रदर्शनवाक्यता: । तथा आत्मावदानकथनं स्वकृतकार्य्याणामुत्कीर्त्तनम्, आयुधोत्-क्षेपणानि अस्त्रनिक्षेपाः, बहुवचनादस्त्रनिक्षेपादेशादयश्च, तथा आक्षेपो निन्दा, क्रूरसन्दर्शनम् उग्रदृष्टिः, आदि-शब्दात् स्वसैन्योत्तेजनादयश्च अनुभावाः । अत्र रौद्ररसे, उग्रतादयः प्रागुक्तलक्षणाः आदिशब्दात् गर्वादयश्च व्यभिचारिणो भावाः स्युः ।

(ङ) कृतमिति । वेणीसंहारनाटके धृष्टद्युम्नेन निहतं पितरं द्रोणमाकर्ण्य दुर्य्योधनान्तिके अश्वत्थाम्न उक्तिरियम् । मनुजपशुभिर्धर्म्माधर्म्मज्ञानहीनत्वात् पशुतुल्यैरेव मनुष्यैः निर्म्मर्य्यादैर्गुरुत्वमर्य्यादाया अपि निरपेक्षैः उदायुधैरुद्यतास्त्रैः यैर्भवद्भिः इदं गुरुपातकं प्रायोपविष्टब्रह्महत्यारूपं महापातकम्, कृतं धृष्टद्युम्नेन अनुमतं पाञ्चालसैन्यादिना दृष्टं वा युष्माभिः, नरकरिपुणा नरकासुरघातिना कृष्णेन सार्द्धं सभीमकिरीटिनां भीमार्जुनसहितानां तेषां सर्वेषामेव भवताम् असृङ्मेदोमांसैः अयमहं दिशां सर्वदिगव-स्थितशृगालादिप्राणिनां बलिं खाद्योपहारं करोमि । अत्र उदायुधैः सद्भिरेव दुर्य्योधनादिभिर्दृष्टत्वात् किन्तु धृष्टद्युम्नस्य अनिवारितत्वात् सापराधत्वेन तान् प्रत्यपि ईदृशोक्तिरिति बोध्यम् ।

अत्र धृष्टद्युम्नादय आलम्बनविभावाः, तत्कृतपितृहत्यादय उद्दीपनविभावाः, एतदुक्तिरूपं तर्जनमनुभावः, आक्षेपलभ्या उग्रतावेगादयश्च व्यभिचारिभावाः ।

(च) नन्वत्रैव युद्धवीरेऽपि शत्रुरेवालम्बनविभाव इत्यनयोरैक्यापत्तिरित्याह अस्येति ।

(छ) रक्तेति । किञ्चेति चार्थः । अत्र रौद्ररसे, रक्ते रक्तवर्णे आस्यनेत्रे मुखनयने यस्य स तादृशः पुरुषस्तस्य भावः सा रक्तास्यनेत्रताजनकः क्रोध इत्यर्थः युद्धवीरतो भेदिनी भेदबुद्धिजनिका । तथा च उत्साहमात्रस्थितिपर्य्यन्तो युद्धवीरः तत्सहभावेन क्रोधाविर्भावे तु रौद्र एवेत्याशयः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ वीरः ।

२२४ । उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः ।
महेन्द्रदैवतो हेम-वर्णोऽयं समुदाहृतः ॥
आलम्बनविभावास्तु विजेतव्यादयो मताः ।
विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः ॥
अनुभावास्तु तत्र स्युः सहायान्वेषणादयः ।
सञ्चारिणस्तु धृति-मति-गर्व-स्मृति-तर्क-रोमाञ्चाः ।
स च दान-धर्म्म-युद्धै-(१) र्दयया च समन्वितश्चतुर्द्धा स्यात् ॥(ज)

स च वीरो दानवीरो धर्म्मवीरो दयावीरो युद्धवीरश्चेति चतुर्विधः ।

तत्र दानवीरो यथा परशुरामः—"त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याज-दानावधिः" इति (झ) । अत्र परशुरामस्य त्यागे उत्साहः स्थायी भावः,

---

(ज) उत्तमेति । उत्तम प्रकृतिः रसान्तरादुत्कृष्टः स्वभावः अथवा उत्तमा प्रकृतिराश्रयजनो यस्य सः उत्कृष्टजननिष्ठ इत्यर्थः वीरो रसः, उत्साहः प्रागुक्तलक्षणः स्थायी भावो यस्य सः । महेन्द्रो देवराजः दैवतम् अधिष्ठात्री देवता अस्येति महेन्द्रदैवतः, महेन्द्रस्य सर्ववीराधीश्वरत्वादिति भावः । अतएवायं वीरो रसः हेमवर्णः समुदाहृतः, महेन्द्रस्यापि हेमवर्णत्वादित्यभिप्रायः । विजेतव्यादय इत्यादिशब्दात् सम्प्रदान-पात्र-धर्म्म-दयापात्राणि गृह्यन्ते । तथा च विजेतव्यादयस्तु पदार्था आलम्बनविभावा मताः । तत्र युद्ध-वीरे विजेतव्यः शत्रुः, दानवीरे सम्प्रदानब्राह्मणादिः, धर्म्मवीरे धर्म्मः, दयावीरे दुर्गतादिरालम्बनविभाव इत्यर्थः । विजेतव्यादीनां शत्रुप्रभृतीनां चेष्टाद्या अपकारकरणादिक्रिया आद्यशब्दात् सत्त्वगुणादयो धर्म्मस्य स्वर्ग-जनकतादिश्रुतयश्च तस्य वीररसस्य उद्दीपनरूपिण उद्दीपनविभावाः । तत्र वीररसे सहायान्वेषणादयः, इत्यादि-शब्दात् युद्धवीरे सहायान्वेषणभेदप्रयोगादयः, दानवीरे त्यागधनसंग्रहादयः, धर्म्मवीरे यागानुष्ठानादयः, दयावीरे च आश्वासनवाक्यादयः अनुभावाः स्युः । धृत्यादयस्तु सञ्चारिणो व्यभिचारिणो भावाः स्युः । तत्र रोमाञ्चो रोमाञ्चजनको हर्ष इति बोध्यम्, रोमाञ्चस्य व्यभिचारिगणे अगणितत्वात् । किञ्च स वीरो रसः दान-धर्म्म-युद्धैस्तत्तन्नामकैस्त्रिभिर्भेदैः दयया तन्नामकेन च भेदेन समन्वितः सन् चतुर्द्धा चतुष्प्रकारः स्यात् ।

(झ) उदाहरतीत्तत्रेति । तत्र तेषु चतुर्षु भेदेषु मध्ये दानवीरो दानवीररसघटकदानोत्-साहाश्रयः । एवं वक्ष्यमाणेष्वपि धर्म्मवीर-युद्धवीर-दयावीरशब्देषु बोद्धव्यम् ।

---

(१) धर्म्म-दान-युद्धैरिति पाठान्तरम् ।



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सम्प्रदानभूतैर्ब्राह्मणैरालम्बनविभावैः सत्त्वाध्यवसायादिभिश्चोद्दीपनविभावै-र्विभावितः सर्वस्वत्यागादिभिरनुभावैरनुभावितो हर्षधृत्यादिभिः सञ्चारिभिः पुष्टिं नीतो दानवीरतां भजते (ञ) ।

धर्मवीरो यथा युधिष्ठिरः—

"राज्यञ्च वसु देहश्च भार्य्या भ्रातृसुताश्च ये ।
यच्च लोके ममायत्तं तद्धर्माय सदोद्यतम् ॥" (ट)

युद्धवीरो यथा श्रीरामचन्द्रः—

"भो लङ्केश्वर ! दीयतां जनकजा, रामः स्वयं याचते,
कोऽयं ते मतिविभ्रमः, स्मर नयं, नाद्यापि किञ्चित् कृतम् ।

---

"उत्पत्तिर्जमदग्नितः स भगवान् देवः पिनाकी गुरुः
वीर्य्यं यत्तु न तद्गिरां पथि, ननु व्यक्तं हि तत्कर्म्मभिः ।
त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः
सत्य-ब्रह्म-तपोनिधेर्भगवतः किं वा न लोकोत्तरम् ॥"

इति महावीरचरितनाटके श्लोकसमुदायः । तथा च, जमदग्नित उत्पत्तिः, भगवान् देवः स प्रसिद्धः पिनाकी शिवः गुरुराचार्य्यः, अस्य यत्तु, वीर्य्यं बलं तत् गिरां पथि वाक्यमार्गे न वर्त्तते अत्यन्तत्वादुक्तुमशक्यमित्यर्थः, तद्वीर्य्यं कर्म्मभिः एकविंशतिवारक्षत्रियगणनिधनादिभिः व्यक्तं जगति प्रकाशितम् । सप्तभिः समुद्रैः मुद्रिता परिवेष्टिता या मही पृथिवी तस्या निर्व्याजम् अकपटं दानमेव अवधिः सीमा यस्य स तादृशस्त्यागस्त्याग-शक्तिः । अतएव सत्यं सत्यव्यवहारः ब्रह्माणि वेदा तपांसि नानाविधतपस्याश्च तेषां निधेरेकमात्राश्रयस्य भगवतः अस्य परशुरामस्य किं वा कर्म्म न लोकोत्तरं लोकातीतम् ? अपि तु सर्वमेवेत्यर्थः ।

(ञ) अथ दानवीररसत्वं प्रतिपादयितुमाह अथेति । सम्प्रदानभूतैरित्यादिषु यथासम्भवं साक्षा-दनुक्तैरपि प्रतीतिलभ्यैरिति विशेषणं योध्यम् । सत्त्वं सत्त्वगुणः, अध्यवसायः प्रवृत्तिः आदिशब्दात् दानस्य स्वर्गादिजनकताज्ञानादयश्च तैः । विभावितो विशेषेण प्रतिपादितः । त्यागादिभिरित्यादिशब्दात् त्यागे अनुष्ठेयानां सङ्कल्पदक्षिणादीनां ग्रहणम् । अनुभावितः सभ्यानामनुभवगोचरीकृतः । उत्साहः स्थायी भावो दानवीरतां दानवीररसत्वं भजत इति पूर्वेणान्वयः ।

(ट) राज्यमिति । राज्यम्, वसु धनम्, देहः शरीरम्, भार्य्या ये च भ्रातरः सुताश्च, किं बहुना लोके यच्च उद्यानवाटादिकं मम आयत्तम् अधीनम् आस्ते, तत् सर्वमेव मया धर्म्माय धर्म्मार्थं सदा उद्यतं त्यागादौ प्रस्तुतीकृतम् ।

अत्र वक्तुर्युधिष्ठिरस्य धर्म्मे उत्साहः स्थायी भावः, धर्म्म आलम्बनविभावः, धर्म्मस्य स्वर्गजनकतादि-श्रुतिरुद्दीपनविभावः, एतादृगुक्तिरनुभावः, हर्षधृत्यादयश्च सञ्चारिभावाः । अङ्गाङ्गिभावमापन्न एष एव समुदायः सामाजिकेषु धर्म्मवीररसतया भासते ।

(ठ) भो इति । उपेत्य रावणान्तिके रामस्योक्तिरियम् । भो लङ्केश्वर ! रावण ! जनकजा

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नैवच्छेत् खरदूषणत्रिशिरसां कण्ठासृजा पङ्किल:
पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृत: ॥" (ठ)

दयावीरो यथा जीमूतवाहन:—

"शिरामुखै: स्यन्दत एव रक्तम् अद्यापि देहे मम मांसमस्ति।
तृप्तिं न पश्यामि तवापि तावत् किं भक्षणात्त्वं विरतो गरुत्मन्! ॥" (ड)

एष्वपि विभावादय: पूर्वोदाहरणवदूह्या: (ढ)।

अथ भयानक:।

२२५। भयानको भयस्थायि-भाव: कालाधिदैवत:।
स्त्रीनीचप्रकृति: कृष्णो मतस्तत्त्वविशारदै: ॥

---

मत्सीता मह्यं दीयताम्। स्वयं राम एवायं याचते, न पुनर्दूतादिना येनाप्रत्यय: स्यादिति भाव:। अयं ते तव को नाम मतिविभ्रमो बुद्धिभ्रान्ति:। नयं नीतिं स्मर प्रबलेन सह दुर्बलस्य न विवदितव्यमिति नीतिमनुचिन्तयेत्यर्थ:। अद्यापि मया तव किञ्चिदपि न कृतम्। चेद्यदि एवं मत्सीताया मह्यं दानं न क्रियत इति शेष:, तदा खर-दूषण-त्रिशिरसां पूर्वं निहतानां तदाख्यानां त्रयाणां राक्षसानां कण्ठासृजा कण्ठच्छेदकाले तदीयरक्तेन पङ्किल: पङ्कान्वितो रञ्जित इत्यर्थ:, धनुषो ज्यायां गुणे बन्धेन योजनेन बन्धूकृतो वैरिसंहारान्मम मित्रीकृत:, एष पत्री बाण: न सहिष्यत एव त्वां न क्षमिष्यत एव।

अत्र रामस्य युद्धे उत्साह: स्थायी भाव:, रावण आलम्बनविभाव:, तत्कर्तृकसीताहरणादिरुद्दीपन-विभाव:, एतादृगुक्तिरनुभाव:, गर्वादयश्च व्यभिचारिभावा:। इत्थमिमे पूर्ववत् सभ्येषु युद्धवीररसतया प्रतिभासन्ते।

(ड) शिरेति। नागानन्दनाटके आश्रितनागरक्षणाय दत्तस्य निजदेहस्य कियन्तमंशं भक्षयित्वाविरतं गरुडं प्रति जीमूतवाहनस्योक्तिरियम्। हे गरुत्मन्! गरुड! शिरामुखैस्तव चञ्चुप्रहारेण छिन्ननाडीप्रान्तै: रक्तं स्यन्दत एव नि:सरत्येव, तथा अद्यापि इदानीमपि मम देहे मांसमस्ति। तवापि तावत् तृप्तिं मन्मांस-भक्षणेन क्षुधानिवृत्त्या परितोषं न पश्यामि, सुतरां त्वं किं कस्मात् भक्षणात् मम मांसभक्षणाद्विरतो निवृत्तोऽसि?।

अत्र जीमूतवाहनस्य दयायामुत्साह:, नाग आलम्बनविभाव:, तस्य कातरोक्तिप्रभृतिरुद्दीपनविभाव:, एतदुक्तिरनुभाव:, धृत्यादयश्च सञ्चारिभावा:, इमे समुदिता ज्ञानसम्बन्धेन सभ्येषु वर्त्तमाना दयावीररसत्वेन प्रतिभासन्ते।

(ढ) एष्विति। एषु "राज्यञ्च वसु देहश्च" इत्यादिषु त्रिष्वपि उदाहरणेषु। पूर्वोदाहरणवत् "त्याग: सप्तसमुद्र"त्याद्युदाहरणे प्रदर्शितवत्। ते तु प्रतिश्लोकमेव दर्शिता:।

(ण) भयेति। भयानको रस:, भयं प्रागुक्तलक्षणं स्थायी भावो यस्य स:। कालो यम: अधिदैवतम् अधिष्ठात्री देवता यस्य स:, जीवानां [illegible] भाव:। अतएव कृष्ण:

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम् ।
चेष्टा घोरतरा तस्य (१) भवेदुद्दीपनं पुनः ॥
अनुभावोऽत्र वैवर्ण्य-गद्गदस्वरभाषणम् ।
प्रलयस्वेदरोमाञ्च-कम्पदिक्प्रेक्षणादयः ॥
जुगुप्सावेगसम्मोह-सन्त्रासग्लानिदीनताः ।
शङ्कापस्मारसम्भ्रान्ति-मृत्य्वाद्या व्यभिचारिणः ॥ (ण)

यथा—"नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपाम्
अन्तः कञ्चुकिकञ्चकस्य विशति त्रासादयं वामनः ।"
इत्यादि (१०० पृष्ठे) (त) ।

अथ बीभत्सः ।

२२६ । जुगुप्सास्थायिभावस्तु बीभत्सः कथ्यते रसः ।
नीलवर्णो महाकाल-दैवतोऽयमुदाहृतः ॥

---

कृष्णवर्णः । अथवा भयस्य दुःखजनकतया पापतुल्यत्वात् पापस्य च "मालिन्यं व्योम्नि पापे" इति कविसमयप्रसिद्ध्या कृष्णवर्णत्वात् भयानकरसोऽपि कृष्णवर्णः । स्त्री स्त्रीजातिः नीचो निकृष्टजनश्च प्रकृतिः स्थायिभावावस्थायाम् आश्रयो यस्य सः, स्त्रीनीचनिष्ठस्थायिभावक एष रस इत्यर्थः । भयस्योत्तमपात्रगतत्वे तु भयानकाभास एव । तथा च वक्ष्यति—"उत्तमपात्रगतत्वे भयानके" इति । तत्त्वविशारदैरलङ्कारशास्त्रतत्त्वज्ञैर्मतः । यस्माद्वस्तुनो भीतिर्भयम् उत्पद्यते तद्वस्तु अत्र भयानकरसे आलम्बनं मतम् । तस्य आलम्बनस्य घोरतरा चेष्टा क्रिया पुनरुद्दीपन भवेत् । अत्र रसे वैवर्ण्यं मुखादेर्विवर्णता गद्गदस्वरेण अस्पष्टध्वनिना च भाषणम् अनुभाभः । तथा प्रलयो नष्टचेष्टता स्वेदो घर्म्मवारि, रोमाञ्चः, कम्पः, दिक्प्रेक्षणम् आदिशब्दात् पलायनादयश्च अनुभावाः । जुगुप्सा बीभत्सरसस्य स्थायिभावः । सम्भ्रान्तिर्जड़ता । आद्यशब्दात् विषादादयश्च व्यभिचारिणो भावाः स्युः ।

(त) यथेति । एतावतैव भयानकरसस्य पर्य्याप्ता प्रतीतिर्भविष्यतीति मत्वैव प्रागुद्धृतस्यापि श्लोकसमुदायस्य पूर्वं पादद्वयमेवात्रोद्धृतम् । अन्यथा अन्यत्रैव कतिपयान्यक्षराणि वोद्धियेरन्निति बोध्यम् ।

अत्र वर्षवरप्रभृतीनां भयं स्थायी भावः, अकस्मादुपस्थितो वानर आलम्बनविभावः, तस्य विकटदशनप्रकाशादिरुद्दीपनविभावः, वर्षवरादीनां पलायनादयोऽनुभावाः, शङ्कादयश्च व्यभिचारिभावाः, एवमेते समुदिताः सभ्येषु भयानकरसतया प्रतिभान्ति ।

(थ) जुगुप्सेति । जुगुप्सा प्रागुक्तलक्षणा घृणा स्थायी भावो यस्य स तादृशस्तु रसो बीभत्सः

---

(१) घोरतरास्येति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दुर्गन्धमांसरुधिर-(१) मेदांस्यालम्बनं मतम् ।
तत्रैव क्रिमिपाताद्यमुद्दीपनमुदाहृतम् ॥
निष्ठीवनास्यवलन-नेत्रसङ्कोचनादयः ।
अनुभावास्तत्र मता-स्तथा स्युर्व्यभिचारिणः ।
मोहोऽपस्मार आवेगो व्याधिश्च मरणादयः ॥ (थ)

यथा—"उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ॥
अन्तः पर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति (२) ॥" (द)

---

कथ्यते । अयं बीभत्सो रसः, महाकालो दैवतमधिदेवता अस्येति सः, महाकालस्य श्मशानरूपबीभत्स-देशवासित्वादित्याशयः । अतएव नीलवर्णो धूम्रवदीषन्नीलाभः, महाकालस्य तद्वर्णत्वात् "महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णकम्" इति स्मरणादित्यभिप्रायः । दुर्गन्धानि मांस-रुधिर-मेदांसि बहुवचनाद्गूथादीनि च आलम्बनं मतम् । तत्र मांसादिष्वेव क्रिमिपाताद्यम् आद्यशब्दादवसंसनादिकञ्च उद्दीपनम् उदाहृतम् । तत्र बीभत्सरसे निष्ठीवनं थुत्कारः, आस्यवलनं मुखपरिवर्त्तनम्, नेत्रसङ्कोचनम् आदिशब्दात् वमिप्रभृतयश्च अनुभावा मताः । तथा मोहः अपस्मार आवेगः व्याधिः मरणम् आदिशब्दात् ग्लानिप्रभृतयश्च व्यभिचारिणः स्युः ।

(द) उत्कृत्येति । मालतीमाधवे श्मशाने पिशाचानामवस्थां पश्यतो माधवस्योक्तिरियम् । अन्तः शवाभ्यन्तरे पर्य्यस्ते निक्षिप्ते नेत्रे येन सः, तथा प्रकटिता मुखव्यादानेन प्रकाशिता दशना दन्ता येन सः, प्रेतरङ्कः दीनः कश्चित् पिशाचः, प्रथमं कृत्तिं शवचर्म्म उत्कृत्य उत्कृत्य नखरैश्छित्त्वा छित्त्वा अथ अनन्तरं पृथुना महता उच्छोथेन उत्पन्नशोथरोगेण भूयांसि बहुलीभूतानि उग्रा दारुणा पूतिर्दुर्गन्धो येषु तानि, तथा अंसौ स्कन्धौ स्फिचौ नितम्बस्थस्थूलमांसपिण्डौ पृष्ठपिण्डं पृष्ठस्थपिण्डीभूतमांसञ्च तानि, आदयो येषां ते च ते अवयवा ऊरुप्रभृतीन्यङ्गानि चेति तेषु सुलभानि स्थूलत्वादनायासलभ्यानि मांसानि जग्ध्वा भक्षयित्वा अङ्कस्थात् क्रोड़स्थितात् करङ्कात् शवस्य मस्तकात् अस्थिषु संस्थं विद्यमानं तथा स्थपुटगतमपि निम्नोन्नत-स्थानस्थितञ्च क्रव्यं मांसम् अव्यग्रं त्वरारहितं यथा स्यात्तथा अत्ति खादति । अत्रत्यान्यभिधानप्रमाणानि अस्मत्प्रणीतमालतीमाधवटीकायामनुसन्धेयानि ।

अत्र आक्षेपलभ्या माधवस्य जुगुप्सा स्थायी भावः, तादृशमांसान्यालम्बनविभावाः, तेषामुग्रपूतिरुद्दीपन-विभावः, आक्षेपलभ्या माधवस्य निष्ठीवनादयोऽनुभावाः, ग्लानिप्रभृतयश्च सञ्चारिभावाः, एते समुदिताः सभ्यैर्बीभत्सरसत्वेन प्रतीयन्ते ।

---

(१) पिशितेति पाठान्तरम् । (२) अत्र इदानीन्तनमूलपुस्तकात् [illegible] पाठभेदः दृश्यते ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ अद्भुतः ।

२२७ । अद्भुतो विस्मयस्थायि-भावो गन्धर्वदैवतः ।
पीतवर्णो वस्तु लोका-तिगमालम्बनं मतम् ॥
गुणानां तस्य महिमा भवेदुद्दीपनं पुनः ।
स्तम्भः स्वेदोऽथ रोमाञ्च-गद्गदस्वरसम्भ्रमाः ॥
तथा नेत्रविकासाद्या अनुभावाः प्रकीर्त्तिताः ।
वितर्कावेगसम्भ्रान्ति-हर्षाद्या व्यभिचारिणः ॥ (ध)

यथा—"दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यतः
टङ्कारध्वनिरार्य्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक् पर्य्यस्तकपालसम्पुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥" (न)

अथ शान्तः ।

---

(ध) अद्भुत इति । अद्भुतो रसः, विस्मयः स्थायी भावो यस्य सः, गन्धर्वो दैवतमधिदेवता अस्येति गन्धर्वदैवतः, गन्धर्वैरेव गानकुहकादिना विस्मयोत्पादनस्य पुराणेषु श्रूयमाणत्वादिति भावः । अतएव पीतवर्णः गन्धर्वाणामपि पीतवर्णत्वादित्याशयः । लोकातिगम् अलौकिकमिन्द्रजालादिकं वस्तु आलम्बनं मतम् । तस्य लोकातिगवस्तुनो गुणानां महिमा पुनरुद्दीपनं भवेत् । स्तम्भः स्वेदः रोमाञ्चः गद्गदस्वरः सम्भ्रमस्त्वरा एते, तथा नेत्रविकासः आद्यशब्दात् निर्निमेषनिरीक्षणादयश्च अनुभावाः प्रकीर्त्तिताः । वितर्कः आवेगः, सम्भ्रान्तिर्जड़ता, हर्षः आद्यशब्दादौत्सुक्यादयश्च व्यभिचारिणः स्युः ।

(न) दोर्दण्डेति । महावीरचरिते रामस्य हरधनुर्भङ्गध्वनिमाकर्ण्य विस्मयापन्नस्य लक्ष्मणस्योक्तिरियम् । दोर्दण्डाभ्याम् बाहुदण्डाभ्याम् अञ्चितस्य आकृष्टस्य चन्द्रशेखरधनुषो हरकार्म्मुकस्य अवभङ्गेन द्विखण्डीकरणेन उद्यत उत्थितः, आर्य्यस्य रामचन्द्रस्य बालचरितानां प्रस्तावनायाम् उपक्रमे डिण्डिमः प्रकाशको वाद्यविशेषस्तत्स्वरूपः, टङ्कारध्वनिः, द्राक् झटिति पर्य्यस्ताभ्यां विक्षिप्ताभ्यां कपालसम्पुटाभ्याम् ऊर्द्ध्वकटाहाधःकटाहाभ्यां मिलत् संयुज्यमानं यत् ब्रह्माण्डरूपं भाण्डं स्थाल्यादिवत् पात्रं तस्य उदरे अभ्यन्तरे पिण्डितः स्तूपीकृतः चण्डिमा प्रखरता यस्य स तथोक्तः सन्, कथमद्यापि अधुनापि न विश्राम्यति न विरमति । इत्यहो आश्चर्य्यम् ।

अत्र लक्ष्मणस्य विस्मयः स्थायी भावः, धनुष्टङ्कार आलम्बनविभावः, तस्य विशालता उद्दीपनविभावः, एतादृगुक्तिरनुभावः, हर्षादयश्च व्यभिचारिभावाः, एतत्समुदायः सामाजिकेषु अद्भुतरसत्वेन परिणमति ।

...asishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२२८। शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः।
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः॥
अनित्यत्वादिनाऽशेष-वस्तुनिःसारता तु या।
परमात्मस्वरूपं वा तस्यालम्बनमिष्यते॥
पुण्याश्रम-हरिक्षेत्र-तीर्थ-रम्यवनादयः।
महापुरुषसङ्गाद्या-स्तस्योद्दीपनरूपिणः॥
रोमाञ्चाद्याश्चानुभावा-स्तथा स्युर्व्यभिचारिणः।
निर्वेद-हर्ष-स्मरण-मति भूतदयादयः (१)॥ (प)

यथा—"रथ्यान्तश्चरतस्तथा धृतजरत्कन्थालवस्याध्वगैः
सत्रासञ्च सकौतुकञ्च सदयं दृष्टस्य तैर्नागरैः।
निर्व्याजीकृत (२) चित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कः (३) करटः कदा करपुटीभिक्षां विलुण्ठिष्यति॥" (फ)

(प) शान्त इति। शान्तो रसः, शमः प्रागुक्तलक्षणः स्थायी भावो यस्य सः, अतएव उत्तमा प्रकृतिः स्थायिभावाश्रयो यस्य सः उत्कृष्टपात्रनिष्ठस्थायिभावक इत्यर्थः। श्रीनारायणो महाविष्णुरेव दैवतमधिदेवता यस्येति सः शमस्य सत्त्वगुणजन्यत्वात् सत्त्वगुणस्य च नारायणाधिष्ठितत्वादित्याशयः। अतएव कुन्देन्द्वोरिव कुन्दपुष्पचन्द्रयोरिव सुन्दरी छाया शोभा यस्य सः अतीवशुभ्रवर्ण इत्यर्थः, सत्ययुगे महाविष्णोरपि शुभ्रवर्णत्वात् "शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः" इति श्रीभागवतस्मरणादिति भावः। अथवा शमजनकसत्त्वगुणस्य शुभ्रवर्णत्वात् शमस्यापि शुभ्रवर्णत्वमित्यभिप्रायः। अनित्यत्वम् अवश्यविनाशित्वम् आदिशब्दादन्तिमे आत्मनोऽनुपकारित्वादिकञ्च तेन हेतुना या अशेषाणां सर्वेषां वस्तूनां धनजनादिपदार्थानां निःसारता तुच्छता परमात्मस्वरूपं वा तस्य शान्तरसस्य आलम्बनमिष्यते। पुण्याश्रमो वदरिकादिः, हरिक्षेत्रं श्रीक्षेत्रादि, तीर्थं वाराणस्यादि, रम्यवनं नैमिषारण्यादि, आदिशब्दाद्विन्ध्याचलादयः, तथा महापुरुषसङ्गः आद्यशब्दात् अध्यात्मशास्त्रश्रवणादयश्च तस्य शान्तरसस्य उद्दीपनरूपिणः। रोमाञ्चः आद्यशब्दात् प्रव्रज्यादयश्च अनुभावाः। तथा निर्वेदः हर्षः स्मरणं मतिः भूतेषु सर्वप्राणिषु दया दयाजनिका धृतिः दयाया व्यभिचारिगणे गणनाभावात्, आदिशब्दादौत्सुक्यादयश्च व्यभिचारिणः स्युः।

(फ) रथ्येति। कस्यचिद्विषयविरक्तस्य भिक्षोरुक्तिरियम्। कदा निःशङ्कः करटः काकः, रथ्यान्तश्चरतः पथिमध्ये भिक्षार्थं पर्यटतः, धृतः परिहितः जरत्या जीर्णायाः कन्थाया लवो लेशमात्रं येन

(१) अत्रापि इदानीन्तनमूलपुस्तकात् बहुतरपाठान्तराणि दृश्यन्ते।

(२) निर्वीजीकृतेति पाठान्तरम्। (३) निःशङ्कमिति क्वचित् पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुष्टिस्तु महाभारतादौ द्रष्टव्या ।

२२९ । निरहङ्काररूपत्वाद्दयावीरादिरेष नो ॥ (ब)

दयावीरादौ हि जीमूतवाहनादावन्तरा मलयवत्याद्यनुरागादेरन्ते च विद्याधरचक्रवर्त्तित्वाद्यास्तेर्दर्शनादहङ्कारोपशमो न दृश्यते । शान्तस्तु सर्वप्रकारेणाहङ्कारप्रशमैकरूपत्वान्न तत्रान्तर्भावमर्हति । अतश्च नागानन्दे शान्तरसप्रधानत्वमपास्तम् (भ) ।

ननु (म) ।

"न यत्र दुःखं न सुखं न चिन्ता, न द्वेषरागौ न च काचिदिच्छा ।
रसः स शान्तः कथितो मुनीन्द्रैः, सर्वेषु भावेषु शमः प्रधानः (१) ॥" (य)

---

तस्य, अध्वगैः पथिकैस्तैः नागरैर्नगरवासिभिर्जनैः उन्मत्तप्रायत्वात् सत्रासश्च नग्नप्रायत्वात् सकौतुकञ्च जीर्णदेहत्वात् सदयञ्च यथा स्यात्तथा दृष्टस्य, तथा निर्व्याजीकृतः अकापट्येन विहितः यश्चित्सुधाया ब्रह्मामृतस्य रसो ज्ञानेनास्वादस्तस्य मुदा हर्षेण निद्रायमाणस्य निद्रितवदाचरतो मुद्रितनयनस्येत्यर्थः मे मम करपुटीभिक्षां हस्तस्थितभिक्षालब्धतण्डुलादिकं विलुण्ठिष्यति विलुण्ठ्य नेष्यति । तं कालमेव प्रार्थये इति भावः ।

अत्र वक्तुर्भिक्षोः शमः स्थायी भावः, परमात्मस्वरूपमालम्बनविभावः, आक्षेपलभ्यः पुण्याश्रमदर्शनादिरुद्दीपनविभावः, एतादृगुक्तिरनुभावः, हर्षादिश्च व्यभिचारिभावः, एष समुदायः सभ्येषु शान्तरसतया परिणमते ।

(ब) नन्वत्रापि भूतदयायां धर्मादौ चोत्साहसत्त्वात् तादृशोत्साहस्य स्थायिभावत्वाङ्गीकारेणायमपि दयावीरादावेवान्तर्भवतीति कथं शान्तो नामातिरिक्तरसोऽङ्गीक्रियत इत्याह निरहङ्कारेति । अस्मिन् शमे जाते शमिनो निरहङ्काररूपत्वात् "अहमेतत् करिष्यामि" "ममैते" इत्याकारसर्वाहङ्कारवर्जितत्वात् एष शान्तत्वेनाभिमतो रसो नो दयावीरादिः न दयावीराद्यन्तर्भूतो भवितुमर्हति । आदिशब्दात् धर्मवीरादिपरिग्रहः । एतदुक्तं भवति—स्थायिभावाश्रयस्य साहङ्कारत्वे दयावीरादिः, निरहङ्कारत्वे तु शान्त इति वैचित्र्यविशेषाद्भेदाङ्गीकार इति ।

(भ) कारिकार्थं स्पष्टयति दयेति । प्रथमादिपदेन धर्मवीरादेः, द्वितीयादिपदेन युधिष्ठिरादेः, तृतीयादिपदेन राज्यलाभादेः, चतुर्थादिपदेन शत्रुद्वेषादेः, पञ्चमादिपदेन च भारतसाम्राज्यादेर्ग्रहणम् । जीमूतवाहनो नाम नागानन्दनाटकस्य नायकः । अन्तरा मध्ये । मलयवती नाम नागानन्दनाटकस्य नायिका । अहङ्कारस्य उपशमो निवृत्तिर्न दृश्यते, अहङ्काराभावे अनुरागाद्यसम्भवादिति भावः । सर्वप्रकारेणाहङ्कारप्रशमैकरूपत्वात् । सर्वविधाहङ्कारनिवृत्तिस्वरूपत्वात् । तत्र दयावीरादौ । अतश्च नायकस्याहङ्कारसत्त्वेन शान्तरसासम्भवाच्च । नागानन्दे तदाख्यनाटके । अपास्तं निराकृतं वेदितव्यम् । किन्तु तत्र दयावीर एव प्रधानरस इति भावः ।

(म) शान्तस्य रसत्वासम्भवमेवाशङ्कते नन्विति ।

---

(१) शमप्रधानः, शमप्रमाणः इति पाठभेदौ ।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्येवं रूपस्य शान्तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात् तत्र सञ्चार्य्यादीनामभावात् कथं रसत्वमित्युच्यते (र)।

२३०। युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः। रसतामेति तदस्मिन् सञ्चार्य्यादेः स्थितिश्च न विरुद्धा॥ (ल)

यच्चास्मिन् सुखाभावोऽप्युक्तस्तस्य वैषयिकसुखपरत्वान्न विरोधः। उक्तं हि—(व)

---

(य) नेति। यत्र रसे स्थायिभावाश्रयस्य शमिनः न दुःखम्, न सुखम्, न चिन्ता, न द्वेषो मात्सर्य्यम्, न रागो विषयेष्वासक्तिः, न च काचिदिच्छा जायते। सर्वेषु भावेषु अवस्थासु शमः शान्तिर्विषयनिवृत्तिरेव प्रधानः सन् वर्त्तते, स शान्तो रसः मुनीन्द्रैर्भरतादिभिः कथितः। अत्र "शमप्रधान इति पाठस्तु न मनोरमः, अर्थासङ्गतेः, तादृशदशायां व्यभिचारिभावादीनामसम्भवात्" इति रामचरणप्रलाप एव न मनोरमः। तथा च अवत्यशमशब्दप्रतिपाद्यस्थायिभावसम्भवेनैव शान्तरसत्वप्रसक्तौ "सञ्चार्य्यादीनामभावात्" इत्यनुपदमेव वृत्तिकारेण रसत्वमाशङ्कितम्। तदभावे च तदाशङ्कैव नोपपद्यते। तेन च य एव तादृशपाठदृढतां प्रति हेतुः, स एव च तत्पाठासङ्गतौ हेतुरूपन्यस्त इति सुधीभिर्विवेचनीयम्।

(र) इत्येवमिति। शान्तस्य शमगुणस्य। आत्मस्वरूपापत्तिलक्षणायां जीवस्य परमात्मनि लयप्राप्तिरूपायाम्। तत्र मोक्षावस्थायाम्। सञ्चार्य्यादीनामित्यादिशब्देन आलम्बनोद्दीपनानुभावानां ग्रहणम्। तथा च परिपोषकादीनामभावेन पुष्ट्यसम्भवात् कथं केवलस्य शमस्य शान्तरसत्वमित्याशङ्कार्थः। न च अन्यत्रैवात्रापि आलम्बनादीनामाक्षेपलभ्यता सम्भवतीति वाच्यम्, शमिनो मोक्षावस्थायामहङ्काराभावेन आलम्बनादीनामाक्षेपस्यैवासम्भवात्। अस्मादेव कारणादमरादयः शान्तस्य रसत्वमेव नाङ्गीकुर्वन्तीति बोध्यम्।

(ल) युक्तेति। युक्तः समाधिमान् वियुक्तस्तद्विपरीतः संसारी युक्तश्चासौ वियुक्तश्चेति युक्तवियुक्तः। तथा च यः संसारकर्म्मणि व्याप्रियमाण एव योगमभ्यस्यति स युक्तवियुक्त इत्युच्यते। यथा—जनकराजर्षिः। तादृश्यां तदवस्थायां पुरुषस्य यः शमः अवस्थितो वर्त्तते प्राप्नोति स एव शमो यतो रसतां शान्तरसत्वम् एति प्राप्नोति तत्तस्मात् अस्मिन् शान्तरसे सञ्चार्य्यादेः आदिशब्दादालम्बनोद्दीपनानुभावानाञ्चापि स्थितिश्च न विरुद्धा; तदानीमपि पुरुषस्य संसारासक्तिमत्त्वेन निर्वेदहर्षादीनामपि सम्भवादिति भावः।

(व) ननु "शमो निरीहावस्थायामात्मविश्रामजं सुखम्" इत्यनेन भवता शमस्य सुखरूपत्वाभिधानात् "न यत्र दुःखं न सुखं न चिन्ता" इत्यत्र तु सुखस्याप्यभावाभिधानात् परस्परविरोध इत्याह यच्चेति। अस्मिन् "न यत्र दुःखम्" इत्यादिपद्ये। तस्य सुखशब्दस्य। तथा च "न यत्र दुःखं न सुखम्" इत्यादिना अङ्गनालिङ्गनादिजनितसुखाभाव एवाभिहितः न पुनर्ब्रह्मसुखाभावोऽपीति भावः। शमे ब्रह्मसुखलाभस्य प्रमाणप्रदर्शनायाह उक्तं हीति।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"यच्च कामसुखं लोके यच्च दिव्यं महासुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोड़शीं कलाम् ॥" (श)
"सर्वाकारमहङ्कार-रहितत्वं व्रजन्ति चेत् ।
अत्रान्तर्भावमर्हन्ति दयावीरादयस्तदा (१) ॥" (ष)

आदिशब्दाद्धर्मवीर-दानवीर-देवताविषय-रतिभावप्रभृतयः (स) ।

तत्र देवताविषया रतिर्यथा—

"कदा वाराणस्यामिह सुरधुनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।
अये गौरीनाथ ! त्रिपुरहर ! शम्भो ! त्रिनयन !
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥" (ह)

अथ मुनीन्द्रसम्मतो वत्सलः (२) (च) ।

(श) यच्चेति । लोके इहलोके यच्च कामसुखम् अङ्गनालिङ्गनादिवैषयिकसुखम्, यच्च दिव्यं परलोकीयं यागादिकर्मणा स्वर्गीयं महासुखं लोके महासुखत्वेन प्रसिद्धं सुखम्, एते द्विविधे सुखे तृष्णाक्षयसुखस्य शमनिबन्धनब्रह्मानन्दस्य षोड़शीं कलामपि षोड़शभागैकभागपरिमाणमपि नार्हतः न प्राप्नुतः ।

(ष) दयावीरादौ शान्तरसस्यान्तर्भावस्तु न भवत्येव प्रत्युत दयावीरादिपात्राणामहङ्कारसामान्याभावे दयावीरादिरसा एव शान्तरसे अन्तर्भावं प्राप्नुवन्तीत्याह सर्वेति । पुरुषाश्चेत् सर्वाकारम् अहङ्काररहितत्वं व्रजन्ति सर्वप्रकाराहङ्कारवर्जिता भवन्ति ; तदा तदीयदयोत्साहादिघटिता दयावीरादयो रसा एव अत्र शान्तरसे अन्तर्भावमर्हन्ति । अतः शान्तो नामातिरिक्तो रसः स्वीकर्त्तव्य एवेति भावः ।

(स) आदीति । "निरहङ्काररूपत्वाद्दयावीरादिरेष नो" इत्यत्र प्रक्रान्ते आदिशब्दादित्यर्थः । अत्रापि प्रभृतिशब्दात् गुरु-विप्र-मुनि राजविषया रतिभावा गृह्यन्ते ।

(ह) कदेति । मोक्षावस्थायामुपस्थितप्रायस्य कस्यचिदुक्तिरियम् । कदा इह वाराणस्यां सुरधुन्या गङ्गाया रोधसि तीरे वसन्, कौपीनं वसानः परिदधानः, शिरसि अञ्जलिपुटं निदधानः स्थापयंश्च सन्नहम्, "अयि गौरीनाथ ! हे त्रिपुरहर ! हे त्रिपुरासुरनाशक ! शम्भो ! त्रिनयन ! प्रसीद" इति क्रोशन् उच्चैर्वदन् निमिषमिव निमेषपरिमितसमयमिव दिवसान् नेष्यामि अतिवाहयिष्यामि ।

अत्र वक्तुर्मोक्षावस्थायामुपस्थितप्रायत्वात् सर्वाहङ्कारनिवृत्त्या न धर्मवीरो रसः, सञ्चार्य्यादिभिरपरिपुष्टतया च न शान्तो रसः, किन्तु शिवविषयं रतिभावं भावशब्दवाच्यम् । अतएव "देवताविषया रतिर्यथा" इति वृत्तावुक्तम् । इदमुदाहरणन्तु शान्तव्यतिरिक्तस्थलेऽपि देवताविषयरतिभावसम्भवप्रदर्शनाय ।

(च) अथेति । मुनीन्द्रस्य प्राचीनतमालङ्कारिकस्य भरतस्य सम्मतो वत्सलो रसो निरूप्यत इति

(१) तथेति पाठान्तरम् । (२) अथ मुनीन्द्रोऽप्याह इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२३१। वत्सलश्च रस इति तेन स दशमो रसः।
स्फुटं चमत्कारितया वत्सलञ्च रसं विदुः॥
स्थायी वत्सलतास्नेहः पुत्राद्यालम्बनं मतम्।
उद्दीपनानि तच्चेष्टा विद्याशौर्य्यदयादयः॥
आलिङ्गनाङ्गसंस्पर्श-शिरश्चुम्बनमीक्षणम्।
पुलकानन्दवाष्पाद्या अनुभावाः प्रकीर्त्तिताः॥
सञ्चारिणोऽनिष्टशङ्का हर्षगर्वादयो मताः।
पद्मगर्भच्छविर्वर्णो दैवतं लोकमातरः॥ (क)

यथा—"यदाह धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलीम्।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः॥" (ख)

शेषः। एतेनान्येषां नव्यानामात्मनश्च वत्सलस्य रसत्वे सम्मतिर्नास्तीति द्योतितम्। तथा च पुत्रादिस्नेहस्य सञ्चार्य्यादिभिः परिपुष्टिसत्त्वे तस्य दयावीरान्तर्भावः, अन्यथा तु स्नेहाख्यं भावमात्रम्। तथापि तु भरत-सम्मतस्यार्षत्वेन प्रत्याख्यातुमशक्यत्वात् तदीयत्वेनैवेह निरूप्यत इति भावः।

(क) वत्सल इति। वत्सलश्च रस इति भरतमतमिति शेषः। तेन हेतुना स वत्सलो दशमो रसः, शान्तपर्य्यन्तस्य नवमत्वादित्याशयः। स्फुटं स्पष्टं चमत्कारितया चमत्कारजनकतया वत्सलञ्च रसं विदुः, भरतादयः प्राचीना इति शेषः। स्वमतेऽपि चमत्कारित्वस्यैव रसप्राणत्वात् वत्सलस्य रसत्वं कथञ्चिद्युक्तिसिद्धमपीति भावः। वत्सलतारूपः स्नेहः स्थायी भावः, पुत्रः आदिपदात् कन्यानुजादिकञ्च आलम्बनं मतम्। तस्य पुत्रादेः चेष्टा, क्रीड़ा हास्यादिः, विद्या शास्त्रादिज्ञानम्, शौर्य्यं वीरत्वम्, उदयो धनार्जनादिभिरभ्युदयः, आदिशब्दात् परिचर्य्यादयश्च उद्दीपनानि उद्दीपनविभावाः। आलिङ्गनम् अङ्गसंस्पर्शः शिरसश्चुम्बनम्। अत्र समाहारद्वन्द्वः। ईक्षणं दर्शनम्, पुलको रोमाञ्चः, आनन्दवाष्पम् आनन्दाश्रुपातः, आद्यशब्दात् वस्त्रालङ्कारदानादयश्च अनुभावाः प्रकीर्त्तिताः। अनिष्टशङ्का, हर्षः, गर्वः, आदिशब्दात् धृतिप्रभृतयश्च सञ्चारिणो भावा मताः। लोकमातरो गौर्य्यादिषोड़शमातृका दैवतमधिदेवता, तासां परम-स्नेहवत्त्वादित्याशयः। अतएव पद्मगर्भस्येव पद्मकोषस्येव छविः कान्तिर्यस्य स तादृशो वर्णः श्वेतपीताभ इत्यर्थः, मातृणामपि तद्वर्णत्वादिति भावः। रसानां वर्णदैवतयोः कल्पनाकारणन्तु शृङ्गारप्रकरण एव दर्शितम्।

(ख) यदिति। रघुवंशे रघोर्बाल्यावस्थावर्णनमिदम्। धात्र्या उपमात्रा प्रथमम् उदितम् उच्चारितं वचः "मा" इत्यादिकं वाक्यं यदाह ब्रवीति स्म, तदीयां धात्रीसम्बन्धिनीम् अङ्गुलीम् अवलम्ब्य धृत्वा यद्ययौ च, प्रणिपातशिक्षया प्रणामकरणोपदेशेन यच्च नम्रः अभूत्; तेन कार्य्यगणेन सः अर्भको बालको रघुः पितुर्दिलीपस्य मुदम् आनन्दं ततान वर्द्धयामास।

CCO. Vasishtha Tripathi Collection, Digitized By Siddhanta eGangotri Gyaan Kosha

एषाञ्च (१) रसानां परस्परविरोधमाह—(ग)

२३२। आद्यः-करुण-बीभत्स-रौद्र-वीर-भयानकैः।
भयानकेन करुणेनापि हास्यो विरोधभाक्॥
करुणो हास्य-शृङ्गार-रसाभ्यामपि तादृशः।
रौद्रस्तु हास्य-शृङ्गार-भयानकरसैरपि॥
भयानकेन शान्तेन तथा वीररसः स्मृतः।
शृङ्गार-वीर-रौद्राख्य-हास्य-शान्तैर्भयानकः॥
शान्तस्तु वीर-शृङ्गार-रौद्र-हास्य-भयानकैः।
शृङ्गारेण तु बीभत्स इत्याख्याता विरोधिता॥ (घ)

आद्यः शृङ्गारः। एषाञ्च समावेशप्रकारा वक्ष्यन्ते (ङ)।

अत्राक्षेपलभ्यो दिलीपस्य स्नेहः स्थायी भावः, रघुरालम्बनविभावः, तादृशभाषणादिकमुद्दीपनविभावः, आक्षेपलभ्या आलिङ्गनादयोऽनुभावाः, हर्षादयश्च सञ्चारिभावाः, इमे समुदिताः सामाजिकेषु वत्सलरसतया परिणमन्ते।

(ग) अथ "परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः" इति सप्तमपरिच्छेदीयरसदोषविवेचनसौकर्य्याय प्रकरणादिहैव तेषां रसानां परस्परपरिपन्थित्वं दर्शयितुमाह एषामिति।

(घ) आद्य इति। आद्य आदिमः शृङ्गारः-करुण-बीभत्स-रौद्र-वीर-भयानकैः सह विरोधभागिति परेणान्वयः। एवमन्यत्रापि तृतीयान्तपदैः सह प्रथमान्तपदानां विरोधभागित्यनेनान्वयः समुन्नेयः। विरोधो नाम प्रतिबन्धकत्वम्, तच्च यद्यपि स्थायिभावानामेव वस्तुतः सम्भवति, तथापि स्थायिभावपरिणतिरूपतया परस्परं रसेष्वेव तत्पर्य्यवस्यतीति रस एव विरोधभागित्युच्यते। तथा च शोकजुगुप्सा-क्रोधोत्साह-भयरूपकरुणादिस्थायिभावसत्त्वे शृङ्गारस्थायिभावस्य रतेराविर्भाव एव न स्यादित्यतः शृङ्गारः करुणादिभिः सह विरोधभागिति बोध्यम्। एवमन्यत्रापि। अत्र शान्तेनापि सह आद्यो विरोधभागिति बोध्यम्, "शान्तस्तु वीरशृङ्गारे" त्याद्यभिधानात्; अन्यथा "रसानां परस्परविरोधमाह" इति वृत्तिग्रन्थो नोपपद्यते। अतएव सप्तमपरिच्छेदे वक्ष्यति—"मानं मा कुरु तन्वङ्गि! ज्ञात्वा यौवनमस्थिरम्।" अत्र यौवनास्थैर्य्यनिवेदनं शृङ्गाररसस्य परिपन्थिनः शान्तरसस्याङ्गम्" इति। अतएवान्यत्रापि इत्थं स्वविरोधिनां मध्ये कस्यचिदनुक्तावपि तत्समुच्चयः अध्याहारो वा कल्पनीयः। तादृशो विरोधभागित्यर्थः।

(ङ) एषामिति। किञ्चेति चार्थः। एषां विरोधानां समावेशप्रकारा अवस्थानप्रकाराः, वक्ष्यन्ते सप्तमपरिच्छेदशेषे इति शेषः। वयमपि तत्रैव विवरीष्यामः।

(१) एतेषाञ्च इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२३३ । कुतोऽपि कारणात् क्वापि स्थिरतामुपयन्नपि ।
उन्मादादिर्न तु स्थायी न पात्रे स्थैर्य्यमेति यत् ॥ (च)

यथा—विक्रमोर्व्वश्यां चतुर्थेऽङ्के पुरूरवस उन्मादः (छ) ।

२३४ । रसभावौ तदाभासौ भावस्य प्रशमोदयौ ।
सन्धिः शवलता चेति सर्व्वेऽपि रसनाद्रसाः ॥ (ज)

रसनधर्म्मयोगित्वाद्भावादिष्वपि रसत्वमुपचारादित्यभिप्रायः (झ) ।

भावादय उच्यन्ते—

२३५ । सञ्चारिणः प्रधानानि देवादिविषया रतिः ।
उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ॥ (ञ)

---

(च) ननु तृतीयचरणादावपि तिष्ठतीति स्थायीति व्युत्पत्तेस्तृतीयचरणादौ स्थायिन उन्मादादेः कथं न स्थायिभावत्वमित्याह कुतोऽपीति । कुतोऽपि कारणात् वाञ्छनीयाप्राप्त्यादिवशात् क्वापि कुत्रापि रसे स्थिरतां कथञ्चिद्दीर्घकालस्थायित्वम् उपयन्नपि प्राप्नुवन्नपि उन्मादः आदिशब्दात् निर्व्वेदादिश्च न तु स्थायी न स्थायिभावपदवाच्यः ; यत् यस्मात् पात्रे नायकादौ स्थैर्य्यं तत्तद्ग्रन्थसमाप्तिपर्य्यन्तस्थायित्वं न एति प्राप्नोति । तथा च यो भावो ग्रन्थसमाप्तिपर्य्यन्तं तिष्ठति स एव स्थायी भावः । उन्मादादिस्तु कुत्रापि न तथेति न स्थायी भाव इति भावः ।

(छ) यथेति । यस्य चोन्मादस्य, पुरूरवसि चतुर्थाङ्कपर्य्यन्तमेव स्थायित्वान्न स्थायिभावत्वम् । किन्तु उर्व्वश्यां पुरूरवसो रतेर्ग्रन्थसमाप्तिपर्य्यन्तमेव स्थायित्वात् तस्या एव स्थायिभावत्वमिति भावः ।

(ज) "वाक्यं रसात्मकं काव्यम्" इत्यत्र रसपदेन भावादयोऽपि ग्राह्या इत्यभिप्रायेण मूलकार आह रसेति । रसो भावश्च तौ, तयो रसभावयोराभासौ रसाभासो भावाभासश्च, भावस्य प्रशम उदयश्च तौ भावशान्तिर्भावोदयश्च, भावसन्धिर्भावशवलता चेति सर्व्वेऽपि अष्टविधा आस्वाद्याः रसनात् काव्यनाट्ययोरास्वादनात् रसा उच्यन्ते ।

(झ) रसनेति । रसनधर्म्मयोगित्वात् काव्यनाट्ययोरास्वादविषयत्वात् । एतेन भावादीनां रसत्वमौपचारिकं विभावादिभिः परिपुष्टस्य तु स्थायिभावस्य रसत्वं मुख्यमिति सूचितम् । तथा च "वाक्यं रसात्मकं काव्यम्" इत्यत्र सामान्यत्वादुभयविधस्यैव रसस्य परिग्रह इत्युक्तम् ।

(ञ) तत्र भावमाह सञ्चारिण इति । प्रधानानि रसापेक्षया प्राधान्येन प्रतीयमानाः सञ्चारिणो निर्व्वेदादयो व्यभिचारिभावाः । सञ्चारिणो भावा इत्यस्य विशेषणत्वेऽपि प्रधानशब्दस्य पक्षे नित्यनपुंसकत्वात् प्रधानानीति नपुंसकनिर्द्देशः । देवादिविषया रतिरनुरागः, तथा उद्बुद्धमात्रः आविर्भूतमात्रः, न पुनर्विभावादिभिः परिपुष्टोऽपीति मात्रशब्दस्यार्थः ; स्थायी रत्यादिः स्थायी भावश्च भाव इत्यभिधीयते । तथा च सञ्चार्य्यादिषयस्त्रय एव भावशब्दस्य [illegible]र्थः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"न भावहीनोऽस्ति रसो न भावो रसवर्जितः।
परस्परकृता सिद्धिरनयो रसभावयोः॥" (ट)

इत्युक्तदिशा परमालोचनया परमविश्रान्तिस्थानेन रसेन सहैव वर्त्तमाना अपि राजानुगतविवाहप्रवृत्तभृत्यवदापाततो यत्र प्राधान्येनाभिव्यक्ता व्यभिचारिणो देव-मुनि-गुरु-नृपादि-विषया च रतिरुद्बुद्धमात्रा विभावादिभिरपरिपुष्टतया रसरूपतामनापद्यमानाश्च स्थायिनो भावा भावशब्दवाच्याः (ठ)।

तत्र व्यभिचारो यथा—"एवंवादिनि देवर्षौ" इत्यादि (१६२ पृष्ठे)। अत्र अवहित्था (ड)।

देवविषया रतिर्यथा कुन्दमालायाम्—

"दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक! प्रकामम्।
अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि॥" (ढ)

---

(ट) स्वसिद्धान्तानुकूलं प्राचीनमतमाह नेति। रसः शृङ्गारादिः भावैर्निर्वेदादिभिर्व्यभिचारिभिः हीनः परित्यक्तो नास्ति, तेषां रसस्य परिपोषकत्वेन नियतापेक्षणीयत्वादिति भावः। तथा भावो निर्वेदादिर्व्यभिचारिभावोऽपि रसवर्जितो नास्ति, रसघटकस्थायिभावे व्यभिचारिभावस्य उन्मग्ननिर्मग्नभावेनैव नियतावस्थानादित्याशयः। अतएवानयोः रसभावयोः परस्परकृता सिद्धिर्निष्पत्तिः।

(ठ) इतीति। इत्युक्तदिशा अनेन प्रकारेणेत्यर्थः। परमालोचनया सूक्ष्मानुसन्धानेन इदं ज्ञायत इति शेषः। परमविश्रान्तिस्थानेन स्वकीयनियतावस्थानाश्रयेण। व्यभिचारिणो हि नियमेनैव रसघटकस्थायिभावेष्ववतिष्ठन्ते। रसेन रसघटकस्थायिभावेन। सहैव वर्त्तमाना अपि एकस्मिन्नेव वाक्यादौ एकव्यञ्जनाबोध्यत्वात् सहचरभावेनैव विद्यमाना अपि। यथा—अनुरक्तभृत्यस्य विवाहसभायां समासीनस्वाभाविकवेशधारिराजापेक्षया विवाहोचितमहोज्ज्वलवेशधारी भृत्यो लोकानामापाततो नयनमार्गे प्राधान्येनाभिव्यक्तो भवति; तथैव यत्र वाक्यविशेषे स्थायिभावापेक्षया आपाततः प्राधान्येनाभिव्यक्ता निर्वेदादयो व्यभिचारिणो भावा वर्त्तन्ते, तत्रैव ते भावशब्दवाच्या भवन्तीत्यर्थः। एतेन प्रकृते तु तादृशसभायामपि राजेव तादृशवाक्यादावपि स्थायिभावस्यैव प्राधान्यम्, उपजीव्यत्वादिति द्योतितम्। नृपादीत्यादिशब्देन सुहृदादिग्रहणम्। रतिश्च भावशब्दवाच्येति परेणान्वयः। कारिकास्थभावपदस्य व्यावृत्तिमाह "विभावादिभिरपरिपुष्टतया रसरूपतामनापद्यमाना" इति। स्थायिनो भावा रतिहासादयः प्रागुक्ताः।

(ड) तत्रेति। तत्र तेषु व्यभिचारिभावादिविविधभावेषु मध्ये। अत्र "एवंवादिनी"त्यादिश्लोके अवहित्था अवहित्थाख्यः प्रागुक्तलक्षणो व्यभिचारिभाव एव भावशब्दवाच्य इत्यर्थः। तथा चात्र अङ्कुरितस्यापि पार्वत्याः शिवविषयक-रतिरूपस्थायिभावस्य विभावादीनामत्यन्तव्यवहितत्वाद्विलीनप्रायत्वेनानभिव्यक्तिः, अवहित्थायास्तु कमलपत्रगणनेन सुस्पष्टाभिव्यक्तिरिति भावः।

(ढ) दिवीति। हे नरकान्तक! नरकासुरविनाशक! कृष्ण! दिवि स्वर्गे वा भुवि वा नरके

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुनिविषया रतिर्यथा—

"विलोकनेनैव तवामुना मुने ! कृतः कृतार्थोऽस्मि निवर्हितांहसा ।
तथापि शुश्रूषुरहं गरीयसीर्गिरोऽथवा श्रेयसि केन तृप्यते ॥" (ण)

राजविषया रतिर्यथा मम ।

"त्वद्वाजिराजिनिर्धूत-धूलीपटलपङ्किलाम् ।
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ॥" (त)

एवमन्यत् (थ) ।

उद्बुद्धमात्रस्थायिभावः (१) यथा—

वा प्रकामं पर्य्याप्तं यथा स्यात्तथा मम वासोऽस्तु । तता न दुःखमिति भावः । तथापि मरणेऽपि मृत्युकालेऽपि अवधीरितं स्वसौन्दर्य्येणावज्ञातं शारदारविन्दं शरत्कालीयपद्मं याभ्यां तादृशौ ते तव चरणौ चिन्तयामि ।

अत्र वक्तुः कृष्णविषयकानुरागात्मकरतिरूपो भावः । न च अस्या अपि रतेः स्थायिभावत्वादुपयोगिविभावाद्याक्षेपाच्च रसत्वमेवास्त्विति वाच्यम्, नायकनायिकयोरन्योन्यविषयकरतेरेव रसघटकस्थायिभावत्वनियमात् तत्रैव शृङ्गारभावात् "शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः" इत्यभिधानात् । एतेन नायकनायिकयोरन्योन्यविषयकरतिभिन्नाया एव रतेर्भावत्वमिति पर्य्यवसितम् ।

(ण) विलोकनेनेति । शिशुपालवधे नारदं प्रति कृष्णेनोक्तमिदम् । हे मुने ! निवर्हितांहसा दूरीकृतपापेन अमुना तव विलोकनेनैव दर्शनेनैव कृतार्थः कृतोऽस्मि । तथापि अहं गरीयसीर्गुरुतरार्थबोधिकाः तव गिरो वाक्यानि शुश्रूषुः श्रोतुमिच्छुर्जातः । अथवा तथाहि श्रेयसि मङ्गललाभविषये केन जनेन तृप्यते, अपि तु न केनापीत्यर्थः । जातेऽपि मङ्गले मङ्गलान्तरस्याप्याकाङ्क्षा जायत इति भावः ।

अत्र कृष्णस्य नारदविषयकानुरागात्मकरतिरूपो भावः ।

(त) त्वदिति । हे नृपते ! हरो महादेवः शिरसा तव वाजिराज्या अश्वसमूहेन निर्धूतं अत्यन्तभारभयेन न धत्ते ।

अत्र वक्तुः राजविषयकानुरागात्मकरतिरूपो भावः ।

(थ) एवमिति । अन्यत् गुर्वादिविषयकरतेरुदाहरणम्, एवमूह्यमित्यर्थः । तत्राध्यापकरूपगुरुविषया रतिर्यथा मम ।

"धर्म्माद्रिषु महानयं वदति कोऽप्यन्यस्तु विज्ञेष्विति तत्त्वं तत्र परीक्षितुं ननु महच्छन्दद्वयं प्रागमत् ।
स्वोपाध्यायपदादधस्तदुभयं वीक्ष्येव यस्य स्थितं तं वन्दे गुरुरामनाथकृतिनं सिद्धान्तपञ्चाननम् ॥"

सुहृद्विषया रतिर्यथा—"त्वं मां स्मरसि हे बन्धो ! न स्मरामि त्वहं पुनः ।
स्मरणं चेतसो धर्मं चेतस्तु तव सन्निधौ ॥"

(१) उद्बुद्धमात्रस्थायी भावः इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"हरस्तु किञ्चित्परिलुप्तधैर्य्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे विम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥" (द)

अत्र पार्वतीविषया भगवतो रतिः (ध) ।

ननूक्तं प्रपाणकरसवद्विभावादीनामेकोऽवभासो रस इति तत्र सञ्चारिणः पार्थक्याभावात् कथं प्राधान्येनाभिव्यक्तिः ? इत्युच्यते (न) ।

**२३६ । यथा खण्डमरीचादेरेकीभावे प्रपाणके ।**
**उद्रेकः कस्यचित् क्वापि तथा सञ्चारिणो रसे ॥ (प)**

अथ रसाभास-भावाभासौ ।

**२३७ । अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः । (फ)**

अनौचित्यञ्चात्र रसानां भरतादिप्रणीतलक्षणानां सामग्रीरहितत्वे सत्येकदेशयोगित्वोपलक्षणपरं बोध्यम् (ब) ।

---

(द) हर इति । चन्द्रोदयस्य आरम्भे अम्बुराशिः समुद्र इव किञ्चित्परिलुप्तधैर्य्यः ईषत्क्षीणधैर्य्यः हरो महादेवस्तु विम्बफलमिव अधरोष्ठौ यस्य तादृशे उमाया मुखे विलोचनानि वीक्षणेव चक्षूंषि व्यापारयामास पातयामास । श्लोकोऽयं कुमारसम्भवतृतीयसर्गे ।

(ध) अत्रेति । भगवतः शिवस्य रतिरुद्बुद्धमात्रा तादृग्दृष्टिपातरूपानुभावेनाभिव्यक्तापि उद्दीपन-सञ्चारिभावयोरभावात् प्राथमिकत्वाच्च भावरूपैव, न रसः । यत्तु केचिदत्र अधरोष्ठयोर्विम्बफलसाम्य-रूपोद्दीपनविभावेन लज्जादिव्यभिचारिभावाक्षेपेण च परिपोषिता रतिरियं रसतामेतीति वदन्ति, तदसत् ; रतेरुत्पत्तिक्षण एव तदुद्दीपनपरिपोषणयोरसम्भवात् । अतएव उद्बुद्धमात्रः स्थायी भाव इत्युक्तम् ।

(न) "सञ्चारिणः प्रधानानि" इति स्वोक्तिं प्रत्येव स्वकीयपूर्वोक्तिविरोधमाशङ्कते नन्विति । उक्तं "ततः सम्वलितः सर्वो विभावादिः सचेतसाम् । प्रपाणकरसन्यायाच्चर्व्यमाणो रसो भवेत् ॥" इत्यनेनेति शेषः । अत्र प्रपाणकरसवदित्यादिकन्तु तस्यैवार्थप्रदर्शनमात्रमिति बोध्यम् ।

(प) यथेति । यथा प्रपाणके रसे खण्डमरीचादेः एकीभावे मिश्रणे सत्यपि क्वापि कदाचित् कस्यचित् खण्डस्य मरीचादेर्वा उद्रेको रसनायामाधिक्येनानुभवः मिश्रणतारतम्यात्, तथा विभावाद्येक-ज्ञानगोचरेऽपि रसे क्वापि कस्यचित् सञ्चारिण उद्रेकः प्राधान्येनाभिव्यक्तिर्भवति काव्यग्रन्थवैचित्र्यात् । अतो न विरोध इति भावः ।

(फ) अनौचित्येति । रसभावयोः अनौचित्येन शास्त्रीयनियमस्वाभाविकनियमादिविरुद्धत्वेन प्रवृत्तत्वे विद्यमानत्वे आभासो दोषो भवति । तथा च क्वचित् अयोग्यालम्बनविषयस्थायिभावकत्वं क्वचिद्वा भावमात्रस्य अयोग्यपात्रवृत्तित्वं रसभावयोराभास इत्यर्थः । अयोग्यत्वञ्च कदाचित् धर्म्मशास्त्रनिषेधात् कदाचिदसम्भवात् कदाचित् तत्त्वबोधाक्षमत्वाच्च बोद्धव्यम् ।

(ब) अनौचित्यपदस्य तात्पर्य्यमाह अनौचित्यमिति । भरत-भोजराजादिभिराप्ततमैः प्रणीतानि

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र बालव्युत्पत्तये एकदेशतो दर्श्यते (भ) ।

२३८ । उपनायकसंस्थायां मुनिगुरुपत्नीगतायाञ्च ।
बहुनायकविषयायां रतौ तथाऽनुभयनिष्ठायाम् ॥
प्रतिनायकनिष्ठत्वे तद्वदधमपात्रतिर्य्यगादिगते ।
शृङ्गारेऽनौचित्यं रौद्रे गुर्वादिगतकोपे ॥
शान्ते च हीननिष्ठे गुर्वाद्यालम्बने हास्ये ।
ब्रह्मवधाद्युत्साहेऽधमपात्रगते तथा वीरे ॥
उत्तमपात्रगतत्वे भयानके ज्ञेयमेवमन्यत्र । (म)

---

लक्षणानि येषां तेषाम् । अतएव तत्तदुक्तसामग्रीणां नाप्राधान्यमायाङ्केति भावः । सामग्रीरहितत्वे पात्रा-लम्बनादीनां योग्यतादिकारणसमूहासत्त्वे सति एकदेशयोगित्वस्य स्थायिभावादिविषयदशयुक्तत्वस्य उपलक्षण-परम् । तथा च यत्र पात्रालम्बनादीनां योग्यता नास्ति अथ च केवलं स्थायिभाव उद्दीपनादिभावो वा वर्त्तते तादृशावस्थैवात्र अनौचित्यपदेनोच्यते इति सरलार्थः ।

(भ) परवर्त्तिकारिकासमूहोक्तेराशयमाह तत्रेति । तत्र अनौचित्येषु, बालव्युत्पत्तये अबोधानां बोधाय, एकदेशतः कतिपयस्थले ।

(म) उपेति । परिणीताया नायिकाया रतावनुरागे उपनायकसंस्थायाम् उपपतिविषयायां सत्यां शृङ्गारे रसे अनौचित्यं स्यात्, उपपतिविषयकानुरागस्य धर्म्मशास्त्रनिषिद्धत्वेन अयोग्यालम्बनविषयकत्वात् । नायकस्य रतौ मुनिपत्नीगुरुपत्नीगतायां सत्यां शृङ्गारे अनौचित्यम्, तस्या अपि रतेस्तथैवायोग्यालम्बनविषयकत्वात् । वेश्यायाः कन्याया वा रतौ बहुनायकविषयायां सत्यां शृङ्गारे अनौचित्यम्, बहुष्वेकस्या रसघटनोप-योगिपूर्णरतेरसम्भवात् । तथा रतौ अनुभयनिष्ठायां नायकस्य नायिकां प्रति रतेः सत्त्वे नायिकायाश्चासत्त्वे तथा नायिकाया नायकं प्रति रतेः सत्त्वे नायकस्य चासत्त्वे शृङ्गारे अनौचित्यम्, तस्या अपि रतेस्तथा पूर्णत्वासम्भवात् । कन्याया नायिकाया रतेः प्रतिनायकनिष्ठत्वे नायकविपक्षवर्त्तित्वे सति शृङ्गारे अनौचित्यम्, तस्या अपि रतेः नायकीयबाधासत्त्वेन तथा पूर्णत्वासम्भवात् । कन्याया इत्यभिधानात् "उपनायकसंस्थाया"मित्यनेन, नायक-प्रतिनायकयोर्द्वित्वेन बहुत्वाभावात् "बहुनायकविषयाया"मित्यनेन, प्रतिनायकस्यापि तस्यां रतिसत्त्वात् "अनुभयनिष्ठाया"मित्यनेन च सह नास्य पौनरुक्त्यम् । तद्वत् अनुरागे अधमपात्रे भिल्लादिनीच-जातीये तथा तिर्य्यगादौ मनुष्येतरप्राणिषु तापसादौ च गते वर्त्तमाने सति शृङ्गारे अनौचित्यम्, तेषामनुराग-तत्त्वबोधाक्षमत्वात् । गुर्वादिगतकोपे सति रौद्रे रसे अनौचित्यम्, गुर्वादिं प्रति कोपस्य धर्म्मशास्त्रनिषिद्धत्वेन अयोग्यालम्बनविषयकत्वात् । शमे हीननिष्ठे नीचजातीयपात्रगते शान्ते रसे च अनौचित्यम्, तादृशपात्रस्य शमतत्त्वबोधाक्षमत्वात् । हास्ये गुरुमुन्यादिरेव आलम्बनं यस्य तादृशे सति हास्यरसे अनौचित्यम्, तादृश-हास्यस्य धर्म्मशास्त्रनिषिद्धत्वेन अयोग्यालम्बनविषयकत्वात् । ब्रह्मवधे आदिशब्दात्, मुन्यादिवधे अधमस्य प्रति

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र रतेरुपनायकनिष्ठत्वे यथा मम ।

"स्वामी मुग्धतरो वनं घनमिदं बालाहमेकाकिनी
क्षोणीमावृणुते तमालमलिनच्छाया तमःसन्ततिः ।
तन्मे सुन्दर ! मुञ्च कृष्ण ! सहसा वर्त्मेति गोप्या गिरः
श्रुत्वा तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः ॥" (य)

बहुनायकनिष्ठत्वे यथा—

"कान्तास्त एव भुवनत्रितयेऽपि मन्ये
येषां कृते सुतनु ! पाण्डुरयं कपोलः ।" (र)

अनुभयनिष्ठत्वे यथा—मालतीमाधवे नन्दनस्य मालत्याम् (ल) ।

---

दानदययोः क्षत्रियधर्म्मं च विषये उत्साहे सति वीरे अनौचित्यम्, तादृशोत्साहस्य धर्म्मशास्त्रनिषिद्धत्वेन अयोग्यालम्बनविषयकत्वात् ; तथा उत्साहे अधमपात्रगते च सति वीरे अनौचित्यम्, तन्नीतोत्साहस्यासम्भवत्वेन अयोग्यपात्रगतत्वात् । तथा भयस्य उत्तमपात्रगतत्वे सति भयानके रसे च औचित्यम्, तत्रापि भयस्यासम्भवत्वेन अयोग्यपात्रगतत्वात् ।

अन्यत्राप्येवं ज्ञेयमिति । तथा च गुरुतरापराधेन राजदण्डितगतशोके करुणे, ब्रह्मज्ञानिगतजुगुप्से बीभत्से, अभिज्ञमायाविनिष्ठविस्मये अद्भुते, दारुणशत्रुनिष्ठस्नेहे च वत्सले अनौचित्यमनुसन्धेयम् ।

(य) स्वामीति । हे कृष्ण ! स्वामी मम परिणेता मुग्धतरः अतीवनिर्बोधः सुतरां विलम्बे तत्प्रहारप्राप्तिरिति, तेन मे रतितृप्तिर्न जायत इति च सूचितम् । इदं वनं घनम् । अतो भयङ्करमेवेति, एतदेव रमणयोग्यं स्थानमिति च द्योतितम् । अहमेकाकिनी बाला । अतो विलम्बो न युक्त इति रमणे कश्चित् प्रतिबन्धकोऽपि नास्तीति च ध्वनितम् । तमालवत् मलिना छाया यस्या सा: तादृशी तमःसन्ततिरन्धकारराशिः क्षौणीं पृथिवीम् आवृणुते । अतो भीषणोऽयं समय इति आवयो रमणं नान्योऽपि कश्चिज्जानीयादिति च ध्वनितम् । तत्तस्मात् हे सुन्दर ! सौन्दर्य्येण मन्मनोमोहन ! एतेन त्वामपहाय गन्तुमेव न शक्नोमीति द्योतितम् । सहसा शीघ्रमेव मे मम वर्त्म गृहगमनपथं मुञ्च त्यज, इति इत्थं गोप्याः कस्याश्चिद्गोपिकाया गिरो वाक्यानि श्रुत्वा, तां गोपीं परिरभ्य आलिङ्ग्य मन्मथकलासक्तो रमणव्यापृतो हरिः वो युष्मान् पातु ।

अत्र स्वामी मुग्धतर इत्यनेनात्मनोऽन्यपरिणीतत्वसूचनादस्या वक्तृनायिकायाः कृष्ण उपनायक एवेति गम्यते ।

(र) कान्ता इति । हे सुतनु ! सुन्दरि ! अयं कपोलस्तव गण्डदेशः येषां नायकानां कृते निमित्ते पाण्डुर्विरहात् पाण्डुवर्णो जातः, भुवनत्रितयेऽपि मध्ये त एव नायकाः कान्ता मनोज्ञा इत्यहं मन्ये ।

अत्र येषां ते कान्ता इति बहुवचनवशान्नायिकाया बहुनायकनिष्ठरतिः प्रतीयते ।

(ल) अन्विति । नन्दनस्य नन्दननामकस्य राजसुहृद एव मालत्यां रतिर्न तु मालत्या अपि तत्र नन्दने रतिरिति द्रष्टव्यम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"पश्चादुभयनिष्ठत्वेऽपि प्रथममेकनिष्ठत्वे रतेराभासत्वम्" इति श्रीमल्लोचनकाराः । तत्रोदाहरणं यथा—रत्नावल्यां सागरिकाया अन्योन्य-सन्दर्शनात् (१) प्राक् वत्सराजे रतिः (व) ।

प्रतिनायकनिष्ठत्वे यथा—हयग्रीववधे हयग्रीवस्य जलक्रीड़ावर्णने ।

अधमपात्रगतत्वे यथा—

"जघनस्थलनद्धपत्रवल्ली गिरिमल्लीकुसुमानि कापि भिल्ली ।
अवचित्य गिरौ पुरो निषण्णा स्वकचानुत्कचयाञ्चकार भर्त्रा ॥" (श)

तिर्य्यग्गतत्वे यथा—

"मल्लीमतल्लीषु वनान्तरेषु वल्ल्यन्तरे वल्लभमाह्वयन्ती ।
चञ्चद्विपञ्चीकलनादभङ्गी-सङ्गीतमङ्गीकुरुते स्म भृङ्गी ॥" (ष)

आदिशब्दात्तापसादयः (स) ।

रौद्राभासो यथा—"रक्तोत्फुल्लविशाललोलनयनः कम्पोत्तराङ्गो मुहुः
मुक्त्वा कर्णमपेतभीर्धृतधनुर्बाणो हरेः पश्यतः ।

(व) पश्चादिति । आभासत्वं शृङ्गाराभासत्वम् । रतेरेकनिष्ठत्वं यावदिति शेषः ।

(श) जघनेति । जघनस्थली कटीदेशात् पश्चाद्भागे नद्धा धृता पत्रवल्ली पत्रलता यया ता तथोक्ता, कापि भिल्ली भिल्लरमणी गिरिमल्लीकुसुमानि कुटजकुसुमानि अवचित्य आहृत्य पुरो भर्तुरग्रतः निषण्णा उपविष्टा सती, भर्त्रा स्वकचान् निजकेशात् उत्कचयाञ्चकार संयमयामास ।

अत्रानुरागस्य तत्त्वबोधाक्षमाधमनायकनायिकागतत्वेन शृङ्गाराभासः ।

(ष) मल्लीति । भृङ्गी भ्रमरी, मल्लीभिर्मल्लिकाकुसुमैः मतल्लीषु प्रशस्तेषु वनान्तरेषु काननाभ्यन्तरेषु वल्ल्यन्तरे अन्यस्यां लतायां मधुपानोपविष्टमिति शेषः वल्लभं प्रियं भ्रमरम् आह्वयन्ती रमणार्थमामन्त्रयन्ती सती, चञ्चन्त्याः क्वणन्त्याः विपञ्च्याः सप्ततन्त्रीशालिन्या वीणायाः कलनादभङ्ग्या मधुरास्फुटध्वनिप्रकारेण सङ्गीतगानम् अङ्गीकुरुते स्म आददौ चकारेत्यर्थः । "मधु द्विरेफः कुसुमैकपात्रे" इत्यादेः प्रकारान्तरप्रदर्शनमिदम् ।

अत्रानुरागस्य तत्त्वबोधाक्षमतिर्य्यग्गतत्वात् शृङ्गाराभासः ।

(स) आदीति । "अधमपात्रतिर्य्यगादिगते" इत्यत्र आदिशब्दादित्यर्थः । अत्राप्यादिशब्दात् उन्माद-रोगिप्रभृतिपरिग्रहः । तत्र तापसगतानुरागो यथा कादम्बर्य्याम्—"तस्यास्तु तमवलोकयन्त्याः प्रेमसन्दमुकुलिते-नानन्दवाष्पभरतरङ्गतरलतारेण लोचनयुगलेन रूपमास्वादयन्त्या जृम्भिकारम्भमन्थरमुखविन्यस्तहस्तपल्लवाया मन्मथविकृतं मन आसीत् ।"

अत्रानुरागतत्त्वबोधाक्षमश्वेतकेतौ लक्ष्म्या अनुरागेण शृङ्गाराभासः ।

(ह) रक्तोत्फुल्लेति । तदानीमपि कर्णवधासामर्थ्येन गाण्डीवादि निन्दन्तं युधिष्ठिरं हन्तुमुद्यते

(१) अन्योन्यदर्शनादिति पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आक्षातः कटु कौन्तिभिः स्वमसकृद्दोर्विक्रमं कीर्त्तयन्
अंसास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्जुनः ॥" (ङ)

भयानकाभासो यथा—

"अशक्नुवन् सोढुमधीरलोचनः सहस्ररश्मेरिव यस्य दर्शनम् ।
प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिकः ॥" (च)

स्त्रीनीचविषयमेव हि भयं रसप्रकृतिः (क) ।

एवमन्यत्र (ख) ।

## २३९ । भावाभासो लज्जादिके तु वेश्यादिविषये स्यात् ॥ (ग)

अर्जुने परिजनस्योक्तिरियम् । रक्ते क्रोधेन रक्तवर्णे उत्फुल्ले प्रकाशिते विशाले विस्तृते लोले आघूर्णिते च नयने नेत्रद्वयं यस्य सः, मुहुर्वारं वारं कम्प उत्तरः अधिको येषु तादृशानि अङ्गानि यस्य सः, कर्णं मुक्त्वा विहाय अपेतभीस्त्यक्तभयः, धृतधनुर्बाणः, कटुकौन्तिभिर्युधिष्ठिरस्य कटुवाक्यैः आक्षात उत्तेजितः, अंसयोः स्कन्धयोः आस्फोटे हस्ताघाते पटुस्तत्परः, असौ अर्जुनः, असकृत् वारं वारं स्वं स्वकीयं दोर्विक्रमं बाहुबलं कीर्त्तयन् सन्, पश्यत एव हरेः पश्यन्तं कृष्णमनादृत्यैव युधिष्ठिरं हन्तुं शिविरं प्रविष्टः ।

अत्रार्जुनक्रोधस्य ज्येष्ठसहोदरयुधिष्ठिररूपगुरुगतत्वात् रौद्ररसाभासः ।

(च) अशक्नुवन्निति । कौशिको देवेन्द्रः पेचकश्च, सहस्ररश्मेः सूर्यस्येव यस्य रावणस्य दर्शनं सोढुम् अशक्नुवन्, अधीरलोचनः अस्थिरदृष्टिः बिभ्यत् भीतश्च सन् हेमाद्रेर्गुहेव गृहं तस्य अन्तरं मध्यं प्रविश्य दिवसानि निनाय अतिवाहयामास । श्लोकोऽयं शिशुपालवधकाव्यप्रथमसर्गे ।

अत्र भयस्य देवराजनिष्ठत्वेन भयानकरसाभासत्वम् ।

(क) नन्वत्र को दोषो यद्भयानकरसस्याभासत्वमभिधीयत इत्याह स्त्रीति । हि यस्मात्, स्त्री स्त्रीजातिः नीचो निकृष्टजनश्च विषयः पात्रमाश्रयो यस्य तत्तादृशमेव भयं रसस्य भयानकरसस्य प्रकृतिर्मूलं स्थायी भाव इति यावत् "स्त्रीनीचप्रकृतिः" इत्यौचित्येनैव तत्प्रकरणोक्तत्वात् । अतएवात्र भयस्य उत्तमपात्रगतत्वमेवा-नौचित्याक्षेप इति भावः ।

(ख) एवमिति । अन्यत्र शमादीनां हीननिष्ठत्वादौ एवमुदाहरणमूह्यमित्यर्थः ।

अत्र शमस्य हीननिष्ठत्वे शान्तरसाभासो यथा—

"ज्ञानपाकात् श्वपाकोऽपि पुराणश्रवणादयम् । भवस्यासारतां पश्यन् मोक्षाय निदधे मतिम् ॥"

हासे गर्वालम्बने हास्यरसाभासो यथा उत्तररामचरिते—

"आयदं अणज्झायकारणं सुविसेसभूदं अज्ज जिण्णकुच्चाणं ।"

अत्र जीर्णकूर्चानां मध्ये गुर्वोर्वाल्मीकेरध्यन्तःपातात् हास्यरसाभासत्वम् ।

उत्साहे अधमपात्रगते वीराभासो यथा मम वङ्गीयप्रतापनाटके—

"सैनिकाः । हं हो । सावधाणो वि उवालहामि, ता चिट्ठ दाव ।"

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्पष्टम् (घ) ।

२४० । भावस्य शान्तावुदये सन्धिमिश्रितयोः क्रमात् ।
भावस्य शान्तिरुदयः सन्धिः शबलता मता ॥ (ङ)

क्रमेण यथा—

"सुतनु ! जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित् कोप एवंविधोऽभूत् ।
इति निगदति नाथे तिर्य्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किञ्चित् ॥" (च)

अत्र वाष्पमोचनेन ईर्ष्याख्यसञ्चारिभावस्य शमः (छ) ।

"चरणपतनप्रत्याख्यानात् प्रसादपराङ्मुखे
निभृतकितवाचारेत्युक्त्वा रुषा परुषोक्तिते ।
व्रजति रमणे निश्वस्योच्चैः स्तनस्थितहस्तया
नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता ॥" (ज)

---

(ग) भावेति । लज्जायाम् आदिशब्दात् निर्वेदादिके च व्यभिचारिभावे, वेश्या आदिशब्दात् दूत्यादयश्च विषयः आश्रयो यस्य तादृशे सति तु भावाभासः स्यात् । अत्यन्तनिर्लज्जस्वभावेषु वेश्यादिषु लज्जादीनामसम्भवेनानौचित्यादिति भावः ।

(घ) स्पष्टमिति । उदाहरणमिति शेषः । अत्र लज्जाया वेश्यानिष्ठत्वे भावाभासो यथा मम ।

"अनन्तभङ्गी परिभूषिताङ्गी मञ्जीरमञ्जुस्वनशालिनीयम् ।
वेशाङ्गना कापि विलोक्य लोकं नतानना राजति राजमार्गे ॥"

(ङ) भावस्येति । भावस्य यस्य कस्यचित् प्रागुक्तस्य व्यभिचारिभावस्य शान्तौ निवृत्तौ भावस्य शान्तिः भावशान्तिनामा काव्यस्यात्मा । एवमन्यत्रापि व्याख्येयम् । कस्यचिद्भावस्य उदये उत्पत्तौ भावोदयनामा, कयोश्चिद्भावयोः सन्धौ समानभावेनावस्थाने भावसन्धिनामा, केषाञ्चिद्बहूनां भावानां समानभावेन मिश्रितत्वे भावशबलतानामा च काव्यस्यात्मा भवेत् ।

(च) भावशान्तेरुदाहरणमाह सुतन्विति । हे सुतनु ! कोपं जहिहि मुञ्च, पादानतं मां पश्य, कदाचिदपि तव एवंविधः कोपः पूर्वं न खल्वभूत् । नाथे भर्त्तरि इति निगदति वदति सति, तिर्य्यगामीलिताक्ष्या वक्रभावेनोन्मुद्रितनयनया कयाचित् नायिकया अनल्पं बहुलं नयनजलं मुक्तं पातितम्, किन्तु किञ्चिदपि न उक्तं न भाषितम् ।

(छ) अत्रेति । वाष्पविसर्जने जायमाने ईर्ष्यादिनिवृत्तेः सर्वत्र दर्शनादिति भावः ।

(ज) भावोदयस्योदाहरणं दर्शयति चरणेति । चरणयोः स्वपादयोः पतनेऽपि प्रत्याख्यानात् कोपापरित्यागेन निरासात् प्रसादपराङ्मुखे प्रिया प्रति प्रसन्नतारहिते, हे निभृतकितवाचार ! गुप्तधूर्त्तव्यवहार ! इति

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र विषादस्योदयः (झ) ।

"नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् ।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे ॥" (ञ)

अत्र हर्षविषादयोः सन्धिः (ट) ।

"क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो ! कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः ! स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं पास्यति (१) ॥" (ठ)

अत्र वितर्कौत्सुक्य-मति-स्मरण-शङ्का-दैन्य-धृति-चिन्तानां शवलता (ड) ।

इति साहित्यदर्पणे रसभावादिनिरूपणो नाम
तृतीयः परिच्छेदः ॥०॥

---

उक्ता रुषा क्रोधेन परुषीकृते निष्ठुरीकृते रमणे प्रिये व्रजति परित्यज्य प्रस्थिते सति, उच्चैर्निश्वस्य स्तनस्थित-हस्तया वक्षसि दत्तहस्तया कयापि नायिकया नयनसलिलच्छन्ना वाष्पावृता दृष्टिः सखीषु निवेशिता अर्पिता ।

(झ) अत्रेति । विषादोदयाभावे दृष्टेर्नयनसलिलच्छन्नत्वासम्भवादिति भावः ।

(ञ) भावसन्धिं प्रदर्शयति नयनेति । नयनयुगस्य आसेचनकम् अतीवतृप्तिकरम्, मानसवृत्त्यापि मनोरथेनापि दुष्प्रापं भुवि विरलत्वात् दुर्लभम्, मदिराक्ष्याः खञ्जननयनाया इदं रूपं मे मम हृदयं मदयति आह्लादयति, दुनोति च दुष्प्रापत्वात् सन्तापयति च ।

(ट) अत्रेति । वक्तुश्चित्ते समानभावेन क्रमिकावस्थानादिति भावः ।

(ठ) भावशवलतामुदाहरति क्वेति । विक्रमोर्वश्यामुर्वशीविरहादुन्मत्तेन पुरूरवसा उक्तमिदम् । आत्महत्यारूपम् अकार्यं क्व, शशलक्ष्मणश्चन्द्रस्य निर्मलं कुलञ्च क्व, नितान्तनिष्पापे चन्द्रवंशे समुत्पन्नस्य मे किमात्महत्या कर्त्तव्येति वितर्कः । भूयः पुनरपि सा उर्वशी मया दृश्येत किम् ? इत्यौत्सुक्यम् । दोषाणां दुष्कार्य्याणां प्रशमाय निवारणाय मे मम श्रुतं शास्त्रज्ञानं स्थितम् । सुतरां महादुष्कार्य्यरूपा आत्महत्या न कर्त्तव्येति मतिः । अहो ! आश्चर्य्यम् । कोपेऽपि उर्वश्या मुखं कान्तं सुन्दरमिति स्मृतिः । अपकल्मषा निष्पापाः कृतधियो मनस्विनो जनाः किं वक्ष्यन्ति अकार्य्यकारिणं मां प्रतीति शेषः । अत्र शङ्का । सा उर्वशी स्वप्नेऽपि मया दुर्लभेति दैन्यम् । अतएव हे चेतः ! स्वास्थ्यं स्थिरत्वम् उपेहि प्राप्नुहि इति धृतिः । कः खलु धन्यो युवा तस्या उर्वश्या अधरं पास्यति । अत्र चिन्ता ।

(ड) अत्रेति । शवलता क्रमेण जायमानत्वात् मिश्रितत्वेन विचित्रता ।

इति महामहोपाध्याय-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां
साहित्यदर्पणटीकायां कुसुमप्रतिमायां तृतीयः परिच्छेदः ॥०॥

---

(१) धास्यति इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# चतुर्थः परिच्छेदः ।

— —ः०ः— —

अथ काव्यभेदमाह—(क)

१ । काव्यं ध्वनिर्गुणीभूत-व्यङ्ग्यञ्चेति द्विधा मतम् (ख) ।

तत्र—(ग)

२ । वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत् काव्यमुत्तमम् ॥ (घ)

वाच्यादधिकचमत्कारिणि व्यङ्ग्यार्थे ध्वन्यते अस्मिन्निति व्युत्पत्त्या ध्वनिर्नामोत्तमं काव्यम् (ङ) ।

३ । भेदौ ध्वनेरपि द्वा वुदीरितौ लक्षणाभिधामूलौ ।
अविवक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च ॥ (च)

---

(क) अथेति । अथ काव्यलक्षणघटकप्रासङ्गिकवाक्यरसनिरूपणानन्तरम् । तत् काव्यं कतिविधमित्याकाङ्क्षायां प्रसङ्गसङ्गत्या तत्काव्यस्य भेदमाह मूलकार इत्यर्थः ।

(ख) काव्यमिति । काव्यं द्विधा द्विप्रकारं मतम् । तत्राद्यः प्रकारो ध्वनिः, द्वितीयः प्रकारस्तु गुणीभूतव्यङ्ग्यमिति । तत्र कलत्रं दारा इत्यादिवदुभयोरप्यजहल्लिङ्गतया काव्यमिति क्लीवेन ध्वनिरिति च पुंसा निर्देशः । गुणीभूतं वाच्यार्थादप्रधानीभूतं व्यङ्ग्यं व्यङ्ग्यार्थो यस्मिन्निति गुणीभूतव्यङ्ग्यं काव्यम् । अस्य विशेषो वक्ष्यते ।

(ग) तत्रेति । तयोर्ध्वनि-गुणीभूतव्यङ्ग्ययोर्मध्ये इत्यर्थः ।

(घ) ध्वनिलक्षणमाह वाच्येति । व्यङ्ग्ये व्यङ्ग्यार्थे, वाच्यात् वाच्यार्थात् अतिशयश्चमत्कारातिशयः अस्यास्तीति स तथोक्तस्तस्मिन् सति ध्वनिः । तथा च वाच्यार्थादधिकचमत्कारजनकव्यङ्ग्यार्थवत् काव्यत्वं ध्वनित्वमित्यर्थः । तच्च ध्वनिरूपं काव्यम् उत्तमं गुणीभूतव्यङ्ग्य-निर्व्यङ्ग्यात्मकभेदद्वयापेक्षया उत्कृष्टम्, वाच्यार्थादधिकचमत्कार्यर्थप्रकाशकत्वादेवेति भावः । एतेन यथाकथञ्चिद्व्यङ्ग्यार्थसत्त्वात् गुणीभूतव्यङ्ग्यं काव्यं मध्यमम्, सर्वथा व्यङ्ग्यार्थासत्त्वाच्च अव्यङ्ग्यं काव्यमधममिति प्राचीनवदेव प्रतिपादितम् ।

(ङ) वाच्यातिशयिनीतिशब्दस्यार्थप्रदर्शनपूर्वकं ध्वनिशब्दस्य योगरूढत्वं प्रदर्शयति वाच्येति । व्यङ्ग्यार्थे सतीत्यर्थः । ध्वन्यते व्यञ्जनया बोध्यते वाच्यार्थादधिकचमत्कारी अर्थः अस्मिन् काव्ये इत्यर्थः । तथा च ध्वनधातोरधिकरणवाच्ये औणादिकं इकप्रत्ययः पुंसि । उक्तविधकाव्ये ध्वनिशब्दस्य योगरूढत्वाच्च गुणीभूतव्यङ्ग्यबोधकत्वमिति बोध्यम् ।

(च) भेदाविति । लक्षणाभिधे मूले ययोस्तौ लक्षणामूलः अभिधामूलश्चेत्यर्थः द्वौ ध्वनेरपि भेदौ

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्राविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः । लक्षणामूलत्वादेवात्र वाच्यमविवक्षितं वाधितस्वरूपम् (छ) । विवक्षितान्यपरवाच्यस्त्वभिधामूलः । अतएवात्र वाच्यं विवक्षितम् । अन्यपरं व्यङ्ग्यनिष्ठम् । अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः । यथा—प्रदीपो घटस्य (ज) । अभिधामूलस्य वहुविषयतया पश्चान्निर्द्देशः (झ) ।

अविवक्षितवाच्यस्य भेदावाह—

४ । अर्थान्तरं संक्रमिते वाच्येऽत्यन्तं तिरस्कृते
अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति ॥ (ञ)

---

प्रकारौ उदीरितौ कथितौ । तयोर्मध्ये अन्य एकः लक्षणामूल इत्यर्थः अविवक्षितवाच्यस्तदाख्यः । तथा च लक्षणामूलत्वादेव न विवक्षितं वाच्यं वाच्यार्थो यस्मिन् सः । द्वितीयोऽभिधामूलस्तु विवक्षितान्यपर-वाच्यस्तदाख्यः, तथा च अभिधामूलत्वादेव विवक्षितम् अन्यपरं व्यङ्ग्यार्थबोधकमपि वाच्यं वाच्यार्थो यस्मिन् सः ।

(छ) तत्रेति । तत्र तयोरविवक्षितवाच्य-विवक्षितान्यपरवाच्ययोर्मध्ये । अत्र अविवक्षितवाच्ये । वाच्यं मुख्योऽर्थः । अविवक्षितत्वे हेतुमाह वाधितस्वरूपमिति । केनापि कारणेन अनुपपन्नावस्थ-मित्यर्थः । तथा च अविवक्षितवाच्ये ध्वनौ मुख्यार्थस्य केनापि कारणेन वाधितत्वादेव तस्य न विवक्षितत्वमिति भावः ।

(ज) विवक्षितेति । अतएव अभिधामूलत्वादेव । अत्र विवक्षितान्यपरवाच्ये ध्वनौ । वाच्यं मुख्योऽर्थः । विवक्षितान्यपरवाच्यशब्दान्तर्गतम् अन्यपरशब्दं व्याचष्टे अन्यपरमिति । व्यङ्ग्यनिष्ठं व्यङ्ग्यार्थतया पर्य्यवसितम् । प्रकाशयन्नेव अभिधाद्वारा बुद्धौ उपस्थापयन्नेव अभिधामूलव्यञ्जनाद्वारा व्यङ्ग्यार्थस्यापि प्रकाशक उपस्थापकः स्यादित्यर्थः । यथा—प्रदीपः स्वरूपं प्रकाशयन्नेव घटस्य प्रकाशकः, तथेत्यर्थः ।

(झ) नन्वभिधामूलत्वेन प्रधानत्वात् प्रथमं बुद्धिविषयत्वाच्च विवक्षितान्यपरवाच्यस्यैव ध्वनेः प्रथमं निर्द्देशौचित्ये कारिकायां कथं तस्य पश्चान्निर्द्देश इत्याह अभिधेति । तथा च सूचीकटाहन्यायेन अल्प-विषयतया लक्षणामूलस्य अविवक्षितवाच्यस्य प्राङ्निर्द्देशः, अभिधामूलस्य तु बहुविषयतया पश्चान्निर्द्देश इति भावः ।

(ञ) अर्थेति । वाच्ये मुख्यार्थे अर्थान्तरं संक्रमिते उपादानलक्षणया स्वविशेषार्थतां प्राप्ते अत्यन्तं तिरस्कृते लक्षणलक्षणया सर्वथैव प्रतीत्यविषये च सति अविवक्षितवाच्योऽपि ध्वनिः द्वैविध्यं द्विप्रकारत्वं ऋच्छति प्राप्नोति । तथा च उपादानलक्षणया यस्य कस्यापि सामान्यरूपमुख्यार्थस्य स्वविशेषार्थ-रूपत्वेन पर्य्यवसाने सति, अर्थान्तरसंक्रमितवाच्यो नाम ध्वनिः, तथा लक्षणलक्षणया मुख्यार्थस्य इतरार्थ-रूपतया पर्य्यवसानेन सर्वथैवाप्रतीतिविषयत्वात् अत्यन्ततिरस्कृतवाच्यो नाम ध्वनिरिति सरलार्थः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अविवक्षितवाच्यो नाम ध्वनिः। अर्थान्तरसंक्रमितवाच्यः अत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः। यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपे अर्थान्तरे परिणमति तत्र मुख्यार्थस्य स्वविशेषरूपार्थान्तरसंक्रमितत्वादर्थान्तरसंक्रमितवाच्यत्वम् (ट)। यथा—

"कदली कदली करभः करभः करिराजकरः करिराजकरः।
भुवनत्रितयेऽपि बिभर्त्ति तुलामिदमूरुयुगं न चमूरुदृशः॥" (ठ)

अत्र द्वितीयकदल्यादिशब्दाः पौनरुक्त्यभिया सामान्यकदल्यादिरूपे मुख्यार्थे वाधिता जाड्यादिगुणविशिष्टकदल्यादिरूपमर्थं बोधयन्ति (ड)। जाड्याद्यतिशयश्च व्यङ्ग्यः (ढ)।

---

(ट) अर्थान्तरसंक्रमितवाच्यशब्दस्य व्युत्पत्त्यर्थमाह यत्रेति। अनुपयुज्यमानः कयाचिद्वाधया स्वान्वयबोधं जनयितुमशक्नुवन्नित्यर्थः। परिणमति उपादानलक्षणया पर्य्यवस्यति। स्वविशेषरूपे अर्थान्तरे संक्रमितत्वात् उपादानलक्षणया सञ्चारितत्वात्। अर्थान्तरे संक्रमितं वाच्यं यत्र सः अर्थान्तरसंक्रमितवाच्यः।

(ठ) कदलीति। काञ्चित् सुन्दरीमवलोक्य कस्यापि रसिकस्योक्तिरियम्। कदली रम्भातरुः, कदली नितान्तशीतलताविशिष्टो रम्भातरुरेव। अतः सा नातिशीतोष्णरूपस्य अस्योरुयुगस्य तुलां न बिभर्त्तीति भावः। करभो हस्तस्य मणिबन्धदेशात् कनिष्ठाङ्गुलीपर्य्यन्तो देशः, करभः अत्यन्तखर्वस्तादृशदेश एव। सुतरां स यथासम्भवदीर्घस्य अस्योरुयुगस्य तुलां न बिभर्त्तीत्याशयः। करिराजस्य हस्तिश्रेष्ठस्य करः शुण्डा, करिराजकरः अत्यन्तकठिना हस्तिश्रेष्ठशुण्डैव। अतएव सोऽपि नितान्तकोमलस्य तुलां न बिभर्त्तीत्यभिप्रायः। अतएव चमूरोर्हरिणविशेषस्येव दृशौ चक्षुषी यस्यास्तस्या अस्या नायिकाया इदम् ऊरुयुगं कर्त्तृ, भुवनत्रितयेऽपि तुलां कस्यापि सादृश्यं न बिभर्त्ति न धारयति; नायिकोरुयुगलस्य त्रिभुवनेऽपि कदली-करभ-करिराजकरभिन्नानामुपमानपदार्थानामभावात् तेषाञ्च तादवस्थ्यादिति भावः।

(ड) लक्ष्ये लक्षणं सङ्गमयितुमाह अत्रेति। आदिशब्देन करभ-करिराजकरशब्दयोर्ग्रहणं पौनरुक्त्यभिया एकार्थे प्रयुक्तयोर्द्वयोः शब्दयोराद्येनैव तदर्थप्रतीत्युपपत्तौ द्वितीयस्य वैयर्थ्यभयेन। अयन्तु मुख्यार्थवाधं प्रति हेतुरुक्तः। सामान्यः शीतोष्णादिसाधारणः। आदिशब्देन करभ-करिराजकररूपार्थयोः परिग्रहः। वाधिता अनुपपन्ना इति लक्षणां प्रति हेतुरुक्तः। जाड्यं शैत्यम्। आदिपदेन खर्वत्वकठिनत्वयोर्ग्रहणम्। एवमन्ययोरप्यादिशब्दयोरूह्यम्। बोधयन्ति "श्वेतो धावति" इत्यादाविव उपादानलक्षणयेति शेषः।

(ढ) लक्षणायाः प्रयोजनम् अत्रत्यध्वनित्वप्रयोजकञ्चाह जाड्येति। आदिपदेन खर्वत्वकठिनत्वयोर्ग्रहणम्। व्यङ्ग्यो लक्षणामूलव्यञ्जनया प्रतिपाद्यः। द्वितीयकदल्यादिशब्दैरिति शेषः।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यत्र पुनः स्वार्थं सर्वथा परित्यजन्नर्थान्तरे परिणमति, तत्र मुख्यार्थस्य अत्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वम् (ण)। यथा—

"निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते।" (त)

अत्रान्धशब्दो मुख्यार्थे बाधितः अप्रकाशरूपमर्थं बोधयति; अप्रकाशातिशयश्च व्यङ्ग्यः (थ)। अन्धत्वाप्रकाशत्वयोः सामान्यविशेषभावाभावान्नार्थान्तरसंक्रमितवाच्यत्वम् (द)। यथा—

"भम धम्मिअ! वीसत्थो सो सुणहो अज्ज मारिओ देण।
गोलावरीकच्छकुडङ्गवासिणा दरीअसिहेण॥" (ध)

अत्र भ्रम धार्म्मिकेत्यतो भ्रमणस्य विधिः प्रकृते अनुपयुज्यमानतया भ्रमणनिषेधे पर्य्यवस्यतीति विपरीतलक्षणाशङ्का न कार्य्या (न)। यत्र खलु

(ण) अत्यन्ततिरस्कृतवाच्याख्यं ध्वनिमुदाहर्त्तुं तदर्थं परिष्करोति यत्रेति। तुशब्दार्थे पुनःशब्दः। स्वार्थं मुख्यार्थम्। सर्वथा विशेष्यत्वेन विशेषणत्वेन च। परिणमति लक्षणलक्षणया पर्य्यवस्यति। शब्द इति शेषः। अत्यन्ततिरस्कृतत्वात् प्रतीतेरत्यन्ताविषयीकृतत्वात्।

(त) निश्वासेति। निश्वासेन निश्वासवाष्पपातेन अन्धः अप्रकाश आविलीभूत इत्यर्थः, आदर्शो दर्पण इव चन्द्रमाः कुज्झटिकायां चन्द्रो न प्रकाशते।

(थ) उदाहृते लक्षणं योजयितुमाह अत्रेति। बाधित इति। अन्धत्वं नाम दृष्टिशक्तिराहित्यम्; तस्य तु दर्पणे असम्भवात् प्राप्तस्यैव राहित्यसम्भवादिति भावः। अप्रकाशरूपम् आविलतास्वरूपम्। बोधयति लक्षणलक्षणयेति शेषः। अप्रकाशेत्याद्युक्तरीत्योऽपि पूर्ववद्बोध्यः।

(द) नन्वत्रापि अन्धशब्दार्थस्य अप्रकाशरूपार्थे संक्रमितत्वात् कथं नार्थान्तरसंक्रमितवाच्यरूपध्वनित्वमित्याह अन्धत्वेति। अन्धत्वस्य दृष्टिराहित्यरूपत्वात् अप्रकाशत्वस्य च आविलत्वरूपत्वात् व्यापकत्वव्याप्यत्वाभावेन अन्धत्वाप्रकाशत्वयोः सामान्यत्वतद्विशेषत्वाभावादित्यर्थः। एतेन सामान्यार्थस्य तद्विशेषार्थपर्य्यवसायित्वे अर्थान्तरसंक्रमितवाच्यत्वम्, मुख्यार्थस्य सर्वथा परित्यागे तु अत्यन्ततिरस्कृतवाच्यत्वमित्यनयोर्भेद इति प्रतिपादितम्।

(ध) कश्चिद्विप्रतिपन्नं प्रतिबोधयितुं विवादास्पदमुदाहरणमाह भम इति। "भ्रम धार्म्मिक! विश्वस्तः स श्वा अद्य मारितस्तेन। गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन॥" इति संस्कृतानुवादः। आवाससन्निहितोद्याने परपुरुषेण सह स्वैरविहारसमये प्रतिदिनमेव पुष्पचयनायागच्छन्तं स्वप्रेरितकुक्कुरोत्पातेनाप्यनिवर्त्तमानं कञ्चित् ब्राह्मणं प्रति कुलटाया उक्तिरियम्। हे धार्म्मिक! अद्य विश्वस्तः कुक्कुरोत्पाताभावेन आश्वस्तचित्तः सन् भ्रम पुष्पचयनाय पर्य्यट। येन हि अद्य गोदावर्य्या नद्या यः कच्छो जलप्रायदेशस्तत्र यत् कुञ्जं लतादिपिहितस्थानं तत्र वासिना तेन प्रसिद्धेन दृप्तसिंहेन स तवोत्पातकारी श्वा कुक्कुरो मारितः। एतावतो दिवसान् यावत्तव कुक्कुरोत्पात एवासीत्, अद्य तु साक्षाद्दृप्तः सिंह एवागतः; सुतरामद्यापि तत्र भ्रमणे तव मरणमेव भावीति कथमपि तत्र न भ्रमेत्यभिप्रायः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विधिनिषेधावुत्पद्यमानावेव (१) निषेधविध्योः पर्य्यवस्यतः, तत्रैव तदवसरः (प)। यत्र पुनः प्रकरणादिपर्य्यालोचनेन विधिनिषेधयोर्निषेधविधी अवगम्येते तत्र ध्वनित्वमेव (फ)। तदुक्तम्—

"क्वचिद्बाध्यतया ख्यातिः क्वचित् ख्यातस्य बाधनम्।
पूर्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु॥" (ब)

(न) अतएवात्र भ्रम इत्यस्य न भ्रम इत्यर्थे पर्य्यवसानात् लक्षणलक्षणात्मकविपरीतलक्षणया अत्यन्ततिरस्कृतवाच्यरूपो ध्वनिरिति कश्चित्। तन्मतं निरसितुमाह अत्रेति। प्रकृते कुलटाया अभिप्रेते स्वैरविहारे, अनुपयुज्यमानतया अनुपकारितया प्रत्युत प्रतिबन्धकतयेत्यर्थः। विपरीतलक्षणायास्तन्मूलकात्यन्ततिरस्कृतवाच्यध्वनेराशङ्का न कार्य्येति शिष्यान् प्रत्युपदेशः।

(प) कथं तदाशङ्का न कार्य्येत्याह यत्रेति। यत्र विधिश्रवणसमकालमेव निषेधप्रतीतिः, यत्र वा निषेधश्रवणसमकालमेव च विधिप्रतीतिरित्यर्थः। तदवसरः विपरीतलक्षणामूलकात्यन्ततिरस्कृतवाच्यध्वनेः सम्भवः। यथा—

"गच्छ गच्छसि चेत् कान्त! पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्॥"

अत्र गच्छेति विधिप्रतीतिसमकालमेव न गच्छेति निषेधप्रतीतेर्विपरीतलक्षणामूलकात्यन्ततिरस्कृतवाच्यरूपो ध्वनिः। एवं निषेधस्य विधिपर्य्यवसायित्वे उदाहरणमूह्यम्।

(फ) यत्र पुनरिति। विधिश्रवणात् परं प्रकरणादिपर्य्यालोचनेन निषेधोऽवगम्यते, निषेधश्रवणाच्च परं तथैव विधिरवगम्यते इत्यर्थः। ध्वनित्वमेव अभिधामूलकवस्तुध्वनित्वमेव, एवञ्च "भ्रम धार्म्मिक!" इत्यादौ भ्रमेति विधिश्रवणात् परं प्रकरणादिपर्य्यालोचनेन न भ्रमेति व्यङ्ग्यार्थप्रतीतेरभिधामूलकवस्तुध्वनिरेव, भ्रमेति वाच्यविध्यर्थस्य न भ्रमेति व्यङ्ग्यार्थनिष्ठत्वात्।

(ब) क्वचिदिति। क्वचित् प्रयोगे बाध्यतया शब्दानां श्रवणमात्रमेव अनुपपन्नान्वयतया ख्यातिः प्रतीतिः; क्वचित् प्रयोगे च ख्यातस्य उपपन्नान्वयतयैव प्राक् प्रतीतस्य, शब्दस्य बाधनं प्रकरणादिपर्य्यालोचनया पश्चाद्बाधज्ञानम्। तयोर्मध्ये पूर्वत्र शब्दश्रवणसमकालीनान्वयबोधबाधज्ञानस्थले लक्षणैव लक्षणामूलकध्वनिरेव स्यात्, लक्षणामन्तरेणान्वयबोधासम्भवेन लक्षणामूलकव्यञ्जनाप्रतिपाद्यध्वनेरेव युक्तत्वादिति भावः। उत्तरत्र उपपन्नान्वयबोधपरकालीनबाधज्ञानस्थले तु अभिधैव अभिधामूलकध्वनिरेव, अभिधयैवान्वयबोधसम्भवे लक्षणाश्रयस्यान्याय्यत्वेन अभिधामूलकव्यञ्जनाप्रतिपाद्यध्वनेरेवौचित्यादित्याशयः। एवञ्च प्राचीनमतेऽपि "गच्छ गच्छसि चेत् कान्त!" इत्यादौ सर्वथैव प्रियतमविच्छेदसहिष्णोर्नायिकायास्तद्वियोगघटकगमनानुमतेरत्यन्तासम्भवेन गच्छेतिश्रवणसमकालमेव बाधज्ञानाद्विपरीतलक्षणया न गच्छेति प्रतीत्या लक्षणामूलकव्यञ्जनाप्रतिपाद्यात्यन्ततिरस्कृतवाच्यरूपो ध्वनिरेव। एष एव चाक्षेपनामालङ्कारो वक्ष्यते। "भ्रम धार्म्मिक!" इत्यादौ तु भ्रमेतिश्रवणकालीनबाधज्ञानाभावात् तद्भ्रमणे स्वकीयस्वैरविहार-

(१) उत्पत्स्यमानावेवेति रामचरणसम्मतः पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्राद्ये मुख्यार्थस्यार्थान्तरे संक्रमणं प्रवेशः, न तु तिरोभावः ; अत एवात्राजहत्स्वार्था लक्षणा । द्वितीये तु स्वार्थस्यात्यन्तं तिरस्कृतत्वाज्जहत्स्वार्था (भ) ।

५ । विवक्षिताभिधेयोऽपि द्विभेदः प्रथमं मतः ।
असंलक्ष्यक्रमो यत्र व्यङ्ग्यो लक्ष्यक्रमस्तथा ॥ (म)

विवक्षितान्यपरवाच्योऽपि ध्वनिरसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः (य) ।

६ । तत्राद्यो रसभावादिरेक एवात्र गण्यते ।
एकोऽपि भेदोऽनन्तत्वात् संख्येयस्तस्य नैव यत् ॥ (र)

उक्तस्वरूपो रसभावादिरसंलक्ष्यक्रमव्यङ्ग्यः । अत्र व्यङ्ग्यप्रतीतेर्विभा-

---

व्याघात इति प्रकृतपर्यालोचनयैव परं बाधज्ञानोदयात् भ्रमेतिवाच्यभ्रमणविधिरूपार्थस्य न भ्रमेति भ्रमणनिषेधरूपव्यङ्ग्यार्थपरत्वेन विवक्षितान्यपरवाच्येति व्युत्पत्तेरपि सङ्गतेरभिधामूलध्वनित्वमेवोचितमिति सर्वं समञ्जसम् ।

(भ) नन्वनयोर्लक्षणामूलध्वन्योः कुत्र कीदृशी लक्षणेत्याह अत्रेति । अत्र अनयोर्लक्षणामूलध्वन्योर्मध्ये, आद्ये अर्थान्तरसंक्रमितवाच्यप्रकारे । मुख्यार्थस्य "कदली कदली" इत्यादौ द्वितीयकदल्यादिशब्दानां सामान्यकदल्यादिरूपवाच्यार्थस्य, अर्थान्तरे शैत्यादिगुणविशिष्टकदल्यादिरूपे । द्वितीये अत्यन्ततिरस्कृतवाच्यप्रकारे । स्वार्थस्य "निश्वासान्ध" इत्यादौ दृष्टिशक्तिराहित्यरूपान्धशब्दवाच्यार्थस्य ।

(म) लक्षणामूलध्वनिं निरूप्येदानीमभिधामूलध्वनिं निरूपयितुं प्रक्रमते विवक्षितेति । विवक्षितं व्यङ्ग्यार्थपरतया वक्तुमिष्टम् अभिधेयं वाच्यार्थो यस्य स विवक्षितान्यपरवाच्यानामापि ध्वनिः प्रथमं द्विभेदो द्विविधो मतः । प्रथममित्यनेन परन्तु बहुभेदा अपि दर्शयिष्यन्त इति सूचितम् । यत्र विवक्षिताभिधेये ध्वनौ, न संलक्ष्यः सम्यगनुभवनीयः क्रमः कार्य्यकारणादीनां पौर्वापर्य्यं यत्र सः । काव्यात्मतया प्रधानानां रसादीनां लक्ष्यत्वादस्य प्रथमं निर्द्देश इतिं बोध्यम् । लक्ष्योऽनुभवनीयः क्रमः कार्य्यकारणादीनां पौर्वापर्य्यं यत्र स तादृशश्च ध्वनिर्वर्त्तते ।

(य) उक्तव्युत्पत्त्या विवक्षिताभिधेय-विवक्षितान्यपरवाच्ययोरभेदाद्व्याचष्टे विवक्षितेति ।

(र) तत्रेति । तत्र तयोर्मध्ये आद्यः असंलक्ष्यक्रमो व्यङ्ग्यः रसभावादिः एक एकप्रकार एव । अत्र शास्त्रे गण्यते । आदिपदेन रसाभास-भावाभास सन्धि-शवलतानां ग्रहणम् । ननु कथमेकप्रकारमात्रम्, यावन्त एव रसभावादयस्तावन्त एव प्रकारा भवन्त्वित्याह एकोऽपीति । यद्यस्मात् तस्य रसभावादेर्मध्ये एकशृङ्गाररसस्य एकोऽपि सम्भोगरूपो भेदः प्रकारः अनन्तत्वात् चुम्बनादिभेदैनासीमत्वात् नैव संख्येयः संख्यातुं अर्हः । किमुत सर्वे षामिति भावः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वादिप्रतीतिकारणत्वात् क्रमोऽवश्यमस्ति, किन्तु उत्पलपत्रशतव्यतिभेदवल्लाघवान्न संलक्ष्यते (ल)। एषु च रसादिषु एकस्यापि भेदस्यानन्तत्वात् संख्यातुमशक्यत्वादसंलक्ष्यक्रमव्यङ्ग्यध्वनिर्नाम काव्यमेकभेदमेवोक्तम् (व)। तथाहि—एकस्यैव हि शृङ्गारस्य एकोऽपि सम्भोगरूपो भेदः परस्परालिङ्गनाधरपानचुम्बनादिभेदात् प्रत्येकञ्च विभावादिवैचित्र्यात् संख्यातुमशक्यः, का गणनात्र सर्वेषाम् (श)।

७। शब्दार्थोभयशक्त्युत्थे व्यङ्ग्येऽनुस्वानसन्निभे।
ध्वनिर्लक्ष्यक्रमव्यङ्ग्यस्त्रिविधः कथितो बुधैः॥ (ष)

क्रमलक्ष्यत्वादेवानुरणनरूपो यो व्यङ्ग्यस्तस्य शब्दशक्त्युद्भवत्वेन अर्थशक्त्युद्भवत्वेन शब्दार्थशक्त्युद्भवत्वेन च त्रैविध्यात् संलक्ष्यक्रमव्यङ्ग्यनाम्नो ध्वनेः काव्यस्यापि त्रैविध्यम् (स)।

---

(ल) रसभावादेरसंलक्ष्यक्रमरूपव्यङ्ग्यत्वाङ्गीकारे असंलक्ष्यक्रमशब्दस्य व्युत्पत्तेरसङ्गतिमाशङ्क्य समाधत्ते अत्रेति। व्यङ्ग्यानां रसभावादीनां प्रतीतेर्ज्ञानस्य, विभावादीनां प्रतीतिरेव कारणं यस्याः सा तथोक्ता तस्य भावस्तस्मात्। तथा च विभावादिज्ञानेनैव रसज्ञानं जन्यते; तेन च कारणस्य पूर्ववर्त्तितायाः कार्य्यस्य च परवर्त्तिताया नियमात् क्रमोऽवश्यमेवास्तीति तस्य च सर्वैरेव लक्ष्यत्वात् असंलक्ष्यक्रमशब्दस्य व्युत्पत्तेरसङ्गतिरिति भावः। लाघवादतिद्रुतत्वात् न संलक्ष्यते तादृशकार्य्यकारणयोः क्रमः संलक्षयितुं न शक्यते। तथा च यथा दृढसंयुक्तानां बहुतरोत्पलपत्राणाम् एकसूचिद्वारा विदारणे कस्य पूर्वं कस्य वा परं विदारणं जातमिति विदारयित्रापि न संलक्षयितुं शक्यते यौगपद्यात्, तथा कारणकार्य्यभूतयोरपि विभावादिप्रतीतिरसभावादिप्रतीत्योर्यौगपद्यप्रायेण जायमानत्वात् सहृदयैरपि पौर्वापर्य्यं लक्षयितुं न शक्यत इति समाधाने सरलार्थः। ईदृशपौर्वापर्य्यस्य लक्षयितुमशक्यत्वादेव "यस्मादेष विभावादिसमूहालम्बनात्मकः। तस्मान्न कार्य्यः" इति पूर्वोक्तेन सह न विरोधः।

(व) कारिकोक्तैकभेदत्वं व्यवस्थापयति एषु चेति। रसादिषु मध्ये। एकभेदमेवोक्तमिति। गत्यन्तराभावादिति भावः। एकत्वन्तु काव्यात्मत्वरूपेणेति बोध्यम्।

(श) उक्तमेवार्थं विवृत्य दर्शयति तथाहीति। विभावादीनां वैचित्र्यान्नानाविधत्वात्।

(ष) संलक्ष्यक्रमध्वनिं निरूप्य विभजते शब्देति। व्यङ्ग्ये अर्थे अनुस्वानसन्निभे प्रतिशब्दतुल्ये शब्दार्थोभयशक्त्युत्थे सति लक्ष्यक्रमव्यङ्ग्यो नाम ध्वनिर्भवति। तथा च यथा प्रासादादिमध्ये कस्यचित् शब्दस्य उत्पत्त्यनन्तरमेव तत्प्रतिशब्दो जायते तथा यत्र शब्दप्रतीत्यनन्तरमेव व्यङ्ग्यार्थप्रतीतिर्जायते स शब्दशक्तिमूलो ध्वनिः; यत्र अर्थप्रतीत्यनन्तरमेव व्यङ्ग्यार्थप्रतीतिः सः अर्थशक्तिमूलो ध्वनिः; यत्र च शब्दार्थोभयप्रतीत्यनन्तरमेव व्यङ्ग्यार्थप्रतीतिः स शब्दार्थोभयशक्तिमूलो ध्वनिरित्यर्थः। अतएव बुधैरयं लक्ष्यक्रमध्वनिस्त्रिविधः कथितः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र—(छ)

८। वस्त्वलङ्काररूपत्वाच्छब्दशक्त्युद्भवो द्विधा। (ज)

अलङ्कारशब्दस्य पृथगुपादानादनलङ्कारं वस्तुमात्रं गृह्यते (क)। तत्र वस्तुरूपः शब्द-(१) शक्त्युद्भवो व्यङ्ग्यो यथा—

"पन्थिअ! (२) ण एत्थ सत्थर-मत्थि मणं पत्थरत्थले गामे।
उण्णअपओहरं पेक्खिअ (३) उण जइ वससि ता वससु॥" (ख)

अत्र सत्थरादिशब्दशक्त्या यद्युपभोगक्षमोऽसि तदास्स्वेति वस्तु व्यज्यते (ग)।

---

(ज) क्रमेति। क्रमस्य कारणकार्ययोः पौर्वापर्यस्य लक्ष्यत्वादनुभवयोग्यत्वादेवेति अनुरणनरूपत्वं प्रति हेतुः शब्दप्रतिशब्दयोरपि क्रमस्य लक्ष्यत्वात्। अनुरणनरूपः प्रतिशब्दतुल्यः।

(छ) तत्रेति। तत्र तेषु उक्तेषु विविधेषु संलक्ष्य-क्रम-व्यङ्ग्येषु मध्ये।

(ज) वस्त्विति। व्यङ्ग्यस्य वस्तुरूपत्वात् अलङ्काररूपत्वाच्च शब्दशक्त्युद्भवः संलक्ष्यक्रमो ध्वनिर्द्विधा भवति। शब्दशक्तिमूलो वस्तुध्वनिः शब्दशक्तिमूलः अलङ्कारध्वनिश्चेति नाम।

(क) ननु वस्तुशब्दस्य पदार्थमात्रवाचितया अलङ्कारस्यापि तदन्तर्गतत्वात् कथमलङ्कारशब्दस्य पृथगुपादानमित्याह अलङ्कारेत्यादि। सामान्यविशेषन्यायादलङ्कारभिन्नं समस्तमेव वस्तु गृह्यत इत्यर्थः। वस्तुध्वनिमध्ये अलङ्काररूपवस्तुध्वनेर्वैचित्र्यविशेषात् प्राधान्यज्ञापनार्थं पृथगुपादानं गोवृषन्यायादित्याशयः। तत्र अलङ्करणमित्यलङ्कारो भावे घञ्, तथा च न विद्यते अलङ्कारः उपमादिकृतशोभा यस्मिन्निति बहुव्रीहिणैवालङ्कारभिन्नमित्यर्थो लभ्यः। तत्पुरुषे तु "नञ्तत्पुरुषस्योत्तरपदवत्" इत्यनेन पुंस्त्वप्रसङ्गात्। तर्कवागीशोऽप्येवम्।

(ख) पन्थिष इति। "पथिक! नात्र संस्तरोऽस्ति मनाक् प्रस्तरस्थले ग्रामे। उन्नतपयोधरं प्रेक्ष्य पुनर्यदि वससि तद्वस॥" इति संस्कृतानुवादः। रात्राववस्थानाय प्रार्थयन्तं पान्थं प्रति स्वैरविहारिण्या उक्तिरियम्। हे पथिक! प्रस्तराणां स्थलं यत्र तादृशे पाषाणमये इत्यर्थः अत्र ग्रामे मनाक् अल्पोऽपि संस्तर आस्तरणीयकटो नास्ति प्राकृते तु "बहुल"मिति सत्थरमित्यत्र क्लीवत्वम्। उन्नत आकाशे उत्थितत्यासौ पयोधरो मेघश्चेति तं प्रेक्ष्य दृष्ट्वा यदि पुनर्वससि शयनकष्टमङ्गीकृत्याप्यवस्थातुमिच्छसि तत्तदा वस तिष्ठ। अयन्तु प्रकरणनियन्त्रितोऽभिधाप्रतिपाद्योऽर्थः।

(ग) अभिधामूलव्यञ्जनाप्रतिपाद्यमर्थमाह अत्रेति। सत्थरस्य आदिशब्दात् पत्तहरशब्दस्य च शक्त्या अभिधामूलव्यञ्जनया। तथा च प्राकृतः सत्थरशब्दः संस्तरस्य शास्त्रस्य च बोधकः, तथा पओहरशब्दस्य स्त्रीस्तनस्य मेघस्य च वाचकः। तेनायं व्यङ्ग्यार्थः—अत्र प्रस्तरस्थले पार्वत्यदेशीये ग्रामे मनाक् अल्पमपि शास्त्रं

---

(१) वस्तुरूपशब्द···इति क्वचित् पाठः। (२) पथिअ! इति पाठान्तरम्। (३) पेक्खि इति क्वचित् पाठः।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अलङ्काररूपो यथा—"दुर्गालङ्घितविग्रहः" इत्यादि (५६ पृष्ठे)। अत्र प्राकरणिकस्य उमानाममहादेवी-वल्लभ-भानुदेवनाम-नृपतेर्वर्णने द्वितीयार्थ-सूचितमप्राकरणिकस्य पार्वतीवल्लभस्य वर्णनमसम्बद्धं मा प्रसाङ्क्षीदिति ईश्वरभानुदेवयोरुपमानोपमेयभावः कल्प्यते। तदत्र उमावल्लभ इवेत्युपमा-लङ्कारो व्यङ्ग्यः (घ)।

यथा वा—(ङ)

"अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद: प्रभो !।
अहितः सहितः साधु-यशोभिरसतामसि॥" (च)

अत्र अमित इत्यादावपिशब्दाभावाद्विरोधाभासो व्यङ्ग्यः (छ)। व्यङ्ग्य-स्यालङ्कार्यत्वेऽपि ब्राह्मणश्रमणन्यायादलङ्कारत्वमुपचर्य्यते (ज)।

---

परस्त्रीसङ्गमनिषेधकं स्मृतिशास्त्रं नास्ति; तथा च मम उन्नतपयोधरं तुङ्गस्तनं प्रेक्ष्य उपभोगाय यदि पुनर्वससि वस्तुमर्हसि तत्तदा वस। आस् स्व वस। आस् धातोः प्रयोगोऽयम्।

(घ) अलङ्कारस्य व्यङ्ग्यत्वं प्रतिपादयितुमाह अत्रेति। प्राकरणिकस्य राजस्तुतिप्रस्तावसंसृष्टस्य। अप्राकरणिकस्य प्रस्तावासंसृष्टस्य। मा प्रसाङ्क्षीत् प्रसक्तं न भवतु इत्यर्थः। इति हेतोः। प्रथम उमावल्लभो भानुदेवः, द्वितीय उमावल्लभो महादेवः।

(ङ) ननु "दुर्गालङ्घितविग्रहः" इत्यादावपि वक्ष्यमाण—"हिममुक्तचन्द्ररुचिरः" इत्यादिवत् शब्दार्थो-भयशक्तिमूल एवोपमालङ्कारध्वनिः सम्भवति उभयोरेवोदाहरणयोस्तुल्यत्वादित्याह यथा वेति।

(च) अमित इति। न विद्यते मितं परिमाणमस्येत्यमितः, मितेन परिमाणेन सहेति समितः, इत्युभयोर्विरोधः; तथा न विद्यते हितमस्येत्यहितः, हितेन सहेति सहित इति चोभयोर्विरोधः। समा-धानन्तु—हे प्रभो! राजन्! असतां दुर्जनानाम् अहितः शत्रुभूतस्त्वम्, समितो युद्धात् प्राप्तैः उत्कर्षैः-र्विजयेन श्रेष्ठत्वैर्हेतुभिः। अमितः अन्यवीरैरनुपमितः; अतएव साधुयशोभिः सत्प्रशंसाभिः सहितो युक्तः; सुतराञ्च स्वपक्षानां हर्षद आह्लादकारी असि।

(छ) अत्रेति। अपिशब्दाभावादित्युपलक्षणम्, चकारस्याप्यभावादिति बोध्यम्, द्वयोरेवापिशब्दचकारयोः साक्षाद्विरोधाभासालङ्कारप्रतिपादकत्वात्। अत्र तु अमितः अनुपमितः समितो युद्धादित्याद्योः पर्य्यवसितयो-रर्थयोरन्वये विरोधाभावेन व्यङ्ग्यस्य विरोधस्यार्थमूलकत्वाभावात् शब्दश्रवणानन्तरमेव च विरोधप्रतीतेः केवल-शब्दशक्तिमूलक एवायमलङ्कारध्वनिरित्याशयः।

(ज) नन्वत्र विरोधाभासस्य रसादेरिव व्यङ्ग्यत्वेनास्वाद्यतया अलङ्कार्य्यत्वमेव स्यात् न पुनरलङ्कारत्वम् अलङ्कारशब्दस्य करणसाधनत्वात्, तत् कथमलङ्कारध्वनिरित्युच्यत इत्याह व्यङ्ग्यस्येति। ब्राह्मणश्चासौ श्रमणः सन्न्यासी चेति ब्राह्मणश्रमणः। यथा कश्चिद्ब्राह्मण्यधर्मं परिहाय सन्न्यासाश्रमप्रविष्टोऽपि लोकैर्भूत-पूर्वं ब्राह्मण्यमाश्रित्य ब्राह्मणश्रमण इति व्यपदिश्यते; तथात्रापि अपिशब्दादिसत्ताकालीनालङ्कारत्वमाश्रित्य अलङ्कार्य्यदशायामपि अलङ्कार इति व्यपदिश्यते इति सरलार्थः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

९ । वस्तु वाऽलङ्कृतिर्वापि द्विधार्थः सम्भवी स्वतः ।
कवेः प्रौढ़ोक्तिसिद्धो वा तन्निबद्धस्य चेति षट् ॥
षड्भिस्तैर्व्यज्यमानस्तु वस्त्वलङ्काररूपकः ।
अर्थशक्त्युद्भवो व्यङ्ग्यो याति द्वादशभेदताम् ॥ (झ)

स्वतः सम्भवी औचित्याद्बहिरपि सम्भाव्यमानः (ञ) । प्रौढ़ोक्त्या सिद्धो न त्वौचित्येन (ट) । तत्र क्रमेण यथा—

"दृष्टिं हे प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः ॥" (ठ)

(झ) इदानीमर्थशक्त्युद्भवं ध्वनिं विभजते वस्त्विति । वस्तु अलङ्कारभिन्नः पदार्थो वा अलङ्कृतिरलङ्कारो वापि इति द्विधा द्विविधोऽर्थः स्वतः सम्भवी स्वभावसिद्धः, कवेर्वर्णयितुः प्रौढ़ोक्त्या निरङ्कुशकल्पनाबलात् कथनेन सिद्धो वा, तथा तन्निबद्धस्य कविकल्पितस्य जनस्य प्रौढ़ोक्तिसिद्धश्चेति षट् षड्विधो भवति ; द्वयोस्त्रीभिर्गुणने षट्सम्भवादिति भावः । तैः षड्भिर्व्यज्यमानः वस्त्वलङ्काररूपकः वस्तुस्वरूपः अलङ्कारस्वरूपश्च अर्थशक्त्युद्भवो व्यङ्ग्योऽर्थः द्वादशभेदतां द्वादशप्रकारतां याति प्राप्नोति । यथा—

१ । स्वतः सम्भविना वस्तुना वस्तुध्वनिः ।
२ । स्वतः सम्भविना वस्तुना अलङ्कारध्वनिः ।
३ । स्वतः सम्भविना अलङ्कारेण वस्तुध्वनिः ।
४ । स्वतः सम्भविना अलङ्कारेण अलङ्कारध्वनिः ।
५ । कविप्रौढ़ोक्तिसिद्धेन वस्तुना वस्तुध्वनिः ।
६ । कविप्रौढ़ोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिः ।
७ । कविप्रौढ़ोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिः ।
८ । कविप्रौढ़ोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिः ।
९ । कविनिबद्धजनप्रौढ़ोक्तिसिद्धेन वस्तुना वस्तुध्वनिः ।
१० । कविनिबद्धजनप्रौढ़ोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिः ।
११ । कविनिबद्धजनप्रौढ़ोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिः ।
१२ । कविनिबद्धजनप्रौढ़ोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिः ।

(ञ) मूलस्थस्य स्वतः सम्भवीतिशब्दस्यार्थं विवृणोति स्वत इति । औचित्यादयोग्यत्वात्, बहिरपीत्यपिशब्दात् अन्तरपि, सम्भाव्यमानः सम्भवपरत्वेन ज्ञायमानः । तथा च वाच्यतया स्पष्टभावेन च प्रकाशितो योऽर्थः सर्वैः सम्भवपरत्वेनावबुध्यते स स्वतः सम्भवीत्यर्थः ।

(ट) प्रौढ़ोक्तिसिद्ध इत्यस्य नियमार्थत्वमाह प्रौढ़ोक्त्येति । प्रौढ़ोक्त्या कवेर्निरङ्कुशकल्पनाबलात् कथनेनैव सिद्धो निष्पन्नः, न तु औचित्येन वास्तविकत्वेन ।

(ठ) १—स्वतः सम्भविना वस्तुना वस्तुध्वनिमुदाहरति दृष्टिमिति । परपुरुषेण सह रमणाय अभिसर्तुमिच्छन्त्याः कस्याश्चित् कुलटाया गृहान्तरवासिनीं काञ्चित् स्त्रियं प्रति [illegible] हे

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन स्वतःसम्भविना वस्तुमात्रेण एतत्प्रतिपादिकाया भावि-परपुरुषोपभोगज-नखक्षतादिगोपनरूपं वस्तुमात्रं व्यज्यते (ड)।

"दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे॥" (ढ)

अनेन स्वतःसम्भविना वस्तुना रवितेजसो रघुप्रतापोऽधिक इति व्यतिरेकालङ्कारो व्यज्यते (ण)।

"आपतन्तममुं दूराद्दूरीकृतपराक्रमः।
बलोऽवलोकयामास मातङ्गमिव केशरी॥" (त)

अत्रोपमालङ्काररूपेण स्वतःसम्भविना व्यञ्जकार्थेन बलदेवः क्षणेनैव वेणुदारिणः क्षयं करिष्यतीति वस्तु व्यज्यते (थ)।

---

प्रतिवेशिनि ! क्षणं मत्प्रत्यावर्त्तनकालं यावत् इह अस्मद्गृहेऽपि त्वं दृष्टिं दास्यसि। यथा कुक्कुरादयः प्रविश्य क्षतिं न कुर्वन्तीति भावः। त्वं कुत्र यासीत्याह—अस्य दृश्यमानस्य शिशोर्मत्पुत्रस्य पिता मम पतिः प्रायेण बाहुल्येन विरसाः कषायाः कौपीः कूपसम्भवाः अपो जलानि न पास्यति। इतः कारणात् एकाकिन्यपि अहं सत्वरं तमालाकुलं तमालतरुपरिवृतं स्रोतो नदीं यामि। तत्र च नीरन्ध्राः अत्यन्तघनाः जरठच्छेदाः कठिनाग्राः नलग्रन्थयो नलाख्यतृणपर्वदेशाः तनुं मम देहम् आलिखन्तु क्षतविक्षतं कुर्वन्तु। तथाप्यगत्वा का गतिरिति भावः। एतेन पत्यनुरक्तिरपि दर्शिता।

(ड) व्यङ्ग्यार्थं दर्शयति अनेनेति। स्वतःसम्भविना योग्यत्वाद्बहिरपि सम्भवपरेण, वस्तुमात्रेण नलवनप्रवेशे तद्ग्रन्थिकर्तृकाङ्गक्षतविक्षतीकरणरूपेण। एतत्प्रतिपादिकाया अस्यार्थस्य प्रकाशिकायाः कुलटायाः।

(ढ) २—स्वतःसम्भविना वस्तुना अलङ्कारध्वनिमुदाहरति दिशीति। रघुवंशे रघोर्दिग्विजयवर्णनमिदम्। दक्षिणस्यां दिशि रवेः सूर्यस्यापि तेजो मन्दायते मन्दं भवति। दक्षिणायनस्वभावादिति भावः। किन्तु तस्यामेव दिशि पाण्ड्याः पाण्ड्यदेशीया राजानः रघोः प्रतापं न विषेहिरे सोढुं न समर्था बभूवुः। सूर्यविजयिनामपि विजयी रघुरिति भावः।

(ण) व्यङ्ग्यं प्रतिपादयति अनेनेति। स्वतःसम्भविना दक्षिणायने सम्भवपरेण, वस्तुना रवितेजसो मन्दत्वरूपेण। अथवा रघोरद्वितीयवीरत्वयोग्यत्वात् सम्भवपरेण तत्प्रतापस्य पाण्ड्यैरसह्यत्वरूपेण।

(त) ३—स्वतःसम्भविना अलङ्कारेण वस्तुध्वनिमाह—आपतन्तमिति। शिशुपालवधकाव्यस्यैकोनविंशसर्गे युद्धवर्णनमिदम्। दूरीकृतपराक्रमः स्थिरमवलम्बितविक्रमः, बलो बलरामः, केशरी सिंहो मातङ्गं हस्तिनमिव दूरात् आपतन्तम् आत्माभिमुखमागच्छन्तम् अमुं वेणुदारिनामानं बाणराजपुत्रम् अवलोकयामास।

(थ) अत्रेति। स्वतःसम्भविना इवशब्दस्य योग्यत्वात् सम्भवपरेण, व्यञ्जकार्थेन व्यङ्ग्यप्रतिपादकेन अर्थेन। वेणुदारिणस्तदाख्यस्य बाणासुरपुत्रस्य। क्षयं विनाशम्।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"गाढ़कान्तदशनक्षतव्यथा सङ्कटादरिवधूजनस्य यः ।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम् ॥" (द)

अत्र स्वतःसम्भविना विरोधालङ्कारेण अधरो निर्दष्टः शत्रवो व्यापादिताश्चेति समुच्चयालङ्कारो व्यङ्ग्यः (ध) ।

"सज्जेइ सुरहिमासो ण आपणेइ जुअइजणलक्खसहे (१) ।
अहिणअसहआरमुहे णअपल्लवपत्तणे अणङ्गस्स सरे ॥" (न)

अत्र वसन्तः शरकारः, कामो धन्वी, युवतयो लक्ष्यम्, पुष्पाणि शरा इति कविप्रौढ़ोक्तिसिद्धं वस्तु प्रकाशीभवन्मदनविजृम्भणरूपं वस्तु व्यनक्ति (प) ।

"रजनीषु विमलभानोः करजालेन प्रकाशितं वीर ! ।
धवलयति भुवनमण्डलमखिलं तव कीर्त्तिसन्ततिः सततम् ॥" (फ)

---

(द) ४—स्वतःसम्भविना अलङ्कारेण अलङ्कारध्वनिमुदाहरति—गाढ़ेति । यो युधि युद्धे रुषा क्रोधेन निजाधरं स्वकीयमोष्ठं निर्दशन्, गाढ़ं तीव्रं यत् कान्तस्य भर्त्तुः दशनक्षतं दशनेन क्षतं तस्मात् व्यथा वेदनैव सङ्कटो विपत्तिस्तस्मात्, अरिवधूजनस्य शत्रुस्त्रीलोकस्य ओष्ठ एव विद्रुमदलानि रक्ततासाम्यात् प्रवालखण्डानि तानि अमोचयत् परित्रापितवान् । शत्रूणां वधेन पुनस्तद्दशनासम्भवादिति भावः ।

(ध) अत्रेति । ओष्ठस्य निर्दशनेन व्यथाया उत्पत्तिरेव स्यान्न तु मोचनमिति विरोधः, आश्रयभेदात्तु तत्समाधानम् । इत्यस्य योग्यत्वात् स्वतःसम्भविना सम्भवपरेण । समुच्चयालङ्कारो व्यङ्ग्य इति । कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययरूपातिशयोक्तिमूलकक्रियासमुच्चयालङ्कारध्वनिरित्यर्थः ।

(न) ५—कविप्रौढ़ोक्तिसिद्धेन वस्तुना वस्तुध्वनिमाह सज्जेइ इति । "सज्जयति सुरभिमासः न चार्पयति युवतिजनलक्ष्यसहान् । अभिनवसहकारमुखान् नवपल्लवपत्रलान् अनङ्गस्य शरान् ॥" इति संस्कृतानुवादः । सुरभिमासो वसन्तकालः युवतिजना एव लक्ष्यं तत् सहन्ते भेत्तुं शक्नुवन्तीति तान्, अभिनवाः सहकारा आम्रकुसुमानि मुखानि आद्यो येषां तान्, नवानि पल्लवानि पत्राणि च सन्ति येषु तानि पत्त्रलानि तान्, अनङ्गस्य शरान् मदनस्य बाणान् सज्जयति निर्म्मिमीते ; किन्तु न च अपनयति शीतकालवत् तानपसारयति ।

(प) व्यङ्ग्यमुपपादयति अत्रेति । वसन्तः कालः शरकारस्तद्वत् शरसज्जनकर्त्तृत्वात् । कामो धन्वी अनङ्गस्य शरानिति सम्बन्धनिर्देशात् । युवतयो लक्ष्यम्, तस्य स्पष्टाभिधानात् । पुष्पाणि शराः सहकारमुखान् अनङ्गशरानिति समानविभक्तिनिर्देशादिति च भावः । कवेः प्रौढ़ोक्त्या निरङ्कुशकल्पनाबलात् काव्येनैव सिद्धम्, न तु यथार्थम्, वसन्तादिषु शरकारत्वादीनां सर्व्वथैवासम्भवादिति भावः । प्रकाशीभवत् अभिधेयार्थतात्पर्य्येण ज्ञानविषयीभवत्, मदनविजृम्भणरूपं युवजनानां कामाविर्भावात्मकम् ।

(फ) ६—कविप्रौढ़ोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिमुदाहरति रजनीष्विति । राजस्तुतिरियम् । हे

---

(१) सज्जेहि सुरहिमासो ण दाव अप्पेइ जुअइजणलक्खसुहे इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र कविप्रौढ़ोक्तिसिद्धेन वस्तुना कीर्त्तिसन्ततेश्चन्द्रकरजालादधिककालप्रकाशकत्वेन व्यतिरेकालङ्कारो व्यङ्ग्यः (ब)।

"दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः।
मणिव्याजेन पर्य्यस्ताः पृथिव्यामश्रुबिन्दवः॥" (भ)

अत्र कविप्रौढ़ोक्तिसिद्धेन अपह्नुत्यलङ्कारेण भविष्यद्राक्षसश्रीविनाशरूपं वस्तु व्यज्यते (म)।

"धम्मिल्ले नवमल्लिकासमुदयो हस्ते सिताम्भोरुहं
हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः।
एकोऽपि त्रिकलिङ्गभूमितिलक! त्वत्कीर्त्तिराशिर्ययौ
नानामण्डनतां पुरन्दरपुरीवामभ्रुवां विग्रहे॥" (य)

---

वीर! तव कीर्त्तीनां सन्ततिः परम्परा, विमलभानोर्निर्मलकिरणस्य चन्द्रस्य करजालेन रजनीषु केवलरात्रिष्वेव प्रकाशितम् अखिलं भुवनमण्डलं सततं धवलयति धवलं करोति। चन्द्रः केवलं रात्रौ प्रकाशयति, तव कीर्त्तिधारा तु सर्वदैवेत्यर्थः।

(ब) अत्रेति। कवेः प्रौढ़ोक्तिमात्रसिद्धेन न तु यथार्थेनेत्यर्थः, कीर्त्तिसन्ततेः प्रशंसामात्ररूपत्वेन प्रकाशकत्वासम्भवादिति भावः। अधिककालप्रकाशकत्वेन तद्रूपेण वस्तुनेत्यन्वयः। उपमानभूतात् केवलं रात्रावेव जगत्प्रकाशकाच्चन्द्रकरजालात् उपमेयभूतायाः कीर्त्तिसन्ततेरहोरात्रमेव जगत्प्रकाशकत्वेन आधिक्यवर्णनात् व्यतिरेकालङ्कारः, स च साक्षात्प्रतिपादकशब्दाभावाद्व्यङ्ग्य इत्याशयः।

(भ) ७—कविप्रौढ़ोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिं दर्शयति दशाननेति। रघुवंशदशमसर्गे रामजन्मवर्णनमिदम्। तत्क्षणं रामोत्पत्तिसमये दशाननकिरीटेभ्यो रावणस्य दशसंख्यकमुकुटेभ्यः मणिव्याजेन रत्नपतनच्छलेन राक्षसश्रियः अश्रुबिन्दवः पृथिव्यां भूमौ पर्य्यस्ताः पतिताः।

(म) अत्रेति। कवेः प्रौढ़ोक्तिमात्रसिद्धेन न तु वास्तविकेनेत्यर्थः, सम्पन्मात्ररूपायाः राक्षसश्रियः अश्रुबिन्दूनामसम्भवादित्याशयः। अपह्नुत्यलङ्कारेणेति। प्रकृतमणिपतनं प्रतिषिध्य अप्रकृताश्रुबिन्दुपतनस्थापनादित्याशयः।

(य) ८—कविप्रौढ़ोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिमाह धम्मिल्ल इति। राजस्तुतिरियम्। हे त्रिकलिङ्गभूमितिलक! त्रिकलिङ्गदेशाधिपते! एकोऽपि तव कीर्त्तिराशिः, पुरन्दरपुरीवामभ्रुवाम् अमरावतीस्थ-रमणीनां विग्रहे शरीरे नानामण्डनतां बहुविधभूषणत्वं ययौ प्राप्तवान्। यथा च तासां धम्मिल्ले बद्धकेशपाशे नवमल्लिकानां शुभ्रकुसुमविशेषाणां समुदयः समूहो जातः, तद्वत् प्रकाशादिति भावः। एवमन्यत्रापि। हस्ते सिताम्भोरुहं श्वेतपद्मम्, कण्ठतटे हारो मुक्तामाला, तथा पयोधरयुगे स्तनद्वये च घनो गाढ़ः श्रीखण्डलेपः श्वेतचन्दनलेपनम्, तत्तत्स्वरूप इत्यर्थः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र कविप्रौढ़ोक्तिसिद्धेन रूपकालङ्कारेण "भूमिष्ठोऽपि स्वर्गस्थानामुपकारं करोषि" इति विभावनालङ्कारो व्यज्यते (र) ।

"शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।
सुमुखि ! येन तवाधरपाटलं दशति विम्बफलं शुकशावकः ॥" (ल)

अत्रानेन कविनिबद्धस्य कस्यचित् कामिनः प्रौढ़ोक्तिसिद्धेन वस्तुना तवाधरः पुण्यातिशयलभ्य इति वस्तु प्रतीयते (व) ।

"सुभगे ! कोटिसंख्यत्वमुपेत्य मदनाशुगैः ।
वसन्ते पञ्चता त्यक्ता पञ्चतासीद्वियोगिनाम् ॥" (श)

अत्र कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धेन कामशराणां कोटिसंख्यत्वप्राप्त्या निखिलवियोगिमरणेन वस्तुना शराणां पञ्चता शरान् विमुच्य वियोगिनः श्रितेवेत्युत्प्रेक्षालङ्कारो व्यज्यते (ष) ।

---

(र) अत्रेति । कवेः प्रौढ़ोक्तिमात्रसिद्धेन न तु वास्तविकेनेत्यर्थः, कीर्त्तिराशेरत्यन्तप्रशंसामात्ररूपतया नवमल्लिकादितुल्यताया अलीकत्वेन तन्मूलकरूपकालङ्कारस्याप्यलीकत्वादिति भावः । रूपकालङ्कारेणेति । कीर्त्तिराशौ नवमल्लिकासमुदयत्वाद्यारोपादित्याशयः । विभावनालङ्कार इति । कार्य्यकारणयोः सामानाधिकरण्यनियमात् स्वर्गीयोपकारं प्रति भूमिष्ठस्य कारणत्वासम्भवेनासत्कल्पतया हेतुं विनापि स्वर्गस्थानामुपकाररूपकार्य्योत्पत्तेर्विभावनालङ्कारः, स च कारणान्वयिनञाद्यभावेन, व्यङ्ग्यं इति ग्रन्थकर्त्तुरभिप्रायः । वस्तुतस्तु अत्र कार्य्यकारणयोर्भिन्नदेशत्वादसङ्गतिनामालङ्कार एव न्याय्य इति सुधीभिर्भाव्यम् ।

(ल) ९—कविनिबद्धजनप्रौढ़ोक्तिसिद्धेन वस्तुना वस्तुध्वनिमुदाहरति शिखरिणीति । चञ्चुपुटेन विम्बफलदंशिनं शुकशावकं विलोक्य काञ्चित् सुन्दरीं प्रति कस्यचित् कविनिबद्धजनस्योक्तिरियम् । हे सुमुखि ! असौ शुकशावको नाम क्व नु शिखरिणि कस्मिन् ननु पर्वते, कियच्चिरं कियद्दीर्घकालं यावत्, किमभिधानं किन्नामकं तपः अकरोत् । येन हेतुना तव अधरवत् पाटलं श्वेतरक्तं विम्बफलं दशति ।

(व) अत्रेति । अनेन पूर्वोक्तार्थरूपेण । प्रौढ़ोक्तिमात्रसिद्धेन न तु सम्भवपरेणेत्यर्थः, शुकशावकस्य तपःकरणासम्भवादिति भावः । प्रतीयते व्यञ्जनयेति शेषः ।

(श) १०—कविनिबद्धजनप्रौढ़ोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिं दर्शयति सुभगे इति । प्रवासादागत्य प्रियां प्रति कस्यचित् प्रवासकालीनावस्थावर्णनमिदम् । हे सुभगे ! वसन्ते काले मदनाशुगैः कामबाणैः कोटिसंख्यत्वम् उपेत्य कामदेवप्रभावादेव लब्ध्वा पञ्चता आत्मनः प्राक्तनपञ्चसंख्यकता त्यक्ता ; किन्तु वियोगिनां जनानां सा पञ्चता पञ्चत्वं मृत्युरित्यर्थः आसीत् ।

(ष) अत्रेति । कविनिबद्धस्य वक्तुर्जनस्य ईदृशप्रौढ़ोक्तिमात्रसिद्धेन न तु यथार्थेनेत्यर्थः, कामबाणेन निखिलवियोगिमरणस्यालीकत्वादित्याशयः । कोटिसंख्यकत्वप्राप्त्येति निखिलवियोगिमरणं प्रति हेतुः । निखिलवियोगिमरणेन तद्रूपेण वस्तुना ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"मल्लिकामुकुले चण्डि ! भाति गुञ्जन् मधुव्रतः।
प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव ॥" (ख)

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन उत्प्रेक्षालङ्कारेण "कामस्याय-मुन्मादकः कालः प्राप्तः, तत्कथं मानिनि ! मानं न मुञ्चसि" इति वस्तु व्यज्यते (ङ)।

"महिलासहस्सभरिए तुह हिअए सुहअ ! सा अमाअन्ती।
अणुदिणमणण्णकम्मा अङ्गं तणुअं पि तणुएइ ॥" (च)

अत्र "अमाअन्ती" इति कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन काव्यलिङ्गा-लङ्कारेण तनोस्तनूकरणेऽपि तव हृदये न वर्त्तत इति विशेषोक्त्यलङ्कारो व्यज्यते (छ)।

न खलु कवेः कविनिबद्धस्येव रागाद्याविष्टता; अतः कविनिबद्ध-

---

(ख) ११—कविनिबद्धजनप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिमाह मल्लिकेति। मानभञ्जनाय मानिनीं प्रति पत्युरुक्तिरियम्। हे चण्डि ! अत्यन्तकोपशीले ! मल्लिकामुकुले नवमल्लिकाकुसुमकोरके गुञ्जन् रुवन् मधुव्रतो भ्रमरः पञ्चबाणस्य मदनस्य प्रयाणे युद्धयात्रायां शङ्खम् आपूरयन् वादयन्निव भाति वर्त्तते।

(ङ) अत्रेति। कविनिबद्धस्य वक्तुः प्रौढोक्तिमात्रसिद्धेन न तु पारमार्थिकेनेत्यर्थः पञ्चबाणस्य शङ्खाभावेनैव तत्पूरणसम्भावनाया अप्यसम्भवादित्यभिप्रायः। यूनामुन्मादकः अयं कामस्य कालो वसन्तः प्राप्त उपस्थित इत्यर्थः।

(च) १२—कविनिबद्धजनप्रौढोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिमुदाहरति महिलेति। "महिला-सहस्रभरिते तव हृदये सुभग ! सा अमान्ती। अनुदिनमनन्यकर्म्मा अङ्गं तनुकमपि तनयति ॥" इति संस्कृतानुवादः। बहुस्त्रीवल्लभं भिन्नदेशस्थं तन्नायिकावृत्तान्तजिज्ञासुं नायकं प्रति तन्नायिकादूत्या उक्ति-रियम्। हे सुभग ! स्त्रीवल्लभ ! महिलानां रमणीनां सहस्रेण तदनुरागेणेत्यर्थः भरिते परिपूरिते तव हृदये अमान्ती स्थातुमवकाशमप्राप्नुवती सा नायिका, अनुदिनं सर्वदा अनन्यकर्म्मा सती, तन्वपि स्वभाव-कृशमपि अङ्गं तनयति तनु कृशं करोति। तव हृदये अवकाशलाभायेति भावः। अत्र तनयतीति तनुशब्दात् करोत्यर्थे णिप्रत्ययः।

(छ) अत्रेति। कविनिबद्धस्य वक्तुर्दूतीजनस्य प्रौढोक्तिमात्रसिद्धेन न तु यथार्थेनेत्यर्थः सकल-स्त्रीवल्लभस्य तस्या अपि वल्लभत्वेन स्थानप्राप्तेरिति भावः। "अमाअन्ती" इति पदस्य अवकाशाप्राप्तिरूपोऽर्थः तनोस्तनूकरणे हेतुरिति पदार्थहेतुकेन काव्यलिङ्गालङ्कारेणेत्यर्थः। अल्पावकाशे हृदये स्थानलाभाय तनोस्तनू-करणरूपे हेतौ सत्यपि तव स्थानलाभरूपफलाभावात् विशेषोक्त्यलङ्कारः, स च साक्षात् प्रतिपादकाभावाद्-व्यज्यत इत्यर्थः। प्रतीयमानोत्प्रेक्षालङ्कारध्वनिश्चात्र अलङ्कारपरिच्छेदे वक्ष्यते।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वक्तृप्रौढोक्तिः कविप्रौढोक्तेरधिकं सहृदयचमत्कारिणीति पृथक् प्रतिपादिता (ख)। एषु च अलङ्कृतिव्यञ्जनस्थले रूपणोत्प्रेक्षणव्यतिरेचनादिमात्रस्य प्राधान्यं सहृदयसंवेद्यम्, न तु रूप्यादीनामित्यलङ्कृतेरेव मुख्यत्वम् (ग)।

१०। एकः शब्दार्थशक्त्युत्थे—(घ)

उभयशक्त्युद्भवे व्यङ्ग्ये एको ध्वनेर्भेदः। यथा—

"हिममुक्तचन्द्ररुचिरः सपद्मको मदयन् द्विजान् जनितमीनकेतनः।
अभवत् प्रसादितसुरो महोत्सवः प्रमदाजनस्य स चिराय माधवः॥" (ङ)

(ख) ननु कविनिबद्धजनस्य प्रौढोक्तिरपि कवेः प्रौढोक्तिरेव, कविनैव कश्चित् कल्पयित्वा तेन जनेन तथा तथा वाचितत्वात्; अतः कारिकायां कविप्रौढोक्तिसिद्धात् कविनिबद्धजनप्रौढोक्तिसिद्धस्य कथं पृथक् प्रतिपादनमित्याह न खल्विति। कविनिबद्धस्यैव कविनिबद्धजनस्यैव, रागाद्याविष्टता अनुरागोत्साहादिभिरधिष्ठितता, कवेर्वर्ण्यत्वमावरूपत्वादिति भावः।

(ग) अथालङ्काराणां व्यञ्जकत्वस्थलेषु तैरलङ्कार्य्याणामपि वस्तूनां व्यञ्जकत्वस्य स्वभावसिद्धत्वात् वस्तूनां व्यञ्जकत्वमावाङ्गीकारेणैवोपपत्तौ कथमलङ्काराणां व्यञ्जकत्वस्य पृथगङ्गीकार इत्याह एषु चेति। किञ्चेति चार्थः। एषु पूर्वोक्तेषु द्वादशसु अर्थ-शक्त्युद्भव-व्यङ्ग्येषु मध्ये, अलङ्कृतिव्यञ्जनस्थले अलङ्कारकर्तृकवस्तुव्यङ्ग्यत्वस्थले। रूपणम्—"धम्मिल्ले नवमल्लिकासमुदयः" इत्यादौ रूपकालङ्कारघटकं कीर्त्तिराशौ नवमल्लिकासमुदयत्वादीनामारोपकरणम्। उत्प्रेक्षणम्—"मल्लिकामुकुले चण्डि!" इत्यादौ उत्प्रेक्षालङ्कारघटकं भ्रमरगुञ्जने शङ्खवादनत्वसम्भावनाकरणम्। व्यतिरेचनम्—उपमानादुपमेयस्य आधिक्येन न्यूनत्वेन वा पृथक्करणम्। तत्तुल्यम्। आदिशब्दात् "आपतन्तममुं दूरात्" इत्यादौ उपमालङ्कारादिघटकानां सदृशीकरणादीनां ग्रहणम्। सहृदयसंवेद्यं तत्प्रतीतिमात्रसाधिकत्वादिति भावः। मात्रशब्दव्यवच्छेद्यं स्वयमेवाह न त्विति। रूप्यादीनाम् आरोप्यमाणानां नवमल्लिकासमुदयत्वादीनाम्। आदिशब्देन उत्प्रेक्ष्यव्यतिरेच्यादीनां परिग्रहः। इति हेतोः, अलङ्कृतेरलङ्कारस्यैव मुख्यत्वं प्राधान्यम्। अतः प्रधानानां पृथगङ्गीकारौचित्यादलङ्काराणामपि व्यञ्जकत्वस्य पृथगेवाङ्गीकार इति भावः।

(घ) इदानीं शब्दार्थोभयशक्तिमूलध्वनिमिदमाह एक इति। शब्दार्थयोरुभयोः शक्त्या उत्थे उत्पन्ने व्यङ्ग्ये एको ध्वनेर्भेदः स्यात्। वस्तुरूपयोः शब्दार्थयोरुभयोरेवात्र व्यञ्जकत्वात् वस्तुभिन्नतया प्राक्प्रतिपादितस्य केवलालङ्कारस्यैव पारिशेष्येण व्यङ्ग्यत्वात् तस्य च सामान्येनैकत्वात् शब्दार्थोभयशक्तिमूलो ध्वनिरलङ्कारमात्ररूप एक एवेति बोध्यम्।

(ङ) हिमेति। शिशुपालवधस्य वयोदशसर्गे हरेरिन्द्रप्रस्थोपस्थितौ वृत्तान्तवर्णनमिदम्। हिमेन हिमावरणेन मुक्तो यश्चन्द्रस्तद्वत् रुचिरः सुन्दरः, अन्यत्र तु हिमात् शीतकालात् मुक्तेन उत्तीर्णेन चन्द्रेण रुचिरः। पद्मया भार्य्यया श्रिया सहेति सपद्मकः, अन्यत्र प्रस्फुटितपद्मपुष्पान्वितः। द्विजान् ब्राह्मण-क्षत्रियवैश्यान् कोकिलादीन् पक्षिणश्च, मदयन् विनयसम्भाषणादिना आनन्दयन् [illegible] उन्मत्तीकुर्वंश्च।

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

अत्र माधवः कृष्णो माधवो वसन्त इवेत्युपमालङ्कारो व्यङ्ग्यः (च) ।

एवञ्च व्यङ्ग्यभेदादेव व्यञ्जकानां काव्यानां भेदः (छ) ।

११ । तदष्टादशधा ध्वनिः । (ज)

अविवक्षितवाच्यः अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः । विवक्षितान्यपरवाच्यस्तु असंलक्ष्यक्रमव्यङ्ग्यत्वेनैकः, संलक्ष्यक्रमव्यङ्ग्यत्वेन च (१) शब्दार्थोभयशक्तिमूलतया पञ्चदशेति अष्टादशभेदो ध्वनिः (झ) ।

एषु च—(ञ)

---

जनितमीनकेतन उत्पादितप्रद्युम्नाख्यपुत्रः, विहितकामाविर्भावश्च । प्रसादिता दैत्यवधादिना सन्तोषिताः सुरा देवगणा येन सः, अन्यत्र प्रसादिता निर्मलीकृता सुरा मद्यं येन सः । स माधवः श्रीकृष्णः वसन्तकालश्च प्रमदाजनस्य पौराङ्गनागणस्य चिराय महोत्सवो दर्शनदानेनैव महानन्दजनकः अभवत् ।

(च) अत्रेति । उपमालङ्कारो व्यङ्ग्य इति । अन्यथा "दुर्गालङ्घितविग्रहः" इत्यादिवत् अप्राकरणिकस्य वसन्तरूपद्वितीयार्थस्य वर्णनमसम्बद्धं स्यादिति भावः ।

(छ) ननु "काव्यभेदमाह" इति प्रतिज्ञाय एतावता व्यङ्ग्यभेदवर्णनात् तत्प्रतिज्ञाभङ्गः अप्रासङ्गिकप्रलापदोषश्चापतित इत्याह एवञ्चेति । एवञ्च एतावत्प्रकाराणां व्यङ्ग्यानां सम्भवे च । काव्यानां भेद इति । वाच्यभेदाद्वाचकभेदवदिति भावः ।

(ज) इदानीं गणितानां व्यङ्ग्यानां सङ्कलनमाह तदिति । तत्तस्मात् एतावत्पर्यन्तगणनादित्यर्थः, ध्वनिः अष्टादशधा अष्टादशप्रकारः ।

(झ) ध्वनेरेतावदष्टादशप्रकारत्वं दर्शयति अविवक्षितेति । शब्दार्थेति । शब्दशक्तिमूलतया, अर्थशक्तिमूलतया तदुभयशक्तिमूलतया चेत्यर्थः । तथा च—

| | | | |
|---|---|---|---|
| लक्षणामूलोऽविवक्षितवाच्यो ध्वनिर्द्विविधः··· | अर्थान्तरसंक्रमितवाच्यः ··· | | १ |
| | अत्यन्ततिरस्कृतवाच्यः ··· | | १ |
| अभिधामूलो विवक्षितान्यपरवाच्यो ध्वनिः षोडशविधः | असंलक्ष्यक्रमव्यङ्ग्यः ··· ··· ··· ··· | | १ |
| | संलक्ष्यक्रमव्यङ्ग्यः | शब्दशक्तिमूलो द्विविधः | २ |
| | | अर्थशक्तिमूलो द्वादशविधः | १२ |
| | | शब्दार्थोभयशक्तिमूल एकविधः | १ |

(ञ) एषामिदानीं सम्भाव्यमानां व्यवस्थामाह एष्विति । एषु च अष्टादशप्रकारेषु ध्वनिषु मध्ये इत्यर्थः ।

---

(१)···क्रमव्यङ्ग्यवाच्यत्वेन च इति क्वचित् पाठः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१२ । वाक्ये शब्दार्थशक्त्युत्थस्तदन्ये पदवाक्ययोः ॥ (ट)

तत्र अर्थान्तरसंक्रमितवाच्यो ध्वनिः पदगतो यथा—

"धन्यः स एव तरुणो नयने तस्यैव नयने च ।
युवजनमोहनविद्या भवितेयं यस्य सम्मुखे सुमुखी ॥" (ठ)

अत्र द्वितीयनयनशब्दो भाग्यवत्तादिगुणविशिष्टनयनपरः (ड)

वाक्यगतो यथा—

"त्वामस्मि वच्मि विदुषां समुदायोऽत्र तिष्ठति ।
आत्मीयां मतिमादाय स्थितिमत्र विधेहि तत् ॥" (ढ)

अत्र प्रतिपाद्यस्य सम्मुखीनत्वादेव लब्धे प्रतिपाद्यत्वे "त्वाम्" इति पुनर्वचनम् अन्यव्यावृत्तिविशिष्टं त्वदर्थं लक्षयति (ण)। एवं "वच्मि" इत्यनेनैव कर्त्तरि लब्धे "अस्मि" इति पुनर्वचनम् अन्यव्यावृत्तिविशिष्टं मदर्थं लक्षयति (त)। तथा—"विदुषां समुदायः" इत्यादिवचनेनैव वक्तुः

---

(ट) वाक्य इति। शब्दार्थशक्त्युत्थः शब्दार्थोभयशक्तिमूलो ध्वनिः, वाक्ये केवलवाक्य एव सम्भवति, तस्योपमालङ्कारमात्ररूपत्वेन पर्य्यवसितवाक्यार्थसापेक्षत्वादित्याशयः। तदन्ये तद्भिन्नाः सप्तदशप्रकाराः, पदवाक्ययोः क्वचित् पदे क्वचिद्वाक्ये च सम्भवन्तीत्यर्थः, नियामकाभावादिति भावः।

(ठ) धन्य इति। काञ्चित् परमसुन्दरीं कन्यां विलोक्य कस्यचित् साभिलाषोक्तिरियम्। स एव तरुणो धन्यः पुण्यशाली, तस्यैव च तरुणस्य नयने चक्षुषी नयने सार्थके चक्षुषी। इयं युवजनानां मोहनविद्या सम्मोहनकारिविद्यारूपा सुमुखी कन्या यस्य सम्मुखे भविता स्थास्यति।

(ड) अत्रेति। आदिपदेन सार्थकत्वादेर्ग्रहणम्। एकमात्रनयनपदगतत्वादस्य पदगतत्वम्। नेत्रमात्ररूपस्य वाच्यार्थस्य भाग्यवत्तादिगुणविशिष्टनेत्ररूपार्थे संक्रमणाच्चास्य अर्थान्तरसंक्रमितवाच्यध्वनित्वम्।

(ढ) त्वामिति। पण्डितपरिषदि दुर्व्यवहृत्य यियासुं प्रति कस्यचित् सावष्टम्भोक्तिरियम्। अस्मीत्यहमर्थे अव्ययम्। रे दुर्व्यवहारपरायण! अहं त्वां वच्मि ब्रवीमि उपदिशामि, अत्र सभायां विदुषां समुदायः समूहस्तिष्ठति; तत्तस्मात् आत्मीयाम् आत्मने हितां मतिं बुद्धिम् आदाय अवलम्ब्य अत्र सभायां स्थितिमवस्थानं विधेहि कुरु। अन्यथा तव महाननर्थो भविष्यतीति भावः।

(ण) अत्र त्वामित्यस्य वैयर्थ्यापत्त्या मुख्यार्थबाधेन व्यञ्जकं लक्ष्यार्थं दर्शयितुमाह प्रतीति। प्रतिपाद्यस्य बोद्धव्यस्य दुर्व्यवहारिणो जनस्य, सम्मुखीनत्वादेव वक्तुः सम्मुखे विद्यमानत्वादेव, प्रतिपाद्यत्वे बोद्धव्यत्वे। पुनर्वचनमिति लक्षयतीत्यस्य कर्त्तृपदम्। एवमन्यत्रापि बोध्यम्।

(त) अस्मीत्यस्य वैयर्थ्यापत्त्या मुख्यार्थबाधेन व्यञ्जकं लक्ष्यार्थं दर्शयितुमाह एवमिति। कर्त्तरि लब्धे "अस्मद् मम:" इत्यनेनाप्यतकर्त्तर्य्येव वच [illegible] भावः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रतिपादने सिद्धे पुनः "वच्मि" इति वचनम् "उपदिशामि" इति वचनविशेषरूपमर्थं लक्षयति (थ)। एतानि च लक्षितानि स्वातिशयं व्यञ्जयन्ति (द)। एतेन मम वचनं तवात्यन्तं हितम्, तदवश्यमेतत् कर्त्तव्यमित्यभिप्रायः (ध)। तदेवमयं वाक्यगतोऽर्थान्तरसंक्रमितवाच्यो ध्वनिः (न)।

अत्यन्ततिरस्कृतवाच्यः पदगतो यथा—"निश्वासान्ध इव" इत्यादि (२२६ पृष्ठे) (प)। वाक्यगतो यथा—"उपकृतं बहु तत्र" इत्यादि (३८ पृष्ठे) (फ)।

अन्येषां वाक्यगतत्वे उदाहृतम् (ब)। पदगतत्वे यथा—

"लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः।
तदा सुधास्पदमभूदधुना तु ज्वरो महान् ॥" (भ)

---

(थ) वच्मीत्यस्य च वैयर्थ्यापत्त्या मुख्यार्थबाधेन व्यञ्जकं लक्ष्यार्थं दर्शयितुमाह तथेति। विदुषामित्यादिवाक्यत्रयमालोच्यार्थमेवेत्यर्थः। वक्तुरेतत्पद्यस्य कथयितुः। प्रतिपादने बोद्धव्यस्य जनस्य बोधनीयार्थबोधने। वचनं कथनम्।

(द) इदानीं व्यङ्ग्यार्थं दर्शयितुमाह एतानीति। एतानि—"त्वाम्-अस्मि-वच्मि" इति त्रीणि पदानि, लक्षितानि लक्षणानिरूपकानि सन्ति, स्वेषां स्वस्वार्थानाम् अतिशयं किञ्चित् किञ्चित् वैषम्यम्। तथा च त्वमित्यत्र त्वद्गुणविवेचकत्वम्, अस्मीत्यत्र आत्मनो हितैषित्वम्, वच्मीत्यत्र च वचनस्यालङ्घनीयत्वम्, इत्येतानर्थान् व्यञ्जयन्ति व्यञ्जनया प्रतिपादयन्ति।

(ध) श्लोकसमुदायव्यङ्ग्यमाह एतेनेति। एतेन श्लोकसमुदायेन। इत्यभिप्रायो व्यज्यत इति शेषः।

(न) इदानीं पर्यवसितमाह तदिति। तत्तस्मात् व्यङ्ग्यार्थस्यानेकपदगतत्वादित्यर्थः। तत्र व्यङ्ग्यार्थस्यैकपदगतत्वे ध्वनेः पदगतत्वम् अनेकपदगतत्वे तु वाक्यगतत्वमिति दोषादिवद्व्यवस्थोन्नेया।

(प) अत्यन्तेति। अत्र केवलान्धपदनिष्ठत्वात् पदगतत्वमित्यवधेयम्।

(फ) वाक्येति। वाक्यगतः अत्यन्ततिरस्कृतवाच्यो ध्वनिर्यथेत्यर्थः। अत्र "उपकृतम्"—"सुजनता"—"सुखितम्" इति बहुपदनिष्ठत्वाद्वाक्यगतत्वम्। उपकृतमित्यादिपद्ये वाक्यचतुष्टयसत्त्वेऽपि तस्य महावाक्यरूपैकवाक्यतामङ्गीकृत्येदमुदाहृतमिति बोध्यम्।

(ब) अन्येषामिति। असंलक्ष्यक्रमव्यङ्ग्य-संलक्ष्यक्रमव्यङ्ग्यभेदानामित्यर्थः। उदाहृतं "शून्यं वासगृहम्" इत्यादिकमसंलक्ष्यक्रमव्यङ्ग्यस्य, "पन्थिय ! ण एत्थ" इत्यादिकञ्च संलक्ष्यक्रमव्यङ्ग्यस्य उदाहरणं दर्शितमित्यर्थः।

(भ) पदगतविप्रलम्भशृङ्गाररूपमसंलक्ष्यक्रमव्यङ्ग्यमुदाहरति लावण्यमिति। प्रियतमां संस्मृत्य

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र लावण्यादीनां तादृगनुभवैकगोचरताव्यञ्जकानां तदादिशब्दानामेव प्राधान्यम् । अन्येषान्तु तदुपकारित्वमेवेति तन्मूल एव ध्वनिव्यपदेशः (म) । तदुक्तं ध्वनिकृता—(य)

"एकावयवसंस्थेन भूषणेनेव कामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥" (र)

एवं भावादिष्वप्यूह्यम् (ल) ।

"भुक्तिमुक्तिकृदेकान्त-समादेशनतत्परः ।
कस्य नानन्दनिष्यन्दं विदधाति सदागमः ॥" (व)

---

कस्यचित् प्रवासिन उक्तिरियम् । "मुक्ताफलस्य च्छायायां तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इति रसमञ्जरी । कान्तायास्तत् अलौकिकं लावण्यम्, असौ अनिर्वचनीया कान्तिः शोभा, तत् असाधारणं रूपं सौन्दर्य्यम्, स च अश्रुतपूर्वो वचःक्रमो वाक्परिपाटी, एतत् सर्वं तदा सम्मेलनकाले सुधास्पदम् अमृतवत् सुखकरानुभवस्थानम् अभूत्; तु किन्तु अधुना तत् सर्वं स्मृतं सत् महान् ज्वरः सन्तापको भवतीत्यर्थः ।

(म) नन्वत्रापि लावण्यादिपदसहकारेणैव तदादिपदानां व्यञ्जकत्वेन ध्वनेर्वाक्यगतत्वमेव स्यात् तत् कथं "पदगतत्वे यथा" इत्युक्तमित्याह अत्रेति । लावण्यादीनां यस्तादृगनुभवः अलौकिकत्वादिरूपेण ज्ञानं तस्यैकगोचरताया तन्मात्रविषयताया व्यञ्जकानां लावण्यादीनामलौकिकत्वादिजन्यविप्रलम्भशृङ्गारव्यञ्जकानामित्यर्थः । प्राधान्यमिति तेषामेव साक्षादलौकिकत्वादिप्रतिपादनद्वारा विप्रलम्भशृङ्गारव्यञ्जकत्वादिति भावः । अन्येषां लावण्यादिशब्दानाम्, तेषां तदादिशब्दानाम् उपकारित्वमेव व्यञ्जकत्वे सहकारित्वमात्रम् । तन्मूल एव तदादिपदमूल एव ध्वनेर्व्यपदेशः संज्ञा । अतोऽस्य पदगतत्वसिद्धिरिति भावः । वस्तुतस्तु "उपकृतं बहु तत्र" इत्यादिवत् बहुपदगतत्वेनैवास्य वाक्यगतत्वात् "गतोऽस्तमर्कः" इत्युदाहरणं द्रष्टव्यम् । अत्र हि अस्तशब्दशक्त्या "इदानीमभिसर" इति सामान्येन शृङ्गाररसो व्यज्यते ।

(य) ननु केवलतदादिशब्दानां ध्वनिप्रतिपादकत्वे कथं वाक्यसमुदायस्य सौन्दर्य्यमुपपद्यत इत्यपेक्षायां प्राचीनसंवादमुपन्यस्य तत्प्रतिपादयितुमाह तदुक्तमिति ।

(र) एकेति । एकावयवसंस्थेन हस्ताद्येकाङ्गमात्रस्थितेन भूषणेन कङ्कणाद्यलङ्कारेण कामिनीव, पदद्योत्येन केवलपदप्रकाश्येन ध्वनिना सुकवेर्भारती वाक्यं भाति शोभते ।

(ल) एवमिति । आदिपदात् रसाभासादीनां ग्रहणम् । यथा रसे असंलक्ष्यक्रमव्यङ्ग्यमिदं पदगतत्वे उदाहृतम्, एवं भावादिष्वपि ऊह्यमुदाहरणमित्यर्थः । तत्र पदगतः असंलक्ष्यक्रमव्यङ्ग्यरूपो भावध्वनिर्यथा— "एवं वदति देवर्षौ" इत्यादि । अत्र गणयामासेति पदेन पार्वत्या अवहित्था व्यज्यते । मृग्यमन्यत् ।

(व) शब्दशक्तिमूलं पदगतं वस्तुध्वनिमुदाहरति भुक्तीति । उपपतिमुपस्थितमवलोक्य सखीजनमध्यवर्त्तिन्याः कस्याश्चित् वेदाद्युत्तमशास्त्रप्रशंसाच्छलेनानन्दसूचिकोक्तिरियम् । भुक्तिं यागाद्यनुष्ठानप्रवृत्तिजननेन स्वर्गादिभोगं मुक्तिं ब्रह्मज्ञानजननेन मोक्षञ्च करोतीति भुक्तिमुक्तिकृत्, एकान्तसमादेशनं इत्यादि

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र सदागमशब्दः सन्निहितमुपनायकं प्रति सच्छास्त्रार्थमभिधाय "सतः पुरुषस्यागमः" इति वस्तु व्यनक्ति (श)। ननु "सदागमः सदागम इव" इति न कथमुपमाध्वनिरिति चेन्न (१) सदागमशब्दार्थयोरुपमानोपमेयभावाविवक्षणात् (ष)। रहस्यसङ्गोपनार्थमेव हि ह्यर्थप्रतिपादनं प्रकरणादिपर्य्यालोचनेन सच्छास्त्राभिधानस्यासम्बन्धत्वात् (स)।

"अनन्यसाधारणधीर्धृताखिलवसुन्धरः।
राजते कोऽपि जगति स राजा पुरुषोत्तमः॥" (ह)

अत्र पुरुषश्रेष्ठः पुरुषोत्तम इवेत्युपमाध्वनिः। अनयोः शब्दशक्तिमूलौ संलक्ष्यक्रमभेदौ (क्ष)।

---

अहरहः सन्ध्यामुपासीत" इत्याद्यलङ्घनीयनित्यकर्म्मविधाने तत्परंश्च सदागमो वेदादिकं सत् शास्त्रम्, कस्य आस्तिकजनस्य आनन्दनिष्यन्दं प्रीतिप्रवाहं न विदधाति, अपि तु सर्वस्यैव विदधातीत्यर्थः। उपपतिपक्षे तु—भुक्तिं सुरतसम्भोगम्, मुक्तिं विरहवेदनात्यागश्च करोति जनयतीति सः, तथा एकान्ते निर्जनप्रदेशे यत् समादेशनं गमनायानुमतिस्तस्मिन् तत्परस्तदर्थं प्रवृत्तः सत उत्तमस्य भवादृशस्य पुरुषस्य आगम आगमनम्, कस्य मादृशजनस्य आनन्दनिष्यन्दम् आमोदधारां न विदधाति, अपि तु सर्वस्यैव विदधातीत्यर्थः।

(श) अत्रेति। अभिधाय अभिधाशक्तिद्वारा बोधयित्वा। सन्निहितमुपनायकं प्रति "सतः पुरुषस्य आगमः" इति वस्तु व्यनक्ति व्यञ्जनाद्वारा बोधयतीत्यर्थः।

(ष) पूर्वोक्तवैपरीत्यमाशङ्कते नन्विति। सदागमो वेदादिकमुत्कृष्टं शास्त्रं सदागमः सतः पुरुषस्यागमनमिवेत्यर्थः। उपमाध्वनिरिति। "हिममुक्तचन्द्ररुचिरः" इत्यादिवदिति भावः। सदागमशब्दार्थयोः सच्छास्त्रोपनायकागमनयोः।

(स) ननु तदविवक्षणं प्रति किं वीजमित्याह रहस्येति। हि यस्मात् रहस्यस्य कर्त्तव्यस्य अथ च गोपनीयस्य उपपतेरागमनेनानन्दसूचनस्येत्यर्थः, सङ्गोपनार्थमेव न तूपमाप्रतिपादनार्थमिति भावः। प्रकरणादीत्यादिपदेन सच्छास्त्रमर्म्मानभिज्ञ-सखीजनसन्निधानग्रहणम्। पर्य्यालोचनेन अनुसन्धानेन। तथा च तत्र सच्छास्त्रप्रशंसायाः प्रस्तावाभावेन सखीजनानां सच्छास्त्रमर्म्मानभिज्ञत्वेन च तस्या नायिकायाः सच्छास्त्राभिधानस्य असम्बन्धत्वादप्रासङ्गिकत्वादित्यर्थः। एतेन यत्र वाच्यार्थस्य प्राकरणिकत्वं तत्रैव उपमाध्वनिरिति प्रतिपादितम्।

(ह) शब्दशक्तिमूलं संलक्ष्यक्रमभेदं पदगतमलङ्कारध्वनिमुदाहरति अनन्येति। असमक्षे राजस्तुतिरियम्। अनन्यसाधारणी अन्यबुद्धिभिरसमाना धीर्बुद्धिर्यस्य सः, धृता परिपालिता कूर्मरूपेण पृष्ठे स्थापिता च वसुन्धरा पृथिवी येन सः, पुरुषेषूत्तमो नरश्रेष्ठो नारायणश्च, तथा जगति कोऽपि अनिर्वचनीयप्रभावः स राजा राजते।

---

(१) इति चेन्न इति पाठः क्वचिन्नास्ति।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिरम्बरमणिर्विस्रब्धमत्रागतिः (१)।
आश्चर्यं तव सौकुमार्य्यमभितः क्लान्तासि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति तेनासितुम्॥" (क)

अत्र स्वतःसम्भविना वस्तुना कृतपरपुरुषपरिचया क्लान्तासीति वस्तु व्यज्यते (ख)। तच्च "अधुना क्लान्तासि न तु पूर्वं कदाचिदपि तवैवंविधः क्लमो दृष्टः" इति बोधयतोऽधुनापदस्यैव (ग)। इतरपदार्थोत्कर्षादधुना-पदस्यैव पदान्तरापेक्षया वैशिष्ट्यम् (घ)।

---

(च) अत्रेति। अत्र वाच्यार्थस्य राज्ञः प्राकरणिकत्वादर्थोपमाध्वनिरिति भावः। अनयोः भुक्तिमुक्तिकृ-दित्याद्यनन्यसाधारणधीरित्याद्योः। संलक्ष्यक्रमस्य ध्वनेर्भेदौ प्रकारौ यथाक्रमं वस्तुरूपालङ्काररूपौ ज्ञेया-विति शेषः।

(क) १—अर्थशक्तिरूपेण स्वतःसम्भविना वस्तुना पदगतं वस्तुध्वनिमुदाहरति सायमिति। पथि उपपतिना सह सुरतं विधाय स्नात्वागतां सखीं प्रति कयाचिदुक्तमिदम्। सायं सन्ध्यासमये स्नानम् उपासितं विहितम्, तथा मलयजेन चन्दनेन अङ्गं समालेपितम् आत्मना लिप्तं कारितम्। सुतरामनयोः कथमपि श्रमसम्भावना नास्तीति भावः। अम्बरमणिर्दिवाकरः अस्ताचलस्य मौलिं शिखरं यातः पूर्वमेव गतः। तस्मादातपनिबन्धनश्रमोऽपि न सम्भवतीत्याशयः। तथा अत्र मत्समीपे विस्रब्धं निःशङ्कं यथा स्यात्तथा आगतिस्तवागमनं सम्पन्नम्। अतोऽपि गमनद्रुतत्वाभावेन तवायं श्रमो नोपपद्यत इत्याशयः। तथापि येन हेतुना त्वम् अभितः सर्वतो भावेन क्लान्ता परिश्रान्ता असि, अतएव च परिश्रमात् ते तव नेत्रद्वन्द्वं नयनद्वयं कर्त्तृ, अमीलनव्यतिकरं मुद्रणसम्बन्धरहितं सत् आसितुं स्थातुं न शक्नोति स्वत एव मुद्रणाय प्रवर्त्तत इत्यर्थः। अधिकपरिश्रमात् परं हि नयनं स्वभावत एव मुद्रितं भवितुं प्रवर्त्तत इति द्रष्टव्यम्। अतस्तव सौकुमार्य्यं कोमलता आश्चर्य्यम् अनन्यसमानतया अद्भुतम्। तादृशपरिश्रमकारणाभावेऽपि असाधारण-सौकुमार्य्यवशादेव त्वमित्थं श्रान्तासीति बहिर्भावः।

(ख) अत्रेति। स्वतःसम्भविना अत्यन्तसौकुमार्य्यवशात् सर्वत्रैव सम्भवपरेण, वस्तुना अधुना क्लान्तासीत्यधुनापदात् केवलमिदानीन्तनपरिश्रमरूपार्थेन, कृतः परपुरुषस्य परिचयो रमणसम्बन्धो यया सा। अव्यवहितपूर्वं रमणाभावे तदानीं क्लमस्थित्यसम्भवात् पथि रमणमनुमितं तच्च स्वपत्या सह स्वगृह एव प्राप्तावसरमिति पथि तेन सह न सम्भवतीति कृतपरपुरुषपरिचयैवेयमिति निश्चितमिति बोध्यम्।

(ग) नन्वीदृशार्थरूपवस्तुव्यञ्जकत्वस्य वाक्यगतत्वमेव दृश्यते तत् कथं पदगतत्वमभिप्रेत्येदमुदाहृत-मित्याह तच्चेति। किञ्चेति चार्थः। तद्व्यञ्जकम् अधुनापदस्यैवेति परेणान्वयः। बोधयतो व्यञ्जनया प्रतिपादयतः।

(घ) ननु तादृशार्थव्यञ्जनेऽपि क्लान्तासीत्यस्यापि सामर्थ्यादेव वाक्यगतत्वं पुनरापद्यत इत्याह

---

(१) विस्रब्धमन्दागतिरिति क्वचित् पाठः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"तदप्राप्तिमहादुःख-विलीनाशेषपातका।
तच्चिन्ताविपुलाह्लाद-क्षीणपुण्यचया तथा॥
चिन्तयन्ती जगत्सूतिं परं ब्रह्मस्वरूपिणम्।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका॥" (ङ)

अत्र 'अशेष-चय'-पदप्रभावादनेकजन्मसहस्रभोग्यदुष्कृत-सुकृत-फलराशि-तादात्म्याध्यवसिततया भगवद्विरहदुःख-चिन्ताह्लादयोः प्रत्यायनमित्यतिशयोक्तिद्वयप्रतीतिरशेष-चय-पदद्वयद्योत्या (च)। अत्र च व्यञ्जकस्य प्रौढ़ोक्तिम् (१) अन्तरेणापि सम्भवात् स्वतःसम्भविता (छ)।

इतरेति। अत्र यत इत्यध्याहार्य्यम् इतरपदयोः क्लान्ता अमीति पदयोरर्थाभ्यां वाच्यार्थद्वयात् उत्कर्षात् तादृशार्थव्यञ्जने सामर्थ्याधिक्यात्। अधुनैव क्लान्तासि न पुनः पूर्वमीदृशार्थबोधनेनैवेति भावः। पदान्तरापेक्षया क्लान्ता अमीति पदद्वयापेक्षया। वैशिष्ट्यं तादृशार्थव्यञ्जने सामर्थ्यातिरेकः। अतः प्रधानानुसारेणैव व्यवहारस्यौचित्यात् उक्तविधार्थप्रत्यायने च अधुनापदस्यैव प्राधान्यात् पदगतध्वनिरेवायमिति भावः।

(ङ) २—स्वतःसम्भविना वस्तुना पदगतमलङ्कारध्वनिमुदाहरति तदित्यादि। श्रीमद्भागवते पत्यादिनिषेधेन श्रीकृष्णस्य रासोत्सवे गन्तुमसमर्थायाः कस्याश्चिद्गोपिकाया मुक्तिलाभवर्णनेयम्। तस्य श्रीकृष्णस्य अप्राप्तिहेतोर्यन्महादुःखं तेन तद्भोगेन विलीनानि नष्टानि अशेषाणि पातकानि अनेकजन्मार्जितपापानि यस्याः सा, तथा तस्य श्रीकृष्णस्य चिन्तया भावनयैव यो विपुलाह्लादो महासुखं तेन तद्भोगेनैव क्षीणाः नष्टाः पुण्यचयाः अनेकजन्मार्जितधर्मसमूहा यस्याः सा। पापस्यैव पुण्यस्यापि भोगारम्भकत्वेन मुक्तिप्रतिबन्धकत्वात् तदभावे च मुक्तिसम्भवात् "भोगादेव प्रारब्धक्षयः" इति तत्त्वविदां नियमात् साकल्येन पापपुण्ययोः क्षयेण मुक्त्यधिकारं प्राप्तेति भावः।

ननु "नियतकारणात्तदुच्छित्तिर्ध्वान्तवत्" इति सांख्यसूत्रादिना ब्रह्मज्ञानमन्तरेण कथं मुक्तिसम्भव इत्याह चिन्तयन्तीति। जगतां सूतिरुत्पत्तिर्यस्मात् तं परं सर्वोत्कृष्टं ब्रह्मस्वरूपिणं श्रीकृष्णं चिन्तयन्ती ध्यानेन साक्षात् कुर्वती, अन्या गुरुजनावरुद्धा गोपकन्यका निरुच्छ्वासतया निरुद्धश्वासतया मुक्तिं गता प्राप्ता।

(च) अत्रेति। अशेष-चय-पदयोः प्रभावात् साकल्यवाचकत्वसामर्थ्यादिति तादात्म्याध्यवसिततयेत्यस्य हेतुः। अनेकजन्मसहस्रेषु भोग्यौ यौ दुष्कृतसुकृतयोः पापपुण्ययोः फलराशी दुःखसुखसमूहौ तस्य तादात्म्येन अभेदेन अध्यवसिततया आरोपितत्वप्रकारेण। प्रत्यायनं प्रतीतिजननम्। तथा च अनेकजन्मभोग्यनानादुःख-तदानीन्तनविरहदुःखयोर्भेदेऽपि "विलीनाशेषपातका" इत्यत्राशेषपदसामर्थ्येन तयोरभेदाध्यवसायादेका अतिशयोक्तिः, तथा अनेकजन्मभोग्यनानासुख-तदानीन्तनचिन्ताजन्यसुखयोर्भेदेऽपि "क्षीणपुण्यचया" इत्यत्र चयपदसामर्थ्येन तयोरभेदाध्यवसायादपरा अतिशयोक्तिरित्यर्थः। अशेषेति चयेति च पदद्वयेन द्योत्या व्यङ्ग्या।

(१) कविप्रौढ़ोक्तिम् इति पाठान्तरम्।

CC0 ... Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"पश्यन्त्यसंख्यपथगां त्वद्दानजलवाहिनीम् ।
देव ! त्रिपथगात्मानं गोपयत्युग्रमूर्द्धनि ॥" (ज)

इदं मम। अत्र "पश्यन्ती" इति कविप्रौढ़ोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण "न केऽप्यन्ये दातारस्तव सदृशाः" इति व्यतिरेकालङ्कारोऽसंख्यपदद्योत्यः (झ)।

एवमन्येष्वप्यर्थमूलसंलक्ष्यक्रमभेदेषूदाहार्य्यम् (ञ)।

(छ) नन्वत्र स्वतःसम्भविता कुत इत्याह अत्र चेति। व्यञ्जकस्य व्यञ्जनया उक्तातिशयोक्तिद्वयप्रत्यायकस्य अशेषेति चयेति च पदद्वयरूपस्य वस्तुनः, प्रौढ़ोक्तिं कवेः कविनिबद्धजनस्य च कल्पनाबलेन निरङ्कुशभाषणम्, अन्तरेण विनापि, सम्भवात् तत्तदनेकजन्मार्जितपापपुण्य-विशेषणत्वे सम्भवपरत्वात्, स्वतःसम्भविता व्यञ्जकस्येत्यन्वयः।

(ज) ८—पदगतं कविप्रौढ़ोक्तिसिद्धालङ्कारेणालङ्कारध्वनिमुदाहरति पश्यन्तीति। राजस्तुतिरियम्। हे देव ! राजन् ! तव दानजलवाहिनीं धनवितरणकालीनोत्सर्गजलनदीम्, असंख्यपथगां नानादिक्षु दानादनन्तपथगामिनीम्, पश्यन्ती त्रिपथगा केवलत्रिपथगामिनी गङ्गा, उग्रमूर्द्धनि महादेवमस्तकीयजटामध्ये आत्मानं स्वदेहं गोपयति लज्जया तिरोदधाति। असंख्यपथगामिन्या दर्शने त्रिपथमात्रगामिन्या लज्जा सम्भवत्येवेति भावः।

(झ) अत्रेति। कविप्रौढ़ोक्तिमात्रसिद्धेन न तु यथार्थेनेत्यर्थः, जलमय्या गङ्गाया दर्शनासम्भवात्। यतः पश्यन्ती अतएव गोपयतीति पदार्थहेतुककाव्यलिङ्गालङ्कारेणेत्यर्थः। असंख्यपदेन द्योत्यो व्यङ्ग्यः। अतएवास्य ध्वनेः पदगतत्वमिति भावः।

(ञ) एवमिति। अन्येषु उदाहृतेभ्यो भिन्नेषु।

३—तत्र स्वतःसम्भविना अलङ्कारेण वस्तुध्वनिः पदगतो यथा रघुवंशे—

"अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः। मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥"

अत्र स्वतःसम्भविना उपमालङ्कारेण कवेर्दुर्यत्नताघ्रुपवस्तुध्वनिः सूत्रपदद्योत्यः।

४—स्वतःसम्भविना अलङ्कारेणालङ्कारध्वनिः पदगतो यथा शिशुपालवधे—

"जाज्वल्यमाना जगतः शान्तये समुपेयुषी। व्यद्योतिष्ट सभावेद्यामसौ नरशिखित्रयी ॥"

अत्र नरशिखीति स्वतःसम्भविना रूपकालङ्कारेण कृष्णबलरामोद्धवरूपवह्नित्रयात् शान्तिहोमीयवह्नेर्भेदेऽपि तयोरभेदाध्यवसायमूलाया अतिशयोक्तेर्ध्वनिः शान्तिपदद्योत्यः।

५—कविप्रौढ़ोक्तिसिद्धेन वस्तुना वस्तुध्वनिः पदगतो यथा मम रुक्मिणीहरणे—

"कलावतः सकलजनप्रमोदिनः सितात्मनोऽप्यमृतकरस्य यस्य च।
कलङ्किनीं किल परिचायिनीं तनोर्विधोर्विधां ननु विदधौ पटुर्विधिः ॥"

अनेन कविप्रौढ़ोक्तिसिद्धेन श्लोकार्थरूपेण वस्तुना भीष्मकराजस्य सकलकलङ्कशून्यत्वरूपवस्तुध्वनिः परिचायिनीपदद्योत्यः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

६—कविप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिः पदगतो यथा मत्तातश्रीगङ्गाधरविद्यालङ्कारपादानाम्—

"यशसा विशदेन तेऽधुना धरणीमण्डलमण्डनात्मना।
द्विजराजरुचाऽप्यराजिता विलराजिः परिराजते गिरेः॥"

अनेन कविप्रौढोक्तिसिद्धेन श्लोकार्थरूपेण वस्तुना चन्द्रादपि तव यशोऽधिकदेशव्यापीति व्यतिरेकालङ्कारध्वनिरराजितापदद्योत्यः।

७—कविप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिः पदगतो यथा नैषधे—

"प्रियास्य योग्याहमिति स्वमीक्षितुं करे तमालोक्य सुरूपया धृतः।
विहाय भैमीमपदर्पया कया न दर्पणः श्वासमलीमसः कृतः॥"

अत्र प्रौढोक्तिसिद्धेनातिशयोक्त्यलङ्कारेण दमयन्त्येव नलस्य योग्येति वस्तुध्वनिः "विहाय भैमीम्" इति पदद्वयद्योत्यः।

८—कविनिबद्धजनप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः पदगतो यथा तत्रैव—

"पृथुवर्त्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया।
विधिरेकचक्रचारिणं किमु निर्म्मित्सति मान्मथं रथम्॥"

अनेन कविनिबद्धहंसप्रौढोक्तिसिद्धेन श्लोकार्थरूपेण वस्तुना दमयन्त्या नितम्बदेशोऽतीव-स्मरोद्दीपक इति वस्तुध्वनिर्मान्मथपदद्योत्यः।

१०—कविनिबद्धप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिः पदगतो यथा किराते—

"नाभियोक्तुमनृतं त्वमिष्यसे कस्तपस्विविशिखेषु चादरः।
सन्ति भूभृति शरा हि नः परे ये पराक्रमवसूनि वज्रिणः॥"

अनेह कविनिबद्धदूतप्रौढोक्तिसिद्धेन श्लोकार्थरूपेण वस्तुना किरातराजादर्जुनस्य न्यूनत्वरूपव्यतिरेकालङ्कारध्वनिस्तपस्विपदद्योत्यः।

११—कविनिबद्धजनप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिः पदगतो यथा मम जानकीविक्रमनाटके—

"नहि विकसति चन्द्रे चन्द्रिका मन्दहासा प्रतपति तपने वा नो सवर्णा विवर्णा।
कथितयशसि रामे किं स्थितं रामरामे भवति गुणिनि पत्यौ कापि वामा न वामा॥"

अनेन कविनिबद्धविश्वामित्रप्रौढोक्तिसिद्धेन दृष्टान्तालङ्कारेण तादृशावसरे सीतायाः स्थितं पत्नीविरुद्धं गर्हितमिति वस्तुध्वनिः किंपदद्योत्यः।

१२—कविनिबद्धप्रौढोक्तिसिद्धेनालङ्कारेणालङ्कारध्वनिः पदगतो यथा शिशुपालवधे—

"प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभुजे। अनुहुङ्कुरुते घनध्वनिं नहि गोमायुरुतानि केशरी॥"

अनेन कविनिबद्धसात्यकिप्रौढोक्तिसिद्धेन दृष्टान्तालङ्कारेण श्रीकृष्णसिंहयोः शिशुपालशृगालयोश्च तुल्यतारूपोपमालङ्कारध्वनिः केशरिगोमायुपदद्योत्यः।

अन्ये त्वस्य पदगता भेदा एवं द्रष्टव्याः।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदेवं ध्वनेः पूर्वोक्तेष्वष्टादशसु भेदेषु मध्ये शब्दार्थशक्त्युत्थो व्यङ्ग्यो वाक्यमात्रे भवन्नेकः । अन्ये पुनः सप्तदश वाक्ये, पदे चेति चतुस्त्रिंशदिति पञ्चत्रिंशद्भेदाः (ट) ।

१३ । प्रबन्धेऽपि मतो धीरैरर्थशक्त्युद्भवो ध्वनिः । (ठ)

प्रबन्धो महावाक्यम् । अनन्तरोक्तद्वादशभेदोऽर्थशक्त्युत्थः (ड) । यथा महाभारते गृध्रगोमायुसंवादे—

"अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥
न चेह जीवितः कश्चित् कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥" (ढ)

इति दिवसे शक्तस्य गृध्रस्य श्मशाने मृतं बालमुपादाय तिष्ठतां तं परित्यज्य गमनमिष्टम् (ण) ।

(ट) एतावता पुनर्ध्वनिसंख्याः सङ्कलयितुमाह तदेवमिति । शब्दार्थशक्त्युत्थः शब्दार्थोभयशक्तिमूलः । वाक्यमात्रे केवलवाक्ये न तु पदे इत्यर्थः । तत्कारणन्तूक्तम् । वाक्ये सप्तदश, पदे च सप्तदशेति मिलित्वा चतुस्त्रिंशदित्यर्थः । वाक्यमात्रे सम्भाव्यं शब्दार्थोभयशक्तिमूलमेकमादाय पञ्चत्रिंशद्भेदा इति बोध्यम् ।

(ठ) प्रबन्ध इति । अर्थशक्त्युद्भवः केवलार्थशक्तिमूलः प्रागुक्तो द्वादशप्रकारो ध्वनिः प्रबन्धेऽपि न केवलं वाक्ये पदे च महावाक्यात्मकानेकवाक्येऽपि धीरैर्मतः । एवञ्च पूर्वोक्तैः पञ्चत्रिंशत्प्रकारैः सह मिलित्वा एतावन्तं यावत् सप्तचत्वारिंशत्प्रकारा ध्वनयः ।

(ड) प्रबन्ध इति । अनन्तरोक्ताः पूर्वोक्ता द्वादशभेदाः प्रकारा यस्य सः ।

(ढ) अलमिति । शान्तिपर्वण्यापद्धर्मे विपञ्चाशदधिकशततमाध्याये सायाह्ने बालकशवमादायस्य श्मशानमागतान् तद्बन्धुजनान् प्रति दिवस एव तं शवं परित्यज्य गमनाय रात्र्यन्धस्य गृध्रस्य दिवस एव शवभक्षणेच्छयोक्तिरियम् । गृध्रैः पक्षिविशेषैः गोमायुभिः शृगालैश्च सङ्कुले परिव्याप्ते, कङ्कालानि पूर्णमांसपास्थीनि शव वाहुल्ये, अतएव घोरे भवादृशां भीषणे, तथा मादृशामपि सर्वेषां प्राणिनां भयङ्करे, अस्मिन् श्मशाने स्थित्वा अलं पुनरप्ययं बालको जीविष्यतीत्याशया युष्माकमवस्थानं न कर्त्तव्यमित्यर्थः निरर्थं चासग्र्भीगाश्रिवि भावः ।

अतएवेत्याह न चेति । अत्रागतानां जनानां प्रियो बन्धुर्वा यदि वा अथवा द्वेष्यः शत्रुः । कालधर्मम्, मृत्युम् उपागतः प्राप्तः सन् कश्चिदपि जनः, इह श्मशाने आगत्य पुनर्जीवित इति न च, केनापि नैव दृष्ट इत्यर्थः । येन हि प्राणिनाम् ईदृशी गतिरवस्था सत्वा ते पुनर्नैव जीवन्तीत्यर्थः ।

(ण) व्यङ्ग्यार्थमाह इतीति । दिवसे शक्तस्य रात्र्यन्धतया दिवस एव शवमांसभक्षणसमर्थस्य । तिष्ठतां जनानां गमनमिष्टमिति सम्बन्धः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"आदित्योऽयं स्थितो मूढाः ! स्नेहं कुरुत साम्प्रतम् ।
बहुविघ्नो मुहूर्त्तोऽयं जीवेदपि कदाचन ॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात् कथं बालास्त्यजध्वमविशङ्किताः ॥" (त)

इति निशि समर्थस्य गोमायोर्दिवसे परित्यागोऽनभिलषित इति वाक्यसमूहेन द्योत्यते (थ) । अत्र स्वतःसम्भवी व्यञ्जकः (द) ।

एवमन्येष्वेकादशभेदेषूदाहार्य्यम् (ध) । एवं वाच्यार्थव्यञ्जकत्वे उदाहृतम् (न) ।

लक्ष्यार्थस्य यथा—"निःशेषच्युतचन्दनम्" इत्यादि (५८ पृष्ठे) (प) ।

---

(त) उक्तगृध्रवाक्यानुसारेण तं बालकशवं परित्यज्य गन्तुमुद्यतान् तद्बन्धून् प्रति तत्र स्थितस्य दिवान्धस्य शृगालस्य रात्रौ तच्छवभक्षणेच्छया उक्तिरियम् । हे मूढाः ! गृध्रवाक्यमात्रेणैव बालकपरित्यागपूर्वकगमनीयमादिति भावः । अयमादित्यः सूर्य्यः स्थितः, सुतरां साम्प्रतमिदानीमपि स्नेहं कुरुत । अयं दिवसस्य शेषो मुहूर्त्तः, बहुविघ्नः डाकिन्याद्याविष्टतासम्भवाद्विघ्नबहुलः । एतेन 'बालकोऽयं डाकिन्याद्याविष्ट एव, न तु मृत' इति सूचितम् । अतः, कदाचन इतः परं जीवेदपि । हे बालाः ! मूर्खाः ! कनकवर्णाभम् । अतएव वैवर्ण्याभावान्न मृत इति द्योतितम् । अप्राप्तयौवनम्, तेन च परदारगमनादिना तद्बन्धुजनप्रहारादितोऽपि न मर्त्तुमर्हतीति ध्वनितम् । अमुं बालं केवलात् गृध्रवाक्यात् अविशङ्किता यूयं निःसन्देहाः सन्तः कथं त्यज्यध्वम् । अत्रात्मनेपदमार्षम् ।

(थ) व्यङ्ग्यार्थमाह इतीति । निशि समर्थस्य दिवान्धतया रात्रावेव शवमांसभक्षणसमर्थस्य । परित्यागो बालकशवस्येति शेषः । अनभिलषित इति "क्तानुबन्धमतिबुद्धी"त्यादिना क्तप्रत्ययात् गोमायोरिति "वर्त्तमानाधिकरणयोः क्तेन" इति कर्त्तरि षष्ठी । अत्र उभयोरेवोक्त्योः परस्परसापेक्षत्वात् उभयोरुक्त्योरेवोपादानम्, तेन च एतदुक्तिद्वयात्मकप्रबन्धसमुदायार्थरूपेण स्वतःसम्भविना वस्तुना उक्तविधवस्तुध्वनिः प्रबन्धद्योत्यः ।

(द) नन्वत्र कीदृशो व्यञ्जक इत्याह अत्रेति । स्वतःसम्भवी स्वभावत एव सम्भवन् प्रबन्धवेद्यार्थो व्यञ्जक इत्यर्थः ।

(ध) एवमिति । अन्येषु स्वतःसम्भविना वस्तुना अलङ्कारध्वनिप्रभृतिप्रकारेषु । ग्रन्थस्यातिविस्तृतिभयात्तेषामुदाहरणान्यस्माभिरप्युपेक्षितानि ।

(न) एवमिति । एवं "दृष्टिं हे प्रतिवेशिनि !" इत्यादिकमेतत् सर्वम् ।

(प) लक्ष्यार्थस्येति । व्यञ्जकत्वे इति शेषः । "निःशेषच्युतचन्दनम्" इत्यादौ स्नातुं गतासीत्यस्य स्नातुं न गतासीति विपरीतलक्षणया लक्ष्यार्थरूपेण स्वतःसम्भविना वस्तुना तदन्तिकमेव रन्तुं गतासीति वस्तुध्वनिरधमपदद्योत्यः, दूत्यादिनीचस्त्रीरन्तुरधमत्वात् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

व्यङ्ग्यार्थस्य यथा—"उम्र णिच्चल" इत्यादि (५८ पृष्ठे) (फ)।

अनयोः स्वतःसम्भविनोर्व्यङ्ग्यार्थौ व्यञ्जकौ (ब)।

एवमन्येष्वेकादशभेदेषूदाहार्य्यम् (भ)।

**१४। पदांशवर्णरचना-प्रबन्धेष्वस्फुटक्रमः (१)॥ (म)**

असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिः। तत्र पदांशः प्रकृतिप्रत्ययोपसर्गनिपातादि-भेदादनेकविधः (य)। यथा—

"चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृती॥" (र)

(फ) व्यङ्ग्यार्थस्येति। व्यञ्जकत्वे इति शेषः। "उच्च णिच्चल" इत्यादौ बलाकाया निस्पन्दतया तद्देशस्य विजनत्वरूपेण स्वतःसम्भविना व्यङ्ग्यार्थात्मकवस्तुना सङ्केतस्थानमेतदिति वस्तुध्वनिर्निस्पन्दपदद्योत्यः।

(ब) अनयोरिति। स्वतःसम्भविनोः स्वभावत एव सम्भवपरयोः, अनयोः "निःशेषच्युतचन्दनम्" "उच्च णिच्चल" इत्याद्योरुदाहरणयोः।

(भ) एवमिति। अन्येषु स्वतःसम्भविना वस्तुना अलङ्कारध्वनिप्रभृतिप्रकारेषु। लक्ष्यार्थव्यङ्ग्यार्थयो-र्व्यञ्जकत्वे इति शेषः। अस्माभिरपि ग्रन्थगौरवभयात्तदुदाहरणान्युपेक्षितानि।

(म) असंलक्ष्यक्रमव्यङ्ग्यध्वनेर्भेदानाह पदांशेति। न स्फुटो न स्पष्टं ज्ञायमानः क्रमो व्यञ्जक-व्यङ्ग्ययोः पौर्वापर्य्यं यत्र सः असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिः, पदांशे, वर्णे, रचनायां शब्दघटनपरिपाट्याम्, प्रबन्धे महावाक्ये बहुवचनात् पदे वाक्ये च सम्भवतीति षड्विध इत्यर्थः। न चात्र षड्विधत्वाङ्गीकारात् "तत्राद्यो रसभावादिरेक एवात्र गण्यते" इति पूर्वोक्तकारिकया सह विरोध इति वाच्यम्, अमीषां षड्विधानां तस्यैवावान्तरभेदाभिप्रायात्।

(य) अस्फुटक्रमशब्दार्थं व्याचष्टे असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिरिति। पदांशशब्दस्यार्थं दर्शयितुमाह तत्रेति। तत्र तेषु पदांशादिषु मध्ये। निपातोऽत्र अव्ययरूपः; तेन तस्य द्योतकमात्रतया उपसर्गवत् स्वान्वयिपदांशत्वमित्याशयः। आदिपदेन वचनादीनां ग्रहणम्।

(र) तत्र प्रकृतिरूपपदांशगतध्वनेरुदाहरणमाह चलेति। अभिज्ञानशकुन्तले भ्रमरकर्तृकाशकुन्तला-मुखबाधामवलोक्य दुष्मन्तस्योक्तिरियम्। हे मधुकर! भ्रमर! त्वं चलस्तव दंशनभयात् चपलः अपाङ्गः प्रान्तभागो यस्यास्ताम्, अतएव वेपथुमतीं कम्पान्वितां दृष्टिं स्पृशसि; रहस्याख्यायीव गुप्तविषय-भाषीव कर्णान्तिकचरः कर्णसमीपचारी सन् मृदु अस्फुटं स्वनसि रौषि; करं हस्तं व्याधुन्वत्यास्तवापसारणाय

(१) अत्र कारिकायां वृत्तौ च नानाविधा [illegible] पुस्तकान्तरेषु द्रष्टव्याः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र "हताः" इति न पुनर्दुःखं प्राप्नवन्त इति हन्प्रकृतेः (ल)।

"मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितन्तु॥" (व)

अत्र "तु" इति निपातस्यानुतापव्यञ्जकत्वम् (श)।

"न्यक्कारो ह्ययमेव मे यदरयः" इत्यादौ "अरयः" इति बहुवचनस्य, "तापसः" इत्येकवचनस्य, "अत्रैव" इति सर्वनाम्नः, "निहन्ति" इति "जीवति" इति च तिङः, "अहो" इत्यव्ययस्य, "ग्रामटिका" इति कप्रत्ययस्य, "विलुण्ठने"ति व्युपसर्गस्य, "भुजैः" इति बहुवचनस्य च व्यञ्जकत्वम् (ष)।

"आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा
नासाग्रे नयनं (१) तदेतदपरं यच्चैकतानं मनः।
मौनञ्चेदमिदञ्च शून्यमधुना यद्विश्वमाभाति ते
तद्ब्रूयाः सखि! योगिनी किमसि भोः! किं वा वियोगिन्यसि?॥" (स)

---

कम्पयन्त्याः शकुन्तलायाः रतिसर्वस्वं रमणकाले सर्वप्रधानतया आदरणीयम् अधरं पिबसि। अतएव वयं तत्त्वस्य याथार्थ्यस्य "कस्येयं कन्या" "मम रमणयोग्या न वा" इति विषयस्य अन्वेषणात् अन्वेषणात् हता अत्यन्ताकुलतया मृतप्रायाः, त्वं खलु कृती कृतार्थो जातोऽसि।

(ल) व्यङ्ग्यं दर्शयितुमाह अत्रेति। हता इति आकुलत्वान्मृता एव, न पुनर्दुःखमात्रं प्राप्नवन्त इत्यर्थः। हन्प्रकृतेर्दुःखातिशयस्य व्यञ्जकत्वमिति शेषः।

(व) निपातगतध्वनिमुदाहरति मुहुरिति। शाकुन्तले गौतम्या साङ्गं शकुन्तलायामपहृतायां दुष्मन्तस्य सानुतापोक्तिरियम्। मुहुर्वारं वारम् अङ्गुल्या संवृतौ आवृतौ अधरोष्ठौ यस्य तत्, प्रतिषेधाक्षरे तादृशाकरणनिषेधकवाक्योच्चारणावसरे विक्लवेन विह्वलतया अभिरामं सुन्दरम्, तथा अंसे स्कन्धे विवर्त्तते परिवृत्त्य तिष्ठतीति तत्तादृशम्, पक्ष्मलाक्ष्या घनलोमशालिनयनायाः शकुन्तलायाः, कथमपि नयनगतकुसुमरेणुदूरीकरणव्याजेन, उन्नमितम् उत्तोल्य धृतम्, न चुम्बितन्तु; अतः किं कृतमेतदिति भावः।

(श) व्यङ्ग्यमाह अत्रेति। अत्र तुशब्दस्य चुम्बितपदान्वयित्वात्तदंशेन पदांशध्वनेरेवेदमुदाहरणमिति तत्प्रकरणमध्य एव दर्शितमिति बोध्यम्।

(ष) प्रत्ययोपसर्गादीनां व्यङ्ग्यं दर्शयितुमाह न्यक्कार इति। बहुवचनस्येत्यादीनां षष्ठ्यन्तपदानां व्यञ्जकत्वमिति परेणान्वयः। एषां व्यङ्ग्यार्थास्तु प्रागेव (७—८ पृष्ठे) दर्शिताः।

(स) प्रत्ययादिगतध्वनिमुदाहरति आहार इति। प्रियतमविच्छेदेन सर्वकर्मनिवृत्तां प्रति सख्याः सोपहासोक्तिरियम्। भोः सखि! ते तव आहारे अन्नादिभक्षणे विरतिर्विरागः, समस्ते सर्वप्रकारे

---

(१) नयने इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र तु "आहारे" इति विषयसप्तम्याः "समस्त" इति "परा" इति च विशेषणद्वयस्य, "मौनञ्चेदम्" इति प्रत्यक्षपरामर्शिनः (१) सर्वनाम्नः, "आभाति" इत्युपसर्गस्य, "सखि!" इति प्रणयस्मारणस्य, "असि भोः!" इति सोपहासोत्प्रासस्य, "किंवा" इत्युत्तरपक्षदार्ढ्यसूचकस्य वाशब्दस्य, "असि" इति वर्त्तमानोपदेशस्य च तत्तद्विषयव्यञ्जकत्वं सहृदयसंवेद्यम् (छ)।

वर्णरचनयोरुदाहरिष्यति (च)।

---

विषयग्रामे स्रक्चन्दनादिभोग्यपदार्थसमूहे परा अत्यन्ता निवृत्तिः, नासाग्रे नासिकाया अग्रभागे नयनं वर्त्तते, यत्र एकतानं कस्मिन्नपि विषये एकाग्रं तव मनः तदेतत् अपरं योगिन्या वियोगिन्या वा लक्षणमित्यर्थः, इदञ्च मौनम् इदञ्च विश्वं जगत् अधुना यत् शून्यम् आभाति तव चित्ते शून्यमिव भासते। तत् तस्मात् ब्रूयाः—त्वं किं योगिनी असि किंवा वियोगिनी असि? आहारविरतिप्रभृतिधर्माणां योगिनीवियोगिन्योरुभयोरेव सम्भवेन तत्त्वनिश्चयाभावादियं जिज्ञासेति वह्निभाव:।

(छ) उदाहृतश्लोके प्रत्ययादीनां व्यञ्जकत्वं विविच्य दर्शयितुमाह अत्र त्विति। अत्रापि विषयसप्तम्या प्रत्यादिषष्ठ्यन्तपदानां तत्तद्विषयव्यञ्जकत्वमिति परेणान्वयः। आहारे सर्वप्रकाराहारविषय एव तव विरतिः, न तु योगिन्या इव केवलमत्स्यमांसादिभक्ष्यरूपाहारविशेषे विरतिरिति विषयसप्तमी व्यनक्ति, तस्याः सामान्यबोधकत्वादित्याशयः। योगिन्याश्चीरचीवरादौ योगाप्रतिबन्धकविषये निवृत्तिर्न वर्त्तते, भक्तनिर्बन्धादिना तदितरविषयेऽपि च कदाचित् प्रवृत्तिरुपजायते; तव तु आवश्यकेऽपि समस्तविषयग्राम एव आत्यन्तिकी निवृत्तिरेवेति समस्तेति परेति च विशेषणद्वयं व्यनक्ति; योगिनी योगिन्यन्तरमागतमालपत्येव, त्वन्तु सखीं मामागतामवलोक्यापि मौनमेवाश्रितेति इदंपदेन व्यज्यते। प्रत्यक्षपरामर्शिनः "इदमः प्रत्यक्षगतत्वे" इति नियमात् मौनप्रत्यक्षतासूचकस्य। योगिन्याः पारमार्थिकभावेनैव जगतः शून्यत्वं भाति न तु व्यवहारिकभावेन, तव तु, निजप्रयोजनाभावात् सर्वथैव जगतः शून्यत्वं भाति; इति सम्यगर्थक आङ् उपसर्गो द्योतयति। योगिन्या अयमिति कुत्रापि प्रणयो नास्ति, तव तु मयि प्रणयोऽस्तीति सखीति सम्बोधनेन द्योत्यते। 'असि भोः' इति पदद्वयप्रकार एव सोपहाससुत्प्रासं व्यनक्ति; सुतराञ्च तादृशपदद्वयव्यङ्ग्यस्य सोपहासोत्प्रासस्य उपहासव्यञ्जकेषत्हासस्य व्यञ्जकत्वमित्यर्थः। एवञ्चात्र "उग्रं पिबत" इत्यादिवत् व्यङ्ग्यार्थव्यङ्ग्यो ध्वनिरिति बोध्यम्। तथा च योगिनी कस्यापि नोपहासविषयो भवति, त्वन्तु ममैव भवसीति 'असि भोः' इति पदद्वयव्यङ्ग्यः सोपहासोत्प्रासो व्यनक्ति। "कुरूपा सुरूपा वा तरुणी ते रोचते" इति तत्त्वजिज्ञासावत् उत्तरपक्षदार्ढ्यसूचकस्य वियोगिनीपक्षमतनिश्चितत्वं बोधयत इत्यर्थः। तेनात्रापि व्यङ्ग्यार्थव्यङ्ग्यत्वमिति बोध्यम्। तथा च त्वं वियोगिन्येवासीति वाशब्दो व्यनक्ति। वर्त्तमानोपदेशस्य वर्त्तमानकालबोधक-सि-विभक्तिनिर्देशस्य। तथाहि योगित्वस्य तत्क्षणसम्भवात् वियोगित्वस्य तु तदैव सम्भवात् त्वं वियोगिन्येवासीति सिविभक्त्या व्यज्यते।

---

(१) प्रत्ययपरामर्शिनः इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रबन्धे यथा—महाभारते शान्तः, रामायणे करुणः, मालतीमाधव-रत्नावल्यादौ शृङ्गारः (क)। एवमन्यत्र (ख)।

१५। तदेवमेकपञ्चाशद्भेदास्तस्य ध्वनेर्मताः।
सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया।
वेदखाग्निशराः शुद्धैरिषुबाणाग्निसायकाः॥ (ग)

---

(घ) वर्णेति। वर्णरचनयोर्गुणव्यञ्जकत्वं रीतिव्यञ्जकत्वञ्च अष्टमे नवमे च परिच्छेदे उदाहरिष्यत इत्यर्थः।

(क) प्रबन्ध इति। शान्तो रसः। एवमन्ययोरपि। आदिपदेन शाकुन्तलादिग्रहणम्।

(ख) एवमिति। किरातार्जुनीयैकादशे देवेन्द्रोक्तप्रबन्धे शान्तरसः। अर्जुनोक्तप्रबन्धे तु वीररसः। शिशुपालवधवधयोदशे रौद्रो वीरश्चेत्यादि द्रष्टव्यम्।

(ग) इदानीं ध्वनीनां सङ्कलनमाह तदिति। तत्त्वात् रसभावादिरूपस्य असंलक्ष्यक्रमव्यङ्ग्यस्यापि पद-पदांश-वाक्य-महावाक्य-वर्ण-रचना-गतत्वेन षट्प्रकारत्वादित्यर्थः। एवम् अनेन शुद्धप्रकारेण तस्य ध्वनेः एकपञ्चाशद्भेदाः प्रकारा मताः। पुनश्च त्रिरूपेण अलङ्कारवत् अङ्गाङ्गिलरूपेण एकाश्रयानुप्रवेशरूपेण सन्दिग्धत्वरूपेण च त्रिविधेन सङ्करेण, एकरूपया परस्परनैरपेक्ष्यस्थितिरूपया संसृष्ट्या च वेदाश्चत्वारः, खं शून्यम्, अग्नयस्त्रयः, शराश्च पञ्च तन्मिताः, ततश्च "अङ्कस्य वामा गतिः" इत्यङ्कशास्त्रनियमात् चतुरधिकत्रिशतयुतपञ्चसहस्रभेदा ध्वनयः। पुनश्च शुद्धैः केवलरूपैरुक्तैकपञ्चाशत्प्रकारैर्योगेन, इषवः पञ्च, बाणाश्च पञ्च, अग्नयस्त्रयः, पुनः सायकाश्च पञ्चेति तन्मिता इत्यर्थः। तथा च तासां संख्यानामपि वामगत्या पञ्चपञ्चाशदधिकत्रिशतयुतपञ्चसहस्रसंख्यकप्रकाराः समुदायेन ध्वनयः। लक्ष्यार्थव्यङ्ग्यार्थगतव्यञ्जकत्वभेदैः प्रकृति-प्रत्ययादिपदांशभेदैश्च अतोऽप्यत्यन्तबहुतरसंख्याप्रसक्तावपि प्राचीनमतानुरोधात्ते न गणिता इति बोध्यम्। काव्यप्रकाशकारेण तु अतोऽपि बहुतराधिकसंख्याः सङ्कलिताः। तथा च तत्कारिकांशः—"शरेषुयुगखेन्दवः" इति। एवञ्च तन्मते पञ्चपञ्चाशदधिकचतुःशतयुतदशसहस्रप्रकारा ध्वनय इति। एवञ्चालङ्कारिकाः प्रतिपाद्यविषयस्य संख्याधिक्यप्रतिपादनं दिग्विजयमिव महाकीर्त्तिकरं मन्यन्त इति मन्तव्यम्। तत्राशसुक्त-सङ्कलनप्रकारः—

लक्षणामूलः
**अविवक्षितवाच्यः**
चतुर्विधः।
- अर्थान्तरसंक्रमितवाच्यः—२
  - पदगतः ··· १ ❀
  - वाक्यगतः ··· १
- अत्यन्ततिरस्कृतवाच्यः—२
  - पदगतः ··· १
  - वाक्यगतः ··· १

अभिधामूलः
**विवक्षितान्यपरवाच्यः**
प्रधानतो द्विविधः।
- असंलक्ष्यक्रमव्यङ्ग्यः
- संलक्ष्यक्रमव्यङ्ग्यः

---

❀ एते चत्वार एकाङ्काः परपृष्ठस्थ सप्तचत्वारिंशदङ्कैः सह मिलिताः सन्तः परपृष्ठस्था एकपञ्चाशद्भवन्ति।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र रसभावादिरूप एकविधोऽपि **असंलक्ष्यक्रमव्यङ्ग्यः** अवान्तरभेदात् षड्विधः।

- पदगतः ... १
- पदांशगतः ... १
- वाक्यगतः ... १
- महावाक्यगतः ... १
- वर्णगतः ... १
- रचनागतः ... १

**संलक्ष्यक्रमव्यङ्ग्यः** एकचत्वारिंशद्विधः।

- शब्दशक्त्युत्थेषु
  - वस्तुरूपयोः
    - पदगतः ... १
    - वाक्यगतः ... १
  - अलङ्काररूपयोः
    - पदगतः ... १
    - वाक्यगतः ... १
- अर्थशक्त्युत्थेषु (प्रागुक्तानामसु)
  - पदगताः ... १२
  - वाक्यगताः ... १२
  - महावाक्यगताः ... १२
- शब्दार्थोभयशक्त्युत्थे ... ... ... १

शुद्धाः ५१

**सङ्कराः**

- अङ्गाङ्गिभावसङ्कराः
  - साजात्ये: उक्तानामेकपञ्चाशत्प्रकाराणां शुद्धानां ध्वनीनां मध्ये एकैकस्य सजातीयेनैकेन सह सङ्करेषु एकपञ्चाशत्प्रकाराः ५१
  - वैजात्ये: द्वितीयस्य शुद्धस्य प्रथमेन शुद्धेन सह सङ्करे एकः; तृतीयस्य शुद्धस्य प्रथमेन द्वितीयेन वा शुद्धेन सह सङ्करयोर्द्वौ; चतुर्थस्य शुद्धस्य प्रथमेन द्वितीयेन तृतीयेन वा शुद्धेन सह सङ्करेषु त्रयः; इत्यादिरूपेण पञ्चसप्तत्यधिकद्वादशशतप्रकाराः। ... १२७५
- एकाश्रयस्थितिसङ्कराः
  - साजात्ये उक्तक्रमेण ... ... ५१
  - वैजात्ये उक्तक्रमेण ... ... १२७५
- सन्दिग्धभावसङ्कराः
  - साजात्ये उक्तक्रमेण ... ... ५१
  - वैजात्ये उक्तक्रमेण ... ... १२७५

**संसृष्टयः**

- साजात्ये उक्तक्रमेण ... ... ५१
- वैजात्ये उक्तक्रमेण ... ... १२७५

५३०४

शुद्धाः ... ... ५१

सर्वसंख्या ... ५३५५

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शुद्धैः शुद्धभेदैरेकपञ्चाशता योजनेनेत्यर्थः। दिङ्मात्रं तूदाह्रियते—

"अत्युन्नतस्तनयुगा तरलायताक्षी द्वारि स्थिता तदुपयानमहोत्सवाय।
सा पूर्णकुम्भनवनीरजतोरणस्रक्सम्भारमङ्गलमयत्नकृतं विधत्ते॥" (घ)

अत्र स्तनावेव पूर्णकुम्भौ, दृष्टय एव नवनीरजस्रज इति रूपक-ध्वनि-रस-ध्वन्योरेकाश्रयानुप्रवेशरूपः सङ्करः (ङ)।

"धिन्वन्त्यमूनि मदमूर्च्छदलिध्वनीनि धूताध्वनीनहृदयानि मधोर्दिनानि।
निस्तन्द्रचन्द्रवदना-वदनारविन्द-सौरभ्यसौहृदसगर्वसमीरणानि॥" (च)

अत्र निस्तन्द्रेत्यादिलक्षणामूलध्वनीनां संसृष्टिः (छ)।

---

(घ) पदगतध्वनिसङ्करमुदाहरति अत्युन्नतेति। विदेशादागतं प्रियतममाकर्ण्य वासकसज्जार्थं स्थिताया नायिकाया वर्णनेयम्। अत्युन्नतं स्तनयुगं यस्याः सा, तरले चपले आयते दीर्घे च अक्षिणी चक्षुषी यस्याः सा, सा नायिका द्वारि द्वारि स्थिता सती, तस्य प्रियतमस्य उपयानम् उपस्थितिरेव महोत्सवस्तस्मै, अयत्नकृतम् अनायासेन विहितम्, पूर्णकुम्भौ महोत्सवादौ द्वारोभयपार्श्वे स्थापनीयाविति भावः, तथा नवनीरजानां सद्यः प्रस्फुटितपद्मानां तोरणस्रजस्तोरणे बन्धनीया मालास्तेषां सम्भार आयोजनमेव मङ्गलं माङ्गलिकव्यापारस्तत् विधत्ते करोति।

(ङ) सङ्करप्रकारं प्रदर्शयति अत्रेति। स्तनयोः पूर्णकुम्भद्वयत्वस्य दृष्टिषु नवनीरजमालात्वस्य च साक्षादारोपाभावेन तस्य व्यङ्ग्यत्वात् रूपकालङ्कारध्वनिरित्यर्थः। ताभिश्च स्तनयुगदृष्टिभिर्नायकरतेरुद्दीपनात् सम्भोगशृङ्गाररसस्य च ध्वनिः। तयोश्च ध्वन्योः स्तनयुगेति तरलायताक्षीति चैकैकपदरूपे एकैकस्मिन्नाश्रये द्वयोर्द्वयोरेवानुप्रवेशरूपः प्रवेशानन्तरस्थितिरूपः सङ्कर इत्यर्थः।

(च) पदगतध्वनिसंसृष्टिमुदाहरति धिन्वन्तीति। वसन्तवर्णनमिदम्। मदेन आनन्देन मूर्च्छन्तो वर्द्धमानाः अलिध्वनयो भ्रमररवा येषु तानि, धूतानि कामावेगजननेन कम्पितानि अध्वनीनां पथिकानां विरहिजनानां हृदयानि यैस्तानि, तथा निस्तन्द्रः प्रकाशमानश्चन्द्र इव वदनं यासां तासां रमणीनां वदनारविन्दानां सौरभ्येण सौरभेण यत् सौहृदं सौहार्द्दं सम्पर्कस्तेन सगर्वः साभिमानी बहुलसुरभिः समीरणो वायुर्येषु तानि अमूनि मधोर्वसन्तकालस्य दिनानि धिन्वन्ति जनानानन्दयन्ति।

(छ) अत्रेति। तन्द्रा नाम प्रमीला तस्यास्तु चन्द्रे अचेतनत्वेन असम्भवादेव निस्तन्द्रत्वस्याप्यसम्भव इति मुख्यार्थबाधेन जहत्स्वार्थलक्षणया निस्तन्द्रपदस्य प्रकाशरूपोऽर्थः प्रतिपाद्यते; प्रकाशातिशयश्च प्रयोजनम्, तच्च व्यञ्जनाप्रतिपाद्यमित्येकोऽत्यन्ततिरस्कृतवाच्यो ध्वनिः; तथा सौहृदगर्वौ प्राणिधर्मौ, तयोश्च वाय्वसम्भवात् यथाक्रमं सम्पर्के बाहुल्ये च जहत्स्वार्था लक्षणा; प्रयोजनञ्च तयोरप्यतिशय एव, सोऽपि च व्यञ्जनाप्रतिपाद्य एवेत्यपरावपि अत्यन्ततिरस्कृतवाच्यौ ध्वनी, इति त्रयाणाम् अत्यन्ततिरस्कृतवाच्यरूपाणां पदगतानां लक्षणामूलध्वनीनां परस्परनैरपेक्ष्यस्थितेः संसृष्टिरित्यर्थः। न च पूर्ववदत्रापि कथं न सङ्कर इति वाच्यम्, अङ्गाङ्गित्वाभावात् नैरपेक्ष्यात् पदत्रयगतत्वेन पूर्ववदेकाश्रयस्थित्यभावात् सन्दिग्धत्वाभावाच्च तन्निवेशस्य च सङ्करस्याप्रसक्तेः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ गुणीभूतव्यङ्ग्यम् ।

१६ । अपरन्तु गुणीभूत-व्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये । (ञ)

अपरं काव्यम् । अनुत्तमत्वं न्यूनतया साम्येन च सम्भवति (झ) ।

१७ । तत्र स्यादितराङ्गं काक्वाक्षिप्तञ्च वाच्यसिद्ध्यङ्गम् ॥
सन्दिग्धप्राधान्यं तुल्यप्राधान्यमस्फुटमगूढ़म् ।
व्यङ्ग्यमसुन्दरमेवं भेदास्तस्योदिता अष्टौ ॥ (ञ)

इतरस्य रसादेरङ्गं रसादिव्यङ्ग्यं यथा—(ट)

"अयं स रसनोत्कर्षी पीनस्तनविमर्द्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥" (ठ)

अत्र शृङ्गारः करुणस्याङ्गम् (ड)

---

(ञ) अपरमिति । व्यङ्ग्ये अर्थे वाच्यादर्थात् अनुत्तमे तत्समाने ततो निकृष्टे वा सति, अपरं ध्वनिभिन्नं काव्यं गुणीभूतव्यङ्ग्यं तत्संज्ञकं स्यात् ।

(झ) सम्भवतीति । अनुत्तमस्य उत्तमेतररूपत्वादिति भावः ।

(ञ) तत् गुणीभूतव्यङ्ग्यं नामतः प्रकारतश्च विभजते तत्रेति । तत्र गुणीभूतव्यङ्ग्ये व्यङ्ग्यं वस्तु, इतरस्य रसभावादेरङ्गं परिपोषकम्, काक्वा विकृतकण्ठध्वनिविशेषेण आक्षिप्तं वाच्यार्थेन सहैव प्रतीतम्, वाच्यसिद्धेर्मुख्यार्थनिष्पत्तेरङ्गं सम्पादकम्,, सन्दिग्धं प्राधान्यं यस्य तत् वाच्यार्थस्य व्यङ्ग्यार्थस्य वा प्राधान्यमिति संशयविषयीभूतमित्यर्थः; तुल्यं वाच्यार्थसमानतया निश्चितं प्राधान्यं यस्य तत् तुल्यप्राधान्यम्, अस्फुटम् अस्पष्टं निपुणबुद्धिभिरप्यभिनिविश्य ज्ञायमानम्, अगूढ़म् अगुप्तं स्थूलबुद्धिभिरपि सहसैव ज्ञायमानम्, असुन्दरम् अचमत्कारि च स्यात्; एवमित्थं तस्य गुणीभूतव्यङ्ग्यस्य अष्टौ भेदा उदिता उक्ताः । तथा च इतराङ्गम्, काक्वाक्षिप्तम्, वाच्यसिद्ध्यङ्गम्, सन्दिग्धप्राधान्यम्, तुल्यप्राधान्यम्, अस्फुटम्, अगूढ़म्, असुन्दरञ्चेत्यष्टौ नामान्यप्यमीषां ज्ञेयानि ।

(ट) इतरस्येति । उभयत्राप्यादिशब्देन भावादीनां ग्रहणम् । रसादिरूपं व्यङ्ग्यं रसादिव्यङ्ग्यम् ।

(ठ) अयमिति । महाभारते स्त्रीपर्व्वणि चतुर्विंशाध्याये समराङ्गने मृतस्य भूरिश्रवसो हस्तं पतितं दृष्ट्वा तत्कान्तायाया उक्तिरियम् । अयं दृश्यमानः, स पूर्व्वानुभूतः, रसनोत्कर्षी रमणाय कटिदेशात् काञ्चीदामोत्सारणकारी, पीनौ स्थूलौ स्तनौ मदीयकुचौ विमर्द्दयतीति सः, नाभिम् ऊरू जघनञ्च स्पृशति शीलमस्येति सः, तथा नीवीं कटिवस्त्रबन्धं विस्रंसयति स्खलयतीति स तथोक्तः करो हस्तः ।

(ड) अत्रेति । अत्रालम्बनस्य भूरिश्रवसो मृतत्वेन रत्यादीनां केवलं स्मर्य्यमाणतया पूर्णशृङ्गारत्वाभावेऽपि खण्डरसतया व्यपदेश्यः शृङ्गारः; करुणस्तु प्राकरणिकतया शोकस्य प्रधानत्वात् पूर्ण एव । अतएव शृङ्गारो विशेषेण शोकमुद्दीप्य करुणं पुष्णातीति करुणस्याङ्गमित्याशयः । अत्र विरुद्धयोरपि शृङ्गारकरुणयोरेकत्र समावेशस्य समाधानं खण्डरसप्रकारश्च सप्तमपरिच्छेदे वक्ष्यते ।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"मानोन्नतां प्रणयिनीमनुनेतुकाम-
स्त्वत्सैन्यसागररवोद्गतकर्णतापः।
हा! हा! कथं नु भवतो रिपुराजधानी-
प्रासादसन्ततिषु तिष्ठति कामिलोकः॥" (ढ)

अत्रौत्सुक्यत्राससन्धिसंस्कृतस्य करुणस्य राजविषयरतावङ्गभावः (ण)।

"जनस्थाने भ्रान्तं कनकमृगतृष्णान्वितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्।
कृतालङ्काभर्त्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता॥" (त)

---

(ढ) रसस्य भावाङ्गतामुदाहरति मानोन्नतामिति। राज्ञः प्रशंसेयम्। हे राजन्! भवतो रिपुराजधान्याः प्रासादसन्ततिषु अट्टालिकासमूहेषु मानोन्नताम् अत्यन्तमानवतीं प्रणयिनीम् अनुनेतुकामः प्रसादयितुमिच्छुः कामिलोकः तव सैन्यसागरस्य रवेण आक्रमणकोलाहलेन उद्गत उपस्थितः कर्णयोस्तापः पीड़ा यस्य स तादृशः सन् कथं नु तत्र तिष्ठति ?।

(ण) अत्रेति। अत्र श्लोके प्रथमचरणेनौत्सुक्यं द्वितीयचरणेन च त्रासो व्यज्यते; तयोश्च औत्सुक्यत्रासयोः सन्धिना सम्मेलनेन संस्कृतस्य परिपोषितस्य, करुणस्य हाहापदद्योत्यस्य करुणरसस्य, राजविषयरतौ प्राधान्येन प्रतिपाद्ये राजविषयकानुरागे अङ्गभावः अङ्गत्वम्। अत्र उक्तानामौत्सुक्यादीनां व्यङ्ग्यार्थानां वाच्यार्थात् न्यूनचमत्कारित्वेन गुणीभूतव्यङ्ग्यत्वम्।

(त) शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यार्थस्य वाच्यार्थाङ्गतां दर्शयति जनेति। धनार्थं चेष्टमानस्यापि कस्यचिदप्राप्तधनतया धनिसमीपे सनिर्वेदोक्तिरियम्। कनके धनलाभविषये या मृगतृष्णा अनर्थकाकाङ्क्षा तया अन्विता तत्त्वनिर्णयाक्षमीकृता धीर्बुद्धिर्यस्य तेन तथोक्तेन मया, जनानां धनिलोकानां स्थाने सन्निधाने भ्रान्तं भ्रमणं कृतम्। अन्यत्र तु कनकमृगः सुवर्णमयहरिणो मारीचः तस्य तृष्णया धारणलोभेन अन्विता मोहिता धीर्यस्य तेन रामेण जनस्थाने तदाख्ये दण्डकारण्यैकदेशे भ्रान्तं भ्रमणं कृतम्। वक्तृपक्षे वैशब्दः पादपूरणे। प्रतिपदं प्रत्येकधनिस्थाने 'देहि' इति वचो वाक्यम् उदश्रु उद्गतरोदनजलं यथा स्यात्तथा प्रलपितम् अनर्थकमुक्तं तेषां दानाभावादिति भावः। अन्यत्र तु प्रतिपदं प्रत्येकपादक्षेपे 'वैदेहि! हे विदेहनन्दिनि! सीते!' इति वचः उदश्रु यथा स्यात्तथा प्रलपितम् अनर्थकमुक्तम्, तत्पूर्वमेव रावणेन सीताया हृततया तत्प्रत्युत्तरालाभादिति भावः। भर्त्तुर्धनस्वामिनो जनस्य परिपाटीषु उपकरणवेश-रचनादिषु का घटना प्रशंसायोजना अलमत्यन्तं न कृता? इति त्वं वद, अपि तु सर्वैव कृतेत्यर्थः। तथापि तत्काञ्चनं नाधिगतमिति भावः। अन्यत्र तु लङ्काभर्त्तुर्लङ्केश्वरस्य रावणस्य वदनपरिपाट्यां मुखश्रेण्याम् [illegible] कृता। अतएव रामत्वं [illegible] प्राप्तम्; न किन्तु कुशलं

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र रामत्वं प्राप्तमित्यवचनेऽपि शब्दशक्तेरेव रामत्वमवगम्यते । वचनेन तु सादृश्यहेतुकतादात्म्यारोपणमाविष्कुर्वता तद्गोपनमपाकृतम् । तेन वाच्यं सादृश्यं वाक्यार्थान्वयोपपादकतया अङ्गतां नीतम् (थ) ।

काक्वाक्षिप्तं यथा—"मथ्नामि कौरवशतं समरे न कोपात् ?
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ? ।
सञ्चूर्णयामि गदया न सुयोधनोरू ?
सन्धिं करोतु भवतां नृपतिः पणेन ॥" (द)

अत्र 'मथ्नाम्येव' इत्यादि व्यङ्ग्यं वाच्यस्य निषेधस्य सहभावेनैव स्थितम् (ध) ।

---

दारिद्र्यनाशेन मङ्गलकरं वसु धनं यस्य तस्य भावः सा, अन्यत्र तु कुशलवौ सुतौ पुत्रौ यस्याः सा सीता, न अधिगता न प्राप्ता ।

(थ) अत्रेति । अवचनेऽपि अनुक्तावपि । शब्दशक्तेरेव शब्दगताभिधामूलव्यञ्जनावृत्तिवशादेव । रामत्वं रामसादृश्यं वक्तरीति शेषः । वचनेन तु 'रामत्वम् आप्तम्' इत्युक्त्या तु सादृश्यम् एकवाचकवाच्यत्वरूपं शाब्दमौपम्यं हेतुर्यस्य तत् सादृश्यहेतुकम् । तादृशसादृश्यमन्तरेण वक्तरि रामस्य तादात्म्यारोपणासम्भवादिति भावः, तादात्म्यारोपणम् आत्मनि रामस्याभेदारोपम् आविष्कुर्वता प्रकाशयता वचनेनेति सम्बन्धः तस्य रामसादृश्यस्य गोपनं गूढत्वम् अपाकृतं निरस्तम् । तेन हेतुना, वाच्यं व्यङ्ग्यमपि शीघ्रबोध्यतया वाच्यायमानं सादृश्यं रामतुल्यत्वम्, वाक्यार्थस्य आत्मना रामत्वप्राप्तिरूपस्य अन्वयोपपादकतया, सम्बन्धसम्पादकतया, अन्यथा अन्यस्य धर्मं कथमन्यः प्राप्नुयादिति "मयाप्तं रामत्वम्" इत्यस्य अनुपपत्तिः स्यादिति भावः । अङ्गतां नीतम् आत्मकर्तृकरामत्वप्राप्तिरूपस्य वाच्यार्थस्य सम्पादकत्वं प्रापितं वक्त्रेति शेषः । अतएव व्यङ्ग्यार्थरूपस्य सादृश्यस्य वाच्यार्थादधिकचमत्कारित्वाभावेनात्र गुणीभूतव्यङ्ग्यत्वम् ।

(द) मथ्नामीति । वेणीसंहारनाटके युधिष्ठिरस्य सन्धिप्रवृत्तिं श्रुवन्तं सहदेवं प्रति भीमसेनोक्तमिदम् । समरे कोपात् कौरवशतं दुर्योधनादिभ्रातृशतं न मथ्नामि ? पूर्वप्रतिज्ञानुसारेण न निहन्मि भविष्यत्सामीप्ये वर्त्तमाना । अन्यत्राप्येवम् । अपि तु मथ्नाम्येवेत्यर्थः । दुःशासनस्य उरस्तो वक्षःस्थलात् रुधिरं न पिबामि ? अपि तु पिबाम्येव । गदया सुयोधनस्य दुर्योधनस्य ऊरू न सञ्चूर्णयामि ? अपि तु सञ्चूर्णयाम्येव । भवतां नृपतिः युधिष्ठिरः आत्मनः प्रतिज्ञाभङ्गकरणे प्रवृत्तत्वात् स मे न नृपतिरिति भावः, पणेन इन्द्रप्रस्थादिग्रामपञ्चकमात्रप्राप्तिरूपेण सन्धिं करोतु ।

(ध) अत्रेति । निषेधस्य न मथ्नामीत्यादेः, सहभावेनैव स्थितं युगपत् प्रतीतिविषयत्वेनैव श्लोके विद्यमानम् । तथा च यथा निष्पीड्य पात्ररक्षितेक्षुरसापेक्षया स्वयं चर्वितेक्षुदण्डरसे माधुर्यमधिकतरं प्रतीयते ; तथा वाच्यार्थसहभावेन प्रतीयमानव्यङ्ग्यार्थापेक्षया किञ्चिद्विविच्य प्रतीयमान एव व्यङ्ग्यार्थे माधुर्यमधिकतरं प्रतीयत इति गुणीभूतव्यङ्ग्यत्वमवसेयम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"दीपयन् रोदसीरन्ध्रमेष ज्वलति सर्वतः।
प्रतापस्तव राजेन्द्र! वैरिवंशदवानलः॥" (न)

अत्रान्वयस्य वेणुत्वारोपणरूपो व्यङ्ग्यः प्रतापस्य दावानलत्वारोपसिद्ध्यङ्गम् (प)।

"हरस्तु किञ्चित् परिवृत्त"त्यादौ विलोचनव्यापारचुम्बनाभिलाषयोः प्राधान्ये सन्देहः (फ)।

"ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते॥" (ब)

---

(न) वाच्यसिद्ध्यङ्गरूपं गुणीभूतव्यङ्ग्यं दर्शयति दीपयन्निति। राजस्तुतिरियम्। हे राजेन्द्र! वैरिवंशः शत्रुकुलमेव वंशो वेणुः तव दवानलो दावाग्निस्वरूपः एष तव प्रतापः रोदसीरन्ध्रं स्वर्गमर्त्त्ययोरन्तरालं दीपयन् प्रकाशयन् सर्वतो ज्वलति राजते।

(प) अत्रेति। अन्वयस्य वंशशब्दवाच्यस्य कुलस्य अन्वये इत्यर्थः वेणुत्वारोपणरूपो वंशदण्डत्वारोपात्मकः व्यङ्ग्यो व्यङ्ग्यार्थः प्रतापस्य या दवानलत्वारोपसिद्धिस्तस्या अङ्गः निर्वाहकः। तथा च प्रताप इति दावानल इति च प्रथमाविभक्तिद्वयम् अन्यथानुपपत्त्या प्रतापे दवानलत्वारोपपुरःसरमेव तयोरभेदं वक्ति; सुतराञ्च प्रतापे दवानलत्वारोपनिबन्धनाभेदरूपवाच्यार्थस्य सिद्धिनिर्वाहको वैरिकुले वंशदण्डत्वारोपरूपो व्यङ्ग्यार्थ एव। अन्यथा प्रतापे दवानलत्वारोपणमसमञ्जसमेव स्यात् सादृश्यघटकाभावात्। अतएव ईदृशश्लिष्टपरम्परितरूपकस्य "यत्र कस्यचिदारोपः परारोपणकारणम्" इति वक्ष्यमाणलक्षणे कारणपदं वक्ष्यति। अतएवात्र सादृश्यमात्रनिर्वाहकतया व्यङ्ग्यारोपस्य वाच्यारोपादनधिकचमत्कारितया गुणीभूतव्यङ्ग्यत्वम्। यत्र एकस्याभावे अन्यस्यानुपपत्तिस्तत्र वाच्यासिद्ध्यङ्गम्, यत्र तु अन्यतराभावेऽपि अन्यतरोपपत्तिस्तत्र इतराङ्गमित्यनयोः पार्थक्यम्।

(फ) सन्दिग्धप्राधान्यं दर्शयति हर इति। विलोचनव्यापारो बिम्बफलाधरोष्ठे उमामुखे दृष्टिपातो वाच्यः। मुखमात्रे दृष्टिपाताच्च चुम्बनाभिलाषो व्यङ्ग्यः। तत्र शृङ्गारव्यञ्जकत्वात् किं विलोचनव्यापारस्य प्राधान्यम्, उत व्यङ्ग्यत्वेनास्वाद्यत्वाच्चुम्बनाभिलाषस्य प्राधान्यमिति प्राधान्यविषये सन्देह इत्यर्थः। व्यङ्ग्यस्य प्राधान्यसन्देहादेव चात्र नातिचमत्कारितया गुणीभूतव्यङ्ग्यत्वम्। तादृशसन्देहादेव च नेदं तुल्यप्राधान्यलक्ष्यम्, तत्र प्राधान्यतुल्यताया निश्चितत्वादिति बोध्यम्।

(ब) तुल्यप्राधान्यं दर्शयति ब्राह्मणेति। महावीरचरितनाटकद्वितीयाङ्के रावणं प्रति पत्रद्वारा परशुरामस्योक्तिरियम्। "दिग्विजये भार्गवविजिगीषुं दशग्रीवं प्रति मन्त्रिण उक्तिरियम्" इति रामचरणेन यल्लिखितं तदुक्तनाटकादर्शनादनुमानमात्रेण। ब्राह्मणानाम् अतिक्रमत्याग उत्पीड़नपरित्यागः, भवतां राक्षसानामेव भूतये मङ्गलाय भविष्यति। अन्यथा ब्राह्मणातिक्रमत्यागाभावे वो युष्माकं मित्रं समानशिवोपासकत्वेन सखा जामदग्न्यश्च दुर्मनायते असन्तुष्टो भविष्यति।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र परशुरामो रक्षःकुलक्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम् (भ) ।

"सन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः ।
अल्लावदीन-(१) नृपतौ न सन्धिर्न च विग्रहः ॥" (म)

अत्र अल्लावदीनाख्ये (२) नृपतौ दानसामादिमन्तरेण नान्यः प्रशमोपाय इति व्यङ्ग्यं व्युत्पन्नानामपि झटित्यस्फुटम् (य) ।

"अनेन लोकगुरुणा सतां धर्मोपदेशिना ।
अहं व्रतवती स्वैरमुक्तेन किमतः परम् ॥" (र)

अत्र प्रतीयमानोऽपि शाक्यमुनेस्तिर्य्यग्योषिति बलात्कारोपभोगः स्फुटतया वाच्यायमान इत्यगूढम् (ल) ।

"वाणीरकुडङ्गुड्डीणसउणिकोलाहलं सुणंतीए ।
घरकम्मवावड़ाए वहुए सीअंति अङ्गाइं ॥" (व)

(भ) अत्रेति । व्यङ्ग्यस्य दुर्मनायते इति पदद्योत्यस्य, वाच्यस्य मित्रमित्यनेन प्रतिपाद्यस्य हितकारित्वरूपस्य अर्थस्य च समं प्राधान्यं समानचमत्कारित्वादिति भावः । अतएव च व्यङ्ग्यार्थस्य वाच्यार्थादनुत्तमत्वेन गुणीभूतव्यङ्ग्यत्वम् ।

(म) अस्फुटव्यङ्ग्यं दर्शयति सन्धाविति । अल्लावदीनेन सहात्मनो विरोधं सम्भाव्य कस्यचिद्दुर्बलनृपतेरुक्तिरियम् । सन्धौ अल्लावदीनेन सह सन्धिकरणे सर्वस्वहरणं समस्तवित्तग्रहणं तेन कर्त्तव्यमिति शेषः, विग्रहे युद्धकरणे तु प्राणनिग्रहस्तेन प्राणनाशः कर्त्तव्यः । अतएव अल्लावदीननृपतौ न सन्धिर्न च विग्रहो घटत इति शेषः ।

(य) अत्रेति । दानसामादीत्यादिपदेन पलायनपरिग्रहः । व्युत्पन्नानामपि निपुणमतीनामपि । अस्फुटं प्रतीत्यविषयीभूतम् । अतएव चास्य वाच्यार्थादनुत्तमत्वेन गुणीभूतव्यङ्ग्यत्वम् ।

(र) अगूढव्यङ्ग्यं दर्शयति अनेनेति । शाक्यसिंहस्य तिर्य्यग्योषिता सह बलात्कारोपभोगं सोढुमशक्नुवत्यास्तद्भार्य्यायास्तद्वृत्तान्तं जिज्ञासमानां सखीं प्रत्युक्तिरियम् । सतां धर्मोपदेशिना लोकगुरुणा अनेन पत्या अहं व्रतवती पतिव्रताया नियमवती, अतएव अतःपरं स्वैरं स्वच्छन्दं सम्पूर्णमित्यर्थः उक्तेन कथितेन पतिचरित्रेण किं प्रयोजनम् ? पतिव्रतया पतिदोषस्यावक्तव्यत्वान्मया नातः परं किञ्चिद्वाच्यमिति भावः ।

(ल) अत्रेति । प्रतीयमानोऽपि व्यङ्ग्यतया ज्ञायमानोऽपि । स्फुटतया आक्षेपालङ्कारद्योत्यव्याख्यव्यभिचारिभावप्रभावेण स्पष्टतया हेतुना, वाच्यायमानो वाच्यार्थवत् शीघ्रं प्रतीयमानः । अतएवात्र व्यङ्ग्यार्थस्य सुस्पष्टत्वेन वाच्यार्थादनुत्तमत्वाद्गुणीभूतव्यङ्ग्यत्वम् ।

---

(१) अल्लापदीन इत्यपि पाठः । (२) अल्लापदीनाख्ये इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र दत्तसङ्केतः कश्चिल्लतागृहं प्रविष्ट इति व्यङ्ग्यात् "सीदन्त्यङ्गानि" इति वाच्यस्य चमत्कारः सहृदयसंवेद्य इत्यसुन्दरम् (श)। किञ्च, यो दीपक-तुल्ययोगितादिषु उपमाद्यलङ्कारो व्यङ्ग्यः स गुणीभूतव्यङ्ग्य एव, काव्यस्य दीपकादिमुखेनैव चमत्कारविधायित्वात् (ष)। तदुक्तं ध्वनिकृता—

"अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते।
तत्परत्वं न काव्यस्य नासौ मार्गो ध्वनेर्मतः॥" (स)

यत्र च शब्दान्तरादिना गोपनकृतचारुत्वस्य विपर्य्यासः (ह)। यथा—

---

(व) असुन्दरं व्यङ्ग्यं दर्शयति वाणीरेति। "वाणीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वत्याः। गृह-कर्म्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥" इति संस्कृतानुवादः। उपनायकाय दत्तसङ्केतां भ्रातृवधूं प्रति ननान्दु-रुपहासच्छलिनोक्तिरियम्। वाणीरकुञ्जात् वेतसलताग्रतस्थानात् उड्डीनानां निजागमनसूचनाय तदुपनायक-कर्त्तृकसंघट्टनेन हठादुत्पतितानां शकुनीनां पक्षिणां कोलाहलं शृण्वत्याः, गृहकर्म्मव्यापृताया रन्धनादौ प्रवृत्ताया अपि वध्वाः अङ्गानि सीदन्ति आनन्दावेगवशादवसन्नानि तत्तत्कर्म्मसमर्थानि भवन्ति।

(श) अत्रेति। दत्तः सङ्केतो यस्मै सः। व्यङ्ग्यात् प्रथमार्द्धसूचितव्यङ्ग्यार्थात्, अधिकतर इति शेषः। अतएवास्य गुणीभूतव्यङ्ग्यत्वम् असुन्दरमिति संज्ञा च सङ्गच्छते। न चात्रापि प्रथमार्द्धसूचितव्यङ्ग्या-र्थस्य अङ्गावसादरूपवाच्यार्थस्य अङ्गावसादरूपवाच्यार्थसिद्धिसम्पादकतया वाच्यसिद्ध्यङ्गत्वापत्तिरिति वाच्यम्, अत्र अङ्गावसादरूपवाच्यार्थस्य आनन्दावेगादिद्योतकत्वात् तत्र तु तदभावात्। एतेन यत्र वाच्यार्थस्य सुन्दराप-रार्थद्योतकत्वं तत्रैव व्यङ्ग्यस्यासुन्दरत्वम्, यत्र तु वाच्यार्थस्य न तादृशापरार्थद्योतकत्वं तत्र वाच्यसिद्ध्यङ्ग-मिति फलितम्।

(ष) असुन्दराख्यगुणीभूतव्यङ्ग्यस्य उदाहरणान्तराण्याह किञ्चेति। अपि चेत्यर्थः। प्रथमादिपदेन प्रतिवस्तूपमादृष्टान्तादीनां ग्रहणम्। द्वितीयादिपदेन च अनेकक्रियाघटितदीपकादौ क्रियासमुच्चयादीनां परिग्रहः। गुणीभूतव्यङ्ग्य एव असुन्दराख्य इति शेषः। दीपकादिमुखेनैव आपातत एव प्रतीयमानदीप-कादिद्वारैव; न तु तात्पर्य्यपर्य्यालोचनायाः परं प्रतीयमानोपमादिना व्यङ्ग्यालङ्कारेणेत्येवशब्दार्थः। दीपकादीनां प्रकारान्तरतया अभूतपूर्वत्वादिति भावः। अतएव च तादृशोपमाद्यलङ्काररूपगुणीभूतव्यङ्ग्यस्य असुन्दरसंज्ञापि सङ्गच्छत इत्यवधेयम्।

(स) अलङ्कारेति। यत्र स्थले अलङ्कारान्तरस्य प्रतीतावपि व्यङ्ग्यतया ज्ञाने सत्यपि, काव्यस्य काव्या-त्मकवाक्यस्य तत्परत्वं तदलङ्कारान्तरतात्पर्य्यकत्वं न भासते न प्रतीतिविषयो भवति; असौ प्रकारः ध्वने-र्मार्गो विषयो न मतः; अपि तु गुणीभूतव्यङ्ग्यप्रकारविशेष एव मत इत्यर्थः।

(ह) असुन्दरस्य प्रकारान्तरं दर्शयितुमाह यत्र चेति। शब्दान्तरेण व्यङ्ग्यार्थस्य हठात् प्रत्यायकेन पदान्तरेण आदिशब्दात्तादृशवाक्यान्तरेण वा, गोपनेन व्यञ्जनावृत्तिकाव्यव्यञ्जनभावद्वारा कृतं यच्चारुत्वं चमत्-कारित्वं तस्य विपर्य्यासो व्यत्ययो भवति तत्रापि गुणीभूतव्यङ्ग्य एव प्रकार इति पूर्वेण सम्बन्धः।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"दृष्ट्या केशव ! गोपरागहृतया किञ्चिन्न दृष्टं मया
तेनात्र स्खलितास्मि नाथ ! पतितां किं नाम नालम्बसे ।
एकस्त्वं विषमेषुखिन्नमनसां सर्वाबलानां गति-
र्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥" (घ)

अत्र (१) गोपरागादिशब्दानां गोपे राग इत्यादिव्यङ्ग्यार्थानां "सलेशम्" इति पदेन स्फुटतयावभासः । "सलेशम्" इति पदस्य परित्यागे ध्वनिरेव (क)। किञ्च, यत्र वस्त्वलङ्काररसादिरूपव्यङ्ग्यानां रसाभ्यन्तरे गुणीभावः, तत्र प्रधानकृत एव काव्यव्यवहारः । तदुक्तं तेनैव—(ख)

"प्रकारोऽयं गुणीभूत-व्यङ्ग्योऽपि ध्वनिरूपताम् ।
धत्ते रसादितात्पर्य्य-पर्य्यालोचनया पुनः ॥" इति (ग)

---

(घ) दृष्ट्येति । हे केशव ! मया गवां परागैश्चरणोत्थापितधूलिभिः हृतया आक्रष्टदर्शनशक्तिकया दृष्ट्या चक्षुषा किञ्चिद्गमनपथादिकं न दृष्टम् ; अन्यत्र तु गोपे गोपाले त्वयि यो रागोऽनुरागस्तेन हृतया आक्रष्टया मया दृष्ट्या ज्ञानेन किञ्चित् कुलादिकं न दृष्टं न विचारितम् । तेन सम्यक्पथादिदर्शनाभावेन अत्र स्खलिता पतितास्मि, अतएव हे नाथ ! रक्षक ! पतितां मां किं नाम न आलम्बसे धरसि ; अन्यत्र तु तेन अनुरागेण हेतुना, अत्र स्खलितास्मि सतीचारित्रात् विच्युतास्मि, तथा च हे नाथ ! अन्यतरपतित्वेनाभिमत ! पतितां रमणानुग्रहलाभाय तव पदप्रान्ते प्रणतां मां किं नाम नालम्बसे रमणाय न धरसि । ननु कथमहं परस्त्रियं त्वामवलम्बे इत्याह एक इति । विषमेषु उच्चावचस्थानेषु खिन्नमनसां पतनेन क्लान्तहृदयानां सर्वेषाम् अबलानां दुर्बलजनानां त्वम् एक एव गतिः रक्षिता, अतो रक्षणेच्छया परस्त्रीधरणेऽपि न दोष इति भावः । अन्यत्र तु विषमेषुः पञ्चशरः कामस्तेन खिन्नमनसां पीड़ितचित्तानां सर्वासां स्वपरसाधारणीनाम् अबलानाम् स्त्रीणां त्वमेक एव गतिः सुरतेन तद्दुःखहर्त्ता । गोष्ठे गोप्या एवं सलेशं सश्लेषं किञ्चित् सुरतेङ्गितसहितं वा गदित उक्तो हरिः कृष्णः चिरं वो युष्मान् अवतात् रक्षतु ।

(क) अत्रेति । स्फुटतया अवभासः स्पष्टतया प्रतीतिः । ध्वनिरेव शब्दशक्तिमूलवस्तुध्वनिरेव, न तु गुणीभूतव्यङ्ग्यमित्येवशब्दार्थः । "कामिनीकुचकुम्भवत् किञ्चिद्गूढ़ताया एव चमत्कारविधायित्वादिति भावः ।

(ख) व्यङ्ग्यस्य व्यवस्थान्तरमाह किञ्चेति । अपि चेत्यर्थः । रसादीत्यादिपदेन भावादीनां ग्रहणम् । रसाभ्यन्तरे अन्यरसमध्ये गुणीभावः अप्रधानभावेनावस्थितिः । तत्रेति । "प्रधानानुयायिनो हि जनव्यवहारा भवन्ती"ति न्यायादित्याशयः । तथा च—"अयं स रसनोत्कर्षी" इत्यादौ करुणरसाभ्यन्तरे शृङ्गाररसस्य गुणीभावात् "करुणकाव्यमिदम्" इति करुणरसेनैव व्यवहारः कर्त्तव्य इत्युपदिष्टम् । तेनैव ध्वनिकृतैव ।

---

(१) तत्र च इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यत्र तु—(घ)

"यत्रोन्मदानां प्रमदाजनानामभ्रंलिहः शोणमणीमयूखः।
सन्ध्याभ्रमं प्राप्नुवतामकाण्डेऽप्यनङ्गनेपथ्यविधिं विधत्ते॥" (ङ)

इत्यादौ रसादीनां नगरीवृत्तादिवस्तुमात्रे अङ्गत्वम्, तत्र तेषामतात्पर्य्यविषयत्वेऽपि तैरेव गुणीभूतैः काव्यव्यवहारः (च)। तदुक्तमस्मत्सगोत्र कवि-पण्डित-मुख्य-श्रीचण्डीदासपादैः—

"काव्यार्थस्याखण्डबुद्धिवेद्यस्य तन्मयीभावेनास्वाददशायां गुणप्रधानभावावभासस्तावन्नानुभूयते, कालान्तरे तु प्रकरणादिपर्य्यालोचनया भवन्नप्यसौ न काव्यव्यपदेशं व्याहन्तुमीशस्तस्यास्वादमात्रायत्तत्वात्" इति (छ)।

---

(ग) प्रकार इति। अयं गुणीभूतव्यङ्ग्योऽपि प्रकार इतराङ्गादिभेदः, रसादौ यत् तात्पर्य्यं रसादिप्रत्यायनेच्छया कवेरुच्चरितत्वं तस्य पर्य्यालोचनया अनुसन्धानेन पुनर्ध्वनिरूपतां धत्ते प्राप्नोति। एवञ्च "अयं स रसनोत्कर्षी" इत्यादौ गुणीभूतव्यङ्ग्यस्यापि शृङ्गारस्य ध्वनित्वसम्भवेन शृङ्गारकाव्यव्यवहारप्रसक्तावपि तत्र करुणस्यैव प्राधान्यात्तेनैव काव्यव्यवहार इति भावः।

(घ) नन्वेवं सर्वैरेव कविभिः रसादिप्रत्यायनेच्छयैव काव्यनिर्म्माणात् सर्वत्रैव ध्वनिकाव्यव्यवहारापत्तिः, तथा च गुणीभूतव्यङ्ग्याख्यभेदनिरूपणं निरर्थकमेवेत्याह यत्र त्विति।

(ङ) यत्रेति। यत्र नगर्य्याम् अभ्रंलिहो दूराकाशगामी शोणमणीनां पद्मरागाणां मयूखो रश्मिः अकाण्डे अनवसरे सन्ध्याभ्रमं तादृशरश्मिसञ्चरणादेव अयं सन्ध्याकाल इति भ्रान्तिं प्राप्नुवताम् उन्मदानां मदनमत्तानां प्रमदाजनानाम् अनङ्गनेपथ्यविधिं कामसम्भोगोपयोगिवेशविधानं विधत्ते सम्पादयति।

(च) इत्यादाविति। नगरीवृत्तादिवस्तुमात्रे केवलनगरीमध्यगतवृत्तान्तप्रभृतिप्रदर्शनरूपवस्तुविषये, अङ्गत्वं तत् परिपोषकत्वम्। तेषां रसादीनाम् अतात्पर्य्यविषयत्वेऽपि प्रत्यायनेच्छया कविना अनिर्म्मितत्वेऽपि नगरीवृत्तान्तादिज्ञापनरूपवस्तुमात्रस्य कवेरुद्देश्यत्वेन रसादिज्ञापनस्यानुद्देश्यत्वेऽपीत्यर्थः तैरेव गुणीभूतैरप्रधानीभूतैः रसादिभिः काव्यव्यवहारः। एवञ्च "यत्रोन्मदानाम्" इत्यादौ शृङ्गाररसस्य नगरीवृत्तान्तं प्रति अङ्गत्वात् इतराङ्गरूपगुणीभूतव्यङ्ग्यत्वम्, तथापि च 'शृङ्गारकाव्यमिदम्' इत्येव तत्र व्यवहारः कर्त्तव्यः न पुनः 'नगरीवृत्तान्तकाव्यम्' इति ; तेन च गुणीभूतव्यङ्ग्याख्यकाव्यभेदनिरूपणं न निरर्थकमिति भावः।

(छ) अत्रालङ्कारिकान्तरसंवादमाह तदुक्तमिति। अखण्डबुद्धिवेद्यस्य एकाग्रबुद्धिमात्रज्ञेयस्य काव्यार्थस्य काव्यप्रतिपाद्यस्य विभावादेः। आस्वाददशायां ज्ञानकाले, गुणप्रधानभावेनावभासः अङ्गाङ्गिभावेन बुद्धावुपस्थितिः। नानुभूयते सहृदयैरिति शेषः तन्मयीभावादेवेति भावः। कालान्तरे तु काव्यार्थानुभवकालात् परकाले तु। भवन्नपि जायमानोऽपि, असौ गुणप्रधानभावावभासः, काव्यव्यपदेशं रसादिघटितकाव्यसंज्ञां व्याहन्तुं [illegible] तस्य काव्यव्यपदेशस्य

CC-0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

केचिच्चित्राख्यं तृतीयं काव्यभेदमिच्छन्ति । तदाहुः—(ज)

"शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ।" इति (झ)

तन्न, यदि च अव्यङ्ग्यत्वेन व्यङ्ग्याभावस्तदा तस्य काव्यत्वमपि नास्तीति प्रागेवोक्तम् (ञ) । ईषद्व्यङ्ग्यत्वमिति चेत्, किं नाम ईषद्व्यङ्ग्यत्वम्, आस्वाद्यव्यङ्ग्यत्वम्, अनास्वाद्यव्यङ्ग्यत्वं वा ? (ट) । आद्ये प्राचीनभेदयोरेवान्तःपातः, (१) द्वितीये त्वकाव्यत्वम् (ठ) । यदि चास्वाद्यत्वं तदा अक्षुद्रत्वमेव, क्षुद्रतायामनास्वाद्यत्वात् । तदुक्तं ध्वनिकृता—(ड)

आस्वादमात्रायत्तत्वात् श्रवणादिकालीनयथाकथञ्चिदास्वाद्यमानरसादिमात्रघटितत्वात् । अतश्चण्डीदासस्यापि मते गुणीभूतव्यङ्ग्यरूपरसादिनापि काव्यव्यवहारः सिद्ध एवेति भावः ।

(ज) इदानीं काव्यप्रकाशसम्मतं तृतीयकाव्यभेदं निरसितुमाह केचिदिति । तथा च तन्मते काव्यं त्रिविधम् उत्तमं मध्यमम् अधमञ्चेति । तत्र ध्वनिकाव्यमुत्तमम् "इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः" इति लक्षणात् । गुणीभूतव्यङ्ग्यकाव्यं मध्यमम्, "अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्" इत्यभिधानात् । व्यङ्ग्यार्थरहितकाव्यन्तु अधमं चित्राख्यम् ।

(झ) तदधममपि द्विविधमित्याह शब्देति । अवरमधमम् अव्यङ्ग्यं काव्यन्तु शब्दचित्रं वाच्यचित्रञ्चेति द्विविधं स्मृतमित्यर्थः ।

(ञ) दूषयति तन्नेति । अव्यङ्ग्यत्वेन न विद्यते व्यङ्ग्यं यत्रेति बहुव्रीहिणा व्यङ्ग्यार्थराहित्येन व्यङ्ग्याभावो रसादिव्यङ्ग्यसामान्याभावो विवक्षित इत्यर्थः । प्रागेव प्रथमपरिच्छेद एव ।

(ट) तन्मतीयसमाधानमाशङ्क्य तद्विकल्प्य च दूषयितुमाह ईषदिति । अथ अव्यङ्ग्यमित्यत्र ईषदर्थे नञ्स्वीकारेण अव्यङ्ग्यत्वं नाम ईषद्व्यङ्ग्यत्वमित्युच्यते चेदित्यर्थः । आस्वाद्यम् ईषत्त्वेऽपि नातिक्षुद्रत्वात् अनुभवयोग्यं व्यङ्ग्यं व्यङ्ग्यार्थो यत्र काव्ये तस्य भावः अनास्वाद्यव्यङ्ग्यत्वम् । वा किं वा, अनास्वाद्यम् ईषत्त्वेन अत्यन्तक्षुद्रत्वात् परमाणुवत् अननुभवयोग्यं व्यङ्ग्यं यत्र तस्य भावः अनास्वाद्यव्यङ्ग्यत्वम् । अनयोः कतरदीषद्व्यङ्ग्यत्वमुच्यत इत्यर्थः ।

(ठ) दूषयति आद्य इति । आद्ये आस्वाद्यव्यङ्ग्यत्वरूपेषद्व्यङ्ग्यत्वाङ्गीकारे, प्राचीनभेदयोरेव प्राचीनैरङ्गीकृतयोर्ध्वनिगुणीभूतव्यङ्ग्यरूपयोरेव प्रकारयोर्मध्ये अन्तःपात अन्तर्भावः, भवदीयाव्यङ्ग्यनामकाधमकाव्यस्येति शेषः, तयोरुभयोरेव व्यङ्ग्यस्यानुभवयोग्यत्वात् । एवञ्च अव्यङ्ग्यनामकतृतीयकाव्यभेदाङ्गीकारो व्यर्थ एवेति भावः । द्वितीये तु अनास्वाद्यव्यङ्ग्यत्वरूपेषद्व्यङ्ग्यत्वाङ्गीकारे तु अकाव्यत्वम्, अव्यङ्ग्यकवाक्यस्येति शेषः, तत्र व्यङ्ग्यानां रसादीनामप्यभावेन काव्यस्यात्मन एवाभावादिति भावः ।

(ड) ननु ध्वनिगुणीभूतव्यङ्ग्यकाव्ययोर्व्यङ्ग्यार्थस्य स्थूलत्वेनास्वाद्यत्वम् अस्मन्मतीयाव्यङ्ग्यकाव्यगतव्यङ्ग्यार्थस्य तु ईषत्त्वेन आस्वाद्यत्वम्, अतः कथं तस्य तयोरन्तःपात इत्याह यदि चेति ।

(१) क्वचित् एवशब्दो नास्ति ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैव व्यवस्थिते ।
उभे काव्ये ततोऽन्यद्यत् तच्चित्रमभिधीयते ॥" इति (ढ) ।

इति साहित्यदर्पणे ध्वनि-गुणीभूतव्यङ्ग्याख्य-काव्यभेद-
निरूपणो नाम चतुर्थः परिच्छेदः ॥०॥

——:०:——

स्वास्वाद्यत्वं भवदीयाव्यङ्ग्यकाव्यगतव्यङ्ग्यार्थस्यापि अनुभवयोग्यत्वम्, अङ्गीक्रियत इति शेषः । तदा अक्षुद्रत्वमेव तस्यापि व्यङ्ग्यार्थस्य असूक्ष्मत्वमेव ; क्षुद्रतायां तस्य व्यङ्ग्यार्थस्य ईषत्त्वेन सूक्ष्मतायाम् अनास्वाद्यत्वात् परमाणुवदनुभवायोग्यत्वात् एवञ्च अव्यङ्ग्यमित्यस्य ईषद्व्यङ्ग्यमित्यर्थकरणमेव नोपपद्यते स्थूलत्वापातेन ईषत्त्वासम्भवादित्याशयः । सर्वथा व्यङ्ग्यवर्जितवाक्यस्य काव्यताभावं प्रति प्राचीनस्यापि सम्मतिं दर्शयितुमाह तदुक्तमिति ।

(ढ) प्रधानेति । व्यङ्ग्यस्य अर्थस्य प्रधानगुणभावाभ्यां प्रधानभावेन गुणभावेन चेत्यर्थः, एवं ध्वनि-गुणीभूतव्यङ्ग्यनामके उभे द्वे द्विविधे काव्ये व्यवस्थिते निरूपिते ; ततस्ताभ्याम् उभाभ्यां भेदाभ्याम् अन्यत् यत् व्यङ्ग्यवर्जितं वाक्यं तत् चित्रं नाम वाक्यमात्रम् अभिधीयते । तेन रसादिरूपव्यङ्ग्यस्याप्यभावे काव्यत्वस्यैवाभावात् "अव्यङ्ग्यमवरं स्मृतम्" इति काव्यप्रकाशमतमसमञ्जसमेवेति भावः ।

इति महामहोपाध्याय-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां
साहित्यदर्पणटीकायां कुसुमप्रतिमायां चतुर्थः परिच्छेदः ॥०॥

——:*:——



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# पञ्चमः परिच्छेदः ।

— —:०:— —

अथ केयमभिनवा व्यञ्जना नाम वृत्तिरित्युच्यते—(क)

१ । वृत्तीनां विश्रान्तेरभिधातात्पर्य्यलक्षणाख्यानाम् ।
अङ्गीकार्य्या तुर्य्या वृत्तिर्बोधे रसादीनाम् ॥ (ख)

अभिधायाः सङ्केतितार्थमात्रबोधनविरताया न वस्त्वलङ्काररसादिव्यङ्ग्यबोधने क्षमत्वम्, न च सङ्केतितो रसादिः (ग)। नहि विभावाद्यभिधानमेव तदभिधानम्, तस्य तदैकरूप्यानङ्गीकारात् (घ)। यत्र च स्वशब्दे-

(क) ननु नैयायिकवैयाकरणादिभिर्व्यञ्जनाया एवानङ्गीकारेण तत्प्रतिपाद्यस्य व्यङ्ग्यनामकस्यार्थस्यैवाभावात् कथं तमर्थमादाय काव्यस्य ध्वनिगुणीभूतव्यङ्ग्यरूपं भेदद्वयमभिधीयत इत्याह अथेति। अथ व्यङ्ग्यभेदनिरूपणानन्तरम्। इयं व्यङ्ग्यार्थबोधिका, अभिनवा नवीनमतैरङ्गीकृता। वृत्तिरर्थबोधिका शक्तिः।

(ख) वृत्तीनामिति। अभिधा-तात्पर्य्य-लक्षणाख्यानां प्रागुक्तलक्षणानां तिसृणां वृत्तीनां शक्तीनां विश्रान्तेः स्वं स्वमर्थं बोधयित्वा विरामात् स्वस्वार्थबोधनानन्तरमेव उपक्षीणशक्तिकत्वेन अर्थान्तरबोधने अक्षमत्वादित्यर्थः, रसादीनां रस-रसाभास भाव भावाभास सन्धि-शबलता-वस्त्वलङ्काराणां बोधे बोधनिमित्तं तुर्य्या कापि चतुर्थी वृत्तिः शक्तिः अङ्गीकार्य्या सर्वैरेव स्वीकर्त्तव्या। सैव चास्माकं व्यञ्जनानामवृत्तिरिति भावः। "विरतास्वभिधाद्यासु" इत्यत्राप्यमीषामर्थानामुक्तत्वेऽपि तस्य लक्षणपरत्वात् अस्य च व्यञ्जनागतप्रामाण्यस्थापनाभिप्रायात् उभयोरपि न पौनरुक्त्यमिति बोध्यम्।

(ग) अथ शब्दगतसर्वशक्तिज्येष्ठा अभिधैव तावद्भवदभिमतं व्यङ्ग्यार्थं बोधयत्वित्याह अभिधाया इति। सङ्केतितार्थमात्रस्य बोधनेन विरताया लक्ष्याद्यर्थान्तरबोधने नष्टसामर्थ्यायाः इत्यक्षमत्वं प्रति हेतुगर्भविशेषणम्। क्षमत्वं सामर्थ्यम्। ननु सङ्केते नियमाभावात् रसादिरपि सङ्केतित एवास्त्वित्याह न चेति। "शून्यं वासगृहम्" इत्यादौ शून्यादिशब्दानां शृङ्गारादिर्न च सङ्केतित इत्यर्थः। तथात्वे 'शून्यं गगनम्' इत्यादावपि तत्प्रतीत्यापत्तिः सङ्केतितार्थस्य सर्वदा प्रत्यायकत्वनियमादिति भावः।

(घ) ननु सीतादिशब्दानामभिधा सीताद्यालम्बनविभावादीनुपस्थापयन्ती अविनाभावद्वारा तद्विषयकशृङ्गारादीनपि उपस्थापयतु 'देवदत्तं पश्य' इत्यादौ देवदत्तादिशब्दाभिधा तद्गतरूपादिवदित्याह नहीति। न चेत्यर्थः। विभावादेः अभिधानम् अभिधया बोधनमेव, तेषां रसादीनामभिधानम् अभिधया बोधनम्। इति वाच्यमिति शेषः। तस्य विभावादेः तदैकरूप्यस्य रसाद्यभिन्नत्वस्य अनङ्गीकारात्। तथा च विभावादयो ज्ञेयविशेषाः रसादयश्च ज्ञानविशेषा इति परस्परभेदेन एकस्याभिधाने अन्यस्याभिधानासम्भवात्। 'देवदत्तं पश्य' इत्यादौ तदीयरूपप्रतीतिस्तु तयोरभेदोपचारादिति भावः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नाभिधानम्, तत्र प्रत्युत दोष एवेति वक्ष्यामः (ङ)। क्वचिच्च 'शृङ्गाररसोऽयम्' इत्यादौ स्वशब्देनाभिधानेऽपि न तत्प्रतीतिः, तस्य स्वप्रकाशानन्दरूपत्वात् (च)।

अभिहितान्वयवादिभिरङ्गीकृता तात्पर्य्याख्या वृत्तिरपि संसर्गमात्रे परिक्षीणा न व्यङ्ग्यबोधिनी (१) (छ)।

यच्च केचिदाहुः—"सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः" इति (ज)। यच्च ध्वनिकेनोक्तम्—(२)

"तात्पर्य्याव्यतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः।
यावत् कार्य्यप्रसारित्वात् तात्पर्य्यं न तुलाधृतम् ॥" इति (झ)

---

(ङ) ननु "उदितं चन्द्रमालोक्य शृङ्गारं मग्नमन्तरम्" इत्यादौ शृङ्गारादिशब्देनैव रसाद्यभिधानात्तत्प्रतीतिरिति यत्र तादृशशब्दो नास्ति तत्रापि तत्कल्पनया रसादिप्रतीतिरास्तामित्याह यत्र चेति। किन्त्वेति चार्थः। यत्र उक्तोदाहरणादौ। स्वशब्देन रसादिवाचकेन रसपदेन शृङ्गारादिपदेन च, अभिधानम् अभिधया रसादेर्बोधनम्। तत्र स्वस्य स्वप्रकाशानन्दरूपत्वेन रसादेः प्रतीतिस्तु दूरे आस्ताम्, प्रत्युत वैपरीत्येन दोष एवेत्यर्थः। वक्ष्यामः सप्तमपरिच्छेदे "रसस्योक्तिः स्वशब्देन" इत्यनेन। "उदितं चन्द्रमालोक्य" इत्यादावपि व्यञ्जनात एव शृङ्गारादिप्रतीतिः, न पुनः शृङ्गारादिशब्दादिति भावः।

(च) अथ तत्रापि शृङ्गारादिशब्दादेव तत्तद्रसादिप्रतीतौ किं प्रतिबन्धकमित्यपेक्षायां तत्रान्वयव्यभिचारमेव प्रतिबन्धकं दर्शयितुमाह क्वचिच्चेति। क्वचित् शृङ्गाररसरहिते 'शृङ्गाररसोऽयं निरूप्यते' इत्यादौ वाक्ये इत्यर्थः। तथा चोक्तवाक्ये शृङ्गारशब्दसत्त्वेऽपि स्वप्रकाशानन्दरूपत्वेन शृङ्गाररसस्यानुभवाभावादन्वयव्यभिचार एव शृङ्गारादिशब्दानामभिधया शृङ्गारादिरसबोधने प्रतिबन्धक इत्याशयः। एतदुपलक्षणम्—"शून्यं वासगृहम्" इत्यादौ शृङ्गारादिशब्दासत्त्वेऽपि स्वप्रकाशानन्दरूपत्वेन तत्तद्रसानुभवाद्व्यतिरेकव्यभिचारोऽपि द्रष्टव्यः।

(छ) ननु तर्हि तात्पर्य्यवृत्तिरेव रसादीन् व्यङ्ग्यार्थान् बोधयतु इत्याशयेन कारिकाक्रमादाह अभिहितेति। संसर्गमात्रे वाक्यघटकपदानां केवलपरस्परान्वयबोधजनने परिक्षीणा नष्टसामर्थ्या। तथा च तात्पर्य्यवृत्तिरपि वाक्यघटकपदानां केवलं परस्परमन्वयबोधं जनयित्वैव "शब्दबुद्धिकर्म्मणाम्" इत्यादिन्यायेन अर्थान्तरबोधने नष्टसामर्थ्या सती कथं व्यङ्ग्यार्थान् बोधयेदिति भावः।

(ज) इदानीं व्यङ्ग्यार्थबोधनेऽपि अभिधावृत्तिवादिनां तात्पर्य्यवृत्तिवादिनाञ्च मतमेकैकक्रमेण दूषयितुं क्रमेणाह यच्चेति। इषोर्बाणस्येव स प्रसिद्धोऽयम् अभिधाया व्यापारः कार्य्यं दीर्घदीर्घतरः सातिशय इत्यर्थः। अयमाशयः—महाबलधानुष्कनिक्षिप्तो दुर्निवारवेगो बाणो यथा लक्ष्यं भित्त्वा अलक्ष्यमपि भिनत्ति, तथा ज्येष्ठशक्तिरभिधापि स्वार्थं बोधयित्वा व्यङ्ग्यार्थानपि बोधयतीति।

(झ) तात्पर्य्येति। तात्पर्य्यस्य स्वाभिमततात्पर्य्याख्यवृत्तेः अव्यतिरेकादभिन्नत्वात् हेतोः व्यञ्जक-

---

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(१) व्यङ्ग्यबोधनीति क्वचित् पाठः। (२) क्वचिदयं पाठो न दृश्यते।

तयोरुपरि "शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभावः" इति वादिभिरेव (१) पातनीयो दण्डः (ञ) । एवञ्च किमिति लक्षणाप्युपास्या, दीर्घदीर्घतराभिधाव्यापारेणापि तदर्थबोधसिद्धेः (ट) । किमिति च "ब्राह्मण ! पुत्रस्ते जातः, कन्या ते गर्भिणी" इत्यादावपि हर्षशोकादीनामपि न वाच्यत्वम् ? (ठ) ।

यत् पुनरुक्तम्—"पौरुषेयमपौरुषेयञ्च वाक्यं सर्वमेव कार्य्यपरम्, अतत्परत्वे अनुपादेयत्वादुन्मत्तवाक्यवत् । ततश्च काव्यशब्दानां निरतिशयसुखास्वादव्यतिरेकेण प्रतिपाद्यप्रतिपादकयोः प्रवृत्त्यौपयिकप्रयोजनान्तरा-

---

त्वस्य व्यञ्जनानामकन्तृतनवृत्तेः प्रतिपाद्यो न ध्वनिः । तथा च व्यञ्जनानामकन्तृतनवृत्तेरस्मदभिमततात्पर्य्यवृत्त्यन्तर्भूतत्वात् तात्पर्य्यवृत्तिप्रतिपाद्य एव ध्वनिः । एवञ्च गौरवाद्व्यञ्जना नाम वृत्त्यन्तरं नाङ्गीक्रियत एवेति भावः । ननु भवदभिमता तात्पर्य्यवृत्तिः पदानामन्वयमात्रं बोधयित्वैवोपक्षीणा कथं व्यङ्ग्यार्थान् बोधयेत् कथं वा भिन्नप्रकारा व्यञ्जना तदन्तर्भवेदित्याह यावदिति । यावन्ति कार्य्याणि अर्थबोधनव्यापारास्तावन्त्यव प्रसरति व्याप्नोतीति स तस्य भावस्तस्मादावश्यकतानुरूपव्याप्त्यङ्गीकारादित्यर्थः तात्पर्य्यं तदाख्या वृत्तिः न तुलाधृतं न तोलनदण्डेन मापितम्, अस्मन्मते तात्पर्य्यवृत्तिः पदानामन्वयमात्रमेव बोधयेदिति न नियमः अपि तु अभिधालक्षणाभ्यामबोध्यान् सर्वानेवार्थान् बोधयेदिति भावः ।

(ञ) तयोरिति । दीर्घदीर्घतरेणाभिधाव्यापारेणैव व्यङ्ग्यार्थबोध इतिवादिनः तात्पर्य्यवृत्त्यैव व्यङ्ग्यार्थबोध इतिवादिनश्च उपरीत्यर्थः । दण्डः पातनीयो दोषः प्रदर्शनीयः । तथा च अभिधा सङ्केतितार्थमात्रं बोधयित्वा विरता सती कथं व्यङ्ग्यार्थमपि बोधयेत् ; तात्पर्य्यवृत्तिश्च वाक्यघटकपदानां परस्परमन्वयमात्रं बोधयित्वैव विरता सती कथं व्यङ्ग्यार्थमपि बोधयेत् ; तयोर्लक्षणाभ्यां तत्तन्मात्रार्थबोधनस्य नियन्त्रितत्वादिति दोषो द्रष्टव्यः ।

(ट) ननु "शब्दबुद्धिकर्म्मणाम्" इत्यादिकं न राजशासनम्, येन तत् सर्वैरेवाङ्गीकर्त्तव्यमिति, किन्तु कस्यचिन्मतमात्रं तदिति न वयमाद्रियामह इत्याह एवञ्चेति । "शब्दबुद्धिकर्म्मणाम्" इत्यादिकमनादृत्य अभिधया तात्पर्य्येण वा व्यङ्ग्यार्थस्यापि बोधाङ्गीकारे चेत्यर्थः । उपास्या लक्ष्यार्थबोधाय आश्रयणीया । अपिशब्दात् तात्पर्य्यवृत्त्यापि । तदर्थबोधसिद्धेः लक्ष्यार्थज्ञाननिष्पत्तेः ।

(ठ) अथ लक्षणापि नाङ्गीक्रियत इत्याह किमिति चेति । कन्या अनागतगर्भधारणसमया तनया । तथा च 'पुत्रस्ते जातः' इति श्रवणानन्तरं प्रवासिनो ब्राह्मणस्य मुखप्रफुल्लतादर्शनेन हर्षः, "कन्या ते गर्भिणी" इति श्रवणानन्तरञ्च अप्राप्तवयस्कायाः प्रसवसमये प्राणाशङ्कया तस्य मुखमालिन्यदर्शनेन शोकश्चानुमीयत इत्यनुमेयानामपि हर्षशोकादीनां किमिति न वाच्यत्वम् अभिधया बोध्यत्वं स्यात् ? तस्या अतिदीर्घव्यापाराङ्गीकारादित्यर्थः । तस्यापीष्टापत्तौ तु शाब्दबोधानां विनिगमापत्तिः प्राचांरभिधादिलक्षणानामुन्मत्तप्रलापत्वापत्तिश्चेति भावः ।

---

(१) [illegible] पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नुपलब्धेर्निरतिशयसुखास्वाद एव कार्य्यत्वेनावधार्य्यते; "यत्परः शब्दः स शब्दार्थः इति न्यायात्" इति (ड)।

तत्र प्रष्टव्यम्—किमिदं तत्परत्वं नाम तदर्थत्वं वा, तात्पर्य्यवृत्त्या तद्बोधकत्वं वा? (ढ)। आद्ये न विवादः, व्यङ्ग्यत्वेऽपि तदर्थतानपायात् (ण)। द्वितीये तु केयं तात्पर्य्याख्या वृत्तिः, अभिहितान्वयवादिभिरङ्गीकृता वा, तदन्या वा? (त)। आद्ये दत्तमेवोत्तरम् (थ)। द्वितीये तु नाममात्रे विवादः, तन्मतेऽपि तुरीयवृत्तिसिद्धेः (द)।

(ड) तात्पर्य्यद्वारैव व्यङ्ग्यार्थानामपि अनुमानेन बोध इति मतं दूषयितुमाह यत् पुनरिति। पौरुषेयं 'गामानय' इत्यादिकं लौकिकपुरुषप्रयुक्तम्, अपौरुषेयं "स्वर्गकामो यजेत" इत्यादिकं पुरुषाप्रयुक्तं वैदिकम्। कार्य्यपरं कर्त्तव्यविशेषेच्छया उच्चारितम्। अतत्परत्वे कार्य्यपरत्वाभावे अनुपादेयत्वात् सर्वैरेवाग्राह्यत्वात् उन्मत्तवाक्यवत् अप्रमाणं स्यादिति शेषः। तथा च पूर्वमीमांसायां जैमिनिसूत्रम्—"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति। काव्यशब्दानां "शून्यं वासगृहम्" इत्यादीनाम्, निरतिशयसुखास्वादो रसाद्यनुभवः तद्व्यतिरेकेण तं विना, प्रतिपाद्यः श्रोता प्रतिपादकश्च वक्ता तयोः, प्रवृत्तेः काव्यश्रवणादौ श्रवस्य औपयिकम् उपायभूतं प्रयोजकमित्यर्थः यत्प्रयोजनान्तरम् अन्यदुद्देश्यं तस्य अनुपलब्धेरज्ञानात् निरतिशयसुखास्वाद एव रसाद्यनुभव एव कार्य्यत्वेन कर्त्तव्यत्वेन अवधार्य्यते तात्पर्य्याणानुमाय निर्णीयते। यत्परो यद्बोधनेच्छया उच्चारितः। तथा च काव्यशब्दा रसादिव्यङ्ग्यार्थबोधकास्तद्बोधनेच्छयोच्चारितत्वादित्यनुमानम्। यथा कम्बुग्रीवादिमन्तमर्थं बोधयत्विति इच्छया उच्चारितो घटशब्दः कम्बुग्रीवादिमन्तं बोधयति; यथा वा तीरं बोधयत्विति इच्छया उच्चारितः "गङ्गायां घोषः" इत्यादौ गङ्गाशब्दस्तीरं बोधयति; तथा रसादीन् बोधयत्विति इच्छया उच्चारिताः काव्यशब्दा अपि रसादीन् व्यङ्ग्यार्थान् बोधयन्तीति तेषामभिप्रायः।

(ढ) उक्तमतं विकल्प्य दूषयितुं पृच्छति तत्रेति। "अतत्परत्वे अनुपादेयत्वात्" इत्यनेनायातं यत् "तत्परत्वे उपादेयत्वात्" इति तत्र तत्परत्वं किं नामेत्यर्थः। तदर्थत्वं सामान्यतस्तदर्थबोधकत्वम्, तात्पर्य्यवृत्त्या केवलयेति शेषः।

(ण) दूषयति आद्य इति। व्यङ्ग्यत्वेऽपि मदीयव्यञ्जनावृत्त्या तदर्थबोधकत्वाङ्गीकारेऽपि तदर्थतानपायात् सामान्यतस्तदर्थबोधकत्वसम्भवेन "तत्परत्वे उपादेयत्वात्" इति युक्तेरपि सङ्गच्छमानत्वात्। अत्र "व्यङ्ग्यत्वेऽपीति। व्यञ्जनावादिनो मते सिद्धसाधनमिति भावः" इति रामचरणोक्तमपर्य्यालोचनविजृम्भितमिव प्रतिभाति, अस्य ग्रन्थकर्त्तुरेव व्यञ्जनावादित्वात्तन्मत एव सिद्धसाधनसम्भवेन तस्यैव पराजयापत्त्या तादृशयुक्तेरनवतारणीयत्वात्। किञ्च व्यञ्जनावृत्तिद्वारैव तदर्थबोधकत्वाङ्गीकारादग्रन्थकर्त्तुर्मते सिद्धसाधनदोषप्रसक्तिरेव नास्तीति सुधीभिर्भाव्यम्।

(त) तात्पर्य्यवृत्त्या तद्बोधकत्वमिति द्वितीयपक्षं दूषयति द्वितीये त्विति। तदन्या व्यङ्ग्यार्थबोधनोपयोगिनी या काचित् प्रकारान्तरा।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नन्वस्तु युगपदेव तात्पर्य्यशक्त्या विभावादिसंसर्गस्य रसादेश्च प्रकाशन-मिति चेन्न, तयोर्हेतुफलभावाङ्गीकारात् (ध)। यदाह मुनिः—"विभा-वानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति (न)। सहभावे च कुतः सव्येतरविषाणयोरिव कार्य्यकारणभावः, पौर्वापर्य्यविपर्य्ययात्?। (प) "गङ्गायां घोषः" इत्यादौ तटाद्यर्थमात्रबोधनविरताया लक्षणायाश्च कुतः शीतत्वपावनत्वादिव्यङ्ग्यबोधकता? तेन तुरीया वृत्तिरुपास्यैवेति निर्वि-वादमेतत् (फ)।

(थ) आद्य इति। आद्ये अभिहितान्वयवादिभिः "तात्पर्य्याख्यां वृत्तिमाहुः" इत्यादिना अङ्गीकृतैव तात्पर्य्याख्या वृत्तिरिति पक्षे। दत्तमेवोत्तरम् "तात्पर्य्याख्या वृत्तिरपि संसर्गमात्रे परिक्षीणा न व्यङ्ग्यबोधिनी" इत्यनेनेत्यर्थः। न च अभिहितान्वयवादिभिः "शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभावः" इति नियमो नाङ्गी-क्रियत इति तन्मते तात्पर्य्यवृत्तिरेव पदार्थानामन्वयं बोधयित्वा व्यङ्ग्यार्थानपि बोधयेदिति वाच्यम्, 'पदार्थान्वय-बोधने' इतिमात्रतत्प्रयोजनाभिधानासङ्गतेः।

(द) द्वितीय इति। द्वितीये व्यङ्ग्यार्थबोधनोपयोगिनी प्रकारान्तरैव तात्पर्य्याख्या वृत्तिरिति द्वितीयपक्षे। तुरीयवृत्तिसिद्धेस्तात्पर्य्याख्यताहृशचतुर्थवृत्तिसिद्धेः नाममात्रे तन्मते तात्पर्य्याख्या अस्मन्मते तु व्यञ्जनाख्येति केवलनामविषय एवावयोर्विवादः; न तु तुरीयवृत्तिस्वीकारेऽपीत्यर्थः। तत्रापि व्यङ्ग्यार्थबोधिकाया वृत्तेर्व्यञ्जनेति नाम्न एवौचित्यादस्मन्मतमेव श्रेय इति भावः।

(ध) अथ मया तात्पर्य्याख्या तुरीयवृत्तिर्नाङ्गीक्रियते, अपि तु "शब्दबुद्धिकर्म्मणाम्" इत्यादिनियमेन तात्पर्य्यवृत्त्या पदार्थानामन्वयं बोधयित्वा क्षीणशक्तिकतया रसादीनां बोधयितुमशक्यत्वात् पदार्थान्वयबोध-रसादिबोधयोर्यौगपद्यमेवाङ्गीक्रियत इत्याह नन्विति। विभावादिसंसर्गस्य विभावादिषु कारणतासम्बन्धस्य। प्रकाशनं बोधनम्। तयोर्विभावादिसंसर्गबोधरसादिबोधयोः हेतुफलभावाङ्गीकारात् कारणत्वकार्य्यत्व-स्वीकारात्। अनयोश्च कारणकार्य्ययोरत्यन्तसन्निहिततया पौर्वापर्य्यस्य लक्षयितुमशक्यत्वात् "यस्मादेष विभावादिसमूहालम्बनात्मकः। तस्मान्न कार्य्यः" इत्येकात्मकत्वं रसस्याकार्य्यत्वञ्च प्रागुक्तमिति न विरोधः।

(न) विभावादिसंसर्गबोधरसादिबोधयोर्हेतुफलभावे आर्षं प्रमाणमाह यदाहेति। मुनिर्भरतः। प्रागेवेदं व्याख्यातम्।

(प) अथ युगपदुत्पन्नयोरेव तयोर्हेतुफलभावो भविष्यतीत्याह सहेति। सहभावे उत्पत्तेर्यौगपद्ये। सव्येतरविषाणयोरिव हरिणादीनां वामदक्षिणशृङ्गयोरिव तयोर्विभावादिबोधरसादिबोधयोः कुतः कार्य्य-कारणभावः पूर्वनिपातव्यत्ययात् हेतुफलभावः सम्भवति, कथमपि नेत्यर्थः। पौर्वेति। कारणस्य नियत-पूर्ववर्त्तितायाः कार्य्यस्य च नियतपरवर्त्तिताया व्यत्ययापत्तेरित्यर्थः।

(फ) अथ तर्हि लक्षणाया एव व्यङ्ग्यार्थबोधकताङ्गीक्रियतामित्याह गङ्गायामिति। तटाद्यर्थमात्रस्य बोधनात् परमेव विरतायाः "शब्दबुद्धिकर्म्मणाम्" इत्यादिनियमादिति भावः। तेन [illegible] व्यङ्ग्यार्थबोधने सामर्थ्याभावेन। तुरीया व्यञ्जनानाम्नी चतुर्थी वृत्तिः उपास्यैव सर्वैराश्रयणीयैव।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

किञ्च—(व)

२ । बोद्धृस्वरूपसंख्या-निमित्तकार्य्यप्रतीतिकालानाम् ।
आश्रयविषयादीनां भेदाद्भिन्नोऽभिधेयतो व्यङ्ग्यः ॥ (भ)

वाच्यार्थव्यङ्ग्यार्थयोर्हि पदतदर्थमात्रज्ञाननिपुणैर्वैयाकरणैरपि सहृदयैरेव च संवेद्यतया बोद्धृभेदः (म) ।

"भम धम्मिअ" इत्यादौ क्वचिद्वाच्ये विधिरूपे निषेधरूपतया, क्वचित् "निःशेषच्युतचन्दनम्" इत्यादौ निषेधरूपे विधिरूपतया च स्वरूपभेदः (य) ।

'गतोऽस्तमर्कः' इत्यादौ च वाच्योऽर्थ एक एव प्रतीयते; व्यङ्ग्यस्तु तद्बोद्ध्रादिभेदात् क्वचित् "कान्तमभिसर" इति, "गावो निरुध्यन्ताम्" इति, "नायकस्यायमागमनावसर इति सन्तापोऽधुना नास्ति" इत्यादिरूपेणानेक इति संख्याभेदः (र) ।

(व) अभिधादिभ्यो व्यञ्जनाया भेदं प्रतिपाद्य अभिधेयार्थादपि व्यङ्ग्यार्थस्य भेदं प्रतिपादयितुमाह किञ्चेति ।

(भ) बोद्ध्रिति । बोद्धा अवगन्ता, स्वरूपं स्वभावः, संख्या एकत्वद्वित्वादिः, निमित्तं कारणम्, कार्य्यं फलम्, प्रतीतिर्ज्ञानम्, कालः क्षणश्च, तेषाम् । तथा आश्रय आधारः, विषय उद्देश्यम्, आदिशब्दाद्वक्तुरभिप्रायश्च तेषाम्, भेदात् व्यङ्ग्यः अर्थः अभिधेयतः अभिधाप्रतिपाद्यादर्थात् भिन्नः । अत्राभिधेयत इत्युपलक्षणम्, तेन लक्ष्यार्थात् तात्पर्य्यार्थाच्च भिन्न इत्यपि बोध्यम् ।

(म) कारिकोक्तक्रमेण भेदान् दर्शयितुं प्रथमं बोद्धृभेदं दर्शयति वाच्यार्थेति । अत्र यथासंख्येनान्वयः । मात्रपदेन व्यङ्ग्यार्थव्यावृत्तिः अपिशब्दात् सहृदयैरपि । एवशब्दाद्वैयाकरणव्यवच्छेदः । तथा च काव्यज्ञसहृदया वाचकलक्षकशब्द-तदुभयार्थमात्रज्ञानसमर्था वैयाकरणाश्च उभय एव वाच्यार्थं बुध्यन्ते, व्यङ्ग्यार्थन्तु केवलतादृशसहृदया एव जानन्तीति बोद्धृभेद इति सरलार्थः । वाच्यार्थव्यङ्ग्यार्थयोरैकत्वे ईदृशो भेदो न सम्भवतीति भावः । अन्यत्राप्येवं भाव ऊह्यः ।

(य) स्वरूपभेदं दर्शयति भम इति । 'भम' इति विधिरूपे, व्यङ्ग्यार्थतावेलायान्तु 'न भम' इति निषेधरूपतया पर्य्यवसानादिति शेषः, स्वरूपभेद इत्यन्वयः । निषेधरूपे 'तस्याधमस्यान्तिकं न गतासि' इति गमनाभावरूपे वाच्ये इत्यर्थः, विधिरूपतया व्यङ्ग्यार्थतावेलायाम् "तदन्तिकमेव रन्तुं गतासि" इति गमनसद्भावरूपतया पर्य्यवसानात् स्वरूपभेदः वाच्यार्थव्यङ्ग्यार्थयोः स्वभाववैषम्यम् ।

(र) संख्याभेदं दर्शयति गत इति । एकः सूर्य्यस्यास्तगमनरूपः । व्यङ्ग्यस्तु अर्थ इति पूर्वेणान्वयः । तस्य 'गतोऽस्तमर्कः' इति वाक्यस्य बोद्धा श्रोता आदिशब्दात् वक्त्रादि च तेषां भेदात् अनेक इति परेणान्वयः ।

क्वचित् [illegible]

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वाच्यार्थः शब्दोच्चारणमात्रेण वेद्यः, एष तु तथाविधप्रतिभा-नैर्मल्यादिनेति निमित्तभेदः (ल)। प्रतीतिमात्रचमत्कारकरणाच्च (१) कार्य्यभेदः (व)। केवलरूपतया चमत्कारितया च प्रतीतिभेदः (श)। पूर्वपश्चाद्भावेन च कालभेदः (ष)। शब्दाश्रयत्वेन शब्द-तदेकदेश-तदर्थ-वर्ण-सङ्घटनाश्रयत्वेन चाश्रयभेदः (स)।

"कस्स ण वा होइ रोसो दट्ठूण पिआए सव्वणं अहरं।
सभमरपउमग्घाइणि! वारिअवामे! सहस्स दाणिं (२)॥" (ह)

इति सखी-तत्कान्तविषयत्वेन विषयभेदः। तस्मान्नाभिधेय एव व्यङ्ग्यः (च)

---

निरुध्यन्तामिति। क्वचिद्विरहिणीरूपवीड्स्थले सखीरूपवक्तृस्थले वा "नायकस्यायम्" इत्यादि। आदिशब्दात् गुरुरूपवक्तृस्थले "इदानीं सन्ध्यामुपास्स्व" इत्यादिरूपस्य च ग्रहणम्।

(ल) निमित्तभेदं दर्शयति वाच्यार्थ इति। एष व्यङ्ग्यार्थः। तथाविधा सातिशया या प्रतिभा सूक्ष्मबुद्धिस्तस्या नैर्मल्यं भ्रमादिसम्पर्कराहित्यम् आदिशब्दात् प्राक्प्रदर्शितप्रस्तावादिवैशिष्ट्यञ्च तेन।

(व) कार्य्यभेदं दर्शयति प्रतीतीति। वाच्यार्थो विषयतया केवलं स्वज्ञानमेव जनयति, न पुनश्चमत्-कारम्; व्यङ्ग्यार्थस्तु स्वज्ञानं चमत्कारञ्च जनयतीति कार्य्यस्य फलस्य भेदः।

(श) प्रतीतिभेदं प्रतिपादयति केवलेति। वाच्यार्थप्रतीतेः केवलरूपतया केवलशाब्दबोधस्वभावतया, व्यङ्ग्यार्थप्रतीतेस्तु चमत्कारिशाब्दबोधस्वभावतया च हेतुना।

(ष) कालभेदं प्रकटयति पूर्वेति। पूर्वं वाच्यार्थप्रतीतिः, पश्चात्तु व्यङ्ग्यार्थप्रतीतिरिति।

(स) आश्रयभेदमुद्बोधयति शब्देति। शब्दाश्रयत्वेन वाच्यार्थस्य वाच्यतासम्बन्धेन पदघटककेवल-शब्दवृत्तितया हेतुना। शब्दः पदघटकवर्णसमुदायः, तदेकदेशः पदघटकवर्णसमुदायस्य एको वर्णो द्वित्रादयो वा वर्णाः, तदर्थः शब्दार्थः स च वाच्यार्थो लक्ष्यार्थो वा, वर्णो गुणाभिव्यञ्जकमक्षरम्, सङ्घटना रीत्यभि-व्यञ्जिका वर्णरचना च आश्रय आधारो यस्य तस्य भावस्तेन व्यङ्ग्यार्थस्य व्यङ्ग्यतासम्बन्धेन व्यञ्जकशब्दतदेक-देशादिवृत्तितया च हेतुनेत्यर्थः।

(ह) विषयभेदं दर्शयितुमुदाहरति कस्य इति। "कस्य न वा भवति दोषो दृष्ट्वा प्रियायाः सव्रण-मधरम्। सभ्रमरपद्माघ्रायिणि! वारितवामे! सहस्वेदानीम्॥" इति संस्कृतानुवादः। उपपतिदन्तक्षताधरां भार्य्यामाक्रोशन्तं भर्त्तारं छलेन प्रबोधयन्त्याः सख्या उक्तिरियम्। प्रियाया अधरं सव्रणं क्षतचिह्नयुक्तं दृष्ट्वा कस्य पत्युः रोषो न भवति? अपि तु सर्वस्यैव भवतीत्यर्थः। सुतरामत्र कियानपि नास्य दोष इति भावः। वारितापि सभ्रमरं पद्ममाघ्रातुं मया निषिद्धापि वामा प्रतिकूला तदाघ्राणकारिणीति सा तत्सम्बो-धनम्। सभ्रमरं केनापि भ्रमरेण सहितं पद्मम् आजिघ्रतीति तत्सम्बोधनञ्च। इदानीं सहस्व निषिद्धा-चरणफलस्वरूपं भर्त्तुराक्रोशदुःखं भ्रमरदंशनकष्टञ्चानुभव।

---

(१) प्रतीतिमात्रकरणादिति क्वचित् पाठः। (२) पउम सहसु एण्हिं इति पाठान्तरम्।

CC-0. Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तथा—

३ । प्रागसत्त्वाद्रसादेर्नो बोधिके लक्षणाभिधे ।
किञ्च मुख्यार्थबाधस्य विरहादपि लक्षणा ॥ (क)

न बोधिकेति शेषः (ख) । नहि कोऽपि रसनात्मकव्यापाराद्भिन्नो रसादिपदप्रतिपाद्यः पदार्थः (१) प्रमाणसिद्धोऽस्ति, यमिमे लक्षणाभिधे बोधयेताम् (ग) । किञ्च, यत्र "गङ्गायां घोषः" इत्यादावुपात्तशब्दार्थानां

(च) अत्र विषयभेदं दर्शयति इतीति । उदाहृतश्लोके वक्तृसख्या वाच्यार्थस्य उद्देश्या आक्रोश्यमाना तन्नाय्यारूपा सखी "सभ्रमरपद्माघ्राणकाले तस्य भ्रमरस्य दंशनादेव तस्या अधरे क्षतचिह्नं जातम्, न तु उपपतेर्दन्तदंशनात्" इत्थं व्यङ्ग्यार्थस्य तु उद्देश्यः स आक्रोष्टा कान्तो भर्त्ता इति विभिन्नोद्देश्यकत्वेन विषयभेद इति भावः; अत्र उभाभ्यामेव भार्याभर्त्तृभ्यामुक्तव्यङ्ग्यार्थस्य बुध्यमानत्वान्न भेदोऽयमिति भेद इत्यवधेयम् । तस्मात् सर्वप्रकारेणैव भेदादभिवेयोऽर्थो नैव व्यङ्ग्यः अनयोरभेदो नैवेत्यर्थः ।

कारिकायामादिशब्दग्राह्याभिप्रायमिदस्तु "गतोऽस्तमर्कः" इत्यत्रैव सम्भवति । तथा च चौरं प्रति चौरान्तरेण तदुक्तौ सूर्य्यस्यास्तगमनरूपो वाच्यार्थः, व्यङ्ग्यार्थस्तु "इदानीं चौर्य्याय गच्छ" इति । न चात्रापि भेदोऽयमिति भेदः उभाभ्यामेव उभयार्थस्य बुध्यमानत्वात् ।

(क) ननूक्तेषु सर्वत्रैवाभिधावृत्त्या अनुरणनस्वरूपमनुव्यवसायात्मकं ज्ञानं भविष्यतीत्याह प्रागिति । प्राक् स्वानुभवोत्पत्तेः पूर्वं रसादेः रसतदाभासादेः असत्त्वात् अविद्यमानत्वात् हेतोः लक्षणाभिधे लक्षणा अभिधा च शक्ती नो रसादेर्बोधिके । तथा च यः पदार्थः स्वानुभवात् पूर्वमपि येन केनचित् प्रत्यक्षादिना प्रमाणेन सिद्धः, तमेव पदार्थं लक्षणा अभिधा च बोधयति । यथा घटशब्दीयाभिधा प्राक् प्रत्यक्षादिसिद्धं कम्बुग्रीवादिमत्पदार्थं बोधयति । यथा वा गङ्गाशब्दीयलक्षणा प्राक्प्रत्यक्षादिसिद्धं तीरं बोधयति । रसादिस्तु स्वयमेवानुभवविशेषरूपत्वात् स्वोत्पत्तेः पूर्वं स्वरूपेण केनापि प्रमाणेन न सिद्ध एवेति न लक्षणा न वा अभिधा तं बोधयतीति सरलार्थः । किञ्च अपि च मुख्यार्थबाधस्य विरहादपि अभावाच्च लक्षणा रसादेर्न बोधिका । तथाहि लक्षणां प्रति मुख्यार्थबाध एव हेतुः, ततश्च रसादिप्रतीतौ मुख्यार्थबाधाभावात् स्वयमेवोत्पत्तुमसमर्था लक्षणा कथं रसादिं बोधयेदिति भावः ।

(ख) कारिकास्थ निष्क्रियलक्षणापदस्य क्रियाध्याहारेणान्वयं दर्शयति न बोधिकेति ।

(ग) पूर्वार्द्धव्याख्यायां रसादेः स्वानुभवात् प्रागसिद्धत्वं दर्शयितुमाह नहीति । नहीत्यस्य अस्तीति परेणान्वयः । रसनात्मकव्यापारात् चमत्कारमिश्रितानुभवविशेषरूपात् । एतेन स्वरूपानुभवात् पूर्वं रसादेरसिद्धत्वं दर्शितम् ।

(घ) परार्द्धव्याख्यायां मुख्यार्थबाधाभावेन लक्षणाया असम्भवं दर्शयितुमाह किञ्चेति । अपि

(१) प्रतिपाद्यपदार्थ इति क्वचित् पाठः ।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बुभूषन्नेवान्वयः अनुपपत्त्या बाध्यते, तत्रैव हि लक्षणायाः प्रवेशः (घ)। यदुक्तं न्यायकुसुमाञ्जलावुदयनाचार्य्यैः—

"श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति।
पदार्थान्वयवैधुर्य्यात् तदाक्षिप्तेन सङ्गतिः॥" (ङ)

न पुनः "शून्यं वासगृहम्" इत्यादौ मुख्यार्थबाधः (च)। यदि च "गङ्गायां घोषः" इत्यादौ प्रयोजनं लक्ष्यं स्यात् तीरस्य मुख्यार्थत्वं बाधितत्वञ्च स्यात् (छ)। तस्यापि च लक्ष्यतया प्रयोजनान्तरं (१) तस्यापि प्रयोजनान्तरमित्यनवस्थापातः (ज)। न चापि प्रयोजनविशिष्ट एव तीरे

---

थीत्यर्थः। उपात्तशब्दार्थानाम् उच्चारितपदार्थानां जलमय्यां गङ्गायाम् आभीरपल्लीति वाच्यार्थानामित्यर्थः अन्वयः परस्परसम्बन्धः बुभूषन्नेव भवितुमिच्छन्नेव उत्पद्यमान एवेत्यर्थः, अनुपपत्त्या जले पल्ल्याः स्थित्यसम्भवादसङ्गतिज्ञानेन। प्रवेशः सम्भवः।

(ङ) श्रुतेति। श्रुतानां पदानाम् अन्वयात् परस्परोपपन्नसम्बन्धात् हेतोः अनाकाङ्क्षम् अर्थान्तराकाङ्क्षारहितं वाक्यं कर्तृ, अन्यत् अर्थान्तरं नहि इच्छति नैवाकाङ्क्षति। किन्तु पदार्थानाम् अन्वयवैधुर्य्यात् परस्परान्वयासम्भवात् हेतोः, तेन मुख्यार्थेन आक्षिप्तः स्वसम्बन्धितया अन्वयोपपत्त्यर्थं प्रत्यायितो योऽर्थस्तेन सङ्गतिरन्वयोपपत्तिः स्यात्। एतेन कुसुमाञ्जलिकारमतेऽपि अन्वयानुपपत्तिस्थल एव लक्षणेति दर्शितम्।

(च) इदानीं रसादिप्रतीतिस्थले मुख्यार्थबाधाभावमाह न पुनरिति। अतएव लक्षणापि न सम्भवतीति भावः।

(छ) अथ "गङ्गायां घोषः" इत्यादौ तीरस्य शीतलपावनत्वाद्यतिशयस्य च बोधनेच्छया गङ्गापदप्रयोगात् यथा तीरं शीतत्वादिप्रयोजनञ्च द्वयमपि लक्ष्यम्, तथा रसादिबोधनेच्छया "शून्यं वासगृहम्" इत्यादिकाव्यशब्दानामपि प्रयोगादेव मुख्यार्थबाधाभावेऽपि रसादिरपि लक्ष्य एव भविष्यतीत्याह यदि चेति। प्रयोजनं शीतलपावनत्वाद्यतिशयरूपं लक्षणोद्देश्यम्, लक्ष्यं लक्षणाबोध्यं स्यात्; तदा तीरस्य मुख्यार्थत्वं तत्सम्बन्धितया शीतत्वादेर्लक्ष्यत्वेन तीरार्थे गङ्गापदस्य शक्यार्थत्वं स्वीकर्त्तव्यं स्यात्, तथा तीरार्थे गङ्गापदस्य सङ्केताग्रहात् बाधितत्वञ्च स्यादित्यर्थः।

(ज) ननु गङ्गापदस्य तीरे सङ्केताग्रहादेव तस्य मुख्यार्थत्वं न स्यात् बाधितत्वञ्चेष्टमेवेत्याह तस्यापीति। तस्यापि शीतलपावनत्वाद्यतिशयरूपस्य प्रयोजनस्यापि, लक्ष्यतया भवन्मते लक्षणयैव बोध्यतया हेतुना, प्रयोजनान्तरं प्रथमप्रयोजनबोधकलक्षणाहेतुभूतं द्वितीयं प्रयोजनम्, तस्यापि च द्वितीयप्रयोजनस्य लक्ष्यतया प्रयोजनान्तरं तृतीयं प्रयोजनम्, स्वीकर्त्तव्यं स्यादिति शेषः। इति इत्थम् अनवस्थापातः अनवस्थादोषप्रसङ्गः। लक्षणां प्रति प्रयोजनस्य हेतुत्वेन प्रयोजनाभावे लक्षणाया अप्यभावात् रूढ़ेश्चात्रासम्भवादिति भावः।

(झ) अथ "पशुना यजेत" इत्यादावभिधया पुंस्त्वैकत्वविशिष्टपशुज्ञानवत् "गङ्गायां घोषः" इत्यादावपि लक्षणयैव शीतत्वादिप्रयोजनविशिष्टतीरज्ञानं युगपदेव भविष्यति। तथा च सति नानवस्थादोष इत्याह न

---

(१) प्रयोजनान्तरं इत्यपि पाठः।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लक्षणा, विषयप्रयोजनयोर्युगपत्प्रतीत्यनभ्युपगमात् (झ) । नीलादिसंवेदनानन्तरमेव हि ज्ञाततया अनुव्यवसायस्य वा सम्भवः (ञ) ।

## ४ । नानुमानं रसादीनां व्यङ्ग्यानां बोधनक्षमम् ।
## आभासत्वेन हेतूनां स्मृतिर्न च रसादिधीः ॥ (ट)

व्यक्तिविवेककारेण हि—"यापि विभावादिभ्यो रसादीनां प्रतीतिः सा अनुमान एवान्तर्भवितुमर्हति । विभावानुभावव्यभिचारिप्रतीतिर्हि रसादिप्रतीतेः साधनमिष्यते । ते हि रत्यादीनां भावानां कारण-कार्य्य-सहकारिभूतास्ताननुमापयन्त एव रसादीन् निष्पादयन्ति (ठ) । त एव हि प्रतीयमाना आस्वादपदवीं गताः सन्तो रसा उच्यन्ते ; इत्यवश्यम्भावी प्रतीतिक्रमः,

---

चेति । लक्षणेति वाच्यमिति शेषः । विषयः सर्ववादिसिद्धलक्षणाविषयीभूतं तीरं प्रयोजनं शीतत्वपावनत्वाद्यतिशयरूपं तयोः, युगपत्प्रतीत्यनभ्युपगमात् एकदा ज्ञानानङ्गीकारात् । अत्रायमाशयः—प्रकृते लक्षणाजन्यतीरज्ञानं कारणं शीतत्वादिप्रयोजनज्ञानञ्च तत्कार्य्यम्, तेन च तयोः पौर्वापर्य्यावश्यम्भावेन यौगपद्यासम्भव इति ।

(ञ) जनकजन्यभूतयोर्ज्ञानयोरपि पौर्वापर्य्यं दर्शयितुं दार्शनिकसंवादमाह नीलादीति । हि तथाहि । नीलादिसंवेदनानन्तरमेव "अयं नीलो घटः" इत्यादिनीलादिविषयकप्रत्यक्षोत्पत्तेः परमेव, ज्ञाततायाः "नीलमहं ज्ञातवान्" इति पूर्वप्रत्यक्षविषयकज्ञानान्तरस्य सम्भव इति मीमांसकमतम् । अनुव्यवसायस्य तथैव पूर्वप्रत्यक्षविषयकज्ञानान्तरस्य सम्भव इति नैयायिकमतम् । एवञ्च प्रयोजनविशिष्टे लक्षणाया असम्भवात् प्रयोजनस्यापि पृथग्लक्ष्यत्वे त्वनवस्थापातात् प्रयोजनबोधनार्थं व्यञ्जनावृत्तिरवश्यमङ्गीकर्त्तव्येति तथैव रसादिबोधनसम्भवे तदर्थमपूर्वलक्षणासामर्थ्यकल्पना नितरामन्याय्येति भावः ।

(ट) अथ "काव्यं रसादिमत् विभावादिमत्त्वात्" इत्यनुमानेनैव रसादिज्ञानसम्भवे तदर्थं व्यञ्जनाङ्गीकरणमनर्थकमेवेति व्यक्तिविवेककारमहिमभट्टमतं निराकर्त्तुमाह नानुमानमिति । अनुमानम्, हेतूनाम् आभासत्वेन व्यभिचारादिदुष्टत्वेन हेतुना, व्यङ्ग्यानाम् असंलक्ष्यक्रमव्यङ्ग्यव्यञ्जनाप्रतिपाद्यानां रसादीनां न बोधने क्षमं समर्थम् । प्रतिवादिदर्शनीयानां सर्वेषामेव हेतूनामाभासत्वसूचनाय हेतूनामिति बहुवचनम् । तथा "रसादिज्ञानं स्मृतिः संस्कारजन्यत्वात्" इति मतं निरसितुमाह स्मृतिरिति । रसादीनां धीर्ज्ञानं न च नवा स्मृतिः संस्कारजन्यज्ञानविशेषः । हेतूनाम् आभासत्वेनेति पूर्वोक्त एवात्रापि हेतुः । कारिकेयं वृत्तिव्याख्यानेनैव स्पष्टीभविष्यति ।

(ठ) दूषयितुं तत्प्रबन्धमाह व्यक्तीति । यदुक्तमिति परेणान्वयः । हि तथाहि । अनुमान एवान्तर्भवितुमर्हतीति । अतएवातिरिक्ता व्यञ्जना नाङ्गीकार्य्येति भावः । हि यस्मात् । साधनं हेतुः । विभावादीनां व्याप्तिविशिष्यं प्रतिपादयति ते हीति । हि यस्मात् । ते विभावादयस्त्रयः । तान् रत्यादीन् । अनुमापयन्त एव अनुमानेन बोधयन्त एव । रसादीन् निष्पादयन्ति रसादिरूपतया ज्ञापयन्ति । अत्रायमभिप्रायः—यथा वह्निव्याप्यो धूमः पर्वतवृत्तिरिति परामर्शानन्तरम् "पर्वतो वह्निमान् धूमात्" इत्यनु-

CC-0. [illegible] Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

केवलमाशुभावितया असौ न लक्ष्यते, यतोऽयमप्यसंलक्ष्यक्रमः" इति यदुक्तम्, (ड) तत्र प्रष्टव्यम्—किं शब्दाभिनयसमर्पितविभावादिप्रत्ययानुमित-रामादिगत-रागादिज्ञानमेव रसत्वेनाभिमतं भवतः ? (ढ) तद्भावनया भावकैर्भाव्यमानः स्वप्रकाशानन्दो वा ? (ण)। आद्ये न विवादः ; किन्तु रामादिगतरागादिज्ञानं रससंज्ञया नोच्यतेऽस्माभिरित्येव विशेषः (त)। द्वितीयस्तु व्याप्तिग्रहणाभावात् हेतोराभासतया असिद्ध एव (थ)।

---

मानम्, तथा रसादिव्याप्यो विभावादिः काव्यवृत्तिरिति परामर्शानन्तरम् "काव्यं रसादिमत् विभावादिमत्त्वात्" इत्यनुमानमिति ।

(ड) विभावादिषु रसादिव्याप्यत्वं प्रतिपादयितुं तेषां रसादिं प्रति कारणतां प्रतिपादयन्ति त एवेति । ते विभावादय एव, प्रतीयमानाः काव्यनाट्ययोः प्रथमं सामान्यज्ञानविषयीभूताः परञ्च आस्वादपदवीं गता अपूर्वसमावेशेन चमत्कारिज्ञानविषयतां प्राप्ताः । विभावादिप्रतीतय एवापूर्वसमावेशेन चमत्कुर्वाणा रसाद्यात्मकप्रतीतिरूपतया परिणमन्ते ; ततश्च दण्डचक्रादिव्यापारेण मृत्तिका इव घटानां पूर्वा विभावादिप्रतीतय एव रत्याद्यपूर्वसमावेशेन रसाद्यात्मकपरप्रतीतीनां कारणानि सम्भवन्तीत्यर्थः । एवञ्च तासामभेदोऽपि सङ्गच्छत इति द्रष्टव्यम् । इति हेतोः, प्रतीतीनां विभावादिज्ञानरसादिज्ञानानां क्रमः पौर्वापर्य्यस्  अवश्यम्भावी ; कारणकार्य्यरूपत्वादिति भावः । केवलं किन्तु, आशुभावितया विभावादिप्रतीत्यनन्तरं रसादिप्रतीतीनामतिशीघ्रं भावितया असौ क्रमो न लक्ष्यते लक्षयितुं न शक्यते । अतएवास्मन्मतेऽपि रसादीनामसंलक्ष्यक्रमव्यङ्ग्यत्वमुपपद्यत इत्याशयः । यतो यथा, अद्यापि रसादीनां व्यञ्जनावृत्तिबोध्यत्वाङ्गीकारेऽपि अभिव्यक्तिक्रमो भवन्मतेऽपि कार्य्यकारणभावाद्विभावादिप्रतीतिरसादिप्रतीत्योः पौर्वापर्य्यम् ; तथैव अस्मन्मते रसादीनामनुमानबोध्यत्वेऽपि उक्तक्रमेण प्रतीतिक्रम इत्यर्थः ।

(ढ) इदानीमुक्तमतं विकल्प्य निराकर्त्तुं पृच्छति तत्रेति । शब्दः श्रव्यकाव्यम् अभिनयो दृश्यकाव्यं ताभ्यां तयोरन्यतरेणेत्यर्थः समर्पितो जनितो यो विभावादीनां प्रत्ययो ज्ञानं तेन अनुमितो यो रामादिगतो रागादिः सीतादिविषयकरत्यादिः तज्ज्ञानमेव ।

(ण) तदिति । तस्य रामादिगतरागादेः भावनया चिन्तया भावकैर्भावनाकारिभिः सभ्यैः भाव्यमानः प्रतीयमानः प्रागुक्तलक्षणः स्वप्रकाशानन्दो वा भवतो रसत्वेनाभिमत इति पूर्वेणान्वयः ।

(त) प्रथमकल्पं दूषयति आद्य इति । न विवादो नावयोर्विरोधः । रामायणादि काव्यं रामादिरागादिमत् सीतादिविभावादिमत्त्वादित्यनुमानस्य हेत्वाभासाभावात् व्याप्तिज्ञानसम्भवेन सङ्गच्छमानत्वादिति भावः । तर्हि भवतः किमर्थमेतावानाडम्बर इत्याह किन्त्विति । रामादिगतरागादिज्ञानम् अनुमानलभ्यमिति शेषः विशेषो भेदः । अस्माभिस्तु स्वप्रकाशानन्दमयविभावादिसमूहालम्बनज्ञानविशेष एव रससंज्ञया उच्यते ; तेन हि भवता अरसमेव रामादिगतरागादिविषयकं ज्ञानम् अनुमानेन साधयतापि वास्तविकरसस्यानुमानेन साधयितुमशक्यत्वात्तत् साधनार्थमेवास्माकं व्यञ्जनाङ्गीकाराडम्बर इत्याशयः । सोऽयु, रसोऽलिप्सिमम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यच्चोक्तं तेनैव—"यत्र यत्र एवंविधानां विभावानुभावसात्त्विकसञ्चारिणामभिधानमभिनयो वा, तत्र तत्र शृङ्गारादिरसाविर्भाव" इति सुग्रहैव व्याप्तिः पक्षधर्म्मता च (द)। तथा—

"याऽर्थान्तराभिव्यक्तौ वः सामग्रीष्टा निबन्धनम् ।
सैवानुमितिपक्षे नो गमकत्वेन सम्मता ॥" इति (ध)।

इदमपि नो न विरुद्धम् (न)। नह्येवंविधा प्रतीतिरास्वाद्यत्वेनास्माक-

---

(थ) द्वितीयकल्पं दूषयति द्वितीय इति। द्वितीयः सम्यङ्वृत्तिः स्वप्रकाशानन्दरूप एव रस इति कल्पः। हेतोराभासतया व्यभिचारदुष्टतया हेतुना व्याप्तिग्रहणाभावात् साध्यसाधनयोः सामानाधिकरण्यज्ञानाभावात्, असिद्ध एव सर्ववादिसिद्धोऽप्यसौ रसः अनुमानेनानिष्पन्न एव। तथा च काव्यं रसादिमत् विभावादिमत्त्वादित्यत्र हेतुतावच्छेदकसमवायसम्बन्धेन विभावादिप्रतीतेः सम्यङ्वृत्तित्वेन काव्यरूपपक्षे वृत्तित्वाभावात् "ह्रदो द्रव्यं धूमवत्त्वात्" इत्यादिवत् स्वरूपासिद्धिरूपहेत्वाभासः ; तथा साध्यतावच्छेदकसमवायसम्बन्धेन रसादेरपि सम्यङ्वृत्तित्वेन काव्यरूपपक्षे वृत्तित्वाभावात् "उत्पत्तिकालीनघटो गन्धवान् पृथिवीत्वात्" इत्यादिवत् बाधरूपहेत्वाभासश्च। एतयोः हेत्वाभासयोरान्येन परामर्शस्य द्वितीयेन चानुमितेरेव प्रतिबन्धः क्रियते। तथाहि—"स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वाभिमतस्याभावः। तत्र च ह्रदो द्रव्यं धूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे व्याप्यहेतुमत्ताज्ञानरूपस्य परामर्शस्य प्रतिबन्धः फलम्।···बाधस्तु पक्षे साध्याभावादिः। एतस्य त्वनुमितिप्रतिबन्धः फलम्।" इति सिद्धान्तमुक्तावली। न चोक्तस्थले व्यङ्ग्यतासम्बन्धेन साध्यसाधनयोरुभयोरेव काव्यरूपपक्षे वृत्तित्वात् नोक्तहेत्वाभासद्वयमिति वाच्यम्, भवन्मते व्यञ्जनानङ्गीकारेण व्यङ्ग्यताया एवासम्भवात् तदङ्गीकारे त्वनुमानस्यैवानावश्यकत्वात्।

(द) अन्यप्रकारेण व्याप्तिग्रहमुपपाद्य रसादीनामनुमानसिद्धत्वं प्रदर्शयितुं व्यक्तिविवेककारेण पुनर्यदुपन्यस्तं तदपि दूषयितुमाह यच्चोक्तमिति। तेनैव व्यक्तिविवेककारेणैव। यत्र यत्र स्थले। एवंविधानां प्रदर्शितलक्षणानाम्। अभिधानं श्रव्यकाव्येनोपस्थापनम्, अभिनयो दृश्यकाव्येन प्रकाशनम्। सुग्रहैव अनायासग्राह्यैव व्याप्तिः साध्यसाधनयोः सामानाधिकरण्यम्, पक्षधर्म्मता पक्षवृत्तिता। तथाहि—"सभ्यो रसादिमान् विभावादिप्रतीतिमत्त्वात्" इत्यनुमानम्। एवञ्च रसादेः शाब्दबोधरूपसामग्र्या जन्यतासम्बन्धेन काव्यवृत्तित्वात् परम्परया काव्यस्यापि सरसत्वसिद्धिः। तथा चात्र साध्यसाधनयोः रसादिप्रतीतिविभावादिप्रतीत्योरेकसमवायसम्बन्धेनैव सभ्यरूपपक्षवृत्तित्वात् व्याप्तिज्ञानमनायासनिष्पन्नं प्रागुक्तहेत्वाभासद्वयनिरासश्चेति भावः।

(ध) ननु रसादेरनुमानवादिनां भवतां का नामानुमानसामग्रीत्याह येति। वो युष्माकं व्यञ्जनामङ्गीकुर्वतां मते अर्थान्तरस्य वाच्यार्थलक्ष्यार्थभिन्नस्य व्यङ्ग्यार्थस्य अभिव्यक्तौ ज्ञाने या शाब्दबोधरूपा सामग्री कारणम्, निबन्धनं तद्व्यङ्ग्यार्थज्ञानस्य प्रतिपादिका इष्टा ; नः अस्माकं रसादेरनुमानबोध्यत्ववादिनाम् अनुमितिपक्षेऽपि सैव शाब्दबोधरूपा सामग्री, गमकत्वेन तदनुमानप्रतिपादकत्वेन सम्मता। सुतरां न किञ्चिद्गौरवं नवा दोष इति भावः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मभिमता, किन्तु स्वप्रकाशानन्दविश्रान्तः सान्द्रानन्दनिर्भरः (प)। तेनात्र सिषाधयिषितादर्थादर्थान्तरस्य साधनाद्धेतोराभासता (फ)।

यच्च "भम धम्मिअ" इत्यादौ प्रतीयमानं वस्तु—(ब)

"जलकेलितरलकरतल-मुक्त-पुनः-पिहितराधिकावदनः ।
जगदवतु कोकयूनोर्विघटनसङ्घटनकौतुकी कृष्णः ॥" (भ)

---

(न) इदमिति। इदमपि यत्र यत्रेत्यादिकं कारिकान्तं व्यक्तिविवेककारोक्तमपि, नः अस्माकं व्यञ्जनावादिनां न विरुद्धम्, निरुक्तानुमानस्य निर्द्दोषत्वादिति भावः।

(प) साधु, तदा खल्वत्रैव विरम्यतामित्याह नहीति। एवंविधा प्रतीतिः—"सभ्यो रसादिप्रतीतिमान् विभावादिप्रतीतिमत्त्वात्" इत्यनुमानलभ्यो रसादिविषयकबोधः, आस्वाद्यत्वेन प्रकृतरसादिरूपत्वेन अस्माकं व्यङ्ग्यतावादिनां नहि अभिमता ; प्रत्यक्षेण रसादिरूपप्रतीतेरनुमानेन रसादिविषयकप्रतीतेश्च परस्परं भिन्नत्वादित्याशयः। इत्थमनुमानलभ्याया रसादिविषयकप्रतीतेः केनापि रसादिरूपत्वेनानङ्गीकारादियमपि सोल्लुण्ठनोक्तिः। तर्हि कीदृशी प्रतीतिर्युष्माकमास्वाद्यत्वेनाभिमतेत्याह किन्त्विति। स्वप्रकाशः स्वयमेव प्रकाशमानः न पुनरनुमानादिना प्रकाश्य इत्यर्थः, य आनन्दश्चित्स्वरूपो ज्ञानविशेषः तत्र विश्रान्तः पर्यवसितः, सान्द्रानन्दनिर्भरः प्रगाढ़सुखातिशयः, निरतिशयसुखसम्बलितस्वप्रकाशज्ञानविशेष एवास्माकं रसादिरूपत्वेनाभिमतस्तथैव सर्वैरनुभूयमानत्वादित्यर्थः। उक्तानुमानप्रकाश्यस्य रसादिविषयकज्ञानस्य निरतिशयसुखसम्बलितत्वं स्वप्रकाशत्वञ्च नास्त्येवेति भावः।

(फ) ननु तथाप्युक्तस्थले हेतोर्व्यभिचाराभावेऽपि कथं हेत्वाभासतेत्याह तेनेति। तेन रसादिरूपप्रतीतिरसादिविषयकप्रतीत्योर्भेदेन, अत्र "सभ्यो रसादिमान् विभावादिप्रतीतिमत्त्वात्" इति, स्थले, सिषाधयिषितात् अनुमानेन साधयितुमिष्टात्, अर्थात् आनन्दमयस्वप्रकाशज्ञानविशेषरूपात् वास्तविकरसपदार्थात्, अर्थान्तरस्य अन्यरूपपदार्थस्य रसादिविषयकज्ञानस्य साधनात् अनुमानेन निष्पादनात्, हेतोः "विभावादिप्रतीतिमत्त्वात्" इति लिङ्गस्य आभासता दुष्टता। तथा चोक्तस्थले रसादिरूपसाध्यवति सहृदये रसादिरूपसाध्याभाववति श्रोत्रियजरन्मीमांसकादौ च विभावादिप्रतीतिरूपहेतोर्वर्त्तितया साधारणाख्यहेत्वाभास एवेति भाव इति दिक्।

(ब) व्यञ्जनावादिमते व्यङ्ग्यभूतयोर्वस्त्वलङ्कारयोरप्यस्मन्मते अनुमानयोध्यत्वमेवेति ब्रुवतो व्यक्तिविवेककारस्यैव तदोक्तिजातं प्रत्याख्यातुमाह यच्चेति। यच्च पर्य्यवस्यतीत्यन्तमुक्तं तन्नेति परेणान्वयः। प्रतीयमानं वाच्यार्थातिरिक्तत्वेन ज्ञायमानं भ्रमणाभावरूपं वस्तु अनुमेयमेवेति परेणान्वयः। तथा च—"भीरुर्धार्म्मिको वक्तृनायिकोपलब्धसिंहकगोदावरीतीराभ्रमणवान् गृहसमीपभ्रमणात्" इति सहृदयैरनुमीयते।

(भ) जलेति। जलकेलौ राधिकया सह जलक्रीड़ायाम्, तरलाभ्यां जलक्षेपणेन चञ्चलाभ्यां करतलाभ्यां पाणिभ्यां मुक्तम् आदौ परित्यक्तं पुनःपिहितं पुनराच्छादितं राधिकाया वदनं येन स तथोक्तः, अतएव कोकयूनोश्चक्रवाकदम्पत्योः विघटनसङ्घटनयोर्वियोजनसंयोजनयोः कौतुकी कृष्णः जगत् अवतु परिपालयतु। अत्र कवेरयमाशयः—चक्रवाकदम्पती रात्रौ परस्परं वियुक्तौ [illegible] संयुज्येते इति प्रसिद्धिः, ततश्च राधिकाया

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्यादौ च रूपकालङ्कारादयोऽनुमेया एव (म)। तथाहि—"अनुमानं नाम पक्षसत्त्व-सपक्षसत्त्व-विपक्षव्यावृत्तत्वविशिष्टाल्लिङ्गाल्लिङ्गिनो ज्ञानम् (य)। ततश्च वाच्यादसम्बद्धः (१) अर्थस्तावन्न प्रतीयते, अन्यथातिप्रसङ्गः स्यादिति बोध्यबोधकयोरर्थयोः कश्चित् सम्बन्धोऽस्त्येव (र)। ततश्च बोधकोऽर्थो लिङ्गम्, बोध्यश्च लिङ्गी, बोधकस्य चार्थस्य पक्षसत्त्वं निबद्धमेव। सपक्षसत्त्व-विपक्षव्यावृत्तत्वे अनिबद्धे अपि सामर्थ्यादवसेये (ल)। तस्मादत्र यद्वाच्यार्थाल्लिङ्गरूपाल्लिङ्गिनो व्यङ्ग्यार्थस्यावगमस्तदनुमान एव पर्यवस्यति" इति (व)।

---

मुखस्य चन्द्ररूपत्वात् क्षणेन तन्मुखात् करतलावरणापसारणे कृते चन्द्रोदयेन रात्रिरियमिति मत्वा चक्रवाकदम्पती परस्परं वियुज्येते, पुनश्च क्षणेन तन्मुखे करतलाभ्यामावरणे कृते चन्द्राभावाद्दिवसोऽयमिति मत्वा तावेव चक्रवाकदम्पती पुनः संयुज्येते; इति पुनः पुनस्तथाकरणात् चक्रवाकदम्पत्योर्विघटनसङ्घटनविषये कौतुकवानेव कृष्ण इति। अत्र राधिकावदने चन्द्रत्वारोपस्य वाच्यत्वाभावात् प्रतीयमान एव रूपकालङ्कारः।

(म) तस्य च रूपकालङ्कारस्यानुमेयत्वमेवेत्याह इत्यादाविति। तथा च "राधिकावदनं चन्द्रः आत्मदर्शनादर्शनाभ्यां चक्रवाकदम्पत्योर्विघटनसङ्घटनकारित्वात्" इत्यनुमानम्।

(य) इदानीं वस्त्वलङ्काररसादीनामनुमितिकरणभूतमनुमानं निरूपयितुमाह तथाहीति। सिषाधयिषाविरहविशिष्टसिद्ध्यभाववान् पक्षः, तत्र सत्त्वं विद्यमानता; साध्यवत्त्वेन निश्चितः सपक्षः, तत्रापि सत्त्वं विद्यमानता; साध्याभाववत्त्वेन निश्चितो विपक्षः तस्माद्व्यावृत्तत्वं निवृत्तिमत्त्वं तदवृत्तित्वमित्यर्थः; तैर्विशिष्टात् लिङ्गात् हेतोः लिङ्गिनः साध्यस्य। तथा च—"पर्वतो वह्निमान् धूमात्" इत्यत्र पर्वतः पक्षः गोष्ठादिश्च सपक्षस्तयोरुभयोरपि धूमो विद्यते, जलह्रदादिर्विपक्षस्तत्र तु धूमो न विद्यत इति धूमदर्शनेन पर्वते साध्यरूपो वह्निरनुमीयते।

(र) अत्र च तात्पर्यविषयीभूतं व्याप्तिग्राहकं सम्बन्धं प्रतिपादयितुमाह ततश्चेति। ततश्च तादृशादनुमानाच्च, असम्बद्धस्तात्पर्यविषयीभूतसम्बन्धरहितः, अर्थः पदार्थः, वाच्यादर्थात् न प्रतीयते; अपि तु तात्पर्यविषयीभूतयत्किञ्चित्सम्बन्धविशिष्ट एवार्थो वाच्यार्थात् प्रतीयत इत्यर्थः। यथा "भ्रम धार्मिक" इत्यादौ भ्रमेत्यनेन भ्रमणवैपरीत्यरूपसम्बन्धविशिष्ट एवाभ्रमणरूपः पदार्थः प्रतीयते। अन्यथा तादृशसम्बन्धानङ्गीकारे, अतिप्रसङ्गः अन्यस्यापि ज्ञानं स्यात् आपद्येत भ्रमेत्यनेन भ्रमणाभावमिव घटाद्यभावमपि प्रतीयादित्यर्थः। इति हेतोः बोध्यबोधकयोरनुमेयानुमापकयोः अर्थयोः पदार्थयोः, कश्चित् तात्पर्यविषयीभूतः।

(ल) अथ प्रकृते तावदुक्तानां किमित्याह ततश्चेति। तादृशसम्बन्धावश्यम्भावाच्चेत्यर्थः बोधकोऽनुमापकः अर्थो वाच्यार्थः लिङ्गं हेतुः बोध्योऽनुमेयोऽर्थश्च लिङ्गी साध्यः। पक्षसत्त्वं प्रकृते समवायसम्ब-

---

(१) असम्बन्ध इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तन्न, तथाह्यत्र "भम धम्मिअ" इत्यादौ गृहे श्वनिवृत्त्या विहितं भ्रमणं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयतीति यदुक्तवयम्, तत्रानैकान्तिको हेतुः (१)। भीरोरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण वा (२) गमनस्य सम्भवात् (श)। पुंश्चल्या वचनं प्रामाणिकं न वेति सन्दिग्धासिद्धश्च (ष)।

…… …… ……

त्वेन धार्मिकरूपपक्षवृत्तित्वं निबद्धमेव वक्त्र्या नायिकया भमेत्यनेन प्रतिपादितमेव। सपक्षसत्त्वविपक्षव्यावृत्तत्वे तादृशजनान्तररूपसमानपक्षवृत्तित्व-तद्भिन्नप्रकारजनरूपविरुद्धपक्षवृत्तित्वाभावौ अनिबद्धे अपि तया नायिकया अप्रतिपादिते अपि सामर्थ्यात् समानस्थलान्तरानुसन्धानात् अवसेये ज्ञातव्ये; "पर्वतो वह्निमान् धूमात्" इत्यत्र धूमस्य गोष्ठादिसत्त्व-ह्रदादिव्यावृत्तत्वे इवेति भावः।

(व) . उपसंहरति तस्मादिति। अत्र "भम धम्मिअ" इत्यादौ। लिङ्गरूपात् हेतुभूतात् लिङ्गिनः साध्यस्य व्यङ्ग्यार्थस्य व्यञ्जनावादिमतसिद्धस्येत्यर्थः, यदवगमो ज्ञानम्, तदनुमान एव अनुमितावेव पर्यवस्यति। अतस्तदवगमार्थं व्यञ्जनाङ्गीकारो निरर्थक एवेति भावः। इतिशब्दो व्यक्तिविवेककारोक्तिसमाप्तिसूचनार्थः।

(श) इदानीं प्रदर्शितोक्तिजातं दूषयति तन्नेति। गृहे गृहसन्निहिते तेन धार्मिकेणादृश्ये देशविशेषे इत्यर्थः, शुनस्तदुपद्रवजनककुक्कुरस्य निवृत्त्या प्रत्यावर्त्तनेन प्रत्यावर्त्तनात्तेन धार्मिकेणानवलोकिततयेत्यर्थः, विहितं नायिकया धार्मिकायोपदिष्टम्। अनुमापयति सहृदयानिति शेषः। यदुक्तव्यं "भीरुधार्मिको वक्तृनायिकोपलब्धसिंहकगोदावरीतीराभ्रमणवान् गृहसमीपभ्रमणात्" इति सहृदयानां यदनुमानं व्यक्तिविवेककारिणाङ्गीकर्त्तव्यम्, ततः अनैकान्तिकः साध्यवत्पक्षसावानियतो हेतुः साधारणरूपानैकान्तनामा हेत्वाभास इत्यर्थः। तदेवोपपादयति भीरोरिति। भीरोरपि सिंहादिभयशीलस्यापि तस्य धार्मिकस्य, ब्रह्मचारित्वे गुरोः, देवलत्वे प्रभोर्वा निदेशेन आज्ञया, प्रेमिकत्वे तत्रैव सङ्केतितप्रियायाम् अनुरागेण वा गमनस्य सिंहवद्गोदावरीतीर एव भ्रमणस्य सम्भवात्; गुरुनिदेशादीनां भयरूपस्य भ्रमणप्रतिबन्धकस्य तिरोधायकत्वादिति भावः। तथा च तादृशगोदावरीतीरे अभ्रमणरूपसाध्यवति तन्निदेशादिना तत्रैव भ्रमणरूपसाध्याभाववति च धार्मिके गृहसमीपभ्रमणरूपहेतोः सत्त्वेन धूमवान् वह्नेरित्यादाविव साधारणरूपानैकान्तनामा हेत्वाभासः। तथा चोक्तम्—"यः सपक्षे विपक्षे च भवेत् साधारणस्तु सः" इति।

(ष) ननु धार्मिकस्य यदा गृहसमीपे भ्रमणं तदा तु तादृशगोदावरीतीरे अभ्रमणमेवेति कालान्तरे गुरुनिदेशादिना तत्र भ्रमणे सत्यपि तदानीं गृहसमीपभ्रमणस्यासत्त्वात् कथं तादृशहेत्वाभास इत्याह पुंश्चल्या इति। पुंश्चल्या व्यभिचारिण्याः, वचनं "भम धम्मिअ" इत्यादि वाक्यम्, प्रामाणिकं सत्यं न वा इति इत्थं सन्दिग्धः सन्देहापन्नो यो धार्मिकस्तस्मिन् पक्षे असिद्धेर्गृहसमीप एव भ्रमणरूपस्य हेतोरनिष्पत्तेः; तद्वचनस्य मिथ्यात्वज्ञानेन पूर्वं तस्य गोदावरीतीर एव तस्य भ्रमणसम्भवादित्याशयः। एवञ्च "ह्रदो द्रव्यं धूमवत्त्वात्" इत्यादाविव उक्तस्थले स्वरूपासिद्धिरूप एव हेत्वाभास इति दर्शितम्।

---

(१) तत्र नैकान्तिको हेतुरिति पाठान्तरम्। (२) प्रियानुरागेण च इत्यपि पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"जलकेलि—" इत्यत्र "य आत्मदर्शनादर्शनाभ्यां (१) चक्रवाकविघटन-सङ्घटनकारी स चन्द्र एव" इत्यनुमितिरेवेयमिति न वाच्यम् उच्चासकादावनैकान्तिकत्वात् (स)। "एवंविधोऽर्थ एवंविधार्थबोधक एवंविधार्थत्वात्, यन्नैवं तन्नैवम्" इत्यनुमानेऽपि आभाससमान-(२) योगक्षेमो हेतुः ; एवंविधार्थत्वादिति हेतुना एवंविधानिष्टार्थसाधनस्याप्युपपत्तेः (ह)।

तथा यत् "दृष्टिं हे प्रतिवेशिनि! क्षणमिहाप्यस्मद्गृहे" इत्यादौ नलग्रन्थीनां तनुलिखनम्, एकाकितया च स्रोतोगमनम्, तस्याः परकामुकोपभोगस्य लिङ्गिनो लिङ्गमित्युच्यते, तच्च तत्रैवाभिहितेन स्वकान्तस्नेहेनापि सम्भवतीति अनैकान्तिको हेतुः (क्ष)।

---

(स) इत्थं वस्तुरूपव्यङ्ग्यस्यानुमेयत्वं निरस्य इदानीमलङ्काररूपव्यङ्ग्यस्यानुमेयत्वमपि निरसितुमाह जलेति। तथा च "राधिकावदनं चन्द्रः आत्मदर्शनादर्शनाभ्यां चक्रवाकविघटनसङ्घटनकारित्वात्" इत्यनुमानात्, इयं राधिकावदने चन्द्रत्वारोपेण रूपकालङ्कारप्रतीतिः, अनुमितिरेव न तु व्यञ्जनाख्यवृत्त्यन्तरगम्येत्यर्थः। उच्चासको भयदाता। आदिशब्दात् खाद्यदानादिना संयोजकादिश्च। तथा च कश्चित् दण्डादिना भयं दत्त्वापि चक्रवाकदम्पती परस्परं विघटयितुमर्हति, कश्चिद्वा खाद्यं दत्त्वा तौ सङ्घटयितुमर्हति। तेन चन्द्रत्वारोपरूपसाध्यवति राधिकावदनरूपपक्षे यथा चक्रवाकदम्पतिविघटनसङ्घटनकारित्वरूपहेतोर्वृत्तित्वम्, तथैव चन्द्रत्वारोपरूपसाध्याभाववति तादृशे भयदातरि खाद्यदातरि च विपक्षे तादृशहेतोर्वृत्तित्वमिति पूर्ववदत्रापि साधारणरूपानैकान्तिकनामा हेत्वाभास इत्याशयः।

(ह) उक्तविधानुमाने हेतोर्व्यभिचारादव्यभिचारिहेतुद्वारा प्रकारान्तरेणानुमानमाशङ्क्य तदपि निरसितुमाह एवमिति। एवंविधोऽर्थः "भ्रम धार्मिक" इत्यादौ गृहसमीपे भ्रमणविधानरूपोऽर्थः, एवंविधार्थबोधकः गोदावरीतीरे भ्रमणाभावरूपार्थबोधकः, एवंविधार्थत्वात् गोदावरीतीरे सिंहागमनेन गृहसमीप एव भ्रमणविधानरूपार्थत्वात्। एवञ्च कुतोऽपि हेतोर्न व्यभिचार इति भावः। अत्र तत्पक्षवृत्तित्वेनान्वयोदाहरणासम्भवात् व्यतिरेकोदाहरणं दर्शयति यन्नैवमिति। यदर्थरूपं वस्तु, एवम् अतत्यहेतुरूपं न, तत् अर्थरूपं वस्तु एवं भ्रमणाभावबोधकं नेत्यर्थः। यथा घटो जायत इति दृष्टान्तः। आभाससमानं दुष्टहेतोस्तुल्यं योगक्षेमं कार्य्यकारिता यस्य सः। कथमित्याह एवमिति। एवंविधो योऽनिष्टार्थो भवदनभिमतार्थो घटपटादिस्तस्य साधनस्यापि निष्पादनस्यापि उपपत्तेः सम्भवात्। तथा च एवंविधशब्दस्य अनिर्दिष्टार्थप्रतिपादकतया एवंविधार्थत्वात् घटार्थत्वात् एवंविधार्थबोधकः कम्बुग्रीवादिमदर्थबोधक इत्यस्यापि सुवचत्वमिति भावः।

---

(१) आत्मदर्शनाभ्यामिति पाठोऽपि दृश्यते। (२) आभाससमानः···इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यच्च "निःशेषच्युतचन्दनम्" इत्यादौ दूत्यास्तत्कामुकोपभोगोऽनुमीयते; तत् किं प्रतिपाद्यया दूत्या? तत्कालसन्निहितैर्वान्यैः? तत्काव्यार्थभावनया वा सहृदयैः? (क)। आद्ययोर्न विवादः (ख)। तृतीये तु तथाविधाभिप्रायविरहस्थले व्यभिचारः (ग)। ननु वक्त्राद्यवस्थासहकृतत्वेन विशेषो हेतुरिति न वाच्यम्; एवंविधव्याप्त्यनुसन्धानस्या-

---

(च) व्यक्तिविवेककारस्यैव लक्ष्यान्तरे व्यङ्ग्यस्य यदनुमेयत्वाभिधानं तदपि दूषयितुमाह तथेति। यत् उच्यत इति परेणान्वयः। नलग्रन्थीनामिति कर्त्तरि षष्ठी। तनुलिखनं स्तनाद्यङ्गानां घतविघतीकरणम्। तस्या वक्तृनायिकायाः परकामुकोपभोगस्य पतिभिन्नकामिपुरुषसम्भोगरूपस्य लिङ्गिनः साध्यस्य लिङ्गं हेतुः। तथा च "दृष्टिं हे" इत्यादेर्वक्तृनायिका परकामुकोपभोगवती तनुलिखनात् एकाकितया स्रोतोगमनाच्च इत्यनुमानम्। तच्च तादृशं लिङ्गञ्च, तत्र श्लोक एव, अभिहितेन "प्रायेणास्य शिशोः" इत्यादिना उक्तेन, स्वकान्तस्नेहेनापि निजपतिप्रेम्णापि। अनैकान्तिकः साध्यवत्पक्षमात्रानियतः। तथा च परकामुकोपभोगरूपसाध्यवति नायिकारूपपक्षे तादृशसाध्याभाववति स्वकान्तस्निग्धनायिकारूपविपक्षे च उक्तस्य हेतुद्वयस्यैव वृत्तित्वेन पूर्ववदेव साधारणरूपानैकान्तिकनामा हेत्वाभास इत्याशयः।

(क) लक्ष्यान्तरेऽपि व्यङ्ग्यस्यानुमेयत्वमपाकर्त्तुमाह यच्चेति। यच्च अनुमीयते सहृदयैरिति सम्बन्धः। दूत्यास्तत्र सम्बोध्यमानायाः। प्रतिपाद्यया श्रोत्र्या दूत्या चन्दनच्यवनादिरूपेण दूतीवैशिष्ट्येन हेतुना। तथा च प्रतिपाद्या दूती तत्कामुकोपभोगवती स्नानादिविलक्षणचन्दनच्यवनादेरिति सहृदयानामनुमानं किमित्यर्थः। तत्काले निःशेषत्यादिकथनसमये सन्निहितैरन्यैः सखीजनादिभिर्वा अन्यसन्निधिवैशिष्ट्यद्वारेणेति तात्पर्य्यम्। एवञ्च प्रतिपाद्या दूती तत्कामुकोपभोगवती सन्निहितसखीजनलक्षितस्नानादिकृतविलक्षणचन्दनच्यवनादेरिति वा सहृदयानां किमनुमानमित्यर्थः। तस्य काव्यार्थस्य भावनया पर्य्यालोचनया वा सहृदयैरनुमीयत इति सर्वत्र सम्बन्धः। तथा च निःशेषेत्यादिकाव्यप्रतिपाद्या दूती तत्प्रतिपाद्यकामुकोपभोगवती तत्प्रतिपाद्यस्तनचन्दनच्यवनादेरित्थं वा तत्काव्यार्थं पर्य्यालोचयतां सहृदयानामनुमानमित्यर्थः।

(ख) तृतीयप्रकारमनुमानं दूषयितुं प्रथमप्रकारद्वयं तत्काव्यार्थं पर्य्यालोचयतां भङ्गीविशेषेणाङ्गीकरोति आद्ययोरिति। स्नानादिकृतचन्दनच्यवनाद्यपेक्षया तत्कालीनतादृशचन्दनच्यवनादीनां सखीजनादिभिर्वैषम्यदर्शनेन तादृशहेतोरव्यभिचारितया तयोरनुमानयोः सङ्गच्छमानत्वादित्याशयः। तथापि "भम धम्मिअ" इत्यादावन्यथानुपपत्त्या व्यञ्जनाङ्गीकार्य्यैवेति बोध्यम्।

(ग) तृतीय इति। तृतीये प्रदर्शिततृतीयप्रकारानुमाने। तथाविधाभिप्रायविरहस्थले सम्भोगविमर्द्देनैवेदं दूत्याः स्तनचन्दनच्यवनादिकमिति वक्तृनायिकाया अभिप्रायस्य सहृदयानां ज्ञानाभावस्थले अशिरःपर्य्यन्तमज्जनादेवेदं चन्दनच्यवनादिकमिति वक्त्र्या अभिप्रायस्य सहृदयानां ज्ञानस्थल इत्यर्थः, व्यभिचार उक्तहेतोरिति शेषः। तथा चात्रापि पूर्ववदेव साधारणाख्यो हेत्वाभास इति भावः।

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

भावात् (घ)। किञ्च, एवंविधानां काव्यानां कविप्रतिभामात्रजन्मनां प्रामाण्यानावश्यकत्वेन सन्दिग्धासिद्धत्वं हेतोः (ङ)। व्यक्तिवादिना चाधमपदसहायानामेवैषां पदार्थानां व्यञ्जकत्वमुक्तम्, तेन च तत्कान्तस्याधमत्वं प्रामाणिकं न वेति कथमनुमानम् (च)।

एतेनार्थापत्तिवेद्यत्वमपि व्यङ्ग्यानामपास्तम्, अर्थापत्तेरपि पूर्वसिद्धव्याप्तिच्छायाम् (१) उपजीव्यैव प्रवृत्तेः (छ)। यथा—"यो जीवति स कुत्राप्यवतिष्ठते, जीवति चात्र गोष्ठग्रामविद्यमानश्चैत्रः" इत्यादि (ज)।

(घ) विशेषणाविशेषपदानेन नोक्तो हेतोर्व्यभिचार इत्याशङ्कते नन्विति। वक्त्राद्यवस्थया प्रतिपाद्याया दूत्या रमणनिबन्धनमुखप्रफुल्लताद्यवस्थया सहकृतत्वेन हेतुश्चन्दनच्यवनादेरिति हेतुः विशेष्यो विशेषणीयः। तथा चोक्ततृतीयप्रकारानुमाने मुखप्रफुल्लतादिसहकृतस्नानचन्दनच्यवनादेरिति हेतुर्वक्तव्य इत्यर्थः। एवञ्च स्नानादौ मुखप्रफुल्लतादीनामसम्भवात् हेतोर्न व्यभिचार इति भावः। ईदृशव्याख्यानेनैव सामञ्जस्ये रामचरणस्य वक्त्रादीत्यतद्गुणसंविज्ञानबहुव्रीहेराश्रयणमपर्यालोचनविजृम्भितमिति द्रष्टव्यम्। एवंविधव्याप्त्यनुसन्धानस्य हेत्वंशे श्लोकानुक्तविशेषणनिवेशेन साध्यसाधनयोर्नियतसामानाधिकरण्यज्ञानस्य अभावाददर्शनादित्यर्थः।

(ङ) ननु "श्लोकानुक्तविशेषणं न देयम्" ईदृशवेदविधेरभावात्तादृशविशेषणदाने को दोष इत्याह किञ्चेति। एवंविधानां "निःशेषच्युतचन्दनम्" इत्यादिप्रकाराणां कवीनां प्रतिभामात्रात् केवलकल्पनाकुशलबुद्धितः जन्म येषां तेषां काव्यानाम्, प्रामाण्यानावश्यकत्वेन वेदादीनामिव प्रामाण्यसत्ताया नियमाभावेन, हेतोरुक्तप्रकारसाधनस्य सन्दिग्धासिद्धत्वम् "उक्तविधं चन्दनच्यवनादिकं सत्यं न वा" इत्थं सहृदयानामेव सन्देहेन पक्षे मिथ्यात्वज्ञानात् स्वरूपासिद्धिरेव हेत्वाभास इत्यर्थः।

(च) सर्वथैवानुमानस्यासम्भवतां दर्शयितुमाह व्यक्तीति। किञ्चेति चार्थः। व्यक्तिवादिना व्यक्तिविवेककारेण, अधमपदसहायानामेव "तस्याधमस्यान्तिकम्" इत्यधमपदेन सह सम्बद्धानामेव। नीचजातीयदूतीसम्भोगेनैवं नायकस्याधमत्वोत्पत्तेरिति भावः। पदार्थानां निःशेषादिपदप्रतिपाद्यानां समस्तचन्दनच्यवनादीनामर्थानाम्, व्यञ्जकत्वमनुमापकत्वम्। तेन च काव्यानामुक्तरीत्या प्रामाण्यानावश्यकत्वेन च। कथमनुमानमिति। तथा च काव्यानां प्रामाण्यसन्देहेन तत्कान्तगताधमत्वस्यापि सन्देहात् तत्सम्भोगस्यैव पक्षे मिथ्यात्वज्ञानेन तदनुमानप्रसङ्ग एव नास्तीति भावः।

(छ) एतेनेति। व्यङ्ग्यानामनुमेयत्वनिरासप्रकारेण हेतोराभासत्वेनेत्यर्थः। वेदान्तमते अर्थापत्तिर्नाम पञ्चमं प्रमाणम्। तथा च वेदान्तपरिभाषायां चतुर्थशाब्दप्रमाणनिरूपणानन्तरम् "उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः" इति। व्यङ्ग्यानां रसादीनाम्। नन्वर्थापत्तौ व्याप्तिज्ञानस्यानावश्यकतया हेतोराभासत्वेऽपि का क्षतिरित्याह अर्थापत्तेरपीति। पूर्वसिद्धानां प्राङ्निष्पन्नानां व्याप्तेश्छायां प्रकारविशेषं व्यतिरेकव्याप्तिमित्यर्थः, उपजीव्यैव आश्रित्यैव प्रवृत्तेः सम्भवात्।

(१) व्याप्तीच्छाम् इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

किञ्च, वस्त्रविक्रयादौ तर्जनीतोलनेन दशसंख्यादिवत् सूचनबुद्धिवेद्यो-ऽप्ययं न भवति ; सूचनबुद्धेरपि सङ्केतादिलौकिकप्रमाणसापेक्षत्वेनानुमान-प्रकारताङ्गीकारात् (झ) ।

यच्च "संस्कारजन्यत्वात् रसादिबुद्धिः स्मृतिः" इति केचित् (ञ) । तत्रापि प्रत्यभिज्ञायामनैकान्तिकतया हेतोराभासता (ट) ।

---

(ज) अर्थापत्तेरुदाहरणमाह यथेति । तत्र लक्ष्ये लक्षणसङ्गमनाय य इत्यादिवाक्यं जीवतः क्वाप्यवस्थाननियमप्रदर्शनार्थम् । जीवतीत्यादिकन्तु लक्ष्यं गोष्ठ्यां सभायाम् । तथा च सभायामविद्यमानस्य चैत्रस्य जीवनरूपोपपाद्यज्ञानेन अन्यत्र विद्यमानतारूपोपपादककल्पनादर्थापत्तिः सङ्गच्छते । तेन च अत्राविद्यमानो जीवी चैत्रः अन्यत्र विद्यते अन्यथा जीवनासम्भव इति व्यतिरेकव्याप्तिमादायैवार्थापत्तेः प्रवेश इति भावः । तथा चोक्तम्—

"अर्थापत्तिस्तु नैवेह प्रमाणान्तरतेष्यते । व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥"

अतएव नैयायिकमतेऽर्थापत्तेरनुमानान्तर्भावात् तन्मतमाश्रित्यैव ग्रन्थकारः कारिकायां "नानुमानं रसादीनाम्" इत्यनुमानमात्रमुक्तम् । "एतेन" इत्यादिकन्तु वेदान्तमतमाश्रित्याभिहितमिति बोध्यम् । अत्रेदमवधेयम्—"शून्यं वासगृहम्" इत्याद्युपपाद्यकाव्यज्ञानेन शृङ्गाराद्युपपादककल्पनरूपार्थापत्त्या तेषां शृङ्गारादीनां ज्ञानं न सम्भवति ; रसानामास्वादकालमात्रोत्पन्नतया पूर्वसिद्धत्वाभावेन व्यतिरेकव्याप्तिज्ञानस्याप्यसम्भवात् । अतएव पूर्वसिद्धव्याप्तिच्छायामित्युक्तम् ।

(झ) मतान्तरं निरसितुमाह किञ्चेति । सूच्यते अनेनेति सूचनं हस्तादिसङ्केतविशेषः तज्जन्या या बुद्धिस्तया वेद्यः । अयं रसादिर्व्यङ्ग्यार्थः । अनुमानप्रकारताया अनुमितिविशेषत्वस्य अङ्गीकारात् । अत्रायमाशयः—यदा विक्रेता कस्यचित् क्रेतुः समीपे एवं सङ्केतयति । यथा—"बहुतरक्रेतृमध्ये त्वया वस्त्रमूल्ये जिज्ञासिते अन्येभ्यो गोपयितुं मया च तर्जन्यङ्गुल्युत्तोलने कृते त्वया दशसंख्या बोद्धव्या" इत्यादि, तदैव विक्रेतुस्तर्जनीतोलनदर्शनेन क्रेता दशसंख्या बुध्यते, न पुनस्तादृशसङ्केताभावेऽपि । एवञ्च तत्र क्रेतुर्दशसंख्याज्ञानं सूचनबुद्धिरूपानुमितिरेव । तथा च एतद्वस्त्रं दशानकमूल्यकं पूर्वसूचिततर्जनीतोलनज्ञापितत्वादिति । इत्थञ्च काव्यशब्देषु रसादिज्ञापनाय तादृशसङ्केताभावेन काव्यशब्देभ्यो रसादिषु सूचनबुद्धिरूपानुमितेः सम्भावनैव नास्ति । इत्यतः काव्यं रसादिमत् सूचनबुद्धिवेद्यत्वादित्यत्र अयं गोत्ववान् अश्वत्वादित्यादिवत् विरुद्धाख्यहेत्वाभास एवेति ।

(ञ) इदानीं "स्मृतिर्न च रसादिधीः" इति कारिकांशं व्याख्यातुमाह यच्चेति । केचित् "रसादिबुद्धिः स्मृतिः संस्कारजन्यत्वात्" इत्यनुमानेन रसादिव्यङ्ग्यार्थमात्रज्ञानस्य यत्र स्मृतिरूपत्वमाहुरित्यर्थः । संस्कारो भावनाख्यसंस्कारः । तथा च भावनावशादतीतघटादिप्रतीतिरिव काव्यार्थभावनावशात् सहृदयानां या रसादिप्रतीतिः सा स्मृतिरूपैवेत्यनुमानसिद्धतया तदर्थं व्यञ्जनाङ्गीकारो व्यर्थ एवेति तेषामाशयः ।

(ट) दूषयति तत्रापीति । हेतोः संस्कारजन्यत्वादिहेतोः, प्रत्यभिज्ञायामपि वृत्तित्वेन अनैकान्तिकतया साध्यवत्पक्षमात्रानियततया आभासता । तथा च प्रत्यभिज्ञा नाम अनुभूतपदार्थस्य पुनरनुभवः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"दुर्गालङ्घित—" इत्यादौ च "द्वितीयार्थो नास्त्येव" इति यदुक्तं महिमभट्टेन, तदनुभवसिद्धमपलपतो गजनिमीलिकैव (ठ)।

तदेवमनुभवसिद्धस्य तत्तद्रसादिलक्षणार्थस्य अशक्यापलापतया तत्तच्छब्दाद्यन्वयव्यतिरेकानुविधायितया च अनुमानादिप्रमाणावेद्यतया च अभिधादिवृत्तित्रयाबोध्यतया च तुरीया वृत्तिरुपास्यैवेति सिद्धम् (ड)। इयञ्च व्याप्त्याद्यनुसन्धानं विनापि भवतीत्यखिलं निर्म्मलम् (ढ)।

तत् किं नामिकेयं वृत्तिरित्युच्यते—(ण)

५। सा चेयं व्यञ्जना नाम वृत्तिरित्युच्यते बुधैः।
रसव्यक्तौ पुनर्वृत्तिं रसनाख्यां परे विदुः॥ (त)

---

यथा—वाराणस्यां यो दृष्टः स एवायं देवदत्त इति। प्रसाच प्रत्यक्षविशेषरूपायां साध्यस्मृतित्वाभाववत्यां प्रत्यभिज्ञायामपि भावनाख्य-संस्कारजन्यत्वरूपहेतोः सत्त्वात् पूर्ववदेव साधारणरूपानैकान्तिकनामा हेत्वाभास इत्याशयः।

(ठ) अनुमानसामग्रीविरहस्थले कथं व्यङ्ग्यार्थप्रतीतिरित्यपेक्षायां व्यक्तिविवेककारेण यदुक्तं तदपि दूषयितुमाह दुर्गेति। द्वितीयार्थः पार्वतीवल्लभरूपव्यङ्ग्यार्थः, नास्त्येव, तत्प्रतीत्यभावादिति भावः। अनुभवसिद्धमपलपत इति हेतुगर्भविशेषणम्। अपलपतोऽनङ्गीकुर्वतो महिमभट्टस्य, गजनिमीलिकैव हस्तिमूर्खतैव, सर्वजनप्रतीतेऽपि विषये तस्य प्रतीत्यनुदयादित्याशयः।

(ड) इदानीं स्वसन्दर्भमुपसंहर्त्तुमाह तदेवमिति। अनुभवसिद्धस्येति अशक्यापलापतां प्रति हेतुगर्भविशेषणम्। तत्तद्रसादिलक्षणार्थस्य रसभावादिस्वरूपव्यङ्ग्यार्थस्य, अशक्यापलापतया सहृदयैरनुभूयमानत्वादेव केनाप्यस्वीकर्त्तुमशक्यतयेत्यर्थः। तत्तच्छब्दाः "शून्यं वासगृहम्" इत्यादिकाव्यशब्दाः, आदिपदात् अर्थप्रस्तावादयश्च तेषामन्वयव्यतिरेकयोरनुविधायितया अनुसारितया। तथा च तादृशशब्दादिसत्त्वे रसादिव्यङ्ग्यार्थसत्ता तादृशशब्दाद्यसत्त्वे च रसादिव्यङ्ग्यार्थासत्ता इति नियमेन रसादिव्यङ्ग्यार्थानामवश्यमङ्गीकार्य्यतयेत्यर्थः। अनुमानादीत्यादिपदेनार्थापत्तेर्ग्रहणम्। अभिधादिवृत्तित्रयम् अभिधा-लक्षणा-तात्पर्य्यरूपं तेनाबोध्यतया च। तुरीया चतुर्थी काचिद्वृत्तिः उपास्यैव आश्रयणीयैव।

(ढ) ननु भवदङ्गीकृताया अपि तुरीयवृत्तेर्व्यङ्ग्यार्थप्रतिपादनाय व्याप्त्यादेरावश्यकत्वे पूर्वोक्त एव हेत्वाभासादिः प्रसज्येतेत्याह इयञ्चेति। इयञ्च तुरीयवृत्तिः, व्याप्त्यादेर्व्याप्तिहेत्वाभासाभावयोरनुसन्धानं ज्ञानं विनापि भवति रसादिव्यङ्ग्यार्थं बोधयितुमर्हति; अभिधादिरभिधेयार्थादिवदिति भावः। अतएवास्मदुक्तमखिलं निर्म्मलं निर्द्दोषम्।

(ण) तदिति। अत्र परिच्छेदे व्यञ्जनाशब्दव्यवहृत्य केवलतुर्य्यतुरीयशब्दव्यवहारात् "किं नामिकेयं वृत्तिः" इति जिज्ञासा उपपद्यत एवेति बोध्यम्।

(त) सेति। सा च तुरीया वृत्तिर्व्यञ्जना नाम इति बुधैः प्रत्ययप्रत्यायकनिरूपणदक्षैरुच्यते।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एतच्च विविच्योक्तं रसनिरूपणप्रस्ताव इति सर्वमवदातम् (थ)।

इति साहित्यदर्पणे व्यञ्जनाव्यापारस्थापनं नाम

पञ्चमः परिच्छेदः ॥०॥

—:०:—

परे पुनः अन्ये अभिनवगुप्तमतावलम्बिनस्तु रसव्यक्तौ रसभावाद्यास्वादप्रकाशने, रसनाख्यां रसननाम्नीं पञ्चमीं वृत्तिं विदुः। एतन्मतन्तु तृतीयपरिच्छेदे "विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः" इत्यस्य टीकायां विस्तरत उक्तम्। अस्मन्मते तु वस्त्वलङ्कारयोरिव रसादीनामपि व्यञ्जनयैव बोधनसम्भवे वृत्त्यन्तराङ्गीकरणमनर्थकमेवेति भावः। एतेन अभिनवगुप्तमतावलम्बिनां रसादिबोधनाय पञ्चमवृत्तिपर्य्यन्ताङ्गीकारात् रसादीनामभिधादिबोध्यत्वानुमेयत्वादिकथनमतीवासमञ्जसमिति सूचितम्।

(थ) एतदिति। एतत् एतत्प्रकरणोक्तं सर्वं विविच्य रसनिरूपणप्रस्तावे तृतीयपरिच्छेदप्रथमभागे उक्तम्—"रसादीनां व्यङ्ग्यत्वमुक्तं भवती"ति अभिहितम्। सर्वमस्मदुक्तम् अवदातं निर्म्मलं समञ्जसमित्यर्थः।

इति महामहोपाध्याय-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां

साहित्यदर्पणटीकायां कुसुमप्रतिमायां पञ्चमः परिच्छेदः ॥०॥

—:*:—

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# षष्ठः परिच्छेदः ।

— —:०:——

एवं ध्वनि-गुणीभूतव्यङ्ग्यत्वेन काव्यस्य भेदद्वयमुक्त्वा पुनर्दृश्यश्रव्यत्वेन भेदद्वयमाह—(क)

१ । **दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् ।**

**दृश्यं तत्राभिनेयम्—(ख)**

तस्य रूपकसंज्ञाहेतुमाह—

२ । **तत्, रूपारोपात्तु रूपकम् ॥ (ग)**

तत् दृश्यं काव्यं नटे रामादिस्वरूपारोपात् रूपकमित्युच्यते ।

कोऽसावभिनय इत्याह—(घ)

३ । **भवेदभिनयोऽवस्था-नुकारः स चतुर्विधः ।**

**आङ्गिको वाचिकश्चैव-माहार्य्यः सात्त्विकस्तथा ॥ (ङ)**

---

(क) तत् किं काव्यस्य ध्वनित्व-गुणीभूतव्यङ्ग्यत्वभेदेन द्वावेव भेदौ ? उत वा अपरोऽपि भेदोऽस्ति ? इत्याकाङ्क्षायां प्रसङ्गसङ्गत्यैव षष्ठपरिच्छेदमारभते एवमिति । एवं काव्यस्य भेदजिज्ञासायामेव ।

(ख) दृश्येति । द्वन्द्वात् परं त्वप्रत्ययेन दृश्यत्वश्रव्यत्वभेदलाभः, तेन काव्यं पुनर्द्विधा मतम् । ततश्च काव्यं समुदायेन प्रधानतश्चतुर्विधमित्यवधेयम् । तत्र तयोर्मध्ये अभिनेयम् अभिनययोग्यं काव्यं दृश्यमिति दृश्यकाव्यलक्षणम् । तेन श्रव्यकाव्यस्य नटाद्यभावेनाभिनययोग्यत्वाभावात्तत्र नातिव्याप्तिः । अस्य च दर्शनात्मकचाक्षुषप्रत्यक्षयोग्यत्वात् दृश्यमिति संज्ञा । न च वाचिकरूपाभिनयस्य श्रवणयोग्यत्वादस्यापि श्रव्यसंज्ञा किं न स्यादिति वाच्यम्, आङ्गिकाहार्य्यसात्त्विकरूपाणां त्रयाणामेवाभिनयानां दर्शनयोग्यतया "अधिकेन व्यपदेशा भवन्ति" इति न्यायेन दृश्यसंज्ञाया एवौचित्यात् ।

(ग) तदिति । तत् दृश्यकाव्यम्, रूपाणां रामाद्याकाराणाम् आरोपात् नटेषु सन्निवेशात् हेतोः रूपकमित्युच्यते । तथाहि रूपयति नटद्वारा रामादीननुकरोतीति रूपकम् । तथा चोक्तम्—

"यथा मुखादौ पद्मादेरारोपो रूपकं मतम् । तथैव नायकारोपो नटे रूपकमुच्यते ॥"

(घ) क इति । असौ दृश्यलक्षणघटकाभिनेयपदद्योत्यः ।

(ङ) भवेदिति । अवस्थानां वास्तविकरामादिस्वरूपाणाम्, अनुकारः अनुकरणम्, अभिनयो भवेत् ; स चाभिनयश्चतुर्विधः—आङ्गिकः अङ्गनिष्पाद्यः करनयनादिभङ्गीविशेषः, वाचिको वाक्प्रतिपाद्यः, आहार्य्य

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नटै रङ्गादिभिः रामयुधिष्ठिरादीनामवस्थानुकरणमभिनयः ।

रूपकस्य भेदानाह—

४ । नाटकमथ प्रकरणं भाण-व्यायोग-समवकारडिमाः ।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥ (च)

किञ्च—(छ)

५ । नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् ।
प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ॥
संलापकं श्रीगदितं शिल्पकञ्च विलासिका ।
दुर्म्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ॥
अष्टादश प्राहुरुपरूपकाणि मनीषिणः ।
विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम् ॥ (ज)

सर्वेषां प्रकरणादिरूपकाणां नाटिकाद्युपरूपकाणाञ्च ।

तत्र—(झ)

६ । नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् ।
विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ॥

---

आहरणीयवेशविन्यासादिसम्पाद्यः, सात्त्विकः स्तम्भस्वेदादिसात्त्विकभावप्रकटनप्रतिपाद्यः । सर्वत्र नटानामिति सम्बन्धः । नन्वाङ्गिकाहार्य्यसात्त्विकरूपाभिनयत्रये रसात्मकवाक्यत्वाभावेन काव्यत्वानुपपत्तिः । न च तत्तदंशे अकाव्यत्वमेवेतीष्टापत्तिरिति वाच्यम्, दृश्यकाव्यमिति दर्शनयोग्यांशमादायैव काव्यत्वव्यवहारात् । उच्यते—तत्तदंशेऽपि रसादिसत्त्वात् गौणकाव्यत्वम्, वाचिकांशे तु रसात्मकवाक्यसत्त्वान्मुख्यमेव काव्यत्वमिति ।

(च) नाटकमिति । नाटकम्, प्रकरणम्, भाणः, व्यायोगः, समवकारः, डिमः, ईहामृगः, अङ्कः, वीथी, प्रहसनम्, इति इतिनामकानि दश दशविधानि रूपकाणि स्युः ।

(छ) किञ्चेति । अपि चेत्यर्थः ।

(ज) नाटिकेति । प्रस्थानम् उल्लाप्यं काव्यञ्चेति प्रस्थानोल्लाप्यकाव्यानि त्रीणि । विशेषं प्रत्येकमवान्तरवैलक्षण्यम् । लक्ष्म लक्षणम् ।

(झ) तत्रेति । तेषु पूर्वमुद्दिष्टेषु नाटकादिरूपकेषु मध्ये इत्यर्थः ।

(ञ) नाटकमिति । ख्यातवृत्तमित्यादिकं दृश्यकाव्यस्य विशेषणम् । तथा च ईदृशं यद्दृश्यकाव्यं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुखदुःखसमुद्भूति-नानारसनिरन्तरम् ।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः ॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान् नायको मतः ॥
एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।
अङ्गमन्ये रसाः सर्वे कार्य्यं निर्वहणेऽद्भुतम् ॥
चत्वारः पञ्च वा मुख्याः कार्य्यव्यापृतपूरुषाः ।
गोपुच्छाग्रसमाग्रन्तु बन्धनं तस्य कीर्त्तितम् ॥ (अ)

---

तन्नाटकं स्यादित्यर्थः । ख्यातवृत्तं लोकेषु विख्यातवृत्तान्तम्, न पुनः प्रकरणादिवत् कविकल्पितमिति भावः । पञ्चसन्धयः—मुख-प्रतिमुख-गर्भ-विमर्षोपसंहृतिनामानो वक्ष्यमाणास्तैः समन्वितम् । विलासो धीरा दृष्टिरित्यादिना प्रागुक्तलक्षणः, ऋद्धिर्या काचिदुन्नतिः, आदिशब्दात् प्रियप्राप्तिप्रभृतिः । तत्तद्गुणवत्ता तु नायकद्वारैव काव्यस्येति बोध्यम् । नानाविभूतिभिर्बहुविधसम्पद्भिर्युक्तम् । सुखदुःखयोः समुद्भूत्या उत्पत्त्या नानारसैः शृङ्गारकरुणादिबहुतररसैः निरन्तरं परिपूर्णम् । सुखदुःखयोरेकतरोत्पत्ताविव रस-विशेषस्यावश्यम्भाविलात् तयोरेकतरेण तत्रावश्यमेव स्यातव्यमिति भावः । तत्र नाटके अङ्का वक्ष्यमाणलक्षणाः पञ्च आदयो येषां ते तथा दश परे शेषा येषां ते । तथा च पञ्चमाङ्कान्न्यूनं दशमाङ्कादधिकञ्च नाटकं न स्यादित्यर्थः । राजर्षिः ऋषियोग्यदयादाक्षिण्यक्षमादिगुणवान् राजा राज्याधिपतिः, न तु ऋषितुल्यक्षत्रिय-नृपतिः ; तथात्वे चन्द्रगुप्तस्य शूद्रत्वेन मुद्राराक्षसस्य नाटकत्वं न स्यात् । धीरोदात्तः प्रागुक्तलक्षणः । दिव्यः स्वर्गीयः, दिव्यादिव्यो वृत्तो विवृतः, वाशब्दाददिव्यश्च । तेन दुष्मन्तादीनामपि नाटकनायकत्वम् । गुणवान् धार्म्मिकः, न तु धैर्य्यादिमानित्यर्थः "विलासर्द्ध्यादिगुणवत्" इत्यनेनैव तत्प्राप्तेः । एकः शृङ्गार एव, एको वीर एव वाशब्दात् एकः शान्त एव वा अङ्गी प्रधानरसो भवेत् । तथा च उत्तमप्रकृतीनां शृङ्गार-वीर-शान्तानां मध्ये यः कश्चिदेक एव रसो नाटके प्रधानतया नियम्य इत्युक्तं भवति । एवञ्च प्रबोधचन्द्रोदय-रूपकस्य शान्तरसप्रधानत्वेऽपि नाटकत्वमक्षतम् । न च तस्य ख्यातवृत्तत्वाभावेनापि प्रकरणत्वमेवेति वाच्यम्,

"प्रबोधचन्द्रोदयनाम नाटकं ज्ञानाग्निसंशुद्धविशुद्धहाटकम् ।"

इति तत्रैवोक्तत्वात् लोकप्रसिद्धवृत्तान्तस्यैव ख्यातवृत्तत्वाभिप्रायात् । ध्वनिकारेण तु परिगणितानां सर्वेषामेव रसानां मध्ये यस्य कस्यचिदेकस्यैव रसस्य नाटके प्रधानतया निबन्धनमङ्गीकृतम् । तथा चोक्तम्--

"प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने । एको रसोऽङ्गीकर्त्तव्यस्तेषामुत्कर्षमिच्छता ॥"

किन्तु शृङ्गारवीरशान्तेतररसानां प्राधान्यस्य प्रसिद्धनाटकेष्वदर्शनादियं ध्वनिकारोक्तिरनादरणीयैवेत्यव-



CC0. Vasistha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ख्यातं रामायणादिप्रसिद्धं वृत्तम् । यथा—रामचरितादि (ट) । सन्धयो वक्ष्यन्ते । नानाविभूतिभिर्युक्तमिति महासहायम् (ठ) । सुखदुःखसमुद्भूतत्वं रामयुधिष्ठिरादिवृत्तान्तेष्वभिव्यक्तम् (ड) । राजर्षयो दुष्यन्तादयः । दिव्याः श्रीकृष्णादयः । दिव्यादिव्यो यो दिव्योऽप्यात्मनि नराभिमानी । यथा—श्रीरामचन्द्रः (ढ) । गोपुच्छाग्रसमाग्रमिति "क्रमेणाङ्गाः सूक्ष्माः कर्त्तव्याः" इति केचित् । अन्ये त्वाहुः—"यथा गोपुच्छे केचिद्बाला ह्रस्वाः, केचिद्दीर्घाः, तथेह कानिचित् कार्य्याणि सुखसन्धौ समाप्तानि, कानिचित् प्रतिमुखे, एवमन्येष्वपि कानिचित् कानिचित्" इति (ण) ।

---

धेयम् । अन्ये सर्वे रसा अङ्गं यथासम्भवमङ्गभावेनावस्थातुमर्हन्तीत्यर्थः । "वेदाः प्रमाणम्" इत्यादिवदुद्देश्यविधेयभावादङ्गमित्यत्र लिङ्गवचनव्यत्ययः । निर्वहणे उपसंहारसन्धौ यत्किञ्चित् अद्भुतं विस्मयावहव्यापारः कार्य्यं निबद्धव्यम् । चत्वारः पञ्च वा मुख्याः प्रधानाः कार्य्यव्यापृता नायककार्य्येषु निरताः पूरुषाः पात्राणि निबद्धव्या इति शेषः । अत्र वाशब्दोऽनास्थायाम् । तेन ततो न्यूनाधिकताद्दशपात्रनिबन्धनेऽपि न दोषः । तस्य नाटकस्य बन्धनं विरचनम्, गोः पुच्छाग्रस्य लाङ्गूलाग्रस्य समं तुल्यम् अग्रं शेषांशो यस्य तत्ताद्दशं कीर्त्तितम् । वृत्तावेव स्पष्टीकृतमेतत् ।

(ट) कारिकास्थमस्पष्टपदं क्रमशो व्याचष्टे ख्यातमित्यादि । अत्रादिपदेन महाभारतादीतिहासपुराण-लोकसमाजानां ग्रहणम् । तेन प्रबोधचन्द्रोदय-मालविकाग्निमित्र-मुद्राराक्षस-मदीयवङ्गीयप्रतापादीनामपि ख्यातवृत्ततया नाटकत्वसिद्धिः ।

(ठ) नानेति । महासहायमित्यभिप्रायेणोक्तमिति भावः । तथा च महान्तो जनाः सहाया नायकस्योद्देश्यकार्य्येषु साहाय्यकरा यत्र तन्महासहायम् । यथा—वेणीसंहारे भीमादयः, शाकुन्तलादौ चेन्द्रादयः ।

(ड) सुखेति । यथोत्तररामचरिते रामस्य प्रथमं सुखम्, परञ्च दुःखम् । यथा वा वेणीसंहारे युधिष्ठिरस्य प्रथमं दुःखम्, परञ्च सुखम् ।

(ढ) राजेति । दुष्यन्तादयः अदिव्याः । श्रीकृष्णादय इति । "कृष्णस्तु भगवान् स्वयम्" इति श्रीमद्भागवतवचनात् तदीयचरित्रे प्रायेणैव दैवभावाच्च कृष्णः केवल एव दिव्यः । आदिशब्दात् लक्ष्मीस्वयंवरे नारायणादयः । श्रीरामस्य तु नारायणावतारत्वात् दिव्यत्वम्, नराभिमानिताप्रकाशाय सीताविच्छेदादौ विलापाच्च अदिव्यत्वमित्याशयः ।

(ण) गोपुच्छेति । सूक्ष्माः क्षुद्राः । बाला लोमानि । कार्य्याणि नायकव्यापाराः, सुखसन्धौ समाप्तानि, अतएव ह्रस्वानीति भावः । अन्येष्वपि गर्भादिषु सन्धिषु । कानिचित् कानिचित् कार्य्याणि समाप्तानीत्यन्वयः । अतएव तानि दीर्घाणीति भावः । अतः कस्यापि मतस्यानिराकृतत्वादुभयमेव ग्रन्थकारसम्मतमित्यवधेयम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

७ । प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः ।
भवेदगूढ़शब्दार्थः क्षुद्रचूर्णकसंयुतः ॥
विच्छिन्नावान्तरैकार्थः किञ्चित्संलग्नविन्दुकः ।
युक्तो न बहुभिः कार्य्यैर्वीजसंहृतिमान् न च ॥
नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् ।
आवश्यकानां कार्य्याणामविरोधाद्विनिर्म्मितः ॥
नानेकदिननिर्वर्त्त्य-कथया सम्प्रयोजितः ।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥
दूराह्वानं बधो युद्धं राज्यदेशादिविप्लवः ।
विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा ॥
दन्तच्छेद्यं नखच्छेद्यम् अन्यद्व्रीड़ाकरञ्च यत् ।
शयनाधरपानादि नगराद्यवरोधनम् ॥

(त) नाटकलक्षणे विलासरसादिलक्षणानां प्रागेवोक्तत्वात् तत्तदुल्लङ्घ्य अङ्कलक्षणमाह प्रत्यक्षेति । प्रत्यक्षं यथाकथञ्चिदुल्लिखितं नेतुर्नायकस्य चरितं यत्र सः । रसभावपदं तदाभासादीनामप्युपलक्षणम्, तेन समुज्ज्वलः शोभितः । अगूढ़ः अनायासबोध्यः शब्दार्थौ यस्मिन् सः, न पुनः प्रहेलिकादिवद्दुरूहशब्दार्थं इति भावः । क्षुद्रैर्नातिदीर्घैः चूर्णकैर्वक्ष्यमाणलक्षणैरल्पसमासघटितैर्गद्यविशेषैः संयुतः । एतेन भवभूतिप्रणीतरूपकत्रये दीर्घसमासघटितगद्यबहुलतया दोष एवेत्यनुसन्धेयम् । विच्छिन्नः परिसमाप्तः अवान्तरैकार्थो नाटकाभ्यन्तरीयैक-विषयो यत्र सः । किञ्चित् संलग्नः यथाकथञ्चित्प्रवृत्तः "अवान्तरार्थविच्छेदे विन्दुरच्छेदकारणम्" इति वक्ष्यमाणलक्षणो विन्दुर्यस्मिन् सः । बहुभिः कार्य्यैः प्रधानोद्देश्यैर्न युक्तः । वीजस्य "अल्पमात्रं समुद्दिष्टम्" इत्यादिवक्ष्यमाणलक्षणस्य संहृतिमान् परिसमाप्तिमान् न च भवेत्, एतत्तु शेषाङ्केतरपरं बोध्यम्; तत्र सर्वेषामेवोपसंहारावश्यकत्वात् । नानाविधानैर्बहुविधघटनाभिः संयुक्तः । नातिप्रचुरपद्यवानिति गद्यापेक्षया अल्पपद्यवानित्यभिप्रेतम्; प्रसिद्धलक्ष्येषु तथादर्शनात् तत्संख्यानभिधानाच्च आवश्यकानां कार्य्याणां पात्र-विशेषेषु प्रसक्तानां सन्ध्यावन्दनादीनाम् अविरोधादत्यागात् विनिर्म्मितो भवेत् । अनेकदिननिर्वर्त्त्या बहुकाल-सम्पाद्या या कथा वृत्तान्तस्तया न सम्प्रयोजितो भवेत्, अपि तु अल्पदिननिष्पाद्यया परपरभाविन्या कथयैव सम्प्रयोजितो भवेदित्यर्थः । आसन्नस्तत्राविद्यमानोऽपि सन्निहितः नायको नायकचरित्रं यत्र सः । प्रत्यक्ष-नेतृचरितत्वासम्भवे आसन्ननेतृचरित इत्यर्थविवक्षणान्न पूर्वेण सहास्य पौनरुक्त्यम् । तेन च शाकुन्तल-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः ।
देवीपरिजनादीनाममात्यवणिजामपि ॥
प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः ।
अन्तनिष्क्रान्तनिखिल-पात्रोऽङ्क इति कीर्त्तितः ॥ (त)

विन्दादयो वक्ष्यन्ते । आवश्यकं सन्ध्यावन्दनादि ।

अङ्कप्रस्तावाद्गर्भाङ्कमाह—

८ । अङ्कोदरप्रविष्टो यो रङ्गद्वारामुखादिमान् ।
अङ्कोऽपरः स गर्भाङ्कः सवीजः फलवानपि ॥ (थ)

यथा बालरामायणे रावणं प्रति कञ्चुकी—

"श्रवणैः पेयमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः ।
भवदर्थमिव निबद्धं नाट्यं सीतास्वयंवरणम् ॥" (द)

इत्यादिना विरचितः सीतास्वयंवरो नाम गर्भाङ्कः ।

९ । तत्र पूर्वं पूर्वरङ्गः सभापूजा ततः परम् ।
कथनं कविसंज्ञादेर्नाटकस्याप्यथासुखम् ॥ (ध)

---

चतुर्थाङ्क-मुद्राराक्षसप्रथमाङ्कादौ लक्षणसङ्गतिः । त्रिचतुरैः पात्रैर्जनैरिति तु सम्भवप्रदर्शनार्थम् ; इतो न्यूनाधिक्यमपि पात्राणामिति द्रष्टव्यम् । शापः अभिशम्पातः, उत्सर्गो मूत्रपुरीषादित्यागस्तौ । शाकुन्तले दुर्वाससः शापस्तु विष्कम्भके इति न दोषः । दन्तच्छेद्यम् ओष्ठादौ-दन्ताघातः, नखच्छेद्यं स्तनादौ नखाघातः, अन्यत् वसनमोचनादिकम् । देवी महिषी । रसभावानामुद्भवो येभ्यस्तैः । प्रत्यक्षाणि न तु वाचनिकानि, चित्राणि आश्चर्य्याणि यानि चरितानि तैर्युक्तः । अन्ते समाप्तिकाले निष्क्रान्तानि रङ्गालयान्निर्गतानि निखिलानि पात्राणि यस्य सः, अङ्क इति कीर्त्तितः ।

(थ) अङ्कोदरेति । अङ्कोदरप्रविष्ट उक्तलक्षणस्य यस्य कस्यचिदङ्कस्य अभ्यन्तरगतः । अतएवास्य गर्भाङ्क इति संज्ञा । रङ्गद्वारं रङ्गे प्रथमकर्त्तव्यं मङ्गलाचरणम् आमुखं प्रस्तावना आदिशब्दात् यथासम्भवं सभापूजादिकञ्च तद्वान्, वीजेन "अल्पमात्रं समुद्दिष्टम्" इत्यादिवक्ष्यमाणलक्षणेन निदानेन सहेति सवीजः, फलवानपि यत्किञ्चिन्मुख्योद्देश्यविशिष्टश्च, यः अपरः अङ्कः, स गर्भाङ्क इत्युच्यते ।

(द) श्रवणैरिति । अनेकैः श्रवणैः कर्णैः पेयं मधुरत्वात् सादरं श्रोतव्यम्, दीर्घैः सुदृश्यत्वे-नाग्रहातिशयात् स्वयमेवायतीभूतैः बहुभिर्लोचनैर्नयनैः दृश्यं द्रष्टव्यञ्च, सीतास्वयंवरणं नाम नाट्यं नटप्रयोज्यं वस्तु, भवदर्थमिव भवतो दशाननत्वेन विंशतिकर्णत्वात् विंशतिनयनत्वाच्च अनेककर्णपेयत्व-दीर्घबहुलोचनदृश्यत्वसम्भवेन भवन्निमित्तमिव, निबद्धं जनकेन आयोजितम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्रेति नाटके ।

१० । यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥
प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि ।
तथाप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये ॥ (न)

११ । आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् (१) प्रयुज्यते ।
देव-द्विज नृपादीनां तस्मान्नान्दीति संज्ञिता ॥
मङ्गल्य-शङ्ख-चन्द्राब्ज-कोक-कैरवशंसिनी ।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥ (प)

---

(ध) नाटकरचनाक्रममाह तत्रेति । तत्र नाटके पूर्वं प्रथमं पूर्वरङ्गः पूर्वरङ्गाख्यं मङ्गलाचरणम्, ततः परं सभायाः पूजा यथासम्भवं स्तुतिवादः, ततः कवेः संज्ञाया नाम्नः आदिशब्दाद्यथारुचि कवेर्गोत्रादिकस्य च नाटकस्य नाटकनाम्नश्च कथनम्, अथापि अनन्तरञ्च आमुखं प्रस्तावना । क्रमादेतानि कविना विरचनीयानीत्यर्थः ।

(न) अथ को नाम पूर्वरङ्ग इत्याह यदिति । कुशीलवा नटाः, रङ्गे नर्त्तनालये सम्भाव्यमानो यो विघ्नस्तस्य उपशान्तये निवारणाय, नाट्यवस्तुनः अभिनयारम्भात् पूर्वं सर्वप्रथमं यत् प्रकुर्वन्ति स्वसमाजनियमात् कविनिर्द्देशात् सभ्यादेशाद्वा अनुतिष्ठन्ति, स पूर्वरङ्ग उच्यते । यद्यपि अस्य पूर्वरङ्गस्य प्रत्याहारादिकानि भूयांसि प्रचुराणि दशरूपकादावुक्तानि द्वाविंशतिसंख्यकानीत्यर्थः अङ्गानि सन्ति, तथापि विघ्नोपशान्तये नान्दी अवश्यं कर्त्तव्या । एतेन प्रत्याहाराद्यङ्गानि तु कविना यथारुचि कर्त्तव्यानीति सूचितम् ।

(प) ननु का नामासौ नान्दी कथं वा तादृशी संज्ञेत्याह आशीरिति । इष्टार्थस्य आशंसनम् आशीः । तथा च यस्मात् आशीर्वचनेन आत्मनः परस्य वा तादृशाशीर्वादेन संयुक्ता, देवद्विजनृपादीनाम् आदिशब्दात् गुरुप्रभृतीनाञ्च स्तुतिर्गुणप्रशंसिनी वाक् तयैवानन्द इत्यर्थः प्रयुज्यते नटैरुत्पाद्यते ; तस्मात् सा वाक् नान्दी इति संज्ञिता 'नान्दी' इत्थं सञ्जातसंज्ञा । तथा च नन्दयति स्तुत्या देवादीनानन्दयतीति नन्दा, टुनदिसमृद्धौ इति नन्दधातोः पचादित्वादच्, ततश्च "प्रज्ञादिभ्यश्च" इति स्वार्थे अण् प्रत्ययान्ताद्ङीप्रत्ययः ।

सा च नान्दी, मङ्गल्यं मङ्गलसूचकम्, शङ्खम्, चन्द्रम्, अब्जं पद्मम्, कोकं चक्रवाकम्, कैरवं कुमुदं वा शंसति अभिधाव्यन्यतमया वृत्त्या बोधयतीति सा तथोक्ता भवेत् । तथा सा द्वादशभिः पदैः उत वा अष्टाभिः पदैर्युक्ता च भवेत् ।

---

(१) नित्यं यस्मादिति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अष्टपदा यथा अनर्घराघवे—"निष्प्रत्यूहम्" इत्यादि ।

द्वादशपदा यथा मम तातपादानां पुष्पमालायाम्—

"शिरसि धृतसुरापगे स्मरारावरुणमुखेन्दुरुचिर्गिरीन्द्रपुत्री ।

अथ चरणयुगानते स्वकान्ते स्मितसरसा भवतोऽस्तु भूतिहेतुः ॥" (फ)

एवमन्यत्र (ब) ।

एतन्नान्दीति कस्यचिन्मतानुसारेणोक्तम् (भ) । वस्तुतस्तु "पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गम्" इत्युच्यते (१) । यदुक्तम्—(म)

पदञ्चात्र—श्लोकपादरूपम्, सुप्तिङन्तरूपम्, अवान्तरवाक्यरूपञ्च ग्राह्यम्, अनेकप्रकारत्वाभिप्रायेणैव पदशब्दस्य द्विरभिधानात् । तथा च नाट्यप्रदीपे—

"श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे । परेऽवान्तरवाक्यैक-स्वरूपं पदमूचिरे ॥"

महर्षिभरतप्रणीतनाट्यशास्त्रटीकाकृदभिनवगुप्तश्च—"पदानि श्लोकावयवभूतानि तिङन्तानि सुबन्तानि वा, श्लोकतुरीयांशपदानि वा, अवान्तररूपाणि वा ।" इति ।

(फ) तत्र श्लोकपादरूपद्वादशपदा नान्दी वेणीसंहारनाटके, श्लोकत्रयेण द्वादशपादत्वात् । श्लोकपादरूपाष्टपदा नान्दी मालतीमाधवप्रकरणे, श्लोकद्वयेनाष्टपादत्वात् । सुप्तिङन्तरूपाष्टपदाद्वादशपदयोरुदाहरणद्वयं वृत्तौ दर्शितम् । अवान्तरैकवाक्यरूपाष्टपदा नान्दी शाकुन्तलनाटके, "या सृष्टिः स्रष्टुराद्या—" इत्यादिश्लोकस्याष्टवाक्यघटितत्वात् । अवान्तरैकवाक्यरूपद्वादशपदा नान्दी मम वङ्गीयप्रतापनाटके, श्लोकद्वयस्य द्वादशवाक्यघटितत्वात् । किञ्च तत्र श्लोकद्वयेनाष्टपादत्वादष्टपदत्वमपि ।

तथा पदशब्दोऽत्र स्वयमेवार्थप्रतिपादनसमर्थतया प्रधानत्वाद्वाचकपरो लक्षकपरश्च ग्राह्यः । तेनोत्तररामचरितनाटकनान्द्यां "प्रशास्महे" इति प्रशब्दस्य उपसर्गतया द्योतकत्वेन वाचकत्वलक्षकत्वाभावान्न सुप्तिङन्तरूपद्वादशपदत्वहानिः ।

तथा स्तुतिरित्येतावन्मात्रमेव नान्दीत्वेन विवक्षितम्, विशेष्यतया प्रधानत्वात् तन्मात्रेणैव देवादीनामानन्दयोगाच्च । आशीर्वचनसंयुक्तेति मङ्गल्येत्यादिकाश्च सम्भवप्रदर्शनार्थमभिहितमित्यवधेयम् । तेन महावीरचरिते प्रबोधचन्द्रोदयादौ च नाटके केवलस्तुतिरूपायामपि वाचि नान्दीलक्षणसङ्गतिरिति द्रष्टव्यम् ।

शिरसीति । स्मरारौ शिवे, शिरसि धृता सुरापगा देवनदी गङ्गा येन तथाविधे सति, अरुणा गङ्गायाः सपत्नीत्वात् कोपेन रक्तवर्णा मुखेन्दुरुचिर्मुखचन्द्रद्युतिर्यस्याः सा, अथानन्तरं स्वकान्ते शिवे, चरणयुगे आनते अवनते सति, स्मितेन सरसा पुनरप्यनुरागार्द्रा गिरीन्द्रपुत्री पार्वती भवतः सभापतेः भूतिहेतुः सम्पत्प्रदा अस्तु । अस्या इन्दुपदेन चन्द्रशंसित्वं बोध्यम् ।

(ब) एवमिति । अन्यत्र श्लोकपादरूपपदविषये अवान्तरवाक्यरूपपदविषये च एवं नान्द्युदाहरणमूह्यमित्यर्थः । तच्च प्रदर्शितमेव ।

(भ) ननु "आशीर्वचनसंयुक्ता" इत्यादिविशेषणमभिधाय पुनः स्तुतिमात्रस्य नान्दीत्वविवक्षापेक्षया

(१) इत्यन्ये इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"यस्मादभिनयो ह्यत्र प्राथम्यादवतार्य्यते ।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ॥" इति (य) ।

उक्तप्रकारायाश्च नान्द्या रङ्गद्वारात् प्रथमं नटैरेव कर्त्तव्यतया न महर्षिणा निर्द्देशः कृतः (र) । कालिदासादिमहाकविप्रबन्धेषु च—(ल)

"वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥" (व)

---

वरं "देवद्विजनृपादीनां स्तुतिर्नान्दी प्रकीर्त्तिता" इत्यमेव लक्षणं क्रियतामित्याह एतदिति । एतन्नान्दी "आशीर्वचनसंयुक्ता" इत्याद्युक्तलक्षणनान्दी, इति कस्यचिद्दृश्यरूपककारादेर्मतानुसारिणोक्तम्, प्रायेण लक्ष्येषु सङ्गतेः ; किन्तु नाभ्रान्तमिदम्, महाकविनिबन्धेष्वेवासङ्गतेरित्याशयः ।

(म) तर्हि भवन्मते महाकविनिबन्धेष्वेव स्तुतिवादाद्यात्मकं तादृशं वाक्यं किंनामकमित्याह वस्तुतस्त्विति । रङ्गद्वाराभिधानं सत् प्रयोज्यैव रङ्गे प्रवेशात् रङ्गद्वारनामकम्, पूर्वरङ्गस्य प्रागुक्तलक्षणस्य, अङ्गं स्वरूपनिर्वाहकम्, इत्युच्यते अस्माभिरिति शेषः । ननु भवतेव अन्येन केनापि किमिदमुच्यत इत्याह यदुक्तमिति । मुनिनेति शेषः ।

(य) यस्मादिति । यस्मात्, अत्र रङ्गालये प्राथम्यात् हि प्रथमत्वं पुरस्कृत्यैव प्रथमरूप एवेत्यर्थः अभिनयः अवतार्य्यते नटैः प्रदर्श्यते । इति रङ्गद्वारसंज्ञां प्रति हेतुरुक्तः । अतः वाचा देवादीनां स्तुत्यादिरूपवाक्येन, अङ्गैः करशिरःसंयोगादिरूपाभिरङ्गभङ्गिभिश्च यः अभिनयः स एव, आत्मा स्वरूपं यस्य तत्तादृशं रङ्गद्वारं ज्ञेयम् । अतो नाठ्याचार्य्येण महर्षिणा भरतेनैव रङ्गद्वाराङ्गीकारादस्मन्मतमार्षमेवेति भावः ।

(र) "आशीर्वचनसंयुक्ता" इत्याद्युक्तलक्षणायां नान्द्यां नाठ्याचार्य्यस्य भरतस्यापि न सम्मतिरिति दर्शयितुमाह उक्तेति । रङ्गद्वारात् उक्तप्रकारपूर्वरङ्गाङ्गात् । महर्षिणा भरतेन । निर्द्देशः कर्त्तव्यतया आदेशः । अलङ्कारशास्त्रकृतां कविकर्त्तव्यतोपदेशस्यैव उद्देश्यत्वादिति भावः ।

(ल) ननु तथापि "आशीर्वचनसंयुक्ता" इत्याद्युक्तरूपनान्दीलक्षणे को दोष इत्याह कालिदासादीति । एवमादिषु नान्दीलक्षणायोगादिति परेणान्वयः । महाकविपदेन तेषां प्रबन्धमात्रस्यैव महाप्रामाणिकत्वेन अलक्ष्यत्वाभिधानमसम्भवमिति सूचितम् ।

(व) वेदान्तेष्विति । कालिदासप्रणीतविक्रमोर्वशीत्रोटकस्य प्रथमश्लोकोऽयम् । वेदान्तेषु उपनिषत्सु रोदसी स्वर्गमर्त्यौ व्याप्य स्थितं यम् एकपुरुषम् अद्वितीयं पुरुषम् आहुः, वेदान्तज्ञा इति शेषः । "सर्वं खल्विदं ब्रह्म" "एकमेवाद्वितीयम्" इत्यादिश्रुतेः । यस्मिन् ईश्वर इति अनन्यविषयः अनन्यवाचकः, शब्दः, यथार्थानि सर्वेषामेव ईशनशीलत्वात् यौगिकानि अक्षराणि वर्णा यस्य तादृशो वाचकतया वर्त्तत इति शेषः । नियमिताः प्राणायामप्रकारेण परिचालिताः प्राणादयः पञ्च वायवो यैस्तादृशैः, मुमुक्षुभिर्जनैः, यश्च अन्तरन्तःकरणे मृग्यते अन्विष्यते । स्थिरया भक्त्या योगेन च सुलभः स स्थाणुर्महेशः, वो युष्माकं निःश्रेयसाय मोक्षाय अस्तु ।

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

एवमादिषु नान्दीलक्षणायोगात् (अ)। उक्तञ्च—"रङ्गद्वारमारभ्य कविः कुर्य्यात्" इत्यादि (ष)। अतएव प्राक्तनपुस्तकेषु "नान्द्यन्ते सूत्रधारः" इत्यनन्तरमेव "वेदान्तेषु—" इत्यादिश्लोकलिखनं दृश्यते। यच्च पश्चात् "नान्द्यन्ते सूत्रधारः" इति लिखनम्, तस्यायमभिप्रायः—"नान्द्यन्ते सूत्रधार इदं प्रयोजितवान्"। "इतः प्रभृति मया नाटकमुपादीयते" इति कवेरभिप्रायः सूचित इति (स)।

१२। पूर्वरङ्गं विधायैव सूत्रधारो निवर्त्तते।
प्रविश्य स्थापकस्तद्वत् काव्यमास्थापयेत्ततः॥
दिव्यमर्त्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः।
सूचयेद्वस्तु वीजं वा मुखं पात्रमथापि वा॥ (ह)

---

(अ) एवमिति। आदिशब्दात् भवभूतिप्रभृतिप्रणीतमालतीमाधवादिषु केषुचित् पुस्तकेषु लिखितश्लोकचतुष्टयात्मकमङ्गलाचरणादीनां ग्रहणम्। नान्दीलक्षणस्य अयोगादव्याप्तेरित्यर्थः। "एतत् पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गमित्युच्यते" इति पूर्वोक्तमेवास्य हेतोः साध्यमिति बोध्यम्।

(ष) ननु "वेदान्तेषु" इत्यादीनां पूर्वरङ्गस्य रङ्गद्वाराभिधानाङ्गत्वे तस्य रङ्गविघ्नशान्तये कुशीलवैरेव कर्त्तव्यतया कथं कविना करणमित्याह उक्तञ्चेति। तथा च कविः स्वरचनाविघ्नशान्तये तस्य रङ्गद्वारात्मकं मङ्गलमाचरति; कुशीलवास्तु स्वाभिनयविघ्नशान्त्यै तदेव पठन्तीति न किञ्चिदसामञ्जस्यमिति भावः।

(स) अत इति। अतएव "वेदान्तेषु" इत्यादीनां कविकर्त्तव्यरङ्गद्वारत्वादेव; अथवा "वेदान्तेषु" इत्यादीनां नान्दीत्वाभावादेव। पश्चात् "वेदान्तेषु" इत्यादीनां लिखनात् परम्। अयमभिप्रायः परवर्त्तिलेखकस्येति शेषः। नान्द्याः कविना अलिखिताया एव कस्याश्चिन्नान्द्याः अन्ते पाठावसाने। इदं "वेदान्तेषु" इत्यादिरूपं रङ्गद्वारम्। इतः प्रभृति वेदान्तेष्वित्यादि, मया कविना, नाटकम् उपादीयते गृह्यते रचयितुमारभ्यत इत्यर्थः। इति इत्थम्। सूचित इति। वेदान्तेष्वित्यादिलिखनानन्तरं "नान्द्यन्ते सूत्रधारः" इति लिखित्वा परवर्त्तिलेखकेनेति शेषः। इत्थं व्याख्यानेनैव अभिप्रायशब्दस्य द्विरुक्तिः प्रयोजितवानीत्यतीतनिर्द्देशश्च सङ्गच्छत इति द्रष्टव्यम्।

अत्रेदमवधेयम्—कविकर्त्तव्यतोपदेशस्यैवालङ्कारिकाणामुद्देश्यत्वात् नान्द्याश्च कविकर्त्तृकप्रणयननियमाभावात् दर्पणकृता स्वयं नान्दीलक्षणमुपेक्षितम्, "आशीर्वचनसंयुक्ता" इत्यादिकन्तु परमतानुसारेणोक्तम्। तेन यत्र "या सृष्टिः स्रष्टुराद्या" इत्यादौ नान्दीत्वस्य रङ्गद्वारत्वस्य च सम्भवः, तत्र तेनैकेनैव तयोरुभयोरपि निर्वाहः; यत्र च "वेदान्तेषु" इत्यादौ नान्दीत्वासम्भवस्तत्र तु तस्य रङ्गद्वारत्वमेव; सूत्रधारस्यावश्यकर्त्तव्यतया नान्दीपाठस्तु तत्रानुमेय इति।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

काव्यस्यार्थस्य स्थापनात् स्थापकः। तद्वदिति सूत्रधारसदृशगुणाकारः। इदानीं पूर्वरङ्गस्य सम्यक्प्रयोगाभावादेक एव सूत्रधारः सर्वं प्रयोजयतीति व्यवहारः। स स्थापको दिव्यं वस्तु दिव्यो भूत्वा मर्त्यं मर्त्यो भूत्वा मिश्रञ्च दिव्यमर्त्ययोरन्यतरो भूत्वा सूचयेत्। वस्तु इतिवृत्तम् (घ)। यथा उदात्तराघवे—

"रामो मूर्द्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो-
स्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम्।
तौ सुग्रीवविभीषणावनुगतौ नीतौ परां सम्पदं
प्रोत्सिक्ता दशकन्धरप्रभृतयो ध्वस्ताः समस्ता द्विषः॥" (क)

वीजं यथा रत्नावल्याम्—

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः॥" (ख)

अत्र हि समुद्रे वहित्रभङ्गमग्नोत्थिताया रत्नावल्या अनुकूलदैवलालितो वत्सराजगृहप्रवेशो यौगन्धरायणव्यापारमारभ्य रत्नावलीप्राप्तौ वीजम् (ग)।

---

(ङ) पूर्वेति। "नाटकीयकथासूत्रं प्रथमं येन सूच्यते। रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते॥". इत्युक्तलक्षणः प्रधाननटः सूत्रधारः। निवर्त्तते रङ्गालयान्निष्क्रामति। काव्यं तद्दृश्यकाव्यप्रतिपाद्यविषयम्, आस्थापयेत् सूचयेत्। दिव्यं स्वर्गीयञ्च मर्त्यं मर्त्यलोकीयञ्चेति दिव्यमर्त्ये इति द्वितीयाद्विवचनान्तं पदम्। तथा च स स्थापकः, तद्रूपः दिव्यरूपः सन्, दिव्यं वस्तु वीजं मुखं पात्रं वा सूचयेत् मर्त्यरूपश्च सन् मर्त्यीयं वस्त्वादिकं सूचयेत्, तथा तयोर्दिव्यमर्त्ययोरन्यतरः सन् मिश्रं दिव्यमर्त्योभयरूपं वस्त्वादिकं सूचयेदित्यर्थः।

(घ) स्थापकशब्दस्य यौगिकत्वमाह काव्यस्येति। इतिवृत्तं तद्दृश्यकाव्यवृत्तान्तः।

(क) राम इति। रामो गुरोः पितुराज्ञां मालामिव मूर्द्ध्नि मस्तके निधाय काननं महारण्यमगात्। भरतेन तस्मिन् रामे भक्त्या मात्रा कैकय्या सहैव अखिलं राज्यम् उज्झितं परित्यक्तम्। अनुगतौ तौ प्रसिद्धौ सुग्रीवविभीषणौ परामत्यन्तां सम्पदं राज्यलाभरूपां नीतौ प्रापितौ वालिं रावणञ्च हत्वा रामेणेति शेषः। तथा प्रोत्सिक्ता दर्पान्धाः दशकन्धरप्रभृतयो रावणादयः समस्ता द्विषः शत्रवः ध्वस्ता रामेणैव विनष्टाः।

अनेन समस्तमेव नाटकीयमितिवृत्तं स्थापकेन सामान्यतः सूचितम्।

(ख) द्वीपादिति। अभिमुखीभूतः प्रसन्नो विधिर्दैवम्, अन्यस्मात् द्वीपादपि जलनिधेर्मध्यादपि दिशः अन्तात् शेषभागादपि च अभिमतं वस्तु आनीय झटिति शीघ्रं घटयति संयोजयति।

(ग) अत्र वीजसूचनमुपपादयति अत्रेति। हि तथाहि। वहित्रस्य यानस्य भङ्गेन आदौ मग्ना अनन्तरञ्चोत्थिता तस्याः, रत्नावल्यास्तदाख्याया रत्नावलीनाटिकानायिकायाः, अनुकूलदैवेन लालितः सङ्घटितः, वत्सराजस्य उदयनस्य, गृहप्रवेशः, यौगन्धरायणस्य तदाख्यस्य महामात्यस्य व्यापारं घटनाम्। रत्नावलीप्राप्तौ वत्सराजस्य रत्नावलीलाभं प्रति।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुखं श्लेषादिना प्रस्तुतवृत्तान्तप्रतिपादको वाग्विशेषः। यथा—

"आसादितप्रकटनिर्म्मलचन्द्रहासः प्राप्तः शरत्समय एष विशुद्धकान्तिः।
उत्खाय गाढ़तमसं घनकालमुग्रं रामो दशास्यमिव सम्भृतबन्धुजोवः॥" (घ)

पात्रं यथा शाकुन्तले—

"तवास्मि गीतरागेण हारिणा प्रसभं हृतः।
एष राजेव दुष्मन्तः सारङ्गेणातिरंहसा॥" (ङ)

१३। रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः।
रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्त्तयेत्॥
ऋतुञ्च कञ्चित् प्रायेण भारतीं वृत्तिमाश्रितः। (च)

स स्थापकः। प्रायेणेति क्वचिदृतोरकीर्त्तनमपि। यथा—रत्नावल्याम्।

भारतीवृत्तिस्तु—

१४। भारतीसंस्कृतप्रायो वाग्व्यापारो नराश्रयः॥ (छ)

---

(घ) आसादितेति। आसादितो लब्धः प्रकटः सुस्पष्टो निर्म्मलश्च चन्द्रस्य हासो विकासो येन सः, रामपक्षे तु आसादितो धृतः प्रकटो विकटः निर्म्मलः शाणितश्च चन्द्रहासः असियेन सः। विशुद्धा मेघापगमात् उज्ज्वला कान्तिर्नक्षत्रादिद्युतिर्यत्र सः, रामपक्षे तु विशुद्धा शत्रुविजयात् प्रफुल्ला कान्तिर्मुखादिशोभा यस्य सः। तथा सम्भृतानि धृतानि बन्धुजीवानि तदाख्यकुसुमानि येन सः, रामपक्षे तु सम्भृता रावणवधेन संरक्षिताः बन्धूनां विभीषणादीनां जीवा जीवनानि येन सः। एष शरत्समयः, रामो दशास्यं रावणमिव, गाढ़तमसं मेघावरणाद्गाढ़ान्धकारम्, प्रबलतमोगुणजनिताज्ञानञ्च, उग्रं भयङ्करम्, घनकालं मेघसमयं वर्षाकालं गाढ़कृष्णवर्णञ्च, उत्खाय अपसार्य्य निहत्य च प्राप्त आगतः।

अत्र श्लेषेण प्रस्तुतरामचरित्ररूपो वृत्तान्तः सूचितः।

(ङ) तवेति। हारिणा मनोहरेण दूरमपहारिणा च तव गीतरागेण गानस्वरेण, अतिरंहसा अत्यन्तवेगशालिना सारङ्गेण हरिणेन एष राजा दुष्मन्त इव प्रसभं बलेन हृत आकृष्टः अस्मि। अनेन दुष्मन्तरूपपात्रप्रवेशः सूचितः।

(च) रङ्गमिति। स स्थापकः भारतीं वृत्तिम् आश्रितः अवलम्बमानः सन्, काव्यार्थसूचकैः तद्दृश्यकाव्यवृत्तान्तज्ञापकैः मधुरैः श्लोकैः। अत्र बहुवचनमविवक्षितम्। रङ्गं रङ्गप्राङ्गणस्थं सभ्यगणं प्रसाद्य सन्तोष्य, रूपकस्य अभिनेयदृश्यकाव्यस्य तत्कवेश्च आख्यां नाम तथा तस्य कवेर्गोत्रम् आदिशब्दात् तदीयवासस्थानादिकञ्च, प्रायेण कञ्चिद्वसन्तादिकम् ऋतुञ्च, कीर्त्तयेत् प्रकाशयेत्। गोत्राद्यपीत्यपिशब्दादनास्थासूचनेन क्वचित् कविगोत्रादेरकीर्त्तनमपीति बोध्यम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संस्कृतबहुलो वाक्प्रधानो व्यापारो भारती (ज)।

१५। तस्याः प्ररोचना वीथी तथा प्रहसनामुखे।

अङ्गान्यत्रोन्मुखीकारः प्रशंसातः प्ररोचना॥ (झ)

प्रस्तुताभिनयेषु प्रशंसातः श्रोतॄणां प्रवृत्त्युन्मुखीकरणं प्ररोचना। यथा रत्नावल्याम्—

"श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम्।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः॥" (ञ)

वीथीप्रहसने वक्ष्येते।

१६। नटी विदूषको वापि पारिपार्श्विक एव वा।

सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥

चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।

आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा॥ (ट)

---

(छ) भारतीति। नराश्रयः केवलमनुष्यविषयकः।

(ज) संस्कृतेति। संस्कृतबहुल इत्यनेन तत्राल्पाल्पप्राकृतादिभाषाया अपि स्थितिः सूचिता। वाक्प्रधान इत्यनेन च किञ्चित्किञ्चिदाङ्गिकाहार्य्यसात्त्विकाभिनयप्रकारोऽपि सम्भवतीति द्योतितम्। व्यापारः अभिनयः।

(झ) तस्या इति। प्ररोचना, वीथी, प्रहसनम्, आमुखञ्च, एतानि तस्या भारतीवृत्तेरङ्गानि। अत्र एषु चतुर्षु अङ्गेषु मध्ये, प्ररोचना नाम प्रशंसातः कविकाव्यसभ्यादीनां सुख्यातिकरणात् उन्मुखीकारः श्रोतॄणामभिनयदर्शने प्रवृत्तिजननम्, प्रकर्षेण रुच्युत्पादनं प्ररोचनेति व्युत्पत्तेः।

(ञ) श्रीहर्ष इति। श्रीहर्षसदाख्यः निपुणः काव्यरचनादक्षः कविरेतन्नाटिकाया रचयिता, एषा परिषत् सभापि गुणग्राहिणी, लोके वत्सराजस्य उदयनस्य चरितञ्च हारि मनोहरम्, वयञ्च नाट्ये अभिनय-कार्य्ये दक्षा निपुणाः। एषां मध्ये एकैकमपि कविनिपुणत्वादिकं वस्तु, इह अभिनयविषये वाञ्छितफल-प्राप्तेः सभ्यप्रीतिजननरूपाभिलषितफललाभस्य, पदं हेतुः, किं पुनरधिकमुच्यत इत्याशयः, मम भाग्यस्य उपचयादाधिक्येनोदयात् अयं सर्वो गुणानां निपुणकवित्वादीनां प्रीतिजनकधर्म्माणां गणः समुदितः अद्य सम्मिलितः सन् उपस्थितः।

अत्र सर्वेषां प्रशंसया प्रकृताभिनये श्रोतॄणां रुच्युत्पादनात् प्ररोचना।

(ट) तर्हि किं तावदामुखमित्याह नटीति। नटी सूत्रधारपत्नी, विदूषकः प्रागुक्तलक्षणः परि

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सूत्रधारसदृशत्वात् स्थापकोऽपि सूत्रधार उच्यते। तस्यानुचरः पारिपार्श्विकस्तस्मात् किञ्चिदूनो नटः (ठ) ।

१७ । उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा ।
प्रवर्त्तकावलगिते पञ्च प्रस्तावनाभिदाः ॥ (ड)

तत्र—

१८ । पदानि त्वगतार्थानि तदर्थगतये नराः ।
योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते ॥ (ढ)

यथा मुद्राराक्षसे सूत्रधारः—

"क्रूरग्रहः सकेतुश्चन्द्रमसम्पूर्णमण्डलमिदानीम् ।
अभिभवितुमिच्छति बलात्—" (ण)

---

समन्तात् सूत्रधारस्य पार्श्वे चरतीति पारिपार्श्विकः एते सूत्रधारेण सहिता मिलिताः सन्तः, स्वकार्य्यादुत्थैर्निजनिजकर्त्तव्यविषयमवलम्ब्योत्पन्नैः प्रस्तुतं प्रकृतं दृश्यकाव्यविषयम् आक्षिपन्ति उत्थापयन्तीति तैः चित्रैर्नानाविधैर्वाक्यैः यत्र मिथः परस्परं संलापम् आलापं कुर्वते तत्तु आमुखं विज्ञेयम्, प्रकृताभिनयस्य मुखे आद्ये कर्त्तव्यादिति भावः। तथा नाम्ना प्रसिद्धया सा प्रस्तावनापि विज्ञेया, प्रस्तावयति प्रकृतविषयमुत्थापयतीति व्युत्पत्तेः ।

(ठ) ननु "पूर्वरङ्गं विधायैव सूत्रधारो निवर्त्तते। प्रविश्य स्थापकस्तद्वत् काव्यमास्थापयेत्ततः ॥" इत्यनेन पूर्वमेव सूत्रधारस्य रङ्गालयान्निर्गमोपदेशात् स्थापकस्य काव्यार्थसूचनोपदेशाच्च कथमत्र पुनः "सूत्रधारेण सहिताः" इत्युच्यत इत्याह सूत्रेति। तथा चात्र सूत्रधारपदं तत्सदृशत्वात् स्थापकपरमिति भावः। तस्य सूत्रधारस्य। स च तस्मात् सूत्रधारादेव किञ्चिदूनः किञ्चिदूनगुणको नटो नटविशेष इत्यर्थः।

(ड) उद्घात्यक इति। प्रवर्त्तकञ्च अवलगितञ्चेति प्रवर्त्तकावलगिते द्वे ।

(ढ) पदानीति। नराः प्रवेशं करिष्यन्तो जनाः। अत्र बहुवचनमविवक्षितम्। न गता अनेकतया नावधारिता अर्थाः स्वाभिप्रेतविषया येभ्यस्तानि अगतार्थानि पदानि तेषां स्वाभिप्रेतार्थानां गतये अवधारणाय अन्यैः स्वाभिप्रेतार्थप्रतिपादकैः पदैः यत् योजयन्ति स्वाभिप्रेतार्थं संक्रामयन्ति, स उद्घात्यको नाम प्रस्तावनाभेद उच्यते। प्रवेष्टुरभिप्रेतार्थेन वक्तुरभिप्रेतार्थं उद्धन्यते तिरोधीयत इति उद्घात्यकः। उत्पूर्वहनधातोः कर्म्मणि घ्यण्प्रत्ययात् स्वार्थे कप्रत्ययः।

(ण) क्रूरेति। क्रूरः अशुभफलदायकतया हिंस्रस्वभावो ग्रहः क्रूरग्रहः पापग्रह इत्यर्थः, अन्यत्र तु क्रूरबुद्धिः। स प्रसिद्धः केतुरेकशरीरत्वेनाभेदात् राहुरित्यर्थः, अन्यत्र तु केतुना मलयकेतुना सहेति सकेतुः राक्षसः। इदानीं पूर्णमण्डलं चन्द्रमसं चन्द्रम्, अन्यत्र तु असम्पूर्णं मण्डलम् अचिराधिष्ठितत्वात् असम्यग्जातराज्याधिपत्यम्, चन्द्रं चन्द्रगुप्तम्, बलात् अभिभवितुं ग्रसितुं पराजेतुञ्च इच्छति।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनन्तरं (१) "नेपथ्ये। आः? क एष मयि जीवति चन्द्रगुप्तमभिभवितुमिच्छति।" इति।

अत्र अन्यार्थवन्त्यपि पदानि हृदयस्थार्थागत्या (२) अर्थान्तरे सङ्क्रमय्य (३) पात्रप्रवेशः (त)।

१६। सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा।
भवेत् पात्रप्रवेशश्चेत् कथोद्घातः स उच्यते॥ (थ)

वाक्यं यथा रत्नावल्याम्—"द्वीपादन्यस्मादपि" इत्यादि। सूत्रधारेण पठिते—"नेपथ्ये। एवमेतत् (४) कः सन्देहः। द्वीपादन्यस्मादपि" इत्यादि पठित्वा यौगन्धरायणस्य प्रवेशः (द)।

वाक्यार्थो यथा वेण्याम्—

"निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः॥" (ध)

---

(त) लक्ष्ये लक्षणं सङ्गमयितुमाह अत्रेति। अत्र सूत्रधारोक्तौ, अन्यार्थवन्त्यपि पापग्रह-राहु-पूर्णमण्डल-चन्द्ररूपान् वक्तुरभिप्रेतान् अर्थान् यथाक्रमं बोधयन्त्यपि, पदानि "क्रूरग्रहः" "सकेतुः" "चन्द्रमसम्पूर्णमण्डलम्" इत्येतान् शब्दान्, हृदयस्थानां चाणक्यचित्तवर्त्तिनां चाणक्येन सम्भावितानामित्यर्थः अर्थानां क्रूरबुद्धि-मलयकेतुघटित-राक्षसमस्यगसम्पन्नराज्याधिपत्य-चन्द्रगुप्तरूपाणां प्रतिपाद्यविषयाणाम् आगत्या वक्तुस्तात्पर्य्यसंशयादनवधारणेन, अर्थान्तरे वक्तुरभिप्रेतार्थभिन्नार्थे स्वाभिप्रेतक्रूरबुद्धिप्रभृत्यर्थे सङ्क्रमय्य चन्द्रगुप्तमिति गुप्तशब्दपर्य्यन्तोल्लेखेन सम्बन्धार्थं पात्रस्य चाणक्यस्य प्रवेशः।

(थ) सूत्रेति। सूत्रधारस्य वाक्यं समादाय अविकलमेव सूत्रधारवाक्यमुच्चार्य्य, अथवा अस्य सूत्रधारवाक्यस्य अर्थं प्रतिपाद्यविषयं समादाय सूत्रधाराभिप्रेतप्रकारेणैव विभाव्य, चेद्यदि पात्रस्य इतिवृत्तान्तर्गतजनस्य प्रवेशो भवेत्, तदा स कथोद्घातो नाम प्रस्तावनाभेद उच्यते। कथया सूत्रधारवाक्येन उद्घातः पात्रोपस्थितिरिति कथोद्घातः।

पूर्वत्र सूत्रधाराभिप्रेतार्थस्य पात्रेणार्थान्तरे परिणमनम्, अत्र तु सूत्रधाराभिप्रेतार्थस्यैव पात्रेण यथायथं ग्रहणमित्युभयोर्भेदः।

(द) वाक्यमिति। सूत्रधारेण पठिते तस्मिन् वाक्ये इति शेषः। अत्र "द्वीपादन्यस्मादपि" इत्यादि सूत्रधारवाक्यमविकलमेवोच्चार्य्य पात्रस्य यौगन्धरायणस्य प्रवेशादयं प्रथमप्रकारः कथोद्घात इति बोध्यम्।

(ध) निर्वाणेति। अरीणां शत्रूणां दुर्य्योधनादीनां प्रशमात् सन्धिकरणेन शान्तभावावलम्बनात्, निर्वाणः

---

(१) इत्यनन्तरम् इति पाठान्तरम्। (२) हृदिस्थार्थागत्या इत्यपि पाठः।

(३) सङ्क्रमय्य इति पाठान्तरम्। (४) नेपथ्ये इति पाठः क्वचिन्न दृश्यते।

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

इति सूत्रधारेण पठितस्य वाक्यस्य अर्थं गृहीत्वा—"नेपथ्ये । आः दुरात्मन् ! वृथामङ्गलपाठक ! कथं स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः ?" ततः सूत्रधार-निष्क्रान्तौ (१) भीमसेनस्य प्रवेशः (न) ।

२० । यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते ।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा ॥ (प)

यथा कुन्दमालायाम्—"नेपथ्ये । इत इतोऽवतरत्वार्य्या । सूत्र । कोऽयं खल्वार्य्याह्वानेन साहायकं मे सम्पादयति ? । विलोक्य । कष्टमतिकरुणं वर्त्तते (फ) ।

लङ्केश्वरस्य भवने सुचिरं स्थितेति
रामेण लोकपरिवादभयाकुलेन ।

---

प्रशमी वैरं शत्रुतैव दहनो वह्निर्येषां ते तादृशाः पाण्डुतनया युधिष्ठिरादयः माधवेन श्रीकृष्णेन सह नन्दन्तु आनन्दिता भवन्तु । तथा रक्तेन अनुरागेण प्रसाधिता आयत्तीकृता भूः पृथिवी यैस्ते, अतः सन्धिकरणेन विलुप्तः विग्रहो युद्धं येषां ते, सभृत्याः सानुचराः कुरुराजसुता धृतराष्ट्रपुत्रा दुर्य्योधनादयश्च स्वस्थाः सुस्था भवन्तु । सन्धिकरणफलम् उभयपक्ष एव वर्त्ततामिति भावः । अस्य द्वितीयार्थस्तु वाक्यावश्यक इति पताकाप्रकारे वक्ष्यते ।

(न) इतीति । अर्थं सूत्रधाराभिप्रेतमेव कुरुराजसुतानां सुस्थीभवनरूपमर्थम् । अतएवात्र द्वितीयप्रकारः कथोद्घातः ।

(प) यदीति । एकस्मिन् प्रयोगे कस्यचिदेकस्य विषयस्य आलोचने प्रचरति सतीत्यर्थः, यदि अन्यः प्रयोगः प्रयुज्यते सूत्रधारेण तत्पूर्वविषयालोचनमतिक्रम्य अपरस्य विषयस्य आलोचनं क्रियते ; तेन च द्वितीयप्रयोगेण चेत् पात्रस्य इतिवृत्तान्तर्गतजनस्य प्रवेशो भवति ; तदा प्रयोगातिशयो नाम प्रस्तावनाभेदो भवेत् । द्वितीयप्रयोगेण प्रथमप्रयोगस्य अतिशयः अतिक्रमः यत्र इति प्रयोगातिशयः ।

अथ तर्हि उद्घात्यकादिष्वन्येष्वपि चतुर्षु प्रस्तावनाभेदेषु प्रयोगातिशयप्रसङ्गः, तेषु च सर्वेष्वेव सूत्रधारेण स्वप्रयोगमतिक्रम्य प्रयोगान्तरेणैव पात्रप्रवेशस्य सूचितत्वात् । सत्यम् ; पञ्चसु प्रस्तावनाभेदेषु मध्ये प्रयोगातिशयस्य सामान्यरूपत्वम् इतरेषां चतुर्णान्तु विशेषत्वमङ्गीक्रियते ; तेन सामान्यस्य विशेषेतरपरत्वनियमात् यत्र यत्र उद्घात्यकादीनां विशेषप्रकाराणां न सम्भवस्तत्र तत्रैव प्रयोगातिशयो नाम प्रस्तावनाप्रकार इति सिद्धान्तः । अतएवास्माभिरुत्तररामचरित-मालतीमाधवयोः प्रस्तावना प्रयोगातिशयरूपैवेति तट्टीकायां प्रतिपादितम् ।

(फ) यथेति । आर्य्याया निजभार्य्याया नट्या आह्वानेन । साहायकं साहाय्यम् । स्वकर्त्तव्यस्यान्येन करणादिति भावः । अतिकरुणम् अत्यन्तशोकोद्दीपकम् ।

---

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(१) सूत्रधारो निष्क्रान्त इति पाठान्तरम् ।

निर्वासितां जनपदादपि गर्भगुर्वीं
सीतां वनाय परिकर्षति लक्ष्मणोऽयम्॥" (ब)

अत्र नृत्यप्रयोगार्थं स्वभार्य्याह्वानमिच्छता सूत्रधारेण "सीतां वनाय परिकर्षति लक्ष्मणोऽयम्" इति सीतालक्ष्मणयोः प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजितः (भ)।

२१। कालं प्रवृत्तमाश्रित्य सूत्रधृग् यत्र वर्णयेत्।
तदाश्रयस्य पात्रस्य प्रवेशस्तत्प्रवर्त्तकम्॥ (म)

यथा—"आसादिते"त्यादि (२९८ पृष्ठे)। ततः प्रविशति यथानिर्द्दिष्टो रामः।

२२। यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते।
प्रयोगे खलु तज्ज्ञेयं नाम्नाऽवलगितं बुधैः॥ (य)

---

(ब) लङ्केश्वरस्येति। सीता लङ्केश्वरस्य भवने सुचिरं दशमासात्मकं दीर्घकालं स्थिता, अतस्तत् सतीत्वं प्रति संशय एवेति भावः; इति इत्थं लोकपरिवादभयादाकुलेन विह्वलान्तःकरणेन रामेण, गर्भेण गुर्वीमपि भारवतीमपि जनपदात् लोकालयाद्देशात् निर्वासितां सीताम्, वनाय वनगमनाय अयं लक्ष्मणः परिकर्षति आकर्षति। तस्यैवेदम् आर्य्येति सीताया आह्वानमिति भावः।

(भ) उक्तालक्ष्ये लक्षणं सङ्गमयन् प्रयोगातिशयशब्दस्य व्युत्पत्तिं दर्शयति अत्रेति। नृत्यप्रयोगार्थमित्यनेन सूत्रधारस्य नृत्यरूपः स्वप्रयोगः सूचितः। स्वभार्य्याया नट्याः आह्वानमामन्त्रणम्। स्वप्रयोगं निजकर्त्तव्यविषयं नृत्यम्, अतिशयान एव अतिक्रामन्नेव, प्रयोगः अपरो विषयः।

(म) कालमिति। सूत्रधृक् सूत्रधारो यत्र प्रवृत्तं तदानीं वर्त्तमानं कालं वसन्तादिकालविशेषम् आश्रित्य अवलम्ब्य वर्णयेत्, तदाश्रयस्य श्लेषादिद्वारा तद्वर्णनाप्रयोज्यस्य पात्रस्य इतिवृत्तान्तर्गतजनस्य प्रवेशो भवति, तत्प्रवर्त्तकं नाम आमुखं स्यात्। पात्रमभिनये प्रवर्त्तयतीति प्रवर्त्तकम्।

यां काञ्चिदेव क्रियां कर्त्तुं वर्त्तमानकालस्य परिहार्य्यत्वासम्भवेन अवश्यमेव तत्कालाश्रयसम्भवेऽपि यत् "कालं प्रवृत्तमाश्रित्य" इत्यभिहितम्, तत् साक्षाद्वाचकपदनिर्द्दिष्टवसन्तशरदादिकालविशेषप्रतिपत्त्यर्थम्। तेन "अभिभवितुमिच्छति बलात्" इत्युद्घात्यकादिस्थले तिङा वर्त्तमानकालनिर्द्देशेऽपि न प्रवर्त्तकत्वप्रसङ्गः। अतएव "आसादितप्रकटनिर्म्मलचन्द्रहासः प्राप्तः शरत्समय एष विशुद्धकान्तिः।" इति शरत्समयरूपकालविशेषबोधकमेवोदाहृतम्।

(य) यत्रेति। यत्र प्रयोगे आमुखे एकत्र एकस्मिन् विषये समावेशात् साद्दश्योपन्यासात् हेतोः, अन्यत् उपमानभूतपात्रप्रवेशसूचनरूपं कार्य्यं प्रसाध्यते सूत्रधारेण निष्पाद्यते; बुधैस्तदामुखं नाम्ना अवलगितं ज्ञेयम्। अवलगति पात्रप्रवेशेन सह सम्बन्धमवलगतीत्यवलगितम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—शाकुन्तले सूत्रधारो नटीं प्रति "तवास्मि गीतरागेण" इत्यादि। ततो राज्ञः प्रवेशः।

२३। योज्यान्यत्र यथालाभं वीथ्यङ्गानीतराण्यपि (१)। (र)

अत्र आमुखे। उद्‌घात्यकावलगितयोरितराणि वीथ्यङ्गानि वक्ष्यमाणानि (ल)। नखकुट्टस्तु—

"नेपथ्योक्तं श्रुतं यत्र त्वाकाशवचनं तथा॥
समाश्रित्यापि कर्त्तव्यमामुखं नाटकादिषु।
एषामामुखभेदानामेकं कञ्चित् प्रयोजयेत्॥
तेनार्थमथ पात्रं वा समाक्षिप्यैव सूत्रधृक्।
प्रस्तावनान्ते निर्गच्छेत् ततो वस्तु प्रयोजयेत्॥" (व)

वस्त्वितिवृत्तम्।

२४। इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते।
आधिकारिकमेकं स्यात् प्रासङ्गिकमथापरम्॥

---

ननु सादृश्योपन्यासेन उपमानभूतपात्रप्रवेशसूचकस्य अवलगितत्वे "रामो दशास्यमिव सम्भृतबन्धुजीवः" इत्युक्तप्रवर्त्तकस्थलेऽपि सादृश्योपन्यासेन उपमानभूतपात्रप्रवेशसूचनादवलगितत्वप्रसङ्ग इति चेन्न श्लेषादिसत्त्वे प्रवर्त्तकं तदसत्त्वे तु अवलगितमिति ग्रन्थकारेर्णाभिप्रेतत्वात्। तथा च वृत्तावेव पूर्वमुक्तम्—"मुखं श्लेषादिना प्रस्तुतवृत्तान्तप्रतिपादको वाग्विशेषः। यथा—आसादिते"त्यादि।

(र) योज्यानीति। अत्र आमुखे प्रस्तावनायां यथालाभं यथासम्भवम् इतराण्यपि उद्‌घात्यकावलगितभिन्नान्यपि वीथ्या वक्ष्यमाणरूपकविशेषस्य अङ्गानि वक्ष्यमाणानि प्रपञ्चादीनि योज्यानि कविना रचनीयानि। यथालाभमित्यनेन तेषामवश्यकर्त्तव्यत्वाभावः सूचितः।

(ल) अत्रेति। वीथीनामकरूपकलक्षणप्रकरणे उद्‌घात्यकावलगितयोरपि तदङ्गत्वेन वक्ष्यमाणत्वादुक्तम्—"उद्‌घात्यकावलगितयोरितराणि" इति।

(व) नेपथ्योक्तमिति। तत्र तेषु तु नाटकादिषु रूपकेषु, केनचित् नेपथ्यादुक्तं वाक्यं श्रुतं सूत्रधारेण आकर्णितं समाश्रित्य विधाय, तथा आकाशवचनम् आकाशभाषितं श्रुतं समाश्रित्य विधाय वा आमुखं प्रस्तावना कर्त्तव्यम्। सूत्रधृक् सूत्रधारः, एषाम् उद्‌घात्यकादीनाम् आमुखभेदानां प्रस्तावनाविशेषाणां यं कञ्चिदेकं भेदं प्रयोजयेत् कुर्य्यात्। तेन आमुखप्रयोगेण अर्थं वृत्तान्तम् अथवा पात्रं समाक्षिप्यैव सूचयित्वैव प्रस्तावनाया अन्ते रङ्गाङ्गणात् निर्गच्छेत्, ततः परं वस्तु इतिवृत्तं प्रयोजयेत् अभिनेतुमारभेत।

---

(१) वीथ्यङ्गानि इति क्वचित् पाठः। इतरावपि सर्थ व पाठः क्वचित्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अधिकारः फले स्वाम्यमधिकारी च तत्प्रभुः।
तस्येतिवृत्तं कविभिराधिकारिकमुच्यते॥ (अ)

फले प्रधानफले। यथा—बालरामायणे रामचरितम्।

२५। अस्योपकरणार्थन्तु प्रासङ्गिकमितीष्यते। (ष)

अस्याधिकारिकेतिवृत्तस्य उपकरणनिमित्तं यच्चरितं तत् प्रासङ्गिकम्। यथा—सुग्रीवादिचरितम् (स)।

२६। पताकास्थानकं योज्यं सुविचार्य्येह वस्तुनि॥ (ह)

इह नाट्ये।

२७। यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते।
आगन्तुकेन भावेन पताकास्थानकन्तु तत्॥ (च)

तद्भेदानाह—

२८। सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः।
पताकास्थानकमिदं प्रथमं परिकीर्त्तितम्॥ (क)

---

(अ) इदमिति। बुधैः इदं नखकुट्टकारिकोक्तं वस्तु इतिवृत्तं द्विविधं परिकल्प्यते। तयोरेकम् आधिकारिकम् अथ अपरं द्वितीयन्तु प्रासङ्गिकं स्यात्। फले प्रधानफले स्वाम्यं प्रधानफलभोक्तृत्वम् अधिकारः, तत्प्रभुश्च तस्य प्रधानफलस्य भोक्ता च अधिकारी; कविभिः तस्य अधिकारिणः इतिवृत्तं वृत्तान्त आधिकारिकम् उच्यते; अधिकारिणा संसृष्टमिति व्युत्पत्तेः।

(ष) अस्येति। अस्य तु आधिकारिकेतिवृत्तस्य उपकरणार्थं परिपुष्टिनिमित्तं यच्चरितं तत्प्रासङ्गिकम् इति कविभिरिष्यते।

(स) अस्येति। उपकरणनिमित्तं परिपुष्ट्यर्थम्। यथेति। सुग्रीवादिचरितस्य रामचरितपुष्टि-निमित्तत्वात् प्रासङ्गिकत्वमिति भावः।

(ह) पताकेति। सुविचार्य्य कविना सम्यग् विविच्य इह नाट्ये वस्तुनि पदार्थे पताकास्थानकं योज्यं निबद्धव्यं विरचयितव्यमित्यर्थः।

(च) किं नाम पताकास्थानमित्याह यत्रेति। यत्र स्थाने, अन्यस्मिन् अर्थे विषये चिन्तिते प्राकरणिकत्वेन ज्ञायमाने सति, आगन्तुकेन भविष्यता अतर्कितेनेत्यर्थः भावेन प्रकारेण, तल्लिङ्गस्तत्स्वरूपः अन्योऽर्थः प्रयुज्यते उपस्थाप्यते, तत्तु पताकास्थानकम्। पताकावत् नाट्यस्य सुख्यातिजनकत्वात् तादृशमन्योऽपि पताकेत्युच्यते।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा रत्नावल्याम्—"वासवदत्तेयम्" इति राजा यदा तत्कण्ठपाशं मोचयति, तदा तदुक्त्या "सागरिकेयम्" इति प्रत्यभिज्ञाय—"कथं प्रिया मे सागरिका ? । अलमलमतिमात्रम्" (१) इत्यादि (ख)। अत्र फलरूपार्थ-सम्पत्तिः पूर्वापेक्षया उपचारातिशयाद्गुणवती उत्कृष्टा (ग)।

२९। वचः सातिशयश्लिष्टं नानाबन्धसमाश्रयम्।
पताकास्थानकमिदं द्वितीयं परिकीर्त्तितम्॥ (घ)

यथा वेण्यां सूत्रः—

"रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः॥" (ङ)

अत्र रक्तादीनां रुधिरशरीरार्थहेतुकश्लेषवशेन बीजार्थप्रतिपादनात् नेतृ-मङ्गलप्रतिपत्तौ सत्यां द्वितीयं पताकास्थानम् (च)।

---

(क) सहसेति। यत्र सहसैव अतर्कितभावेनैव उपचारतः परमप्रीतिकरणात् गुणवती उत्कृष्टा अर्थसम्पत्तिः फलप्राप्तिः स्यात्; तदिदं प्रथमं पताकास्थानकं परिकीर्त्तितम्। पताकास्थानकमिति सर्वत्रैव संज्ञायां कप्रत्ययः।

(ख) यथेति। तस्याः सागरिकायाः उक्त्या वाक्येन वाक्यस्वरसंविज्ञानेनेत्यर्थः।

(ग) उदाहृते लक्षणसमन्वयच्छलेन तदर्थं विवृणोति अत्रेति। फलरूपस्य चिरोद्देश्यभूतस्य अर्थस्य सागरिकास्वरूपस्य सम्पत्तिः प्राप्तिः, पूर्वापेक्षया वासवदत्ताप्राप्त्यपेक्षया उपचारातिशयात् प्रीत्यतिरेकजननात्। अत्र वासवदत्तारूपे अर्थे चिन्तिते आगन्तुकेन साक्षात्काररूपेण भावेन सागरिकारूपार्थप्रयोगात् सामान्य-पताकालक्षणसङ्गतिः।

(घ) वच इति। सातिशयश्लिष्टम् अनेकार्थबोधकबहुतरशब्दोपेतम्, नानाबन्धसमाश्रयम् अनेक-विशेषणसम्बन्धविशिष्टम्, वचो वाक्यम्, इदं द्वितीयं पताकास्थानकं परिकीर्त्तितम्।

(ङ) रक्तेति। पूर्वमुद्धृतमस्य पूर्वार्द्धं पताकाघटकत्वाभावादत्र पुनर्नोद्धृतम्। रक्तेन अनुरागेण प्रसाधिता आयत्तीकृता भूः पृथिवी यैस्ते, अन्यत्र तु रक्तैः गात्ररुधिरैः प्रसाधिता अलङ्कृता भूः पृथिवी यैस्ते, क्षतः सन्धिकरणाद्विलुप्तः विग्रहो युद्धं येषां ते, अन्यत्र तु क्षताः शस्त्रादिना विदीर्णाः विग्रहा देहा येषां ते, सभृत्याः कुरुराजसुता दुर्योधनादयः, स्वस्थाः सन्धिकरणात् सुस्थचित्ताः, अन्यत्र तु युद्धे मरणात् स्वर्गस्था भवन्तु।

---

(१) "अलमलमतिमात्रं साहसेनामुना ते त्वरितमयि विमुञ्च त्वं लतापाशमेतम्।
चलितमपि निरोद्धुं जीवितं जीवितेशे क्षणमिह मम कण्ठे बाहुपाशं निधेहि॥"
क्वचिदिति श्लोकसमुदायपाठ एव दृश्यते।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

३०। अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत्।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥ (छ)

लीनमव्यक्तार्थम्, श्लिष्टेन सम्बन्धयोग्येनाभिप्रायान्तरप्रयुक्तेन प्रत्युत्तरेणोपेतम्, सविनयं विशेषनिश्चयप्राप्त्या सहितं सम्पद्यते यत् तत् तृतीयं पताकास्थानम् (ज)। यथा वेण्यां द्वितीयेऽङ्के—

"कञ्चुकी—देव! भग्नं भग्नम्। राजा—केन?। कञ्चु—भीमेन। राजा—कस्य?। कञ्चु—भवतः। राजा—आः! किं प्रलपसि?। कञ्चु—(सभयम्) देव! ननु ब्रवीमि भग्नं भीमेन भवतः। राजा—धिक्! वृद्धापसद! कोऽयमद्य ते व्यामोहः। कञ्चु—देव! न व्यामोहः, सत्यमेव (झ)।

भग्नं भीमेन भवतो मरुता रथकेतनम्।
पातितं किङ्किणीजालबद्धाक्रन्दमिव क्षितौ॥" (ञ)

अत्र दुर्योधनोरुभङ्गरूपप्रस्तुतसंक्रान्तमर्थोपक्षेपणम् (ट)

(च) अत्रेति। रक्तादीनां शब्दानामित्यर्थः। रुधिरशरीररूपौ अर्थौ सन्दंशपातन्यायात् तन्मध्यवर्त्तिनौ अलङ्कृतविदीर्णरूपौ चार्थौ ग्राह्यौ हेतू यस्य तादृशस्य श्लेषस्य वशेन तद्द्वारेत्यर्थः, बीजार्थस्य भीमसेनक्रोधोपचितयुधिष्ठिरोत्साहस्य प्रतिपादनात् सूचनात्, नेतुर्युधिष्ठिरस्य मङ्गलप्रतिपत्तौ तदुत्साहजन्यशत्रुविनाशानन्तरराज्यलाभरूपशुभज्ञाने। तथा च प्रतिनायकस्य दुर्योधनस्य पृथिवीवशीकरणादिमङ्गलरूपे अर्थे चिन्तिते आगन्तुकेन भीमसेनक्रोधरूपभावेन युद्धं प्रति युधिष्ठिरोत्साहस्य प्रयुक्ततया सामान्यपताकालक्षणस्यापि सङ्गतिः।

(छ) अर्थोपेति। यत्तु स्थानम्, अर्थस्य प्रधानविषयविशेषस्य उपक्षेपकं सूचकं लीनम् अस्पष्टार्थम्, सविनयं सनिश्चयम्, श्लिष्टेन उपयुक्तेन प्रत्युत्तरेण उपेतञ्च भवेत्; इदं तत् तृतीयं पताकास्थानम् उच्यते।

(ज) व्याचष्टे लीनमिति। अव्यक्तः अस्पष्टः अर्थौ वक्तुरभिप्रेतविषयो यत्र तत्। सम्बन्धयोग्येन प्रस्तुताप्रस्तुतयोरुभयोरेवान्वयसमर्थेन, अभिप्रायान्तरप्रयुक्तेन वक्त्रा प्रस्तुतान्वयाभिप्रायेणैव उक्तेन। विशेषनिश्चयप्राप्त्या परस्य एकतरनिश्चयसम्बन्धेन। तथा च विनयशब्दोऽत्र निश्चयपर इति भावः।

(झ) कञ्चुकीति। भीमेन भयानकेन भीमसेनेन च। उत्तरवाक्येवम्। नन्वित्यवधारणे। वृद्धापसद! वृद्धाधम!। व्यामोहो विभ्रम उपस्थित इति शेषः।

(ञ) भग्नमिति। भीमेन भयानकेन मरुता वायुना भग्नं भवतो रथस्य केतनं ध्वजः किङ्किणीजालेन क्षुद्रघण्टिकासमूहशब्देन बद्धो विहित आक्रन्दः क्रन्दनध्वनिर्येन तत्तथोक्तमिव सत् क्षितौ भूमौ पातितम्। यथा समरे एकेन वीरेणाहत्य अपरो वीरः क्रन्दन् भूमौ पात्यते तथेति भावः।

(ट) अत्रेति। दुर्योधनोरुभङ्गरूपः अप्रस्तुतविषयः प्रस्तुते रथकेतुभङ्गरूपविषये संक्रान्तः पर्यवसितो

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**३१ । द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।**
**प्रधानार्थान्तराक्षेपी (१) पताकास्थानकं परम् ॥ (ठ)**

यथा रत्नावल्याम्—

"उद्दामोत्कलिकां विपाण्डुररुचिं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥" (ड)

अत्र भाव्यर्थः सूचितः (ढ) ।

---

यस्मिन् तत् तादृशम् अर्थस्य उपक्षेपणं सूचनम् । रथकेतुभङ्गरूपप्रस्तुतविषये दुर्य्योधनोरुभङ्गरूपाप्रस्तुत-विषयस्य सूचनं कृतमित्यर्थः । तथा च रथकेतुभङ्गरूपे अर्थे चिन्तिते आगन्तुकेन गदायुद्धभावेन दुर्य्योधनोरु-भङ्गरूपार्थस्य प्रयुक्ततया अस्य पताकास्थानत्वम् । तथा भग्नमित्यादिगद्यभागे विशेष्यानभिधानादर्थस्य अव्यक्तत्वम्, पद्यभागे च मरुतेत्यनेन एकतरार्थनिश्चयः, भीमेनेत्यादेः प्रत्युत्तरभागस्य च वायुभीमसेनयोः सम्बन्धात् प्रस्तुत-रथकेतुभङ्गे अप्रस्तुतदुर्य्योधनोरुभङ्गे च सम्बन्धयोग्यत्वमित्यनुसन्धेयम् ।

(ठ) द्व्यर्थ इति । द्वावर्थौ यस्य स द्व्यर्थः, सुश्लिष्ट उभयपक्षेऽपि सुसम्बद्धः, काव्ययोजितः काव्यग्रन्थे निवेशितः न पुनरुद्भटरूप इत्यर्थः, तथा प्रधानार्थान्तराक्षेपी अपरप्रधानार्थसूचकः, वचनविन्यासः काव्यग्रन्थे विन्यस्तं वाक्यम्, परं चतुर्थं पताकास्थानकं भवेत् ।

(ड) उद्दामेति । अहम्, उद्दाममत्यन्तम् उद्गताः कलिकाः कोरका यस्यास्ताम्, पक्षान्तरे तु उद्दामा सातिशया उत्कलिका उत्कण्ठा यस्यास्ताम् । विपाण्डुररुचिम् एकत्र पुष्पविकासात् अन्यत्र विरहात् पाण्डुवर्णाम् । प्रारब्धा जृम्भा विकासो गात्रभङ्गश्च यया ताम् । तथा अविरलैर्निरन्तरैः श्वसनोद्गमैर्वाता-गमनैः निश्वासोद्गमैश्च क्षणात् आत्मन आयासं सञ्चलनक्रान्तिं कामवेदनाञ्च आतन्वतीं प्रकटयन्तीम्, अन्यां समदनां सकामां नारीमिव, समदनां मदनवृक्षसंश्लिष्टाम्, इमाम् उद्यानलतां पश्यन् दर्शनेन विलम्बं कुर्वन् अवलोकयंश्च देव्या वासवदत्ताया मुखं ध्रुवं निश्चितम्, कोपेन मद्विलम्बजनितरोषेण इतरनायिकादर्शनजनित-रोषेण च विपाटला रक्तवर्णा द्युतिर्यस्य तत्तादृशं करिष्यामि ।

(ढ) अत्रेति । भाव्यर्थो भविष्यद्विषयः उद्दामोत्कलिकादिविशेषणविशिष्टां सागरिकां प्रति तत्परि-ग्रहानन्तरमेवमेव राज्ञः साग्रहदृष्टिपातेन वासवदत्तामुखस्य कोपपाटलीकरणरूपो भावी विषयः पूर्वमेव द्योतित इत्यर्थः । एवमत्र लतादर्शनजनितविलम्बेन वासवदत्तामुखस्य कोपपाटलीकरणरूपार्थे चिन्तिते आगन्तुकेन सागरिकापरिग्रहभावेन तां प्रति भाविकाले सकामदृष्टिपातादपि वासवदत्तामुखस्य कोपपाटली-करणरूपार्थः प्रयुक्त इति पताकायाः सामान्यलक्षणसङ्गतिः । तथा उद्दामोत्कलिकामित्यादिविशेषणानां सुश्लिष्टत्वादिना द्व्यर्थ इत्यादेर्विशेषलक्षणस्यापि सङ्गतिरनुसन्धेया ।

---

(१) प्रधानार्थान्तरापेक्षी इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एतानि चत्वारि पताकास्थानकानि क्वचिन्मङ्गलार्थं क्वचिदमङ्गलार्थमपि सर्वसन्धिषु भवन्ति। काव्यकर्त्तुरिच्छावशाद्भूयोऽपि भवन्ति (ण)। यत् पुनः केनचिदुक्तम्—"मुखसन्धिमारभ्य सन्धिचतुष्टये क्रमेण भवन्ति" इति। तदन्ये न मन्यन्ते, एषामत्यन्तमुपादेयानामनियमेन सर्वत्रापि सर्वेषामपि भवितुं युक्तत्वात् (त)।

३२। यत् स्यादनुचितं वस्तु नायकस्य रसस्य वा।
विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत्॥ (थ)

अनुचितमितिवृत्तम्। यथा रामस्य छद्मना बालिवधः। तच्च उदात्तराघवे नोक्तमेव, वीरचरिते च बाली रामवधार्थमागतो रामेण हत इत्यन्यथा कृतः।

३३। अङ्केष्वदर्शनीया या वक्तव्यैव च सम्मता।
या च स्याद्वर्षपर्य्यन्तं कथा दिनद्वयादिजा॥
अन्या च विस्तरा सूच्या सार्थोपक्षेपकैर्बुधैः। (द)

---

न चात्र "वचः सातिशयश्लिष्टम्" इत्यादिपताकाद्वितीयलक्षणमतिव्याप्तमिति वाच्यम्, "प्रधानार्थान्तराक्षेपी" इत्यनेन प्रधानार्थविशेषसूचने चतुर्थं पताकास्थानकम्, अप्रधानार्थसूचने तु द्वितीयमिति ग्रन्थकर्त्तुराभिप्रेतत्वात्। तथा च उद्देश्यतया फलभूतार्थः प्रधानः, तस्य हेतुभूतार्थस्तु अनुद्देश्यतया अप्रधानः; तेन "रक्तप्रसाधितभुवः क्षतविग्रहाश्च" इत्यादौ राज्यलाभरूपफलं प्रति हेतुत्वादप्रधानस्य भीमसेनक्रोधोपचितयुधिष्ठिरोत्साहस्य सूचनात् द्वितीयपताकास्थानत्वम्; अत्र तु उद्देश्यत्वेन प्रधानस्यैव सागरिकापरिग्रहस्य सूचनाच्चतुर्थपताकास्थानत्वमिति सर्वं सुस्थितम्।

(ण) एतानीति। मङ्गलार्थममङ्गलार्थञ्चैतद्द्वयमपि नायकस्यैवेति बोध्यम्। तत्र मङ्गलार्थान्युदाहृतानि चत्वारि। अमङ्गलार्थं यथोत्तररामचरिते रामः—"···यदि परमसह्यस्तु विरहः।" प्रविश्य प्रतिहारी—"देव! उवत्थिदो।" इति। अत्र विशेषस्त्वस्माभिरुत्तररामचरितटीकायामुक्तो द्रष्टव्यः। भूयोऽपि पुनरपि चतुर्भ्योऽधिकमपीत्यर्थः।

(त) यदिति। उपादेयानामुत्कृष्टत्वेन ग्राह्याणाम्। सर्वत्रापि सर्वेषु सन्धिष्वपि।

(थ) यदिति। यत् वस्तु इतिवृत्तं नायकस्य रसस्य वा अनुचितं विपरीतस्वभावप्रकाशत्वेन असङ्गतं विरुद्धं वा स्यात्; तदितिवृत्तं कविना परित्याज्यम्, अन्यथा वा पुराणादिविरुद्धमपि नायकस्य रसस्य वा सम्बन्धे उपयुक्तं वा कविः प्रकल्पयेत्। नायकोत्कर्षप्रदर्शनस्य रसपुष्टिकरणस्य च कवेर्मुख्योद्देश्यत्वादिति भावः।

(द) अङ्केष्विति। या दूराह्वानवधादिप्रकाशिका कथा वृत्तान्तः अङ्केषु अदर्शनीया "दूराह्वानं

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अङ्केष्वदर्शनीया कथा युद्धादिकथा ।

**३४ । वर्षादूर्द्ध्वन्तु यद्वस्तु तत् स्याद्वर्षादधोभवम् ॥ (ध)**

उक्तं हि मुनिना—"अङ्कच्छेदे कार्य्यं मासकृतं वर्षसञ्चितं वापि ।
तत् सर्वं कर्त्तव्यं वर्षादूर्द्ध्वं न तु कदाचित् ॥" (न)

एवञ्च चतुर्द्दशवर्षव्यापिन्यपि रामवनवासे ये ये विराधवधादयः कथांशाः, ते ते वर्ष-वर्षावयव-दिन-युग्मादीनामेकतमेन सूचनीया न विरुद्धाः (प) ।

**३५ । दिनावसाने कार्य्यं यद्दिनेनैवोपपद्यते ।**
**अर्थोपक्षेपकैर्वाच्यमङ्कच्छेदं विधाय तत् ॥ (फ)**

---

वधो युद्धम्" इत्यादिना निषिद्धत्वेन कविना अरचनीया, अथ च वक्तव्यैव सम्मता अन्यथा पूर्वापरवृत्तान्तसंलग्नत्वाभावेन अवश्यवक्तव्यत्वेनाभिमता, या च कथा दिनद्वयादिना वर्षपर्य्यन्तं व्याप्ता द्वित्रिदिनावध्येकद्विप्रभृतिवत्सरपर्य्यन्तनिष्पन्नेत्यर्थः, अन्या विस्तरा च एकमात्रदिननिष्पन्नापि अतिविस्तृता च या कथा, सा तत्सर्वा अर्थोपक्षेपकैर्वक्ष्यमाणविष्कम्भकादिभिर्बुधैः कविभिः सूच्या प्रकाश्या ; "नानेकदिननिर्वर्त्त्यकथया सम्प्रयोजितः" "नातिविस्तरः" इति पूर्वोक्ताभ्यामङ्कमध्ये तन्निर्म्माणनिषेधादिति भावः ।

(ध) अथ वत्सराधिककालनिष्पन्नतया पुराणेतिहासादिषु प्रसिद्धानां वृत्तान्तानामर्थोपक्षेपकैरपि किं तावत्कालनिष्पाद्यत्वेनैव वर्णनीयम् ? आहोस्विदन्यरूपेणेत्याह वर्षादिति । यत् वस्तु वृत्तान्तः वर्षादूर्द्ध्वं वत्सराधिककालनिष्पन्नतया पुराणादिषु प्रसिद्धम्, तत् अर्थोपक्षेपकेष्वपि वर्षादधोभवं वत्सरन्यूनकालनिष्पाद्यतया वर्णनीयं स्यात् । एवञ्च सति वाञ्छितः संक्षेपः सूपपद्यत इति भावः ।

(न) अङ्केति । मासकृतम् एकमासादिना निष्पन्नम्, वर्षसञ्चितं संवत्सरपर्य्यन्तकालनिष्पन्नं वापि इतिवृत्तम्, अङ्कस्य च्छेदे समाप्तौ अर्थोपक्षेपके इत्यर्थः कार्य्यं कविना रचयितव्यम् । तु किन्तु कदाचिदङ्कच्छेदेऽपि तत्सर्वं मासकृतं वर्षसञ्चितं वा इतिवृत्तम्, वर्षादूर्द्ध्वं न कर्त्तव्यं वत्सराधिककालनिष्पन्नतया कविना न रचयितव्यम् ।

(प) एवञ्चेति । अधिककालव्यापितया पुराणादिषु, प्रसिद्धानामपि वृत्तान्तानां स्वल्पकालनिष्पन्नतया वर्णनस्य महर्षिभरतादिसम्मतत्वेनेत्यर्थः । वर्षं वत्सरः, वर्षावयवो मासः, दिनयुग्मं दिवसद्वयम्, आदिशब्दात् एकदिनादिकञ्च, तेषामेकतमेन यथासम्भवेन कविना सूचनीयाः ; किन्तु तथात्वेन मिथ्यात्वेऽपि न विरुद्धा नाटकादौ न दोषावहाः ; ख्यातवृत्तमूलस्यापि नाटकादेर्जनमनोरञ्जनस्यैव मुख्योद्देश्यत्वात् नीरसांशानां संक्षेपवर्णनेनैव जनमनोरञ्जनसम्भवादिति भावः ।

(फ) दिनेति । यत् कार्य्यम् इतिवृत्तम्, दिनेनैव उपपद्यते एकेनापि समग्रेणैव, दिनेन निष्पन्नतया पुराणादिषु वर्ण्यते ; तदपि कार्य्यम्, अङ्कस्य च्छेदं समाप्तिं विधाय दिनस्य अवसाने शेषभागे निष्पन्नतया अर्थोपक्षेपकैर्वाच्यं कविना वक्तव्यम् । एवञ्च सति नीरसः संक्षेपः सूपपद्यत इति भावः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

के ते अर्थोपक्षेपका इत्याकाङ्क्षायामाह—

३६ । अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ ।
चूलिकाङ्कावतारोऽथ स्यादङ्कमुखमित्यपि ॥ (व)

३७ । वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः ।
शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः ॥ (भ)

तत्र शुद्धो यथा—मालतीमाधवे श्मशाने कपालकुण्डला। सङ्कीर्णो यथा—रामाभिनन्दे क्षपणककापालिकौ (म)।

अथ प्रवेशकः ।

३८ । प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥ (य)

---

(व) अर्थोपेति । अर्थान् सरसवृत्तान्तान् उपक्षिपन्ति उपस्थापयन्तीति अर्थोपक्षेपकाः । ते च पञ्च पञ्चप्रकाराः । यथा—विष्कम्भकः, प्रवेशकः, चूलिका, अङ्कावतारः, अङ्कमुखञ्च ।

(भ) वृत्तेति । वृत्ता अतीताः वर्त्तिष्यमाणा भाविनश्च तेषाम्, कथांशानां वृत्तान्तभागानाम्, निदर्शकः प्रकाशकः, संक्षिप्तार्थः अङ्कापेक्षया स्वल्पप्रसारः, अङ्कस्य आदौ प्रथमे दर्शितः प्रयोजितो रूपकांशविशेषो विष्कम्भः स्यात् । विष्कम्भाति मध्यमभागपूरणेन पूर्वापराङ्कगतवृत्तान्तमुपपादयतीति विष्कम्भः । स्कन्भधातोः कर्त्तरि ण्वुण्प्रत्ययात् विष्कम्भकः, अच्प्रत्ययाच्च विष्कम्भ इति नार्थवैषम्यम् । तत्र "आदावङ्कस्य दर्शितः" इत्यनेन प्रथमाङ्केऽप्यस्य सम्भव इति सूचितम् ।

स च द्विविधः—शुद्धो मिश्रश्चेति । तत्र मध्येन शिक्षागौरवादिना वृत्तान्ते अप्रधानतया वा मध्यमश्रेणीभुक्तेन एकेन पात्रेण तादृशाभ्यां मध्यमाभ्यां द्वाभ्यां पात्राभ्यां वाशब्दान्मध्यमैर्बहुभिः पात्रैर्वा सम्प्रयोजितो विष्कम्भकः शुद्धः स्यात् । नीचं शिक्षागौरवाद्यभावेन अधमम् उक्तप्रकारञ्च मध्यमं ताभ्यामुभाभ्यामेव पात्राभ्यां कल्पितः प्रयोजितः स विष्कम्भकः सङ्कीर्णो मिश्रः स्यात् । एकजातीयपात्रप्रयोजितत्वेन शुद्धत्वं नीचमध्यमतया विभिन्नजातीयपात्रप्रयोजितत्वेन च मिश्रत्वमित्यवधेयम् ।

(म) तत्रेति । कपालकुण्डला कपालकुण्डलारूपपात्रप्रयोजित इत्यर्थः । परत्राप्येवम् ।

(य) प्रवेशक इति । अङ्कद्वयस्य अन्तर्मध्ये, अनुदात्तोक्त्या संस्कृतेतरभाषया, नीचपात्रेति सामान्यश्रवणादेकेन नीचपात्रेण द्वाभ्यां नीचपात्राभ्यां बहुभिर्नीचपात्रैर्वा प्रयोजितो रूपकांशविशेषः प्रवेशको विज्ञेयः ।


CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अङ्कद्वयस्यान्तरिति प्रथमाङ्केऽस्य प्रतिषेधः । यथा—वेण्यामश्वत्थामाङ्के राक्षसमिथुनम् (र) ।

अथ चूलिका ।

३९ । अन्तर्जवनिकासंस्थैः सूचनाऽर्थस्य चूलिका । (ल)

यथा वीरचरिते चतुर्थाङ्कस्यादौ—"(नेपथ्ये) भो भो वैमानिकाः ! प्रवर्त्त्यन्तां रङ्गमङ्गलानि" इत्यादि, "रामेण परशुरामो जितः" इति नेपथ्ये पात्रैः सूचितम् (व) ।

अथ अङ्कावतारः ।

४० । अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः ।
यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ॥ (श)

यथा—अभिज्ञाने पञ्चमाङ्के पात्रैः सूचितः । षष्ठाङ्कस्तदङ्कस्याङ्गविशेष इवावतीर्णः (ष) ।

---

शेषमवशिष्टं विष्कम्भके यथा विष्कम्भकवद्विज्ञेयम् । तथा च वृत्तवर्त्तिष्यमाणकथांशनिदर्शकत्वं संक्षिप्तार्थत्वञ्च तद्द्वयमत्राप्यावश्यकमित्यर्थः । प्रवेशयति परवर्त्तिपात्रप्रवेशं सूचयतीति प्रवेशकः ।

(र) अङ्केति । अस्य प्रवेशकस्य । प्रथमाङ्कात् पूर्वमङ्कान्तराभावेन अङ्कद्वयमध्यवर्त्तित्वासम्भवादिति भावः । वेण्यां वेणीसंहारनाटके, अश्वत्थामाङ्के अश्वत्थामप्रधानतृतीयाङ्के ।

(ल) अन्तरिति । अन्तर्जवनिकासंस्थैस्तिरस्करिण्या अन्तराले स्थितैः पात्रैः, अर्थस्य वृत्तान्तविशेषस्य सूचना चूलिका स्यात् । अत्र अन्तर्जवनिकासंस्थैरिति बहुवचनादेतत्सूचकानां सम्भाव्यमानानां सर्वेषामेव पात्राणां जवनिकान्तरालस्थितत्वं विवक्षितम्; तेन शाकुन्तलचतुर्थाङ्कविष्कम्भके जवनिकान्तरालस्थितेन दुर्वाससा शापसूचनेऽपि अनसूयाप्रियंवदाभ्यां बहिःस्थिताभ्यामेवार्थसूचनान्न चूलिकालक्षणातिव्याप्तिः । वृत्तान्तविशेषस्य शीर्षे स्थितत्वादियं चूलिका चूडास्वरूपा ।

(व) यथेति । वैमानिका विमानचारिणः । रङ्गमङ्गलानि अभिनयादिमहोत्सवाः ।

(श) अङ्केति । अङ्कान्ते यस्य कस्यचिदङ्कस्य अवसाने पात्रैः यत्रेत्यव्ययं य इत्यर्थः अङ्कः सूचितः प्रयोजितः, तस्य अङ्कस्य अविभागतः अविभक्तत्वेन अङ्गभावेनेत्यर्थः अङ्कः अङ्कान्तरम् अवतरति आविर्भवति, एष स अङ्कावतार इति स्मृतः । एतद्व्याख्यानमेव वृत्त्युदाहरणानुसारीति व्याख्यानान्तरं हेयम् । अङ्गभावेन अङ्कः अङ्कान्तरम् अवतरत्यस्मिन्नित्यङ्कावतारः । अस्य च संक्षिप्तार्थत्वनियमो नास्तीति बोध्यम् ।

(ष) यथेति । अभिज्ञाने अभिज्ञानशकुन्तलनाटके, पञ्चमाङ्के पञ्चमाङ्कान्ते । तदङ्कस्य अङ्कावतारत्वेन विवक्षितस्य प्रसिद्धस्य वा अङ्गविशेष इवेति । तद्वृत्तान्तोपजीवित्वादिति भावः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ अङ्कमुखम्।

४१। यत्र स्यादङ्क एकस्मिन्नङ्कानां सूचनाऽखिला।
तदङ्कमुखमित्याहुर्बीजार्थख्यापकञ्च तत्॥ (ख)

यथा—मालतीमाधवे प्रथमाङ्कादौ कामन्दक्यवलोकिते भूरिवसुप्रभृतीनां भाविभूमिकानां परिच्छिन्नकथाप्रबन्धस्य च प्रसङ्गात् सन्निवेशं सूचितवत्यौ (ङ)।

४२। अङ्कान्तपात्रैर्वाङ्कास्यं छिन्नाङ्कस्यार्थसूचनात्। (च)

अङ्कान्तपात्रैरङ्कान्ते प्रविष्टैः पात्रैः। यथा—वीरचरिते द्वितीयाङ्कान्ते—"(प्रविश्य) सुमन्त्रः। भगवन्तौ वशिष्ठविश्वामित्रौ भवतः सभार्गवानाह्वयतः। इतरे—क्व भगवन्तौ ?। सुमन्त्रः—महाराजदशरथस्यान्तिके। इतरे—तत्तत्रैव गच्छामः।" इत्यङ्कपरिसमाप्तौ "ततः प्रविशन्त्युपविष्टा वशिष्ठविश्वामित्रपरशुरामाः" इत्यत्र पूर्वाङ्कान्त एव प्रविष्टेन सुमन्त्रपात्रेण शतानन्दजनककथाविच्छेदे उत्तराङ्कमुखसूचनादङ्कास्यमिति।

एतच्च ध्वनिकमतानुसारेणोक्तम्। अन्ये तु "अङ्कावतारेणैवेदं गतार्थम्" इत्याहुः (क)।

---

(ख) यत्रेति। यत्र, एकस्मिन्नङ्के अङ्कानाम् अखिला सूचना अखिलानामङ्कानां सूचना स्यादित्यर्थः, आलङ्कारिकास्तत् 'अङ्कमुखम्' इत्याहुः; तच्च बीजार्थस्य वक्ष्यमाणार्थप्रकृतिविशेषस्य ख्यापकं सूचकं भवेत्। सर्वेषामङ्कानां विषयसूचनद्वारा मुखं तेषामाद्यमित्यङ्कमुखम्।

(ङ) यथेति। प्रथमाङ्कस्य आदौ पूर्वम्। भाविन्यो भूमिकास्तत्तद्वेशरचना येषां तेषाम्। परिच्छिन्नकथाप्रबन्धस्य समस्ताङ्कसंक्षिप्तवृत्तान्तसमूहस्य। मालतीमाधवपुस्तकविशेषे तु तस्य विष्कम्भकाख्या दृश्यते।

(च) लक्ष्यविशेषख्यापनार्थं ध्वनिकमतेनाङ्कमुखलक्षणमाह अङ्कान्तेति। अङ्कान्तपात्रैरङ्कान्ते प्रविष्टैः पात्रविशेषैः, छिन्नस्य विभक्तस्य परवर्त्तिनः अङ्कस्य अर्थसूचनात् विषयप्रकाशाद्वा अङ्कास्यम् अङ्कमुखं भवेत्। एतन्मतेऽपि भाविनोऽङ्कस्य अर्थसूचनद्वारा मुखमाद्यमित्यङ्कमुखमिति व्युत्पत्तिः।

(क) अन्ये त्विति। अङ्कावतारेणैव अङ्कावतारलक्षणेनैव, इदम् उदाहृतवीरचरितस्थानम्, गतार्थं प्राप्तविषयम्। तथा चाङ्कावतारलक्षणख्यापनादिदमङ्कावतार एवेति न पुनरेतदर्थमङ्कमुखलक्षणान्तरमावश्यकमिति तेषामाशयः। दर्पणकारमते तु विभिन्नप्रकारमङ्कमुखमेवेदम्, ध्वनिकसम्मतलक्षणोल्लेखात्तदनिराकरणञ्चेत्यवधेयम्।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

४३। अपेक्षितं परित्यज्य नीरसं वस्तु विस्तरम्॥
यदा सन्दर्शयेच्छेषमामुखानन्तरं तदा।
कार्य्यो विष्कम्भको नाट्ये आमुखाक्षिप्तपात्रकः॥ (ख)

यथा—रत्नावल्यां यौगन्धरायणप्रयोजितः।

४४। यदा तु सरसं वस्तु मूलादेव प्रवर्त्तते।
आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः॥ (ग)

यथा—शाकुन्तले।

४५। विष्कम्भकाद्यैरपि नो वधो वाच्योऽधिकारिणः।
अन्योन्येन तिरोधानं न कुर्य्याद्रसवस्तुनोः॥ (घ)

रसः शृङ्गारादिः। यदुक्तं ध्वनिकेन—

"न चाति रसतो वस्तु दूरं विच्छिन्नतां नयेत्।
रसं वा न तिरोदध्यात् वस्त्वलङ्कारलक्षणैः॥" (ङ)

---

(ख) अपेक्षितमिति। यदा अपेक्षितम् एकवृत्तान्तगतत्वेनावश्यमाकाङ्क्षितम्, नीरसम् उद्देश्यरसविहीनम्, विस्तरं वस्तु दीर्घं तद्वृत्तान्तभागम्, परित्यज्य कविः शेषः सरसं तद्वृत्तान्तावशिष्टांशम्, सन्दर्शयेत् सन्दर्शयितुमिच्छेत् रचयितुमिच्छेदित्यर्थः, तदा तेन कविना आमुखानन्तरं प्रस्तावनारचनायाः परम् आमुखेन तथा प्रस्तावनया आक्षिप्तम् आनीतं सूचितं पात्रं यस्य स तादृशो विष्कम्भकः नाट्ये स्वरचयितव्यरूपके कार्य्यो रचयितव्यः। विष्कम्भक इति प्रवेशकादेरप्युपलक्षणम्।

(ग) यदेति। यदा तु मूलादेव प्रथमावध्येव सरसं वस्तु वृत्तान्तः प्रवर्त्तते, तदा आमुखेन प्रस्तावनया य आक्षेपः पात्रप्रवेशसूचनं तं संश्रयति अवलम्बत इति स तादृशः अङ्कः आदावेव कविना रचयितव्यः स्यात्। न तत्र प्रथमं विष्कम्भकरचनाप्रयोजनमित्याशयः।

(घ) विष्कम्भकेति। विष्कम्भकाद्यैरपि अधिकारिणः प्रधानफलभागिनो नायकादेर्वधो न वाच्यः कविना न वक्तव्यः। अपिशब्दादङ्केस्तु न वाच्य एवेति सूचितम्। उभयत्रापि रसविच्छेदहेतुत्वादिति भावः। तथा अन्योन्येन परस्परद्वारा रसवस्तुनोः उद्देश्यरसवृत्तान्तयोः तिरोधानं व्यवधानं कविर्न कुर्य्यात्। तथा च रसमनुद्दीप्य केवलं वृत्तान्तं न वर्णयेत् न वा वृत्तान्तमवर्णयित्वा एकविषय एव केवलं रसमुद्दीपयेत्, अपि तु रससंश्लिष्टमेव क्रमिकं वृत्तान्तं वर्णयेदिति सरलार्थः।

(ङ) न चेति। वस्तु वृत्तान्तम्, रसतो रससम्पर्कात् अतिदूरं विच्छिन्नतां व्यवहितत्वं न च नैव नयेत् कविः प्रापयेत्। अतिशब्दात् प्रयोजनविशेषवशेन तु किञ्चिद्दूरं नेतुमर्हतीति भावः। वस्त्वलङ्कारलक्षणैर्वृत्तान्तवैचित्र्यवर्णनालङ्कारसन्निवेशनैर्वा रसं न तिरोदध्यान्न तदास्वादप्रतिबन्धं जनयेदित्यर्थः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

४६। वीजं विन्दुः पताका च प्रकरी कार्य्यमेव च।
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ॥ (च)

अर्थप्रकृतयः प्रयोजनसिद्धिहेतवः।

तत्र वीजम्।

४७। अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति।
फलस्य प्रथमो हेतुर्वीजं तदभिधीयते ॥ (छ)

यथा—रत्नावल्यां वत्सराजस्य रत्नावलीप्राप्तिहेतुर्दैवानुकूल्यलालितो यौगन्धरायणव्यापारः। यथा वा वेण्यां द्रौपदीकेशसंयमनहेतुर्भीमसेनक्रोधोपचितो युधिष्ठिरोत्साहः (ज)।

४८। अवान्तरार्थविच्छेदे विन्दुरच्छेदकारणम्। (झ)

यथा—रत्नावल्यामनङ्गपूजापरिसमाप्तौ कथार्थविच्छेदे सति "उदयनस्येन्दोरिवोद्वीच्चते" इति सागरिका श्रुत्वा "(सहर्षम्) कधं एसो सो उदअणणरिंदो" इत्यादिरवान्तरार्थहेतुः (ञ)।

---

(च) "नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम्" इति प्रागुद्दिष्टसन्धिनिरूपणाय तद्घटकार्थप्रकृतीराह—वीजमिति। प्रक्रियते प्रयोजनं साध्यते आभिरिति प्रकृतयः कारणानि। तथा च वीजम्, विन्दुः, पताका, प्रकरी, कार्य्यञ्च—एताः पञ्च अर्थस्य मूलप्रयोजनस्य प्रकृतयः सिद्धिहेतवः ज्ञात्वा यथाविधि आलङ्कारिकाणां विधानमनतिक्रम्य योज्याः कविना दृश्यकाव्ये सन्निवेश्याः।

(छ) अल्पेति। यत् अल्पमात्रं समुद्दिष्टं प्रथममङ्कुरितत्वमात्रेण प्रदर्शितं सत् बहुधा विसर्पति क्रमिकसहकारिकारणसम्पर्केण नानाविधावान्तरकार्य्यसाधनपुरःसरं क्रमशो विस्तारं गच्छति, तथा फलस्य नायकमुख्योद्देश्यस्य प्रथमो हेतुः प्रधानं कारणम्, तत् वीजम् अभिधीयते।

(ज) यथेति। रत्नावलीप्राप्तिः फलं तस्य हेतुः। दैवानुकूल्येन लालितः सम्पादितः। द्रौपद्याः केशसंयमनं फलं तस्य हेतुः। भीमसेनस्य क्रोधेन उपचितः उत्पादितः।

(झ) अवेति। अवान्तरार्थस्य समग्रवृत्तान्तैकभागस्य विच्छेदे समाप्तत्वेन विरामे प्राप्ते अच्छेदकारणं परवर्त्तिवृत्तान्तभागाकाङ्क्षोत्पादनेन अविरामहेतुर्यः स विन्दुः।

(ञ) यथेति। कथार्थस्य तद्वृत्तान्तभागस्य विच्छेदे समाप्तत्वेन विरामे प्राप्ते सति।

"अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवौ आस्थानीं समये समं नृपजने सायन्तनः सम्पतन्।
सम्प्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥"

इति श्लोकसमुदायः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

४९ । व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ॥ (ट)

यथा—रामचरिते सुग्रीवादेः, वेख्यां भीमादेः, शाकुन्तले विदूषकस्य चरितम् ।

५० । पताका नायकस्य स्यान्न स्वकीयफलान्तरम् ।
गर्भे सन्धौ विमर्षे वा निर्वाहस्तस्य जायते ॥ (ठ)

यथा—सुग्रीवादे राज्यप्राप्त्यादिः (ड) । यत्तु मुनिनोक्तम्—

"आगर्भादाविमर्षाद्वा पताका विनिवर्त्तते ।" इति (ढ) ।

तत्र—"पताकेति । पताका नायकफलम्, निर्वहणपर्य्यन्तमपि पताकायाः प्रवृत्तिदर्शनात्" इति व्याख्यातमभिनवगुप्तपादैः (ण) ।

---

"कथमेष स उदयननरेन्द्रः" इति संस्कृतानुवादः । अवान्तरार्थस्य तन्नाटिकागतवृत्तान्तभागान्तरस्य हेतुः, वत्सराजं प्रति सागरिकाया अनुरागज्ञापनेन तद्वृत्तान्तभागान्तराकाङ्क्षोत्पादनादिति भावः ।

(ट) व्यापीति । व्यापि उपसंहारपर्य्यन्तस्थायि, प्रासङ्गिकं प्रसङ्गत उपस्थितम्, वृत्तं वृत्तान्तः पताका इत्यभिधीयते ।

(ठ) उक्तपताकाया निर्वहणसन्धिपर्य्यन्तमपि व्यापित्वं प्रतिपादयितुमाह पताकेति । यस्य वृत्तान्तः पताकेत्युच्यते स पताकानायकः सुग्रीवभीमसेनादिः । तथा च व्यापीत्याद्युक्तप्रकारा पताका, नायकस्य तत्पताकानायकस्य सुग्रीवभीमसेनादेः, स्वकीयफलान्तरं निजप्रयोजनविशेषरूपं न स्यात्, अपि तु प्रकृतग्रन्थनायकस्य रामयुधिष्ठिरादेः फलसाधिका स्यादित्यर्थः । एवञ्च तस्याः प्रासङ्गिकत्वमपि सङ्गच्छत इति भावः । ननु कथं स्वकीयफलान्तरं न स्यादित्याह गर्भं इति । येन हि गर्भे विमर्षे वा सन्धौ तस्य पताकानायकस्वकीयफलस्य निर्वाहः समाप्तिर्जायते । तथा च निर्वहणपर्य्यन्तस्थायिनः प्रकृतनायकफलस्य साधकत्वात् पताकयापि निर्वहणपर्य्यन्तं स्थातव्यमेव ; तेन तस्याः स्वनायकफलविशेषरूपत्वे तत्फलस्य गर्भसन्धौ विमर्षसन्धौ वा सर्ववादिसिद्धा समाप्तिर्नोपपद्यत इत्याशयः । एतेनोक्तप्रकारपताकाया निर्वहणपर्य्यन्तमपि व्यापित्वं प्रतिपादितमिति द्रष्टव्यम् ।

(ड) पताकानायकस्वकीयफलस्य प्रकृतनायकचरितमध्यभागात्मके गर्भसन्धौ विमर्षसन्धौ वा समाप्तत्वं दर्शयितुमाह यथेति । तथा च पताकानायकस्य सुग्रीवस्य वालिराज्यप्राप्तिरूपं स्वकीयफलं रामचरितमध्यभाग एव समाप्तम्, अथ च तस्यैव सुग्रीवस्य चरितं रामचरितफलभूतसीतोद्धारपर्य्यन्तमपि तिष्ठतीति सुग्रीवचरितं रामचरिते पताकेति भावः ।

(ढ) ननु पताकाया निर्वहणपर्य्यन्तस्थायित्वे महर्षिभरतोक्तं तस्या गर्भविमर्षसन्धिमध्य एव समाप्यत्वं कथमुपपद्यत इत्याह यत्त्विति । मुनिना नाट्याचार्य्येण भरतेन । गर्भात् आ गर्भसन्धिसमाप्तेः पूर्वं विमर्षात् आ विमर्षसन्धिसमाप्तेः पूर्वं वा पताका विनिवर्त्तते समाप्तिं गच्छति । एतेन ग्रन्थकृन्मतस्य महर्षिमतेन सह विरोधो द्रष्टव्यः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

५१ । प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता । (त)

यथा—कुलपत्यङ्के रावणस्य जटायुसंवादः ।

५२ । प्रकरी नायकस्य स्यान्न स्वकीयं फलान्तरम् ॥ (थ)

५३ । अपेक्षितन्तु यत्साध्यमारम्भो यन्निबन्धनः ।
समापनन्तु यत्सिद्ध्यै तत् कार्य्यमिति सम्मतम् ॥ (द)

यथा—रामचरिते रावणवधः ।

५४ । अवस्थाः पञ्च कार्य्यस्य प्रारब्धस्य फलार्थिभिः ।
आरम्भ-यत्न-प्राप्त्याशा-नियताप्ति-फलागमाः ॥ (ध)

तत्र—

५५ । भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये । (न)

यथा रत्नावल्याम्—रत्नावल्यन्तःपुरनिवेशार्थं यौगन्धरायणस्यौत्सुक्यम् । एवं नायकनायिकादीनामप्यौत्सुक्यमाकरेषु बोद्धव्यम् ।

---

(ण) उक्तकारिकार्द्धस्य अभिनवगुप्तपादव्याख्यानमुदाहृत्यैव तद्विरोधं परिहरति तत्रेति । तत्र मुन्युक्तं, पताकेति पताकापदम्, पताकानायकफलं पताकानायकस्य सुग्रीवादेः स्वकीयराज्यप्राप्त्यादिरूपफलपरम् ; निर्वहणपर्य्यन्तमपि उपसंहारसन्धिपर्य्यन्तमपि पताकायाः प्रवृत्तेः स्थायित्वस्य दर्शनात् । एतेनाभिनवगुप्तपादमतेऽपि पताकाया उपसंहारपर्य्यन्तमपि स्थायित्वमिति दर्शितम् ।

(त) प्रासङ्गिकमिति । प्रासङ्गिकं नायकचरिते प्रसङ्गत उपस्थितम्, प्रदेशस्थं एकदेशमात्रे स्थितं चरितं वृत्तान्तः प्रकरी मता । प्रासङ्गिकवृत्तान्तस्य बहुदेशवृत्तित्वे पताकात्वम् एकदेशवृत्तित्वे तु प्रकरीत्वमिति भेदः । प्रकरीति नायकचरितस्य प्रकर्षं जनयतीति प्रकरी अर्थप्रकृतिः ।

(थ) प्रकरीति । प्रकरी, नायकस्य तत्प्रकरीनायकस्य जटायुप्रभृतेः स्वकीयं फलान्तरं निजप्रयोजनविशेषरूपं न स्यात् ; अपि तु तत्तदंशे नायकफलसाधिकैव स्यादिति पूर्ववदेवार्थः ।

(द) अपेक्षितमिति । यत् अपेक्षितं कर्त्तुमाकाङ्क्षितम्, यत् साध्यं स्वशक्त्या शक्यम्, यन्निबन्धनो यदुद्देश्यकः, आरम्भः प्रथमप्रवृत्तिः, यस्य च सिद्ध्यै समापनम् उपायसंग्रहः, तत्कार्य्यम् इति सम्मतम् ।

(ध) अवस्था इति । आरम्भः, यत्नः, प्राप्त्याशा, नियताप्तिः, फलागमः—एताः पञ्च फलार्थिभिरुद्देश्यसिद्धिलिप्सुभिः प्रारब्धस्य कार्य्यस्य अवस्थाः सम्भवन्ति ।

(न) भवेदिति । मुख्यफलस्य नायकप्रधानोद्देश्यस्य सिद्धये यत् औत्सुक्यं नायकादेर्यस्य कस्यापि पात्रस्य प्रबलेच्छा स आरम्भो भवेत् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**५६। प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः॥ (प)**

यथा रत्नावल्याम्—"तह वि ण अत्थि अण्णो दंसणोवाओत्ति जधा तधा आलिहिअ जधा समीहिदं करइस्सं।" इत्यादिना प्रतिपादितो रत्नावल्याश्चित्रलेखनादिर्वत्सराजसङ्गमोपायः। यथा च रामचरिते समुद्रबन्धनादिः (फ)।

**५७। उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः। (ब)**

यथा—रत्नावल्यां तृतीयेऽङ्के वेशपरिवर्त्तनाभिसरणादेः सङ्गमोपायाद्वासवदत्तालक्षणापायशङ्कया च अनिर्द्धारितैकान्तसङ्गमरूपफलप्राप्तिप्रत्याशा (१)। एवमन्यत्र (भ)।

**५८। अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता॥ (म)**

अपायाभावान्निर्द्धारितैकान्तफलप्राप्तिर्नियताप्तिः। यथा रत्नावल्यां राजा—"देवीप्रसादनं त्यक्त्वा नान्यमत्रोपायं पश्यामि" इति देवीलक्षणापायस्य प्रसादनेन निवारणान्नियतफलप्राप्तिः सूचिता (य)।

**५९। सावस्था फलयोगः स्याद्यः समग्रफलोदयः। (र)**

(प) प्रयत्न इति। फलावाप्तौ नायकस्य नायिकाया वा मुख्यफललाभविषये अतित्वरान्वितो व्यापारः पावमावस्य आग्रहः प्रयत्नो भवेत्। तुशब्द आरम्भभेदद्योतनार्थः।

(फ) यथेति। "तथापि नास्ति अन्यो दर्शनोपाय इति यथा तथा आलिख्य यथासमीहितं करिष्यामि।" इति संस्कृतानुवादः। आलिख्य वत्सराजप्रतिकृतिं चित्रयित्वा। यथासमीहितं प्राक् चिन्तितानुरूपम्। चित्रलेखनादिर्वत्सराजप्रतिकृतिचित्रणादिः।

(ब) उपायेति। उपायः फलसिद्धेः कारणसद्भावश्च अपायशङ्का तत्फलसिद्धेर्विघ्नाशङ्का च ताभ्याम्, प्राप्तिसम्भवः फलसिद्धेः पाक्षिकी सम्भावना प्राप्त्याशा भवेत्।

(भ) यथेति। वासवदत्तालक्षणापायशङ्कया वासवदत्तास्वरूपप्रतिबन्धकाशङ्कया। अनिर्द्धारिता अनिश्चिता संशयिता या एकान्ते रहसि वत्सराजसङ्गमरूपफलस्य प्राप्तिस्तस्याः प्रत्याशा। अन्यत्राप्येवमूह्यमित्यर्थः। यथा मम वङ्गीयप्रतापनाटके स्वबलोपचयात् दिल्लीशप्रतिबन्धकत्वाच्च संशयिता राजत्वप्राप्तिप्रत्याशा।

(म) अपायेति। अपायस्य विघ्नस्य अभावतो विलुप्तत्वात् निश्चिता प्राप्तिर्निर्द्धारिता फलप्राप्तिस्तु नियताप्तिर्भवेत्।

(य) यथेति। इति अनया उक्त्या। देवीलक्षणापायस्य वासवदत्तारूपविघ्नस्य।

---

(१) फलप्राप्तिः प्रत्याशा इति क्वचित् पाठः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा रत्नावल्याम्—रत्नावलीलाभश्चक्रवर्त्तित्वलक्षणफलान्तरलाभसहितः। एवमन्यत्र (ल)।

६०। यथासंख्यमवस्थाभिराभिर्योगात्तु पञ्चभिः॥
पञ्चधैवेतिवृत्तस्य भागाः स्युः पञ्च सन्धयः। (व)

तल्लक्षणमाह—

६१। अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति॥ (श)

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसम्बन्धः सन्धिः (ष)।

तद्भेदानाह—

६२। मुखं प्रतिमुखं गर्भो विमर्ष उपसंहृतिः।
इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते॥ (स)

यथोद्देशं लक्षणमाह—(ह)

---

(र) सेति। यः समग्राणां सर्वेषां फलानाम् उदय उत्पत्तिः, सा फलयोगः फलागमो नाम अवस्था स्यात्।

(ल) यथेति। चक्रवर्त्तित्वलक्षणं साम्राज्यरूपं यत् फलान्तरं तस्य लाभेन सहितः। अन्यत्राप्येव-मूह्यमित्यर्थः। यथा—शाकुन्तले सर्वदमनाख्यपुत्रलाभसहितः शकुन्तलालाभः।

(व) यथेति। आभिः पूर्वोक्ताभिः पञ्चभिरवस्थाभिर्यथासंख्यं योगात् इतिवृत्तस्य रूपकीयवृत्तान्तस्य पञ्चधैव पञ्चविधा एव भागा अंशाः पञ्च सन्धयः स्युः।

(श) अन्तरैकेति। एकस्य मुख्यप्रयोजनस्य अन्वये घटकत्वसम्बन्धे सति, अन्तरैकार्थसम्बन्धः अवान्तरैकप्रयोजनसत्तासम्बन्धः सन्धिः। यथा—मालतीमाधवे प्रथमाङ्कादृद्वितीयाङ्कसमाप्तिं यावदेको मुखनामा सन्धिः। तत्र हि मालतीमाधवयोर्विवाहरूपमुख्यप्रयोजनं प्रति तयोः परस्परानुराग एव घटक इति मुख्य-प्रयोजनघटकत्वसम्बन्धसद्भावः, तदुभयानुरागरूपैकावान्तरप्रयोजनसत्तासम्बन्धसद्भावश्चेत्यनुसन्धेयम्। अत्र अन्तरैकार्थसम्बन्धः सन्धिरित्येतावन्मात्रोक्तौ मूलवृत्तान्तसूचनरूपावान्तरैकप्रयोजनसत्तासम्बन्धात् सर्वत्र प्रस्तावनाया-मतिव्याप्तिः स्यादत उक्तम्—"एकान्वये सति" इति।

(ष) एकेनेति। एकेन प्रयोजनेन मुख्यफलवृत्तान्तेन, अन्वितानां घटकत्वसम्बन्धेन सम्बद्धानाम्, कथांशानां वृत्तान्तभागानाम्, अवान्तरैकप्रयोजनसम्बन्धः रूपकीययत्किञ्चिदेकप्रयोजनसत्तासम्बन्धः।

(स) मुखमिति। अस्य सन्धेः। पञ्च भेदाः प्रकाराः।

(ह) यथेति। नामकीर्त्तनमुद्देशः, तमनतिक्रम्येति यथोद्देशम्, "मुखं प्रतिमुखं गर्भः" इत्यादि-नामकीर्त्तनक्रमेणेत्यर्थः।

CC-0. Prof. Satya Vrat Shastri Collection... Siddhartha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

६३ । यत्र वीजसमुत्पत्तिर्नानार्थरससम्भवा ।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम् ॥ (घ)

यथा—रत्नावल्यां प्रथमेऽङ्के ।

६४ । फलप्रधानोपायस्य मुखसन्धिनिवेशिनः ।
लच्यालच्य इवोद्भेदो यत्र प्रतिमुखञ्च तत् ॥ (क)

यथा—रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागमहेतोरनुरागवीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसङ्गताविदूषकाभ्यां ज्ञायमानतया किञ्चिल्लच्यस्य वासवदत्तया चित्रफलकवृत्तान्तेन किञ्चिदुन्नीयमानस्योद्देशरूप उद्भेदः (ख) ।

६५ । फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन ।
गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान् मुहुः ॥ (ग)

फलस्य गर्भीकरणाद्गर्भः । यथा—रत्नावल्यां द्वितीयेऽङ्के "सुसङ्गता—"सहि ! अदक्खिणा दाणिं सि तुमं, जा एवं भट्टिणा हत्थेण गहिदावि कोवं ण मुञ्चसि" इत्यादौ समुद्भेदः । पुनर्वासवदत्ताप्रवेशे ह्रासः । तृतीयेऽङ्के "तद्वार्त्तान्वेषणाय गतः कथं चिरयति वसन्तकः" इत्यन्वेषणम् ।

---

(घ) यत्रेति । यत्र सन्धौ, नाना बहुविधैः अर्थैर्वृत्तान्तैः रसैः शृङ्गारादिभिश्च सम्भवः सम्बन्धो यस्याः सा, तथा प्रारम्भेण प्रागुक्तलक्षणया आरम्भनामावस्थया समायुक्ता, वीजस्य प्रागुक्तलक्षणस्य समुत्पत्तिर्भवति, तत् मुखं मुखसन्धिः परिकीर्त्तितम् ।

(क) फलेति । यत्र सन्धौ, मुखसन्धौ निविशते उत्पत्त्या प्रवर्त्तत इति तस्य, फलस्य मुख्यप्रयोजनस्य यः प्रधानोपायो मुख्यहेतुस्तस्य, लच्यालच्य ईषद्विज्ञेय इव उद्भेदः प्रकाशो भवति ; तत् प्रतिमुखं प्रतिमुखनामा सन्धिः ।

(ख) यथेति । वत्सराजसागरिकयोः समागमः सङ्गमरूपं मुख्यप्रयोजनं तस्य हेतोः प्रधानोपायभूतस्य, अनुरागस्तयोः परस्परासक्तिरेव वीजं तस्य, प्रथमाङ्के उपक्षिप्तस्य कविना उपन्यस्तस्य । उन्नीयमानस्य अनुमीयमानस्य । उद्देशरूपः प्रकाशस्वरूपः ।

(ग) फलेति । प्राक् पूर्वसन्धिद्वये किञ्चन उद्भिन्नस्य किञ्चित्प्रकाशं प्राप्तस्य, फलप्रधानोपायस्य मुख्यप्रयोजनं प्रति प्रधानसाधनस्य, यत्र सन्धौ, मुहुः पुनः पुनः ह्रासान्वेषणवान् क्षीणभावानुसन्धानवान् समुद्भेदः प्रकाशो भवति ह्रासः अन्वेषणं प्रकाशश्च भवतीत्यर्थः ; स गर्भो गर्भनामा सन्धिः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"विदू—ही ही भो! कोसम्बीरज्जलम्भेण वि ण तादिसो पिअवअस्सस्स परितोसो, जादिसो मम सआसादो पिअवअणं सुणिअ भविस्सदि" इत्यादौ उद्भेदः। पुनरपि वासवदत्ताप्रत्यभिज्ञानात् त्रासः। सागरिकायाः सङ्केतस्थानागमने अन्वेषणम्। पुनर्लतापाशकरणे उद्भेदः (घ)।

अथ विमर्षः।

६६। यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः।
शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृतः॥ (ङ)

यथा—शाकुन्तले चतुर्थाङ्कादौ "अनसूया—पिअंवदे! जइ वि गान्धव्वेण विवाहेण णिव्वुत्तकल्लाणा पिअसही सउन्तला, तह वि अणुरूवभत्तिभाइणी संवुत्तेत्ति णिव्वुदं मे हिअअं, तह वि एत्तिअं चिन्तणिज्जं" इत्यत आरभ्य सप्तमाङ्कोपक्षिप्तात् शकुन्तलाप्रत्यभिज्ञानात् प्रागर्थसञ्चयः शकुन्तलाविस्मरणरूपविघ्नालिङ्गितः (च)

६७। वीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्।
एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत्॥ (छ)

(घ) गर्भशब्दस्यान्वर्थमाह फलस्येति। फलस्य मुख्यप्रयोजनस्य गर्भीकरणादभ्यन्तरीकरणात्। "सखि! अदक्षिणा इदानीमसि त्वम्, या एवं भर्त्रा हस्तेन गृहीतापि कोपं न मुञ्चसि।" इति संस्कृतानुवादः। समुद्भेदः प्रकाशः अनुरागस्येति शेषः। "ही ही भोः! कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य परितोषः, यादृशो मम सकाशात् प्रियवचनं श्रुत्वा भविष्यति।" इति संस्कृतानुवादः।

(ङ) यत्रेति। यत्र सन्धौ मुख्यफलस्य प्रधानप्रयोजनस्य उपायो हेतुः, गर्भतो गर्भसन्ध्यपेक्षया अधिक उद्भिन्नः प्रकाशितो भवति, अथ च शापाद्यैः आद्यशब्दाद्विपक्षकृतबाधादिभिश्च सान्तरायो व्याहन्यमानो भवति; स विमर्षो विमर्षनामा सन्धिरिति स्मृतः, विमृश्यते पात्रैः कर्त्तव्यं विविच्यते अस्मिन्निति व्युत्पत्तेः।

(च) यथेति। "प्रियंवदे! यद्यपि गान्धर्वेण विवाहेन निर्वृत्तकल्याणा प्रियसखी शकुन्तला, तथापि अनुरूपभर्तृभागिनी संवृत्तेति निर्वृतं मे हृदयम्, तथापि एतावच्चिन्तनीयम्।" इति संस्कृतानुवादः। सप्तमाङ्के उपक्षिप्तात् कविना उपन्यस्तात्। अर्थसञ्चयो व्यापारसमूहः शकुन्तलाविस्मरणरूपेण विघ्नेन आलिङ्गितः संसृष्टः।

(छ) वीजेति। यथायथं यथानियमं विप्रकीर्णाः कविना यथास्थानमुपनिबद्धाः, वीजवन्तः प्रागुक्तलक्षणवीजार्थशालिनः, मुखादीनां चतुर्णां सन्धीनामर्था विषयाः, यत्र सन्धौ, एकार्थं केवलमुख्यफलनिमित्तम् उपनीयन्ते केवलमुख्यप्रयोजनसाधनोपकरणभावं कविनैव प्राप्यन्ते, तत् हि निर्वहणम् उपसंहारसन्धिः निर्वहति मुख्यफलं सम्पद्यते अस्मिन्निति व्युत्पत्तेः। निर्वहणम् उपसंहार उपसंहृतिरिति च नार्थान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा वेण्याम्—"कञ्चुकी—(उपसृत्य सहर्षम्) महाराज! वर्द्धसे। अयं खलु भीमसेनो दुर्य्योधनक्षतजारुणीकृतसर्वशरीरो दुर्लक्ष्यव्यक्तिः" इत्यादिना द्रौपदीकेशसंयमनादिमुखसन्ध्यादिबीजानां निजनिजस्थानोपक्षिप्तानामेकार्थयोजनम् (ज)।

यथा वा शाकुन्तले सप्तमाङ्के शकुन्तलाभिज्ञानादुत्तरोऽर्थराशिः (झ)।

एषामङ्गान्याह—(ञ)

९८। उपक्षेपः परिकरः परिन्यासो विलोभनम्।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना॥
उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे। (ट)

यथोद्देशं लक्षणमाह—

९९। काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः॥ (ठ)

काव्यार्थ इतिवृत्तलक्षणप्रस्तुताभिधेयः (ड)। यथा वेण्यां भीमः—

"लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।

---

(ज) यथेति। दुर्य्योधनस्य क्षतजेन ऊरुभङ्गादिजातरुधिरेण अरुणीकृतं सर्वं शरीरं यस्य सः, अतएव दुर्लक्ष्यव्यक्तिः सोऽयं भीमसेन इति दुष्परिचेयस्वभावः। द्रौपद्याः केशसंयमनादीनां केशबन्धन-शत्रु-निपात-राज्यलाभानां मुखसन्ध्यादिषु यानि बीजानि भीमसेनक्रोधोपचितयुधिष्ठिराद्युत्साहरूपाणि तेषां निजनिजस्थानेषु उपक्षिप्तानां कविना उपनिबद्धानाम्, एकस्य मुख्यफलस्य द्रौपदीकेशसंयमनादेरर्थे निमित्ते योजनम् उपकरणभावेन संश्लेषणम्।

(झ) प्रकारान्तरेणोदाहरणमाह यथा वेति। अर्थराशिर्विषयसमूहः।

(ञ) एषामिति। मुखादीनां पञ्चानामेव सन्धीनामित्यर्थः।

(ट) उपेति। वै शब्दः पादपूरणे। मुखे मुखसन्धौ। एतानि द्वादशेत्यर्थः।

(ठ) काव्येति। काव्यार्थस्य तत्तद्दृश्यकाव्यप्रतिपाद्यवृत्तान्तस्य, समुत्पत्तिः संक्षेपेण प्रथमोपस्थितिः, उपक्षेप इति नाम्ना स्मृतः; उपक्षेपणं कविना प्रथममुपस्थापनमित्युपक्षेप इति व्युत्पत्तेः।

(ड) काव्यार्थस्येत्यर्थशब्दस्य अभिधेयार्थपरतामभिप्रेत्य व्याचष्टे काव्यार्थ इति। इतिवृत्तलक्षणो वृत्तान्तस्वरूपश्चासौ प्रस्तुताभिधेयः प्रकृतप्रतिपाद्यश्चेति सः।

(ढ) लाक्षेति। धार्त्तराष्ट्रा दुर्य्योधनादयो धृतराष्ट्रपुत्राः, लाक्षागृहानलो जतुगृहेऽग्निसंयोजनम्, विषान्नं विषमयखाद्यप्रदानम्, सभाप्रवेशो द्यूतसभायामुपस्थापनं तैः, प्राणेषु जीवनविषयेषु वित्तनिचयेषु

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आक्रष्य पाण्डववधू परिधानकेशान्
सुस्था (१) भवन्ति मयि जीवति धार्त्तराष्ट्राः ? ॥" (ढ)

७० । समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः । (ण)

यथा तत्रैव—

"प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्य्यो हेतुर्न भवति किरीटी न च युवाम् ।
जरासन्धस्योरःस्थलमिव विरूढ़ं पुनरपि
क्रुधा भीमः सन्धिं विघटयति यूयं घटयत ॥" (त)

७१ । तन्निष्पत्तिः परिन्यासः—(थ)

यथा तत्रैव—

स्थावरास्थावरसमस्तप्रकारधनसमूहेषु च नः अस्मान् प्रहृत्य जतुगृहदाह-विषमयान्नदानाभ्यां प्राणनाशचेष्टां विधाय द्यूतक्रीड़या सर्वप्रकारधनान्यपहृत्य चेत्यर्थः, तथा पाण्डववध्वा द्रौपद्याः परिधानकेशान् वसनकुन्तलान् आक्रष्य च, मयि भीमसेने जीवति सति, सुस्था भवन्ति भविष्यन्तीति भविष्यत्सामीप्ये वर्त्तमाना अपि तु कथमपि नेत्यर्थः ।

अत्र वेणीसंहारनाटकीययुद्धवृत्तान्तरूपकाव्यार्थस्य प्रथमोपस्थितेरुपक्षेपः ।

(ण) समुत्पन्नेति । समुत्पन्नस्य अर्थस्य तत्तद्दृश्यकाव्यवृत्तान्तस्य बाहुल्यं पूर्वापेक्षया अतिरेकेणोपस्थितिः पुनः परिकरो नाम अङ्गं ज्ञेयः; परिकरणं बाहुल्येन काव्यार्थस्योपस्थापनं परिकर इति व्युत्पत्तेः ।

(त) प्रवृद्धमिति । शिशोरेव मम कुरुभिर्दुर्य्योधनादिभिः सह यत् खलु वैरं अवृता प्रवृद्धं क्रमशः प्रकर्षेण वृद्धिमापन्नम्, तत्र वैरे आर्य्यो युधिष्ठिरो हेतुर्न भवति न भूत इत्यर्थः, किरीटी अर्जुनोऽपि हेतुर्न भवति, युवां नकुलसहदेवावपि हेतू न भवथ इति शेषः । किन्तु तत्र अहमेव हेतुरिति सन्धिना मम शान्तिर्न स्यादिति भावः । अतएव भीमः क्रुधा क्रोधेन, विरूढ़ं जरायाश्चेष्टया संयुक्तं जरासन्धस्य मगधराजस्य उरःस्थलं वक्षोदेशमिव, विरूढ़ं कृष्णादीनां चेष्टया समुत्पन्नं सन्धिं पुनरपि विघटयति विश्लेषयति; यूयं समर्थाश्चेत् घटयत संयोजयत उपपादयत च । जरासन्धस्य जन्मनिधनवृत्तान्तो महाभारते सभापर्वणि अनुसन्धेयः ।

अत्र पूर्वोत्पन्नस्य युद्धवृत्तान्तरूपकाव्यार्थस्य सन्धिविघटनादतिरेकेणोपस्थितिः परिकरः ।

(थ) तदिति । तस्य काव्यार्थस्य निष्पत्तिर्निश्चयेन मनस्युपस्थितिः परिन्यासः निश्चयापत्तिरूपतया परितो हृदये न्यसनमिति व्युत्पत्तेः ।

---

(१) स्वस्था भवन्ति इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"चञ्चद्भुजभ्रमितचण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि ! भीमः ॥" (द)

अत्र उपक्षेपो नाम इतिवृत्तलक्षणस्य काव्याभिधेयस्य संक्षेपेणोपक्षेपणमात्रम् । परिकरस्तस्यैव बहुलीकरणम् । परिन्यासस्ततोऽपि निश्चयापत्तिरूपतया परितो हृदये न्यसनमित्येषां भेदः (ध) ।

एतानि चाङ्गानि उक्तेनैव पौर्वापर्य्येण भवन्ति । अङ्गान्तराणि त्वन्यथापि (न) ।

७२ । **गुणाख्यानं विलोभनम् ॥ (प)**

यथा तत्रैव—"द्रौपदी—णाध ! किं दुक्करं तुए कुविदेण ।"

यथा वा मम चन्द्रकलायां चन्द्रकलावर्णने—"सेयम्, तारुण्यस्य विलासः" इत्यादि (१३४ पृष्ठे) (फ) ।

---

(द) चञ्चदिति । हे देवि ! महिषि ! द्रौपदि ! भीमः, चञ्चता सञ्चलता भुजेन भ्रमिता घूर्णिता चण्डा कराला या गदा तस्या अभिघातेन आघातेन सञ्चूर्णितम् ऊरुयुगलं यस्य तस्य तथोक्तस्य सुयोधनस्य दुर्य्योधनस्य, स्त्यानेन बहुलीभूतेन अवनद्धेन संलग्नेन घनेन गाढेन शोणितेन रुधिरेण शोणौ रक्तवर्णौ पाणी करौ यस्य स तादृशः सन्, तव कचान् दुःशासनाकर्षणावधिस्खलितान् कुन्तलान् उत्तंसयिष्यति भूषयिष्यति । तादृशपाणिना बन्धनेन तच्छोणितसंक्रमादिति भावः ।

अत्र दुर्य्योधनोरुभङ्गात्मकयुद्धवृत्तान्तरूपकाव्यार्थस्य निश्चयेनोपस्थितेः परिन्यासः ।

(ध) ननु उक्तानां त्रयाणामेवाङ्गानां क्रमिककाव्यार्थोपस्थितिमात्ररूपतया ऐक्यापत्तिरित्याह अत्रेति । इतिवृत्तलक्षणस्य वृत्तान्तस्वरूपस्य, काव्याभिधेयस्य तत्तद्दृश्यकाव्यप्रतिपाद्यस्य । उपक्षेपणमात्रम् उपस्थापनमात्रम् । मात्रपदेन बहुलीकरणपरिन्यासनयोर्व्यवच्छेदः । निश्चयापत्तिरूपतया निश्चयेनोपस्थितिरूपत्वेन । न्यसनमुपस्थापनम् । तथा च एकस्या अपि काव्यार्थोपस्थितेरवस्थाभेदादेवामीषामङ्गानां भेद इति भावः ।

(न) एतानीति । एतानि उपक्षेपादीनि त्रीणि । प्रथममुपक्षेपः परं परिकरः अनन्तरञ्च परिन्यास इति क्रमेणैव सम्भवन्तीत्यर्थः ; एकस्या एव काव्यार्थोपस्थितेरवस्थामात्रभेदेनैवामीषां भेदात् तादृशावस्थायाश्चोक्तक्रमावश्यम्भावादित्याशयः । अङ्गान्तराणि वक्ष्यमाणविलोभनादीनि तु अन्यथापि वक्ष्यमाणक्रमेतरक्रमेणापि, अपिशब्दात् वक्ष्यमाणक्रमेणापि भवन्तीत्यर्थः ; तेषां परस्परभिन्नलक्षणत्वेन परस्परनिरपेक्षत्वादित्यभिप्रायः ।

(प) गुणेति । गुणानां पात्रविशेषगतशौर्य्यसौन्दर्य्यादीनाम् आख्यानमुक्तिः विलोभनं नामाङ्गम् ; विशेषेण कर्त्तव्यं लोभजननं विलोभनमिति तु [illegible] ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यत्तु शाकुन्तलादिषु "ग्रीवाभङ्गाभिरामम्" इत्यादि मृगादिगुणवर्णनम्, तद्बीजार्थसम्बन्धाभावान्न सन्ध्यङ्गम् । एवमङ्गान्तराणामप्यूह्यम् (ब) ।

७३ । सम्प्रधारणमर्थानां युक्तिः—(भ)

यथा—वेण्यां सहदेवो भीमं प्रति—"आर्य्य ! किं महाराजसन्देशः अव्युत्पन्न एवार्य्येण गृहीतः" इत्यतः प्रभृति यावद्भीमवचनम् (म) ।

"युष्मान् ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः ।
न लज्जयति दाराणां सभायां केशकर्षणम् ॥" इति (य) ।

७४ । प्राप्तिः सुखागमः । (र)

यथा तत्रैव—"मथ्नामि कौरवशतं समरे न कोपात्" इत्यादि श्रुत्वा "द्रौपदी—(सहर्षम्) णाध ! अस्सुदपूव्वं क्खु एदं वअणं ता पुणो पुणो भण ।" (ल) ।

७५ । बीजस्यागमनं यत्तु तत् समाधानमुच्यते ॥ (व)

---

(फ) यथेति । "नाथ ! किं दुष्करं त्वया कुपितेन ।" इति संस्कृतानुवादः । अत्र भीमस्य शौर्य्य-प्रशंसया दुर्य्योधनादिनिधने क्षोभजननाद्विक्षोभनम् । तारुण्यस्येत्यादौ च नायिकायामात्मनो क्षोभप्रतिपादना-द्विलोभनम् ।

(ब) यत्त्विति । बीजार्थसम्बन्धाभावात् शकुन्तलां प्रति दुष्मन्तानुरागरूपबीजार्थसम्पर्काभावात् । एवं बीजार्थसम्बन्धाभावे सन्ध्यङ्गत्वराहित्यम् ।

(भ) सम्प्रेति । अर्थानां कर्त्तव्यविषयाणां सम्प्रधारणम् अवधारणं युक्तिर्नामाङ्गम् ; सिद्धान्तबुद्ध्या योगो युक्तिरिति व्युत्पत्तेः ।

(म) यथेति । महाराजस्य युधिष्ठिरस्य सन्देशो मयि विन्यस्तं वाचिकम् अव्युत्पन्न एव सदसत्तया अविचारित एव, आर्य्येण भवता ।

(य) युष्मानिति । क्रोधात् शत्रुकुलस्य क्षयो विनाशः लोके लोकसमाजे युष्मान् ह्रेपयति लज्जयति ; किन्तु सभायां दाराणां भार्य्यायाः केशकर्षणं कर्तृ युष्मान् न लज्जयति । एतन्महदेवाश्चर्य्यमिति भावः । अत्र शत्रुकुलक्षयस्य कर्त्तव्यतावधारणाद्युक्तिः ।

(र) प्राप्तिरिति । सुखागमः पात्रविशेषस्य सुखलाभः प्राप्तिर्नामाङ्गम् । अत्र व्युत्पत्तिः स्पष्टा ।

(ल) यथेति । "नाथ ! अश्रुतपूर्वं खल्वेतद्वचनम्, तत् पुनः पुनर्भण ।" इति संस्कृतानुवादः । अत्र मथ्नामीत्यादिभीमवाक्यश्रवणेन द्रौपद्या सुखलाभात् प्राप्तिः ।

(व) बीजस्येति । बीजस्य "अल्पमात्रं समुद्दिष्टम्" इत्यादिप्रागुक्तलक्षणस्य मूलकारणस्य यत् आगमनं

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा तत्रैव—"(नेपथ्ये) भो भो विराटद्रुपदप्रभृतयः ! श्रूयताम्—

यत् सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्त्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद्द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत् कुरुवने (१) यौधिष्ठिरं जृम्भते ॥" (श)

अत्र "स्वस्था भवन्ति मयि जीवति" इति आदिवीजस्य प्रधाननायकाभिमतत्वेन सम्यगाहितत्वात् समाधानम् (ष) ।

७६ । सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् । (स)

यथा बालचरिते—

"उत्साहातिशयं वत्स ! तव बाल्यञ्च पश्यतः ।
मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः ॥" (ह)

---

प्रधानपात्रगतत्वेन पुनरुपस्थितिः, तत्तु समाधानं नामाङ्गमुच्यते, वीजस्य सम्यक् स्थापनं समाधानमिति व्युत्पत्तेः ।

(श) यदिति । सत्यव्रतस्य सत्यपालनरूपनियमस्य भङ्गाद्भीरु मनो यस्य तेन युधिष्ठिरेण कर्त्रा यत्नेन क्रोधवेगस्य दुर्निवारतया यत्नक्रमेण यत् मन्दीकृतम् अल्पीकृतम्, शमवता स्वभावत एव शान्तिगुणशालिना अतएव कुलस्य वंशस्य शान्तिमिच्छता युधिष्ठिरेण यत् विस्मर्त्तुमपि ईहितं चेष्टितम्, द्यूतम् अक्षक्रीड़ैव अरणिरग्न्युत्पादनकाष्ठं तेन सम्भृतम् उत्पादितम्, नृपसुताया द्रुपदराजनन्दिन्याः केशस्य अम्बरस्य वसनस्य च आकर्षणैः तत्स्वरूपवातैः सन्धुक्षितमिति तात्पर्य्यम्, तदिदं युधिष्ठिरस्येदमिति यौधिष्ठिरं महत् क्रोधज्योतिः क्रोधवह्निः, कुरुः कुरुकुलमेव वनं तस्मिन् जृम्भते प्रसरति ।

(ष) उदाहृते लक्षणं सङ्गमयन् समाधानशब्दस्य व्युत्पत्तिमाह अत्रेति । आदिवीजस्य क्रोधोद्दीपितभीमसेनोत्साहस्य । सम्यगाहितत्वात् यथायथं कविना नाटके स्थापितत्वात् ।

(स) सुखेति । सुखेन दुःखेन च कृतो विहितो योऽर्थो विषयस्तद्विधानमिति नाम्ना अङ्गं स्मृतम्, विधीयत इति व्युत्पत्तेः ।

(ह) उत्साहेति । श्रीरामं प्रति परशुरामेणोक्तमिदम् । हे वत्स ! तव उत्साहातिशयं बाल्यं शैशववयश्च पश्यतो मम मनो युगपत् हर्षविषादाभ्याम् आक्रान्तम् । तथा च उत्साहातिशयदर्शनेन बाल्य एव महावीरत्वावधारणात् हर्षः, शैशववयोदर्शनेन च हन्तव्यत्वे वात्सल्योदयाद्विषाद इत्याशयः ।

अत्र मनस आक्रमणस्य सुखदुःखाभ्यामुभाभ्यामेव कृतत्वाद्विधानम् ।

---

(१) कुरुकुले इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा वा मम प्रभावत्याम्—"नयनयुगासेचनकम्" इत्यादि (२२१ पृष्ठे) (च)।

७७। कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावना॥ (क)

यथा—वेण्यां द्रौपदी "युद्धं स्यान्नवा" इति संशयाना तूर्य्यशब्दानन्तरम्—"णाध! किं दाणिं एसो पलअजलहरत्थणिदमन्थरो खणे खणे समरदुन्दुभी ताड़ीअदि" (ख)।

७८। वीजार्थस्य प्ररोहः स्यादुद्भेदः—(ग)

यथा तत्रैव—"द्रौपदी—णाध! पुणोवि तए समासादइदव्वा। भीमः—

भूयःपरिभवक्लान्ति-लज्जाविधुरिताननम्।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम्॥" (घ)

७९। करणं पुनः।
प्रकृतार्थसमारम्भः—(ङ)

---

(च) प्रकारान्तरेणोदाहरणमाह यथा वेति। अत्र चानन्दसन्तापाभ्यां हृदयस्य सम्बन्धकरणाद्विधानम्।

(क) कुतूहलेति। कुतूहलोत्तराः कौतुकपूर्विका वाचो वाक्यानि तु परिभावना नाम अङ्गं प्रोक्ता, परितो भावना वाचा सर्वतः कुतूहलद्योतनेति व्युत्पत्तेः। वाच इति बहुवचनमविवक्षितम्।

(ख) यथेति। "नाथ! किमिदानीमेष प्रलयजलधरस्तनितमन्थरः समरदुन्दुभिस्ताड्यते।" इति संस्कृतानुवादः। प्रलयजलधरस्य प्रलयकालीनमेघस्य यत् स्तनितं गर्जितं तद्वत् मन्थरो गम्भीरो गम्भीरशब्दकारीत्यर्थः।

अस्य द्रौपदीवाक्यस्य कौतुकपूर्वकत्वादत्र परिभावना।

(ग) वीजेति। वीजार्थस्य "अल्पमात्रं समुद्दिष्टम्" इत्यादिप्रागुक्तलक्षणस्य मूलकारणस्य प्ररोहः पुनरुत्पत्तिरुद्भेदः स्यात्। अत्रापि व्युत्पत्तिः स्पष्टा।

(घ) यथेति। "नाथ! पुनरपि त्वया समासादयितव्या।" इति संस्कृतानुवादः। समासादयितव्या अहं प्राप्तव्या मत्समीपमागन्तव्यमित्यर्थः।

भूय इति। परिभवेन शत्रुकृतापमानेन या क्लान्तिः कष्टं लज्जा च तया विधुरितं विकृतीकृतम् आननं मुखं यस्य तम्, तथा अनिःशेषिता निःशेषमनिहता कौरव्या दुर्य्योधनादयो येन तम्, वृकोदरं भीमं भूयः पुनर्न पश्यसि न द्रक्ष्यसि भविष्यत्सामीप्ये वर्त्तमाना।

अत्र शत्रुविजयोत्साहरूपवीजार्थस्य पुनरुत्पत्तेरुद्भेदः।

(ङ) करणमिति। प्रकृतार्थस्य प्रस्तुतविषयस्य समारम्भः पुनः करणं करणं नामाङ्गम्, करणं क्रियेति व्युत्पत्तेः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा तत्रैव—"देवि ! गच्छामो वयमिदानीं कुरुकुलक्षयाय ।" इति (च) ।

८० । भेदः संहतिभेदनम् ॥ (छ)

यथा तत्रैव—"अतएवाद्य प्रभृति भिन्नोऽहं भवद्भ्यः ।" (ज) । केचित्तु "भेदः प्रोत्साहना" इति वदन्ति (झ) ।

अथ प्रतिमुखाङ्गानि ।

८१ । विलासः परिसर्पश्च विधूतं तापनं तथा ।
नर्म्म नर्म्मद्युतिश्चैव तथा प्रगमनं पुनः ॥
विरोधश्च प्रतिमुखे तथा स्यात् पर्य्युपासनम् ।
पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ॥ (ञ)

तत्र—

८२ । समीहा रतिभोगार्था विलास इति कथ्यते । (ट)

रतिलक्षणस्य भावस्य यो हेतुभूतो भोगो विषयः प्रमदा पुरुषो वा, तदर्था समीहा विलासः (ठ) । यथा शाकुन्तले—

---

(च) यथेति । अत्र प्रकृतार्थस्य युद्धोद्योगस्य समारम्भात् करणम् ।

(छ) भेद इति । संहतेः सम्मेलनस्य भेदनं पृथक्करणं भेदः भेदो नामाङ्गम् । अत्रापि व्युत्पत्तिः स्पष्टा ।

(ज) यथेति । अत्र भीमेनात्मनो युधिष्ठिरादिसंहतेः पृथक्करणाद्भेदः ।

(झ) केचिदिति । प्रोत्साहना कर्त्तव्यं प्रति प्रकर्षेणोत्साहजननं भेदः ।

एतन्मते उदाहरणं यथा मम वङ्गीयप्रतापनाटके—

"कश्चित् प्रतापः किल पश्चिमोद्गतः परः प्रतापोऽप्युदितोऽस्तु पूर्वतः ।
द्वयोः प्रतापाद्युगपत् प्रवर्त्तितात् चिरं प्रतापी यवनस्य नश्यतु ॥"

(ञ) विलास इति । विलासादीनि त्रयोदशाङ्गानि प्रतिमुखे सन्धौ स्युः । एतानि तु प्रायेण शृङ्गार-रसप्रधान एव दृश्यकाव्ये सम्भवन्ति, तत्रैव लक्षणोदाहरणदर्शनात् । न चैतैरवश्यमेव समस्तदृश्यकाव्येष्वेव स्थातव्यमिति नियमः "रसव्यक्तिमपेक्ष्यैषामङ्गानां सन्निवेशनम् । न तु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥" इति वक्ष्यमाणेन ग्रन्थकर्त्रैव अनियमाभिधानात् ।

(ट) समीहेति । रतिभोगार्था अनुरागपात्रीभूतस्त्रीपुरुषैकतरविषया समीहा स्पृहा विलास इति नाम्ना अङ्गं कथ्यते । विहारात्मकविलसनविषयकत्वाद्विलासाख्यमिदमङ्गम् ।

(ठ) रतीति । रतिलक्षणस्य अनुरागस्वरूपस्य । भोगो विषय इति । एवञ्च भुज्यते अनुरागकाले मनसा एव देवानुभूयते यः स भोग इति कर्मणि घञ् । प्रमदा स्त्री । तदर्था तयोरेकतरविषया ।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि (१)।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥" (ड)

८३ । दृष्टनष्टानुसरणं परिसर्पश्च कथ्यते ॥ (ढ)

यथा शाकुन्तले—"राजा । भवितव्यमत्र तया । तथाहि—
अभ्युन्नता पुरस्तादवगाढ़ा जघनगौरवात् पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥" (ण)

८४ । कृतस्यानुनयस्यादौ विधूतं त्वपरिग्रहः । (त)

यथा तत्रैव—"अलं वो अन्तेउरविरहपज्जुस्सुएण राएसिणा उवरुद्धेण ।" (थ)

---

(ड) काममिति । दुष्मन्तस्योक्तिरियम् । प्रिया शकुन्तला कामं यथेष्टं न सुलभा ; तु किन्तु तथापि मम मनः तस्याः शकुन्तलाया भावदर्शनेन मां प्रति कटाक्षपातादिभङ्गीविशेषदर्शनेनैव आश्वासि आश्वासःमिलाषि जातम् । मनसिजे कामे अकृतार्थेऽपि सम्भोगाप्रतिपादनेन अकृतकार्य्येऽपि सति, उभयप्रार्थना नायकनायिकयोरुभयोरपि परस्परप्राप्तीच्छा रतिमनुरागं कुरुते ।

अत्र दुष्मन्तस्य शकुन्तलाभिलाषरूपो विलासः ।

(ढ) दृष्टेति । दृष्टस्य अभीष्टपदार्थस्य नष्टस्य अदर्शनं प्राप्तस्य सतः अनुसरणमन्वेषणञ्च परिसर्पो नामाङ्गं कथ्यते, परिसर्पणं सर्वतोऽन्वेषणं परिसर्प इति व्युत्पत्तेः ।

(ण) यथेति । अत्र लतामण्डपे । तया शकुन्तलया ।

अभ्युन्नतेति । पाण्डवः पाण्डुवर्णाः सिकता बालुका यस्य तस्मिन् तथोक्ते अस्य लतामण्डपस्य द्वारे, पुरस्तादग्रतः अभ्युन्नता किञ्चिदुच्चा, जघनगौरवात् नितम्बयोर्भारवत्त्वात् पश्चात् भागे अवगाढ़ा किञ्चिद्गभीरा, अभिनवा अचिरजाता पदपङ्क्तिः पदक्षेपचिह्नश्रेणी दृश्यते । अतएवात्र लतामण्डपे तया भवितव्यमिति भावः ।

अत्र दुष्मन्तेन अदर्शनप्राप्ताभीष्टशकुन्तलाया अन्वेषणात् परिसर्पः ।

(त) कृतस्येति । आदौ प्रथमतः कृतस्य अनुनयस्य प्रसादनस्य अपरिग्रहः अस्वीकारस्तु विधूतं नामाङ्गम्, धूतादात्मनि परिगृहीताद्विपरीतमिति व्युत्पत्तेः ।

(थ) यथेति । "अलं वः अन्तःपुरविरहपर्य्युत्सुकेन राजर्षिणा उपरुद्धेन ।" इति संस्कृतानुवादः । अन्तःपुराणां तत्रत्यस्त्रीणां विरहेण पर्य्युत्सुक उत्कण्ठितस्तेन राजर्षिणा दुष्मन्तेन वो युष्माकं युष्माभिरित्यर्थः उपरुद्धेन मदर्थमनुनीतेन अलम् ; वरवर्णिनीषु उत्कण्ठितचित्ते दुष्मन्ते तपस्विन्यर्थमनुनयो विफल एव भवेदिति स न कर्त्तव्य इति भावः ।

अत्र शकुन्तलया आदौ मनसि कृतस्य अनुनयस्य इदानीं सखीभिः कारयितुमस्वीकारात् विधूतम् ।

---

(१) तद्भावदर्शनायासि इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

केचित्तु—"विधूतं स्यादरतिः" इति वदन्ति (द)

८५ । उपायादर्शनं यत्तु तापनं नाम तद्भवेत् ॥ (ध)

यथा—रत्नावल्यां सागरिका—

"दुल्लहजणाणुराओ लज्जा गुरुई परवसो अप्पा ।
पिअसहि ! विसमं पेम्मं मरणं सरणं णवरि एक्कं ॥" (न)

८६ । परिहासवचो नर्म्म—(प)

यथा रत्नाव्ल्याम्—"सुसङ्गता । सहि ! जस्स किदे तुमं आअदा, सो अअं दे पुरदो चिट्ठदि । सागरिका । (साभ्यसूयम्) कस्स किदे अहं आअदा ? । सुसङ्गता—अइ अस्स' किदे ! (१) णं चित्तफलअस्स ।" (फ) ।

८७ । धृतिस्तु परिहासजा ।

नर्म्मद्युतिः—(ब)

---

(द) केचिदिति । दशरूपककारादय इत्यर्थः । अरतिररुचिः । यथा मम प्रभावतीविक्रमनाटके—"राजा । खैरसिंह ! परलोकेऽपि वत्सदशाननशासने श्रमनस्य का नाम शक्तिः ।" इत्यादि । मन्त्रिमते राज्ञो रुच्यभावादत्र विधूतम् ।

(ध) उपायेति । यत्तु उपायादर्शनं कष्टनिवारणकारणानवधारणं तत् तापनं नामाङ्गं भवेत्, तापयतीति व्युत्पत्तेः ।

(न) दुल्लह इति । "दुर्लभजनानुरागः लज्जा गुर्वी परवश आत्मा । प्रियसखि ! विषमं प्रेम मरणं शरणं केवलमेकम् ॥" इति संस्कृतानुवादः । णवरीशब्दो देशीयः । हे प्रियसखि ! दुर्लभे माहशजनेन दुष्प्रापे जने उदयने मम अनुरागो वर्त्तते, तदनायासेन लाभान्नास्ति मदनकष्टनिवारणसम्भावनेति भावः । लज्जा गुर्वी सत्कुलजातत्वाच्छ्रियाला, अतः स्वयं गत्वापि कामवेदना उपशमयितुं न शक्यत इत्याशयः । आत्मा परवशः पराधीनः, अतएव लज्जां विहायापि तत्रात्मसमर्पणं न सम्भवतीत्यभिप्रायः । प्रेम विषमम् उदयनं प्रति ममानुरागश्चातिमहान्, अतस्त्यक्तुमपि न शक्यत इति भावः । अतश्च एकं मरणमेव केवलं ममेदानीं शरणम्, अन्योपायाभावादित्याशयः ।

अत्र सागरिकया मदनवेदनानिवारणोपायादर्शनात् तापनम् ।

(प) परीति । परिहासवच उपहासवाक्यं नर्म्म नामाङ्गम् । नर्म्मशब्दशक्तिरपि तत्रैव ।

(फ) यथेति । "सखि ! यस्य कृते त्वमागता, सोऽयं ते पुरतस्तिष्ठति । कस्य कृते अहमागता ? । अयि अन्यशङ्किते ! ननु चित्रफलकस्य ।" इति संस्कृतानुवादः ।

अत्र सखीवाक्ये परिहासप्रकाशात् नर्म्म ।

---

(१) अत्तं अस्स [illegible] किदे इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा तत्रैव—"सुसङ्गता । सहि ! अदक्खिणा दाणिं सि तुमं जा एव्वं भट्टिणा हत्थावलम्बिदा वि कोवं ण मुञ्चसि । साग । (सभ्रूभङ्गमीषद्विहस्य) सुसङ्गदे ! दाणिं वि कीलिदुं ण विरमसि ।" (भ)

केचित्तु—"दोषस्याच्छादनं हास्यं नर्म्मद्युतिः" इति वदन्ति (म)

८८ । प्रगमनं, वाक्यं स्यादुत्तरोत्तरम् ॥ (य)

यथा विक्रमोर्वश्याम्—"उर्वशी । जअदु जअदु महाराओ । राजा । मया नाम जितं यस्य त्वया जय उदीर्य्यते ।" इत्यादि (र) ।

८९ । विरोधो व्यसनप्राप्तिः—(ल)

यथा चण्डकौशिके—"राजा । नूनमसमीक्ष्यकारिणा मया अन्धेनेव स्फुरच्छिखाकलापो ज्वलनः पद्भ्यां समाक्रान्तः ।" (व) ।

९० । कृतस्यानुनयः पुनः ।
स्यात् पर्य्युपासनम्—(श)

यथा रत्नावल्याम्—"विदु । भो ! मा कुप्प, एसा हि कदलीघरंतरं गदा ।" इत्यादि (ष) ।

---

(ब) धृतिरिति । परिहासजा परिहासे सत्यपि जाता धृतिर्धैर्य्यन्तु नर्म्मद्युतिर्नामाङ्गम्, नर्म्मणो द्योतनं धृत्या धारणात् प्रकाशनमिति व्युत्पत्तेः ।

(भ) यथेति । "सखि ! अदक्षिणेदानीमसि त्वम्, या एव भर्त्रा हस्तावलम्बितापि कोपं न मुञ्चसि । सुसङ्गते ! इदानीमपि क्रीड़ितुं न विरमसि ।" इति संस्कृतानुवादः ।

अत्र सुसङ्गतया परिहासे कृतेऽपि सागरिकया धैर्य्यावलम्बनान्नर्म्मद्युतिः ।

(म) केचिदिति । दोषस्य आच्छादनम् आवरणकरं यत् हास्यं तत् नर्म्मद्युतिः । ऊह्यमुदाहरणम् ।

(य) प्रगमनमिति । उत्तरोत्तरम् उत्कृष्टतरोत्तरस्वरूपं वाक्यं प्रगमनं नाम अङ्गं स्यात्, प्रकर्षेण उत्कर्षरूपेण गमनं ज्ञानं यस्य तदिति व्युत्पत्तेः ।

(र) यथेति । "जयतु जयतु महाराजः ।" इति संस्कृतानुवादः ।

अत्र मयेत्यादेरुत्कृष्टतरोत्तरस्वरूपवाक्यत्वात् प्रगमनम् ।

(ल) विरोध इति । व्यसनप्राप्तिर्विपत्प्राप्तिर्विरोधो नामाङ्गम् । सम्पत्प्राप्तेर्विरोधित्वाद्विरोध इति संज्ञा ।

(व) यथेति । स्फुरन् प्रदीप्यमानः शिखाकलापो ज्वालासमूहो यस्य स तादृशो ज्वलनो वह्निः ।

अत्र हरिश्चन्द्रस्य विश्वामित्राद्विपत्प्राप्तेर्विरोधः ।

(श) कृतस्येति । कृतस्य दोषस्य अनुनयः प्रसादनं पर्य्युपासनं नामाङ्गं स्यात् । अत्र व्युत्पत्तिः स्पष्टा ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

९१। पुष्पं विशेषवचनं मतम्॥ (स)

यथा तत्रैव—"राजा। (हस्ते गृहीत्वा स्पर्शं नाटयति।) विदू। भो वअस्स! एसा अपुव्वा सिरी तुए समासादिदा। राजा। वयस्य! सत्यम्,

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः।
कुतोऽन्यथा स्रवत्येष (१) स्वेदच्छद्मामृतद्रवः॥" (ह)

९२। प्रत्यक्षनिष्ठुरं वज्रम्—(च)

यथा तत्रैव—"राजा। कथमिहस्थोऽहं त्वया ज्ञातः?। सुस। ण केवलं तुमं समं चित्तफलएण। ता जाव गदुअ देवीए णिवेदइस्सं।" (क)

९३। उपन्यासः प्रसादनम्। (ख)

यथा तत्रैव—"सुस। भट्टुण! अलं सङ्काए। मए वि भट्टिणीए पसादेण कीलिदं ज्जेव एदिहिं, ता किं कण्णाभरणेण। अदो वि मे गुरुअरो पसादो एसो, जं तुए अहं एत्थ आलिहिदत्ति कुविदा मे पिअसही सागरिआ. एसा ज्जेव पसादीअदु।" (ग)।

---

(ष) यथेति। "भोः! मा कुप्य, एषा हि कदलीगृहान्तरं गता।" इति संस्कृतानुवादः। अत्र कृतस्य अविवेचनदोषस्य क्षालनाय पुनरनुनयात् पर्य्युपासनम्।

(स) पुष्पमिति। विशेषवचनम् उत्कर्षविशेषबोधकं वाक्यं पुष्पं नामाङ्गं मतम्। पुष्पवद्विप्रकर्षणादियं समाख्या।

(ह) यथेति। "भो वयस्य! एषा अपूर्वा श्रीस्त्वया समासादिता।" इति संस्कृतानुवादः।

श्रीरिति। एषा नायिका श्रीः साक्षाल्लक्ष्मीः, अस्याः पाणिरपि पारिजातस्य देवतरोः पल्लवः। अन्यथा कुतः कथम्, स्वेदः सात्त्विकविशेषो घर्म्म एव छद्म छलं यस्य तादृशः, एष अमृतद्रवः सुधारसः स्रवति पाणितो विगलति, पारिजातादिदेवतरुभ्य एव अमृतस्रवणदर्शनादिति भावः।

अत्र सागरिकायाः सौन्दर्य्योत्कर्षबोधनात् पुष्पम्।

(च) प्रत्यक्षेति। प्रत्यक्षनिष्ठुरं साक्षात् परुषवाक्यं वज्रम्। वज्रतुल्यकष्टकरत्वादियं संज्ञा।

(क) यथेति। "न केवलं त्वम्, समं चित्रफलकेन। तद्यावद्गत्वा देव्यै निवेदयिष्यामि।" इति संस्कृतानुवादः। अत्र राजानं प्रति "देव्यै निवेदयिष्यामि" इति वाक्यस्य प्रत्यक्षनिष्ठुररूपत्वाद्वज्रम्।

(ख) उपेति। प्रसादनं प्रसन्नताजननम् उपन्यासो नामाङ्गम्, प्रसन्नताया उपन्यसनमुपस्थापनमुपन्यास इति व्युत्पत्तेः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(१) पतत्येष इति पाठान्तरम्।

केचित्तु "उपपत्तिकृतो योऽर्थ उपन्यासः स कीर्त्तितः ।" इति वदन्ति उदाहरन्ति च तत्रैव—"अदिमुहरा क्खु सा गब्भदासी ।" इति (घ)

९४ । चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते ॥ (ङ)

यथा महावीरचरिते तृतीयेऽङ्के—

"परिषदियमृषीणामेष वीरो युधाजित्
सह नृपतिरमात्यैः (१) लोमपादश्च वृद्धः ।
अयमविरतयज्ञो ब्रह्मवादी पुराणः
प्रभुरपि जनकानामङ्ग ! भोः ! याचकास्ते ॥" (च)

इत्यत्र ऋषिक्षत्रादीनां वर्णानां मेलनम् । अभिनवगुप्तपादास्तु—वर्ण-शब्देन पात्राण्युपलक्ष्यन्ते ; संहारो मेलनम्" इति व्याचक्षते उदाहरन्ति च रत्नावल्यां द्वितीयेऽङ्के—"अदो वि मे अअं गुरुअरो पसादो" इत्यादेरारभ्य "णं हत्थे गेह्णिअ पसादेहि णं । राजा । "क्वासौ क्वासौ" इत्यादि (छ)

---

(ग) यथेति । "भर्त्तः ! अलं शङ्कया । मयापि भवत्याः प्रसादेन क्रीड़ितमेव एतैः, तत् किं कर्णाभरणेन । अतोऽपि मे गुरुतरः प्रसाद एषः, यत् त्वया अहमत्र आलिखितेति कुपिता मे प्रियसखी सागरिका, एषैव प्रसाद्यताम् ।" इति संस्कृतानुवादः ।

अत्रात्मानं प्रति राज्ञः प्रसन्नताजननादुपन्यासः ।

(घ) केचिदिति । यः अर्थः पदार्थः उपपत्त्या युक्त्या कृतः उपपादितः, स उपन्यासो नामाङ्गं कीर्त्तितः । अत्र मते विषयविशेषस्य युक्त्या उपन्यसनादुपपादनादुपन्यास इति समाख्या । "अतिमुखरा खलु सा गर्भदासी ।" इति संस्कृतानुवादः ।

अत्र यतः सा गर्भदासी नितान्तनिकृष्टा, अतएवातिमुखरेति युक्त्या अतिमुखरत्वस्य उपपादनादुपन्यासः ।

(ङ) चातुरिति । चातुर्वर्ण्यस्य ब्राह्मणादिवर्णचतुष्टयस्य उपगमनम् उपस्थितिरेकत्र मेलनमिति यावत् वर्णसंहारो नामाङ्गमिष्यते, वर्णानां संहारो मेलनमिति व्युत्पत्तेः ।

(च) परिषदिति । अङ्ग भो जामदग्न्य ! इयम् ऋषीणां परिषत् सभा, एष वीरो युधाजिन्नाम राजा, अमात्यैः सह एष च वृद्धो लोमपादो नाम नृपतिः, अविरतयज्ञः सर्वदा यागव्यापृतः पुराणो ब्रह्मवादी प्राचीनो वेदवक्ता अयमपि जनकानां जनकवंशीयानां प्रभुः सीरध्वजो नाम, एते सर्व एव ते तव समीपे याचकाः शान्तिप्रार्थिनः सञ्जाता इति शेषः ।

अत्र अमात्यैरिति बहुवचनाद्यथासम्भवं तत्सहचरभावेन वैश्यशूद्रावपि गृह्येते । अतएव वृत्तौ—"ऋषिक्षत्रादीनाम्" इति आदिपदं प्रयुक्तम् । तेन चातुर्वर्ण्योपगमनाद्वर्णसंहारः ।

---

(१) [illegible] रिति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ गर्भाङ्गानि ।

९५ । अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।
संग्रहश्चानुमानञ्च प्रार्थना क्षिप्तिरेव च ॥
त्रोटकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा । (ज)

९६ । तत्र (१) व्याजाश्रयं वाक्यमभूताहरणं मतम् ॥ (झ)

यथा अश्वत्थामाङ्के—(ञ)

"अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति पुनः (२) व्याहृतं सत्यवाचा ।" (ट)

९७ । तत्त्वार्थकथनं मार्गः—(ठ)

यथा चण्डकौशिके—"राजा । भगवन् !
गृह्यतामर्जितमिदं भार्यातनयविक्रयात् ।
शेषस्यार्थे करिष्यामि चण्डालेऽप्यात्मविक्रयम् ॥" (ड)

---

(छ) अभीति । अभिनवगुप्तो नाम भरतनाट्यशास्त्रव्याख्याता । पात्राणि नाटकीयव्यक्तयः । "अतोऽपि मे अयं गुरुतरः प्रसादः । ननु हस्ते गृहीत्वा प्रसादय एनाम् ।" इति संस्कृतानुवादः । अत्र राज-विदूषक-सागरिका-सुसङ्गताख्यानां पात्राणां मेलनादयं संहारः ।

(ज) अभूतेति । अभूताहरणादीनि गर्भसन्धेरङ्गानि त्रयोदश ।

(झ) तत्रेति । तत्र तेषु त्रयोदशविधेषु अङ्गेषु मध्ये, व्याजाश्रयं कपटतायुक्तं वाक्यम् अभूताहरणं नाम अङ्गं मतम्, अभूतस्य असत्यस्य आहरणं भङ्गीविशेषेणाविर्भावनमिति व्युत्पत्तेः ।

(ञ) यथेति । अश्वत्थामाङ्के अश्वत्थामप्रधानाङ्के वेणीसंहारनाटकस्य तृतीयाङ्क इत्यर्थः । अन्यत्राप्येवम् ।

(ट) अश्वेति । "तच्छ्रुत्वासौ दयिततनयः प्रत्ययात्तस्य राज्ञः शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच ॥" इति द्वितीयार्द्धम् । सत्यवाचा सर्वदा सत्यवादिना पृथासूनुना कुन्तीपुत्रेण युधिष्ठिरेण, अश्वत्थामा हत इति स्पष्टं सर्वश्रव्यं यथा स्यात्तथा उक्त्वा, शेषे पुनस्ततःपरन्तु, स्वैरं मन्दम् अश्रव्यं यथा स्यात्तथा गज इति व्याहृतमुक्तम् । दयिततनयः प्रियपुत्रः असौ द्रोणाचार्यः, तत् स्पष्टं वाक्यं श्रुत्वा, तस्य राज्ञो युधिष्ठिरस्य प्रत्ययात् सत्यवादित्वविश्वासात् आजौ युद्धे शस्त्राणि नयनसलिलञ्चापि तुल्यं युगपदेव मुमोच तत्याज ।
अत्र कपटतायोगादभूताहरणम् ।

(ठ) तत्त्वेति । तत्त्वार्थस्य यथार्थकर्त्तव्यविषयस्य कथनं मार्गो नामाङ्गम्, मृग्यते सत्यतया धार्म्मिकैरन्विष्यत इति मार्ग इति व्युत्पत्तेः ।

---

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(१) अत्रेति क्वचित् पाठः । (२) किल इति पाठान्तरम् ।

९८ । रूपं वाक्यं वितर्कवत् । (ढ)

यथा रत्नावल्याम्—"राजा ।

मनः प्रकृत्यैव चलं दुर्लक्ष्यञ्च तथापि मे ।
कामेनैतत् कथं विद्धं समं सर्वैः शिलीमुखैः ? ॥" (ण)

९९ । उदाहरणमुत्कर्ष-युक्तं वचनमुच्यते ॥ (त)

यथा अश्वत्थामाङ्के—

"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदात् (१) पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्म्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥" (थ)

१०० । भावतत्त्वोपलब्धिस्तु क्रमः स्यात्—(द)

(ड) गृह्यतामिति । स्पष्टोऽर्थः ।

अत्र हरिश्चन्द्रस्य यथार्थकर्त्तव्यविषयकथनान्मार्गः ।

(ढ) रूपमिति । वितर्कवत् वितर्कयुक्तं वाक्यं रूपं नामाङ्गम्, रूप्यते वितर्कान्वितत्वेन ज्ञायत इति व्युत्पत्तेः ।

(ण) मन इति । प्रकृत्या स्वभावेनैव मनश्चलं चञ्चलम्, अतएव दुर्लक्ष्यं सर्वेषामेव लक्षयितुं प्रत्यक्षीकर्त्तुमशक्यम् ; तथापि कामेन मदनेन मे मम एतन्मनः कथं सर्वैः शिलीमुखैर्बाणैः समं युगपदेव विद्धम् ? ।

अत्र राज्ञो वितर्कयोगात् रूपम् ।

(त) उदेति । उत्कर्षयुक्तम् आत्मनः परस्य वा उत्कर्षसूचकं वचनं वाक्यम् उदाहरणं नामाङ्गमुच्यते, उदाहरणमुत्कर्षस्योक्तं स्वनमिति व्युत्पत्तेः ।

(थ) यो य इति । पाण्डवानामिमा इति पाण्डव्यस्तासां चमूनां सेनानां मध्ये यो यो जनः स्वभुजगुरुमदात् निजनिजबाहुबलस्यात्यन्तदर्पात् शस्त्रं बिभर्त्ति ; पाञ्चालगोत्रे द्रुपदराजकुले यो यो जनः शिशुर्बालकः अधिकवया युवादिः गर्भशय्यां मातुर्गर्भदेशं गतो वा तिष्ठति ; यो यो जनः तस्य कर्म्मणो मत्पितृवधरूपमहापातककार्य्यस्य साक्षी द्रष्टा ; तथा मयि अश्वत्थाम्नि रणे चरति सति यश्च यश्च जनः प्रतीपः प्रतिकूलो भवेत् ; क्रोधान्धः अहम्, इह रणे स्वयं जगतामन्तकस्यापि यमस्यापि सतः तस्य तस्य अन्तको यमो विनाशयिता भवेयम् ।

अत्र निजवीरत्वोत्कर्षसूचनादुदाहरणम् ।

(१) स्वभुजगुरुमद इत्यपि पाठः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा शाकुन्तले—"राजा । स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । तथाहि—

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन ॥" (ध)

१०१ । संग्रहः पुनः ।

सामदानार्थसम्पन्नः—(न)

यथा रत्नावल्याम्—"राजा । साधु, वयस्य ! इदन्ते पारितोषिकम् । (इति कटकं ददाति) ।" (प)

१०२ । लिङ्गादूहोऽनुमानता ॥ (फ)

यथा जानकीराघवे नाटके—"रामः ।

"लीलागतैरपि तरङ्गयतो धरित्रीं
आलोकनैर्नमयतो जगतां शिरांसि ।
तस्यानुमापयति काञ्चनकान्तिगौर-
कायस्य सूर्य्यतनयत्वमधृष्यताञ्च ॥" (ब)

---

(द) भावेति । भावस्य चेष्टाविशेषस्य तत्त्वोपलब्धिर्मर्मानुभवस्तु क्रमो नामाङ्गं स्यात्, क्रमणं बुद्ध्या विषयीकरणं क्रम इति व्युत्पत्तेः ।

(ध) यथेति । विस्मृतनिमेषेण निर्निमेषेण चक्षुषा यत् प्रियां शकुन्तलामवलोकयामि, तत् स्थाने खलु युक्तमेव ।

उन्नेति । पदानि सुप्तिङन्तरूपाणि रचयन्त्या मयि मदनलेखसम्पादनार्थं संगटन्त्याः अस्याः शकुन्तलायाः, उन्नमिता एका भ्रूलता यस्य तादृशमाननं मुखं कर्तृ, पुलकाञ्चितेन रोमाञ्चितेन कपोलेन गण्डेन मयि अनुरागं कथयति स्पष्टं सूचयति ।

अत्र पदरचनारूपचेष्टाया अनुरागरूपमर्मानुभवात् क्रमः ।

(न) संग्रह इति । पुनःशब्दस्त्वर्थे । साम्ना प्रियवचनेन यद्दानं तेन अर्थसम्पन्नो धनादिप्राप्तिरूपो विषयः संग्रहो नामाङ्गम्, संग्रहः प्रतिग्रह इति व्युत्पत्तेः ।

(प) यथेति । अत्र प्रियवचनेन राज्ञा कटकदानात् विदूषकेण च तत्संग्रहणात् संग्रहः ।

(फ) लिङ्गादिति । लिङ्गात् नियतसाध्यसमानाधिकरणात् साधनात्, ऊहः साध्यज्ञानम्, अनुमानता अनुमानम् । स्वार्थे तप्रत्ययः ।

(ब) लीलेति । लीलागतैरपि सविलासगमनैरपि धरित्रीं तरङ्गयतः कम्पयतः, आलोकनैः दृष्टि-

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

१०३ । रतिहर्षोत्सवादीनां प्रार्थनं प्रार्थना भवेत् । (भ)

यथा रत्नावल्याम्—"प्रिये ! सागरिके !

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भास्तम्भनिभं तथोरुयुगलं (१) बाहू मृणालोपमौ ।
इत्याह्लादकराखिलाङ्गि ! रभसान्निःशङ्कमालिङ्ग्य मा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥" (म)

इदञ्च प्रार्थनाख्यमङ्गं यन्मते निर्वहणे इह भूतावसरत्वात् प्रशस्ति-नामाङ्गं नास्ति तन्मतानुसारिणोक्तम्, अन्यथा अङ्गानां पञ्चषष्टिसंख्यत्वप्रसङ्गात् (य) ।

१०४ । रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्यात्—(र)

---

पातैरपि जगतां शिरांसि स्वसमीपे नमयतः, तथा काञ्चनकान्तिवत् सुवर्णद्युतिवत् गौरः कायो देहो यस्य तस्य, तस्य लक्ष्मणस्य सूर्य्यतनयत्वं सूर्य्यवंशजातत्वम् अभ्यूह्यताम् अन्यैरनभिभवनीयताञ्च अनुमापयति तादृशं लीलागतमालोकनञ्च कर्त्तुं इति लोकानिति च शेषः ।

अत्र धरित्रीकम्पन-जगच्छिरोनमनरूपात् साधनद्वयात् सूर्य्यतनयत्वाधृष्यत्वरूपसाध्यद्वयस्य ज्ञानादनुमानम् ।

(भ) रतीति । रतिः सुरतम्, हर्षः प्रीतिः, उत्सव आमोदकरव्यापारस्तेषां प्रार्थनं तत्तत्करणाय याचनं प्रार्थना नामाङ्गं भवेत् । अत्रापि व्युत्पत्तिः स्पष्टा ।

(म) शीतांशुरिति । तव मुखं शीतांशुः साक्षाच्चन्द्रः, दृशौ चक्षुषी उत्पले नीलोत्पलयुगलम्, करौ हस्तद्वयं पद्ममनुकुरुत इति पद्मानुकारौ कर्म्मण्यण् । तथा ऊरुयुगलं रम्भास्तम्भनिभम्, बाहू भुजद्वयञ्च मृणालोपमौ ; इति इत्थम् आह्लादकराणि अखिलानि अङ्गानि यस्यास्तत्सम्बोधनम्, त्वं रभसात् वेगात् शीघ्र-मित्यर्थः एहि एहि, निःशङ्कं मामालिङ्ग्य, अनङ्गतापेन कामसन्तापेन विधुराणि विह्वलानि मम अङ्गानि निर्वापय शीतलीकुरु ।

अत्र रतेः प्रार्थनात् प्रार्थना । हर्षोत्सवयोः प्रार्थने उदाहरणमूह्यम् ।

(य) इदमिति । निर्वहणे उपसंहाराख्यचरमसन्धौ । इह गर्भसन्धौ भूतावसरत्वात् प्राप्तस्थान-त्वात् । अन्यथा अत्रापि प्रार्थनाख्याङ्गान्तरस्वीकारे, अङ्गानां पञ्चषष्टिसंख्यत्वप्रसङ्गात् "चतुःषष्टिविधं ह्येत-दङ्गं प्रोक्तं मनीषिभिः" इति वक्ष्यमाणं नोपपद्यत इति शेषः । तथा च निर्वहणे प्रशस्तिनामाङ्गस्य मया अङ्गीकरिष्यमाणत्वादत्र प्रार्थनाख्यमङ्गं परमतानुसारिणैवोक्तमिति भावः ।

(र) रहस्येति । रहस्यार्थस्य गुप्तविषयस्य उद्भेदः प्रकाशनन्तु क्षिप्तिर्नामाङ्गं स्यात्, क्षिप्तिरुत्क्षिप्तिः प्रकाशनमिति व्युत्पत्तेः ।

---

(१) तवोरुयुगलमिति पाठान्तरम् ।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा अश्वत्थामाङ्के—

"एकस्यैव विपाकोऽयं दारुणो भुवि वर्त्तते ।
केशग्रहे द्वितीयेऽस्मिन् नूनं निःशेषिताः प्रजाः ॥" (ल)

१०५ । त्रोटकं पुनः ॥

संरब्धवाक्—(व)

यथा चण्डकौशिके—"कौशिकः । आः ! पुनः कथमद्यापि न सम्भृताः स्वर्णदक्षिणाः ।" (श) ।

१०६ । अधिबलमभिसन्धिश्छलेन यः । (ष)

यथा रत्नावल्याम्—"काञ्चनमाला । भट्टिणि ! इअं सा चित्तसालिआ, ता जाव वसंतअस्स सस्सं करोमि" इत्यादि (स) ।

१०७ । नृपादिजनिता भीतिरुद्वेगः परिकीर्त्तितः ॥ (ह)

---

(ल) एकस्येति । एकस्यैव द्रौपदीकेशाकर्षणस्य अयं कुरुपाण्डवयुद्धे असंख्यलोकक्षयरूपो दारुणो विपाकः परिणामः भुवि जगति वर्त्तते, एतद्युद्धं प्रति तस्यैव केशाकर्षणस्य हेतुत्वादिति भावः । अस्मिन् द्वितीये केशग्रहे धृष्टद्युम्नेन द्रोणाचार्य्यस्य केशाकर्षणे कृते तु नूनं निश्चितमेव प्रजा लोकाः निःशेषिता विधिना साकल्येन विनाशिताः, सर्वसञ्जिहीर्षोरश्वत्थाम्न एव तत्र द्वारीभावत्वादिति भावः ।

अत्र दैवकर्त्तव्यसमस्तप्रजानाशरूपरहस्यार्थस्य वाचा प्रकाशनादुद्भेदः ।

(व) त्रोटकमिति । संरब्धस्य क्रुद्धस्य वाक् वाक्यं क्रोधव्यञ्जकवाक्यमित्यर्थः त्रोटकं नामाङ्गं स्यात्, त्रोटयति परचित्तस्वास्थ्यं नाशयतीति व्युत्पत्तेः । पुनःशब्दस्त्वर्थे ।

(श) यथेति । सम्भृताः सम्पन्नाः । अत्र विश्वामित्रस्य क्रोधव्यञ्जकवाक्यत्वात् त्रोटकम् ।

(ष) अधीति । छलेन यः अभिसन्धिरभिप्रायपरिज्ञानम्, तदधिबलं नामाङ्गं स्यात्, बलं बुद्धिबलमधिकृत्य जातमिति व्युत्पत्तेः ।

(स) यथेति । "भर्त्रि ! इयं सा चित्रशालिका, तत् यावद्वसन्तकस्य संज्ञां करोमि ।" इति संस्कृतानुवादः । चित्रशालिका चित्रनिर्म्माणगृहम् । संज्ञां सङ्केतम् । आदिपदेन "किं पद्मस्य रुचिम्" इत्यादिपद्यग्रहणम् ।

अत्र काञ्चनमालया वासवदत्तया च छलेन राजविदूषकयोरभिप्रायपरिज्ञानादधिबलम् ।

(ह) नृपेति । नृपेण आदिपदात् शत्रुप्रभृतिभिश्च जनिता भीतिर्भयम् उद्वेगो नामाङ्गं परिकीर्त्तितः, उद्विज्यते मनोऽनेनेति व्युत्पत्तेः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा वेण्याम्—"प्राप्तावेकरथारूढ़ौ पृच्छन्तौ त्वामितस्ततः ।
स कर्णारिः स च क्रूरो वृककर्म्मा वृकोदरः ॥" (च)

१०८ । शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः । (क)

यथा—"कालान्तककरालास्यं क्रोधोद्धूतं दशाननम् ।
विलोक्य वानरानीके सम्भ्रमः कोऽप्यजायत ॥" (ख)

अथ विमर्षाङ्गानि ।

१०९ । अपवादोऽथसम्फेटो व्यवसायो द्रवो द्युतिः ॥
शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम् ।
प्ररोचना विमर्षे स्यादादानं छादनं तथा ॥ (ग)

११० । दोषप्रख्यापवादः स्यात्—(घ)

यथा वेण्याम्—"युधिष्ठिरः । पाञ्चालक ! कच्चिदासादिता तस्य दुरात्मनः कौरव्यापसदस्य पदवी ? । पाञ्चालकः । न केवलं पदवी स एव दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः ।" (ङ)

---

(च) प्राप्ताविति । स कर्णारिरर्जुनः, स क्रूरो हिंस्रस्वभावः वृककर्म्मा व्याघ्रविशेषवन्निष्ठुरकार्य्यकारी वृकोदरो भीमसेनश्च एतौ इतस्ततस्त्वां पृच्छन्तौ दुर्य्योधनः, क्वास्ते इति जिज्ञासमानौ एकरथारूढ़ौ सन्तौ प्राप्तौ उपस्थितौ ।

अत्र दुर्य्योधनस्य शत्रुभूतभीमार्जुनजनितभीतेरुद्वेगः ।

(क) शङ्केति । अनिष्टसम्भावना शङ्का, अप्रतीकार्य्यत्वप्रकारकभविष्यदनिष्टज्ञानं भयम्, उपस्थितानिष्टज्ञानं त्रासः तैः कृतः सम्भ्रमश्चित्तादिव्यस्तता विद्रवो नामाङ्गं मतः, विशेषेण द्रवणं कम्पनमिति व्युत्पत्तेः ।

(ख) कालेति । कालान्तकस्य संहारकालीनयमस्येव करालानि भयङ्कराणि आस्यानि वदनानि यस्य तम्, क्रोधेन उद्धूतम् उत्कम्पितदेहम्, दशाननं रावणं विलोक्य वानराणाम् अनीके सेनायां कोऽपि अनिर्वचनीयः सम्भ्रमो व्यस्तता अजायत ।

अत्र वानरानीकस्य शङ्कात्रासकृतसम्भ्रमाद्विद्रवः ।

(ग) अथेति । विमर्षे सन्धौ अपवादादीनि त्रयोदशाङ्गानि सम्भवन्ति ।

(घ) दोषेति । दोषस्य प्रख्या आख्यानम् अपवादो नामाङ्गं स्यात्, अपकृष्टविषयको वाद इति व्युत्पत्तेः ।

(ङ) यथेति । तस्य दुर्य्योधनस्य । पदवी पन्थाः । देव्या द्रौपद्याः केशपाशस्य स्पर्शो धारणमेव पातकं तस्य प्रधानहेतुरादेशकत्वादिति भावः, उपलब्धः प्राप्तः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१११ । सम्फेटो रोषभाषणम् । (च)

यथा तत्रैव—"राजा । अरे रे मरुत्तनय ! वृद्धस्य राज्ञः पुरतो निन्दितमप्यात्मकर्म्म श्लाघसे ? । शृणु रे !

कृष्टा केशेषु भार्य्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी ।
तस्मिन् वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा
बाह्वोर्वीर्य्यातिभारद्रविणगुरुमदं मामजित्वैव दर्पः ॥

भीमः । (सक्रोधम्) आः पाप ! । राजा ! आः पाप !" इत्यादि (छ) ।

११२ । व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसम्भवः ॥ (ज)

यथा तत्रैव—"भीमः ।

---

अत्र दुर्य्योधनस्य दोषाख्यानादपवादः ।

(च) सम्फेट इति । रोषेण भाषणं सम्फेटनामाङ्गम् । डित्थादिवत् सम्फेट इति रोषभाषणार्थे आलङ्कारिकेषु रूढः ।

(छ) यथेति । मरुत्तनय ! वायुपुत्र ! । एतेन जारज इति ध्वनितम् । वृद्धस्य राज्ञो धृतराष्ट्रस्य । आत्मकर्म्म ज्ञातिहत्यादिरूपं स्वकार्य्यं श्लाघसे प्रशंससि ।

कृष्टेति । भीमार्ज्जनौ प्रति दुर्य्योधनस्योक्तिरियम् । भुवनपतेर्जगदीश्वरस्य मम आज्ञया, द्यूतेन लब्धा दासी द्यूतदासी, पशोः इदानीमपि मां जेतुमशक्ततया पशुतुल्यस्य, तव भीमस्य, तव अर्ज्जुनस्य च, तस्य राज्ञो युधिष्ठिरस्य, तयोर्वा नकुलसहदेवयोश्च भार्य्या द्रौपदी । एतेन कस्यचिदेकः पतिः प्रतीकारासमर्थोऽपि एकत्वेन तथा न निन्दनीयः, युष्मन्तु द्रौपद्याः पञ्चैव पतयः सन्तोऽपि इदानीमपि सम्यक् प्रतीकारासमर्थत्वादत्यन्त-कापुरुषा एवेति द्रौपदी च वेश्यातुल्येति च ध्वनितम् । भूपतीनां तत्सभास्थितानां राज्ञां प्रत्यक्षमेव केशेषु कृष्टा आकृष्टा तस्याः केशाकर्षणं कृतमित्यर्थः । तस्मिन् वैरानुबन्धे शत्रुताकारणे जाते सति, तैर्नरेन्द्रै-र्युष्माकं किमपकृतम्, ये नरेन्द्रा राजानो युष्माभिर्हता इति वद । ततश्च परापराधेन परेषां दण्डविधाना-दविमृष्यकारितया यूयं पशुतुल्या एवेति भावः । बाह्वोः स्वभुजयोः वीर्य्यातिभारो बलातिशय एव द्रविणम् आदरणीयत्वात् धनं तेन गुरुर्महान् मदोऽहङ्कारो यस्य तं तथोक्तं मां दुर्य्योधनम् अजित्वैव युष्माकं दर्पः ।

भीम इति । पाप ! पापविशिष्ट ! । "विषु द्रव्ये पापं पुण्यं सुखादि च" इत्यमरोक्तः ।

अत्र रोषेण भाषणात् सम्फेटः ।

(ज) व्यवेति । कर्त्तव्यनिर्द्देशः प्रतिज्ञा हेतुः कारणं ताभ्यां सम्भवतीति स तादृशः उद्यम इति शेषः व्यवसायो नामाङ्गम् । व्यवसायशब्दस्य तत्रैव अर्थः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निहताशेषकौरव्यः क्षीवो दुःशासनासृजा।
भङ्क्ता दुर्य्योधनस्योर्वोर्भीमोऽयं शिरसा नतः॥" (झ)

११३। द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसम्भवा। (ञ)

यथा तत्रैव—"युधिष्ठिरः। भगवन्! कृष्णाग्रज! सुभद्राभ्रातः!

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्म्मो
रूढं सख्यं तदपि गणितं नानुजस्यार्ज्जुनेन।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयि त्वम्॥" (ट)

११४। तर्ज्जनोद्वेजने प्रोक्ता द्युतिः—(ठ)

यथा तत्रैव दुर्य्योधनं प्रति कुमारवृकोदरेणोक्तम्—

"जन्मेन्दोर्विमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितमधुक्षीवं रिपुं मन्यसे
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
त्रासान्मे नृ-पशो! विहाय समरं पङ्केऽधुना लीयसे॥" (ड)

(झ) निहतेति। निहता अशेषाः समस्ताः कौरव्याः कुरुवंशाश्च येन सः, दुःशासनस्य असृजा रुधिरेण क्षीवो मत्तः, तथा दुर्य्योधनस्य ऊर्वोरूरुयुगलस्य भङ्क्ता भङ्गविधायी अयं भीमः शिरसा भवन्तं नतः।

अत्र द्रौपदीकेशाकर्षणादिहेतोस्तत्तत्प्रतिज्ञातस्यार्थस्य सम्भवाद्व्यवसायः।

(ञ) द्रव इति। शोकावेगात् आदिपदेन क्रोधावेगादेश्च सम्भवतीति सा गुरोर्गुरुजनस्य व्यतिक्रान्तिर्मर्य्यादालङ्घनं द्रवो नामाङ्गम्, द्रवणं कर्त्तव्यात् स्खलनं द्रव इति व्युत्पत्तेः।

(ट) ज्ञातीति। दुर्य्योधनेन सार्द्धमन्यायेन युध्यमानं भीमं प्रति बलरामस्य क्रोधावसरे उक्तिरियम्। ज्ञातिप्रीतिः एकचन्द्रवंशोत्पत्तिनिबन्धनः प्रणयः, मनसि न कृता, "हीनपक्षं प्रपूरयेत्" इत्येवं क्षत्रियाणां धर्म्मोऽपि मनसि न कृत इत्यन्वयः, तथा अनुजस्य श्रीकृष्णस्य अर्जुनेन सह तत् प्रसिद्धं रूढं बद्धमूलं सख्यमपि न गणितम्। सर्वत्र भवतेति शेषः। शिष्ययोर्भीमदुर्य्योधनयोरुभयोरेव विषये भवतः स्नेहबन्धः स्नेहनिबन्धनचित्ताकर्षणम्, कामं पर्य्याप्तं यथा स्यात्तथा तुल्यो भवतु। किन्तु मन्दभाग्ये मयि त्वं यत् विमुखो भीमं प्रतिकूलत्वादेव प्रतिकूलः असि, अयं कः पन्था का रीतिः।

अत्राविवेचकत्वसूचनद्वारा युधिष्ठिरेण गुरुपर्य्यायगतबलराममर्य्यादालङ्घनात् द्रवः।

(ठ) तर्ज्जेति। तर्ज्जनोद्वेजने यस्य कस्यचित् भर्त्सनम् उद्वेगजननं वा द्युतिर्नामाङ्गं प्रोक्ता, शङ्काजनकत्वेन द्योतनं प्रकाशनं द्युतिरिति व्युत्पत्तेः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

११५ । शक्तिः पुनर्भवेत् ॥

विरोधस्य प्रशमनम्—(ढ)

यथा तत्रैव—

"कुर्वन्त्वाप्ता हतानां रणशिरसि जना भस्मसात् (१) देहभारान्
अश्रून्मिश्रं कथञ्चिद्ददतु जलममी बान्धवा बान्धवेभ्यः
मार्गन्तां ज्ञातिदेहान् हतनरगहने खण्डितान् गृध्रकङ्कैः
अस्तं भास्वान् प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि" ॥ (ण)

११६ । प्रसङ्गो गुरुकीर्त्तनम् । (त)

यथा मृच्छकटिकायाम्—"चाण्डालकः । एसो क्खु सागलदत्तस्स सुदो अज्जविस्सदत्तस्स णत्तिओ चारुदत्तो वावादिदुं वज्झट्ठाणं णिज्जइ; एदेण किल गणिआ वसन्तसेणा सुवण्णलोहेण वावादिद त्ति (थ)

(ड) जन्मेन्दोरिति । विमले निर्दोषे इन्दोः कुले चन्द्रस्य वंशे जन्म आत्मन उत्पत्तिं व्यपदिशसि ब्रवीषि; अद्यापि गदां धत्से दधासि; दुःशासनस्य कोष्णेन अल्पोष्णेन शोणितमधुना रक्तरूपमद्येन क्षीबं मत्तं मां रिपुं मन्यसे; तथा दर्पान्धः अहङ्कारेण कर्त्तव्याकर्त्तव्यविमूढः सन्, मधुकैटभद्विषि मधुकैटभाख्ययोरसुरयोरपि निहन्तरि हरौ कृष्णेऽपि विषये उद्धतं दर्पप्रयुक्तं यथा स्यात्तथा चेष्टसे व्यवहरसि बन्धुसुयतत्वादिति भावः । किन्तु हे नृपशो ! मनुष्यरूपधारिपशो ! मे मम वासाद्भयात् समरं विहाय अधुना पङ्के पायनह्रदस्य कर्द्दमे लीयसे लुक्कायितस्तिष्ठसि । इदन्तु पूर्वं पूर्वाचरणवैपरीत्यादतीव घृणितमाचरणमिति भावः ।

अत्र तर्जनादुद्वेजनाच्च द्युतिः ।

(ढ) शक्तिरिति । विरोधस्य विवादस्य प्रशमनं निवारणं पुनः शक्तिर्नामाङ्गं भवेत्, शक्तिसाध्यत्वात् शक्तिः ।

(ण) कुर्वन्त्विति । आप्ता आत्मीयत्वेन विश्वस्ता जनाः, रणशिरसि समरक्षेत्रोपरि हतानां जनानां देहभारान् शरीरसमूहान् भस्मसात् कुर्वन्तु; अमी बान्धवाः, बान्धवेभ्यः समरनिहतेभ्यो बन्धुभ्यः अश्रुमिश्रं नयनजलयुक्तं जलं तर्पणवारि कथञ्चिदतिकष्टेन ददतु; तथा गृध्रकङ्कैः पक्षिविशेषैः खण्डितान् खादितमांसान् ज्ञातीनां देहान्, हतनरगहने निहतमनुष्यदेहस्तूपमध्ये मार्गन्तां दग्धुमन्विष्यन्ताम् । भास्वान् सूर्यः रिपुभिः सह अस्तं प्रयातो गतः, अतएव बलानि स्वस्वसैन्यानि संह्रियन्तां सङ्कोच्यन्तां युद्धान्निवर्त्त्यन्ताम् ।

अत्र सैन्यसङ्कोचनोपदेशेन तात्कालिकविरोधप्रशमनात् शक्तिः ।

(त) प्रसङ्ग इति । गुरोः पित्रादिगुरुजनस्य कीर्त्तनं विषयविशेषस्यातिशयकीर्त्तनं वा प्रसङ्गो नामाङ्गम्, प्रसङ्गेन सञ्जातत्वात् ।

(थ) यथेति । मृच्छकटिकायां मृच्छकटिकावृत्तान्तसम्बद्धदृश्यकाव्ये मृच्छकटिकनामकप्रकरणे

(१) वह्निसादिति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चारुदत्तः । मखशतपरिपूतं गोत्रमुद्भासितं यत्
सदसि निविड़चैत्यब्रह्मघोषैः पुरस्तात् ।
मम निधनदशायां वर्त्तमानस्य पापै-
स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥" (ट)

इत्यनेन चारुदत्तवधाभ्युदयानुकूलप्रसङ्गात् गुरुकीर्त्तनमिति प्रसङ्गः (ध) ।

## ११७ । मनश्चेष्टासमुत्पन्नः श्रमः खेद इति स्मृतः (न)

मनःसमुत्पन्नो यथा मालतीमाधवे—

"दलति हृदयं गाढ़ोद्वेगो (१) द्विधा न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥" (प)

---

इत्यर्थः । "एष खलु सागरदत्तस्य सुतः आर्य्यविश्वदत्तस्य नप्ता चारुदत्तो व्यापादयितुं नीयते ; एतेन किल गणिका वसन्तसेना सुवर्णलोभेन व्यापादिता । इति संस्कृतानुवादः ।

(ट) मखेति । मखशतैर्वहुतरयज्ञानुष्ठानैः यदस्माकं गोत्रं वंशः, निविडे वेदज्ञजनाकीर्णे चैत्ये आयतने ब्रह्मघोषैर्वेदपाठध्वनिभिः पुरस्तात् पूर्वम् उद्भासितं यशोभिः प्रकाशितम् आसीत्, निधनदशायां मरणावस्थायां वर्त्तमानस्य मम तद्गोत्रम्, असदृशमनुष्यैर्मद्गोत्रघोषणायोग्यजनैः चाण्डालैः कर्त्तृभिः पापैः पापवृत्तान्तैः "सुवर्णलोभेन गणिका व्यापादिता" इति कुत्सितवृत्तान्तैरित्यर्थः घोषणायां घोषणास्थाने घुष्यते उच्चैः प्रख्याप्यते । इदमतीवदुःखकरमिति भावः ।

(ध) लक्ष्ये लक्षणं सङ्गमयितुमाह इतीति । अनेन गद्यांशेन पद्येन च, चारुदत्तस्य वधाभ्युदययोरनुकूलप्रसङ्गात् वधप्रसङ्गेन "एसो क्खु" इत्यादि गद्यांशकीर्त्तनात् आत्मनिर्द्दोषत्वसूचनाय गोत्रनिर्द्दोषत्वरूपाभ्युदयप्रकाशप्रसङ्गेन मखशतेत्यादिकीर्त्तनाच्चेत्यर्थः, गद्यांशे गुर्वोः पितृपितामहयोः पद्ये तु गोत्रपदेनैव गुरूणां पित्रादीनां कीर्त्तनम् इति हेतोः प्रसङ्गो नामाङ्गम् ।

(न) मन इति । मनसा शोकादिमानसिकव्यापारेण चेष्टया युद्धादिदैहिकव्यापारेण वा समुत्पन्नः श्रम आयासः खेद इति नाम्ना अङ्गं स्मृतः, खिद्यते अनेनेति व्युत्पत्तेः ।

(प) दलतीति । गाढ़ोद्वेगो दृढ़तरः प्रियाविच्छेददुःखावेगः हृदयं दलति, तु किन्तु द्विधा न भिद्यते तेन गाढ़ोद्वेगेन न विदार्य्यते । विकलः शोकविह्वलः कायो देहः मोहं मूर्च्छां वहति भजते, किन्तु चेतनां चैतन्यं न मुञ्चति नःपरित्यजति । अन्तर्दाहः अन्तःकरणशोकसन्तापः तनूं शरीरं ज्वलयति किन्तु सम्पूर्णतां भस्मसात् न करोति । तथा मर्मच्छेदी हृदयविदारी विधिर्दैवं प्रहरति ताड़यति, किन्तु जीवितं जीवनं न कृन्तति छिनत्ति न विनाशयतीत्यर्थः । अयं श्लोको मालतीमाधवे उत्तररामचरिते च रामेण पठितः ।

(१) प्रियाविच्छेददुःखावेगेन वक्षः ; श्रमात् खेदः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं चेष्टासमुत्पन्नोऽपि (फ)

११८ । ईप्सितार्थप्रतीघातः प्रतिषेध इतीष्यते । (ब)

यथा मम प्रभावत्यां विदूषकं प्रति "प्रद्युम्नः । सखे ! कथमिह त्वमेकाकी वर्त्तसे ? । क्व नु पुनः प्रियसखीजनानुगम्यमाना प्रियतमा मे प्रभावती ? । विदू । असुरशङ्कणा आआरिअ कहिं वि णोदा (भ) । प्रद्युम्नः । (दीर्घं निश्वस्य)

हा पूर्णचन्द्रमुखि ! मत्तचकोरनेत्रे !
मामानताङ्गि ! परिहाय कुतो गतासि ? ।
गच्छ त्वमद्य ननु जीवित ! तूर्णमेव
दैवं कदर्थनपरं कृतकृत्यमस्तु ॥" (म)

११९ । कार्य्यात्ययोपगमनं विरोधनमिति स्मृतम् ॥ (य)

यथा वेण्याम्—"युधिष्ठिरः

तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम् ।

---

(फ) एवमिति । एवमूह्य इत्यर्थः । यथा मम वङ्गीयप्रतापनाटके—

"आशीविषस्य विपदन्तचये विनष्टे गात्राणि जर्जरयते वत कुक्कुरोऽपि ।
सिंहस्य दैववशतो विगतश्च जालम् आकर्षति स्फुटजटां हरिणोऽपि शृङ्गैः ॥"

अत्र वक्तुर्दुर्जनसिंहस्य युद्धश्रमात् खेदः ।

(ब) ईप्सितेति । ईप्सितार्थस्य अभिलषितविषयस्य प्रतीघातः प्राप्तिप्रतिबन्धः प्रतिषेध इति नाम्ना अङ्गमिष्यते । प्रतिषेधो बाध इति नार्थान्तरम् ।

(भ) यथेति । "असुरपतिना आकार्य्य कस्मिन्नपि नीता ।" इति संस्कृतानुवादः । आकार्य्य आहूय ।

(म) हा पूर्णेति । हा पूर्णचन्द्रमुखि ! हा मत्तचकोरनेत्रे ! हा आनताङ्गि ! स्तनभारेण अवनतदेहे ! मां परिहाय त्वं कुतः कुत्र गतासि । ननु जीवित ! हे जीवन ! तूर्णमेव त्वमद्य गच्छ ; तथा च सति कदर्थनपरं दुःखदानपरायणं दैवं कृतकृत्यमस्तु ।

अत्र ईप्सितायाः प्रभावत्याः प्राप्तिप्रतिबन्धात् प्रतिषेधः ।

(य) कार्य्येति । कार्य्ये कर्त्तव्यकर्म्मणि अत्ययोपगमनं विघ्नप्राप्तिः विरोधनमिति नाम अङ्गं स्मृतम्, विरोधनं बाधनमिति व्युत्पत्तेः ।

---

(१) [illegible] पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भीमेन प्रियसाहसेन रभसादल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥" (र)

१२० । प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी । (ल)

यथा वेण्याम्—"पाञ्चालक: । अहं देवेन चक्रपाणिना सहित:—" इत्युपक्रम्य "कृतं सन्देहेन ।

पूर्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णात्यन्तचिरोज्झिते तु कवरीबन्धे करोतु क्षणम् ।
रामे शातकुठारभास्वरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः ॥" (व)

१२१ । कार्य्यसंग्रह आदानम्—(श)

यथा वेण्याम्—"भो भोः समन्तपञ्चकचारिणः ! (ष) ।

(र) तीर्णे इति । भीष्म एव महोदधिस्तस्मिन् तीर्णे उत्तीर्णे निहते इत्यर्थः; द्रोण एव अनलस्तस्मिन् निर्वृते निर्वृतिं निर्वाणतां गते मृते इति तात्पर्य्यम्; कर्ण एव आशीविषभोगी तीक्ष्णविषसर्पः तस्मिन् प्रशमिते वधेन शान्तिं प्रापिते; तथा शल्यो मद्रराज एव शल्यं तस्मिंश्च दिवं स्वर्गं याते, अतएव जये अल्पावशेषे सति प्रियसाहसेन भीमेन रभसाद्वेगात् वाचा "अस्माकं मध्ये येन साद्धं ते रोचते तेनैव साद्धं युध्यस्व" इति वाक्येन अमी सर्वे वयं भ्रातरः जीवितसंशयं समारोपिताः प्रापिताः ।

अत्र युद्धजयरूपकार्य्ये भीमवाक्येन विघ्नप्राप्तेर्विरोधनम् ।

(ल) प्ररोचनेति । संहारार्थप्रदर्शिनी तु उपसंहाररूपविषयज्ञापिका उक्तिस्तु प्ररोचना नामाङ्गं स्यात्, प्ररोचयन्ति विश्रामाय रुचिं जनयतीति व्युत्पत्तेः ।

(व) पूर्य्यन्तामिति । ते तव राज्ये अभिषेकाय सलिलेन रत्नकलशाः पूर्य्यन्तां किङ्करैरिति शेषः । कृष्णा द्रौपदी तु अत्यन्तचिरोज्झिते अतिबहुकालपरित्यक्ते कवरीबन्धे क्षणम् उत्सवं करोतु कवरीबन्धाय उद्युज्यतामित्यर्थः । शातेन पाषाणे घर्षणात् सुधारीकृतेन कुठारेण परशुना भास्वरो दीप्तिमान् करो हस्तो यस्य तस्मिन्, तथा क्षत्राः क्षत्रियजातय एव द्रुमा वृक्षास्तान् छिनत्तीति तस्मिन् रामे परशुरामे क्रोधान्धे वृकोदरे भीमे च आजौ युद्धे परिपतति आगच्छति सति, कुतः संशयः युद्धजये सन्देहः अपि तु कुतोऽपि नेत्यर्थः ।

अत्र पूर्य्यन्तामित्यादिचरणद्वयरूपाया युद्धोपसंहार-ज्ञापकोक्तेः प्ररोचना ।

(श) कार्य्येति । कार्य्याणां कर्म्मणां संग्रहः सङ्कलनम् आदानं नामाङ्गं स्यात् । अत्र व्युत्पत्तिः स्पष्टा ।

(ष) यथेति । समन्तात् कृष्टानां पञ्चकमिति समन्तपञ्चकं कुरुक्षेत्रान्तर्गतदेशविशेषः, तस्मिन् युद्धार्थं चरन्तीति ते तथोक्तास्तत्सम्बोधनम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नाहं रक्षो न भूतो रिपुरुधिरजलाह्लादिताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ।
भो भो राजन्यवीराः ! समरशिखिशिखाभुक्तशेषाः ! कृतं वः
त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत् ॥" (ङ)

अत्र समस्तरिपुवधकार्य्यस्य संगृहीतत्वादादानम् (छ)

१२२ । तदाहुश्छादनं पुनः ॥

कार्य्यार्थमपमानादेः सहनं खलु यद्भवेत् । (च)

यथा तत्रैव—"अर्जुनः । आर्य्य !
अप्रियाणि करोत्वेष वाचा शक्तो न कर्म्मणा ।
हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा ॥" (क)

अथ निर्वहणाङ्गानि ।

१२३ । सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम् ॥

कृतिः प्रसाद आनन्दः समयोऽप्युपगूहनम् ।

---

(ङ) नाहमिति । अहं रक्षो राक्षसो न, भूतः स्वनामख्यातो देवयोनिविशेषोऽपि न ; किन्तु रिपूणां रुधिराख्यैव जलानि तैराह्लादितानि आमोदितानि चिह्नानि अङ्गानि यस्य सः, तथा प्रकामं पर्य्याप्तं यथा स्यात्तथा निस्तीर्णः उत्तीर्णः उरुर्महान् प्रतिज्ञाजलनिधिर्येन सः अतएव गहनो दुर्द्धर्षः ; क्रोधनः क्रोधशीलः कश्चित् क्षत्रियोऽस्मि । अतएव भो भोः समरो युद्धमेव शिखी वह्निः सकतया वह्निस्तस्य शिखया ज्वालया भुक्तेभ्यो लीढेभ्यो निहतेभ्य इत्यर्थः शेषा अवशिष्टाः ! राजन्यवीराः ! हतैः करिभिस्तुरगैश्च अन्तर्हितास्तेषामभ्यन्तरावस्थित्या लुक्कायितास्तैः अतएव लीनैर्न्नयप्राप्तैरिव स्थितैर्युष्माभिः यद्भयस्मात् त्रासादास्यते अवस्थीयते, अनेन वो युष्माकं त्रासेन कृतम् अलम् ।

(छ) लक्ष्ये लक्षणं योजयितुमाह अत्रेति । संगृहीतत्वात् निस्तीर्णोरुप्रतिज्ञेत्यादिविशेषणेन मुखतः उक्तत्वात् ।

(च) तदिति । कार्य्यार्थं कर्त्तव्यविशेषसम्पादनार्थम्, यत् खलु अपमानस्य आदिशब्दादपकारादेश्च सहनं सह्यता भवेत्, तत् पुनश्छादनं नाम अङ्गमाहुरालङ्कारिकाः, छादनं सम्वरणमिति व्युत्पत्तेः ।

(क) अप्रियाणीति । हतं भ्रातृशतं यस्य सः अतएव दुःखी नितान्तशोकार्त्तः एष दुर्य्योधनः, वाचा वाक्यमात्रेण अप्रियाणि करोतु कटुवाक्यानि वदत्वित्यर्थः, किन्तु कर्म्मणा कार्य्येण अप्रियाणि कर्त्तुं न शक्तः शक्त्यभावादिति भावः ; अतएव अस्य दुर्य्योधनस्य प्रलापैरुन्मत्तस्येवानर्थकवाक्यैरस्माकं का व्यथा ? अपि तु कापि नेत्यर्थः । अत्र दुर्य्योधनकटूक्तिकृतापमानसहनात् छादनम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आमर्ष पूर्ववाक्यञ्च काव्यसंहार एव च ॥
प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः । (ख)

१२४ । बीजोपगमनं सन्धिः—(ग)

यथा वेण्याम्—"भीमः । भवति ! यज्ञवेदिसम्भवे ! स्मरति भवती यत्मयोक्तम्—"चञ्चद्भुजे"त्यादि ।

अनेन मुखे क्षिप्तबीजस्य पुनरुपगमनमिति सन्धिः (घ) ।

१२५ । विबोधः कार्य्यमार्गणम् ॥ (ङ)

यथा तत्रैव—"भीमः । मुञ्चतु मामार्य्यः क्षणमेकम् । युधिष्ठिरः । किमपरमवशिष्टम् ? । भीमः । सुमहदवशिष्टम् । संयमयामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् । युधिष्ठिरः । गच्छतु भवान्, अनुभवतु तपस्विनी वेणीसंहारम् ।" इति (च)

अनेन केशसंयमनकार्य्यस्यान्वेषणाद्विबोधः ।

१२६ । उपन्यासस्तु कार्य्याणां ग्रथनम्—(छ)

यथा तत्रैव—"भीमः । पाञ्चालि ! न खलु मयि जीवति संहर्त्तव्या दुःशासनविलुलिता वेणिरात्मपाणिभ्याम् । तिष्ठ, स्वयमेवाहं संहरामि" इत्यनेन कार्य्यस्योपक्षेपाद्ग्रथनम् (ज) ।

---

(ख) सन्धिरिति । संहारे निर्वहणापरपर्य्यायोपसंहारसन्धौ सन्धिप्रभृतीनि चतुर्द्दशाङ्गानि नामतो ज्ञेयानि ।

(ग) बीजेति । बीजस्य मुखसन्धावुपक्षिप्तस्य बीजार्थस्य उपगमनं पुनरुपस्थितिः सन्धिर्नामाङ्गं स्यात्, पुनःसन्धानं सन्धिरिति व्युत्पत्तेः ।

(घ) लक्ष्ये लक्षणं योजयति अनेनेति । मुखे मुखसन्धौ ।

(ङ) विबोध इति । कार्य्यमार्गणं कर्त्तव्यविषयान्वेषणं विबोधो नामाङ्गं स्यात् । कर्त्तव्यत्व-प्रकारेण विशेषबोधविषयत्वाद्विबोध इति संज्ञा ।

(च) यथेति । केशहस्तं केशपाशम् । तपस्विनी शोच्या द्रौपदी । वेणीसंहारं दुःशासनाकर्षणेन स्खलिताया वेण्याः पुनर्बन्धनम् ।

(छ) उपेति । कार्य्याणां कर्त्तव्यविषयाणाम् उपन्यास उल्लेखः ग्रथनं नामाङ्गं स्यात्, ग्रथनं प्रकृतसन्दर्भे योजनमिति व्युत्पत्तेः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१२७। निर्णय: पुन:।

अनुभूतार्थकथनम्—(झ)

यथा तत्रैव—"भीम:। देव! अजातशत्रो! अद्यापि दुर्योधनहतक:। मया हि तस्य दुरात्मन:—

भूमौ क्षिप्तं शरीरं निहितमिदमसृक्चन्दनाभं निजाङ्गे
लक्ष्मीरार्य्ये निषिक्ता चतुरुदधिपय:सीमया सार्द्धमूर्व्या।
भृत्या मित्राणि योधा: कुरुकुलमनुजा दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप! तदधुना धार्त्तराष्ट्रस्य शेषम्॥" (ञ)

१२८। वदन्ति परिभाषणम्॥

परिवादकृतं वाक्यम्—(ट)

यथा शाकुन्तले—"राजा। आर्य्ये! अथ सा तत्रभवती किमाख्यस्य राजर्षे: पत्नी?। तापसी। को तस्स धम्मदारपरिच्चाइणो णामं गेण्हिस्सदि।" (ठ)

(ज) यथेति। संहर्त्तव्या बद्धव्या। दु:शासनेन विलुलिता विश्लेषिता। संहरामि बध्नामि। कार्य्यस्य कर्त्तव्यत्वेनोपन्यस्तस्य उपक्षेपादुल्लेखात्।

(झ) निर्णय इति। अनुभूतार्थस्य प्रत्यक्षादिना प्रागवगतविषयस्य कथनं पुनर्निर्णयो नामाङ्गं स्यात्। निर्णीतविषयकत्वान्निर्णय इति समाख्या।

(ञ) भूमाविति। मया हि तस्य दुरात्मनो दुर्योधनहतकस्य शरीरं भूमौ क्षिप्तं निष्प्राणीकृत्य भूतले पातितम्, चन्दनाभं रक्तचन्दनतुल्यम् इदम् असृक् तस्यैव दुर्योधनस्य रक्तं निजाङ्गे निहितं स्थापितम्, चतुर्णाम् उदधीनां पयांसि जलप्रवाहा: सीमानो यस्यास्तया तथोक्तया उर्व्या पृथिव्या सार्द्धं सह लक्ष्मी: राजश्री: आर्य्ये त्वयि निषिक्ता स्थापिता। भृत्या भृतिभोगिन: अमात्यादय: मित्राणि सुहृद: योधा योद्धार: तथा कुरुकुलस्य मनुजा दु:शासनादय: एतत् सकलं रणाग्नौ दग्धं विनाशितमित्यर्थ:। हे क्षितिप! एकं यत् नाम दुर्योधनेति संज्ञां ब्रवीषि, धार्त्तराष्ट्रस्य अधुना तत् नाममात्रं शेषमवशिष्टं स्थितम्।

अत्र स्वकृतत्वात् प्रत्यक्षेणैवानुभूतविषयस्य कथनान्निर्णय:।

(ट) वदन्तीति। परिवादकृतम् अपवादपुरस्कृतं वाक्यं परिभाषणं नाम अङ्गं वदन्ति आलङ्कारिका इति शेष:। परिवादसूचकं भाषणं परिभाषणमिति व्युत्पत्ते:।

(ठ) यथेति। "कस्तस्य धर्मदारपरित्यागिनो नाम ग्रहीष्यति।" इति संस्कृतानुवाद:। अत्र दुष्मन्तस्य परिवादसूचनात् परिभाषणम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१२९ । लब्धार्थशमनं (१) कृतिः । (ड)

यथा वेण्याम्—"कृष्णः । एते भगवन्तो व्यास-वाल्मीकिप्रभृतयोऽभिषेकं धारयन्तस्तिष्ठन्ति" इति (ढ) ।

अनेन प्राप्तराज्यस्याभिषेकमङ्गलैः स्थिरीकरणं कृतिः (ण) ।

१३० । शुश्रूषादिः प्रसादः स्यात्—(त)

यथा तत्रैव भीमेन द्रौपद्याः केशसंयमनम् ।

१३१ । आनन्दो वाञ्छितागमः ॥ (थ)

यथा तत्रैव—"द्रौपदी । विसुमरिदं एदं वावारं णाधस्स पसादेण पुणोवि सिक्खिस्सं ।" (द) ।

१३२ । समयो दुःखनिर्याणम्—(ध)

यथा रत्नावल्याम्—"वासवदत्ता । (रत्नावलीमालिङ्ग्य) समस्सस बहीणिए ! समस्सस ।" (न) ।

(ड) लब्धार्थेति । लब्धार्थेन उपलब्धविषयेण ज्ञातविषयेणेति यावत् शमनं शोकादिनिवारणं शोकादिं निवार्य मनसः स्थिरीकरणमित्यर्थः कृतिर्नामाङ्गम्. कृतिः करणं स्थिरीकरणमिति व्युत्पत्तेः ।

(ढ) यथेति । अभिषेकमभिषेकसामग्रीं धारयन्त उपसंरक्षन्तः ।

(ण) लक्ष्ये लक्षणं योजयितुमाह अनेनेति । प्राप्तराज्यस्येति सम्बन्धे षष्ठी, प्राप्तराज्यं ०त्यर्थः । स्थिरीकरणं राज्यप्राप्तिज्ञापनेन हृदयस्य स्थैर्यजननम् ।

(त) शुश्रूषेति । हस्तादिना परिचर्या शुश्रूषा आदिशब्दाच्चामरव्यजनादिश्च प्रसादो नामाङ्गं स्यात्, प्रसीदत्यनेनेति व्युत्पत्तेः ।

(थ) आनन्द इति । वाञ्छितागमः प्रार्थितप्राप्तिजन्या प्रीति, आनन्दो नामाङ्गं स्यात् ।

(द) यथेति । "विस्मृतमेतं व्यापारं नाथस्य प्रसादेन पुनरपि शिक्षिष्ये ।" इति संस्कृतानुवादः । व्यापारं केशबन्धनम् । प्रसादेन बन्धनरूपेण ।

अत्र वेणीबन्धनरूपवाञ्छितलाभजन्यप्रीतिरानन्दः ।

(ध) समय इति । दुःखस्य निर्याणम् अवसानं समयो नामाङ्गं स्यात् । सुसमय एव दुःखनिर्याणसम्भवात् समय इति संज्ञा ।

(न) यथेति । "समाश्वसिहि भगिनि ! समाश्वसिहि ।" इति संस्कृतानुवादः । अत्र रत्नावल्या विरहदुःखनिर्याणात् समयः ।

(१) लब्धार्थागमनमिति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१३३ । तदुद्भवेदुपगूहनम् ।

यत् स्यादद्भुतसम्प्राप्तिः—(प)

यथा मम प्रभावत्यां नारददर्शनात् प्रद्युम्न ऊर्द्ध्वमवलोक्य—

"दधद्विद्युल्लेखामिव कुसुममालां परिमल-
भ्रमद्भृङ्गश्रेणीध्वनिभिरुपगीतां तत इतः ।
दिगन्तं ज्योतिर्भिस्तुहिनकरगौरैर्धवलय-
न्नितः कैलासाद्रिः पतति वियतः किं पुनरिदम् ॥" (फ)

१३४ । सामदानादि भाषणम् ॥ (ब)

यथा चण्डकौशिके—धर्म्मः । तदेहि धर्म्मलोकमधितिष्ठ ।" (भ)

१३५ । पूर्ववाक्यन्तु विज्ञेयं यथोक्तार्थोपदर्शनम् । (म)

यथ वेण्याम्—"भीमः । बुद्धिमतिके ! क्व सा भानुमती, परिभवतु सम्प्रति पाण्डवदारान् ।" (य) ।

१३६ । वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यते ॥ (र)

---

(प) तदिति । यत् अद्भुतस्य सम्प्राप्तिरुपलब्धिः स्यात्, तदुपगूहनं नामाङ्गं भवेत्, उपगूहनमालिङ्गनं तुद्वया अद्भुतप्राप्तिरिति व्युत्पत्तेः ।

(फ) दधदिति । परिमलेन गन्धेन भ्रमन्त्या भृङ्गश्रेण्या भ्रमरसमूहस्य ध्वनिभिः उपगीतामुपशब्दिताम्, तथा विद्युल्लेखामिव उज्ज्वलामिति शेषः, कुसुममालां दधत् धारयन्, यथा तुहिनकरगौरैश्चन्द्रतुल्यशुभ्रवर्णैः ज्योतिर्भिः शरीरद्युतिभिः तत इतः सर्वतः दिगन्तं धवलयन् धवलीकुर्वन् कैलासाद्रिः वियतो गगनात् इतः अस्मिन् देशे पतति । इदं पुनः किमाश्चर्य्यमित्यर्थः ।

अत्र प्रद्युम्नस्य अद्भुतप्राप्तेरुपगूहनम् ।

(ब) सामेति । साम सन्तोषकरं वाक्यं दानादि च भाषणं नामाङ्गं भवेत् । अत्र व्युत्पत्तिः स्पष्टा ।

(भ) यथेति । अत्र सन्तोषकरवाक्याद्भाषणम् ।

(म) पूर्वेति । यथोक्तस्य उक्तानुरूपस्य अर्थस्य विषयस्य उपदर्शनं प्रदर्शनन्तु पूर्ववाक्यं नामाङ्गं विज्ञेयम् । पूर्ववाक्याश्रितत्वात् पूर्ववाक्यमिति संज्ञा ।

(य) यथेति । भानुमती दुर्य्योधनभार्य्या । अत्र "मथ्नामि कौरवशतं समरे न कोपात् ?" इत्याद्युक्तानुरूपस्य भानुमतीकर्त्तृक-पाण्डवदारपरिभवासम्भवरूपार्थस्य प्रदर्शनात् पूर्ववाक्यम् ।

(र) वरेति । वरप्रदानस्य अभीष्टविषयदानेच्छायाः सम्प्राप्तरुपस्थितिः प्रतीतिरिति यावत् काव्यसंहारो नामाङ्गम् इष्यते, तत्र तत्र व तत्तद्दृश्यकाव्यस्योपसंहारात

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—सर्वत्र "किन्ते भूयः प्रियमुपकरोमि" इति (ख)

१३७ । नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते । (ब)

यथा प्रभावत्याम्—

"राजानः सुतनिर्विशेषमधुना पश्यन्तु नित्यं प्रजा
जीयासुः सदसद्विवेकपटवः सन्तो गुणग्राहिणः ।
शस्यस्वर्णसमृद्धयः समधिकाः सन्तु क्ष्मामण्डले
भूयादव्यभिचारिणी त्रिजगतो भक्तिश्च नारायणे ॥" (श)

"इह च मुखसन्धौ उपक्षेप-परिकर-परिन्यास-युक्त्युद्भेद-समाधानानाम्, प्रतिमुखे च परिसर्पण-प्रगमन-वज्रोपन्यास-पुष्पाणाम्, गर्भे अभूताहरण मार्ग-त्रोटकाधिबल-क्षेपाणाम्, विमर्षे अपवाद-शक्ति-व्यवसाय-प्ररोचना-दानानां प्राधान्यम्; अन्येषाञ्च यथासम्भवं स्थितिः" इति केचित् (ष) ।

१३८ । चतुःषष्टिविधं ह्येतदङ्गं प्रोक्तं मनीषिभिः ॥
कुर्य्यादनियते तस्य सन्धावपि निवेशनम् ।
रसानुगुणतां वीक्ष्य रसस्यैव हि मुख्यता (स)

---

(ख) यथेति । सर्वत्र प्रायेण दृश्यकाव्ये । अत्र गन्धर्वे अभीष्टविषयदाने वक्तुरिच्छाया प्रतीत्या काव्यसंहारः ।

(ब) नृपेति । नृपस्य देशस्य आदिशब्दाद्देवतादीनाञ्च शान्तिः शान्तिविधानाशंसा प्रशस्तिर्नामाङ्ग-मभिधीयते, प्रशस्तिः सशंसा उक्तिरिति व्युत्पत्तेः । सम्बन्धस्य सामान्यरूपत्वात् नृपस्येत्यादि कर्तृत्वसम्बन्ध-षष्ठ्याः देशस्येति च अधिकरणत्वसम्बन्धषष्ठ्याः समास इति नानुपपत्तिः ।

(श) राजान इति । अधुना राजानः नित्यं सर्वदैव प्रजा जनान् सुतनिर्विशेषं पश्यन्तु ; सदसद्विवेके पटवः समर्थाः गुणग्राहिणश्च सन्तो जनाः जीयासुः सर्वोत्कर्षेण वर्त्तन्ताम् ; क्ष्मामण्डले भूमण्डले समधिकाः शस्यानां स्वर्णानाञ्च समृद्धयः सन्तु । अत्र स्वर्णपदं धनसामान्योपलक्षणम् ! त्रिजगतस्त्रिजगद्वासिनो जनस्य नारायणे अव्यभिचारिणी चिरस्थायिनी भक्तिश्च भूयात् ।

अत्र राजकर्तृकशान्त्यादेराशंसया प्रशस्तिः ।

(ष) इहेति । नाटकादौ दृश्यकाव्ये चेत्यर्थः । प्राधान्यं प्राधान्यात् तत्तत्सन्धावश्यं स्थितिः । अन्येषां विलोभनादीनाम् ।

(स) अथ तर्हि किन्तावद्भवन्मतमित्याह चतुरिति । मुखसन्धेरङ्गानि द्वादश, प्रतिमुखादीनां चतुर्णान्तु प्रत्येकत्त्व एव त्रयोदशेति मिलित्वा चतुःषष्टिविधम् अङ्गं मनीषिभिः प्रोक्तम् । रसस्य अनुगुणताम् आनुकूल्यं

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—वेणीसंहारे तृतीयाङ्के दुर्योधनकर्णयोर्महत् सम्प्रधारणम् । एवमन्यत्रापि (छ) । यत्तु रुद्रटादिभिः—"नियम एव" इत्युक्तं तल्लक्ष्यविरुद्धम् (च) ।

१३९ । इष्टार्थरचनाश्चर्य्य-लाभो वृत्तान्तविस्तरः ।
रागप्राप्तिः प्रयोगस्य गोप्यानां गोपनं तथा ।
प्रकाशनं प्रकाश्यानामङ्गानां षड्विधं फलम् ॥
अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत् ।
अङ्गहीनं तथा काव्यं न प्रयोगाय युज्यते ॥ (क)

१४० । सम्पादयेतां सन्ध्यङ्गं नायकप्रतिनायकौ ।
तदभावे पताकाद्यास्तदभावे तथेतरत् (ख)

---

वौचित्य कविः अनियते अनिर्द्दिष्टेऽपि सन्धौ तस्य अङ्गस्य निवेशनं कुर्य्यात् । तथा च रसानुकूल्यसम्भवे मुखसन्ध्यादिनिर्द्दिष्टविलोभनादीन्यङ्गानि प्रतिमुखादिसन्धावपि कविः कर्त्तुमर्हतीति भावः । हि यस्मात् रसस्यैव मुख्यता शब्दार्थाङ्गादिमध्ये प्राधान्यम् । अतः प्रधानपुरुष्यनुरोधेन अप्रधानानां विपर्य्ययोऽपि सङ्गच्छत एवेति भावः ।

(छ) यथेति । गर्भसन्ध्यन्तर्भूते तृतीयाङ्के इत्यर्थः । सम्प्रधारणं कर्त्तव्यविषये युक्तिरूपं सम्प्रधारणाख्यं मुखसन्ध्यङ्गम् । एवमिति । यथा मम वङ्गीयप्रतापनाटके—

"वङ्गदेशपतिरेष सर्वथा यस्य याचकतया समाकुलः ।
तत्तु रत्नमभिभाति यद्गृहे तस्य सम्भवति किं दरिद्रता ॥"

इति गर्भसन्धौ विलासो नाम प्रतिमुखसन्ध्यङ्गम् ।

(च) यत्त्विति । नियम एव उक्तैरङ्गैरुक्तेष्वेव सन्धिषु स्थातव्यमित्यं नियम एवेत्यर्थः । लक्ष्यविरुद्धं प्रसिद्धनाटकादिप्रयोगविरुद्धम् । यथा दर्शितं महत् सम्प्रधारणमिति ।

(क) ननूक्तानामङ्गानां किं नाम प्रयोजनमित्याह इष्टार्थेति । इष्टार्थस्य अभिप्रेतविषयस्य रचना, आश्चर्य्यलाभो द्रष्टुर्विस्मयप्राप्तिः, वृत्तान्तविस्तर उपाख्यानस्य विशालता, प्रयोगस्य सम्बन्धे रागप्राप्तिर्द्रष्टुरिच्छोत्पत्तिः, गोप्यानां विषयाणां गोपनम्, तथा प्रकाश्यानां विषयाणां प्रकाशनम् एतत् षड्विधम् अङ्गानां फलं प्रयोजनम् । यद्वत् हस्तपदाद्यङ्गहीनो नर आरम्भक्षमः कार्य्यकरणसमर्थो न भवेत्, तथा अङ्गैरुक्तैः सन्ध्यङ्गैर्हीनं काव्यं रूपकं प्रयोगाय अभिनयाय न युज्यते नोपयोगि भवति ।

(ख) सम्पेत्यि । नायकप्रतिनायकौ सन्ध्यङ्गं सम्पादयेतां वाचा कुर्य्याताम्, तदभावे सन्ध्यङ्गसम्पादनासम्भवे पताका आद्यशब्दात् कार्य्यप्रभृतीरर्थकृतीः सम्पादयेताम्, तस्याप्यभावे तथा इतरत् नाट्यवस्त्वादिकं सम्पादयेताम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रायेण प्रधानपुरुषप्रयोज्यानि सन्ध्यङ्गानि भवन्ति। किन्तूपक्षेपादित्रयं बीजस्याल्पमात्रसमुद्दिष्टत्वादप्रधानपुरुषप्रयोजितमेव साधु (ग)।

१४१। रसव्यक्तिमपेक्ष्यैषामङ्गानां सन्निवेशनम्।
न तु केवलया शास्त्र-स्थितिसम्पादनेच्छया॥ (घ)

तथा च यद्वेण्यां दुर्य्योधनस्य भानुमत्या सह विप्रलम्भो दर्शितस्तत्तादृशेऽवसरे अत्यन्तमनुचितम् (ङ)।

१४२। अविरुद्धन्तु यद्वृत्तं रसादिव्यक्तयेऽधिकम्।
तदप्यन्यथयेद्धीमान् न वदेद्वा कदाचन॥ (च)

अनयोरुदाहरणं सत्प्रबन्धेष्वभिव्यक्तमेव (छ)।

अथ वृत्तयः।

१४३। शृङ्गारे कौशिकी वीरे सात्त्वत्यारभटी पुनः।
रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती॥

---

(ग) व्याचष्टे प्रायेणेति। प्रधानेति। एतेन नायकादिपदद्वयं प्रधानपात्रमात्रोपलक्षणमिति दर्शितम्।

(घ) रसेति। रसस्य व्यक्तिं प्रकाशम् अपेक्ष्य कविः एषामङ्गानां सन्निवेशनं कुर्य्यात्, किन्तु केवलया शास्त्रस्थितिसम्पादनेच्छया एतन्नाट्यशास्त्रोक्तिरक्षणेच्छया न अङ्गानां सन्निवेशनं कुर्य्यादित्यर्थः। एतेन प्रकृतरसव्यक्तौ रसभङ्गे नाट्यशास्त्रनिर्द्दिष्टमप्यङ्गं कविः परिहरेदिति दर्शितम्।

(ङ) तथा चेति। विप्रलम्भः शृङ्गारः। दर्शित इति। केवलनाट्यशास्त्रस्थितिसम्पादनेच्छया प्रतिमुखसन्धेरङ्गसमूहसन्निवेशनार्थं कविना उपनिबद्ध इत्यर्थः। तादृशेऽवसरे उभयपक्षस्य तुमुलसंग्रामसमये, अत्यन्तमनुचितम्, प्रकृतवीररसविरोधित्वादिति भावः।

(च) अविरुद्धमिति। यत् वृत्तं वृत्तान्तस्तु रसादिव्यक्तये रसभावादिप्रकाशाय अविरुद्धम् अप्रतिकूलम्, अथ च अधिकम् अतिरिक्तम् अनावश्यकं भवति; धीमान् कविः तदपि अन्यथयेत् अन्यथा कुर्य्यात् रसोपयोगीकृत्य रचयेत्, वा अथवा कदाचनापि न वदेत् तदुपेक्ष्यैव रसोपयोगि वृत्तान्तान्तरं वर्णयेदित्यर्थः।

(छ) अनयोरिति। अनयो रसानुपयोगिवृत्तस्य अन्यथाकरणाकथनयोः सत्प्रबन्धेषु शाकुन्तलाद्युत्कृष्टदृश्यकाव्येषु। यथा शाकुन्तले—"तस्मात्त्वं सर्वदा भर" इति महाभारतवर्णितदंवबाण्या शकुन्तलापरिग्रहवृत्तान्तं विहाय, विशेषेण विप्रलम्भाभिव्यक्तये शकुन्तलाया अन्तर्धानमेव निबद्धमित्यन्यथाकरणम्। यथा वा वेणीसंहारे कर्णपर्वोयराजहंस-काकवृत्तान्तादीनां सर्वथैवाकथनम्।



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः ।
स्युर्नायिकादिव्यापार-विशेषा नाटकादिषु ॥ (ज)

तत्र कौशिकी ।

१४४ । या श्लक्ष्णनेपथ्यविशेषचित्रा
स्त्रीसङ्कुला पुष्कलनृत्यगीता ।
कामोपभोगप्रभवोपचारा
सा कौशिकी चारुविलासयुक्ता ॥ (झ)

१४५ । नर्म्म च नर्म्मस्फूर्ज्जो नर्म्मस्फोटोऽथ नर्म्मगर्भश्च ।
चत्वार्य्यङ्गान्यस्याः—(ञ)

तत्र—

१४६ । वैदग्ध्यक्रीड़ितं नर्म्म ॥
इष्टजनावर्ज्जनकृत्तच्चापि त्रिविधं मतम् ।
विहितं शुद्धहास्येन सश्रृङ्गारभयेन च ॥ (ट)

---

(ज) शृङ्गार इति । शृङ्गारे रसे कौशिकी नाम वृत्तिः, वीरे रसे सात्त्वती नाम वृत्तिः, रौद्रे वीभत्से च रसे पुनरारभटी नाम वृत्तिः, सर्वत्र अपरेषु सर्वेषु रसेषु भारती नाम वृत्तिः स्यात् । नायिकाद्या आदिशब्दान्नायकप्रतिनायकादीनां पात्राणां व्यापारविशेषाश्चेष्टाविशेषरूपाः, सर्वनाट्यस्य सकलप्रकाराभिनयस्य मातृका मातृवदुत्पादिकाः, एताश्चतस्रो वृत्तयो नाटकादिषु दृश्यकाव्येषु स्युः । एतासां मध्ये कविः कौशिकीं वृत्तिमवलम्ब्य शृङ्गाररसप्रधानं नाटकादिकं रचयेदित्यर्थः । एवमन्यत्रापि । तत्र वर्त्तते रसोऽनयेति व्युत्पत्तेर्नायिकादिव्यापारविशेषो वृत्तिरिति वृत्तिलक्षणम् । तद्विशेषे कौशिक्यादिशब्दास्तु डित्यादिवद्रूढ़ा । आदिरसशृङ्गारसम्बन्धिवृत्तेरेवादौ बुद्धिविषयत्वान्नायिकायाश्च तत्प्रयोजकत्वात् नायिकादिव्यापारेत्युक्तम् ।

(झ) येति । श्लक्ष्णेन सूक्ष्मेण नेपथ्यविशेषेण नायिकादीनां वेशविशेषेण चित्रा आश्चर्य्या, स्त्रसङ्कुला योषिद्बहुला, पुष्कलानि बहुलानि नृत्यगीतानि यस्यां सा, कामोपभोगाय प्रभवा उत्पन्ना उपचारा व्यवहारा यस्यां सा, तथा चारुभिर्विलासैः प्रागुक्तलक्षणैर्युक्ता या वृत्तिः, सा कौशिकी स्यात् ।

(ञ) नर्म्मेति । नर्म्म, नर्म्मस्फूर्ज्जः, नर्म्मस्फोटः, नर्म्मगर्भश्च—एतानि चत्वारि अस्याः कौशिकीवृत्तेरङ्गानि स्युः ।

(ट) वैदग्ध्येति । इष्टजनस्य दयितजनस्य आवर्ज्जनकृत् सन्तोषकरं वैदग्ध्यक्रीड़ितं वैदग्ध्येन

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र केवलहास्येन विहितं यथा रत्नावल्याम्—"वासवदत्ता । (फलकमुद्दिश्य सहासम्) एसा वि अवरा तव समीवे जा लिहिदा, एदं किं अज्जवसन्तस्स विणाणं ।" (ठ) ।

सशृङ्गारहास्येन यथा शाकुन्तले—"राजानं प्रति शकुन्तला । असंतोसे उण किं करेदि । राजा । इदम् (इति व्यवसितः) । शकुन्तला । (वक्त्रं ढौकते) ।" (ड) ।

सभयहास्येन यथा रत्नावल्यामालेख्यदर्शनावसरे—"सुसङ्गता । जाणिदो मए एस वुत्तन्तो समं चित्तफलएण । ता देवीए गदुअ णिवेदइस्सं ।" (ढ) ।

एतद्वाक्यसम्बन्धि नर्म्म उदाहृतम् । एवं वेशचेष्टासम्बन्ध्यपि (ण) ।

१४७ । नर्म्मस्फूर्जः सुखारम्भो भयान्तो नवसङ्गमः । (त)

यथा—मालविकायां सङ्केतनायकमभिसृतायां "नायकः (थ) ।

---

क्रीड़नं नर्म्म स्यात् । तत्रापि नर्म्म, शुद्धं केवलं यत् हास्यं तेन, शृङ्गारभयाभ्यां सहेति तेन च विहितं सत् त्रिविधं मतम् । तथा च केवलहास्येन विहितम्, सशृङ्गारहास्येन विहितम्, सभयहास्येन विहितञ्चेति ।

(ठ) तत्रेति । "एवाप्यपरा तव समीपे या लिखिता, एतत् किमार्य्यवसन्तस्य विज्ञानम् ।" इति संस्कृतानुवादः । विज्ञानं शिल्पनैपुण्यम् ।

अत्र शृङ्गारभयाभ्याममिश्रितेन हास्येन विहितं वासवदत्ताया नर्म्म ।

(ड) सशृङ्गारेति । "असन्तोषे पुनः किं करोति ।" इति संस्कृतानुवादः । इदं करोतीत्यन्वयः । व्यवसितश्चुम्बितुं प्रवृत्तः । ढौकते परावर्त्तयति ।

अत्र सशृङ्गारहास्येन विहितं शकुन्तलाया नर्म्म ।

(ढ) सभयेति । "ज्ञातो मया एष वृत्तान्तः समं चित्रफलकेन । तद्देव्यै गत्वा निवेदयिष्यामि ।" इति संस्कृतानुवादः ।

अत्र सभयहास्येन विहितं सुसङ्गताया नर्म्म ।

(ण) एवमिति । उदाहृतमिति शेषः । वेशसम्बन्धि नर्म्म यथा—शाकुन्तले द्वितीयाङ्के विदूषकस्य । चेष्टासम्बन्धि यथा—मृच्छकटिके शकारस्य पदपरिवर्त्तनादिकम् ।

(त) नर्म्मेति । सुखमारम्भे यस्य सः, भयमन्ते यस्य सः तादृशो नवसङ्गमः नर्म्मस्फूर्जः स्यात्, नर्म्मणा स्फूर्जति प्रकाशते इति व्युत्पत्तेः ।

(थ) यथेति । सङ्केते सङ्केतस्थाने विद्यमानो नायकः सङ्केतनायकस्तम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"विसृज सुन्दरि ! सङ्गमसाध्वसं ननु चिरात्प्रभृति प्रणयोन्मुखे ।
प्रतिगृहाण गते सहकारतां त्वमतिमुक्तलताचरितं मयि ॥ (द)

मालविका—भट्टा ! देवीए भएण अप्पणो वि पिअं कत्तुं ण पारेमि ।"
इत्यादि (ध) ।

अथ नर्म्मस्फोटः ।

१४८ । नर्म्मस्फोटो भावलेशैः सूचितोऽल्परसो मतः । (न)

यथा मालतीमाधवे—

"गमनमलसं शून्या दृष्टिः शरीरमसौष्टवं
श्वसितमधिकं किं न्वेतत् स्यात् किमन्यदितोऽथवा ।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥" (प)

अलसगमनादिभिर्भावलेशैर्माधवस्य मालत्यामनुरागः स्तोकः प्रकाशितः (फ) ।

---

(द) विसृजेति । ननु सुन्दरि ! हे मालविके ! सङ्गमविषये साध्वसं भयं विसृज परित्याज । चिरात्प्रभृति बहुकालादवधि प्रणयोन्मुखे तव प्रेमाभिलाषिणि सहकारतां गते आम्रतरुत्वं प्राप्ते मयि, त्वम् अतिमुक्तलताया माधवीलताया आचरितं व्यवहारं प्रतिगृहाण स्वीकुरु, सहकारतरुं माधवीलतेव त्वं मामालिङ्गेत्यर्थः ।

(ध) मालेति । "भर्त्तः ! देव्या भयेन आत्मनोऽपि प्रियं कर्त्तुं न पारयामि ।" इति संस्कृतानुवादः । अत्र प्रियतमाश्लिष्टसन्दर्शनेन सुन्दरीति सम्बोधनेन च सुखारम्भात् अन्ते भयाच्च पद्यमारभ्य गद्यांशे मालविकाया नर्म्मस्फूर्जः ।

(न) नर्म्मेति । भावलेशैः कुतोऽपि प्रकाशितैर्मानसिकप्रथमसूक्ष्मविकारैः सूचितो द्योतितः, अल्पो रसः शृङ्गारो यस्मिन् स तादृशो व्यापारो नर्म्मस्फोटो मतः, नर्म्मणः स्फोटः प्रकाशो यस्मिन्निति व्युत्पत्तेः ।

(प) गमनमिति । माधवमागच्छन्तमवलोक्य मकरन्दस्योक्तिरियम् । माधवस्य गमनम् अलसं मन्थरम्, दृष्टिः शून्या चिन्ताविष्टत्वान्निर्विषया, शरीरम् असौष्ठवम् अङ्गसंस्काराभावादागन्तुकसौन्दर्य्यरहितम् ; श्वसितं निश्वासः अधिकं स्वाभाविकाद्दीर्घम् ; एतत् किन्नु स्यात् ? अथवा इतो मदनावेशात् अन्यत् किं स्यात् भवितुमर्हति अपि तु किमपि नेत्यर्थः । येन हि भुवने कन्दर्पस्य आज्ञा आसत्त्यादेशः भ्रमति सर्वान् प्रत्येवाप्रतिहता सती प्रवर्त्तते ; यौवनञ्च विकारि मनोविकारजननशीलम् ; ललितमधुराः कोमलसुन्दराः ते ते प्रसिद्धाः भावाश्चन्द्रचन्दनादयः पदार्थाश्च धीरतां धैर्य्यं क्षिपन्ति निरस्यन्ति ।

(फ) लक्ष्ये लक्षणं सङ्गमयति अलसेति । अलसगमनादिभिरलसगमनादिसूचितैः । प्रकाशित इति । अतएवात्र नर्म्मस्फोट इति भावः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१४९ । नर्म्मगर्भो व्यवहृतिर्नेतुः प्रच्छन्नवर्त्तिनः ॥ (ब)

यथा—तत्रैव सखीरूपधारिणा माधवेन मालत्या मरणव्यवसाय-वारणम् (भ) ।

अथ सात्त्वती ।

१५० । सात्त्वती बहुला सत्त्व-शौर्य्यत्यागदयार्ज्जवैः ।
सहर्षा क्षुद्रशृङ्गारा विशोका साद्भुता तथा ॥
उत्थापकोऽथ सांघात्यः (१) संलापः परिवर्त्तकः ।
विशेषा इति चत्वारः सात्त्वत्याः परिकीर्त्तिताः ॥ (म)

१५१ । उत्तेजनकरी शत्रोर्वागुत्थापक उच्यते । (य)

यथा महावीरचरिते—

"आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यन्तु ममापि सम्प्रति कुतस्त्वद्दर्शने चक्षुषः ।
त्वत्साङ्गत्यसुखस्य नास्मि विषयस्तत् किं वृथा व्याहृतैः ?
अस्मिन् विश्रुतजामदग्न्यदमने पाणौ धनुर्जृम्भताम् ॥" (र)

---

नर्म्मेति । प्रच्छन्नवर्त्तिनो गुप्तभावेन विद्यमानस्य नेतुर्नायकस्य व्यवहृतिर्व्यवहारो नर्म्मगर्भ इत्युच्यते, नर्म्म गर्भे यस्येति व्युत्पत्तेः ।

(भ) यथेति । सखीरूपधारिणा लवङ्गिकास्थाने विद्यमानेनेत्यर्थः । अयं वृत्तान्तस्तु मालती-माधवषष्ठाङ्के द्रष्टव्यः ।

(म) सात्त्वतीति । सत्त्वमध्यवसायः, शौर्य्यं बलम्, त्यागो दानशक्तिः, दया अनुकम्पा, आर्ज्जवं सरलता तैः बहुला प्रायेण पूर्णा, सहर्षा, क्षुद्रशृङ्गारा, विशोका शोकविहीना, तथा साद्भुता या वृत्तिः सा सात्त्वती । तस्याः सात्त्वत्याः—उत्थापकः, सांघात्यः, संलापः, परिवर्त्तकश्चेति चत्वारो विशेषा भेदाः परि-कीर्त्तिताः ।

(य) उत्तेजनेति । शत्रोः प्रतिपक्षस्य उत्तेजनकरी कोपोत्पादिनी वाग् वाक्यम् उत्थापको नाम सात्त्वतीभेद उच्यते, उत्थापयति उद्यमयतीति व्युत्पत्तेः ।

(र) आनन्दायेति । रावणनियुक्तेन वालिना रामायोक्तमिदम् । मया त्वं प्रियदर्शनत्वादानन्दाय,

---

(१) सं[illegible] इति पाठान्तरम् ।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**१५२ । मन्त्रार्थदैवशक्त्यादेः सांघात्यः (१) सङ्घभेदनम् ॥ (ल)**

मन्त्रशक्त्या यथा—मुद्राराक्षसे राक्षससहायानां चाणक्येन स्वबुद्ध्या भेदनम् । अर्थशक्त्यापि तत्रैव । दैवशक्त्या यथा—रामायणे रावणाद्विभीषणस्य भेदः ।

**१५३ । संलापः स्याद्गम्भीरोक्तिर्नानाभावसमाश्रयः । (व)**

यथा वीरचरिते—"रामः । अयं सः, यः किल सपरिवारकार्त्तिकेयविजयावर्जितेन भगवता नीललोहितेन परिवत्सरसहस्रान्तेवासिने तुभ्यं प्रसादीकृतः परशुः ? । परशुरामः । राम । दाशरथे ! स एवायमार्य्यपादानां प्रियः परशुः ।" इत्यादि (श) ।

**१५४ । प्रारब्धादन्यकार्य्याणां करणं परिवर्त्तकः ॥ (ष)**

---

अलौकिकसौन्दर्य्यात् विस्मयाय च, हन्तव्यत्वात् दुःखाय वा दृष्टोऽसि । तु किन्तु सम्प्रति तव विनाशकाले त्वद्दर्शने मम चक्षुषी वैतृष्ण्यं तृष्णानिवृत्तिः कुतः स्यात् अपि तु कुतोऽपि नेत्यर्थः, अधिककालस्थायित्वाभावादिति भावः । तव साङ्गत्येन सङ्गतत्वेन सम्भाषणेन यत् सुखं तस्य विषयो भाजनं नास्मि शत्रुत्वादित्याशयः, तत्तस्मात् वृथा व्याहृतैरीदृशैरनर्थकजल्पितैः किं प्रयोजनम् ? अपि तु किमपि नेत्यर्थः । अस्मिन् दृश्यमाने, विश्रुतं महावीरत्वेन विख्यातं जामदग्न्यं परशुरामं दमयतीति तस्मिन् तव पाणौ धनुर्जृम्भतां युद्धाय प्रकाशताम् ।

अनेन रामस्योत्तेजनकरणादत्र उत्थापको नाम सात्त्वतीभेदः ।

(ल) मन्त्रेति । मन्त्रस्य मन्त्रणायाः अर्थस्य धनस्य दैवस्य नियतेर्वा शक्तिः आदिशब्दात् सहायशक्तिप्रभृतेश्च सकाशाद्धेतोः सङ्घभेदनं सम्मिलितानां पृथक्करणं सांघात्यो नाम सात्त्वतीभेद उच्यते । संघात एव सांघात्यः स च "उपकृतं बहु तत्र" इत्यादिवत् रूढ़िवशाद्विपरीतलक्षणया संघातभेदेऽपि वर्त्तते ।

(व) संलाप इति । नानाभावानां बहुविधाभिप्रायाणां समाश्रयो व्यञ्जकसम्बन्धेनाश्रयीभूता नानाभावव्यञ्जिकेत्यर्थः गभीरा निपुणोन्नेयार्था उक्तिः संलापो नाम सात्त्वतीभेदः स्यात् ।

(श) यथेति । सपरिवारस्य ससहायस्य कार्त्तिकेयस्य विजयेन आवर्जितः प्रीतस्तेन । नीललोहितेन महादेवेन । परिवत्सरसहस्रान्तेवासिने सहस्रसंख्यकवत्सरपर्य्यन्तं छात्रत्वं गताय । प्रसादीकृतः अनुग्रहेण दत्तः । आर्य्यपादानां गुरोः शिवस्य ।

अत्र सपरिवारेत्यादिना त्वं महावीर इति परिवत्सरेत्यादिना महाध्यवसायीति प्रिय इत्यनेन च परशुरतीवोत्कृष्ट इति सूचितमिति संलापः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

---

(१) अत्रापि संहास्य इति पाठभेदः ।

यथा वेण्याम्—"भीमः। सहदेव! गच्छ त्वं गुरुमनुवर्त्तस्व; अहमप्यस्त्रागारं प्रविश्यायुधसहायो भवामीति यावत्। अथवा आमन्त्रयितव्यैव मया पाञ्चाली।" इति (ख)।

अथ आरभटी।

१५५। मायेन्द्रजालसंग्राम-क्रोधोद्भ्रान्तादिचेष्टितैः।
संयुक्ता वधबन्धाद्यैरुद्धतारभटी मता॥
वस्तूत्थापनसम्फेटौ संक्षिप्तिरवपातनम्।
इति भेदास्तु चत्वार आरभट्याः प्रकीर्त्तिताः॥ (ङ)

१५६। मायाद्युत्थापितं वस्तु वस्तूत्थापनमुच्यते। (च)

यथोदात्तराघवे—

"जीयन्ते जयिनोऽपि सान्द्रतिमिरव्रातैर्वियद्व्यापिभि-
र्भास्वन्तः सकला रवेरपि कराः कस्मादकस्मादमी।
एते चोग्रकबन्धकण्ठरुधिरैराध्मायमानोदराः
मुञ्चन्त्याननकन्दरानलमुचस्तीव्रान् रवान् फेरवाः॥" इत्यादि (छ)।

---

(घ) प्रारब्धादिति। प्रारब्धादारब्धकार्य्यात् अन्यापि यानि कार्य्याणि तेषां करणं विधानं परिवर्त्तको नाम सात्त्वतीभेदः स्यात्, परिवर्त्तयति कर्त्तारमिति व्युत्पत्तेः।

(ख) यथेति। अत्र अथवेत्यादिना अन्यकार्य्यकरणोपक्रमात् परिवर्त्तकः।

(ङ) मायेन्द्रेति। माया कुहकम्, इन्द्रजालं विस्मयजनकव्यापारविशेषः, संग्रामो युद्धम्, क्रोधेन उद्भ्रान्तम् अधीरतया कार्य्यकरणम्, आदिशब्दात् साहसप्रभृति च तादृशैश्चेष्टितैर्व्यापारैः वधबन्धाद्यैश्च व्यापारैः संयुक्ता समन्विता, उद्धता रौद्रा वृत्तिः आरभटी नाम मता। अस्या आरभट्याः वस्तूत्थापनम्, सम्फेटः, संक्षिप्तिः, अवपातनञ्च, इति चत्वारो भेदाः प्रकीर्त्तिताः।

(च) मायेति। मायया आदिशब्दादिन्द्रजालेन च वस्तु पदार्थः यत् उत्थापितम् आविष्कृतं भवति तद्वस्तूत्थापनं नाम आरभटीभेद उच्यते। अत्र व्युत्पत्तिः स्पष्टा।

(छ) जीयन्त इति। अकस्मात् सहसा कस्माद्धेतोः वियद्व्यापिभिः सान्द्रतिमिरव्रातैर्घनान्धकारसमूहैः जयिनोऽपि सर्वाभिभाविनोऽपि, भास्वन्तो दीप्तिमन्तः, सकलाः समस्ताः अमी रवेः कराः किरणा अपि जीयन्ते अभिभूयन्ते ?। उग्राणां भयङ्कराणां कबन्धानां मस्तकहीनकलेवराणां कण्ठरुधिरैः आध्मायमानानि पूर्य्यमाणानि उदराणि येषां ते, तथा आननानि मुखान्येव कन्दरा गुहास्ताभ्यः अनलमनलमिव मुञ्चन्ति आविष्कुर्वन्ति ये ते, एते फेरवाः शृगालाश्च तीव्रान् रवान् मुञ्चन्ति कुर्वन्तीत्यर्थः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१५७ । सम्फेटस्तु समाघातः क्रुद्धसत्वरयोर्द्वयोः ॥ (ख)

यथा—मालत्यां माधवाघोरघण्टयोः (ग) ।

१५८ । संक्षिप्तिर्वस्तुरचना शिल्पैरितरथापि वा ।

संक्षिप्तिः स्यान्निवृत्तौ च नेतुर्नेत्रन्तरग्रहः ॥ (घ)

यथा—उदयनचरिते किलिञ्जहस्तिप्रयोगः (ङ)। द्वितीयं यथा—वालिनिवृत्त्या सुग्रीवः (च)। यथा वा परशुरामस्यौद्धत्यनिवृत्त्या शान्तत्वापादनम्—"पुण्या ब्राह्मणजातिः" इति (छ)।

१५९ । प्रवेश-त्रास-निष्क्रान्ति-हर्ष-विद्रवसम्भवम् ।

अवपातनमित्युक्तम्—(ज)

यथा—कृतरावणे षष्ठेऽङ्के—(प्रविश्य खड्गहस्तः पुरुषः) इतःप्रभृति निष्क्रमणपर्य्यन्तम् ।

१६० । पूर्वमुक्तैव भारती ॥ (झ)

अथ नाट्योक्तयः ।

---

अत्र मायया घनान्धकारादीनां वस्तूनामुत्थापितत्वाद्वस्तूत्थापनम् ।

(ख) सम्फेट इति । क्रुद्धौ च तौ सत्वरौ त्वरान्वितौ चेति तयोस्तादृशयोर्द्वयोरेव परस्परं समाघातः सम्प्रहारस्तु सम्फेटो नामारभटीभेदः ।

(ग) यथेति । मालत्यां मालतीमाधवपञ्चमाङ्के ।

(घ) संक्षिप्तिरिति । शिल्पैः इतरथा अन्यप्रकारेणापि वा वस्तुनः पदार्थविशेषस्य रचना निर्म्माणं संक्षिप्तिः स्यात् ; तथा नेतुरेकस्य पात्रस्य निवृत्तौ सत्यां नेत्रन्तरग्रहः पात्रान्तरत्वेन ग्रहणं ज्ञानञ्च संक्षिप्तिः स्यात् पात्रान्तरत्वेन ग्रहणञ्च द्विधा सम्भवति—व्यक्तिभेदात् धर्म्मभेदाच्च ।

(ङ) यथेति । किलिञ्जहस्तिप्रयोगः काष्ठमयहस्तिन आविर्भावनम् । अत्र शिल्पेन काष्ठमयहस्तिरचनया संक्षिप्तिः ।

(च) द्वितीयमिति । अत्र वालिरूपस्य पात्रस्य निवृत्तौ व्यक्तिभेदेन सुग्रीवरूपपात्रस्य ज्ञानात् संक्षिप्तिः ।

(छ) तृतीय प्रकारमुदाहरति यथावेति । अत्र औद्धत्यनिवृत्तौ शान्तत्वप्रतिपादनेन धर्म्मभेदात् परशुरामस्य नेत्रन्तरत्वेन ग्रहणात् संक्षिप्तिः ।

(ज) प्रवेशेति । प्रवेशः, त्रासो भयम्, निष्क्रान्तिर्निर्गमनम्, हर्ष उत्सवः, विद्रवः पलायनञ्च तेभ्यः सम्भवतीति तत्तथोक्तं सङ्घर्षणमिति शेषः, अवपातनं नाम आरभटीप्रकारान्तरमुक्तमालङ्कारिकैरिति शेषः ।

(झ) पूर्वमिति । "भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः ।" इत्यत्रैवेत्यर्थः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१६१ । अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ।
सर्वश्राव्यं प्रकाशं स्यात् तद्भवेदपवारितम् ॥
रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते ।
त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम् ॥
अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम् ।
किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते ॥
श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाकाशभाषितम् । (ञ)

यः कश्चिदर्थो यस्माद्गोपनीयस्तस्यान्तरतः, ऊर्द्ध्वं सर्वाङ्गुलिनामितानामिकं त्रिपताकलक्षणं करं कृत्वा अन्येन सह यन्मन्त्र्यते तज्जनान्तिकम् । परावृत्यान्यस्य रहस्यकथनमपवारितम् । शेषं स्पष्टम् (ट) ।

१६२ । दत्तां सिद्धाञ्च सेनाञ्च वेश्यानां नाम दर्शयेत् ॥
दत्तप्रायाणि वणिजां चेटचेट्योस्तथा पुनः ।
वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत् ॥ (ठ)

---

(ञ) अश्राव्यमिति । यत् खलु वस्तु वाक्यम् अश्राव्यम् अन्यैः श्रोतुमशक्यम्, इह नाट्यशास्त्रे तद्वाक्यं स्वगतं मतम् ; स्वस्मिन्नात्मभावे गतं प्रत्यक्षत्वेन स्थितमिति व्युत्पत्तेः । आत्मगतमिति चास्यैव संज्ञान्तरम् । सर्वैः श्राव्यं श्रोतुं शक्यं वाक्यं प्रकाशं स्यात् । सर्वेषु प्रकाशते प्रत्यक्षीभवतीति व्युत्पत्तेः । परावृत्य अन्यं जनं पृष्ठतः कृत्वा अन्यस्य तद्भिन्नस्य जनस्य समीपे यत्तु रहस्यं गोपनीयं वस्तु प्रकाश्यते उच्यते, तदपवारितं नाम भवेत् ; अपवारितं पृष्ठवर्त्तिजनस्य श्रवणे वाधितमिति व्युत्पत्तेः । तिसृणां पताकानाम् उत्तोलितपताकादण्डानां समाहार इति त्रिपताकं तद्वत् करस्तेन उत्तोलिताङ्गुलीत्रयेण हस्तेनेत्यर्थः अन्यान् जनान् अपवार्य आवृत्य वाधित्वा कथामन्तरा यस्य कस्यचित् प्रस्तावस्य मध्ये, जनान्ते पात्रगणमध्य एव यत् अन्योन्यामन्त्रणं परस्परमालापः, तत् जनान्तिकं स्यात् । नाट्ये अभिनये पात्रं जनं विना, अनुक्तमपि अर्थं विषयं श्रुत्वेव श्रवणाभिनयं कृत्वा 'किं ब्रवीषि ?' इति इत्यर्थकं यत् प्रयुज्यते उच्यते, तत् आकाशभाषितं स्यात् ; आकाशे लक्ष्यपात्राभावात् शून्ये भाषितमिति व्युत्पत्तेः ।

(ट) विवृणोति य इति । अर्थो विषयः । यस्माज्जनात् । तस्य जनस्य अन्तरतो व्यवधाने । ऊर्द्ध्वम् उत्तोलितमिति करमित्यस्य विशेषणं सर्वासामङ्गुलीनां मध्ये नामिता अनामिका नाम अङ्गुली यस्य तम्, अतएव त्रिपताकलक्षणम् उत्तोलितपताकादण्डत्रयस्वरूपम् । मन्त्र्यते आलप्यते । शेषम् अवशिष्टम् अश्राव्यमित्यादिकं स्पष्टम्, अतो न व्याख्यायत इति भावः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वेश्या यथा—वसन्तसेनादिः। वणिग् विष्णुदत्तादिः। चेटः कलहंसादिः। चेटी मन्दारिकादिः (ड)।

१६३। नाम कार्य्यं नाटकस्य गर्भितार्थप्रकाशकम्। (ढ)

यथा—रामाभ्युदयादिः।

१६४। नायिकानायकाख्यानां संज्ञा-प्रकरणादिषु॥ (ण)

यथा—मालतीमाधवादिः।

१६५। नाटिकासट्टकादीनां नायिकाभिर्विशेषणम्। (त)

यथा—रत्नावली-कर्पूरमञ्जर्य्यादिः।

१६६। प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते॥ (थ)

यथा शाकुन्तले—"ऋषी। 'गच्छाव इत्यर्थे' साधयावस्तावत्।"

---

(ठ) दत्तामिति। वेश्यानां नाम दत्तां दत्ताशब्दान्तम्, सिद्धां सिद्धाशब्दान्तम्, सेनां सेनाशब्दान्तञ्च दर्शयेत् नाटकादौ कविरिति शेषः। वणिजां नामानि दत्तप्रायाणि बाहुल्येन दत्तशब्दान्तानि दर्शयेत्। प्रायपदोपादानात् कदाचित् कविर्भूत्यादिशब्दान्तमपि वणिजां नाम दर्शयितुमर्हतीति सूचितम्। तथा वसन्तादिषु कालेषु वर्ण्यस्य वर्णनायोग्यस्य वस्तुनः कलहंसादिपदार्थस्य यद्वयात्तृशानुपूर्वीकं नाम भवेत्, चेटचेट्योर्दासदास्योः पुनस्तादृशानुपूर्वीकं नाम भवेदित्यर्थः।

(ड) वेश्येति। वसन्तकाले कलहंसस्य वर्णनीयतया मालतीमाधवे माधवभृत्यस्य कलहंसेति नाम। मन्दारपुष्पस्य शीतकाले विकाशितया वर्णनीयत्वात् मालतीमाधवे विहारदास्या मन्दारिकेति नाम।

(ढ) नामेति। नाटकस्य नाम, गर्भितार्थस्य उपाख्यानान्तर्गतविषयविशेषस्य प्रकाशकं सूचकं कार्य्यं कविना कर्त्तव्यम्।

(ण) नायिकेति। प्रकरणं वक्ष्यमाणलक्षणम् आदिशब्दात् प्रकाख्यरूपकविशेषादयश्च तेषु, नायिकानायकाख्यानां तत्तदुपाख्यानान्तर्गतनायिकानायकोभयमिलितसंज्ञानां समाना संज्ञा कार्य्येत्यर्थः। एतत्तु प्रायिकम्, वसन्तसेनाचारुदत्तसम्बन्धिदृश्यकाव्यस्य प्रकरणत्वेऽपि नाटकवन्मृच्छकटिकेति गर्भितार्थप्रकाशकसंज्ञादर्शनात्।

(त) नाटिकेति। नाटिकासट्टकयोर्वक्ष्यमाणलक्षणयोः आदिशब्दात् नाट्यरासकादीनाञ्च नायिकाभिर्नायिकानामभिः विशेषणम् अपरदृश्यकाव्येभ्यो व्यवच्छेदनं कार्य्यं नायिकानाम्नैव नाम कर्त्तव्यमित्यर्थः।

(थ) प्रायेणेति। गमेर्गमनार्थकधातोः स्थाने प्रायेण बाहुल्येन ण्यन्तकः कलापमते तु इनन्तः साधिः साधधातुः कविभिः प्रयुज्यते। एतत्तु प्रकरणादृश्यकाव्यपरमेव। तेन श्राव्यकाव्ये गमेः स्थाने तादृशसाधेः प्रयोगे अवाचकत्वदोष एवेति बोध्यम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१६७ । राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः ।
राजर्षिभिर्वयस्येति तथा विदूषकेण च ॥
राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च ।
स्वेच्छया नामभिर्विप्रैर्विप्र आर्य्येति चेतरैः ॥
वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः ।
वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परम् ॥
सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः ।
सूत्रधारो मारिषेति हण्डे इत्यधमः समाः ॥
वयस्येत्युत्तमैर्हंहो मध्यैरार्य्येति चाग्रजः ।
भगवन्निति वक्तव्याः सर्वैर्देवर्षिलिङ्गिनः ॥
वदेद्राज्ञीश्च चेटीश्च भवतीति विदूषकः ।
आयुष्मन् रथिनं सूतो वृद्धं तातेति चेतरः ॥
वत्स-पुत्रक-तातेति नाम्ना गोत्रेण वा सुतः ।
शिष्योऽनुजश्च वक्तव्योऽमात्य आर्य्येति चाधमैः ॥

(द) राजेति । भृत्यैरमात्यादिभिः राजा स्वामीति देवेति वा वाच्यः स्वामिशब्देन देवशब्देन वा सम्बोध्यो विशेषणीयो वेत्यर्थः । एवमन्यत्रापि । अधमैर्निकृष्टपात्रैः भट्टेति वाच्यः । तथा राजर्षिभिरपरैः राजभिर्विदूषकेण च राजा वयस्येति वाच्यः । ऋषिभिः स राजा राजन्निति अपत्यप्रत्ययेन "पाण्डव ! दाशरथे !" इत्यमपत्यप्रत्ययान्तशब्देन वा वाच्यः । विप्रैर्विप्रः स्वेच्छया अपत्यप्रत्ययान्तशब्दादिना सङ्केतितनामभिर्वा वाच्यः । इतरैः क्षत्रियादिभिश्च विप्र आर्य्येति वाच्यः । राज्ञा विदूषकः वयस्येति अथवा नाम्ना वाच्यः । नटीसूत्रधारौ परस्परम् आर्य्यनाम्ना वाच्यौ । परिभ्रमन्तात् सूत्रधारस्य पार्श्वे चरतीति पारिपार्श्विकः सूत्रधारादूनगुणो नटविशेषः । सूत्रधारं भाव इति वदेत् । सूत्रधारस्य पारिपार्श्विकं मारिषेति वदेत्, मा रेषति न हिनस्ति न नाशयति सभ्यानां शान्तिमिति माशब्दोपपदात् रिषधातोर्नाम्युपधत्वात् कप्रत्ययः । अधमैर्जनैः समाः स्वतुल्या अधमाः, हण्डे इति वक्तव्याः । उत्तमैर्जनैः स्वसमा जना वयस्येति वक्तव्याः । मध्यैर्जनैः स्वसमा जनाः हंहो इति वक्तव्याः । कनिष्ठेन भ्राता अग्रजो भ्राता आर्य्येति वक्तव्यः । सर्वैर्जनैः, देवाश्च ऋषयश्च लिङ्गिनो दण्डकमण्डलुप्रभृतितपस्विचिह्नधारिणश्च ते, भगवन्निति वक्तव्याः सम्बोध्याः । विदूषको राज्ञीश्च

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विप्रैरयममात्येति सचिवेति च भण्यते।
साधो इति तपस्वी च प्रशान्तश्चोच्यते बुधैः॥
अगृहीताभिधः (१) पूज्यः शिष्याद्यैर्विनिगद्यते।
उपाध्यायेति चाचार्य्यो महाराजेति भूपतिः॥
स्वामीति युवराजस्तु कुमारो भर्त्तृदारकः।
सौम्य भद्रमुखेत्येवमधमैस्तु कुमारकः॥
वाच्या प्रकृतिभी राज्ञः कुमारी भर्त्तृदारिका।
पतिर्यथा तथा वाच्या ज्येष्ठमध्याधमैः स्त्रियः॥
हलेति सदृशी प्रेष्या हञ्जे वेश्याऽज्जुका (२) तथा।
कुट्टिन्यम्बेत्यनुगतैः पूज्या च जरती जनैः॥
आमन्त्रणैश्च पाषण्डा वाच्याः स्वसमयागतैः।
शकादयश्च सम्भाष्या भद्रदत्तादिनामभिः॥

चेटीं दासीञ्च भवतीति वदेत्। सूतः सारथिः रथिनम्, आयुष्मन्निति वदेत्। इतरो युवा वालकश्च वृद्धं जनं तातेति वदेत्। पिता सुतः पुत्रः गुरुणा शिष्यः अग्रजेन अनुजश्च वत्स! इति, पुत्रक! इति, तात! इति वा राम! इत्यादिना नाम्ना वा गोत्रेण 'राघव!" इत्थमपत्यप्रत्ययान्तशब्देन वा वक्तव्यः। अधमैर्जनैः अमात्य आर्य्येति वक्तव्यः। विप्रैस्तु अयममात्यः अमात्येति सचिवेति च भण्यते सम्बोध्यते। बुधैरभिज्ञैर्जनैः तपस्वी च प्रशान्तो ब्रह्मविज्जनश्च साधो इति उच्यते। शिष्याद्यैर्जनैः पूज्यो जनः न गृहीता उच्चारिता अभिधा सङ्केतितं नाम यस्य स तादृशः कृत्वा विनिगद्यते यथासम्भवं महाभागेत्यादिना नाम्ना सम्बोध्यते इत्यर्थः। मानवकैराचार्य्यश्च उपाध्यायेति वाच्यः। प्रजाभिर्भूपतिः महाराजेति अथवा स्वामीति वाच्यः। युवराजस्तु उत्तममध्यमैर्जनैः कुमारो भर्त्तृदारको वा वाच्यः। अधमैर्जनैस्तु कुमारको युवराजः "सौम्य! अथवा भद्रमुख!" इत्येवं वाच्यः। प्रकृतिभिः प्रजाभिः राज्ञः कुमारी कन्या भर्त्तृदारिकेति वाच्या। ज्येष्ठमध्याधमैरुत्तममध्यमाधमैः सर्वैरेव जनैः पतिर्यथा यादृशसम्बोधनादिना वाच्यस्तथा तस्य स्त्रियोऽपि वाच्याः; राजेव राज्ञी स्वामिनीति देवीति भट्टिनीति च सम्बोध्येत्यर्थः। एवमन्यत्रापि। सदृशी स्वसमाना प्रेष्या सेविका हलेति वाच्या। वेश्या हञ्जे इति वाच्या। कुट्टिनी अज्जुकेति वाच्या। तथा अनुगतैर्जनैः पूज्या गुरुपत्नीप्रभृतिः स्त्री अजरत्यपि अम्बेति वाच्या, तथा जरती वृद्धा स्त्री अपूज्यापि अम्बेति वाच्या। पाषण्डाः कापालिकादयश्च स्वसमयागतै-

(१) स्वगृहीताभिधं इति पाठान्तरम्। (२) अज्जुकेति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यस्य यत्कर्म्म शिल्पं वा विद्या वा जातिरेव वा ।
तेनैव नाम्ना वाच्योऽसौ ज्ञेयाश्चान्ये यथोचितम् ॥ (द)

अथ भाषाविभागः ।

१६८ । पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम् ।
शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम् ।
आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत् ।
अत्रोक्ता मागधी भाषा राजान्तःपुरचारिणाम् ॥
चेटीनां राजपुत्राणां श्रेष्ठानाञ्चार्द्धमागधी ।
प्राच्या विदूषकादीनां धूर्त्तानां स्यादवन्तिजा (१) ॥
योधनागरिकादीनां दाक्षिणात्या हि दीव्यताम् ।
शवराणां शकादीनां शावरीं (२) सम्प्रयोजयेत् ॥

---

निंजव्यवहारप्राप्तैः आमन्त्रणैः कापालिक इत्यादिसम्बोधनपदैर्वाच्या । शकादयश्च शक-यवनप्रभृतिजातयस्तु भद्र-दत्तादिनामभिः सम्भाव्याः । यस्य यत् ताम्बूलविक्रयादिकं कर्म्म, यद्वा शिल्पम्, या वा विद्या या च वा जातिः, असौ सः तेनैव तत्तदनुसारिणैव नाम्ना वाच्यः ; "ताम्बूलिक ! चैत्रिक ! वैयाकरण ! रजक !" इत्यादिना सम्बोध्य इत्यर्थः । अन्ये च यथोचितं ज्ञेयाः । यथा सखिजनः—"हे सखे !" इत्यादि ।

(ध) पुरुषाणामिति । अत्र दृश्यकाव्ये, अनीचानामुत्तमानां मध्यमानाञ्च, कृतात्मनां शास्त्रादिषूत्पादितज्ञानानां शिक्षितानामित्यर्थः पुरुषाणां संस्कृतं नाम भाषा स्यात् । तेन उत्तमानां कृतात्मनां दुष्मन्तादीनां मध्यमानां कृतात्मनां तत्सारथिप्रभृतीनाञ्च शाकुन्तलादौ संस्कृतम् । तत्पञ्चमाङ्के राजपुरुषस्य शिक्षितत्वेऽपि नीचत्वान्न संस्कृतम्, मम वङ्गीयप्रतापे पञ्चमाङ्के केशवस्य अनीचत्वेऽपि अशिक्षितत्वान्न संस्कृतम् । एवमन्यत्रापि । तादृशीनाम् अनीचानां कृतात्मनाञ्च योषितां शौरसेनी नाम भाषा प्रयोक्तव्या । आसामुक्तविधानां योषितामेव तु गाथासु गीतबन्धेषु कविर्महाराष्ट्रीं भाषां प्रयोजयेत् ।. राज्ञः अन्तःपुरचारिणां वामनषण्ढादीनां मागधी भाषा उक्ता ।' चेटानां राजभृत्यानां राजपुत्राणां श्रेष्ठिनां राजवणिजाञ्च अर्द्धमागधी भाषा । विदूषकस्य आदिशब्दात् राजसुताधात्रेयीप्रभृतीनां प्राच्या भाषा । धूर्त्तानामक्षक्रीड़ाकारिणाम् अवन्तिजा आवन्ती भाषा । दीव्यतां क्रीड़ासक्तानां योधनागरिकादीनां योद्धृ-नागरिक-पौरप्रभृतीनां दाक्षिणात्या वैदर्भी भाषा । शवराणां म्लेच्छविशेषाणां शकयवनादीनाञ्च शावरीं भाषां कविः सम्प्र-

---

(१) अवन्तिका इत्यपि पाठः । (२) शकाराणां शकादीनां शाकारीम् इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वाह्लीकभाषोदीच्यानां (१) द्राविड़ीं द्रविड़ादिषु ।
आभीरेषु तथाभीरी चाण्डाली पुक्कसादिषु ।
आभीरी शावरी चापि काष्ठपत्रोपजीविषु (२) ।
तथैवाङ्गारकारादौ पैशाची स्यात् पिशाचवाक् ॥
चेटीनामप्यनीचानामपि स्यात् शौरसेनिका ।
बालानां षण्डकानाञ्च नीचग्रहविचारिणाम् ॥
उन्मत्तानामातुराणां सैव स्यात् संस्कृतं क्वचित् ।
ऐश्वर्य्येण प्रमत्तस्य दारिद्र्योपस्कृतस्य च ॥
भिक्षु-वल्कलधरादीनां (३) प्राकृतं सम्प्रयोजयेत् ।
संस्कृतं सम्प्रयोक्तव्यं लिङ्गिनीषूत्तमासु च ॥
देवी-मन्त्रिसुता-वेश्यास्वपि कैश्चित्तथोदितम् ।
यद्देश्यं नीचपात्रन्तु तद्देश्यं तस्य भाषितम् ॥

योजयेत् । उदीच्यानां नागप्रभृतिजातीनां वाह्लीकभाषा । द्रविड़ादिषु द्राविड़प्रभृतिपात्रेषु द्राविड़ी भाषा । आभीरेषु जातिविशेषेषु आभीरी भाषा । पुक्कसादिषु जातिषु चाण्डाली भाषा । काष्ठोपजीविषु आभीरी भाषा, पत्रोपजीविषु चापि शावरी भाषेति यथासंख्यम् । अङ्गारकारजातौ आदिशब्दात् चर्म्मकारजात्यादौ च तथैव आभीरी शावरी वा भाषा । पिशाचानां वाग्भाषा पैशाची स्यात् । अनीचानामुत्तममध्यमानां चेटीनां दासीनामपि शौरसेनिका भाषा स्यात् । बालानां शिशूनां षण्डकानां क्लीवानां नीचग्रहविचारिणां निकृष्टदैवज्ञानाम् उन्मत्तानाम् आतुराणाञ्च सा शौरसेनिकैव भाषा स्यात्, क्वचिदेषां संस्कृतमपि । ऐश्वर्य्येण प्रमत्तस्य धनमदेन मत्तस्य, दारिद्र्येण उपस्कृतस्य विकृतीकृतस्य, भिक्षोः परिव्राजकस्य, वल्कधरस्य वृक्षवल्कलधारिणः सन्यासिनः, आदिशब्दात् बौद्धसन्यासिप्रभृतेश्च प्राकृतं नाम वाक्यं कविः सम्प्रयोजयेत् लिङ्गिनीषु दण्डकमण्डल्वादितपस्विचिह्नधारिणीषु, उत्तमासु उत्कृष्टजातीयासु च नारीषु संस्कृतं कविना यथेच्छं सम्प्रयोक्तव्यम् । कैश्चिदालङ्कारिकैः देवी महिषी, मन्त्रिसुता वेश्या च तास्वपि, तथा संस्कृतं सम्प्रयोक्तव्यमित्युदितमुक्तम् । नीचपात्रं तन्तुवायादिकं यद्देश्यम्, यस्मिन् देशे उत्पन्नम्, तस्य भाषितं

(१) दिव्यानाम् इति क्वचित् पाठः । (२) काष्ठपात्रोपजीविषु इति पाठभेदः ।
(३) भिक्षुबन्धधरादीनाम् इति कैश्चित् पठितम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कार्य्यं तश्चोत्तमादीनां कार्य्यो भाषाविपर्य्ययः ।
योषित्-सखी-बाल-वेश्या-कितवाप्सरसां तथा ॥
वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा । (ध)

एषामुदाहरणान्याकरेषु (१) बोद्धव्यानि । भाषालक्षणानि मम तातपादानां भाषार्णवे (न) ।

१६९ । षट्‌त्रिंशल्लक्षणान्यत्र नाट्यालङ्कृतयस्तथा ॥
त्रयस्त्रिंशत् प्रयोज्यानि वीथ्यङ्गानि त्रयोदश ।
लास्याङ्गानि दश यथा-लाभं रसव्यपेक्षया ॥ (प)

यथालाभं प्रयोज्यानीति सम्बन्धः । अत्रेति नाटके ।

तत्र लक्षणानि ।

१७० । भूषणाक्षरसंघातौ शोभोदाहरणं तथा ।
हेतु-संशय-दृष्टान्तास्तुल्यतर्कः पदोच्चयः ॥

---

तद्देश्यं तद्देशीयम् । किञ्च कार्य्यतः प्रयोजनविशेषवशात् उत्तमादीनां नायिकादीनां स्त्रीणां भाषाविपर्य्ययः प्राङ्‌निर्द्दिष्टभाषेतरभाषाप्रयोगः कार्य्यः कविना कर्त्तव्यः । यथा मम वङ्गीयप्रतापे "शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम्" इत्यनेन शौरसेनीप्रयोगे कर्त्तव्येऽपि रौद्रादिरससौकर्य्यार्थं कल्याणीदेव्याः संस्कृतप्रयोगः । तथा वैदग्ध्यार्थं वैचित्र्यविशेषप्रतिपादनार्थं कविना योषिन्नायिका, सखी नायिकाया वयस्या, बालो राजादेः कुमारः, वेश्या उत्तमगणिका, कितवो धूर्त्तः अप्सरसश्च तासाम्, अन्तरान्तरा मध्ये मध्ये संस्कृतं प्रदातव्यम् । तत्र योषितो यथा मालतीमाधवे मालत्याः "ज्वलतु गगने" इत्यादि । सख्या यथा तत्रैव लवङ्गिकायाः "वयं तथा नाम" इत्यादि । बालस्य यथा अनर्घराघवे रामस्य । वेश्याया यथा मृच्छकटिके वसन्तसेनायाः "गर्ज वा वर्ष वा" इत्यादि । कितवाप्सरसान्तूह्यम् ।

(न) एषामिति । आकरेषु शाकुन्तलादिमूलग्रन्थेषु । भाषालक्षणानि बोद्धव्यानीत्यन्वयः ।

(प) षड़िति । अत्र नाटके षट्‌त्रिंशत् लक्षणानि, त्रयस्त्रिंशत् नाट्यालङ्कृतयः, त्रयोदश वीथ्यङ्गानि, तथा दश लास्याङ्गानि—एतानि रसव्यपेक्षया रसानुकूल्यमपेक्ष्य यथालाभं यथासम्भवं कविना प्रयोज्यानि । रसानुकूल्ये सम्भवत्येवामीषां प्रयोगो न पुनः प्रयोज्यान्येवेति नियम इति भावः ।

(फ) भूषणेति । भूषणम्, अक्षरसंघातः, शोभा, उदाहरणम्, हेतुः, संशयः, दृष्टान्तः, तुल्यतर्कः,

---

(१) आकरे इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निदर्शनाभिप्रायौ च ज्ञप्तिः (१) विचार एव च ।
दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा ॥
विशेषणनिरुक्ती च सिद्धिर्भ्रंशविपर्ययौ ।
दाक्षिण्यानुनयौ मालाऽर्थापत्तिर्गर्हणं तथा ॥
पृच्छा प्रसिद्धिः सारूप्यं संक्षेपो गुणकीर्त्तनम् ।
लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा ॥ (फ)

तत्र—

१७१ । लक्षणानि गुणैः सालङ्कारैर्योगस्तु भूषणम् । (ब)

यथा—"आक्षिपन्त्यरविन्दानि मुग्धे ! तव मुखश्रियम् ।
कोषदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥" (भ)

१७२ । वर्णनाक्षरसंघातश्चित्रार्थैरक्षरैर्मितैः ॥ (म)

---

पदोच्चयः, निदर्शनम्, अभिप्रायः, ज्ञप्तिः, विचारः, दिष्टम्, उपदिष्टम्, गुणातिपातः, गुणातिशयः, विशेषणम्, निरुक्तिः, सिद्धिः, भ्रंशः, विपर्ययः, दाक्षिण्यम्, अनुनयः, माला, अर्थापत्तिः, गर्हणम्, पृच्छा, प्रसिद्धिः, सारूप्यम्, संक्षेपः, गुणकीर्त्तनम्, लेशः, मनोरथः, अनुक्तसिद्धिः, प्रियवचश्च—एतानि षट्त्रिंशत् लक्षणानि इत्युच्यन्ते, लक्ष्यते नाटकस्वरूपं ज्ञायते एभिरिति व्युत्पत्तेः ।

(ब) लक्षणानीति । अथ गणितानां लक्षणानां लक्षणानि निरूप्यन्त इत्यर्थः । एतदुक्तिस्तु छन्दपूरणार्था । अलङ्कारैरुपमाद्यन्यतमैः सहेति तैः, गुणैर्वक्ष्यमाणमाधुर्य्यौजःप्रसादैः योगः परस्परमेलनन्तु भूषणं नाम लक्षणम् । भूषयति नाट्यमिति व्युत्पत्तेः ।

(भ) आक्षिपन्तीति । हे मुग्धे ! अरविन्दानि पद्मानि कर्त्तृणि, तव मुखश्रियं वदनशोभाम् आक्षिपन्ति अभिभवनाय निन्दन्ति । अथैषां मुखशोभाया अभिभवने का शक्तिरित्याह कोषेति । कोषो बीजकोष एव कोषो धनागारम्, दण्डो नालमेव दण्डश्चतुर्थोपायस्ताभ्यां समग्राणि परिपूर्णानि तेषाम्, एषामरविन्दानां किं कार्य्यं दुष्करमस्ति अपि तु किमपि नेत्यर्थः ।

अत्र श्लेषानुप्राणिता भेदे अभेदाध्यवसायमूला अतिशयोक्तिः कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः अर्थापत्तिश्चालङ्काराः, तथा प्रथमे पादे माधुर्य्यगुणः अन्यत्र तु प्रसादगुण इत्येतेषां सम्मेलनाद्भूषणम् ।

(म) वर्णनेति । चित्रो विचित्रः अर्थो येषां तैः, मितैरल्पैः अक्षरैर्वर्णैः वर्णना यत्किञ्चित् कथनम् अक्षरसंघातो नाम लक्षणम्, अक्षराणां संघातो मेलनमिति व्युत्पत्तेः ।

---

(१) प्राप्तिरिति पाठभेदः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा शाकुन्तले—"राजा। कच्चित् सखीं वो नातिबाधते शरीर-सन्तापः ?। प्रियंवदा। संपदं लद्धोसहो उवसमं गमिस्सदि।" (य)।

१७३। सिद्धैरर्थैः समं यत्राप्रसिद्धोऽर्थः (१) प्रकाशते।
श्लिष्टलक्षणचित्रार्था सा शोभेत्यभिधीयते॥ (र)

यथा—"सद्वंशसम्भवः शुद्धः कोटिदोऽपि गुणान्वितः।
कामं धनुरिव क्रूरो वर्जनीयः सतां प्रभुः॥" (ल)

१७४। यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात्।
साध्यतेऽभिमतश्चार्थस्तदुदाहरणं मतम्॥ (व)

यथा—"अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम्।
का दिनश्रीर्विनाऽर्केण का निशा शशिना विना॥" (श)

(य) यथेति। कच्चित् वेदितुमिच्छामीत्यर्थः "साम्प्रतं लब्धौषध उपशमं गमिष्यति" इति संस्कृतानुवादः। लब्धम् औषधं भवद्रूपं येन सः।

अत्र ईदृशैरक्षरैः "भवतैवास्याः स्मरसन्ताप उपशमनीयः" इति विचित्रार्थबोधनादक्षरसंघातः।

(र) सिद्धैरिति। सिद्धैः प्रसिद्धैः स्पष्टं प्रतीयमानैरर्थैः समं सह यत्र अप्रसिद्धो निगूढः कश्चिदर्थः प्रकाशते बुद्धिविषयीभवति, श्लिष्टलक्षणा द्विविधस्वरूपः चित्रो विचित्र अर्थो यस्याः सा तथोक्ता, सा शोभा नाम लक्षणमभिधीयते, नाट्यशोभनात् शोभेति व्युत्पत्तेः।

(ल) सदिति। सतो वंशात् कुलात् वेणुदण्डाच्च सम्भवः सञ्जातः शुद्धो निर्दोषः अवक्रश्च, कोटिं कोटिसंख्यकधनानि ददातीति सः, तथा कोटिसंख्यकशत्रूं द्यति चिपशायाः खण्डयति छिनत्तीति स च, तथा गुणैर्विद्यादाक्षिण्यादिभिः शिञ्जिन्या च अन्वितोऽपि ; क्रूरो निष्ठुरहृदयी वक्रश्च प्रभुः धनुरिव कामं यथेष्टं सतां वर्जनीयः ; क्रूरत्वेनैव सकलगुणापमर्द्दनादिति भावः। सतामिति कर्त्तरि षष्ठी।

अत्र प्रसिद्धसत्कुलजातत्वाद्यर्थैः सह अप्रसिद्धस्य उत्कृष्टवेणुजातत्वाद्यर्थस्य प्रकाशनात् श्लिष्टविचित्रार्थवत्त्वाच्च शोभा।

(व) यत्रेति। यत्र तुल्यार्थयुक्तेन समानविषयबोधकेन वाक्येन अभिप्रदर्शनात् अभिप्रायज्ञापनात् अभिमतोऽर्थः साध्यते प्रतिपाद्यते ; तदुदाहरणं नाम लक्षणं मतम् ; उदाह्रियते अस्मिन्निति व्युत्पत्तेः।

(श) अन्विति। जनातीतं लोकोत्तरगुणशालिनं कान्तं भर्त्तारम् अनुयान्त्या त्वया साधु कृतम्।

(१) असिद्धोऽर्थ इति पाठान्तरम्।



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**१७५ । हेतुर्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनात् (ष)**

यथा वेण्याम्—भीमं प्रति "चेटी । एवं मए भणिदं—भाणुमदि ! तुह्माणं अमुक्केसु केसेसु कधं अम्हाणं देवीए केसा संजमिअंति त्ति ।" (स)।

**१७६ । संशयोऽज्ञाततत्त्वस्य वाक्ये स्याद्यदनिश्चयः ॥ (ह)**

यथा ययातिविजये—

"इयं स्वर्गाधिनाथस्य लक्ष्मीः किं यक्षकन्यका ।
किञ्चास्य विषयस्यैव देवता किमु पार्वती ॥" (च)

**१७७ । दृष्टान्तो यत्तु (१) पक्षार्थसाधनाय निदर्शनम् । (क)**

यथा वेण्याम्—"भीमः । आर्य्ये ! उचितमेव तत्तस्याः, यतो दुर्य्योधनकलत्रं हि सा ।" इत्यादि (ख) ।

---

तथा च अर्केण सूर्य्येण विना का नाम दिनश्रीर्दिवसशोभा ? शशिना च विना का नाम निशा ? अपि तु क्वापि नेत्यर्थः ।

अत्र समानार्थबोधकेन द्वितीयार्द्धगतवाक्यद्वयेन स्वाभिप्रायमभिज्ञाप्य "चिरमेव भर्त्तृसंसर्गेणैव भार्य्या शोभते" इत्यभिमतार्थसाधनादुदाहरणम् ।

(ष) हेतुरिति । हेतुदर्शनात् उपयुक्तं कारणं प्रदर्श्य समासेन संक्षेपेणोक्तम्, इष्टकृत् अभिप्रेतार्थबोधकं वाक्यं हेतुर्नाम लक्षणम् । अस्य तु हेतुसम्बन्धात् हेतुर्नाम ।

(स) यथेति । "एवं मया भणितम्—भानुमति ! युष्माकम् अमुक्तेषु केशेषु कथमस्माकं देव्याः केशाः संयम्यन्त इति ।" इति संस्कृतानुवादः ।

अत्र भानुमत्याः केशमोक्षणरूपं द्रौपदीकेशसंयमनहेतुं प्रदर्श्य दुर्य्योधननिधनरूपाभिप्रेतार्थबोधकसंक्षेपोक्तवाक्योपन्यासात् हेतुः ।

(ह) संशय इति । अज्ञातं तत्त्वं येन तस्य तादृशस्य जनस्य वाक्ये यदनिश्चयः स्यात्, तत् संशयो नाम लक्षणम् । अनिश्चय एव संशयोत्पत्तेः संशयो नाम ।

(च) इयमिति । इयं किं स्वर्गाधिनाथस्य इन्द्रस्य लक्ष्मीः राजश्रीः ? किंवा यक्षकन्यका ? । किञ्च वा अस्यैव विषयस्य देशस्य देवता ? किमु वा पार्वती ? ।

अत्र अज्ञाततत्त्वस्य ययातेर्वाक्ये कन्यकातत्त्वनिश्चयाभावात् संशयः ।

(क) दृष्टान्त इति । पक्षे अर्थस्य साध्यस्य साधनाय यत्तु निदर्शनं हेतुप्रदर्शनम्, तत् दृष्टान्तो नाम लक्षणम्, दृष्टः अन्तः साध्यस्वरूपं यस्मादर्थादिति व्युत्पत्तेः ।

---

(१) यस्तु इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१७८ । तुल्यतर्को यदर्थेन तर्कः प्रकृतिगामिना (१) ॥ (ग)

यथा तत्रैव—

"प्रायेणैव हि दृश्यन्ते कामं स्वप्नाः शुभाशुभाः ।
शतसंख्या पुनरियं सानुजं स्पृशतीव माम् ॥" (घ)

१७९ । सञ्चयोऽर्थानुरूपो यः पदानां स पदोच्चयः । (ङ)

यथा शाकुन्तले—

"अधरः किशलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥" (च)

अत्र पदपदार्थयोः सौकुमार्यं सदृशमेव (छ) ।

१८० । यत्रार्थानां (२) प्रसिद्धानां क्रियते परिकीर्त्तनम् ॥
परपक्षव्युदासार्थं तन्निदर्शनमुच्यते । (ज)

---

(ख) यथेति । तस्या भानुमत्याः । एतत् परिहासकरणम् । अत्र भानुमतीरूपपक्षे परिहासकरणौचित्यरूपस्याध्यस्य दुर्य्योधनकत्तवलरूपहेतुप्रदर्शनात् दृष्टान्तः ।

(ग) तुल्येति । प्रकृतिगामिना प्रस्तुतेन अर्थेन विपरीण द्वारा यत् तर्को भाविविषयानुसन्धानं भवति स तु तुल्यतर्को नाम लक्षणम् । द्वारद्वारिणोविषययोः समानतर्कत्वात्तुल्यतर्क इति नाम ।

(घ) प्रायेणेति । प्रायेणैव शुभाशुभाः स्वप्नाः कामं हि पर्य्याप्तमेव दृश्यन्ते । इयमीदृशी पुनः स्वप्नानां शतसंख्या सानुजं दुःशासनादिभिः सहितं मां स्पृशतीव प्रत्येकं सम्बध्नातीव, अस्माकमपि शतसंख्यकत्वादिति भावः ।

अत्र प्रस्तुतानेकसर्पनिधनतर्कणद्वारा भविष्यदात्मादिनिधनतर्कणात्तुल्यतर्कः ।

(ङ) सञ्चय इति । अर्थानुरूपः अभिधेयसमानः कोमलार्थे कोमलः विकटार्थे च विकट इत्यर्थः, यः पदानां सञ्चयः समूहः, स पदोच्चयो नाम लक्षणम् । अत्र व्युत्पत्तिः स्पष्टा ।

(च) अधर इति । अधरः किशलयस्य पल्लवस्येव रागो रक्तिमा यस्य सः । बाहू भुजद्वयम्, कोमलविटपानुकारिणौ सुकुमारशाखासदृशौ । अङ्गेषु कुसुममिव लोभनीयं युवजनलोभजनकं यौवनं सन्नद्धं विधिना योजितम् ।

(छ) लक्ष्ये लक्षणं सङ्गमयति अत्रेति । सदृशमेव, अतः पदोच्चय इति भावः । विकटार्थे विकटपदोच्चयो यथा उत्तररामचरिते—"झणज्झणितकङ्कण"त्यादि ।

---

(१) प्रकृतगामिनेति पाठान्तरम् । (२) यथार्थानामिति पाठभेदः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"क्षत्रधर्म्मोचितैर्धर्म्मैरलं शत्रुवधे नृपाः।
किन्तु (१) वालिनि रामेण मुक्तो बाणः पराङ्मुखे ?॥" (झ)

१८१। अभिप्रायस्तु सादृश्यादद्भुतार्थस्य कल्पना॥ (ञ)

यथा शाकुन्तले—
"इदं किलाव्याजमनोहरं वपुस्तपःक्षमं साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति॥" (ट)

१८२। ज्ञप्तिः (२) केनचिदंशेन किञ्चिदुक्तस्यानुमीयते। (ठ)

यथा मम प्रभावत्याम्—"अनेन खलु सर्वतश्चरता चञ्चरीकेणावश्यं विदिता भविष्यति प्रियतमा मे प्रभावती।" (ड)।

१८३। विचारो युक्तवाक्यैर्यदप्रत्यक्षार्थसाधनम्॥ (ढ)

(ज) यत्रेति। यत्र परपक्षस्य व्युदासार्थं प्रत्याख्यानार्थं प्रसिद्धानामर्थानां विषयाणां परिकीर्त्तनं क्रियते, तत् निदर्शनं नाम लक्षणमुच्यते। दृष्टान्तनिदर्शनान्निदर्शनमिति समाख्या।

(झ) क्षत्रेति। नृपाः क्षत्रधर्म्मोचितैः क्षत्रियजातियोग्यैः धर्म्मैर्नियमैः सम्मुखयुद्धादिभिः यदि शत्रुवधे अलं समर्था इत्युच्यत इति शेषः। तदा रामेण पराङ्मुखे सुग्रीवाभिमुखत्वादितिभावः, वालिनि वानरराजे बाणः किन्नु मुक्तो निक्षिप्तः।

अत्र प्रथमार्द्धार्थरूपस्य परपक्षस्य व्युदासार्थं परार्द्धार्थरूपप्रसिद्धार्थकीर्त्तनान्निदर्शनम्।

(ञ) अतीति। सादृश्याददभुतार्थस्य असम्भवविषयस्य कल्पना तु अभिप्रायो नाम लक्षणम्। अभिप्रायविशेषेण कल्पनादस्य अभिप्राय इति संज्ञा।

(ट) इदमिति। य इदम् अव्याजमनोहरं स्वभावसुन्दरं वपुः शकुन्तलादेहं तपःक्षमं तपस्याक्लेशं साधयितुं कारयितुम् इच्छति, स ऋषिः कण्वः नीलोत्पलपत्रस्य धारया अग्रभागेन ध्रुवं निश्चितम्, शमीलतामतिकठिनं लताविशेषं छेत्तुं व्यवस्यति उद्यच्छति।

अत्र नीलोत्पलपत्रधारया असम्भवशमीलताच्छेदनव्यवसायकल्पनादभिप्रायः।

(ठ) ज्ञप्तिरिति। यत्र केनचित् अंशेन वाक्यभागेन किञ्चिदनुमीयते तत् ज्ञप्तिर्नाम लक्षणम्। आत्मनो ज्ञापनाज्ज्ञप्तिरिति समाख्या।

(ड) यथेति। चञ्चरीकेण भ्रमरेण। अत्र सर्वतश्चरता इत्यंशेन भ्रमरकर्त्तृकप्रभावतीज्ञानानुमानाज्ज्ञप्तिः।

(ढ) विचार इति। युक्तवाक्यैर्युक्तिसङ्गतवचनैः अप्रत्यक्षार्थस्य परोक्षविषयस्य यत् साधनं निरूपणं स विचारो नाम लक्षणम्। विचारविषयत्वाद्विचार इति संज्ञा।

(१) किन्तु इति क्वचित् पाठः। (२) प्राप्तिरिति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा मम चन्द्रकलायाम्—"राजा। नूनमियमन्तःपिहितमदनविकारा वर्त्तते। यतः—

हसति परितोषरहितं निरीक्ष्यमाणापि नेक्षते किञ्चित्।
सख्यामुदाहरन्त्यामसमञ्जसमुत्तरं दत्ते॥" (ण)

१८४। देशकालस्वरूपेण वर्णना दिष्टमुच्यते। (त)

यथा वेण्याम्—"सहदेवः।

यद्वैद्युतमिव ज्योतिरार्य्ये क्रुद्धेऽद्य सम्भृतम्।
तत् प्रावृड़िव कृष्णेयं नूनं संवर्द्धयिष्यति॥" (थ)

१८५। उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः॥ (द)

यथा शाकुन्तले—

"शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः।" इत्यादि (ध)।

(ण) यथेति। अन्तःपिहितमदनविकारा हृदयावरुद्धकामवेगा।

हसतीति। परितोषरहितं यथा स्यात्तथा हसति, निरीक्ष्यमाणापि किञ्चिन्न ईक्षते। सख्याम् उदाहरन्त्यां यत् किञ्चिद्वदन्त्यां सत्याम् असमञ्जसम् अयुक्तम् उत्तरं दत्ते।

अत्र नूनमित्यादिश्लोकान्तभागे अप्रत्यक्षस्य परहृदयवर्त्तिमदनविकारस्य हसतीत्यादियुक्तवाक्यैः साधनाद्विचारः।

(त) देशेति। देशकालयोः स्वरूपेण समानधर्म्मवत्तया वर्णना दिष्टं नाम लक्षणमुच्यते। देशकालयोः स्वरूपेणोद्दिष्टत्वाद्दिष्टमिति नाम।

(थ) यद्वेति। अद्य क्रुद्धे आर्य्ये भीमसेने विद्युत इदमिति वैद्युतमिव यत् ज्योतिस्तेजः सम्भृतमुत्पन्नम्, इयं कृष्णा द्रौपदी प्रावृठ् वर्षासमय इव नूनं निश्चितं तज्ज्योतिः संवर्द्धयिष्यति।

अत्र कालस्य समानधर्म्मवत्तया भीमक्रोधद्रौपद्योर्वर्णनात् दिष्टम्।

(द) उपेति। शास्त्रानुसारतः प्रयुक्तम् अथ च मनोहारि वाक्यम् उपदिष्टं नाम लक्षणम्। अत्र व्युत्पत्तिः स्पष्टा।

(ध) यथेति। "भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः॥"

इति श्लोकपरार्द्धम्। गुरून् श्वश्रूप्रभृतीन् शुश्रूषस्व, सपत्नीजने प्रियसख्या वृत्तिं व्यवहारं कुरु, विप्रकृतापि भर्त्रैव आकृष्टापि रोषणतया तं प्रति कोपनतया तस्य भर्त्तुः प्रतीपं प्रातिकूल्यं मास्म गमः न प्राप्नुहि। परिजने दासदास्यादौ भूयिष्ठमत्यन्तं दक्षिणा उदारस्वभावा भव, तथा भोगेषु अनुत्सेकिनी

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१८६ । गुणातिपातः कार्य्यं यद्विपरीतं गुणान् प्रति । (न)

यथा मम चन्द्रकलायां चन्द्रं प्रति—

"जइ संहरिज्जइ तमो धेज्जइ सअलेहिं ते पाओ ।
वससि सिरे पसुवइणो तहवि हु इत्थीअ जीअणं हरसि ॥" (प)

१८७ । यः सामान्यगुणोद्रेकः स गुणातिशयो मतः ॥ (फ)

यथा तत्रैव—"राजा । (चन्द्रकलाया मुखं निर्दिश्य)

असावन्तश्चञ्चद्विकचनवलीलाब्जयुगल-
स्तलस्फूर्जत्कम्बुर्विलसदलिसंघात उपरि ॥
विना दोषासङ्गं सततपरिपूर्णाखिलकलः
कुतः प्राप्तश्चन्द्रो विगलितकलङ्कः सुमुखि ! ते ॥" (ब)

१८८ । सिद्धानर्थान् बहूनुक्त्वा विशेषोक्तिर्विशेषणाम् । (भ)

अगर्विता भवेत्यन्वयः । एवं कृते युवतयो गृहिणीपदं यान्ति, वामा एतत्प्रतिकूलस्वभावास्तु स्त्रियः कुलस्य आधयो मनोव्यथास्तज्जनिका इत्यर्थः ।

अत्र स्मृतिशास्त्रानुसारिमनोहरवाक्यत्वादुपदिष्टम् ।

(न) गुणेति । गुणान् प्रति विपरीतं गुणविरोधि यत् कार्य्यम्, तद्गुणातिपातो नाम लक्षणम् । गुणस्य अतिपतनादतिक्रमणादियं समाख्या ।

(प) यथेति । "यदि संक्रियते तमो धार्य्यते सकलैस्ते पादः । वससि शिरसि पशुपतेस्तथापि हा स्त्रियो जीवनं हरसि ॥" इति संस्कृतानुवादः । यद्यपि त्वया तमोऽन्धकारः संक्रियते विनाश्यते, यद्यपि च सकलैर्जनैस्ते तव पादः किरणश्चरणश्च शिरसा धार्य्यते । यद्यपि वा त्वं पशुपतेर्देवदेवस्य शिवस्यापि शिरसि वससि । तथापि, हा खेदे । स्त्रियो विरहिण्या जीवनं हरसि कामोद्दीपनेन नाशयसि ।

अत्र महत्त्वगुणविरोधिस्त्रीजीवनहरणरूपनिकृष्टकार्य्याद्गुणातिपातः ।

(फ) य इति । यः सामान्यगुणादुपमानोपमेययोः साधारणधर्म्मात् उद्रेक उपमेयगतस्य कस्यचिद्धर्म्मस्य आधिक्यम्, स गुणातिशयो नाम लक्षणं मतः ; गुणं सामान्यधर्म्ममतिशेत इति व्युत्पत्तेः ।

(ब) असाविति । हे सुमुखि ! अन्तर्मध्यभागे चञ्चद्विलसत् विकचं प्रस्फुटं नवं नूतनं लीलाब्जयुगलं नयनद्वयरूपं विहारपद्मद्वयं यस्य सः, तले अधोदेशे स्फुरन् शोभमानः कम्बुर्ग्रीवारूपः शङ्खो यस्य सः, उपरिभागे विलसन् विचरन् अलिसंघातो भ्रूद्वयरूपो भ्रमरसमूहो यस्य सः, सततं परिपूर्णा अखिला कला यस्य सः, तथा विगलितकलङ्कः कलङ्कशून्यः असौ मुखरूपश्चन्द्रः दोषासङ्गं रात्रिसम्पर्कं विनापि ते तव समीपे कुतः प्राप्त उपस्थितः ? ।

अत्रोपमानभूतचन्द्रापेक्षया उपमेयभूतमुखस्य विगलित[illegible]गुणातिशयः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"तृष्णापहारी विमलो द्विजावासो जनप्रियः।
ह्रदः पद्माकरः किन्तु बुधस्त्वं स जलाशयः (१)॥" (म)

१८९। पूर्वसिद्धार्थकथनं निरुक्तिरिति कीर्त्त्यते॥ (य)

यथा वेणाम्—"निहताशेषकौरव्यः" इत्यादि (३४१ पृष्ठे) (र)।

१९०। बहूनां कीर्त्तनं सिद्धिरभिप्रेतार्थसिद्धये। (ल)

यथा—"यद्वीर्य्यं कूर्म्मराजस्य यश्च शेषस्य विक्रमः।
पृथिव्या रक्षणे राजन्नेकत्र त्वयि तत् स्थितम्॥" (व)

१९१। दृप्तादीनां भवेद्भ्रंशो वाच्यादन्यतरद्वचः॥ (श)

यथा वेणाम् कञ्चुकिनं प्रति "दुर्य्योधनः।

---

(भ) सिद्धानिति। सिद्धान् विख्यातान् बहून् अर्थान् सामान्यधर्म्मान् उक्ता विशेषस्य यस्य कस्य-चिद्भेदकधर्म्मस्य उक्तिर्विशेषणं नाम लक्षणम्, विशिष्यते अनेनेति व्युत्पत्तेः।

(म) तृष्णेति। ह्रदः पुष्करिण्यादिरूपो गर्त्तः त्वञ्च, तृष्णां जलपिपासां धनाकाङ्क्षाञ्च अपहरति जल-दानेन धनदानेन च नाशयतीति तृष्णापहारी, विमलः स्वच्छो निष्पापश्च द्विजाः पक्षिणो ब्राह्मणाश्च आवसन्त्य-स्मिन्निति द्विजावासः, जनानां प्रियः सुशीतलत्वान्मधुरभाषित्वाच्च सन्तोषकरः तथा पद्मानां नलिनानां पद्मायाः लक्ष्म्याश्च आकरः। एतत् सर्वं समानमिति भावः। किन्तु त्वं बुधो विद्वान्, स ह्रदस्तु जलानां सलिलाना-माशय आधार एव जडाशयो मूढबुद्धिः, डलयोरैकत्वात्।

अत्र तृष्णापहारित्वप्रभृतीन् बहून् सामान्यधर्म्मानुक्ता बुधत्वजलाशयत्वरूपभेदकधर्म्मोक्तिर्विशेषणम्।

(य) पूर्वेति। पूर्वं सिद्धानां निष्पन्नानाम् अर्थानां विषयाणां कथनं निरुक्तिरिति नाम लक्षणं कीर्त्त्यते ; पूर्वसिद्धत्वादेव निश्चयेनोक्तिर्निरुक्तिरिति व्युत्पत्तेः।

(र) यथेति। अत्र पूर्वसिद्धाशेषकौरव्यादिहननकथनान्निरुक्तिः।

(ल) बहूनामिति। अभिप्रेतार्थसिद्धये बहूनामनेकेषां कीर्त्तनं कथनं सिद्धिर्नाम लक्षणम्। अभि-प्रेतार्थसिद्धिनिमित्तकीर्त्तनादेवास्य सिद्धिरिति समाख्या।

(व) यथेति। हे राजन्। कूर्म्मराजस्य अनन्तनागभारवहस्य कच्छपपतेः यद्वीर्य्यं बलम्, शेषस्य पृथिवीभारवहस्य अनन्तनागस्य च यो विक्रमः अतिशक्तिः, पृथिव्या रक्षणे एकत्र त्वयि तदुभयमेव स्थितं विद्य-मानम्।

अत्राभिप्रेतराजसन्तोषसिद्धये कूर्म्मराजानन्तबलयोरनेकयोः कीर्त्तनात् सिद्धिः।

(श) दृप्तेति। दृप्तस्य गर्वितस्य आदिशब्दात् आनन्दितदुःखितादेश्च वाच्याद्वक्तव्यात् अन्यतरद्वचो वाक्यं भ्रंशो नाम लक्षणं भवेत्। अत्र व्युत्पत्तिः स्पष्टा।

---

(१) जडाशय इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।
स्वबलेन निहन्ति संयुगे न चिरात् पाण्डुसुतः सुयोधनम् ॥" (घ)

१९२ । विचारस्यान्यथाभावः सन्देहात्तु विपर्य्ययः । (ङ)

यथा—"मत्वा लोकमदातारं सन्तोषे यैः कृता मतिः ।
त्वयि राजनि ते राजन् ! न तथा व्यवसायिनः ॥" (छ)

१९३ । दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्त्तनम् ॥ (च)

वाचा यथा—"प्रसाधय पुरीं लङ्कां राजा त्वं हि विभीषण ! ।
आर्य्येणानुगृहीतस्य न विघ्नः सिद्धिमन्तरा ॥" (क)

एवं चेष्टयापि (ख) ।

१९४ । वाक्यैः स्निग्धैरनुनयो भवेदर्थस्य साधनम् । (ग)

---

(घ) सहेति । पाण्डुसुतो युधिष्ठिरः, स्वबलेन निजविक्रमेण सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजञ्च सुयोधनं दुर्य्योधनम्, न चिरात् शीघ्रमेव संयुगे युद्धे निहन्ति नाशयिष्यतीति अविप्लुत्सामीप्ये वर्त्तमाना ।

अत्र "पाण्डुसुतं सुयोधनः" इति वक्तव्ये वक्तुर्दुर्य्योधनस्य द्रमत्वेन "पाण्डुसुतः सुयोधनम्" इत्यभिधानात् भ्रंशः ।

(ङ) विचारस्येति । सन्देहात् विचारस्य पूर्वावधारणस्य अन्यथाभावो विपर्य्ययो नाम लक्षणम् । अत्रापि व्युत्पत्तिः स्पष्टा ।

(छ) मत्वेति । यैर्जनैः लोकम् अदातारं मत्वा, सन्तोषे प्रार्थनया धनलाभं विनैव तुष्टौ, मतिः कृता । हे राजन् ! त्वयि राजनि सति ते जनाः तथा व्यवसायिनः प्रार्थनया धनलाभं विनैव सन्तोषावलम्बिनः न वर्त्तन्ते । किन्तु भवन्तमत्यन्तदातारं मत्वा प्रार्थयन्तीति भावः ।

अत्र लोकसामान्यस्य वादात्वावधारणस्य "अयं राजा दाता न वा" इति संशयेन अन्यथाभावात् विपर्य्ययः ।

(च) दाक्षिण्यमिति । चेष्टया कायिकव्यापारेण वाचा वाक्येन वा परचित्तस्य, अनुवर्त्तनमनुरञ्जनं दाक्षिण्यं नाम लक्षणम्, दक्षिणस्य कर्म्मेति व्युत्पत्तेः ।

(क) प्रसाधयेति । हे विभीषण ! लङ्कां पुरीं प्रसाधय अधिष्ठानेनालङ्कुरु, हि यस्मात् त्वं तस्या राजा । आर्य्येण रामचन्द्रेण अनुगृहीतस्य जनस्य सिद्धिमन्तरा कार्य्यसिद्धिमध्ये विघ्नो न स्यात् ।

अत्र दूतवाक्येन विभीषणचित्तानुवर्त्तनात् दाक्षिण्यम् ।

(ख) एवमिति । यथा शाकुन्तले—"राजा । कर्णोत्पलसन्निकर्षादीक्षणमूढोऽसि । मुखमारुतेन चक्षुः सेवते ॥"

अत्र चक्षुःसेवनरूपचेष्टया शकुन्तलाचित्तानुवर्त्तनाद्दाक्षिण्यम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा वेण्याम् अश्वत्थामानं प्रति "कृपः। दिव्यास्त्रग्रामकोविदे भारद्वाज-तुल्यपराक्रमे किं न सम्भाव्यते त्वयि ?।" (घ)

१६५। माला स्याद्यदभीष्टार्थं नैकार्थप्रतिपादनम्॥ (ङ)

यथा शाकुन्तले—"राजा।

किं शीकरैः क्लमविमर्द्दिभिरार्द्रवातं
सञ्चारयामि नलिनीदलतालवृन्तम् (१)।
अङ्के निवेश्य चरणावुत पद्मताम्रौ
संवाहयामि करभोरु ! यथासुखं ते॥" (च)

१६६। अर्थापत्तिरियं दन्यार्थोऽर्थान्तरोक्तेः प्रतीयते। (छ)

यथा वेण्याम्—द्रोणोऽश्वत्थामानं राज्येऽभिषेक्तुमिच्छतीति कथयन्तं कर्णं प्रति "राजा। साधु अङ्गराज ! साधु,

दत्त्वाऽभयं सोऽतिरथो वध्यमानं किरीटिना।
सिन्धुराजमुपेक्षेत नैवं चेत् कथमन्यथा॥" (ज)

(ग) वाक्यैरिति। स्निग्धैः स्नेहसूचकैर्वाक्यैः अर्थस्य कार्य्यस्य साधनं सम्पादनम् अनुनयो नाम लक्षणं भवेत्। अनुनयसम्बन्धादनुनय इति संज्ञा।

(घ) यथेति। दिव्यास्त्रग्रामकोविदे उत्कृष्टास्त्रसमूहाभिज्ञे, भारद्वाजस्य द्रोणस्य तुल्यः पराक्रमो यस्य तस्मिन्।

अत्र द्वयस्य स्नेहसूचकवाक्यैः समुत्तेजनारूपकार्य्यसाधनादनुनयः।

(ङ) मालेति। अभीष्टार्थमभीष्टसम्पादनार्थं यत् नैकार्थप्रतिपादनम् अनेकविषयप्रकाशनं सा माला नाम लक्षणं स्यात्। अनेकार्थप्रकाशविषयत्वादेव मालेति संज्ञा।

(च) किमिति। क्लमविमर्द्दिभिर्ग्लानिनाशिभिः शीकरैर्जलविन्दुभिः आर्द्रौ वातो वायुर्यस्य तत्, नलिनीदलं पद्मपत्रमेव तालवृन्तं व्यजनं तत् किं सञ्चारयामि विधुनोमि ? उत किं वा पद्मताम्रौ पद्मव-त्ताम्रवर्णौ ते तव चरणौ अङ्के क्रोड़े निवेश्य संस्थाप्य यथासुखं स्यात्तथा संवाहयामि।

अत्रात्मानं प्रति शकुन्तलाया अनुरागरूपाभीष्टसम्पादनार्थं व्यजनसञ्चालनचरणसंवाहनरूपानेकार्थ-प्रकाशनान्माला।

(छ) अर्थेति। अर्थान्तरोक्तेरन्यार्थकथनात् यदन्यार्थः प्रतीयते तदर्थापत्तिर्नाम लक्षणम्; अर्थस्य आपत्तिर्द्वारापस्थितिरिति व्युत्पत्तेः।

(१) किं शीतलैः क्लमविरोधिभिः—तालवृन्तैः इति पाठान्तरम्।



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१९७। दूषणोद्‌घोषणायान्तु भर्त्सना गर्हणन्तु तत् ॥ (झ)

यथा तत्रैव—कर्णं प्रति "अश्वत्थामा।

निर्वीर्य्यं गुरुशापभाषितवशात् किं मे तवेवायुधं (१)
संप्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा।
जातोऽहं स्तुतिवंशकीर्त्तनविदां किं सारथीनां कुले
क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्त्रेण नास्त्रेण किम् ॥" (ञ)

१९८। अभ्यर्थनापरैर्वाक्यैः पृच्छाऽर्थान्वेषणं मतम्। (ट)

यथा तत्रैव—"सुन्दरकः। अज्जा! अवि णाम सारधिदुदिओ दिट्ठो तुम्हेहिं महाराओ दुज्जोधणो ण वेत्ति।" (ठ)।

१९९। प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधनम् ॥ (ड)

---

(ज) दत्त्वेति। एवं त्वया यदुक्तं तद्रूपमन्यथा न चेत्, 'तदा अतिरथः स द्रोणः, सिन्धुराजायैव अर्जुनादभयं दत्त्वा, तेनैव किरीटिना अर्जुनेन वध्यमानं सिन्धुराजं जयद्रथं कथमुपेक्षेत।

अत्र सिन्धुराजं कथमुपेक्षेतेत्यर्थान्तरोक्तेर्द्रोणस्य राज्ये अश्वत्थामाभिषेकेच्छारूपान्यार्थप्रतीतेरर्थापत्तिः।

(झ) दूषणेति। दूषणोद्‌घोषणायां दोषकीर्त्तनवेलायां या तु भर्त्सना तत्तु गर्हणं नाम लक्षणम्। अत्र व्युत्पत्तिः स्पष्टा।

(ञ) निर्वीर्य्यमिति। तव इव मे ममापि आयुधमस्त्रं गुरोः शिक्षकस्य शापभाषितवशात् अभिसम्पातवाक्यवशात् किं निर्वीर्य्यं बलहीनम्?। त्वं यथा त्वमिव अहमपि किं सम्प्रत्येव भयात् समरं विहाय प्राप्तोऽस्मि शिविरे उपस्थितोऽस्मि?। अहं स्तुतिं राजस्तुतिं वंशकीर्त्तनं राजवंशावलीगुणकीर्त्तनञ्च विदन्तीति तेषां तादृशानां सारथीनां कुले किं जातः?। क्षुद्रेण अरातिना कृतमप्रियं वैरम् अस्त्रेण अस्त्रजलेन किं प्रतिकरोमि? अपि तु कथमपि नेत्यर्थः अस्त्रेण किं न प्रतिकरोमि? अपि तु अस्त्रेणैव प्रतिकरोमीत्यर्थः।

अत्रेदृशभर्त्सनातो गर्हणम्।

(ट) अभ्यर्थनेति। अभ्यर्थनापरैः ससम्मानप्रार्थनाबोधकैर्वाक्यैः अर्थानां विषयाणाम् अन्वेषणं पृच्छा नाम लक्षणं मतम्। अन्वेषणविशेषे पृच्छाया आवश्यकत्वात् पृच्छेति समाख्या।

(ठ) यथेति। "आर्य्याः! अपि नाम सारथिद्वितीयो दृष्टो युष्माभिर्महाराजो दुर्य्योधनो न वेति।" इति संस्कृतानुवादः। सारथिर्द्वितीयो यस्य सः।

अत्र आर्य्या इति ससम्मानप्रार्थनासूचकवाक्येन दुर्य्योधनान्वेषणात् पृच्छा।

---

(१) तवैवायुधम् इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा विक्रमोर्वश्याम्—"राजा।

सूर्य्याचन्द्रमसौ यस्य मातामहपितामहौ।

स्वयं वृतः (१) पतिर्द्वाभ्यामुर्वश्या च भुवा च यः॥" (ढ)

२००। सारूप्यमभिभूतस्य सारूप्यात् चोभवर्त्तनम् (२)। (ण)

यथा वेण्याम्—दुर्य्योधनभ्रान्त्या भीमं प्रति "युधिष्ठिरः। दुरात्मन्! दुर्य्योधनहतक!" इत्यादि (त)।

२०१। संक्षेपो यत्तु संक्षेपादात्मान्यार्थे प्रयुज्यते॥ (थ)

यथा मम चन्द्रकलायाम्—"राजा। प्रिये!

अङ्गानि खेदयसि किं शिरीषकुसुमपरिपेलवानि मुधा।

(आत्मानं निर्द्दिश्य)

अयमीहितकुसुमानां सम्पादयिता तवास्मि दासजनः॥" (द)

२०२। गुणानां कीर्त्तनं यत्तु तदेव गुणकीर्त्तनम्। (ध)

---

(ड) प्रसिद्धिरिति। उत्कृष्टैर्लोकेषु सिद्धैः प्रसिद्धैरर्थैर्विषयैः अर्थस्य विषयविशेषस्य साधनं सम्पादनं प्रसिद्धिर्नाम लक्षणम्। प्रसिद्धार्थैः साधनादेवास्य प्रसिद्धिरिति संज्ञा।

(ढ) सूर्य्येति। स्पष्टोऽयं श्लोकार्थः। अत्र उत्कृष्टाभ्यां लोकप्रसिद्धाभ्याञ्च सूर्य्याचन्द्रमोभ्यामात्मनः परिचयसाधनात् प्रसिद्धिः।

(ण) सारूप्यमिति। अभिभूतस्य पराभवं प्राप्तस्य जनस्य, सारूप्याद्विरोधिजनस्य समानरूपदर्शनात् क्षोभेण सविषादाधैर्य्येण वर्त्तनमाचरणं सारूप्यं नाम लक्षणम्। सारूप्यप्रयोज्यत्वात् सारूप्यमिति नाम।

(त) यथेति। "दुर्य्योधनेन भीमो हतः" इति चार्वाकवाक्येन अभिभूतस्य युधिष्ठिरस्य दुर्य्योधनं हत्वा आगच्छति भीमे दुर्य्योधनसारूप्यदर्शनेन दुरात्मन्नित्यादिक्षोभप्रयुक्ताचरणात् सारूप्यम्।

(थ) संक्षेप इति। संक्षेपात् वाक्यसंक्षेपं कृत्वेति ल्यब्लोपे पञ्चमी संक्षिप्तवाक्येनेत्यर्थः यत्तु अन्यार्थे अन्यजनस्थाने आत्मा प्रयुज्यते नियुज्यते, तत् संक्षेपो नाम लक्षणम्। अस्यापि संक्षिप्तवाक्यप्रयोज्यत्वादेव संक्षेप इति नाम।

(द) अङ्गानीति। शिरीषकुसुमवत् परिपेलवानि सर्वथा सुकुमाराणि अङ्गानि किं कस्मात् मुधा अनर्थकं खेदयसि पुष्पचयनेन परिश्रमयसि?। अयमहं दासजनः तव ईहितकुसुमानां चेतुमिष्टानां पुष्पाणां सम्पादयिता चयनकर्त्ता अस्मि।

अत्र हृस्वसंक्षिप्तवाक्येन राज्ञ आत्मनो नायिकादासस्थाने नियोगात् संक्षेपः।

(ध) गुणानामिति। सुगमम्।

---

(१) कृत इति पाठान्तरम्। (२) सारूप्यमनुभूतस्य सारूप्यात् क्षोभवर्द्धनम् इति पाठभेदः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा तत्रैव—"नेत्रे खञ्जनगञ्जने" इत्यादि (११०पृष्ठे) (न)।

**२०३ । स लेशो भण्यते वाक्यं यत् सादृश्यपुरःसरम् ॥ (प)**

यथा वेण्याम्—"राजा ।

हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम् ।
या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति ॥" (फ)

**२०४ । मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत् । (ब)**

यथा—"रतिकेलिकलः कश्चिदेष मन्मथमन्थरः ।
पश्य सुभ्रु ! समाश्वस्तां कादम्बश्चुम्बति प्रियाम् ॥" (भ)

**२०५ । विशेषार्थोऽतिविस्तारोऽनुक्तसिद्धिरुदीर्य्यते ॥ (म)**

यथा रघुवृत्तवाटिकायाम्—

"दृश्येते तन्वि ! यावेतौ चारुचन्द्रमसं प्रति ।
प्राज्ञे कल्याणनामानावुभौ तिष्यपुनर्वसू ॥" (य)

---

(न) यथेति । अत्र नायिकायाः सौन्दर्य्यगुणकीर्त्तनादृगुणकीर्त्तनम् ।

(प) स इति । सादृश्यपुरःसरं सादृश्यप्रदर्शनाभिप्रायकं यद्वाक्यं भण्यते स लेशो नाम लक्षणम् । सादृश्यसूचनलेशसम्बन्धाल्लेश इति संज्ञा ।

(फ) हत इति । शिखण्डिनं पुरस्कृत्य जरति वर्षीयसि गाङ्गेये भीष्मे अर्जुनेन हते सति, पाण्डुपुत्राणां या श्लाघा प्रशंसा, अस्माकमपि बहुभिरभिमन्युवधे सैव तत्तुल्यैव श्लाघा भविष्यति ।

अत्र सादृश्यप्रदर्शनाभिप्रायकवाक्यकथनाल्लेशः ।

(ब) मनोरथ इति । भङ्ग्यन्तरेण भङ्गिविशेषेण अभिप्रायस्य यदुक्तिः उक्तिवत् स्पष्टं सूचनं स तु मनोरथो नाम लक्षणम्, मनोरथविशेषेणोक्तत्वात् ।

(भ) रतीति । हे सुभ्रु ! रतिकेलौ रमणक्रीड़ायां कलो मधुरनादो, मन्मथमन्थरः कामवेगेनालसः, एष कश्चित् कादम्बः कलहंसः, समाश्वस्तां प्रियप्राप्त्या प्रसन्नचित्तां प्रियां हंसीं चुम्बति इति पश्य ।

अत्र हंसकर्त्तृकहंसीचुम्बनकथनरूपभङ्ग्या सकान्ताचुम्बनाभिप्रायसूचनान्मनोरथः ।

(म) विशेषेति । विशेषो यः कश्चिद्गुणातिशयस्तज्ज्ञापनमिति यावत् स एव अर्थः प्रयोजनं यस्य स तथोक्तः, अतिविस्तारः अभेदारोपरूपातिशयोक्तिः अनुक्तसिद्धिर्नाम लक्षणमुदीर्य्यते, अनुक्तस्याभेदस्य आरोपात् सिद्धिरिति व्युत्पत्तेः ।

(य) दृश्येते इति । पार्श्वयो रामलक्ष्मणाभ्यां सहागच्छन्तं विश्वामित्रमवलोक्य हरधनुर्भङ्गात् पूर्व सीतां प्रति तत्सख्या उक्तिरियम् । हे तन्वि ! चारुचन्द्रमसं प्रति सुन्दरचन्द्रसमीपे यावेतौ दृश्येते ; हे प्राज्ञे ! उभावेव कल्याणनामानौ तिष्यपुनर्वसू पुष्यपुनर्वसुनक्षत्रे तत्र लक्ष्मणरामयोरित्यर्थः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२०६ । स्यात् प्रमाणयितुं पूज्यं प्रियोक्तिर्हर्षभाषणम् ॥ (र)

यथा शाकुन्तले—

"उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं विधिस्तव प्रसादस्य पुरस्तु सम्पदः ॥" (ल)

अथ नाट्यालङ्काराः ।

२०७ । आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः ।
उत्प्रासनस्पृहा-(१) क्षोभपश्चात्तापोपपत्तयः ॥
आशंसाध्यवसायौ च विसर्पोल्लेखसंज्ञितौ ।
उत्तेजनं परीवादो नीतिरर्थविशेषणम् ॥
प्रोत्साहनञ्च साहाय्यमभिमानोऽनुवर्त्तनम् ।
उत्कीर्त्तनं तथा याच्ञा परीहारो निवेदनम् ॥
प्रवर्त्तनाख्यानयुक्ति-प्रहर्षाश्चोपदेशनम् ॥
इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः ॥ (व)

---

अत्र विश्वामित्र-राम-लक्ष्मणानां सौन्दर्य्यातिशयज्ञापनार्थं तेषु चन्द्र-पुष्य-पुनर्वसूनामभेदारोपरूपातिशयोक्तेरनुक्तसिद्धिः ।

(र) स्यादिति । पूज्यं जनं प्रमाणयितुं सम्मानयितुं हर्षभाषणं तदानन्दजनकवाक्यं प्रियोक्तिर्नाम लक्षणं स्यात् । अत्र व्युत्पत्तिः स्पष्टा ।

(ल) उदेतीति । पूर्वं कुसुमम् उदेति आविर्भवति, ततः फलमुदेति, फलं प्रति कुसुमस्य कारणत्वेन तत्पूर्ववर्त्तित्वनियमादिति भावः । प्राग् घनोदयो मेघाविर्भावः तदनन्तरञ्च पयो वृष्टिजलं जायते । अत्रापि तथैव भावः । अतएव निमित्तनैमित्तिकयोः कारणकार्य्ययोः अयं विधिः पौर्वापर्य्यनियमः, तु किन्तु तव प्रसादस्य अनुग्रहस्य पुरः पूर्वमेव लोकानां सम्पदो भवन्ति । तेन कारणकार्य्ययोर्नियतपौर्वापर्य्यविपर्य्ययात्तव प्रसादस्याश्चर्य्योऽयं प्रभाव इति भावः ।

अत्र काश्यपं प्रमाणयितुं तदीयहर्षजनकभाषणात् प्रियोक्तिः ।

(व) आशीरिति । आशीः, आक्रन्दः, कपटम्, अक्षमा, गर्वः, उद्यमः, आश्रयः, उत्प्रासनम्, स्पृहा, क्षोभः, पश्चात्तापः, उपपत्तिः, आशंसा, अध्यवसायः, विसर्पः, उल्लेखः, उत्तेजनम्, परीवादः, नीतिः, अर्थ-

---

(१) उत्प्रासनं स्पृहा इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२०८। आशीरिष्टजनाशंसा—(श)

यथा शाकुन्तले—"ययातेरिव शर्म्मिष्ठा पत्युर्बहुमता भव।
पुत्रं त्वमिव सम्राजं सेव पूरुमवाप्नुहि॥" (ष)

२०९। आक्रन्दः प्रलपितं शुचा। (स)

यथा वेण्याम्—"कञ्चुकी। हा देवि! कुन्ति! राजभवनपताके!" इत्यादि (ह)।

२१०। कपटं मायया यत्र रूपमन्यद्विभाव्यते॥ (च)

यथा कुलपत्यङ्के—"मृगरूपं परित्यज्य विधाय कपटं वपुः।
नीयते रक्षसा तेन लक्ष्मणो युधि संशयम्॥" (क)

२११। अक्षमा सा परिभवः स्वल्पोऽपि नाभिसह्यते (१)। (ख)

यथा शाकुन्तले—"राजा। भोः सत्यवादिन्! अभ्युपगतं ताव-

विशेषणम्, प्रोत्साहनम्, साहाय्यम्, अभिमानः, अनुवर्त्तनम्, उत्कीर्त्तनम्, याञ्चा, परिहारः, निवेदनम्, प्रवर्त्तनम्, आख्यानम्, युक्तिः, प्रहर्षः, उपदेशनञ्च इत्येतानि त्रयस्त्रिंशत् नाट्यभूषणहेतवो दृश्यकाव्यशोभाजनिका नाट्यालङ्कृतय उच्यन्ते।

(श) आशीरिति। इष्टजनस्य आशंसा प्राप्तिशंसनम् आशीर्नाम नाट्यालङ्कारः।

(ष) ययातेरिति। ययातेः शर्म्मिष्ठेव त्वं पत्युर्दुष्मन्तस्य बहुमता अत्यादृता भव। तथा सा शर्म्मिष्ठा पूरुमिव त्वमपि शकुन्तला सम्राजं पुत्रमवाप्नुहि।

अत्र इष्टस्य पुत्रस्य प्राप्तिशंसनादाशीः।

(स) आक्रन्द इति। शुचा शोकेन प्रलपितं विलापः आक्रन्दो नाम नाट्यालङ्कारः।

(ह) यथेति। राजभवनस्य पताका चारित्रादिना पताकावत् सर्वोन्नस्थिता तत्सम्बोधनम्। अत्र शोकेन विलापादाक्रन्दः।

(च) कपटमिति। यत्र मायया कैतवेन अन्यद्रूपं विभाव्यते विधीयते, तत् कपटं नाम नाट्यालङ्कारः।

(क) मृगेति। तेन रक्षसा राक्षसेन मारीचेन मृगरूपं परित्यज्य कपटं वपुः कपटप्रयुक्तं पूर्ववत् राक्षसदेहं विधाय युधि युद्धे लक्ष्मणः संशयं जीवनसन्देहं नीयते प्राप्यते।

अत्र मायया मारीचस्य मृगरूपेतररूपविधानात् कपटम्।

(ख) अक्षमेति। स्वल्पोऽपि परिभवस्तिरस्कारो यत्र अभिसह्यते न क्षम्यते सा अक्षमा नाम नाट्यालङ्कारः स्यात्।

(१) स्वल्पो नाभिप्रसह्यते, स्वल्पोऽपि न विषह्यते इति पाठभेदौ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दस्माभिः एवंविधा एव वयम्। किं पुनरिमामभिसन्धाय लभ्यते। शार्ङ्गरवः। विनिपातः—"इत्यादि (ग)।

२१२। गर्वोऽवलेपजं वाक्यम्—(घ)

यथा तत्रैव—"राजा। ममापि नाम सत्त्वैरभिभूयन्ते गृहाः?।" (ङ)।

२१३। कार्य्यस्यारम्भ उद्यमः॥ (च)

यथा कुम्भाङ्के—(१) "रावणः। पश्यामि शोकविवशोऽन्तकमेव तावत्।" (छ)।

२१४। ग्रहणं गुणवत् कार्य्यहेतोराश्रय उच्यते। (ज)

यथा विभीषणनिर्भर्त्सनाङ्के—"विभीषणः। राममेवाश्रयिष्यामि" इति (झ)।

२१५। उत्प्रासनन्तूपहासो योऽसाधौ साधुमानिनि॥ (ञ)

यथा शाकुन्तले—"शार्ङ्गरवः। राजन्! अथ पुनः पूर्ववृत्तान्तमन्यसङ्गाद्विस्मृतो भवान्, तत् कथमधर्म्मभीरोर्दारपरित्यागः।" (ट)

(ग) यथेति। अभ्युपगतमङ्गीकृतम्। इमां शकुन्तलाम्। अभिसन्धाय प्रतार्य्य। विनिपातो विध्वंसः। अत्र सत्यवादिन्निति सोल्लुण्ठनसम्बोधनमात्रप्रयुक्तस्य परिभवस्य शार्ङ्गरवेणानभिसहनादक्षमा।

(घ) गर्व इति। अवलेपजम् अहङ्कारजनितं वाक्यं गर्वो नाम नाट्यालङ्कारः। गर्वप्रयुक्तत्वाद्गर्व इति समाख्या।

(ङ) यथेति। सत्त्वैर्जन्तुभिः। अत्र ममापीत्यनेन सूचितावलेपजनितवाक्याद्गर्वः।

(च) कार्य्यस्येति। कार्य्यस्य यस्य कस्यचित् कर्म्मणः आरम्भ उद्यमो नाम नाट्यालङ्कारः।

(छ) यथेति। पश्यामीत्यादौ युद्धरूपकार्य्यारम्भस्य सूचितत्वादुद्यमः।

(ज) ग्रहणमिति। कार्य्यहेतोर्यत्किञ्चित्प्रयोजनसाधननिमित्तम्, गुणवदुत्कृष्टं ग्रहणम् उत्कृष्टव्यक्तेरवलम्बनमित्यर्थः आश्रयो नाम नाट्यालङ्कार उच्यते।

(झ) यथेति। अत्र राज्यप्राप्तिहेतौ रामस्यावलम्बनादाश्रयः।

(ञ) उत्प्रासनमिति। साधुमात्मानं मन्यत इति साधुमानी तस्मिन् असाधौ जने यस्तु उपहासः तदुत्प्रासनं नाम नाट्यालङ्कार उच्यते, उत्प्रास्यते परस्य चित्तमतिशयेन विक्षिप्यते अनेनेति व्युत्पत्तेः।

(ट) यथेति। पूर्ववृत्तान्तं शकुन्तलापरिणयरूपम्। अन्यसङ्गादपरस्त्रीसंसर्गात्। अधर्म्मभीरोर्भवतः। अत्र शार्ङ्गरवेणासाधुत्वेन ज्ञायमानमथ च साधुमानिनं दुष्मन्तं प्रत्युपहासादुत्प्रासनम्।

(१) कुम्भे इति क्वचित् पाठः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२१६। आकाङ्क्षा रमणीयत्वाद्वस्तुनो या स्पृहा तु सा। (ठ)

यथा तत्रैव—"राजा।

चारुणा स्फुरितेनायमपरिक्षतकोमलः।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः॥" (ड)

२१७। अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु॥ (ढ)

यथा—"त्वया तपस्विचाण्डाल! प्रच्छन्नवधवर्त्तिना।
न केवलं हतो बाली स्वात्मा च परलोकतः॥" (ण)

२१८। मोहावधीरितार्थस्य पश्चात्तापः स एव तु। (त)

यथा—अनुतापाङ्के "रामः।

किं देव्या न विचुम्बितोऽस्मि बहुशो मिथ्याभिशप्तस्तदा" इति (थ)।

२१९। उपपत्तिर्मता हेतोरुपन्यासोऽर्थसिद्धये॥ (द)

---

(ठ) आकाङ्क्षेति। वस्तुनो यस्य कस्यचित् पदार्थस्य रमणीयत्वाद्धेतोः, तत्र तु या आकाङ्क्षा सा स्पृहा नाम नाट्यालङ्कार उच्यते।

(ड) चारुणेति। अपरिक्षतो नायकान्तरेणादष्टः, अतएव कोमलः, अयं प्रियायाः शकुन्तलाया अधरः, चारुणा मनोहरेण स्फुरितेन स्पन्दनेन पिपासतो मम अनुज्ञां स्वमेव पातुमनुमतिं ददातीव।

अत्र शकुन्तलाधरस्य रमणीयत्वाद्दुष्मन्तस्याकाङ्क्षातः स्पृहा।

(ढ) अधीति। अधिक्षेपवचःकारी तिरस्कारोक्तिजनकः क्षोभो मनोविकारविशेष एव तु स क्षोभो नाम नाट्यालङ्कारः प्रोक्तः।

(ण) त्वयेति। हे तपस्विचाण्डाल! राम! प्रच्छन्नवधाय गुप्तभावेन मम हत्यायै वर्त्तत इति तेन तादृशेन त्वया, न केवलमहं बाली हतः, अपि तु परलोकतः स्वस्य आत्मा च हतः, एतेनैव गुरुतर-पापोदयादिति भावः।

अत्र बालिन ईदृशतिरस्कारोक्तिजनकक्षोभात् क्षोभः।

(त) मोहेति। मोहेन चित्तभ्रमेण अवधीरितः परित्यक्तो योऽर्थो विषयस्तस्य सम्बन्धे पश्चात्तापोऽनुताप एव तु स पश्चात्तापाख्यो नाट्यालङ्कारः प्रोक्तः।

(थ) किमिति। तदा मिथ्याभिशप्तः अलीकपरीवादविषयीभूतः अहं किं कस्मात् देव्या सीतया न बहुशो विचुम्बितोऽस्मि।

अत्र मोहेन सीतया परित्यक्ते आत्मनश्चुम्बनकार्य्ये रामस्यानुतापादनुतापः।

(द) उपेति। अर्थसिद्धये कार्य्यनिष्पत्तये हेतोरुपन्यासः कारणस्योल्लेख उपपत्तिर्मता उपपत्तिर्नाम नाट्यालङ्कारोऽभिप्रेतः, उपपत्तिः कारणसङ्गतिरिति व्युत्पत्तेः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा वध्यशिलायाम्—

"म्रियते म्रियमाणे या त्वयि जीवति जीवति ।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममासुभिः ॥" (ध)

२२० । आशंसनं स्यादाशंसा—(न)

यथा श्मशाने—"माधवः ।

तत् पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम् ॥" इति (प) ।

२२१ । प्रतिज्ञाध्यवसायकः ॥ (फ)

यथा मम प्रभावत्याम्—"वज्रनाभः ।

अस्य वक्षः क्षणेनैव निर्म्मथ्य गदयानया ।
लीलयोन्मूलयाम्येव भुवनद्वयमद्य वः ॥" (ब)

२२२ । विसर्पो यत् समारब्धं कर्म्मानिष्टफलप्रदम् । (भ)

यथा वेण्याम्—"एकस्य तावत् पाकोऽयम्" इत्यादि (म) ।

---

(ध) म्रियत इति । त्वयि म्रियमाणे सति या म्रियते, त्वयि जीवति च सति या जीवति, यदि तां जीवन्तीमिच्छसि, तदा मम असुभिः प्राणैः प्राणदानैः आत्मानं रक्ष ।

अत्र नायिकाया जीवनस्थितिरूपकार्य्यसिद्धये नायकजीवनरक्षणरूपहेतोरुपन्यासादुपपत्तिः ।

(न) आशंसनमिति । आशंसनमभीष्टवस्तुप्राप्तिप्रार्थनम् आशंसा नाम नाट्यालङ्कारः स्यात् । इष्टजनस्य आशंसने आशीर्नाम प्रथमो नाट्यालङ्कारः, अभीष्टभोग्यवस्तुन आशंसने तु आशंसा नामेति परस्परं भेदः ।

(प) तदिति । "सम्भूयेव सुखानि चेतसि परं भूमानमातन्वते यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः । यद्बालेन्दुकलोच्चयादिव चितैः सारैरिवोत्पादितम्" इति शेषपादत्रयम् । अनङ्गस्य कामदेवस्य मङ्गलगृहं माङ्गलिकावासस्वरूपं तस्या मालत्यास्तन्मुखं भूयः पुनरपि पश्येयम् ।

अत्राभीष्टमालतीमुखदर्शनप्राप्त्याशंसनादाशंसा ।

(फ) प्रतिज्ञेति । प्रतिज्ञा कर्त्तव्यावधारणम् अध्यवसायकः अध्यवसायी नाम नाट्यालङ्कारः स्यात् । अध्यवसायमूलत्वादस्य अध्यवसाय इति संज्ञा, स्वार्थे च कप्रत्ययः ।

(ब) अस्येति । अद्य क्षणेनैव अनया गदया अस्य वक्षो निर्म्मथ्य वो युष्माकं समीपे लीलया अनायासेनैव भुवनद्वयं मर्त्यपाताले उन्मूलयामि ।

अत्र भुवनद्वयोन्मूलनरूपकर्त्तव्यावधारणादध्यवसायः ।

(भ) विसर्प इति । अनिष्टफलप्रदं यत् कर्म्म समारब्धं तत् विसर्पो नाम नाट्यालङ्कारः स्यात् । विश्लेषेण चेतसि सर्पणाद्विसर्प इति समाख्या ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२२३ । **कार्य्यग्रहणमुल्लेखः—(य)**

यथा शाकुन्तले—राजानं प्रति "तापसौ । समिदाहरणाय प्रस्थितावावाम् । इह चास्मद्गुरोः काश्यपस्य (१) साधिदैवत इव शकुन्तलया अनुमालिनीतीरमाश्रमो दृश्यते । न चेदन्यकार्य्यातिपातः, प्रविश्य गृह्यतामतिथिसत्कारः ।" इति (र) ।

२२४ । **उत्तेजनमितीष्यते ॥**

**स्वकार्य्यसिद्धयेऽन्यस्य प्रेरणाय कठोरवाक् । (ल)**

यथा—"इन्द्रजिच्चण्डवीर्य्योऽसि नाम्नैव बलवानसि ।
धिक् ! धिक् । प्रच्छन्नरूपेण युध्यसेऽस्मद्भयाकुलः ॥" (व)

२२५ । **भर्त्सना तु परीवादः—(श)**

(म) यथेति । "एकस्य तावत्पाकोऽयं दारुणो भुवि वर्त्तते ।
केशग्रहे द्वितीयेऽस्मिन् नूनं निःशेषिताः प्रजाः ॥"

इति श्लोकसमुदायः । एकस्य द्रौपदीकेशग्रहस्य अयं कुरुक्षेत्रयुद्धरूपो दारुणः पाकः परिणामः भुवि वर्त्तते ; किन्तु अस्मिन् द्वितीये केशग्रहे धृष्टद्युम्नेन द्रोणकेशग्रहणे जाते नूनं निश्चितमेव प्रजा लोकाः निःशेषिता भवेयुरिति शेषः । अश्वत्थाम्नः क्रोधादिभ्य इति भावः ।

अत्र द्रोणकेशग्रहणरूपस्य अनिष्टफलप्रदकर्म्मणः समारब्धत्वाद्विसर्पः ।

(य) कार्य्येति । कार्य्यस्य ग्रहणं स्वीकरणम् उल्लेखो नाम नाट्यालङ्कारः स्यात् । उल्लिख्यमानविषयत्वादुल्लेख इति संज्ञा ।

(र) यथेति । काश्यपस्य कण्वस्य, शकुन्तलयेत्यभेदे तृतीया । अधिदैवतेन अधिष्ठात्र्या देवतया सहेति साधिदैवतः । मालिन्या नद्यास्तीरे इत्यनुमालिनीतीरम्, विभक्त्यर्थेऽव्ययीभावः । न चेत् अन्यस्य कार्य्यस्य राजकीयकर्म्मणोऽतिपातः अतिक्रमः स्यात्तदेति शेषः ।

अत्र दुष्मन्तस्य अतिथिसत्कारग्रहणादुल्लेखः ।

(ल) उत्तेजनमिति । स्वकार्य्यसिद्धये अन्यस्य जनस्य प्रेरणाय प्रवर्त्तनाय कठोरवाक् कटूक्तिः उत्तेजनमिति नाम नाट्यालङ्कार इष्यते, उत्तेज्यतेऽनेनेति व्युत्पत्तेः ।

(व) इन्द्रजिदिति । हे इन्द्रजित् ! त्वं चण्डवीर्य्यः प्रचण्डपराक्रमोऽसि, तथा इन्द्रजिदिति नाम्नैव बलवान् ख्यातोऽसि, इन्द्रं जितवानिति व्युत्पत्तेः । किन्तु तथापि अस्मद्भयाकुलः सन् प्रच्छन्नरूपेण गुप्तभावेन युध्यसे, अतएव त्वां धिक् धिक् अतिशयेन निन्दामीत्यर्थः ।

अत्र जयरूपस्वकार्य्यसिद्धये इन्द्रजितः प्रकाश्ययुद्धे प्रवर्त्तनाय लक्ष्मणकर्त्तृककटूक्तिरुत्तेजनम् ।

(१) कण्वस्येति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा सुन्दराङ्के—"दुर्य्योधनः । धिक् ! धिक् ! सूत ! किं कृतवानसि ? ।
वत्सस्य मे दुर्ललितस्य पापः, पापं विधास्यति" इत्यादि (ष) ।

२२६ । नीतिः शास्त्रेण वर्त्तनम् ॥ (स)

यथा शाकुन्तले—"दुष्मन्तः । विनीतवेशप्रवेश्यानि तपोवनानि ।" इति (ह) ।

२२७ । उक्तस्यार्थस्य यत्तु स्यादुत्कीर्त्तनमनेकधा ।
उपालम्भस्वरूपेण तत् स्यादर्थविशेषणम् ॥ (च)

यथा शाकुन्तले—राजानं प्रति "शार्ङ्गरवः । आः ! कथमिदं नाम किमिदमुपन्यस्तमिति ? ननु भवानेव नितरां लोकवृत्तान्ते निष्णातः ।
सतीमपि ज्ञातिकुलैकसंश्रयां जनोऽन्यथा भर्त्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥" (क)

२२८ । प्रोत्साहनं स्यादुत्साह-गिरा कस्यापि योजनम् । (ख)

---

(श) भर्त्नेति । भर्त्सना सतिरस्कारस्तु परीवादो नाम नाट्यालङ्कारः स्यात् ।

(ष) यथेति । "वत्सस्य मे दुर्ललितस्य पापः, पापं विधास्यति समक्षमुदायुधोऽसौ ।
अस्मिन्निवारयसि किं व्यवसायिनं माम्, क्रोधो न नाम करुणा न च तेऽस्ति लज्जा ॥" इति श्लोकसमुदायः ।
उदायुध उद्यतास्त्रः असौ पापः पापात्मा भीमः, दुर्ललितस्य दुःखेनाङ्कपालितस्य मे मम वत्सस्य दुःशासनस्य पापं पापजन्यममङ्गलं हत्यामित्यर्थः समक्षमेव विधास्यति करिष्यति । अस्मिन् विषये व्यवसायिनं नवारणायोद्यमिनं मां किं निवारयसि, अतएव ते तव न क्रोधः, न करुणा, न च वा लज्जा अस्ति ।
अत्र सूतभर्त्सनया परीवादः ।

(स) नीतिरिति । शास्त्रेण शास्त्रानुसारेण वर्त्तनं प्रवृत्तिर्नीतिर्नाम नाट्यालङ्कारः स्यात् ।

(ह) यथेति । अत्र "गुरौ सविनयाचारः" इति शास्त्रानुसारेण वर्त्तनान्नीतिः ।

(च) उक्तस्येति । उक्तस्यार्थस्य कथितविषयस्य उपालम्भस्वरूपेण निन्दारूपेण यत्तु अनेकधा उत्कीर्त्तनं स्पष्टकथनं स्यात्, तत् अर्थविशेषणं नाम नाट्यालङ्कारः स्यात्, अर्थः प्रकृतविषयो विशिष्यते-ऽवधार्य्यतेऽनेनेति व्युत्पत्तेः ।

(क) यथेति । नितरामत्यन्तम्, लोकवृत्तान्ते निष्णातो लोकव्यवहाराभिज्ञः ।
सतीमिति । जनो लोकः, भर्त्तृमतीं सधवां स्त्रियं सतीमपि ज्ञातिकुलं पितृवंश एव एको मुख्यश्चिरा-श्रयोऽर्थः संश्रय आश्रयो यस्यास्तां तथाविधाम्, अन्यथा विशङ्कते व्यभिचारित्वेनाशङ्कते । अतो हेतोः, प्रिया अप्रिया वा प्रमदा स्त्री स्वबन्धुभिस्तस्याः पित्रादिभिः परिणेतुः समीपे स्थापयितुमिष्यते ।
अत्र "किमिदमुपन्यस्तम्" इति राज्ञा कथितविषयस्य उपालम्भरूपेण अनेकधा उत्कीर्त्तनादर्थविशेषणम् ।

CC0: Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा बालरामायणे—

"कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससि।
तज्जगत्त्रितयं त्रातुं तात! ताड़य ताड़काम्॥" (ग)

२२९। साहाय्यं सङ्कटे यत् स्यादानुकूल्यं (१) परस्य च॥ (घ)

यथा वेण्याम्—कृपं प्रति "अश्वत्थामा। त्वमपि तावद्राज्ञः पार्श्ववर्त्ती भव। कृपः। वाञ्छाम्यहमद्य प्रतिकर्त्तुम्" इत्यादि (ङ)

२३०। अभिमानः स एव स्यात्—(च)

यथा तत्रैव—"दुर्य्योधनः।

मातः! किमप्यसदृशं कृपणं वचस्ते" इत्यादि (छ)।

२३१। प्रश्रयादनुवर्त्तनम्।

अनुवृत्तिः—(ज)

यथा शाकुन्तले—राजा शकुन्तलां प्रति—"अयि! तपो वर्द्धते?। अनसूया। दाणिं अदिधिविसेसलाहेण।" इत्यादि (झ)

---

(ख) प्रोत्सेति। उत्साहगिरा उत्साहजनकवाक्येन कस्यापि जनस्य योजनं कार्य्यविशेषे प्रवर्त्तनं प्रोत्साहनं नाम नाट्यालङ्कारः स्यात्, प्रोत्साह्यते अनेनेति व्युत्पत्तेः।

(ग) कालेति। कालरात्रिवत् काल्याः कालरात्रिमूर्त्तिवत् कराला भीषणा इयं ताड़का स्त्री, इति कृत्वा किं विचिकित्ससि हन्तुं संशयं करोषि। तस्मात् हे तात! राम! जगत्त्रितयं त्रातुं ताड़कां राक्षसीं ताड़य प्रहर।

अत्र ताड़कावधे रामस्य योजनात् प्रोत्साहनम्।

(घ) साहाय्यमिति। सङ्कटे आपदि परस्य यच्च आनुकूल्यं तत् साहाय्यं नाम नाट्यालङ्कारः स्यात्। अत्र व्युत्पत्तिः स्पष्टा।

(ङ) यथेति। अत्र रणसङ्कटे कृपस्य दुर्य्योधनसाहाय्यप्रवृत्तेः साहाय्यम्।

(च) अभीति। सोऽभिमानोऽहङ्कार एव अभिमानो नाम नाट्यालङ्कारः स्यात्।

(छ) मातरिति। "सुक्षत्रिया क्व भवती क्व च दीनतैषा। निर्वत्सले सुतशतस्य विपत्तिमेतां त्वं नानुचिन्तयसि रक्षसि मामयोग्यम्॥" इति शेषपादत्रयम्।

अत्र दुर्य्योधनस्याभिमानादभिमानः।

(ज) प्रश्रयादिति। प्रश्रयात् विनयात् अनुवर्त्तनमानुगत्यम् अनुवृत्तिर्नाम नाट्यालङ्कारः स्यात्। अत्रापि व्युत्पत्तिः स्पष्टा।

---

(१) सानुकूल्यमिति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२३२ । भूतकार्य्याख्यानमुत्कीर्त्तनं मतम् ॥ (ञ)

यथा बालरामायणे—

"अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे

गाढ़ं वक्षसि ताड़िते हनुमता द्रोणाद्रिरत्राहृतः ।" इत्यादि (ट) ।

२३३ । याच्ञा तु क्वापि याच्ञा या स्वयं दूतमुखेन वा । (ठ)

यथा—"अद्यापि देहि वैदेहीं दयालुस्त्वयि राघवः ।

शिरोभिः कन्दुकक्रीड़ां किं कारयसि वानरान् ॥" (ड)

२३४ । परिहार इति प्रोक्तः कृतानुचितमार्ज्जनम् ॥ (ढ)

यथा—"प्राणप्रयाणदुःखार्त्त उक्तवानस्म्यनक्षरम् ।

तत् क्षमस्व विभो ! किञ्च सुग्रीवस्ते समर्पितः ॥" (ण)

---

(झ) यथेति । "इदानीमतिथिविशेषलाभेन ।" इति संस्कृतानुवादः । अत्रोभयवाक्येनैव उभयानुवर्त्तनसूचनादनुवृत्तिः ।

(ञ) भूतेति । भूतकार्य्यस्य अतीतवृत्तान्तस्य आख्यानं कथनम् उत्कीर्त्तनं नाम नाट्यालङ्कारो मतम् । उत्कीर्त्तनमाख्यानमिति च नार्थान्तरम् ।

(ट) अत्रेति । "दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं लम्भितः

केनाप्यत्र मृगाक्षि ! राक्षसपतेः कृत्ता च कण्ठाटवी ॥"

इति शेषपादद्वयम् । हे मृगाक्षि ! सीते ! अत्र स्थाने फणिपाशबन्धनविधिरावयोरिन्द्रजित्कर्त्तृक-नागपाशबन्धनमासीत् । अत्र च स्थाने भवत्या देवरे लक्ष्मणे शक्त्या शक्तिशेलद्वारा रावणेन वक्षसि गाढ़ं ताड़िते सति हनुमता द्रोणाद्रिर्गन्धमादनपर्वतः आहृत आनीतः ।

अत्र नागपाशबन्धनादीनामतीतकार्य्याणामाख्यानादुत्कीर्त्तनम् ।

(ठ) याच्ञेति । स्वयमात्मना दूतमुखेन वा क्वापि कुत्रापि जने याच्ञा यस्य कस्यापि विषयस्य प्रार्थना, सा तु याच्ञा नाम नाट्यालङ्कारः स्यात् । तत्र स्वयं याच्ञायामुदाहरणम्—"भो लङ्केश्वर ! दीयताम्" इत्यादि ।

(ड) दूतमुखेन याच्ञायामुदाहरणमाह यथेति । हे रावण ! अद्यापि अधुनापि वैदेहीं सीतां देहि ; राघवो रामः त्वयि दयालुर्भवत्विति शेषः । शिरोभिर्द्दशभिरात्मनो मस्तकैः वानरान् कन्दुकक्रीड़ां किं कारयसि ।

(ढ) परीति । कृतस्य अनुचितस्य मार्ज्जनं परिहार इति नाम नाट्यालङ्कारः प्रोक्तः । अनुचितस्य परिहरणात् परिहार इति संज्ञा ।

(ण) प्राणेति । प्राणप्रयाणे तव प्रहारात् प्राणगमनकाले यद्दुःखं तेन आर्त्तः पीड़ितः सन्, यदनक्षरम् अप्रशस्तवर्णं "त्वया तपस्विचाण्डाल !" इत्याद्यसङ्गतवाक्यम् उक्तवानस्मि ; हे विभो ! तत् क्षमस्व, किञ्च अपि च सुग्रीवो ममानुजः ते तुभ्यं समर्पितो दत्तः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२३५। अवधीरितकर्त्तव्य-कथनन्तु निवेदनम्। (त)

यथा राघवाभ्युदये—"लक्ष्मणः। आर्य्य! समुद्राभ्यर्थनया गन्तुमुद्यतोऽसि, तत् किमेतत्?।" (थ)।

२३६। प्रवर्त्तनन्तु कार्य्यस्य यत् स्यात् साधुप्रवर्त्तनम्॥ (द)

यथा वेण्याम्—"राजा। कञ्चुकिन्! देवस्य देवकीनन्दनस्य बहुमानात् वत्सस्य भीमसेनस्य विजयमङ्गलाय प्रवर्त्त्यन्तां तत्रोपचिताः समारम्भाः।" (ध)।

२३७। आख्यानं पूर्ववृत्तोक्तिः—(न)

यथा तत्रैव—"देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः" इत्यादि (प)।

२३८। युक्तिरर्थावधारणम्। (फ)

---

अत्र कृतकटूक्तिरूपानुचितमार्ज्जनात् परिहारः।

(त) अथेति। अवधीरितस्य प्रागवज्ञातस्य विषयस्य कर्त्तव्यकथनं कर्त्तव्यत्वेन ज्ञापनं निवेदनं नाम नाट्यालङ्कारः स्यात्।

(थ) यथेति। एतद्व्यापारान्तरानुष्ठानेन निवर्त्तनं किम्? तत्रैव गन्तुमुचितमिति भावः।

अत्र प्रागवधीरितस्य समुद्रान्तिके गमनस्य कर्त्तव्यत्वज्ञापनान्निवेदनम्।

(द) प्रवर्त्तनमिति। कार्य्यस्य यस्य कस्यचित् कर्म्मणः, यत् साधुप्रवर्त्तनं साधुः समारम्भः, तत्तु प्रवर्त्तनं नाम नाट्यालङ्कारः स्यात्।

(ध) यथेति। बहुमानात् अलङ्घनीयादेशत्वरूपात्यादरात्। उपचिता आयोजिताः समारम्भा मङ्गलघटस्थापनादिव्यापाराः।

अत्र माङ्गलिककार्य्यस्य साधुसमारम्भात् प्रवर्त्तनम्।

(न) आख्यानमिति। पूर्ववृत्तस्य अतीतघटनाया उक्तिराख्यानं नाम नाट्यालङ्कारः स्यात्। तत्रात्मसम्बन्ध्यतीतघटनाया उक्तौ उत्कीर्त्तनम्, परसम्बन्ध्यतीतघटनाया उक्तौ तु आख्यानमित्यनयोर्भेदः।

(प) यथेति। "यत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः। तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे, यद्रामेण कृतं तदेव कुरुते द्रौणायनिः क्रोधनः॥" इति शेषपादत्रयम्।

अत्र परशुरामकृतघटनोक्तेराख्यानम्।

(फ) युक्तिरिति। अर्थावधारणं विषयविशेषनिश्चयो युक्तिर्नाम नाट्यालङ्कारः स्यात्। निश्चयपक्षयोगाद्युक्तिरिति संज्ञा।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा तत्रैव—

"यदि समरमपास्य नास्ति मृत्योर्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः किमिति मुधा मलिनं यशः कुरुध्वम् ॥" (ब)

२३९ । प्रहर्षः प्रमदाधिक्यम्—(भ)

यथा शाकुन्तले—"राजा । तत् किमिदानीमात्मानं पूर्णमनोरथं नाभिनन्दामि ।" (म)

२४० । शिक्षा स्यादुपदेशनम् ॥ (य)

यथा तत्रैव—"सहि ! ण जुत्तं अस्समवासिणो जणस्स अकिदसक्कारं अदिधिविसेसं उज्झिअ सच्छन्ददो गमणं ।" (र)

एषाञ्च लक्षणनाट्यालङ्काराणां सामान्यत एकरूपत्वेऽपि भेदेन व्यपदेशो गड्डलिकाप्रवाहेण (ल) । एषु च केषाञ्चित् गुणालङ्कारभावसन्ध्यङ्गविशेषान्तर्भावेऽपि नाटके प्रयत्नतः कर्त्तव्यत्वात्तद्विशेषोक्तिः (व) । एतानि च—(श)

(ब) यदीति । समरम् अपास्य विहाय गतस्य वेति शेषः, यदि मृत्योर्भयं नास्ति तदा इतो युद्धस्थलात् अन्यतः अन्यस्थाने प्रयातुं गन्तुं युक्तम् । अथ जन्तोः प्राणिनः मरणम् अवश्यमेव निश्चितमेव ; इति हेतोः मुधा वृथा यशः किं कथं मलिनं पलायनापवादेन कलङ्कितं कुरुध्वम् ।

अत्र मरणनिश्चयेन युद्धस्य कर्त्तव्यतानिश्चयाद्युक्तिः ।

(भ) प्रहर्ष इति । प्रमदाधिक्यम् आनन्दातिशयः प्रहर्षो नाम नाट्यालङ्कारः स्यात् ।

(म) यथेति । अत्र राज्ञः स्त्रीपुत्रलाभेन प्रमदाधिक्यात् प्रहर्षः ।

(य) शिक्षेति । शिक्षा शिक्षादानम् उपदेशनं नाम नाट्यालङ्कारः स्यात् ।

(र) यथेति । "सखि ! न युक्तमाश्रमवासिनो जनस्य अकृतसत्कारमतिथिविशेषमुज्झित्वा स्वच्छन्दतो गमनम् ।" इति संस्कृतानुवादः । स्वच्छन्दतो निजाभिप्रायानुसारेण ।

अत्र शकुन्तलायै शिक्षादानादुपदेशनम् ।

(ल) ननु भूषणादीनां नाट्यलक्षणानाम् आशीरादीनां नाट्यालङ्काराणाञ्च नाट्यभूषणहेतुत्वरूपसामान्यधर्मयोगादभेदेनैव व्यपदेशस्य युक्तत्वे कथं भेदेन व्यपदेश इत्याह एषाञ्चेति । लक्षणानि प्रागुक्तानि भूषणादीनि नाट्यालङ्काराश्च आशीरादयस्तेषाम् । सामान्यतो नाट्यभूषणहेतुत्वरूपसामान्यधर्मयोगात् । गड्डलिकाप्रवाहेण नदीस्रोतोऽनुसारेण प्राचीनपरम्परामतानुसारेणेत्यर्थः । एतेन वस्तुतो लक्षणनाट्यालङ्काराणामभेद एवेति सूचितम् ।

(व) ननु तथापि केषाञ्चिल्लक्षणनाट्यालङ्काराणां गुणालङ्कारादावन्तर्भावात् कथं पृथगुक्तिरित्याह एषु चेति । एषु लक्षणनाट्यालङ्कारेषु मध्ये । केषाञ्चित् भूषणादीनां लक्षणानाम् आशीरादीनां नाट्यालङ्कारा-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"पञ्चसन्धि चतुर्वृत्ति चतुःषष्ट्यङ्गसंयुतम्।
षट्त्रिंशल्लक्षणोपेतमलङ्कारोपशोभितम् (१)॥
महारसं महाभोगमुदात्तरचनान्वितम् (२)।
महापुरुषसत्कारं (३) साध्वाचारं जनप्रियम्॥
सुश्लिष्टसन्धियोगञ्च सुप्रयोगं सुखाश्रयम्।
मृदुशब्दातिपातञ्च कविः कुर्य्यात्तु नाटकम्॥" (ष)

इति मुनिनोक्तत्वात् नाटकेऽवश्यं कर्त्तव्यान्येव (स) वीथ्यङ्गानि वक्ष्यन्ते। लास्याङ्गान्याह—(ह)

णाञ्च। तथा च भूषणाख्यं लक्षणं प्रसादादिगुणेषु तत्तदलङ्कारेषु च, अभिप्रायाख्यं लक्षणं निदर्शनादलङ्कारे, ज्ञप्तिनामकं लक्षणं मतिनामकभावे, विचारादिलक्षणञ्चानुमानादिसन्ध्यङ्गेषु अन्तर्भवितुमर्हन्ति ; तथा आशीराख्योऽलङ्कारो यथासम्भवं प्रसादादिगुणेषु, उपपत्तिनामकालङ्कारः काव्यलिङ्गाद्यलङ्कारे, आक्रन्दनामकालङ्कारः शोकस्थायिभावे, युक्तिनामकालङ्कारश्च युक्तिनामकसन्ध्यङ्गे अन्तर्भवितुमर्हतीत्याद्यनुसन्धेयम्। अत्र नाटकपदं रूपकमात्रोपलक्षणम्। प्रयवत इति। अत्रायमाशयः—रसानुकूल्यसम्भवे गुणालङ्कारभावानां सन्ध्यङ्गविशेषाणाञ्च यथेच्छं कर्त्तव्यता, नाट्यलक्षण-नाट्यालङ्काराणान्तु अवश्यमेव कर्त्तव्यतेति। तेषां नाट्यलक्षण-नाट्यालङ्काराणां विशेषोक्तिः पृथगुक्तिः।

(श) एतानीति। अवश्यं कर्त्तव्यान्येवेति परिणान्वयः।

(ष) पञ्चेति। मुखादयः पञ्च सन्धयो यस्मिन् तत्, कौशिक्यादयश्चतस्रो वृत्तयो यस्मिन् तत्, षट्त्रिंशता लक्षणैर्भूषणादिभिरुपेतं युक्तम्, अलङ्कारैराशीरादिभिरुपशोभितम्, महान् शृङ्गारो वीरो वा रसो यस्मिन् तत्, महान् भोगो विलासो यस्मिन् तत्, उदात्तया उत्कृष्टया रचनया अन्वितम्, महापुरुषस्य धीरोदात्तनायकस्य सत्कारः साधुव्यवहारो यस्मिन् तत्, साधुराचार आर्य्यसम्मतो व्यवहारो यस्मिन् तत्, जनानां प्रियम्, सुश्लिष्टः सुसङ्गतः सन्धीनां मुखादीनां योगः सन्निवेशो यस्मिन् तत्, शोभनः प्रयोगः अभिनयो यस्य तत्, सुखाश्रयं जनकतासम्बन्धेन सुखवत् द्रष्टृणां सुखकरमित्यर्थः, मृदूनां कोमलानामनायाससबोध्यानां शब्दानामतिपातः क्रमिकातिक्रमः अवस्थितिर्यस्मिन् तत् तथोक्तञ्च नाटकं कविः कुर्य्यात्।

(स) इतीति। मुनिना भरतेन। अवश्यं कर्त्तव्यान्येवेति। तथा चात्र भरतेन सन्ध्यङ्ग-नाट्यलक्षण-नाट्यालङ्काराणां पृथक् पृथगभिधानात् सन्ध्यङ्गविशेषाणाञ्च अनावश्यकतायाः प्रागेवोक्तत्वात् नाट्यलक्षण-नाट्यालङ्काराणान्तु तदनुक्तत्वात् तेषामवश्यकर्त्तव्यतेति तदनुसारित्वेन मन्मतस्यापि प्रामाण्यमिति भावः।

(ह) वीथ्यङ्गानीति। वक्ष्यन्ते "अस्यास्त्रयोदशाङ्गानि" इत्यादिनेति शेषः। "लास्याङ्गानि दश" इत्यनेन प्रागुद्दिष्टानि लास्याङ्गानीत्यर्थः।

(१) गुणालङ्कारभूषितम् इति मूले पाठः। (२) वचनान्वितम् इति मूलग्रन्थे पाठः।
(३) सञ्चारमिति च मूलपाठभेदः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२४१। गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका।
प्रच्छेदकस्त्रिगूढ़ञ्च सैन्धवाख्यं द्विगूढ़कम्॥
उत्तमोत्तमकञ्चान्यदुक्तप्रत्युक्तमेव च।
लास्ये दशविधं ह्येतदङ्गमुक्तं मनीषिभिः॥ (च)

तत्र—(१)

२४२। तन्त्रीभाण्डं पुरस्कृत्योपविष्टस्यासने पुरः।
शुष्कं गानं गेयपदम्—(क)

यथा—गौरीगृहे वीणां वादयन्ती "मलयवती।
उत्फुल्लकमलकेसरपरागगौरद्युते! मम हि गौरि!।
अभिवाञ्छितं प्रसिध्यतु भगवति! युष्मत्प्रसादेन॥" (ख)

२४३। स्थितपाठ्यं तदुच्यते॥
मदनोत्तापिता यत्र पठति प्राकृतं स्थिता। (ग)

अभिनवगुप्तपादास्त्वाहुः—"उपलक्षणञ्चैतत्। क्रोधोद्भ्रान्तस्यापि प्राकृतपठनं स्थितपाठ्यम्" इति।

---

(च) गेयेति। मनीषिभिर्लास्ये एतद्गेयपदादिकं दशविधमङ्गमुक्तम्।

(क) तन्त्रीति। तन्त्रीभाण्डं वीणादिकं तन्त्रीविशिष्टं यन्त्रं पुरस्कृत्य अग्रे स्थापयित्वा, पुरो देवताग्रवर्त्तिनि आसने उपविष्टस्य जनस्य शुष्कं निर्दोषं गानं गेयपदं नाम लास्याङ्गं स्यात्, गेयं गानयोग्यं पदं यत्रेति व्युत्पत्तेः।

(ख) उत्फुल्लेति। उत्फुल्लकमलस्य प्रस्फुटितपद्मस्य केसरपरागवत् किञ्जल्करेणुवत् गौरी गौरवर्णा द्युतिः प्रभा यस्यास्तत्सम्बोधनम्। हे गौरि! हे दुर्गे! हे भगवति! युष्मत्प्रसादेन भवदनुग्रहेण मम अभिवाञ्छितं प्रसिध्यतु।

(ग) स्थितेति। यत्र मदनोत्तापिता स्त्री स्थिता सती प्राकृतं प्राकृतभाषां पठति, तत् स्थितपाठ्यं नाम लास्याङ्गमुच्यते। अत्र व्युत्पत्तिः स्पष्टा। उदाहरणं यथा शाकुन्तले—

"तुज्झ ण आणे हिअअं मह उण मअणो दिवावि रत्तिं वि।
णिक्किव! दावइ बलिअं तुह हुत्तमणोरहाए अङ्गाइं॥"

---

(१) अत्र चेति क्वचित् पाठः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२४४। निखिलातोद्यरहितं शोकचिन्तान्विताबला॥
अप्रसाधितगात्रं यदासीनासीनमेव तत्(१)। (घ)
२४५। आतोद्यमिश्रितं गेयं छन्दांसि विविधानि च॥
स्त्रीपुंसयोर्विपर्य्यासचेष्टितं पुष्पगण्डिका। (ङ)
२४६। अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना॥
वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको मतः। (च)
२४७। स्त्रीवेशधारिणां पुंसां नाट्यं श्लक्ष्णं त्रिगूढकम्॥ (छ)

(घ) निखिलेति। शोकेन चिन्तया च अन्विता अबला स्त्री, आसीना उपविष्टा सती, निखिलेन आतोद्येन वादित्रेण रहितं तथा अप्रसाधितम् अनलङ्कृतं गात्रं यस्मिन् कर्म्मणि तद्यथा तथा यद्गायति, तदेव आसीनं नाम लास्याङ्गमुच्यते। आसीनया गीतत्वादासीनमिति संज्ञा।

यथा मम वङ्गीयप्रतापे—"शङ्कर! संहर तिमिरमतिदुस्तरमवतर वितर करुणाम्; कुलजा वनिता विपदि पतिता सहते दारुणयातनाम्। दूषितमपि यौवनम्, विफलमिह जीवनम्, उपहर विपदि सान्त्वनाम्; भवतु मम मरणम्, अचिरमिह शरणम्, पूरय पुनरिति कामनाम्॥"

(ङ) आतोद्येति। आतोद्यमिश्रितं वादित्रसङ्गतं गेयं गानम्, तत्र विविधानि छन्दांसि च, तथा स्त्रीपुंसयोर्विपर्य्यासेन वैपरीत्येन चेष्टितं व्यवहार एतत् सर्वं पुष्पगण्डिका नाम लास्याङ्गमुच्यते। पुष्पगण्डिकावन्मनोहरत्वात् पुष्पगण्डिकेति समाख्या। यथा वङ्गीयप्रतापे—

"मन्दमन्दगन्धवहो वहति शीतलः कूजति कोकिलः
परमसुखे कुसुममुखे वसति मञ्जुलः, भ्रमरी बहुलः सेवितवञ्जुलः।
अमृतसन्निभं चरति दुर्लभं कुसुमसम्भवं मधुरसौरभं
शीतलकरी रजनिकरो राजति निर्म्मलः, नभसि धवलः, परमकोमलः॥"

तोराव। अन्तरान्तरा "कुहु कुहु" "गुन् गुन्" इत्यादिना विविधभङ्ग्या यथायथमभिनयति।

(च) अन्येति। पतिम् अन्यस्यां स्त्रियामासक्तं मत्वा, प्रेमविच्छेदेन स्वप्रणयभङ्गेन यो मन्युर्दैन्यं तेन, वीणापुरःसरं वीणावादनपूर्वकं स्त्रिया यद्गानं तत् प्रच्छेदको नाम लास्याङ्गं मतः। प्रेमप्रच्छेद-प्रयोज्यत्वात् प्रच्छेदक इति नाम। यथा मम विराजसरोजिन्याम्—

"भ्रान्तहृदय! त्यज विषयवासनां क्षान्त! कुरु विषयचपलिकाभावनाम्।
ऋतुराजो वसन्त आसीदशोकहेतुः साम्प्रतमपरागतो ददाति यन्त्रणाम्॥"

(छ) स्त्रीति। स्त्रीवेशधारिणां पुंसां श्लक्ष्णं स्लोकं नाट्यं स्त्रीत्वेनाभिनयः त्रिगूढकं नाम लास्याङ्गं मतम्, त्रीणि वाग्वेशव्यवहृतानि गूढानि यस्मिन्निति व्युत्पत्तेः।

(१) सुप्रसाधितगात्रं यदासीदासीनमेव तत् इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा मालत्याम्—"मकरन्दः । एषोऽस्मि मालती संवृत्तः ।" (ज)

२४८ । कश्चन भ्रष्टसङ्केतः सुव्यक्तकरणान्वितः ।

प्राकृतं वचनं वक्ति यत्र तत् सैन्धवं विदुः ॥ (झ)

करणं वीणादिक्रिया (ञ) ।

२४९ । चतुरस्रपदं गीतं मुखप्रतिमुखान्वितम् ।

द्विगूढं रसभावाढ्यम्—(ट)

२५० । उत्तमोत्तमकं पुनः ॥

कोपप्रसादजमधिक्षेपयुक्तं रसोत्तरम् । (ठ)

२५१ । हावहेलान्वितं चित्रश्लोकबन्धमनोहरम् ॥ (

उक्तिप्रत्युक्तिसंयुक्तं सोपालम्भमलीकवत् ।

विलासान्वितगीतार्थमुक्तप्रत्युक्तमुच्यते ॥ (ड)

---

(ज) यथेति । अत्र मालतीवेशधारिणो मकरन्दस्य स्त्रीकाभिनयात्त्रिगूढकम् ।

(झ) कश्चनेति । भ्रष्टो निर्द्दिष्टस्थाने नायिकाया अनागमनात् प्रच्युतः सङ्केतो यस्य सः, तथा सुव्यक्तेन करणेन वीणादिवादनक्रियया अन्वितः । एतत्तु कादाचित्कमिति मद्दान्तः । कश्चन पुरुषो यत्र विषये प्राकृतं वचनं वक्ति, तत् सैन्धवं नाम लास्याङ्गं विदुः । सैन्धवेनाम्नैव अस्थिरेण पुरुषेण प्रयुक्तत्वात् सैन्धवमिति संज्ञा । यथा विक्रमोर्वश्याम्--"राजा । कइ तुए सिक्खिदमेदं गइलालस ! । सा तुए दिट्ठा जहणभरालसा ।"

(ञ) करणमिति । वीणादिक्रिया वीणादिवादनकार्य्यम् । एतेन कारिकायां करणशब्दो भावसाधन इति दर्शितम् ।

(ट) चतुरिति । चतुरस्राणि चतुर्धा विभक्तानि पदानि यत्र तत्, मुखेन मुखसन्धिना प्रतिमुखेन प्रतिमुखसन्धिना वा अन्वितं तयोरेकतरस्मिन्नवस्थितमित्यर्थः, तथा रसभावाभ्यामाढ्यं युक्तं द्विगूढं नाम लास्याङ्गं विदुः, द्वौ रसभावौ गूढौ व्यङ्ग्यत्वाद्गुप्तौ यस्मिन्निति व्युत्पत्तेः । यथा शाकुन्तले—

"खणचुम्बिताइं भमरेहिं सुउमारकेसरसिहाइं ।

ओदंसयन्ति दअमाणा पमदाओ सिरीसकुसुमाइं ॥"

(ठ) उत्तेति । कोपप्रसादाभ्यां जातं कोपप्रसादजं कोपात् प्रसादाद्वा जातमित्यर्थः, अधिक्षेपेण तिरस्कारेण युक्तम् । एतत्तु कोपजत्वमेव बोध्यम् । तथा रस उत्तरः श्रेष्ठो यत्र तत्तथोक्तं लास्याङ्गं पुनः उत्तमोत्तमं विदुः, उत्तमादप्युत्तममिति व्युत्पत्तेः । यथा विक्रमोर्वश्याम्—"राजा । (सक्रोधम्) इत्याद्यनन्तरम्,

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"हिमवाहिमवियदुक्खो सरवरए पुणपक्खो । बाहोवग्गियणअणो तम्मइ हं सजुअलओ ॥"

स्पष्टान्युदाहरणानि ।

२५२ । एतदेव यदा सर्वैः पताकास्थानकैर्युतम् ।
अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ॥ (ढ)

एतदेव नाटकम् । यथा—बालरामायणम् ।

अथ प्रकरणम् (ण) ।

२५३ । भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम् ।
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ।
सापायधर्मकामार्थ-परो धीरप्रशान्तकः ॥ (त)

विप्रनायकं यथा—मृच्छकटिकम् । अमात्यनायकं मालतीमाधवम् । वणिङ्नायकं पुष्पभूषितम् (थ) ।

---

(ड) हावेति । हावहेलाभ्यां प्रागुक्तलक्षणाभ्यामन्वितम्, चित्रेण श्लोकयन्त्रेन मनोहरम्, उक्ति-प्रत्युक्तिसंयुक्तम्, सोपालम्भं सतिरस्कारम्, अलीकवत् मिथ्यावत् प्रतीयमानम्, तथा विलासेनान्वितो गीतार्थो यत्र तत्तादृशं लास्याङ्गम् उक्तप्रत्युक्तं नामोच्यते, उक्तिप्रत्युक्तिरूपत्वात् । यथा विराजसरोजिन्याम्—

"चित्रलेखा । नवीनसरसि सरोजिनी मृदुलपवनविकम्पिनी ।

हेमप्रभा । सकलकलासु विकासिनी नागरहृदयविहारिणी ।" इत्यादि ।

(ढ) नाटकप्रकरणान्महानाटकं लक्षयति एतदिति । यदा एतन्नाटकमेव सर्वैश्चतुर्भिरेव प्रागुक्तैः पताकास्थानकैः दशभिरङ्कैश्च युतं भवेत्, तदा धीरास्तत् महानाटकमूचिरे । तथा च पताकाचतुष्टयवत्त्वे सति दशाङ्कघटितनाटकत्वं महानाटकत्वमिति लक्षणम् । एतेन अन्यस्य पद्मलोचनसंज्ञावत् नाटकलक्षण-हीनस्यैव हनूमत्प्रणीतकाव्यस्य महानाटकमिति संज्ञामात्रमित्यनुसन्धेयम् ।

(ण) साङ्गोपाङ्गं नाटकं लक्षयित्वा उद्देशक्रमात् प्रकरणं लक्षयितुमाह अथेति ।

(त) भवेदिति । प्रकरणे तदाख्ये दृश्यकाव्ये वृत्तं वृत्तान्तः लौकिकं मर्त्यलोकसम्भवयोग्यं न तु मर्त्यलोकासम्भवस्वर्गादियोग्यम्, तथा कविनैव कल्पितं न पुनर्नाटकवत् पुराणभारतादिप्रसिद्धं भवेत् । शृङ्गारो रसोऽङ्गी प्रधानो भवेत् न तु नाटकवद्वीररसोऽप्यङ्गी भवेत् । नायकस्तु विप्रो ब्राह्मणजातीयः, अमात्यो ब्राह्मणेतरोऽपि राजमन्त्री, अथवा वणिक्, सापायाः क्षयशीला ये धर्मकामार्थास्तत्परस्तेष्वासक्तो न तु मोक्ष-व्यापृतः तथा धीरप्रशान्तकः प्रागुक्तधीरप्रशान्तलक्षणान्वितो भवेत् । तेन कविकल्पितलौकिकवृत्तान्तमूलत्वे सति क्षयिष्णुधर्मकामार्थपरायण-धीरप्रशान्तलक्षण-विप्रामात्यवणिगन्यतमनायकवच्छृङ्गारप्रधानदृश्यकाव्यत्वं प्रकरणत्वमिति लक्षणमभिप्रेतम् ।

अत्र सापायपदग्रहणात् प्रकरणे धर्मार्थकामानामपायो दर्शनीय एवेति सूचितम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२५४ । नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित् ।
तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः ॥
कितव-द्यूतकारादि-विट-चेटकसङ्कुलः । (द)

कुलस्त्री पुष्पभूषिते । वेश्या तु तरङ्गदत्ते (१) । द्वे अपि मृच्छकटिके (२) । अस्य नाटकप्रकृतित्वात् शेषं नाटकवत् (ध) ।

अथ भाणः ।

२५५ । भाणः स्याद्धूर्त्तचरितो नानावस्थान्तरात्मकः ॥
एकाङ्क एक एवात्र निपुणः पण्डितो विटः ।
रङ्गे प्रकाशयेत् स्वेनानुभूतमितरेण वा ॥
सम्बोधनोक्तिप्रत्युक्ती कुर्य्यादाकाशभाषितैः ।
सूचयेद्वीरशृङ्गारौ शौर्य्यसौभाग्यवर्णनैः ॥
तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती ।
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ॥ (न)

(थ) विप्रेति । अमात्यनायकमित्यमात्यपदममात्यपुत्रपरं माधवस्यामात्यपुत्रत्वात् । ततश्च मूलेऽप्यमात्यपदं तदपत्योपलक्षणं मन्तव्यमिति दिक् ।

(द) प्रकरणभेदमाह नायिकेति । क्वापि कस्मिन्नपि प्रकरणे कुलजा कुलस्त्री नायिका, क्वापि वेश्या नायिका, क्वचिच्च द्वयं कुलजावेश्ये द्वे अपि नायिके । सर्वत्र दृश्यते इति शेषः । तेन हेतुना तस्य प्रकरणस्य त्रयो भेदाः प्रकाराः सम्भवन्ति । तत्र तेषु भेदेषु मध्ये तृतीयो भेदः कुलजावेश्योभयनायिकावत् प्रकरणमित्यर्थः, कितवो धूर्त्तः द्यूतकारः आदिशब्दात् सभिकादयश्च तथा विटः प्रागुक्तलक्षणः चेटको दासश्च तैः सङ्कुलो व्याप्तः ।

(ध) अस्येति । अस्य प्रकरणस्य, नाटकमेव प्रकृतिरतिदेशविधिना स्वधर्म्मदर्शकं यस्य तन्नाटकप्रकृतिस्तस्य भावस्तस्मात् । "यत्र समग्राङ्गोपदेशः सा प्रकृतिः" इति पूर्वमीमांसार्थसंग्रहे लौगाक्षिः । तथा च— "विना विशेषं सर्वेषां लक्ष्म, नाटकवन्मतम्" इति प्रागुक्तातिदेशात् शेषमवशिष्टं सन्ध्यङ्गनाटकलक्षणादिकं नाटकवज्ज्ञेयमिति शेषः ।

(न) भाण इति । धूर्त्तस्य नायकस्य चरितं यस्मिन् सः, नाना बहुप्रकारम् अवस्थान्तरम् आत्मा स्वरूपं यस्य सः, एक एव अङ्कः परिच्छेदो यस्मिन् सः, तादृशो रूपकविशेषो भाणः स्यात्, विटेन भण्यत

(१) रङ्गदत्ते इति पाठान्तरम् । (२) मृच्छकटिकायामिति क्वचित् पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र (१) आकाशभाषितरूपं परवचनमपि स्वयमेवानुवदन्नुत्तर-प्रत्युत्तरे कुर्य्यात् । शृङ्गारवीररसौ च सौभाग्यशौर्य्यवर्णनया सूचयेत् । प्रायेण भारती क्वापि कौशिक्यपि (२) वृत्तिर्भवति । लास्याङ्गानि गेयपदादीनि । उदाहरणं लीलामधुकरः (प) ।

अथ व्यायोगः ।

२५६ । ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः ।

हीनो गर्भविमर्षाभ्यां नरैर्बहुभिराश्रितः ॥

एकाङ्कश्च भवेदस्त्री-निमित्तसमरोदयः ।

कौशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः ॥

राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः ।

हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः ॥ (फ)

यथा—सौगन्धिकाहरणम् ।

अथ समवकारः ।

---

इति व्युत्पत्तेः । अत्र भाणे एक एव निपुणः कार्य्यदक्षः पण्डितश्च विटः स्वेन आत्मना अनुभूतम् इतरेण जनेन वा अनुभूतं वृत्तान्तं स्वयन्तु केनाप्युपायेन ज्ञात्वा रङ्गे रङ्गालये प्रकाशयेत् विवृणुयात् । तथा आकाशभाषितैः प्रागुक्तलक्षणैः सम्बोधनेन द्वारा उक्तिप्रत्युक्ती कुर्य्यात् । शौर्य्यसौभाग्ययोर्वर्णनैः वीरशृङ्गारौ रसौ सूचयेत् शौर्य्यवर्णनैर्वीरं स्त्रीपुंसयोः परस्परं सौभाग्यवर्णनैश्च शृङ्गारं सूचयेदित्यर्थः । तथा तत्र भाणे इतिवृत्तमुपाख्यानम् उत्पाद्यं प्रकरणवत् कविना कल्पनीयम् । तथा प्रायेण वाहुल्येन भारती प्रागुक्तलक्षणा वृत्तिर्भवेत् । मुखनिर्वहणे च सन्धी भवेताम् । तथा दशापि च प्रागुक्तानि लास्याङ्गानि भवेयुः । अत्रापि शेषं यथासम्भवं नाटकवज्ज्ञेयम् । अन्यत्राप्येवम् ।

(प) व्याख्यातुमाह अत्रेति । प्रायेणेतिपदद्योत्यमाह कौशिक्यपीति ।

(फ) ख्यातेतिवृत्त इति । ख्यातं पुराणभारतादिषु प्रसिद्धमितिवृत्तं यस्य सः, स्वल्पैः स्त्रीजनैः संयुतः, गर्भविमर्षाभ्यां तदाख्याभ्यां तृतीयचतुर्थसन्धिभ्यां हीनः, बहुभिर्नरैराश्रितः, एकः अङ्को यस्मिन् सः, न स्त्रीनिमित्तः समरोदयो युद्धारम्भो यस्मिन् सः, तथा कौशिकीवृत्तिरहितश्च रूपकविशेषो व्यायोगो भवेत्, विशेषेण सम्यक् पात्राणां योगो यस्मिन्निति व्युत्पत्तेः । तत्र व्यायोगे नायकः प्रख्यातः प्रसिद्धो भवेत्, स नायकः राजर्षिः अथवा दिव्यः स्वर्गीयो देवताविशेषः धीरोद्धतश्च भवेत् । तथा हास्यशृङ्गारशान्तेभ्य इतरे अन्ये रसा अत्र व्यायोगे अङ्गिनः प्रधाना भवेयुः ।

---

(१) तत्रेति पाठभेदः । (२) प्रायो भारती कौशिक्यपीति क्वचित् पाठः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२५७। वृत्तं समवकारे तु ख्यातं देवासुराश्रयम्।
सन्धयो निर्विमर्षास्तु त्रयोऽङ्कास्तत्र चादिमे॥
सन्धी द्वावन्त्ययोस्तद्वदेक एको भवेत् पुनः।
नायका द्वादशोदात्ताः प्रख्याता देवमानवाः॥
फलं पृथक् पृथक् तेषां वीरमुख्योऽखिलो रसः।
वृत्तयो मन्दकौशिक्यो नात्र विन्दुप्रवेशकौ॥
वीथ्यङ्गानि च तत्र स्युर्यथालाभं त्रयोदश।
गायत्र्युष्णिङ्मुखान्यत्र च्छन्दांसि विविधानि च॥
त्रिशृङ्गारस्त्रिकपटः कार्य्यश्चायं त्रिविद्रवः।
वस्तु द्वादशनाड़ीभिर्निष्पाद्यं प्रथमाङ्कगम्॥
द्वितीयेऽङ्के च तिसृभिर्द्वाभ्यामङ्के तृतीयके। (ब)

नाड़िका घटिकाद्वयमुच्यते। विन्दुप्रवेशकौ च नाटकोक्तावपि नेह विधातव्यौ (भ)। तत्र—

---

(ब) वृत्तमिति। समवकारे तु देवासुराश्रयं देवासुरसम्बन्धि ख्यातं प्रसिद्धञ्च वृत्तं वृत्तान्तो भवेत्। तत्र च समवकारे निर्विमर्षा विमर्षाख्यचतुर्थसन्धिरहिताश्चत्वारः सन्धयस्त्रयश्चाङ्काः कविना कर्त्तव्या इति शेषः। आदिमे अङ्के द्वौ मुखप्रतिमुखाख्यौ सन्धी कर्त्तव्यौ, अन्त्ययोरपरयोर्द्वितीयतृतीययोरङ्कयोः पुनः एक एकः सन्धिर्भवेत् द्वितीयाङ्के गर्भसन्धिस्तृतीयाङ्के च उपसंहारसन्धिर्भवेदित्यर्थः। उदात्ता धीरोदात्तलक्षणाः प्रख्याताः प्रसिद्धाः देवमानवा द्वादश नायका भवेयुः। तेषाञ्च नायकानां फलं प्रत्येकं पृथक् पृथक् भवेत्। वीरो वीररसो मुख्यः प्रधानो यस्य स तादृशः अखिल एव रसो भवेत्। मन्दा अल्पाल्पा कौशिकी वृत्तिर्यासु ताः सर्वा एव भारत्यादयो वृत्तयो भवेयुः। अत्र समवकारे विन्दुप्रवेशकौ प्रागुक्तलक्षणौ न प्रयोज्याविति शेषः। तत्र च यथालाभं त्रयोदशैव वक्ष्यमाणानि स्युः। षड़क्षरा गायत्री सप्ताक्षरा चोष्णिक् ते मुखे आदौ येषां तानि तथोक्तानि विविधानि छन्दांसि अत्र समवकारे कविना कार्य्याणि। अथमनुपदमुच्यमान-प्रकारः त्रिशृङ्गारः, त्रिकपटः, त्रिविद्रवश्च कविना कार्य्यः। प्रथमाङ्कगं वस्तु इतिवृत्तं द्वादशनाड़ीभिर्द्वादश-घटिकाभिः निष्पाद्यं पात्रैः सम्पाद्यम्। द्वितीयेऽङ्के वस्तु तिसृभिर्नाड़ीभिर्निष्पाद्यम्, तृतीयके चाङ्के वस्तु द्वाभ्यां नाड़ीभ्यां निष्पाद्यम्। अत्र "शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः" इत्युक्तलक्षणस्य विद्रवस्य गर्भ-सन्ध्यङ्गत्वे न [illegible]

CC-0. [illegible] Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

२५८ । धर्म्मार्थकामैस्त्रिविधः शृङ्गारः कपटः पुनः ॥
स्वाभाविकः कृत्रिमश्च दैवजो विद्रवः पुनः ।
अचेतनैश्चेतनैश्च चेतनाचेतनैः कृतः ॥ (म)

तत्र शास्त्राविरोधेन कृतो धर्म्मशृङ्गारः, अर्थलाभार्थकल्पितः अर्थशृङ्गारः, प्रहसनशृङ्गारः, कामशृङ्गारः (य)। तत्र कामशृङ्गारः प्रथमाङ्क एव, अन्ययोस्तु न नियम इत्याहुः। चेतनाचेतना गजादयः (र)। समवकीर्य्यन्ते बहवोऽर्था अस्मिन्निति समवकारः (ल)। यथा—समुद्रमथनम्।

अथ डिमः।

२५९ । मायेन्द्रजालसंग्राम-क्रोधोद्भ्रान्तादिचेष्टितैः ।
उपरागैश्च भूयिष्ठो डिमः ख्यातेतिवृत्तकः ॥
अङ्गी रौद्ररसस्तत्र सर्वेऽङ्गानि रसाः पुनः ।
चत्वारोऽङ्का मता नेह विष्कम्भकप्रवेशकौ ॥

---

(भ) नाडिकेति। "विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्" इत्यतिदेशात् अन्यान्यधर्म्मवद्बिन्दुप्रवेशकयोरपि प्राप्तत्वान्निषेधः।

(म) त्रिशृङ्गारादीन् मूलकार एव विवृणोति धर्म्मार्थेति। धर्म्मशृङ्गारः, अर्थशृङ्गारः, कामशृङ्गारश्चेति त्रिविधः शृङ्गारः। कपटः पुनः—स्वाभाविकः, कृत्रिमः, दैवजश्चेति त्रिविधः। विद्रवश्च पुनः अचेतनैः पाषाणादिभिः कृतः, चेतनैर्मनुष्यादिभिः कृतः, चेतनाचेतनैर्गजादिपशुभिः कृतश्चेति त्रिविधः।

(य) धर्म्मशृङ्गारादीन् व्याचष्टे तत्रेति। शास्त्रस्य "ऋतौ भार्य्यामुपेयात्" इत्यादिविधेः अविरोधेन विषयापरित्यागेन कृत ऋतुकालीनभार्य्यागमनरूपः। अर्थलाभार्थं कल्पितो वेश्याभिः। प्रहसनाय शृङ्गारः प्रहसनशृङ्गारः। यथा—हास्यार्णवादौ।

(र) चेतनेति। गजादिपशूनां सामान्यचैतन्यवत्त्वाच्चेतनत्वं मनुष्यादिवद्विवेकोपयोगिविशेषचैतन्याभावाच्चाचेतनत्वमिति गजादयः पशवश्चेतनाचेतनाः।

(ल) समवकारशब्दस्य यौगरूढत्वं दर्शयति समवेति। समवकीर्य्यन्ते सम्यग्विक्षिप्यन्ते कविना निबध्यन्ते। कृधातोः "अकर्त्तरि च कारके संज्ञायाम्" इति घञ्।

(व) मायेन्द्रेति। मायया इन्द्रजालेन संग्रामेण क्रोधेन वा उद्भ्रान्ता व्यस्तचित्ता आदिशब्दादुन्मत्तरोगिप्रभृतयश्च तेषां चेष्टितैर्व्यवहारैः, उपरागैश्चन्द्रसूर्य्यग्रासैश्च भूयिष्ठः प्रायेण परिपूर्णः, तथा ख्यातमितिवृत्तं यस्य स तादृशो रूपकविशेषो डिमः स्यात्। डिम इति डिम्बादिवद्व्युत्पन्न एव शब्द इति

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नायका देवगन्धर्व-यक्षरक्षोमहोरगाः ।
भूतप्रेतपिशाचाद्या षोड़शात्यन्तमुद्धताः ॥
वृत्तयः कौशिकीहीना निर्विमर्षाश्च सन्धयः ।
दीप्ताः स्युः षड्रसाः शान्त-हास्य-शृङ्गारवर्जिताः ॥ (व)

अत्रोदाहरणञ्च—"त्रिपुरदाहः" इति महर्षिः (श) ।

अथेहामृगः ।

२६० । ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्त्तितः ।
मुखप्रतिमुखे सन्धी तत्र निर्वहणं तथा ॥
नरदिव्यावनियमौ नायकप्रतिनायकौ ।
ख्यातौ धीरोद्धतावन्यो गूढ़भावादयुक्तकृत् ॥
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।
शृङ्गाराभासमप्यस्य किञ्चित् किञ्चित् प्रदर्शयेत् ॥
पताकानायका दिव्या मर्त्या वापि दशोद्धताः ।
युद्धमानीयसंरम्भं परं व्याजान्निवर्त्तते ॥

---

सूक्तमेव । अत्र डिमे रौद्ररसोऽङ्गी, अन्ये सर्वे रसाः पुनरङ्गानि । चत्वारः अङ्का मताः । किन्तु इह डिमे विष्कम्भकप्रवेशकौ न स्याताम्, चूलिकाङ्कावताराङ्कमुखानि तु स्युरेव । देव-गन्धर्व-यक्ष-रक्षोमहोरगाः भूतप्रेत-पिशाचाद्याः अत्यन्तमुद्धता अतीवोद्धतस्वभावाः षोड़श नायकाः स्युः । कौशिकीहीना भारत्याद्याः सर्वा एव वृत्तयः स्युः । शान्त-हास्य-शृङ्गारवर्जिताः षड़ेव रसा दीप्ताः स्पष्टं प्रतीयमानाः स्युः ।

(श) अत्रेति । महर्षिर्भरतः । तथा चोक्तं तदीयनाट्यशास्त्रे—

"इदं त्रिपुरदाहे तु लक्षणं ब्रह्मणोदितम् । ततस्त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः ॥"

(ष) ईहेति । मिश्रं ख्याताख्यातं वृत्तमुपाख्यानं यस्य सः, चत्वारोऽङ्का यत्र स तादृशो रूपक-विशेष ईहामृगः प्रकीर्त्तितः । अस्य व्युत्पत्तिन्तु वृत्तावेवानुपदमाह । तत्र ईहामृगे मुखप्रतिमुखे सन्धी स्यातां तथा निर्वहणाख्य सन्धिः स्यात् । अनियमौ "नरदिव्यौ नायकप्रतिनायकौ" इत्यत्र यथासंख्यनियमवर्जितौ धीरोद्धतौ ख्यातौ कथितौ । तथा च नरो नायकः दिव्यश्च प्रतिनायकः, एवं नरः प्रतिनायकः दिव्यश्च नायको भवितुमर्हतीत्यर्थः । अन्यः प्रतिनायको गूढ़भावाद्गुप्तभावात् अयुक्तकृत् असङ्गतकार्य्यकारी । आत्मनी रमण-मनिच्छन्तीं दिव्यस्त्रियम् अपहारेण अपहरणेन आदिशब्दाच्छलेन च इच्छतो रन्तुमभिलषतः अस्य प्रतिनायकस्य

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

महात्मानो वधप्राप्ता अपि वध्याः स्युरत्र नो ।
एकाङ्गो देव एवात्र नेतेत्याहुः परे पुनः ॥
दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे । (घ)

मिश्रं ख्याताख्यातम् । अन्यः प्रतिनायकः । पताकानायकास्तु नायकप्रतिनायकयोर्मिलिता दश । नायको मृगवदलभ्यां नायिकामत्र ईहते वाञ्छतीति ईहामृगः (ङ) । यथा—कुसुमशेखरविजयादिः ।

अथ अङ्कः ।

२६१ । उत्सृष्टिकाङ्क एकाङ्को नेतारः प्राकृता नराः ॥
रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम् ।
प्रख्यातमितिवृत्तञ्च कविर्बुद्ध्या प्रपञ्चयेत् ॥
भाणवत् सन्धिवृत्त्यङ्गान्यस्मिन् जयपराजयौ ।
युद्धञ्च वाचा कर्त्तव्यं निर्वेदवचनं बहु ॥ (च)

---

किञ्चित् किञ्चित् शृङ्गाराभासमपि कविः प्रदर्शयेत् । दिव्याः स्वर्गीयाः मर्त्या नरो वा उद्धता उद्धतस्वभावाः दश पताकानायकाः पताकाख्यार्थप्रकृतिसंसृष्टाः पुरुषाः स्युः । परं शत्रुभूतं प्रतिनायकं संरब्धं क्रोधम् आनीय प्रापय्य वर्त्तमानस्य नायकस्य व्याजात् अन्यकार्य्यच्छलात् युद्धं निवर्त्तते । अत्र ईहामृगे महात्मानो जना वधप्राप्ता वधयोग्या अपि नो वध्याः । परमतद्वयमाह एकाङ्ग इत्यादि । एकोऽङ्गो यस्मिन्नित्येकाङ्गः, अत्र ईहामृगे देव एव नेता नायक इति पुनः परे आहुः । तदितरे च दिव्यस्त्रीहेतुकं युद्धं नायकाश्च षट् इत्याहुरित्यन्वयः ।

(ङ) क्रमादस्पष्टपदानि व्याचष्टे मिश्रमिति । नायकप्रतिनायकयोरुभयोरेव सम्बन्धे मिलिता दश, न पुनरनयोरेकतरस्यैव दशेत्यर्थः । अलभ्यामसम्भवत्वेनाप्राप्याम् । अत्रार्थे ईहामृगशब्दः पृषोदरादित्वात् साधुरिति भावः ।

(च) उत्सृष्टिकाङ्क इति । उत्सृष्टिकाङ्क इत्यङ्कस्यैव परमते नामान्तरम् । एतच्च वृत्तावेव स्फुटीभविष्यति । एकः अङ्को यस्मिन् सः । अत्र अङ्के प्राकृताः साधारणाः न पुनः कथञ्चिदपि माहात्म्यवन्त इत्यर्थः, नरा अनेके मनुष्या नेतारो नायकाः । स्थायी समाप्तिं यावद्विद्यमानः करुणो रसः, बहूनां स्त्रीणाञ्च परिदेवितं विलापश्च स्यात् । कविस्तु प्रख्यातं प्रसिद्धम् इतिवृत्तं बुद्ध्या स्वविवेचनेन यथासम्भवं प्रपञ्चयेत् निस्तारयेत् । भाणवद्भाणे यथा मुखप्रतिमुखाख्यं सन्धिद्वयम्, बाहुल्येन भारती वृत्तिरल्पा तु कौशिकी दशापि लास्याङ्गानि अस्मिन्नङ्केऽपि तथैवेत्यर्थः । नायकप्रतिनायकयोर्जयपराजयौ दर्शनीयौ । वाचा च युद्धं कर्त्तव्यं न तु शस्त्रादिनेत्यर्थः, बहु प्रचुरं निर्वेदवचनमात्मावमाननासूचकं वाक्यञ्च कविना निबद्धव्यम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इममेव केचित् नाटकाद्यन्तःपात्यङ्कपरिच्छेदार्थमुत्सृष्टिकाङ्कनामानमाहुः (च)। अन्ये तु उत्क्रान्ता विलोमरूपा सृष्टिर्यत्र इति उत्सृष्टिकाङ्कः (क)। यथा—शर्मिष्ठाययातिः ।

अथ वीथी ।

२६२ । वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते ।
आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः ॥
सूचयेद्भूरिशृङ्गारं किञ्चिदन्यान् रसानपि ।
मुखनिर्वहणे सन्धी अर्थप्रकृतयोऽखिलाः ॥ (ख)

कश्चिदित्युत्तमो मध्यमोऽधमो वा । शृङ्गारबहुलत्वाच्चास्याः कौशिकीवृत्तिबहुलत्वम् (ग) ।

२६३ । अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनीषिणः ।
उद्घात्यकावलगिते प्रपञ्चस्त्रिगतं छलम् ॥
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहार-मृदवानि च तानि तु ॥ (घ)

---

(च) कारिकोक्तोत्सृष्टिकाङ्कशब्दव्युत्पत्तिप्रदर्शनपूर्वकं परमतद्वयं विवरीतुमाह इममेवेति। अयमन्तसिद्धमङ्कनामानं रूपकविशेषञ्च। नाटकादीनामन्तःपातिनो ये अङ्कास्तेषां परिच्छेदार्थं व्यावृत्त्यर्थम्, उद्गता उत्थिता नाटकाद्यङ्काद्विभिन्नरूपा सृष्टिर्यस्य स उत्सृष्टिकः, स चासावङ्कश्चेति तन्नामानम् ।

(क) अन्ये त्विति। विलोमरूपा प्रतिमुखसन्ध्याद्यभावेन विपरीतप्रकारा सृष्टिर्यस्य स उत्सृष्टिकः, स चासावङ्कश्चेति उत्सृष्टिकाङ्क इत्यर्थः। एतन्मतेऽपि "नाटकाद्यन्तःपात्यङ्कपरिच्छेदार्थम् उत्सृष्टिकाङ्कः" इत्याहुरित्यनुषज्यते। ग्रन्थकारमते तु नामसाम्येऽपि लक्षणवैषम्यान्नाटकाद्यङ्कव्यावृत्तिरिति बोध्यम् ।

(ख) वीथ्यामिति। वीथ्यामेकोऽङ्को भवेत्, तथा अत्र वीथ्याम् एको यः कश्चिन्नायकः कल्प्यते। उक्तैः कृतप्रकारैः आकाशभाषितैः चित्रामाश्चर्यां प्रत्युक्तिमाश्रितः सन् नटः शृङ्गारं भूरि, अन्यान् रसानपि तु किञ्चित् सूचयेत्। मुखनिर्वहणे सन्धी स्याताम्, तथा अखिला बीजादयः पञ्चैव अर्थप्रकृतयः स्युः ।

(ग) कश्चिदिति। नायक इत्यर्थः। कौशिकीवृत्तिबहुलत्वमिति। कौशिकीवृत्तेः शृङ्गाराङ्गत्वादिति भावः ।

(घ) अस्या इति। मनीषिणः अस्याः वीथ्यास्त्रयोदश अङ्गानि निर्दिशन्ति। तानि त्रयोदशाङ्गानि

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्रोद्‌घात्यकावलगिते प्रस्तावनाप्रस्तावे सोदाहरणं लक्षिते।

२६४। मिथो वाक्यमसद्भूतं प्रपञ्चो हास्यकृन्मतः। (ङ)

यथा—विक्रमोर्वश्यां वल्लभीस्थविदूषकचेट्योरन्योन्यवचनम् (च)।

२६५। त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः॥ (छ)

यथा तत्रैव—"राजा।

सर्वक्षितिभृतां नाथ! दृष्टा सर्वाङ्गसुन्दरी।
रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया॥ (ज)

(नेपथ्ये तत्रैव प्रतिशब्दः) राजा। कथं दृष्टेत्याह।" अथ प्रश्नवाक्यमेवोत्तरत्वेन योजितम् (झ)। "नटादित्रितयविषयमेवेदम्" इति कश्चित् (ञ)।

२६६। प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य छलना छलम्। (ट)

---

यथा—उद्घात्यकः, अवलगितम्, प्रपञ्चः, त्रिगतम्, छलम्, वाक्केलिः, अधिबलम्, गण्डम्, अवस्यन्दितम्, नालिका, असत्प्रलापः, व्याहारः, मृदवञ्चेति।

(ङ) मिथ इति। मिथः परस्परम्, असद्भूतं मिथ्याभूतम्, हास्यकृत् वाक्यं प्रपञ्चो नाम वीथ्यङ्गं मतः। परस्परं प्रपञ्चनात् प्रपञ्च इति संज्ञा।

(च) यथेति। वल्लभी चन्द्रशाला उपरिस्थगृहविशेषः (चिलै कोठा इति भाषा)। अत्र रूपकत्वसाधर्म्यादन्याङ्गानामप्यन्यत्राकाङ्क्षितत्वेन त्रोटकरूपाया अपि विक्रमोर्वश्या उदाहरणं वीथ्यां सङ्गच्छते। एवमन्यत्रापि बोध्यम्।

(छ) त्रिगतमिति। श्रुतिसाम्यतः शब्दश्रवणस्य तुल्यत्वात् न तु वक्तुरभिप्रायादिति भावः, अनेकार्थस्य योजनं श्रोत्रा कल्पनं त्रिगतं नाम वीथ्यङ्गं स्यात्, त्रिषु वक्तृश्रोत्रभिनेतृषु गतं तत्तत्सम्बन्धेन स्थितमिति व्युत्पत्तेः।

(ज) सर्वेति। प्रश्नपक्षे हे सर्वक्षितिभृतां नाथ! सर्वपर्वतानां श्रेष्ठ! अस्मिन् रम्ये मनोहरे वनान्ते वनैकदेशे मया विरहिता सर्वाङ्गसुन्दरी रामा कापि रमणी त्वया दृष्टा? इति काकुः। उत्तरपक्षे तु हे सर्वक्षितिभृतां नाथ! सर्वनृपतीनां श्रेष्ठ! अस्मिन् रम्ये वनान्ते त्वया विरहिता सर्वाङ्गसुन्दरी रामा मया दृष्टा।

(झ) नेपथ्य इति। तत्रैव पर्वत एव प्रतिशब्दः सर्वक्षितिभृतामित्यादेरविकलः प्रतिध्वनिर्जात इति शेषः, आवृतस्थानस्वभावादिति भावः। तच्च श्रुत्वा राजा आह इत्यर्थः। अत्र प्रश्नवाक्यमेव उत्तरत्वेन राज्ञा योजितम्, अतएव त्रिगतमिति भावः।

(ञ) त्रिगतशब्दस्य व्युत्पत्तौ दशरूपककारमतस्यास्वरसतां सूचयितुमाह नटादीति। नटोऽभिनेता आदिशब्दान्नटीप्रतिनटी च तेषां त्रितयमेव विषयो यस्य तत्। इदं त्रिगतम्। अत्र राजरूपस्य मूलवक्तुः सभ्यरूपस्य श्रोतुश्च परित्यागो हेत्वभाव एवास्वरसताबीजम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा वेण्याम्—"भीमार्जुनौ ।

कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम् ।
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः
क्वास्ते दुर्य्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥" (ठ)

२९७ । अन्ये त्वाहुश्छलं किञ्चित् कार्य्यमुद्दिश्य कस्यचित् ॥
उदीर्य्यते यद्वचनं वञ्चनाहास्यरोषकृत् । (ड)

२९८ । वाक्केलिर्हास्यसम्बन्धो द्वित्रिप्रत्युक्तितो भवेत् ॥ (ढ)

द्वित्रीत्युपलक्षणम् (ण) । यथा—

"भिक्षो ! मांसनिषेवणं प्रकुरुषे ? किन्तेन मद्यं विना
मद्यञ्चापि तव प्रियम् ? प्रियमहो ? वाराङ्गनाभिः सह ।
वेश्याप्यर्थरुचिः कुतस्तव धनम् ? द्यूतेन चौर्य्येण वा
चौर्य्यद्यूतपरिग्रहोऽपि भवतः ? नष्टस्य कान्या गतिः ॥" (त)

---

(ट) प्रियाभैरिति । प्रियाभैरापाततः प्रियस्वरूपैः, वस्तुतस्तु अप्रियैर्वाक्यैः विलोभ्य स्वाभिप्रेतविषये लुब्धं कृत्वा छलना प्रतारणा छलं नाम वीथ्यङ्गं स्यात् ।

(ठ) कर्त्तेति । द्यूतच्छलानाम् अक्षक्रीड़ारूपप्रतारणानां कर्त्ता, जतुमयशरणस्य जतुगृहस्य उद्दीपनो दग्धा, स प्रसिद्धः अभिमानी राजा, दुःशासनादेरनुजशतस्य गुरुः शासिता, अङ्गराजस्य कर्णस्य मित्रम्, कृष्णाया द्रौपद्याः केशोत्तरीययोः व्यपनयने आकर्षणे पटुः समर्थः, पाण्डवाश्च यस्य दासाः ; असौ दुर्य्योधनः क्व आस्ते वर्त्तते इति यूयं कथयत । रुषा क्रोधेन द्रष्टुं न अभ्यागतौ स्वः, अपि तु ज्ञातिप्रीत्यैव द्रष्टुमभ्यागतौ स्व इत्यर्थः ।

अत्रापाततः प्रभावज्ञापनात् प्रियाभैः, वस्तुतस्तु अपराधसूचनादप्रियैर्वाक्यैर्दुर्य्योधनं विलोभ्य द्रष्टुमभ्यागतौ स्व इत्यनेन छलनात् छलम् ।

(ड) अन्य इति । कस्यचित् किञ्चित् कार्य्यमुद्दिश्य वञ्चनाहास्यरोषकृत् यद्वचनमुदीर्य्यते उच्यते, तच्छलं नाम वीथ्यङ्गमिति तु अन्ये आहुः । अत्रोदाहरणं मालविकाग्निमित्रे—

"विदू । भोदि ! चिट्ठ किंचि" इत्यादि ।

(ढ) वाक्केलिरिति । द्वि-त्रिप्रत्युक्तितः अनेकप्रत्युत्तरात् हास्यसम्बन्धो वाक्केलिर्नाम वीथ्यङ्गं भवेत्, वाचा केलिरिति व्युत्पत्तिः ।

(ण) द्वित्रीति । उपलक्षणम् अनेकमात्रस्येत्यर्थः । अन्यथा बहुतरप्रत्युत्तरे प्राचामुदाहरणमसमञ्जसं स्यादिति भावः ।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

केचित् "प्रक्रान्तवाच्यस्य साकाङ्क्षस्यैव निवृत्तिर्वाक्केलिः—" इत्याहुः। अन्ये च "अनेकस्य प्रश्नस्यैकमुत्तरम्।" (थ)।

२६९। अन्योन्यवाक्याधिक्योक्तिः स्पर्द्धयाधिबलं मतम्। (द)

यथा मम प्रभावत्याम्—"वज्रनाभः।

अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया।
लीलयोन्मूलयिष्यामि भुवनद्वयमद्य वः॥ (ध)

प्रद्युम्नः। अरे रे असुरापसद! अलममुना बहुप्रलापेन। मम खलु—

अद्य प्रचण्डभुजदण्डसमर्पितोरु-
कोदण्डनिर्गलितकाण्डसमूहपातैः।
आस्तां समस्तदितिजक्षतजोक्षितेयं
क्षौणी क्षणेन पिशिताशनलोभनीया॥" (न)

२७०। गण्डं प्रस्तुतसम्बन्धि भिन्नार्थं सत्वरं वचः॥ (प)

---

(त) तथैवोदाहरणमाह भिक्षो इति। अर्थे केवलधने रुचिरभिलाषो यस्याः सा वेश्यापि सेव्यत इति शेषः। अन्यत् स्पष्टम्।

अत्र प्रत्युक्तिचतुष्टयात् हास्यसम्बन्धेन वाक्केलिः।

(थ) वाक्केलिलक्षणे मतद्वयमाह केचिदिति। साकाङ्क्षस्यैव समापकक्रियापदाद्यभावादसमाप्तस्यैव प्रक्रान्तवाक्यस्य आरब्धवचनस्य निवृत्तिर्वाक्केलिः। यथा—"इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां तामेव शान्तमथवा किमिहोत्तरेण।" अनेकस्येत्यादेरुदाहरणमूह्यम्।

(द) अन्योन्येति। स्पर्द्धया दर्पेण अन्योन्यवाक्यैः परस्परवचनैः आधिक्योक्तिः परस्परप्राधान्यकथनम् अधिबलं नाम वीथ्यङ्गं मतम्, बलमधिकृत्य जातमिति व्युत्पत्तेः।

(ध) अस्येति। व्याख्यातमेतत् प्राक्।

(न) अद्येति। प्रचण्डे अतिभयङ्करे भुजदण्डे समर्पितात् संस्थापितात् उरुकोदण्डाद्विशालकार्म्मुकात् निर्गलितानां निःसृतानां काण्डानां बाणानां समूहस्य पातैः पतनैः इयं क्षौणी पृथिवी समस्तानां दितिजानां दैत्यानां क्षतजैः उक्षिता सिक्ता सती, पिशिताशनानां मांसभोजिनां शृगालादीनां लोभनीया लोभजनिका आस्तां भवतु।

अत्र स्पर्द्धया परस्परवाक्यैः परस्पराधिक्यकथनात् अधिबलम्।

(प) गण्डमिति। प्रस्तुतसम्बन्धि प्रकृतविषयसम्बद्धं भिन्नार्थं पृथगर्थबोधकं 'सत्वरं' त्वरायुक्तं वचो वाक्यं गण्डं नाम वीथ्यङ्गं मतम्। त्वरया गण्डतो निर्गमाद्गण्डमिति संज्ञा।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा वेण्याम्—"राजा ।

अध्यासितुं तव चिराज्जघनस्थलस्य
पर्य्याप्तमेव करभोरु ! ममोरुयुग्मम् ॥" (फ)

अनन्तरं "(प्रविश्य) कञ्चुकी । देव ! भग्नं भग्नम्" इत्यादि ।

अत्र रथकेतनभङ्गार्थं वचनमूरुभङ्गार्थे सम्बद्धे सम्बद्धम् (ब)

२७१ । व्याख्यानं स्वरसोक्तस्यान्यथावस्यन्दितं भवेत् । (भ)

यथा छलितरामे—"सीता । जाद ! कल्लं क्खु अओज्झाए गतव्वं तहिं सो राआ विणएण पणइदव्वो । लवः । अथ किमावाभ्यां राजोपजीविभ्यां भवितव्यम् ? । सीता । जाद ! सो तुम्हाणं पिदा । लवः । किमावयो रघुपतिः पिता ? । सीता । (साशङ्कम्) मा अस्सधा संकधं ण क्खु तुम्हाणं, सअलाए ज्जेव पुहवीएत्ति ।" (म)

२७२ । प्रहेलिकेव हास्येन युक्ता भवति नालिका ॥ (य)

संवरणकार्य्युत्तरं प्रहेलिका (र)। यथा रत्नावल्याम्—"सुसङ्गता ।

---

(फ) अध्येति । "लीलांशुकस्य पवनाकुलितांशुकान्तं तद्दृष्टिहारि मम लोचनबान्धवस्य ।" इति श्लोकपूर्वार्द्धम् । हे करभोरु ! मम ऊरुयुग्मं तव जघनस्थलस्य सम्बन्धे तदुपरीत्यर्थः चिरादध्यासितुं रमणावस्थातुं पर्य्याप्तमेव योग्यमेव । अनन्तरमूरुयुग्ममित्युक्तेः परमेव ।

(ब) लक्ष्ये लक्षणं सङ्गमयितुमाह अत्रेति । वचनं भग्नं भग्नमिति वाक्यम् । सम्बद्धे ममोरुयुग्ममित्यनेन प्रस्तुते । तथा चात्र भग्नं भग्नमिति वाक्यस्य प्रस्तुतोरुभङ्गरूपविषयसम्बन्धित्वात् रथकेतनभङ्गरूपपृथगर्थबोधकत्वात् लरायुक्तत्वाच्च गण्डमित्यर्थः ।

(भ) व्याख्यानमिति । स्वरसेन निजाभिप्रेतार्थबोधनेच्छया उक्तस्य वाक्यस्य अन्यथा व्याख्यानम् अन्यप्रकारार्थकरणम् अवस्यन्दितं नाम वीथ्यङ्गं भवेत्, अवस्यन्दितमर्थान्तरे परिणमितमिति व्युत्पत्तेः ।

(म) यथेति । "जात ! कल्यं खलु अयोध्यायां गन्तव्यम्, तत्र स राजा विनयेन प्रणयितव्यः ।" इति संस्कृतानुवादः । प्रणयितव्यो व्यवहर्त्तव्यः । "जात ! स युष्माकं पिता ।" इति संस्कृतानुवादः । "मा अन्यथा शङ्कध्वम्, न खलु युष्माकम्, सकलाया एव पृथिव्याः ।" इति संस्कृतानुवादः ।

अत्र रामो युवयोः कुशलवयोरेव पितेति निजाभिप्रेतार्थबोधनेच्छयैव सीतया उक्तस्य "जाद ! सो तुम्हाणं पिदा" इति वाक्यस्य लवकर्त्तृकवात्सविकारवृत्तान्तज्ञानाशङ्कया 'सकलाया एव पृथिव्याः' इत्यन्यथा व्याख्यानात् अवस्यन्दितम् ।

(य) प्रेति । हास्येन युक्ता प्रहेलिकेव नालिका नाम वीथ्यङ्गं भवति । नालिकावत् बुद्धौ प्रवेशान्नालिकेति समाख्या ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सहि ! जस्स किदे तुमं आअदा, सो इदो ज्जेव चिट्ठदि । सागरिका । कस्स किदे अहं आअदा ? । सुसङ्गता । णं चित्तफलअस्स ।" (ल) ।

अत्र राज्ञः कृते आगतेत्यर्थः संवृतः (१) (व) ।

२७३ । असत्प्रलापो यद्वाक्यमसम्बद्धं तथोत्तरम् ।

अगृह्णतोऽपि मूर्खस्य पुरो यच्च हितं वचः (श)

तत्राद्यं यथा मम प्रभावत्याम्—"प्रद्युम्नः । (सहकारवल्लीमवलोक्य सानन्दम्) अहो ! कथमिहैव—

अलिकुलमञ्जुकेशी परिमलबहुला रसावहा तन्वी ।
किशलयपेशलपाणिः कोकिलकलभाषिणी प्रियतमा मे ॥" (ष)

एवमसम्बद्धोत्तरेऽपि (स) । तृतीयं यथा—वेण्यां दुर्य्योधनं प्रति गान्धारीवाक्यम् ।

---

(र) संवरणेति । संवरणं प्रकाशितप्रायस्य अर्थस्य अन्यथाकरणेन पुनरावरणं करोतीति तत्ता-दृशमुत्तरं प्रतिवचनम् । श्लोकस्थ वाक्यस्य अन्यथा व्याख्यानमात्रे अवस्यन्दितम्, हास्ययुक्तान्यथाव्याख्याने तु नालिकेत्यनयोर्भेदः ।

(ल) यथेति । "सखि ! यस्य कृते त्वमागता स इत एव तिष्ठति । कस्य कृते अहमागता ? । ननु चित्रफलकस्य ।" इति संस्कृतानुवादः ।

(व) लक्ष्ये लक्षणं योजयति अत्रेति । इत्यर्थः प्रथमवाक्येन प्रकाशितप्राय इति शेषः, संवृतः "ननु चित्रफलकस्य" इत्यनेनान्यथाकरणात् पुनरावृतः ।

(श) असदिति । यद्वाक्यम् असम्बद्धं पूर्वापरसम्बन्धशून्यम्, तथा यदुत्तरम् असम्बद्धं पूर्वापरसम्बन्ध-शून्यम्, तथा अगृह्णतोऽपि श्रुत्वाप्यननुसरतोऽपि मूर्खस्य पुरः अग्रतः यत् हितं वचश्च तत् असत्प्रलापो नाम वीथ्यङ्गं मतम् । तेन तत्त्रिविधम् । अत्र सर्वत्रैव व्युत्पत्तिः सुगमा ।

(ष) अलीति । अलिकुलं भ्रमरसमूह इव मञ्जवः सुन्दराः केशा यस्याः सा, अलिकुलमेव मञ्जुकेशा यस्याः सा च । परिमलो गन्धो बहुलो यस्याः सा, एकत्र गन्धद्रव्यव्यवहारादन्यत्र पुष्पविकासादिति भावः । रसमनुरागमावहति जनयति, रसं चीरमावहति दधातीति च सा । तन्वी कृशा । किशलयमिव पेशलः सुन्दरः पाणिर्यस्याः सा, किशलयमेव पेशलः पाणिर्यस्याः सा च । कोकिलवत् कलं मधुरास्फुटं भाषते कोकिलैरेव कलं भाषत इति च सा तथोक्ता मे मम प्रियतमा प्रभावती ।

अत्र द्वितीयार्थो व्यङ्ग्य एव । तेन प्रभावतीवर्णनवाक्यस्य पूर्वापरवर्त्तिसहकारवल्लीसम्बन्धाभावादसत्-प्रलापः ।

---

(१) संवृत्त इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२७४। व्याहारो यत् परस्यार्थे हास्यक्षोभकरं वचः। (ह)

यथा—मालविकाग्निमित्रे लास्यप्रयोगावसाने मालविका निर्गन्तुमिच्छति। "विदूषकः। मा दाव, उवदेससुद्धा गमिस्ससि!" इत्युपक्रमेण। 'दासः (१)! विदूषकं प्रति। आर्य्य! उच्यतां यस्त्वया क्रमभेदो लक्षितः। विदूषकः। पढ़मं वम्हणपूआ भोदि, सा इमाए लङ्घिदा। मालविका। स्मयते।" इत्यादिना नायकस्य विश्रब्धनायिकादर्शनेन हासलोभकारिणा वचसा व्याहारः (च)!

२७५। दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत्॥ (क)

क्रमेण यथा—"प्रिय! जीविततात्क्रौर्य्यं निःस्नेहत्वं कृतघ्नता।
भूयस्त्वद्दर्शनादेव मम ते गुणतां गताः॥" (ख)

---

(ग) एवमिति। ऊह्यमिति शेषः। यथा मम चिराजसरोजिन्याम्—"राजा। (विशेषेण निर्वर्ण्य विहस्य-च) नैषा नैषा, त्वं खलु तदा सरोजिनी, येन मे प्रियमाचरसि।"

(ह) व्याहार इति। परस्यार्थे अन्यस्य निमित्ते यत् हास्यक्षोभकरं वचः तद्व्याहारो नाम वीथ्यङ्गं मतम्। व्याक्रियते आदीयते इति व्युत्पत्तेः।

(च) यथेति। लास्यप्रयोगावसाने नृत्यकरणात् परम्। "मा तावत्, उपदेशशुद्धा गमिष्यसि। इति। संस्कृतानुवादः। उपदेशशुद्धा नैपुण्यान्तरं प्रदर्श्य शिक्षाविषये निर्दोषा। क्रमभेदः कर्त्तव्यपौर्वापर्य्यलङ्घनम्। "प्रथमं ब्राह्मणपूजा भवति, सा अनया लङ्घिता।" इति संस्कृतानुवादः। स्मयते ईषद्धास्यं करोति। नायकस्य अग्निमित्रस्य विश्रब्धनायिकादर्शनाय स्वाभाविकभावस्थमालविकादर्शनाय प्रयुक्तमुक्तं तेन। वचसा विदूषकस्य परवाक्येन।

(क) दोषा इति। यत्र दोषा गुणाः गुणाश्च दोषाः स्युः, तत् हि मृदवं नाम वीथ्यङ्गं मतम्। मृदोरिदमिति मृदवम् संज्ञात्वेन तद्धितविधेरनित्यत्वाद्वृद्ध्यभावः।

(ख) प्रियेति। हे-प्रिय! जीवितता तव विरहेऽपि मम जीवनधारणं क्रौर्य्यं काठिन्यम्, अन्यथा तादृशविरहोत्पीड़नात् जीवनं गच्छेदेवेति भावः। एवं तव विरहे मम जीवितता निःस्नेहत्वमनुरागहीनत्वम्, अन्यथा प्रगाढस्नेहे सति तादृशविरहेण जीवनं कथं तिष्ठेदित्याशयः। तथा तव विरहे मम जीवितैव कृतघ्नता, मरणोत्पादनेन तव कष्टजननात् उपकारिणः प्रत्यपकारस्यैव कृतघ्नतारूपत्वादित्यभिप्रायः। भूयस्त्वद्दर्शनादेव पुनरपि तव दर्शनं प्राप्यैव एते मम क्रौर्य्यादयो गुणतां गताः। तथा च तादृशक्रौर्य्यनिःस्नेहत्वयोः स्थित्यैवेदानीं मम जीवनधारणात् तव सङ्गमसुखलाभः, तादृशकृतघ्नतावशादेव च त्वमिदानीमागत इति भावः।

---

(१) गणदास इति मूले पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"तस्यास्तद्रूपसौन्दर्य्यं भूषितं यौवनश्रिया ।
सुखैकायतनं जातं दुःखायैव ममाधुना ॥" (ग)

एतानि (१) चाङ्गानि नाटकादिषु-सम्भवन्त्यपि वीथ्यामवश्यं विधेयानि विस्पष्टतया नाटकादिषु विनिविष्टान्यपीहोदाहृतानि (घ)। वीथ्यामिव (२) नानारसानामत्र मालारूपतया स्थितत्वाद्वीथीयम् (ङ)। यथा—मालविका।

अथ प्रहसनम् ।

२७६ । भाणवत्सन्धिसन्ध्यङ्ग-लास्याङ्गाङ्कैर्विनिर्म्मितम् ।
भवेत् प्रहसनं वृत्तं निन्द्यानां कविकल्पितम् ॥
अत्र नारभटी नापि विष्कम्भकप्रवेशकौ ।
अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा ॥ (च)

तत्र—

अत्र दोषा गुणा जाता इति मृदवम् ।

(ग) तस्या इति । यौवनश्रिया भूषितं तस्या नायिकायास्तत् रूपसौन्दर्य्यं तदा मम सुखैकायतनं सुखस्यैकमात्रकारणं जातम्, अधुना विरहकाले तु दुःखायैव । सततस्मरणजननेनोत्पीड़नादिति भावः ।

अत्र गुणा दोषा जाता इति मृदवम् ।

(घ) ननु वीथ्या अपि नाटकप्रकृतिकत्वात् नाटके च "योज्यान्यत्र यथालाभं वीथ्यङ्गानीतराण्यपि" इत्युक्त्या वीथ्यङ्गानां प्राप्तत्वात् "विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्" इत्यतिदेशेनैव वीथ्यामपि वीथ्यङ्गप्राप्तेः कथं नाटकनिरूपणप्रकरणे अनुक्ता अत्र वीथ्यङ्गान्युच्यन्त इत्याह एतानीति । एतानि उद्घात्यकादीनि वीथ्यङ्गानि । विधेयानीति । इति हेतोरिति शेषः । विनिविष्टानि "योज्यान्यत्र" इत्यनेन विनिवेशयितुमुपदिष्टान्यपि । इह वीथ्याम् । तथा चात्र वीथ्यङ्गोक्तेरयमाशयः—वीथ्यां वीथ्यङ्गानामावश्यकत्वम्, नाटकादौ च सति सम्भवे प्रयोज्यत्वमिति । अतएव वीथ्यङ्गेति संज्ञाप्युपपद्यते ।

(ङ) वीथीशब्दस्य व्युत्पत्तिं दर्शयति वीथ्यामिवेति । वीथ्यां पादपादिश्रेणां पादपादीनामिव । अत्र रूपकविशेषे नानारसानां मालारूपतया स्थितत्वादियं वीथी वीथीसंज्ञकं रूपकम् ।

(च) भाणवदिति । भाणवद्भाणाख्यं रूपकमिव मुखनिर्वहणाभ्यां सन्धिभ्यां यथासम्भवं सन्ध्यङ्गैर्लास्याङ्गैः एकेनाङ्केन च विनिर्म्मितम्, कविकल्पितं निन्द्यानां निन्दनीयानां जनानां वृत्तमुपाख्यानं प्रहसनं नाम रूपकं भवेत्, प्रकृष्टं हसत्यनेनेति व्युत्पत्तेः । अत्र प्रहसने आरभटी वृत्तिर्न स्यात्, तथा विष्कम्भकप्रवेशकावपि न स्याताम् । तत्र प्रहसने हास्यरसः अङ्गी प्रधानः । वाशब्दश्चार्थे । वीथ्यङ्गानाञ्च स्थितिर्न स्यात् ।

(१) इति इति पाठान्तरम् । (२) वीथीव वीथी च इति पाठभेदौ ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२७७। तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः।
एको यत्र भवेद्धृष्टो हास्यं तच्छुद्धमुच्यते॥ (छ)

यथा—कन्दर्पकेलिः।

२७८। आश्रित्य कञ्चन जनं सङ्कीर्णमिति तद्विदुः॥ (ज)

यथा—धूर्त्तचरितम्।

२७९। वृत्तं बहूनां धृष्टानां सङ्कीर्णं केचिदूचिरे।
तत् पुनर्भवति द्व्यङ्कमथवैकाङ्कनिर्म्मितम्॥ (झ)

यथा—लटकमेलकादिः।

मुनिस्त्वाह—

"वेश्याचेटनपुंसकविटधूर्त्ता बन्धकी च यत्र स्युः।
अविकृतवेशपरिच्छेदचेष्टितकरणन्तु सङ्कीर्णम्॥" इति (ञ)।

२८०। विकृतन्तु विदुर्यत्र षण्ड-कञ्चुकि-तापसाः।
भुजङ्ग-चारण-भट-प्रभृतेर्वेशवाग्युताः॥ (ट)

---

(छ) तपस्वीति। तपस्विनः कृच्छ्रचान्द्रायणादिव्रतचारिणः भगवन्तो ब्रह्मज्ञादयः विप्राश्च तत्प्रभृतिषु मध्ये, एकः कश्चिदत्र प्रहसने नायको भवेत्। अस्य च शुद्धं सङ्कीर्णं विकृतमिति च भेदत्रयम्।

तत्र प्रथमं भेदमाह एकेति। यत्र धृष्टः प्रागुक्तलक्षणो नायको भवेत् तत् हास्यं हासविषयीभूतं प्रहसनं शुद्धमुच्यते, शुद्धस्य केवलस्य धृष्टनायकस्य विषयत्वादिति भावः।

(ज) सङ्कीर्णमाह आश्रित्येति। कञ्चन धृष्टभिन्नं जनं नायकम् आश्रित्य यत् प्रहसनं जायते तत् सङ्कीर्णमिति विदुः। अनियतनायकसङ्करात् सङ्कीर्णम्।

(झ) मतान्तरे सङ्कीर्णमाह वृत्तमिति। केचित् बहूनां धृष्टानां नायकानां वृत्तमुपाख्यानं सङ्कीर्णं नाम प्रहसनमूचिरे उक्तवन्तः। तत्तादृशं सङ्कीर्णं प्रहसनं पुनर्द्व्यङ्कम् अङ्कद्वयघटितम् अथवा एकेनाङ्केन विनिर्म्मितं भवति।

(ञ) वेश्येति। यत्र प्रहसने वेश्यादयो वर्णिताः स्युः, तथा यत्र अविकृतानां स्वाभाविकानां वेशानां परिच्छदानां चेष्टितानामाचरणानाञ्च करणं विधानं स्यात्, तत् प्रहसनं सङ्कीर्णम्।

(ट) विकृतमिति। यत्र षण्डो नपुंसकम्, कञ्चुकी वारवाणधारी, तापसश्चैते भुजङ्गो विटः, चारणो नटः, भटो योद्धा प्रभृतिशब्दात् राजपुरुषादयश्च तेषां वेशवाग्भिः परिच्छदभाषाभिर्युताः सन्तः अभिनयन्ति तत्तु विकृतं नाम प्रहसनं विदुः। विकृतवेशयुक्ताभिनयात्मकत्वाद्विकृतमिति संज्ञा।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इदन्तु सङ्कीर्णेनैव गतार्थमिति मुनिना पृथग्नोक्तम् (ठ) ।

अथोपरूपकाणि । तत्र—

२८१ । नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका ।
प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः ॥
स्यादन्तःपुरसम्बद्धा सङ्गीतव्यापृताथवा ।
नवानुरागा कन्यात्र नायिका नृपवंशजा ॥
सम्प्रवर्त्तेत नेतास्यां देव्यास्त्रासेन शङ्कितः ।
देवी पुनर्भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ॥
पदे पदे मानवती तद्वशः सङ्गमो द्वयोः ।
वृत्तिः स्यात् कौशिकी स्वल्पविमर्षाः सन्धयः पुनः ॥ (ड)

द्वयोर्नायकनायिकयोः । यथा—रत्नावली-विद्धशालभञ्जिकादिः ।

अथ त्रोटकम् ।

२८२ । सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम् ।
त्रोटकं नाम तत् प्राहुः प्रत्यङ्कं सविदूषकम् ॥ (ढ)

---

(ठ) ननु विकृताख्यप्रहसनस्य साम्प्रदायिकत्वे कथं सम्प्रदायप्रवर्त्तकभरतेन नोक्तमित्याह इदन्त्विति । गतार्थं प्राप्तविषयम् । वेश्याचेटेत्यादिनाव्यशास्त्रीयकारिकायां विटाद्यभिनयमात्रेणैव सङ्कीर्णत्वाभिप्रायादिति भावः ।

(ड) नाटिकेति । क्लृप्तं कविनैवोन्नावितं वृत्तमुपाख्यानं यस्याः सा, स्त्रीप्राया स्त्रीजातिबहुला, चत्वारोऽङ्का यस्यां सा एवंरूपा नाटिका स्यात् । तत्र नाटिकायां प्रख्यातः प्रसिद्धनामा धीरललितस्तल्लक्षणान्वितो नृपो नायकः स्यात् । तथा अन्तःपुर एव सम्बद्धा आबद्धा अथवा सङ्गीते वहिरपि नृत्यगीतवाद्येषु व्यापृता आसक्ता नवानुरागा नृपवंशजा कन्या अत्र नाटिकायां नायिका स्यात् । नेता नायकः देव्या महिष्यास्त्रासेन शङ्कितः सन् अस्यां नायिकाभूतायां कन्यायां सम्प्रवर्त्तेत व्यवहरेत् । देवी सा च महिषी प्रगल्भा प्रागुक्तलक्षणा नृपवंशजा ज्येष्ठा नायिकातोऽधिकवयस्का पदे पदे मानवती च भवेत् । द्वयोर्नायकनायिकयोः सङ्गमः तद्वशो देव्या अधीनः । कौशिकी वृत्तिः स्यात् स्वल्पः स्तोकमात्रो विमर्षो विमर्षसन्धिर्येषु ते तथाभूताः पुनर्मुखादयश्चत्वार एव सन्धयः स्युः ।

(ढ) सप्तेति । सप्त अष्टौ नव पञ्च वा अङ्का यस्मिन् तत्, दिव्यमानुषसंश्रयं देवमानुषोभयचरित-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रत्यङ्कं सविदूषकत्वादेवात्र शृङ्गारोऽङ्गी (ण)। सप्ताङ्कं यथा—स्तम्भितरम्भम्। पञ्चाङ्कं यथा—विक्रमोर्वशी।

अथ गोष्ठी।

२८३। प्राकृतैर्नवभिः पुंभिर्दशभिर्वाप्यलङ्कृता।
नोदात्तवचना गोष्ठी कौशिकीवृत्तिशालिनी॥
हीना गर्भविमर्षाभ्यां पञ्चषड्योषिदन्विता।
कामशृङ्गारसंयुक्ता स्यादेकाङ्कविनिर्मिता॥ (त)

यथा—रैवतमदनिका।

अथ सट्टकम्।

२८४। सट्टकं प्राकृताशेष-पाठ्यं स्यादप्रवेशकम्।
न च विष्कम्भकोऽप्यत्र प्रचुरश्चाद्भुतो रसः॥
अङ्का जवनिकाख्याः स्युः स्यादन्यन्नाटिकासमम्। (थ)

यथा—कर्पूरमञ्जरी।

---

विषयम्, तथा प्रत्यङ्कं सर्वेष्वङ्केषु विदूषकेन सहेति सविदूषकं यदुपरूपकम् तत् त्रोटकं नाम प्राहुः, त्रोटयति निजोत्कर्षेणान्यरूपकं खर्वीकरोतीति व्युत्पत्तेः। अत्र सर्वस्मिन्नेवाङ्के विदूषकस्यावश्यकत्वे स्पष्टार्थं "सर्वाङ्के सविदूषकम्" इत्येवाभिदध्यात्, तदनभिधानाच्च क्वचित् विदूषकाभावेऽपि त्रोटकत्वं भवत्येवेति विक्रमोर्वश्यां प्रथमचतुर्थाङ्कयोर्विदूषकाभावेऽपि नाव्याप्तिः।

(ण) प्रत्यङ्कमिति। विदूषकस्य शृङ्गारिनायकसहायत्वादिति भावः।

(त) प्राकृतैरिति। प्राकृतैः साधारणशिक्षितैः नवभिर्दशभिर्वा पुंभिः पुरुषैरलङ्कृता साधारणशिक्षित-पुरुषपात्रत्वादेव न विद्यते उदात्तं संस्कृतं वचनं यस्यां सा। अत्र "गमिकर्म्मीकृतनैकनीवृता" इत्यादिवत् समासेऽपि नकारस्थितिः। कौशिकीवृत्तिशालिनी, अतएव कामशृङ्गारेण प्रागुक्तप्रकारेण संयुक्ता, गर्भ-विमर्षाभ्यां सन्धिभ्यां हीना, पञ्चभिः षड्भिर्वा योषिद्भिरन्विता, तथा एकेनाङ्केन विनिर्मिता गोष्ठी स्यात्। दशानामेव पुरुषाणां सभारूपत्वेन गोष्ठीति संज्ञा।

(थ) सट्टकमिति। प्राकृतं संस्कृतभिन्नम् अशेषं समस्तं पाठ्यं वाक्यं यस्मिन् तत्, न विद्यते प्रवेशको यत्र तत् तादृशमुपरूपकं सट्टकं स्यात्। अतार्थे सट्टकमिति रूढ़शब्दः। अत्र सट्टके विष्कम्भकश्च न स्यात्, किञ्च प्रचुरो बहुलः अद्भुतो रसः स्यात्। अङ्का जवनिकाख्याः स्युः यत्राङ्कस्तत्र यवनिकाशब्दो व्यवहर्त्तव्यः। अन्यत् लक्षणत्वादिकं नाटिकासमं स्यात्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ नाट्यरासकम् ।

२८५ । नाट्यरासकमेकाङ्कं बहुताललयस्थिति ॥
उदात्तनायकं तद्वत् पीठमर्द्दोपनायकम् ।
हास्योऽङ्गयत्र सश्रृङ्गारो नारी वासकसज्जिका ॥
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ।
केचित् प्रतिमुखं सन्धिमिह नेच्छन्ति केवलम् ॥ (द)

तत्र सन्धिद्वयवती यथा—नर्म्मवती । सन्धिचतुष्टयवती यथा—विलासवती ।

अथ प्रस्थानम् ।

२८६ । प्रस्थाने नायको दासो हीनः स्यादुपनायकः ।
दासी च नायिका वृत्तिः कौशिकी भारती तथा ॥
सुरापानसमायोगादुद्दिष्टार्थस्य संहृतिः ।
अङ्कौ द्वौ लयतालादिर्विलासो बहुलस्तथा ॥ (ध)

यथा—श्रृङ्गारतिलकम् ।

अथोल्लाप्यम् ।

---

(द) नाट्येति । एकोऽङ्को यस्मिन् तत्, बहूनां ताललयानां स्थितिर्यस्मिन् तत्, उदात्तो धीरोदात्तो नायको यत्र तत्, तद्वत् तथा पीठमर्द्दः प्रागुक्तलक्षण उपनायको यस्मिन् तत्, तादृशमुपरूपकं नाट्यरासकं स्यात्, नाट्यमभिनयं रासयति सभ्येभ्यो रोचयतीति व्युत्पत्तेः । अत्र नाट्यरासके श्रृङ्गारेण सहेति सश्रृङ्गारो हास्यो रसः अङ्गी प्रधानः । वासकसज्जिका वासकसज्जा नाम प्रागुक्तलक्षणा नारी नायिका । मुखं निर्वहणञ्च ते द्वे सन्धी स्याताम् । दशापि च लास्याङ्गानि स्युः । केचित् इह नाट्यरासके केवलं प्रतिमुखं सन्धिं न इच्छन्ति अन्यांश्चतुरः सन्धींस्तु इच्छन्तीत्यर्थः ।

(ध) प्रस्थान इति । प्रतिष्ठन्ते रसबाहुल्येन धावन्ति सहृदयानां मनांस्यस्मिन्निति प्रस्थानं तदाख्योपरूपकविशेषस्तस्मिन्, दासः किङ्करो नायकः, हीनो दासादपि निकृष्टजातिरुपनायकः स्यात् । नायिका च दासी । कौशिकी तथा भारती च वृत्तिः । सुरापानसमायोगात् मद्यपानसम्बन्धमाश्रित्य कविना उद्दिष्टार्थस्य प्रक्रान्तविषयस्य संहृतिरुपसंहारः कर्त्तव्येति शेषः । द्वावङ्कौ, लयतालादिः, तथा बहुलो विलासः प्रागुक्तलक्षणश्च भवेत् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२८७ । उदात्तनायकं दिव्यवृत्तमेकाङ्कभूषितम् ।
शिल्पकाङ्गैर्युतं हास्य-शृङ्गारकरुणै रसैः ॥
उल्लाप्यं बहुसंग्राममस्रगीतमनोहरम् ।
चतस्रो नायिकास्तत्र त्रयोऽङ्का इति केचन ॥ (न)

शिल्पकाङ्गानि वक्ष्यमाणानि । यथा—देवीमहादेवम् ।

अथ काव्यम् ।

२८८ । काव्यमारभटीहीनमेकाङ्कं हास्यसङ्कुलम् ।
खण्डमात्राद्विपदिकाभग्नतालैरलङ्कृतम् ॥
वर्णमात्राच्छड्डलिकायुतं शृङ्गारभाषितम् ।
नेता स्त्री चाप्युदात्तात्र सन्धी आद्यौ तथान्तिमः ॥ (प)

यथा—यादवोदयः ।

अथ प्रेङ्खणम् ।

२८९ । गर्भविमर्षरहितं प्रेङ्खणं हीननायकम् ।
असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकम् ॥

---

(न) उदात्तेति । उदात्तो धीरोदात्तो नायको यत्र तत्, दिव्यं स्वर्गीयं वृत्तमुपाख्यानं यत्र तत्, एकेनाङ्केन भूषितम्, शिल्पकाङ्गैर्वक्ष्यमाणैराशंसादिभिः सप्तविंशत्या युतम्, हास्यशृङ्गारकरुणै रसैश्च युतम्, बहवः संग्रामा यत्र तत् ।

तथा—"उत्तरोत्तररूपं यत् प्रस्तुतार्थपरिष्कृतम् । अन्तर्जवनिकं गीतमस्रगीतं तदुच्यते ॥"

इत्युक्तलक्षणेनास्रगीतेन मनोहरं रूपकम् उल्लाप्यं स्यात्, उल्लाप्यते रसवत्त्वादुत्कर्षेण पठ्यते यत्तदिति व्युत्पत्तेः । तत्र उल्लाप्ये चतस्रो नायिकाः स्युः । केचन तु तत्र त्रयोऽङ्का इति वदन्ति ।

(प) काव्यमिति । आरभट्या प्रागुक्तलक्षणया वृत्त्या हीनम्, एकोऽङ्को यत्र तत्, हास्येन सङ्कुलं व्याप्तम्, खण्डमात्रा द्विपदिका भग्नतालानि गीतविशेषाः भरतोक्तास्तैरलङ्कृतम्, वर्णमात्रा छड्डलिका च छन्दविशेषौ ताभ्यां युक्तम्, शृङ्गारेण रसेन भाषितं यस्मिन् तत् तादृशञ्चोपरूपकं काव्यं स्यात्, कवेः कर्मेति व्युत्पत्तेः । अत्र काव्ये नेता नायकः उदात्तो धीरोदात्तः, स्त्री नायिका च उदात्ता धीरोदात्ता, तथा आद्यौ मुखप्रतिमुखाख्यौ सन्धी तथा अन्तिमो निर्वहणश्च सन्धिर्भवेत् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नियुद्धसम्फेटयुतं सर्ववृत्तिसमाश्रितम् ।
नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना (फ)

यथा—वालिवधः ।

अथ रासकम् ।

२९० । रासकं पञ्चपात्रं स्यान्मुखनिर्वहणान्वितम् ।
भाषाविभाषाभूयिष्ठं भारतीकौशिकीयुतम् ॥
असूत्रधारमेकाङ्कं सवीथ्यङ्गं कलान्वितम् ।
श्लिष्टनान्दीयुतं ख्यातनायिकं मूर्खनायकम् ॥
उदात्तभावविन्यासंसंश्रितं चोत्तरोत्तरम् ।
इह प्रतिमुखं सन्धिमपि केचित् प्रचक्षते ॥ (ब)

यथा—मेनकाहितम् !

अथ संलापकम् ।

२९१ । संलापकेऽङ्काश्चत्वारस्त्रयो वा नायकः पुनः ।
पाषण्डः स्याद्रसस्तत्र शृङ्गारकरुणेतरः ॥

---

(फ) गर्भेति । गर्भविमर्षाभ्यां सन्धिभ्यां रहितम्, हीनौ निकृष्टौ नायकौ यत्र तत्, न विद्यते सूत्रधारो यत्र तत्, एक एवाङ्को यस्मिन् तत्, न विद्येते विष्कम्भप्रवेशकौ यत्र तत्, नियुद्धेन वाहुयुद्धेन सम्फेटेन रोषभाषणेन च युतम्, तथा सर्वाभिस्ताभिः कौशिक्यादिभिर्वृत्तिभिः समाश्रितं समन्वितम् उपरूपकं प्रेङ्खणं स्यात्, प्रेङ्खते रसानुभवानन्देन हृदयमान्दोल्यते अनेनेति व्युत्पत्तेः । असूत्रधारत्वादेव अत्र प्रेङ्खणे नान्दी तथा प्ररोचना नेपथ्ये केनचिन्नटेन गीयते पठ्यते ।

(ब) रासकमिति । पञ्च पात्राणि जना यत्र तत्, मुखनिर्वहणाभ्यां सन्धिभ्यामन्वितम्, भाषाविभाषे संस्कृतप्राकृते भूयिष्ठे बहुले, यत्र तत्, भारत्या कौशिक्या च वृत्त्या युतम्, असूत्रधारम्, एकाङ्कम्, वीथ्यङ्गैः प्रागुक्तैः सहेति सवीथ्यङ्गम्, कलाभिर्नृत्यगीतादिचतुःषष्टिप्रकाराभिरन्वितम्, श्लिष्टया द्व्यर्थया नान्द्या युतम्, ख्याता प्रसिद्धा नायिका यत्र तत्, मूर्खो नायको यस्मिन् तत्, तथा उत्तरोत्तरं क्रमशः उदात्तभावस्य नायिकामहिम्नो विन्यासेन व्यवस्थापनेन संश्रितं समन्वितञ्च उपरूपकं स्यात्, रासयति सभ्येभ्य आत्मानं रोचयतीति व्युत्पत्तेः । इह रासके केचित् प्रतिमुखं सन्धिमपि प्रचक्षते ब्रुवन्ति ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भवेयुः पुरसंरोध-च्छलसंग्रामविद्रवाः ।
न तत्र वृत्तिर्भवति भारती न च कौशिकी ॥ (भ)

यथा—मायाकापालिकम् ।

अथ श्रीगदितम् ।

२९२ । प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम् ।
प्रसिद्धनायिकं गर्भविमर्षाभ्यां विवर्जितम् ॥
भारतीवृत्तिबहुलं श्रीतिशब्देन सङ्कुलम् ।
मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम् ॥ (म)

यथा—क्रीड़ारसातलम् ।

२९३ । श्रीरासीना श्रीगदिते गायेत् किञ्चित् पठेदपि ।
एकाङ्को भारतीप्राय इति केचित् प्रचक्षते ॥ (य)

ऊह्यमुदाहरणम् ।

अथ शिल्पकम् ।

२९४ । चत्वारः शिल्पकेऽङ्काः स्युश्चतस्रो वृत्तयस्तथा ।
अशान्तहास्याश्च रसा नायको ब्राह्मणो मतः ॥

---

(भ) संलापक इति । संलापयति रसविशेषवत्तया आत्मानं पाठयतीति व्युत्पत्तेः, संलापके तदाख्ये उपरूपके चत्वारस्त्रयो वा अङ्काः स्युः, नायकः पुनः पाषण्डी विधर्मी स्यात् । तथा तत्र संलापके शृङ्गार-करुणाभ्यामितरो रसः स्यात् । पुरसंरोधो नगरावरोधः. "प्रियामैरप्रियैर्वाक्यैर्विलोभ्य च्छलना च्छलम्" इत्युक्तलक्षणं छलम्, संग्रामो युद्धम्, "शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः" इत्युक्तलक्षणो विद्रवश्च भवेयुः । तत्र संलापके भारती वृत्तिर्न भवति कौशिकी वृत्तिश्च न भवति ।

(म) प्रख्यातेति । प्रख्यातवृत्तं प्रसिद्धोपाख्यानम्, प्रख्यात उदात्तो धीरोदात्तो नायको यत्र तत्, प्रसिद्धा नायिका यत्र तत्, गर्भविमर्षाभ्यां सन्धिभ्यां विवर्जितम्, भारतीवृत्तिरेव बहुला यत्र तत्, तथा 'श्री' इति शब्देन सङ्कुलं व्याप्तम् उपरूपकं विद्वद्भिः श्रीगदितं नाम मतम् ; श्रिया श्रीशब्देन गदितमिति व्युत्पत्तेः ।

(य) मतान्तरे श्रीगदितलक्षणमाह श्रीरिति । श्रीगदिते उपरूपके आसीना उपविष्टा श्रीर्लक्ष्मीरूप-धारिणी नटी किञ्चिदपि गायेत् किञ्चिदपि पठेच्च । तथा श्रीगदिते भारतीवृत्तिप्राय एक एवाङ्को भवेत् इति केचित् प्रचक्षते वदन्ति ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वर्णनात्र श्मशानादेर्हीनः स्यादुपनायकः ।
सप्तविंशतिरङ्गानि भवन्त्येतस्य तानि तु ॥
आशंसा-तर्क-सन्देह-तापोद्वेगप्रसक्तयः ।
प्रयत्नग्रथनोत्कण्ठावहित्थाप्रतिपत्तयः ॥
विलासालस्यबाष्पाणि प्रहर्षाश्वाससमूढताः ।
साधनानुगमोच्छ्वास-विस्मयप्राप्तयस्तथा ॥
लाभविस्मृतिसम्फेटा वैशारद्यं प्रबोधनम् ।
चमत्कृतिश्चेत्यमीषां स्पष्टत्वाल्लक्ष्म नोच्यते ॥ (र)

सम्फेटग्रथनयोः पूर्वमुक्तत्वादेव लक्ष्म सिद्धम् । यथा—कनकावतीमाधवः ।

अथ विलासिका ।

२९५ । शृङ्गारबहुलैकाङ्का दशलास्याङ्गसंयुता ।
विदूषकविटाभ्याञ्च पीठमर्देन भूषिता ॥
हीना गर्भविमर्शाभ्यां सन्धिभ्यां हीननायका ।
स्वल्पवृत्ता सुनेपथ्या विख्याता सा विलासिका ॥ (ल)

---

(र) चत्वार इति । शिल्पके नृत्यादिशिल्पप्रधानत्वादेव तदाख्ये उपरूपके चत्वारोऽङ्काः, तथा कौशिक्यादयश्चतस्र एव वृत्तयः, अशान्तहास्याः शान्तहास्यवर्जिता रसाश्च स्युः । अत्र शिल्पके ब्राह्मणो नायकः । विशेषानभिधानादेव सामान्यप्राप्तं धीरप्रशान्तलक्षणं इति बोध्यम् । श्मशानस्य आदिशब्दान्महारण्यादेश्च वर्णना, हीनो निकृष्टजातीय उपनायकश्च स्यात् । एतस्य शिल्पकस्य सप्तविंशतिरङ्गानि भवन्ति । तानि तु आशंसादीनि चमत्कृत्यन्तानि ज्ञेयानीति शेषः । तत्र—(१) आशंसा, (२) तर्कः, (३) सन्देहः, (४) तापः, (५) उद्वेगः, (६) प्रसक्तिरासक्तिः, (७) प्रयत्नः, (८) ग्रथनम्, (९) उत्कण्ठा,, (१०) अवहित्था, (११) प्रतिपत्तिः क्रियार्थज्ञानम्, (१२) विलासः, (१३) आलस्यम्, (१४) वाष्पम्, (१५) प्रहर्षः, (१६) आश्वासः, (१७) मूढता, (१८) साधनानुगम इष्टसाधनपदार्थज्ञानम्, (१९) उच्छ्वासः, (२०) विस्मयः, (२१) प्राप्तिः सुखागमः, (२२) लाभो वस्त्वन्तरप्राप्तिः, (२३) विस्मृतिः, (२४) सम्फेटः, (२५) वैशारद्यं निपुणता, (२६) प्रबोधनम्, (२७) चमत्कृतिश्च । अमीषामङ्गानां स्पष्टत्वात् प्रायेण प्राप्तलक्षणतया प्रसिद्धतया च सुगमत्वात् लक्ष्म लक्षणं नोच्यते ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

केचित्तत्र विलासिकास्थाने विनायिकेति (१) पठन्ति । "तस्यास्तु दुर्मल्लिकायामन्तर्भावः" इत्यन्ये ।

अथ दुर्मल्लिका ।

२९६ । दुर्मल्ली चतुरङ्का स्यात् कौशिकी भारती तथा ।
अगर्भा नागरनरा न्यूननायकभूषिता ॥
त्रिनालिः प्रथमोऽङ्कोऽस्यां विटक्रीड़ामयो भवेत् ।
पञ्चनालिर्द्वितीयोऽङ्को विदूषकविलासवान् ॥
षण्णालिकस्तृतीयस्तु पीठमर्द्दविलासवान् ।
चतुर्थी दशनालिः स्यादङ्कः क्रीड़ितनायकः ॥ (व)

यथा—विन्दुमती ।

अथ प्रकरणिका ।

२९७ । नाटिकैव प्रकरणी सार्थवाहादिनायका ।
समानवंशजा नेतुर्भवेद् यत्र च नायिका ॥ (श)

मृग्यमुदाहरणम् ।

---

(ल) शृङ्गारेति । स्वल्पवृत्ता खर्वोपाख्याना । विशेषेण लासयति सहृदयेभ्यः कामयतीति विलासिका । सुगममन्यत् ।

(व) दुर्मल्लीति । दुष्टा मनोहरत्वे हीना मल्ली मल्लिकाकुसुममपि यस्याः सेति व्युत्पत्तिः । चत्वारोऽङ्का यस्यां सा । तत्र च कौशिकी तथा भारती च वृत्तिः स्यात् । अगर्भा गर्भसन्धिरहिता, नागराः सर्वविषयदक्षाः नराः पात्राणि यस्यां सा, तथा अन्यूनेन अनिकृष्टेन नायकेन भूषिता दुर्मल्ली दुर्मल्लिका स्यात् । अस्यां दुर्मल्लिकायां प्रथमोऽङ्कः त्रिनालिस्त्रिभिर्नाड़ीभिर्घटिकाभिर्मुहूर्त्तैरिति यावत् सम्पादितेतिवृत्त इत्यर्थः, विटस्य क्रीड़ामयचरितबहुलश्च भवेत् । द्वितीयोऽङ्कः पञ्चनालिः पञ्चमुहूर्त्तसम्पादितेतिवृत्तः विदूषकस्य विलासवान् व्यवहारवांश्च भवेत् । तृतीयस्तु अङ्कः षण्णालिकः षड्भिर्मुहूर्त्तैः सम्पादितेतिवृत्तः तथा पीठमर्द्दस्य विलासवान् व्यवहारबहुलो भवेत् । चतुर्थोऽङ्कः दशनालिर्दशमुहूर्त्तनिष्पादितेतिवृत्तः, तथा क्रीड़ितश्चरितबहुलो नायको यत्र स तादृशश्च स्यात् ।

(श) नाटिकैवेति । सार्थवाहो वणिक् आदिशब्दात् विप्रामात्यौ च नायका यस्यां सा, नाटिकैव क्लृप्तवृत्तत्वादिलक्षणैव प्रकरणी भवेत् । यत्र च नायिका नेतुर्नायकस्य समानवंशजा भवेत् ।

---

(१) खर्विकेति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ हल्लीशः।

२९८। हल्लीश एक एवाङ्कः (१) सप्ताष्टौ दश वा स्त्रियः।
वागुदात्तैकपुरुषः कौशिकीवृत्तिरुज्ज्वला (२)॥
मुखान्तिमौ तथा सन्धी बहुताललयस्थितिः। (घ)

यथा—केलिरैवतकम्।

अथ भाणिका।

२९९। भाणिका श्लक्ष्णनेपथ्या मुखनिर्वहणान्विता॥
कौशिकीभारतीवृत्तियुक्तैकाङ्कविनिर्म्मिता।
उदात्तनायिका मन्दपुरुषाऽत्राङ्गसप्तकम् (३)॥
उपन्यासोऽथ विन्यासो विबोधः साध्वसं तथा।
समर्पणं निवृत्तिश्च संहार इति सप्तमः॥
उपन्यासः प्रसङ्गेन भवेत् कार्य्यस्य कीर्त्तनम्।
निर्वेदवाक्यव्युत्पत्तिर्विन्यास इति स स्मृतः॥

(घ) हल्लीश इति। हल्लीशे हल्लीशाख्योपरूपके, एक एव अङ्कः, सप्त अष्टौ अथवा दश स्त्रियः, उदात्ता उत्कृष्टा संस्कृतरूपा शौरसेनी च वाक्, एकपुरुष एकमात्रं पुंपात्रम्, उज्ज्वला कौशिकीवृत्तिः, मुखान्तिमौ मुखनिर्वहणाख्यौ सन्धी, तथा बहूनां बहुप्रकाराणांताललयानां स्थितिश्च स्यात्। अत्रार्थे हल्लीश इति रूढ़ः शब्दः।

(ङ) भाणिकेति। भाणिका श्लक्ष्णं सूक्ष्मं नेपथ्यं वसनादिवेशो यस्यां सा, मुखनिर्वहणाभ्यां सन्धिभ्यामन्विता, कौशिकीभारतीभ्यां वृत्तिभ्यां युक्ता, एकेन अङ्केनैव विनिर्म्मिता, उदात्ता उत्कृष्टा नायिका यस्यां सा, तथा मन्दो निकृष्टः पुरुषो नायको यस्यां सा तादृशी च स्यात्। अत्र भाणिकायाम् अङ्गानां सप्तकं भवेत्। (१) उपन्यासः, (२) विन्यासः, (३) विबोधः, (४) साध्वसम्, (५) समर्पणम्, (६) निवृत्तिः, (७) संहारश्च। क्रमादेतेषां लक्षणान्याह उपेति। प्रसङ्गेन कार्य्यस्य कीर्त्तनमुपन्यासो नामाङ्गं भवेत्। निर्वेदवाक्यस्य प्रागुक्तलक्षणनिर्वेदसूचकवचनस्य व्युत्पत्तिर्विशेषेणोत्पत्तिः स प्रसिद्धो

(१) हल्लीश एव एकाङ्क इति पाठान्तरम्। (२) कौशिकीवृत्तिसङ्कुल इति पाठभेदः।
(३) मन्दपुरुष इति क्वचित् पाठः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भ्रान्तिनाशो विबोधः स्यान्मिथ्याख्यानन्तु साध्वसम्।
सोपालम्भवचः कोप-पीड़येह समर्पणम्॥
निदर्शनस्योपन्यासो निवृत्तिरिति कथ्यते।
संहार इति च प्राहुर्यत् कार्य्यस्य समापनम्॥ (स)

स्पष्टान्युदाहरणानि (ह)। यथा—कामदत्ता।

एतेषां सर्वेषां नाटकप्रकृतिकत्वेऽपि (१) यथौचित्यं यथालाभं नाटकोक्तविशेषपरिग्रहः। यत्र च नाटकोक्तस्यापि पुनरुपादानं तत्र तत्सद्भावस्य नियमः (च)।

अथ श्रव्यकाव्यानि।

३००। श्रव्यं श्रोतव्यमात्रं तत् पद्यगद्यमयं द्विधा। (क)

तत्र पद्यमयान्याह—

३०१। छन्दोबद्धपदं पद्यं तेनैकेन च (२) मुक्तकम्॥
द्वाभ्यान्तु युग्मकं सन्दानितकं त्रिभिरिष्यते।
कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम्॥ (ख)

---

विन्यासो नामाङ्गमिति स्मृतः। भ्रान्तिनाशो भ्रमापगमो विबोधो नामाङ्गं स्यात्। मिथ्या आख्यानं कथनन्तु साध्वसं नामाङ्गं स्यात्। इह भाणिकायां कोपपीड़या सोपालम्भवचो निन्दायुक्तं वाक्यं समर्पणं नामाङ्गं कथ्यते। निदर्शनस्य दृष्टान्तस्य उपन्यास उल्लेखो निवृत्तिरिति नाम अङ्गं कथ्यते। कार्य्यस्य यत् समापनं तत् संहार इति नाम च अङ्गं प्राहुः।

(ह) स्पष्टानीति। उपन्यासादीनामङ्गानामित्यर्थः।

(च) एतेषामिति। एतेषां नाटकविकृतिभूतानां प्रकारणादीनां रूपकाणां नाटिकादीनामुपरूपकाणाञ्च। नाटकप्रकृतिकत्वेऽपि नाटकप्रकृतित्वेन तदीयानां सर्वेषामेव धर्म्माणां परिग्राह्यत्वेऽपि। यथालाभं यथासम्भवम्। तथा च प्रकरणे औचित्यात् नान्दीप्रस्तावनादीनां परिग्रहः, सामान्येन विशेषवाधाया अनौचित्याच्च न ख्यातवृत्तपरिग्रहः। नियम इति। यथा वीथ्यां वीथ्यङ्गानाम्।

(क) श्रव्यमिति। श्रोतव्यमात्रं केवलश्रवणयोग्यं काव्यं श्रव्यम्। तेन वाचिकांशमादाय श्रवणयोग्यत्वसत्त्वेऽपि आङ्गिकाद्यंशान्तरेषु दर्शनयोग्यत्वस्यापि सत्त्वात् दृश्यकाव्येषु नातिव्याप्तिः। तच्च श्रव्यकाव्यं द्विधा पद्यमयं गद्यमयञ्चेति।

---

(१) एषां सर्वेषामपि इति पाठान्तरम्। (२) तेन मुक्तेन च इत्यपि पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र मुक्तकं यथा मम ।

"सान्द्रानन्दमनन्तमव्ययमजं यद्योगिनोऽपि क्षणं
साक्षात् कर्त्तुमुपासते प्रतिमुहुर्ध्यानैकताना: परम् ।
धन्यास्ता मथुरापुरीयुवतयस्तद्ब्रह्म या: कौतुका-
दालिङ्गन्ति समालपन्ति शतधा कर्षन्ति चुम्बन्ति च ॥" (ग)

युग्मकं यथा मम ।

"किं करोषि करोपान्ते कान्ते ! गण्डस्थलीमिमाम् ।
प्रणयप्रवणे कान्तेऽनैकान्ते नोचिता: क्रुध: ॥
इति यावत् कुरङ्गाक्षीं वक्तुमीहामहे वयम् ।
तावदाविरभूच्चूते मधुरो मधुपध्वनि: ॥" (घ)

एवमन्यत्रापि (ङ) ।

(ख) छन्द इति । छन्दसा गायत्राद्यन्यतमेन छन्दसा बद्धानि नियमितानि पदानि सुप्तिङन्तरूपाणि यत्र तत्तादृशं काव्यं पद्यमिति पद्यसामान्यलक्षणम् । किञ्च एकेन समापकक्रियान्वये पद्यान्तरनिरपेक्षेण, तेन पद्येन मुक्तकम् । तेनेत्यभेदे तृतीया तदभिन्नं मुक्तकमित्यर्थ: । संज्ञायाञ्च कप्रत्यय: । एवमन्यत्रापि । द्वाभ्यां समापकक्रियान्वये परस्परसापेक्षाभ्यां पद्याभ्यां युग्मकम् । त्रिभि: समापकक्रियान्वये परस्परसापेक्षै: पद्यै: सन्दानितकमिष्यते, सन्दानं सम्मेलनमस्य सञ्जातमिति व्युत्पत्ते: । अस्यैव विशेषकमिति तिलकमिति च नामान्तरद्वयं ग्रन्थान्तरेषु दृश्यते । चतुर्भि: समापकक्रियान्वये परस्परसापेक्षै: पद्यै: कलापकं मतम् । पञ्चभि: समापकक्रियान्वये परस्परसापेक्षै: पद्यै: कुलकं मतम् । अत्र पञ्चेति तदन्यूनसंख्योपलक्षणम् । तेन कुमारसम्भवे सप्तदशभि: पद्यैरपि कुलकत्वसिद्धिरित्याद्यूह्यम् ।

(ग) सान्द्रेति । प्रतिमुहु: सर्वदैव ध्यानैकताना ध्यानैकाग्रचित्ता: योगिनोऽपि, क्षणं साक्षात् कर्त्तुं यत् सान्द्रानन्दं निविड़ानन्दस्वरूपम्, अनन्तमसीमम् अव्ययं विनाशहीनम्, अजं जन्मशून्यम् उपासते ; या: कौतुकात् तत् परं ब्रह्म शतधा आलिङ्गन्ति समालपन्ति विहारार्थं कर्षन्ति चुम्बन्ति च ; ता मथुरापुरीयुवतयो धन्या: ; योगिगणापेक्षयापि बहुसमयसाक्षात्कारादिति भाव: ।

अत्र धन्या भवन्तीति समापकक्रियान्वये पद्यान्तरनैरपेक्ष्यात् मुक्तकत्वम् ।

(घ) किमिति । हे कान्ते ! करोपान्ते पाणितले इमां गण्डस्थलीं किं करोषि अर्पयसि ? । प्रणयप्रवणे तव प्रेमार्थमुत्कण्ठिते, न एकया स्त्रिया अन्तो रमणपिपासावसानं यस्य स नैकान्त: अन्यरमणीसक्त इत्यर्थ: । स न भवतीति अनैकान्तस्तस्मिन् त्वदेकमात्रप्रिये इत्यर्थ: कान्ते पत्यौ क्रुध: क्रोधा न उचिता: इति यावत् कुरङ्गाक्षीं हरिणनयनां वयं वक्तुमीहामहे चेष्टामहे तावदेव चूते आम्रतरौ मधुरो मधुपध्वनिर्भ्रमररव: आविरभूत् । तेन च तन्मानभङ्ग: अनायासेन सहसैव सम्पन्न इति भाव: ।

अत्राविरभूदिति समापकक्रियान्वये इतिशब्देन पद्ययो: परस्परसापेक्षत्वघटनात् युग्मकत्वम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२०२। सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः।
सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः॥
एकवंशभवा भूपाः कुलजा बहवोऽपि वा।
शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते॥
अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः।
इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम्॥
चत्वारस्तस्य वर्गाः स्युस्तेष्वेकञ्च फलं भवेत्।
आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा॥
क्वचिन्निन्दा खलादीनां सताञ्च गुणकीर्त्तनम्।
एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः॥

---

(ङ) एवमिति। अन्यत्रापि सन्दानितक-कलापक-कुलकेष्वपि एवमुदाहरणमूह्यमिति शेषः। तच्च किरातार्जुनीय-शिशुपालवधादावनुसन्धेयम्।

(च) सर्गेति। सर्गैरन्ते सर्गशब्दोपस्थापिताध्यायैः बन्धो रसवत्पद्यसमूहविन्यासो विन्यस्तरसवत्-पद्यसमूह इत्यर्थः महाकाव्यम्। तत्र महाकाव्ये धीरोदात्तगुणान्वितः सुरो देवतास्वभाव एक एकमात्रो नायकः। अत्रैकशब्दः "बहवोऽपि वा" इत्यस्य पक्षान्तरं सूचयति। यथा—शिशुपालवधे श्रीकृष्णः, कुमारे कार्त्तिकेयो वा। वा अथवा धीरोदात्तगुणान्वितः सद्वंश एकः क्षत्रियो नायकः। यथा—किरातार्जुनीये अर्जुनः। अपिशब्देन क्षत्रियेतरजातिरपि तादृश एको नायको भवितुमर्हतीति सूचितम्। वा अथवा एक-वंशभवाः, कुलजाः कुलीनाः, बहवोऽपि धीरोदात्तगुणान्विता भूपा नायका भवितुमर्हन्ति। यथा—रघुवंशे दिलीपादयः। एक एकतमः। अङ्गी प्रधानः। तत्र शृङ्गारो नैषधे, वीरः शिशुपालवधे, शान्तो महा-भारते। शान्तानामिति बहुवचनात् करुणोऽपि गृह्यते। तेन करुणप्रधानस्य रामायणस्य महाकाव्यत्व-सिद्धिः। नाटकसन्धयो मुखादयः पञ्चैव। वृत्तमुपाख्यानम्। अन्यदितिहासोद्भवभिन्नं सज्जनाश्रयम् साधुजनचरित्रविषयं वृत्तम्। तस्य महाकाव्यस्य सम्बन्धिनश्चत्वार एव वर्गा धर्मार्थकाममोक्षरूपा वर्णनीया इति शेषः। तेषु चतुर्वर्गेषु मध्ये एकं यत्किञ्चित् फलं मुख्यप्रयोजनं भवेत्; न पुनर्द्वित्रादीति भावः। आदौ आरम्भे नमस्क्रिया। यथा—रघुवंशे। आशीर्यथा मम रुक्मिणीहरणे। वस्तुनिर्देशो यथा—कुमारसम्भव-शिशुपालवधादौ। क्वचिन्महाकाव्ये। एतेनानयोरुत्कर्षमात्रजनकत्वं न पुनर्महाकाव्य-स्वरूपनिर्वाहकत्वमपीति सूचितम्। तेन क्वचिदनयोरसत्त्वेऽपि न महाकाव्यत्वहानिरिति बोध्यम्। एक-वृत्तमयैः [illegible]। अवसाने समाप्तौ [illegible] शिष्टाः,

CC-0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह ।
नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते ॥
सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् ।
सन्ध्या-सूर्य्येन्दु-रजनी-प्रदोष-ध्वान्त-वासराः ॥
प्रातर्मध्याह्न-मृगया-शैलर्त्तु-वन-सागराः ।
सम्भोग-विप्रलम्भौ च मुनि-स्वर्ग-पुराध्वराः ॥
रणप्रयाणोपयम-मन्त्र-पुत्रोदयादयः ।
वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह ॥
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ।
नामास्य सर्गोपादेय-कथया सर्गनाम तु ॥ (च)

सन्ध्यङ्गानि यथालाभमत्र विधेयानि । "अवसानेऽन्यवृत्तकैः" इति बहु-

---

नातिस्वल्पाः पञ्चविंशत्यन्यूनपद्यघटिताः । एवञ्च भट्टिकाव्यप्रथमसर्गस्य सप्तविंशतिपद्यघटितत्वान्न दोषः । नातिदीर्घास्त्रिशतानधिकपद्यघटिता इति साम्प्रदायिकाः । अष्टाधिकाः सर्गा इह महाकाव्ये कविना कर्त्तव्या इति शेषः । केचित्तु त्रिंशदनधिका इत्यपि वदन्ति । तन्न रामायणादावव्याप्तेः । क्वापि महाकाव्ये कश्चन सर्गो नानावृत्तमयो बहुविधच्छन्दोनिबद्धपद्यसमूहघटितो दृश्यते । यथा—किरातार्जुनीये पञ्चमः, शिशुपालवधे च चतुर्थः । एवञ्च महाकाव्ये एकमात्र एव एतादृशः सर्गो यथेच्छं कविना कर्त्तव्यं इति ग्रन्थकर्त्तुराशयः । सर्गान्ते भाविनोऽव्यवहितपरवर्त्तिनः सर्गस्य कथाया वृत्तान्तस्य सूचनं भवेत् । सम्भोगविप्रलम्भौ शृङ्गारौ वीरादिरसप्रधानेऽपि महाकाव्ये वर्णनीयावित्यर्थः, अन्यथं तदुक्तेरानर्थक्यं स्यात् । पुरं नगरी । रणो युद्धम्, प्रयाणं यात्रामात्रम्, उपयमो विवाहः, मन्त्र उपायचतुष्टयप्रयोगमन्त्रणा, पुत्रस्य उदय उत्पत्तिः । पुत्रपदमपत्यमात्रोपलक्षणम् । आदिशब्दात् राजामात्यसेनापतिप्रभृतयश्च । अमी साङ्गोपाङ्गा इत्युक्ताः ; अथवा सन्ध्यादयो नवत्रायङ्गैः कामिन्यभिसाराद्युपाङ्गैश्च सह, यथायोगं यथासम्भवं वर्णनीयाः । एतेन उपाख्यानप्रकारानुसारादेवामीषामन्यतमप्रकारा वर्णनीया न पुनः सर्वत्रैव नियम एवेति सूचितम् । नाम्नेत्यभेदे तृतीया । तेन कवेर्नाम्ना कविनामकानुपूर्वीकमित्यर्थः, अस्य महाकाव्यस्य नाम वक्तव्यम् । एवमन्यत्रापि । तत्र कवेर्नाम्ना नाम यथा—माघ-भारविप्रभृति । वृत्तस्य नाम्ना नाम यथा—कुमारसम्भव-कीचकवधादि । नायकस्य नाम्ना यथा—रघु-नैषधप्रभृति । अनयोर्वंशचरितशब्दपर्यन्तव्यवहारे तु वृत्तनामत्वम् । इतरस्य नाम्ना यथा—मार्कण्डेयपुराणादि । सर्गस्य नाम तु सर्गे उपादेयकथया वर्णनीयवृत्तान्तेन ... यथा—"प्रभातवर्णनं ... सर्गः" इति ।

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

वचनमविवक्षितम् । साङ्गोपाङ्गा इति जलकेलि-मधुपानादयः (छ)। यथा— रघुवंश-शिशुपालवध-नैषधादयः । यथा वा मम राघवविलासादिः ।

३०३ । अस्मिन्नार्षे पुनः सर्गा भवन्त्याख्यानसंज्ञकाः । (ज)

अस्मिन् महाकाव्ये । यथा—महाभारतम् (झ)।

३०४ । प्राकृतैर्निर्म्मिते तस्मिन् सर्गा आश्वाससंज्ञकाः ॥
छन्दसा स्कन्धकेनैतत् क्वचिद्गलितकैरपि । (ञ)

यथा—सेतुबन्धः । यथा वा मम कुवलयाश्वचरितम् ।

३०५ । अपभ्रंशनिबन्धेऽस्मिन् सर्गाः कुड़वकाभिधाः ॥
तथापभ्रंशयोग्यानि छन्दांसि विविधान्यपि । (ट)

यथा—कर्णपराक्रमः ।

३०६ । भाषाविभाषानियमात् काव्यं सर्गसमुज्झितम् ॥
एकार्थप्रवणैः पद्यैः सन्धिसामग्र्यवर्जितम् । (ठ)

यथा—भिक्षाटनम् आर्य्याविलासश्च ।

---

(छ) ननु नाटकसन्धीनामव कर्त्तव्यत्वे तदङ्गानामपि कर्त्तव्यता न वेत्याह सन्ध्यङ्गानीति । यथालाभमिति । तथा च सन्ध्यङ्गानां नाटक एव नियम इति भावः । अविवक्षितमिति । तेनान्यवृत्तकं कचिन्मात्रपद्यस्थलेऽपि न दोष इति भावः ।

(ज) अस्मिन्निति । ऋषेरिदमित्यार्षं तस्मिन् आर्षे ऋषिरचिते पुनरस्मिन् महाकाव्ये सर्गाः आख्यानसंज्ञका भवन्ति । साम्प्रदायिकमतमेतत् ।

(झ) यथेति । महाभारते सतामपि गद्यानां पद्यातिबाहुल्येनासत्कल्पीकृतत्वात् पद्यप्रकरणे यमहाकाव्यत्वसङ्गतिः । एवं विष्णुपुराणादावप्यूह्यम् ।

(ञ) प्राकृतैरिति । प्राकृतैः प्राकृताख्याभिर्भाषाभिः निर्म्मिते तस्मिन् महाकाव्ये सर्गा आश्वाससंज्ञका भवन्ति । एतच्च प्राकृतनिर्म्मितं महाकाव्यं क्वचिदंशे स्कन्धकेन तदाख्येन च्छन्दसा क्वचिदंशे च गलितकैस्तदाख्यैश्छन्दोविशेषैरपि निबद्धव्यमिति शेषः ।

(ट) अपेति । अपभ्रंशेन तदाख्यया भाषया निबन्धो ग्रथनं यस्य तादृशे अस्मिन् महाकाव्ये सर्गाः कुड़वकाभिधा भवन्ति । तथा अपभ्रंशयोग्यानि विविधान्यपि च्छन्दांसि भवन्ति ।

(ठ) भाषेति । भाषाविभाषयोर्नियमात् "भाषया संस्कृतेनारब्धे संस्कृतेनैव कर्त्तव्यम्, विभाषया शौरसेन्यादिविकृतभाषया आरब्धे तादृशभाषयैव कर्त्तव्यम्" एवं नियमात् कविना कृतमित्यर्थः, सर्गसमु-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

३०७। खण्डकाव्यं भवेत् काव्यस्यैकदेशानुसारि च ॥ (ड)

यथा—मेघदूतादिः (ढ)।

३०८। कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः ।

व्रज्याक्रमेण रचितः स एवातिमनोरमः ॥ (ण)

सजातीयानामेकत्र सन्निवेशो व्रज्या। यथा—मुक्तावल्यादिः।

अथ गद्यकाव्यानि। तत्र गद्यम्—

३०९। वृत्तबन्धोज्झितं (१) गद्यं मुक्तकं वृत्तगन्धि च ।

भवेदुत्कलिकाप्रायं चूर्णकञ्च चतुर्विधम् ॥

आद्यं समासरहितं वृत्तभागयुतं परम् ।

अन्यद्दीर्घसमासाढ्यं तुर्यञ्चाल्पसमासकम् ॥ (त)

---

न्झितमध्यायवर्जितम्, एकार्थप्रवणैरेकविषयप्रतिपादकैः पद्यैर्निबद्धमिति शेषः, तथा सन्धीनां सामग्र्येण समुदायेन वर्जितं सरसं वाक्यवृन्दं काव्यं स्यात् ।

(ड) खण्डेति। अत्र चकारोपादानात् काव्यस्य पूर्वनिरुक्तस्य महाकाव्यस्येत्यर्थः एकदेशानुसारि एकांशानुरूपं काव्यं खण्डकाव्यं भवेत्। अत्रैकदेशानुसारीत्यनेन महावाक्यभावेनैकवाक्यतापन्नमिति लभ्यते, तेन कोषे नातिव्याप्तिः। खण्डकाव्यमिति स्पष्टा व्युत्पत्तिः।

(ढ) यथेति। आदिपदान्नलोदया-पद्यत्रयादिकृतराजस्तुत्यादीनां परिग्रहः।

(ण) कोष इति। अन्योन्यानपेक्षकः परस्पराकाङ्क्षारहितः श्लोकसमूहस्तु कोषः। रत्नतुल्यश्लोकसमूहधारणात् कोष इति समाख्या। व्रज्याक्रमेण एकप्रकारबहुपदार्थावस्थानसमानरूपेण रचित एव स कोषः अतिमनोरमः स्यादिति प्रशंसामात्रम्।

(त) वृत्तेति। वृत्तबन्धोज्झितं छन्दोगतह्रस्वदीर्घादिनियमरहितं वाक्यं गद्यमिति गद्यसामान्यलक्षणम्। तच्च गद्यं मुक्तकम्, वृत्तगन्धि, उत्कलिकाप्रायम्, चूर्णकञ्चेति चतुर्विधं भवेत्।

क्रमेणैषां लक्षणान्याह आद्यमिति। समासरहितं सर्वथा समासविहीनं गद्यं मुक्तकम्, समासेन मुक्तं विहीनमिति व्युत्पत्तेः। वृत्तभागेन छन्दसः किञ्चिदंशेन युतं गद्यं परं वृत्तगन्धि, वृत्तस्य गन्धो लेशोऽस्यास्तीति व्युत्पत्तेः। दीर्घेण बहुतरपदवृत्तिना समासेन आढ्यं युक्तं गद्यम् अन्यत् उत्कलिकाप्रायम् उत्कलिकाप्रायमुच्चारणकाले उच्चावचतरङ्गसदृशमिति व्युत्पत्तेः। अल्पसमासकं द्वित्रमात्रपदवृत्तिसमासविशिष्टं गद्यञ्च चूर्णकम्। दीर्घसमासाभावेन चूर्णस्य बिन्दोरिव स्तोकमात्रे विरामाच्चूर्णकमिति संज्ञा। तेन च मुक्तकमिति चूर्णकमिति च संज्ञायां कप्रत्ययौ।

---

(१) वृत्तगन्धोज्झितमिति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुक्तकं यथा—"गुरुर्वचसि पृथुरुरसि" इत्यादि (य)।

वृत्तगन्धि यथा मम—"समरकण्डूयननिविड़भुजदण्डकुण्डलीकृत-कोदण्डशिञ्जिनीटङ्कारोज्जागरितवैरिनागर!" इत्यादि (द)।

अत्र "कुण्डलीकृतकोदण्ड" इत्यनुष्टुब्वृत्तस्य पादः। "समरकण्डूयने"ति च प्रथमाक्षरद्वयरहितस्तस्यैव पादः (ध)।

उत्कलिकाप्रायं यथा ममैव—"अणिस-विसुमर-णिसिद-सरविसर-विदलिद-समर-परिगद-पवर-परवल!" इत्यादि (न)।

चूर्णकं यथा मम—"गुणरत्नसागर! जगदेकनागर! कामिनी-मदन! जनरञ्जन!" इत्यादि (प)।

३१०। कथायां सरसं वस्तु गद्यैरेव विनिर्म्मितम्।
क्वचिदत्र भवेदार्य्या क्वचिद्वक्त्रापवक्त्रके।
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम्॥ (फ)

यथा—कादम्बर्य्यादिः।

---

(य) मुक्तकमिति। अत्र सर्वथैव समासाभावान्मुक्तकमिति भावः।

(द) समरेति। समरकण्डूयनेन निविड़ाभ्यां घनाभ्यां भुजदण्डाभ्यां कुण्डलीकृतं सम्पूर्णम् कृष्टं यत् कोदण्डं कार्म्मुकं तस्य शिञ्जिन्या गुणस्य टङ्कारेण ध्वनिना उज्जागरिता निद्रात उत्थापिता वैरिनागराः शत्रुभूताः पौरा येन तत्सम्बोधनम्।

(ध) अत्रेति। प्रथमाक्षरद्वयेन समेतिवर्णद्वयेन रहितः। तस्यैव पथ्यावक्त्ररूपस्य अनुष्टुब्वृत्तस्यैव। तथा च 'रकण्डूयननिविड़' इत्यंशः पथ्यावक्त्रस्य प्रथमः पाद इव प्रतिपद्यते।

(न) उत्कलिकेति। "अनिश-विसृमर-निशित-शर-विसर-विदलित-समर-परिगतप्रवर-परबल" इति संस्कृतानुवादः। अनिशमविश्रान्तं विसृमरः प्रसरन् यो निशितशराणां विसरः समूहस्तेन विदलितानि आमर्द्दितानि समरपरिगतानि युद्धोपस्थितानि प्रवराणि श्रेष्ठानि परबलानि शत्रुसैन्यानि येन तत्सम्बोधनम्।

अत्र दीर्घसमासादुत्कलिकाप्रायत्वम्।

(प) चूर्णकमिति। अत्र ह्रिस्वमात्रपदवृत्तिसमासाच्चूर्णकत्वम्।

(फ) कथायामिति। अत्र रसपदेन प्रधानत्वाच्छृङ्गारस्यैव ग्रहणम्। तेन कथायां कथाख्यगद्य-काव्ये सरसं शृङ्गारप्रधानं वस्तु इतिवृत्तं गद्यैरेव विनिर्म्मितं भवेत्। अत्र कथायां क्वचिदंशे आर्य्या आर्य्या-नामक छन्दोबद्धं पद्यं भवेत्। क्वचिद्वा वक्त्रापवक्त्रके वक्त्रनामकेन छन्दसा अपरवक्त्रनामकेन छन्दसा वा निबद्धं पद्यं भवेत्। इदन्त्वनियतम्, तथा आदौ प्रथमत एव पद्यैर्देवतादीनां नमस्कारः, एवं खलस्य दुर्जनस्य आदिशब्दात् सज्जनस्य च वृत्तकीर्त्तनं चरित्रवर्णनं भवेत्। [illegible] परकारिकास्य

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

३११ । आख्यायिका कथावत् स्यात् कवेर्वंशानुकीर्त्तनम् (१) ।
अस्यामन्यकवीनाञ्च वृत्तं पद्यं क्वचित् क्वचित् ॥
कथांशानां व्यवच्छेद आश्वास इति बध्यते ।
आर्य्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् ॥
अन्यापदेशेनाश्वास-मुखे भाव्यर्थसूचनम् । (ब)

यथा—हर्षचरितादिः (भ) ।

"अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात् ।" इति दण्ड्याचार्य्य-वचनात् केचित् "आख्यायिका नायकेनैव निबद्धव्या" इत्याहुः, तदयुक्तम् (म) । आख्यानादयश्च कथाख्यायिकयोरेवान्तर्भावान्न पृथगुक्ताः । यदुक्तं दण्डिनैव—"अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः" इति । एषामुदाहरणं पञ्चतन्त्रादि (य) ।

---

"कवेर्वंशानुकीर्त्तनम्" इत्यनुपद्यते । केचित्तु "कवेर्वंशानुकीर्त्तनम्" इति आख्यायिकाया एव विशेषधर्म्म इत्याहुः । तन्मते कादम्बर्य्यां कविवंशवर्णनं लक्षणातिरिक्तमिति प्रसक्तं स्यात् ।

(ब) आख्यायिकेति । "आख्यायिका कथावत् स्यात्" इत्यतिदेशेन आख्यायिकायामपि गद्यैरेव सरसं वस्तु विनिर्म्मितम्, आदौ पद्यैर्नमस्कारः, खलादेर्वृत्तकीर्त्तनञ्च भवेदिति लभ्यते । कवेः स्ववंशस्यानुकीर्त्तनञ्च स्यात् । अस्यामाख्यायिकायाम् अन्यकवीनां वृत्तं वृत्तान्तः, क्वचित् क्वचित् पद्यञ्च स्यात् । कथांशानामुपाख्यानैकदेशानां व्यवच्छेदः परिच्छेदः आश्वास इति नाम्ना बध्यते कविना निर्म्मीयते । अत्राश्वासपदमुच्छ्वासोप-लक्षणम्, दशकुमारचरिते तथा दर्शनात् । आर्य्यावक्त्रापवक्त्राणां तदाख्यानां छन्दसां मध्ये येन केनचित् छन्दसा अन्यापदेशेन अपरविषयवर्णनच्छलेन आश्वासमुखे परिच्छेदप्रथमे भाविनोऽर्थस्य विषयस्य सूचनं भवेत् ।

(भ) यथेति । आदिपदेन दशकुमारचरितादीनां ग्रहणम् ; किन्तु तत्र दशकुमारचरिते आदौ कविवंशवर्णनं खलादिवृत्तकीर्त्तनादिकञ्चासीत्, परन्तु तेषां काललुप्ततया तत्र अपरकवेर्वर्णनान्तरसन्नि-वेशेन बहुतरमाख्यायिकावैलक्षण्यं परिलक्ष्यते इति महान्तः ।

(म) मतान्तरं दूषयितुमाह अपीति । केचित् "आख्यायिका नायकेनैव निबद्धव्या" (निबद्धव्या वक्तव्या) इत्याहुः, तदयुक्तम् "अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात् ।" इति दण्ड्याचार्य्यवचनादित्यन्वयः । तथा च तत्र आख्यायिकायाम् अन्यैर्नायकभिन्नैरपि पात्रैः उदीरणात् तत्तद्वृत्तान्तकथनात् तत्तद्वृत्तान्तकथन-दर्शनादित्यर्थः, अनियमोऽपि "आख्यायिका नायकेनैव निबद्धव्या" इति नियमाभावोऽपि तु दृष्ट इत्यर्थः ।

(य) नन्वाख्यानादयः कथं न लक्ष्यन्त इत्याह आख्यानादयश्चेति । एषामाख्यानादीनाम् ।

---

(१) कवेर्वंशादिकीर्त्तनमिति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ गद्यपद्यमयानि (र) ।

३१२ । गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ॥ (ल)

यथा—देशराजचरितम् ।

३१३ । गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते । (व)

यथा—विरुदमणिमाला ।

३१४ । करम्भकन्तु भाषाभि-र्विविधाभिर्विनिर्म्मितम् ॥ (श)

यथा—मम षोड़शभाषामयी प्रशस्तिरत्नावली ।

एवमन्येऽपि भेदा उद्देशमात्रप्रसिद्धत्वादुक्तभेदानतिक्रमाच्च न पृथग्लक्षिताः (ष) ।

इति साहित्यदर्पणे दृश्यश्रव्यकाव्यनिरूपणो नाम
षष्ठः परिच्छेदः ॥०॥

---

(र) अथेति । गद्यपद्यमयानि काव्यानि निरूप्यन्त इति शेषः ।

(ल) गद्येति । गद्यपद्यमयं गद्यपद्योभयात्मकं काव्यं चम्पूरिति नाम्ना कविभिरभिधीयते । चमत्कृत्य पुनाति सहृदयान् विस्मितीकृत्य प्रसादयती त चम्पूः पृषोदरादित्वात् साधुः ।

(व) गद्येति । गद्यपद्यमयी तदुभयात्मिका राज्ञः स्तुतिर्गुणवर्णना विरुदं नाम काव्यमुच्यते । विशेषेण आनन्दाश्रुणा रोदिति श्रोतृवृन्दमिति विरुदम्, नाम्युपधत्वात् कः । तत्सम्बन्धादस्य विरुदं नाम ।

(श) करेति । विविधाभिर्भाषाभिर्विनिर्म्मितं काव्यन्तु करम्भकमुच्यते । दधिमिश्रितशक्तुः करम्भकम् ; "करम्भकं कर्कसारम्" इति हारावल्युक्तेः । तथा च करम्भकवत् सहृदयप्रीतिजननादस्य करम्भकं नाम ।

(ष) एवमिति । अन्येऽपि उदाहरण चक्रवालक-भोगावली-विरुदावली-तारावली-विश्वावली-रत्नावली पञ्चाननावलीतिनामानो ग्रन्थान्तरोक्ता भेदाः काव्यविशेषाः उद्देशमात्रेण केवलनाम्नैव प्रसिद्धत्वात्, उक्तानां भेदानामनतिक्रमात् उक्तेष्वेषु भेदेषु मध्ये यस्मिन् कस्मिंश्चिदन्तर्भावादित्यर्थः न पृथग्लक्षिताः पृथक् पृथग्लक्षणैर्न निरूपिता इति ।

इति महामहोपाध्याय-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां साहित्यदर्पण-
टीकायां कुसुमप्रतिमायां षष्ठः परिच्छेदः ॥०॥

---

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# सप्तमः परिच्छेदः ।

——:०:——

इह (१) प्रथमतः काव्ये दोषगुणरीत्यलङ्काराणामवस्थितिक्रमो दर्शितः । सम्प्रति के ते इत्यपेक्षायामुद्देशक्रमप्राप्तानां दोषाणां स्वरूपमाह—(क)

१ । रसापकर्षका दोषाः—(ख)

(क) ननु "दोषास्तस्यापकर्षकाः" इत्यनेनैव दोषलक्षणे सिद्धे पुनः "रसापकर्षका दोषाः" इत्युक्त्या पौनरुक्त्यापत्तिरित्याह इहेति । इह अस्मिन् निरूप्यमाणे काव्ये, प्रथमतः प्राक् । अवस्थितेः क्रमः प्रकारः, दर्शितः "दोषास्तस्यापकर्षकाः" इत्यनेनेति शेषः । के कीदृशाः, ते दोषाः, इत्यपेक्षायामाकाङ्क्षायाम् उद्देशक्रमप्राप्तानां नामकीर्त्तनक्रमेणोपस्थितानाम् । स्वरूपं लक्षणम् । तथा च "वाक्यं रसात्मकं काव्यम्" इत्यतः परमेव "दोषास्तस्यापकर्षकाः" इत्यनेन दोषाणामुद्दिष्टत्वात् काव्यस्वरूपज्ञानानन्तरमेव दोषस्वरूपज्ञानेच्छाया जायमानतया अत्रैव दोषलक्षणकरणं रुङ्क्षत इत्याशयः । एतेनात्रोपोद्घातसङ्गतिरपि सूचिता । इत्थञ्च "दोषास्तस्यापकर्षकाः" इति काव्ये दोषाणामवस्थानप्रकारप्रदर्शनपरम्, "रसापकर्षका दोषाः" इति तु दोषाणां लक्षणपरमिति न पौनरुक्त्यमिति धीतितम् ।

(ख) रसेति । अत्र रसपदं रसाभासभावादीनां नीरसस्थले मुख्यभूतस्यार्थस्य चोपलक्षणम् । तथा च रसं रस-रसाभास-भाव-भावाभास-सन्धि-शबलताद्यन्यतमरूपं काव्यस्यात्मानं मुख्यभूतमर्थञ्च अपकर्षयन्ति साक्षात् परम्परया वा स्वप्रतीतिप्रतिबन्धद्वारा निकर्षयन्तीति रसापकर्षकाः काव्यगतधर्मविशेषा दोषा इत्यर्थः । तथा च—

साक्षात् परम्परया वा रसादीनां सम्यक् प्रतीतिप्रतिबन्धककाव्यधर्मत्वं दोषत्वमिति दोषसामान्यलक्षणम् । रसादीनां सम्यक् प्रतीतिस्तु यथाकांक्षं चमत्कारितया प्रतीतिरेव ; तत्प्रतिबन्धकत्वञ्च कदाचित् कालविलम्बजननात् कदाचिच्चमत्कारिताव्याघातात् कदाचित् सर्वथैव बाधाच्चेति बोध्यम् । तत्र साक्षाद्यथा—"उदितं चन्द्रमालोक्य शृङ्गारे मग्नमन्तरम् ।" अत्र हि रसस्य स्वशब्दवाच्यत्वं नाम दोषो रसे सन्नेव स्वशब्दोपात्ततया तस्य चमत्कारितां व्याहत्य चमत्कारितया तत्प्रतीतिं प्रतिबध्नाति । परम्परया यथा—"कार्तार्थ्यं यातु तन्वङ्गी कदानङ्गवशंवदा ।" इत्यादौ दुःश्रवत्वादयो दोषाः स्वाश्रयव्यञ्जकविषयकत्वरूप-परम्परासम्बन्धेन रसस्य चमत्कारितां व्याहत्य चमत्कारितया तत्प्रतीतिं प्रतिबध्नन्ति । कालविलम्बजननात् रसादीनां सम्यक् प्रतीतिप्रतिबन्धकत्वं यथा—"क्षीरोदजावसतिजन्मभुवः प्रसन्नाः" इत्यादौ क्लिष्टत्वादिः । सर्वथैव तत्प्रतीतिबाधाद्यथा—"कुञ्जं हन्ति कृशोदरी" इत्यादावसमर्थत्वादिः । काव्यधर्मत्वमित्यभिधानाच्च बधिरत्वादिपुरुषधर्मेषु नातिव्याप्तिरिति संक्षेपः ।

(१) इह हि इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection, Digitized By Siddhanta eGangotri Gyaan Kosha

अस्यार्थः प्रागेव स्फुटीकृतः (ग) ।

तद्विशेषानाह—(घ)

२ । ते पुनः पञ्चधा मताः ।

पदे पदांशे (१) वाक्येऽर्थे सम्भवन्ति रसेऽपि यत् ॥ (ङ)

स्पष्टम् ।

---

(ग) अस्येति । प्रागेव प्रथमपरिच्छेद एव "दोषास्तस्यापकर्षकाः" इत्यस्य व्याख्यानावसरे इत्तार्थदित्यर्थः । तथा च दुःश्रवत्वादिषु साक्षाद् रसापकर्षकत्वाभावेऽपि परम्परया रसापकर्षकत्वान्नाव्याप्तिरित्याशयः । एतद्विवरणन्तु तत्रत्यटीकायामनुसन्धेयम् ।

(घ) तदिति । तेषां दोषाणां विशेषान् भेदान् ।

(ङ) दोषा हि प्रधानतस्त्रिधा सम्भवन्ति—शब्दगताः, अर्थगताः, रसगताश्च ; तत्र च शब्दगताः पुनस्त्रिधा—पदगताः, पदांशगताः, वाक्यगताश्चेति ; तत्साकल्येन सङ्कलयन्नाह ते पुनरिति । ते पुनर्दोषाः पञ्चधा मताः । यद्यस्मात्, पदे, पदांशे, वाक्ये, अर्थे, रसेऽपि च सम्भवन्ति । अत्रापि रसपदं विभावादीनां भावादीनाञ्चोपलक्षणम् । अतएव वक्ष्यति—"स्थायिसञ्चारिणोरपि" इत्यादि ।

तत्र सति सम्भवे स्वानेकदेशवृत्तित्वे सति एकमात्रपदप्रयोज्यदोषत्वं पददोषत्वम् । अत्र स्वपदं पदपरम् । तथा च "कार्त्तार्थ्यं यातु तन्वङ्गी कदानङ्गवशंवदा ।" अत्र हि सम्भवसत्त्वेन "र्त्तां" "र्थ्यम्" इति पदोभयदेशवृत्तित्वात् "कार्त्तार्थ्यम्" इत्येकमात्रपदप्रयोज्यत्वाच्च दुःश्रवत्वं नाम पददोषः । "कान्तमायान्तमालोक्य द्राग् गच्छति कृतस्मिता । इत्यादौ "द्राक्" इत्यत्र स्वरान्तराभावादनेकदेशासम्भवेऽपि न पदगतदुःश्रवत्वदोषहानिः । अत उक्तं सति सम्भव इति । स्वानेकदेशवृत्तित्वे सतीत्यभिधानात् "तद्गच्छ सिद्ध्यै कुरु देवकार्य्यम्" इत्यादौ पदांशगतदुःश्रवत्वदोषे नातिव्याप्तिः, "द्ध्यै" इत्यवस्थदोषस्य एकदेशवृत्तित्वेनानेकदेशवृत्तित्वाभावात् । एकमात्रेत्यभिधानाच्च "अराल्यंम्यः कदा लप्स्ये कार्त्तार्थ्यं विरहे तव" इत्यादावनेकपदप्रयोज्यवाक्यदोषे नातिव्याप्तिः ।

पदगतकियदंशप्रयोज्यदोषत्वं पदांशदोषत्वम् । यथा—"पाणिः पल्लवपेलवः ।" अत्र पेलवशब्दस्य "पेल" इत्यंशेन अण्डकोषोपस्थापनात् पदांशगतोऽश्लीलतादोषः । न चैवं "कार्त्तार्थ्यम्" इत्यादावपि पदांशदोषप्रसङ्ग इति वाच्यं पददोषभिन्नत्वे सतीत्यस्य निवेशनीयत्वात् ।

वाक्यघटकानेकपदप्रयोज्यदोषत्वं वाक्यदोषत्वम् । यथा—"अराल्यंम्यः कदा लप्स्ये कार्त्तार्थ्यं विरहे तव" इत्यादौ "अराल्यंम्यः" "कार्त्तार्थ्यम्" इति वाक्यघटकानेकपदप्रयोज्यत्वात् वाक्यदोषत्वम् ।

अर्थप्रयोज्यदोषत्वम् अर्थदोषत्वम् । अर्थस्तु सामान्यात् शक्यो लक्ष्यो रसदोषाणां पृथगभिधानात् रसादिभिन्नो व्यङ्ग्यश्च ग्राह्यः । यथा—"विलोक्य वितते व्योम्नि विधुं मुञ्च रुषं प्रिये !" इत्यादौ विततशब्दशक्यार्थप्रयोज्यत्वादेवार्थदोषत्वम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(१) तदंशे इति पाठः ।

तत्र—

३। दुःश्रव-त्रिविधाश्लीलानुचितार्थाप्रयुक्तताः।
ग्राम्याप्रतीत-(१) सन्दिग्ध-नेयार्थ-निहतार्थताः॥
अवाचकत्वं क्लिष्टत्वं विरुद्धमतिकारिता।
अविमृष्टविधेयांशभावश्च पदवाक्ययोः॥
दोषाः केचिद्भवन्त्येषु पदांशेऽपि पदे परे (२)।
निरर्थकासमर्थत्वे च्युतसंस्कारता तथा॥ (च)

परुषवर्णतया श्रुतिदुःखावहत्वं दुःश्रवत्वम् (छ)। यथा—

---

रसवृत्तिदोषत्वं रसदोषत्वम्। यथा—"तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः कोऽप्यजायत।" इत्यादौ रसादिशब्दप्रयोज्यो दोषो रसादावेव वर्त्तत इति रसदोषत्वम्।

किञ्च दोषाः पुनर्द्वेधा नित्या अनित्याश्चेति। तत्र सर्वदैव हेयस्वभावत्वं नित्यदोषत्वम्। यथा—च्युतसंस्कारता-हतवृत्ततादयः। ते हि सर्वेष्वेव रसेषु सर्वास्वेवावस्थासु च हेयाः, प्रतिप्रसवाभावात्। रसभेदेनावस्थाभेदेन वा हेयोपादेयोभयस्वभावत्वमनित्यदोषत्वम्। यथा—दुःश्रवतादयः। ते हि शृङ्गारादौ हेयाः, रौद्रादौ चोपादेयाः। अतएव नित्यदोषः अनित्यदोषश्चेति संज्ञापि सङ्गच्छते।

(च) दोषाणां पदगतत्वादिकं व्यवस्थापयन् संख्यामाह दुःश्रवेति। "द्वन्द्वात् परः श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यते" इति न्यायानुसारेणात्रापि द्वन्द्वसमासात् परं तप्रत्ययात्तदर्थः सर्वत्र सम्बध्यते। तेन दुःश्रवता, त्रिविधा अश्लीलता, अनुचितार्थता, अप्रयुक्तता, ग्राम्यता, अप्रतीतता, सन्दिग्धता, नेयार्थता, निहतार्थता इति लभ्यते। अवाचकत्वम्, क्लिष्टत्वम्, विरुद्धमतिकारिता, अविमृष्टः अप्राधान्येन निर्दिष्टः विधेयांशः प्रधानभागो यत्र तस्य भावः अविमृष्टविधेयांशता विधेयाविमर्श इति यावत्। एते त्रयोदश दोषाः पदवाक्ययोरुभयोरेव पदे वाक्ये चेत्यर्थः भवन्तीति परेणान्वयः। एषु मध्ये केचिद्दोषाः पदांशेऽपि भवन्तीत्यन्वयः। तथा च दुःश्रवता, अश्लीलता, निहतार्थता, अवाचकता, नेयार्थता चेत्यादयो दोषाः पदांशेऽपि, सम्भवन्तीत्यर्थः। निरर्थकासमर्थयोर्भावौ ते तथोक्ते। तथा च निरर्थकता, असमर्थता, तथा च्युतसंस्कारता चेति परे अन्ये इमे त्रयो दोषाः पदे केवलपद एव सम्भवन्ति।

(छ) क्रमादेषां लक्षणानि विवक्षुः प्रथमं दुःश्रवत्वलक्षणमाह परुषेति। परुषवर्णतया शब्दस्य कर्कशाक्षरतया श्रुतिदुःखावहत्वं कर्णावच्छेदेनात्मनि दुःखजनकत्वं दुःश्रवत्वम्। दुःखेन श्रूयत इति दुःश्रवः, दुःपूर्वकात् श्रुधातोः "ईषद्दुःसुषु—" इत्यादिना खल्, तस्य भावो दुःश्रवत्वम्। इदमेव श्रुतिकटुत्वमित्याख्यायते। अयञ्चानित्यो दोषः, "वक्तरि क्रोधसंयुक्ते" इत्यादिवक्ष्यमाणयुक्तेः प्रतिप्रसवात्।

---

(१) ग्राम्योऽप्रतीत इति क्वचित् पाठः। (२) अपरे, परम् इति पाठभेदौ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"कार्त्तार्थ्यं यातु तन्वङ्गी कदानङ्गवशंवदा॥" (ज)

अश्लीलत्वं व्रीड़ा-जुगुप्साऽमङ्गलव्यञ्जकत्वात् त्रिविधम् (१) (झ)।

क्रमेणोदाहरणम्—

"हृप्तारिविजये राजन्! साधनं सुमहत्तव।" (ञ)

"प्रससार शनैर्वायुर्विनाशे तन्वि! ते तदा॥" (ट)

---

(ज) पदगतं दुःश्रवत्वमुदाहरति कार्त्तार्थ्यमिति।

"रमणोरसि विन्यस्य सुपीनकठिनौ स्तनौ।" इति मत्पूरितपूर्वार्द्धम्।

एतत्प्रकरणीयोदाहरणानां प्रायश ग्रन्थकर्त्तैव सङ्कलितत्वादेवमेवान्यत्रापि मयैव यथाकथञ्चित् पूरणीयम्। अनङ्गवशंवदा मदनायत्ता इयं तन्वङ्गी कृशाङ्गी कदा कार्त्तार्थ्यं कृतार्थतां यातु कान्तसंसर्गात् प्राप्नोतु। अत्र कृतार्थस्य भावः कार्त्तार्थ्यमिति यण्प्रत्ययान्तपदस्य परुषवर्णदयतया रसास्वादेन सुखमनुभवितुमिच्छोः श्रोतुः श्रवणमात्रेणैवात्मनि दुःखजननार्हं सुख्यापादनेन रसप्रकर्षहानेर्दुःश्रवत्वम्।

(झ) अश्लीलतां लक्षयन् तत्त्रैविध्यमप्याह अश्लीलत्वमिति। एतेन व्रीड़ाजुगुप्साऽमङ्गलान्यतमव्यञ्जकशब्दत्वमश्लीलत्वमिति लक्षणमपि सूचितम्। तथा च श्रियं काव्यशोभां लाति ददातीति श्रीलः, श्रीशब्दोपपदात् लाधातोः "आतोऽनुपसर्गात् कः" इति कप्रत्यये कपिलिकादित्वात् श्रीशब्दगतरेफस्य लत्वम्। न श्रीलः अश्लीलस्तस्य भावः अश्लीलत्वम्। तच्च त्रिविधम्—व्रीड़ाव्यञ्जकम्, जुगुप्साव्यञ्जकम्, अमङ्गलव्यञ्जकञ्चेति। तत्र व्रीड़ा लज्जा, जुगुप्सा च घृणा। अयमप्यनित्यो दोषः "सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः" इति वक्ष्यमाणात्।

(ञ) पदगतं व्रीड़ाव्यञ्जकत्वरूपमश्लीलत्वमुदाहरति दृप्तेति।

"तेनासिन् सार्वभौमोऽसि विनायासेन भूयसा॥" इति मत्पूरितपरार्द्धम्।

हे राजन्! दृप्तानां गर्वितानाम् अरीणां शत्रूणां विजये तव सुमहत् साधनं सैन्यशस्त्राद्युपायो विद्यत इति शेषः।

अत्र साध्यते सुरतमनेनेति व्युत्पत्त्या सुमहच्छब्दसहकृतेन साधनशब्देन विशालशिश्नारूपार्थस्यापि, प्रतीतेर्व्रीड़ाव्यञ्जकतया सहृदयानां सहसैव लज्जासङ्कोचसम्पादनात् राजविषयकरतिभावस्य प्रकर्षहान्या अश्लीलत्वम्।

(ट) पदगतं जुगुप्साव्यञ्जकम् अमङ्गलव्यञ्जकञ्चाश्लीलत्वमेकोदाहरणेनैवाह प्रससारेति।

"सरःप्रान्ते अरात्तोऽहं त्वां यदालिङ्गितुं गतः।" इति मत्पूरितपूर्वार्द्धम्।

हे तन्वि! कृशाङ्गि! तदा ते तव विनाशे अदर्शने लोकावलोकनभयात् पलायनसमये इत्यर्थः वायुः शनैर्मन्दं प्रससार वहति स्म।

अत्र प्रथमपादे सृधातोः कर्त्तृतया अन्वितस्य वायुशब्दस्य पायु-वायुप्रत्यायकतया घृणाव्यञ्जकत्वाच्-

---

(१) त्रिधा इति पुस्तकान्तरे पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र साधन-वायु-विनाशशब्दा अश्लीलाः (ठ)।

"शूरा अमरतां यान्ति पशुभूता रणाध्वरे।" (ड)

अत्र पशुपदं कातर्यमभिव्यनक्तीत्यनुचितार्थत्वम् (ढ)।

अप्रयुक्तत्वं तथा प्रसिद्धावपि कविभिरनादृतत्वम् (ण)। यथा—

---

श्रोतुर्वैमुख्यापादनेन रसप्रकर्षहानेरश्लीलत्वम्। द्वितीये पादे तु विनाशशब्दस्य प्रसिद्धत्वान्मरणरूपामङ्गलार्थबोधकतया श्रोतुरुद्वेगजननादुन्मनस्कताजननेन रसप्रकर्षनाशादश्लीलत्वम्।

(ठ) नन्तूक्तोदाहरणेषु के नाम शब्दा दोषं प्रत्याययन्तीत्याह अत्रेति। अत्रेदमवधेयम्—स्थलविशेषे महदादिशब्दान्तरसहकृत एव साधनशब्दोऽश्लीलतामावहति। अन्यथा "अनुमितेः साधनं धूमः" इत्यादावपि अश्लीलतादोषप्रसङ्गः। वायु-वात-शब्दौ च वधातोः कर्त्तृवाचकाविव सन्तौ सर्वत्रैवाश्लीलतादोषं जनयतः; "वायुः सरति" "वातः सरति" इत्यादौ पायुवायुप्रतीत्या घृणाप्रतीतेः, "समीरणः सरति" "वायुर्वाति" इत्यादौ च तदप्रतीतेः। अतएव मेघदूते—

"तच्चेद्वायौ सरति सरलस्कन्धसंघट्टजन्मा"

इत्यत्रापि घृणाव्यञ्जकाश्लीलतादोष एव। येषां पुनरर्थान्तरेष्वत्यन्तप्रसिद्धिः, तेषां शब्दानामभिधाने कुत्रापि नाश्लीलतादोषः। यथा—भगवान्, भगवती, सुभगा, शिवलिङ्गम्, अमरकोषः, ब्रह्माण्डम् इत्यादौ। विनाशशब्दस्तु शब्दान्तरासहकृत एवामङ्गलं व्यनक्तीत्यदर्शनार्थे तत्प्रयोगमात्र एवाश्लीलतादोष इति।

(ड) पदगतामनुचितार्थतामुदाहरति शूरा इति। तल्लक्षणन्तु अतद्धिंसद्धर्मबोधकत्वमिति। एवञ्च विरुद्धमतिकारितादोषे नातिव्याप्तिरपीति ध्येयम्। अयन्तु नित्य एव दोषः, प्रतिप्रसवाभावेन सर्वदैव हेयत्वात्।

"खण्डेऽमरभूतास्तु पशुतां यन्ति दुर्बलाः॥" इति मत्पूरितपरार्द्धम्।

शूरा वीराः रणाध्वरे युद्धयज्ञे पशुभूताश्छागादिपशव इव छिन्नकण्ठाः सन्तः अमरतां देवत्वं यान्ति प्राप्नुवन्ति स्वर्गं गच्छन्तीत्यर्थः।

(ढ) लक्ष्ये उक्तविधाभिप्रेतलक्षणं सङ्गमयितुमाह अत्रेति। अकातरेषु शूरेषु कातर्याभिव्यञ्जनाच्छ्रोतुर्वैमनस्यजनकतया रसप्रकर्षनाशादिति भावः। एवम्—

"प्रज्वलज्जलधारावन्निपतन्ति शरास्तव।"

इत्यादौ अप्रज्वलन्त्यां जलधारायां प्रज्वलनबोधकत्वादनुचितार्थत्वम्।

"दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम्।

क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसो सतीव॥"

इत्यादौ असमर्थनीये उत्प्रेक्षितार्थे समर्थनीयत्वबोधकत्वादनुचितार्थत्वम् अनयोरनुचितार्थत्वन्तु ग्रन्थकृतैव वक्ष्यते।

(ण) अप्रयुक्ततां लक्षयति, अप्रयुक्तत्वमिति। तथा प्रसिद्धावपि कोषादिषु तेन प्रकारेण प्रसिद्धिसत्त्वेऽपि। अनादृतत्वमनादरेण स्वस्ववाक्ये अपरिगृहीतत्वम्। अयञ्चानित्यो दोषः, "ख्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते।" इति वक्ष्यमाणात्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"भाति पद्मः सरोवरे॥" (त)

अत्र पद्मशब्दः पुंलिङ्गः (थ)।

ग्राम्यत्वं यथा—"कटिस्ते हरते मनः॥" (द)

अत्र कटिशब्दो ग्राम्यः (ध)।

अप्रतीतत्वमेकदेशमात्रप्रसिद्धत्वम् (न)। यथा—

"योगेन दलिताशयः।" (प)

अत्र योगशास्त्र एव वासनार्थं आशयशब्दः (फ)

---

(त) पदगतामप्रयुक्ततामुदाहरति भातीति।

"दलमूलसुरक्तोष्ठो भमद्भ्रमरलोचनः।

नवीनमधुनः पूर्णो भाति पद्मः सरोवरे॥" इति मत्पूरितत्रिपादः श्लोकः।

(थ) लक्ष्ये लक्षणं योजयितुमाह अत्रेति। पुंलिङ्गः पद्मशब्दोऽप्रयुक्ततादोषमावहतीति वाक्यशेषः। "वा पुंसि पद्मम्" इत्यमरकोषादौ पद्मे पुंलिङ्गस्य प्रसिद्धिसत्त्वेऽपि कविभिरप्रयुक्तत्वे नानादृतत्वात् तत्प्रयोगस्य प्रयोजनानुसन्धानव्यग्रतया सभ्यानां रसस्य विलम्बेन प्रतीतेः प्रकर्षहानेरिति भावः।

(द) ग्राम्यतादोषमाह ग्राम्यत्वमिति। तल्लक्षणन्तु अशिक्षितसाधारणप्रयोज्यत्वम्। इह हि पदं त्रिविधम्—नागरमुपनागरं ग्राम्यञ्चेति। तत्र अतिशिक्षितजनप्रयोज्यं नागरम्, अर्द्धशिक्षितजनप्रयोज्यमुपनागरम्, अशिक्षितजनप्रयोज्यञ्च ग्राम्यम्। तत्र नागरोपनागरपदप्रयोगे शृङ्गारादीनां गूढ़ताख्यितेश्चमत्कारिताख्यितिः, ग्राम्यपदप्रयोगे तु तेषां गूढ़ताया अख्यितेश्चमत्कारिताया अप्यख्यितिरिति रसप्रकर्षहानेर्ग्राम्यताया दोषत्वम्। अतएवायमनित्यो दोषः, अधमप्रयोगे ग्राम्यताया एव योग्यत्वात् "ग्राम्यत्वमधमोक्तिषु" इति वक्ष्यमाणात्।

"राकाविभावरीकान्त-संक्रान्तद्युति ते मुखम्।

तपनीयशिलाशोभा कटिस्ते हरते मनः॥" इति काव्यप्रकाशे श्लोकसमुदायः।

(ध) लक्ष्ये उक्तविधमभिप्रेतलक्षणं सङ्गमयितुमाह अत्रेति। ग्राम्यः कटिशब्दो ग्राम्यतादोषं घटयतीति वाक्यशेषः।

(न) अप्रतीततादोषं लक्षयति अप्रतीतत्वमिति। एकदेशमात्रे प्रसिद्धत्वं न पुनः सर्वत्रेत्यर्थः; एषोऽप्यनित्यो दोषः। "गुणः स्यादप्रतीतत्वं ज्ञत्वश्चेद्वक्तृवाच्ययोः।" इति वक्ष्यमाणात्।

(प) पदगतामप्रतीततामुदाहरति योगेनेति।

"तीर्थेन परिधौताघो योगेन दलिताशयः।

तपसा क्षपितक्लेशो मुक्त्यासन्नो महाशयः॥" इति मत्पूरितत्रिपादः श्लोकः।

योगेन चित्तवृत्तिनिरोधेन दलितो नाशितः आशयो मिथ्याज्ञानजन्यः संस्कारविशेषो येन सः।

(फ) लक्ष्ये लक्षणं सङ्गमयति अत्रेति। योगशास्त्र एव पातञ्जलदर्शनादावेव वासनार्थं आशयशब्दो विद्यत इति शेषः। तथा च पातञ्जलसूत्रम्—"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः।"

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु॥" (ब)

अत्र "वन्द्याम्" इति किं वन्दीभूतायाम् उत वन्दनीयामिति (१) सन्देहः (भ)।

नेयार्थत्वं रूढ़िप्रयोजनाभावादशक्तिकृतं लक्ष्यार्थप्रकाशनम् (म)।

यथा—

"कमले चरणाघातं मुखं सुमुखि! तेऽकरोत्॥" (य)

अत्र चरणाघातेन निर्ज्जितत्वं लक्ष्यम् (र)।

---

अत्रायमभिप्रायः—योगशास्त्रानभिज्ञानां योगेनेत्यादौ आशयशब्दस्य वासनार्थानवबोधात् रसस्यैवाप्रतीतिरिति। अतएवास्य अप्रतीतत्वमिति संज्ञा।

(ब) पदगतां सन्दिग्धतामुदाहरति आशीरिति। तल्लक्षणन्तु वक्तृतात्पर्य्यगतसन्देहविषयत्वम्। अयञ्चानित्यो दोषः, "सन्दिग्धत्वं तथा व्याजस्तुतिपर्य्यवसायि चेत्" इति वक्ष्यमाणेन प्रतिप्रसवात्।

"आलिङ्गितस्तत्र भवान् सम्पराये जयश्रिया।" इति काव्यप्रकाशे पूर्वार्द्धम्।

आशीःपरम्पराम् आशीर्वादसमूहम्। कर्णे कृत्वा आकर्ण्य।

(भ) अत्रेति वन्दीभूतायां व्यक्तौ युद्धे विजित्यावरुद्धीकृते जने। वन्दनीयां चारुत्वेन प्रशंसनीयाम्। सन्देहः सन्दिग्धतादोषमावहतीति शेषः। तथा च प्रकरणादिनियमाभावात् वन्दीजनस्य वक्तृत्वे कृपाया अधिकरणे सप्तम्येकवचनान्तस्य वन्दीशब्दस्य वन्द्यामिति रूपं स्यात्, किञ्चित्प्रार्थिनो जनस्य वक्तृत्वे तु आशीःपरम्परामित्यस्य विशेषणत्वेन ण्यत्प्रत्ययान्तवन्दधातुनिष्पन्नस्य वन्द्याशब्दस्य द्वितीयैकवचने वन्द्यामिति रूपं स्यात्। इत्थञ्च सन्देहेन श्रोतुरेकतरनिश्चयाकुलतया राजविषयकरतिभावस्य विलम्बेन प्रतीतेर्दोषत्वम्।

(म) नेयार्थत्वं लक्षयति नेयार्थत्वमिति। रूढ़िप्रयोजनाभावात् निर्द्दोषलक्षणाया हेतुभूतयो रूढिप्रयोजनयोरसत्त्वाद्धेतोः अशक्तिकृतं कवेश्छन्दःपूरणाद्यसामर्थ्यप्रयुक्तम्। अयं खलु नित्यो दोषः, प्रतिप्रसवाभावेन सर्वदैव हेयत्वात्। नेयः कविना बलात् प्रापणीयः अर्थस्तादृशलक्ष्यार्थो यस्य तस्य भावो नेयार्थत्वम्।

(य) पदगतं नेयार्थत्वमुदाहरति कमल इति।

"रजन्यां मुद्रितावस्थे सदा प्रस्फुटसुन्दरम्।" इति मत्पूरितपूर्वार्द्धम्।

हे सुमुखि! ते तव मुखं कर्त्तृ कमले पद्मे चरणाघातं पदप्रहारमकरोत्।

(र) अत्रेति। निर्ज्जितत्वं मुखकर्त्तृकं पद्मस्य विजितत्वम्, लक्ष्यं लक्ष्यार्थो नेयार्थत्वदोषमावहतीति शेषः। तथा चात्र मुखस्य चरणाभावात्तदाघातासम्भवेन मुख्यार्थानवबोधः, रूढ़िप्रयोजनयोरभावेन च लक्षणाया उत्थानासम्भवाल्लक्ष्यार्थस्याप्रतीतिरिति रसप्रतीतेरेवाभावाद्दोष इति भावः

अथ निर्ज्जितत्वातिशय एव प्रयोजनमस्तीति चेत्, तर्हीदमुदाहरणम्—

"तपर्त्तुपूर्त्तावपि मेदसां भरा विभावरीभिर्बिभराम्बभूविरे।"

---

(१) वन्दनीयामिति पाठान्तरम्।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निहतार्थत्वम् उभयार्थस्य शब्दस्याप्रसिद्धेऽर्थे प्रयोगः (ल)। यथा—
"यमुनाशम्बरमम्बरं व्यतानीत्।" (व)
शम्बरशब्दो दैत्ये प्रसिद्धः, इह तु जले निहतार्थः (श)।
"गीतेषु कर्णमादत्ते।" (ष)
अत्र आङ्पूर्वो दाञ्धातुर्दानार्थे अवाचकः (स)। यथा वा—
"दिनं मे त्वयि सम्प्राप्ते ध्वान्तच्छन्नापि यामिनी॥" (ह)

---

अत्र हि मेदसां भरा इत्यनेन अतिप्रहत्त्वं लक्ष्यते। न चात्रापि हृद्यत्तातिशय एव प्रयोजनमिति वाच्यं मेदसां भरा इत्यत्र तदप्रतीतेः। वस्तुतस्तु—

"स्वसङ्केतप्रक्ऌप्तार्थं नेयार्थमिति कथ्यते।"

इति सरस्वतीकण्ठाभरणोक्तमेव युक्तिसहम्, नेयार्थं इति शब्देनापि तथैव प्रतीतेः।

(ल) निहतार्थतां लक्षयति निहतार्थत्वमिति। उभयार्थस्य यत्किञ्चिदर्थद्वयवाचकस्य। तथा च निहतः प्रसिद्धेनार्थेन तिरोहितः अर्थः अप्रसिद्धोऽर्थो यस्य तस्य भावो निहतार्थत्वम्। अयन्त्वनित्यो दोषः, 'स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते।" इति वक्ष्यमाणेन प्रतिप्रसवात्।

(व) पदगतां निहतार्थतामुदाहरति यमुनेति।

"नवनीरदकान्तिनाम्बुकेलि-प्रहतानां व्रजसुन्दरीकुचानाम्।
मदपुञ्जभरेण मोदमानं यमुनाशम्बरमम्बरं व्यतानीत्॥" इति श्लोकसमुदायः।

यमुनाशम्बरं यमुनाजलम् अम्बरं व्यतानीत् आकाशं व्याप्नवत्।

(श) शम्बरेति। दैत्ये मदनेन व्यापादिते दैत्यविशेषे। जले जलविषये निहतार्थः प्रसिद्धेन दैत्यार्थेन तिरोहितार्थः। अतएव निहतार्थतां दोषमावहतीत्यर्थः। अत्रायमाशयः—प्रसिद्धेन दैत्यार्थेन अप्रसिद्धस्य जलार्थस्य तिरोधानादप्रतीत्या रसस्याप्रतीतेर्दोष इति।

(ष) पदगतमवाचकत्वमुदाहरति गीतेष्विति। तल्लक्षणन्तु सर्वथैव विवक्षितार्थानवबोधकत्वम्। नेयार्थत्वे यथाकथञ्चिल्लक्षणया विवक्षितार्थबोधनात् निहतार्थत्वे च अप्रसिद्धस्यापि विवक्षितार्थस्य कदाचिद्बोधनयोग्यत्वान्नातिव्याप्तिः। अतएवायं नित्यदोषः, प्रतिप्रसवाभावेन सर्वदैव हेयत्वात्।

"दूरादुत्तरतलीरात् समायातस्वरेष्वयम्।
गीतेषु कर्णमादत्ते प्रागुत्कर्णस्तुरङ्गमः॥ इति मत्पूरितत्रिपादः श्लोकः।

(स) अत्रेति। दानार्थे अर्पणार्थविषये अवाचको ग्रहणार्थस्यैव बोधनात् वाचकताशक्तिहीनः अभिधाशक्तिहीन इति यावत्। अतएव 'आदत्ते' इति पदमवाचकत्वदोषमावहति विवक्षितार्थाबोधनेन रसादिप्रतीतेरेवाभावादिति भावः।

(ह) ननूपसर्गाणां निपातत्वेनानेकार्थत्वात् "पद्ममारचयति" इत्यादिवदत्रापि आङुपसर्गस्य सम्यगर्थो भविष्यतीत्याह यथा वेति।

"प्रायेश! त्वदसङ्गमे मध्याह्नेऽपि महानिशा। दिनं... इति मत्पूरितपूर्वार्धम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र दिनमिति प्रकाशमयार्थे अवाचकम् (च)।

क्लिष्टत्वमर्थप्रतीतेर्व्यवहितत्वम् (क)। यथा—

"क्षीरोदजावसतिजन्मभुवः प्रसन्नाः।" (ख)

अत्र क्षीरोदजा लक्ष्मीस्तस्या वसतिः पद्मं तस्य जन्मभुवो जलानि इत्यर्थप्रतीतौ व्यवधानम् (१) (ग)।

"भूतयेऽस्तु भवानीशः।" (घ)

अत्र भवानीशशब्दो भवान्याः पत्यन्तरप्रतीतिकारित्वाद्विरुद्धमतिकृत् (ङ)।

---

(च) अत्रेति। अवाचकमिति। दिनशब्दस्य सूर्यकिरणावच्छिन्नकालवाचित्वादिति भावः। काव्यप्रकाशकारोऽपि "हा धिक् सा किल तामसी" इत्यादिकमुदाहृत्य "दिनमिति प्रकाशमयमित्यर्थे अवाचकम्" इत्याह स्म।

(क) क्लिष्टत्वदोषं लक्षयति क्लिष्टत्वमिति। अर्थप्रतीतेर्व्यवहितत्वम् अनेकपदप्रतीतिव्यवधानाद्विलम्बेन विवक्षितार्थस्य प्रतीतत्वम्। अतो न निहतार्थत्वादिष्वतिव्याप्तिः। तेषु हि अप्रसिद्धत्वादिभ्य एव विलम्बेनार्थप्रतीतिः, न पुनरनेकपदप्रतीतिव्यवधानात्। अयन्तु नित्यो दोषः, अनुकरणं विना समाधानानिर्देशेन सर्वदैव हेयत्वात्।

(ख) पदगतं क्लिष्टत्वदोषमुदाहरति क्षीरोदजेति।

"ताः क्वाप्यहो घनघटा विलयं प्रयाता, ज्योत्स्नाश्चिराय मुदिताश्च विलासशीलाः।
क्षीरोदजा-वसति जन्मभुवः प्रसन्ना, अद्यानुरञ्जयति भास्वति दक्षिणाशाम्॥"

इति ग्रन्थान्तरे श्लोकसमुदायः।

(ग) अर्थप्रदर्शनपूर्वकं लक्ष्ये लक्षणं सङ्गमयति अत्रेति। अर्थप्रतीतेर्व्यवधानादेव विलम्बेन रसादेः प्रतीत्या तत्प्रकर्षहानेर्दोष इति भावः।

(घ) पदगतं विरुद्धमतिकारितादोषमुदाहरति भूतय इति। तल्लक्षणन्तु असम्भावितार्थप्रत्यायकत्वम्। अतएवायमपि नित्यो दोषः समाधानाभावात्।

"प्रभूतभूतिभूषाढ्यो भूतेशो भूतभावनः।
भूतयेऽस्तु भवानीशो भवतां भोगिभूषणः॥" इति मत्पूरितत्रिपादं पद्यम्।

(ङ) अत्रेति। अत्रायमाशयः—भवस्य पत्न्यर्थे "भव-शर्व-रुद्र-मृडाचार्याणामानक्" इत्यनेन आनङ्ङी-प्रत्ययश्चेति भवानी, तस्या ईशः पतिरिति भवानीशशब्दो देवदत्तस्य पत्न्याः पतिरित्यादिवत् भवान्या अपि असम्भावितं पत्यन्तरं प्रत्याययतीति विरुद्धमतिकृत्, तेन च श्रोतुर्वैमनस्येन रसप्रकर्षहानेर्दोष इति।

---

(१) इत्यर्थप्रतीतौ व्यवधानमिति पाठः क्वचिद् दृश्यते।

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

विधेयस्यांशस्य विमर्शाभावेन गुणीभूतत्वम् अविमृष्टविधेयांशत्वम् (१) (च)। यथा—

"स्वर्गग्रामटिका-विलुण्ठन-वृथोच्छूनैः किमेभिर्भुजैः॥" (छ)

अत्र वृथात्वं विधेयम्, तच्च समासे गुणीभावादनुवाद्यत्वप्रतीतिकृत् (ज)।

यथा वा—"रक्षांस्यपि पुरःस्थातुमलं रामानुजस्य मे॥" (झ)

अत्र रामस्येति वाच्यम् (ञ)।

यथा वा—"आसमुद्रक्षितीशानाम्।" (ट)

अत्रासमुद्रमिति वाच्यम् [ठ]।

---

(च) अविमृष्टविधेयांशभावं लक्षयति विधेयस्येति। विधेयस्यांशस्य प्रधानस्य भागस्य, विमर्शाभावेन, प्रधानतया निर्देशाभावेन, गुणीभूतत्वम् अप्रधानीभूतत्वम्। अयमेव विधेयाविमर्श इत्याख्यायते। प्रधानस्याप्राधान्येन निर्देशो विधेयाविमर्श इत्यर्थः। एष च नित्यो दोषः प्रतिप्रसवाभावेन सर्वदैव हेयत्वात्। अस्य तु समासेन प्रधानस्याप्रधानतया निर्देशे पदगतत्वम्, उद्देश्यविधेययोः पौर्वापर्य्यविपर्य्यये तु वाक्यगतत्वमित्यूह्यम्।

(छ) तत्र पदगतं विधेयाविमर्शमुदाहरति स्वर्गेति। समस्तपद्यन्तु प्रागेव (७म पृष्ठे) प्रदर्शितं व्याख्यातञ्च।

(ज) उक्तोदाहरणे दोषं समर्थयति अत्रेति। विधेयम् "उच्छूनत्वं वृथा" इत्यभिप्रायेण उच्छूनत्वमुद्दिश्य वृथात्वमेव विधातव्यम्। गुणीभावादुच्छूनत्वांशे विशेषणीभूतत्वात्, अनुवाद्यत्वप्रतीतिकृत् तस्योद्देश्यत्वबोधजनकम्। तथा च तात्पर्य्यविषयीभूतान्वयानुपपत्त्या रसप्रकर्षहानेर्दोष इति भावः।

(झ) विधेयाविमर्शस्यैव प्रकारान्तरमुदाहरति यथा वेति।

"विशालाकृतिघोराणि भीषणास्त्रधराणि च।" इति मत्पूरितपूर्वार्द्धम्।

रामानुजस्य मेऽपि पुरः रक्षांसि स्थातुमलं समर्थानि? नैवेत्यर्थः।

(ञ) अत्रेति। वाच्यं वक्तुमुचितम्। अत्रेदमवधेयम्—अनेकदुर्जयराक्षसवधेन राम एव राक्षसहन्तृतया अतिप्रसिद्धः, तेन च "रामस्य योऽनुजस्तस्यापि मम पुरतो राक्षसाः स्थातुमलं भवेयुः?" इति हि सदर्पं वक्तुर्लक्ष्मणस्याभिप्रायः, स च 'रामानुजस्य' इति समासकरणान्नोपपद्यते, उपपद्यते तु 'रामस्य' इति सविभक्तिपदनिर्देशात् तथैव शब्दस्वभावात्।

(ट) अस्यैवापरं प्रकारमाह आसमुद्रेति।

"सोऽहमाजन्मशुद्धानाम् आफलोदयकर्म्मणाम्।
आसमुद्रक्षितीशानाम् आनाकरथवर्त्मनाम्॥" इति रघुवंशे श्लोकसमुदायः।

---

(१) अविमृष्टविधेयांशत्वम् इति मात: पाठः क्वचित्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा वा—

"यत्र ते पतति सुभ्रु! कटाक्षः, षष्ठबाण इव पञ्चशरस्य।" [ड]

अत्र षष्ठ एव इत्युत्प्रेक्ष्यम् [ढ]।

यथा वा—"अमुक्ता भवता नाथ! मुहूर्त्तमपि सा पुरा।" [ण]

अत्र अमुक्तेत्यत्र नञः प्रसज्यप्रतिषेधत्वमिति विधेयत्वमेवोचितम् [त]। यदाहुः—

"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्॥" [थ]

---

(ठ) अत्रेति। आसमुद्रमिति। आसमस्तमेव पदं वाच्यं वक्तव्यमित्यर्थः। अत्रायमाशयः—सूर्य्यवंशीयानामाधिपत्यं समुद्रेष्वप्यासीदिति हि वक्तुरभिप्रायः, स तु "आसमुद्रक्षितीशानाम्" इत्युक्तौ नोपपद्यते, आसमुद्रं या क्षितिस्तस्या ईशा इति प्रतीत्या क्षितिमात्रस्यैवेशत्वप्रतीतेः। "आसमुद्रं क्षितीशानाम्" इत्युक्तौ तु समुद्रेष्वपि तेषां राजत्वं स्फुटमेव प्रतीयत इति। तेन राजत्वान्वये प्रधानान्तरीभूतानां समुद्राणां समासे गुणीभावात् विधेयाविमर्श इति।

(ड) प्रकारान्तरेण विधेयाविमर्शमेवोदाहरति यथा वेति।

"गाढविद्धहृदयो विवशः सन् त्वद्वशत्वमुपयाति स एव॥" इति मत्पूरितपरार्द्धम्।

हे सुभ्रु! पञ्चशरस्य मदनस्य षष्ठबाण इव ते तव कटाक्षो यत्र पतति।

(ढ) अत्रापि दोषं समर्थयितुमाह अत्रेति। इत्युत्प्रेक्ष्य इत्थमुत्प्रेक्षणं कर्त्तव्यम्। अत्रायमभिप्रायः—न खलु मदनस्य शरमात्रस्यैवासम्भवः, अपि तु पञ्चशरत्वात् षष्ठस्यैव शरस्यासम्भवः; तेन तदीयशरगतषष्ठत्वमेवोत्प्रेक्षणीयम्; तच्च 'षष्ठबाण इव' इत्युक्तौ नोपपद्यते, षष्ठत्वस्य समासे गुणीभावेन इवार्थान्वयायोग्यत्वात् तत्पुरुषसमासस्योत्तरपदप्राधान्येन षष्ठत्वविशिष्टबाणत्वस्यैव तदन्वयसम्भवात्, स च वक्तुर्नाभिमत इति।

नन्वेतेषूदाहरणेषु वक्तुरभिमतसम्बन्धानुपपत्त्या अभवन्मतसम्बन्धतादोष एवेति चेन्न प्रधानस्याप्रधानतया निर्द्देशेनाभिमतसम्बन्धानुपपत्तौ विधेयाविमर्शः, हेत्वन्तरेणाभिमतसम्बन्धानुपपत्तौ तु अभवन्मतसम्बन्धता इति नियमस्य सामान्यविशेषन्यायेन सुवचत्वात्। प्रकारान्तरन्तु वक्ष्यते।

(ण) अभवन्मतसम्बन्धतादोषस्याविषयीभूतं विधेयाविमर्शस्य शुद्धोदाहरणं दर्शयितुमाह यथा वेति।

"चिराय प्रवसन्नस्मिन् यां क्षणं न स्मरस्यपि।" इति मत्पूरितपूर्वार्द्धम्।

(त) उदाहृते विधेयाविमर्शमुपपादयितुमुपक्रमते अत्रेति। प्रसज्यप्रतिषेधत्वमिति। क्रियान्वयित्वादिति भावः। विधेयत्वमेवोचितमिति। नञर्थे प्रतीतिपर्य्यवसानादित्याशयः।

(थ) अप्राधान्यमिति। यत्र स्थले विधेर्नञ्भिन्नपदार्थस्य अप्राधान्यं नञर्थापेक्षया अप्रधानताप्रतीतिः, प्रतिषेधे नञर्थे च प्रधानता अपरपदार्थापेक्षया प्रधानताप्रतीतिः, तत्र असौ नञ् प्रसज्यप्रतिषेधः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः ।" (द)

उक्तोदाहरणे तु तत्पुरुषसमासे गुणीभावे नञः पर्य्युदासतया निषेधस्य विधेयतयाऽनवगमः [१] [ध]

यदाहुः—"प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥" [न]

तेन—"जुगोपात्मानमत्रस्तो भेजे धर्म्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥" [प]

अत्यन्ताभावबोधक इत्यर्थः । फलितार्थमाह क्रिययेति । यत्र स्थले क्रियया क्रियापदेन सह नञ् साक्षादन्वेतीति शेषः, तत्र असौ नञ् प्रसज्यप्रतिषेध इत्यर्थः ।

(द) प्रसज्यप्रतिषेधार्थकनञ उदाहरणमाह यथेति । विक्रमोर्वश्याम्—

"सुरधनुरिदं दूराकृष्टम्, न तस्य शरासनम् ।
अयमपि पटुर्धारासारः, न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्, प्रिया न ममोर्वशी ॥" इति शेषपादत्रयम् ।

तथा च अयमाकाशे दृश्यमानो नवजलधर एव सन्नद्धो वायुना स्तूपीकृतः, किन्तु दृप्तनिशाचरः कश्चिद्दर्पितराक्षसो न भवति । अत्र नञर्थे निशाचराभावे प्रधानताप्रतीतेः भवतीत्यध्याहर्त्तव्यया क्रियया च सह नञोऽन्वयात् प्रसज्यप्रतिषेधतेति भावः ।

(ध) अर्थं तावता किमित्याह उक्तोदाहरण इति । उक्तोदाहरणे अमुक्तत्यादौ । तत्पुरुषसमासे नञ्तत्पुरुषसमासे । पर्य्युदासतया गुणीभावेन पर्य्युदासवत् प्रतीयमानतया, निषेधस्य क्रियया सहान्वयात् वस्तुतः प्रसज्यप्रतिषेधस्य, विधेयतयाऽनवगमः प्राधान्येनाप्रतीतिः । अतएव प्रधानस्याप्राधान्येन निर्द्देशाद्विधेयाविमर्श इति भावः ।

(न) पर्य्युदासस्यैवाप्रधानत्वे नानुवाद्यता सम्भवतीत्याह यदाहुरिति । प्रधानत्वमिति । यत्र स्थले विधेर्नञ्व्यतिरिक्तपदार्थस्य प्रधानत्वं प्रधानतया प्रतीतिः, प्रतिषेधे नञर्थे च अप्रधानता अपरपदार्थापेक्षया अप्रधानताप्रतीतिः ; तत्र स नञ् पर्य्युदासः अन्योन्याभावबोधक इत्यर्थः, विज्ञेयः शब्दस्वभावादिति भावः । अत्रापि फलितार्थमाह यत्रेति । यत्र स्थले उत्तरपदेन क्रियाभिन्नस्वसमभिव्याहृतपरवर्त्तिपदार्थेन सह नञ् अन्वेतीति शेषः, तत्रैव पर्य्युदास इत्यर्थः । क्रियेतरपदार्थान्वयी नञ् पर्य्युदास इति तु तत्त्वम् । "रात्रौ श्राद्धं न कुर्वीत" इत्यत्र तु नञर्थस्य रात्रावित्यनेनैवान्वय इति लौगाक्षिशूलपाणि-रघुनन्दनादयः । अस्य विस्तरस्तु नञ्वादादावनुसन्धेयः ।

(प) जुगोपेति । रघुवंशप्रथमसर्गे दिलीपवर्णनमिदम् । स दिलीपः अत्रस्तः अभीतः सन्नेव आत्मानं जुगोप रक्षितवान्, न पुनरपर इव भयावस्थायामेव, "आत्मानं सततं गोपायीत" इति श्रुतेरित्यभिप्रायः, अनातुरः अनार्त्तः सन्नेव धर्म्मं भेजे कर्त्तव्यबुद्ध्या सिषेवे, न पुनरन्य इव रोगाद्युपशमेच्छयेति भावः ।

(१) विधेयताऽनवगम इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र अत्रस्ततायनूद्य आत्मगोपनाद्येव विधेयमिति नञः पर्य्युदासतया गुणभावो युक्तः [फ] ।

ननु "अश्राद्धभोजी ब्राह्मणः" "असूर्य्यम्पश्या राजदाराः" इत्यादिवत् "अमुक्ता" इत्यत्रापि प्रसज्यप्रतिषेधो भवतीति चेत् [ब] न, अत्रापि यदि भोजनादिरूपक्रियांशेन नञः सम्बन्धः स्यात्, तदैव तत्र प्रसज्यप्रतिषेधत्वं वक्तुं शक्यम् । न च तथा, विशेष्यतया प्रधानेन तद्भोज्याद्यर्थेन कर्त्त्रंशेनैव नञः सम्बन्धात् (भ) ।

यदाहुः—"श्राद्धभोजनशीलो हि यतः कर्त्ता प्रतीयते ।
न तद्भोजनमात्रन्तु कर्त्तरीनेर्विधानतः ॥" इति (म) ।

---

अग्टध्नुः अलोभी सन्नेव अर्थान् कररूपधनानि आददे प्रजाभ्यो गृहीतवान्, न पुनरितर इव लुब्धभावेनेत्याशयः । असक्तः अतत्परः सन्नेव सुखम् अन्वभूत् अनुभूतवान्, न पुनरपर इवासक्तचेता एवेत्यभिप्रायः । अत्र नञर्थस्य त्रस्तादिक्रियेतरपदार्थैरन्वयात् पर्य्युदासत्वम् ।

(फ) अत्रेति । अनूद्य कविना उद्देश्यतावच्छेदकीकृत्य आत्मगोपनाद्येव विधेयं विहितमिति शेषः । इति हेतोः । गुणभावो नञ्तत्पुरुषसमासेनाप्रधानीभावः । अतएवात्रापि न विधेयाविमर्शो शङ्केतिं भावः ।

(ब) समासेन गुणीभूतस्यापि नञर्थस्य प्रसज्यप्रतिषेधत्वमाशङ्कते नन्विति । भवतीति । अत्राय माशयः—श्राद्धं श्राद्धीयान्नं न भुङ्क्ते इत्यश्राद्धभोजी, सूर्य्यं न पश्यन्तीत्यसूर्य्यम्पश्याः, अनयोर्यथा समासेन गुणीभूतस्यापि नञः क्रियया सहान्वयात् प्रसज्यप्रतिषेधत्वम्, तथा अमुक्तेत्यत्रापि समासेन गुणीभूतस्यापि नञः क्रियया सहान्वयात् प्रसज्यप्रतिषेधत्वमेवास्तामिति कुतो विधेयाविमर्शप्रसङ्ग इति ।

(भ) समाधत्ते नेति । अत्रापि, न केवलम् 'अमुक्ता' इत्यत्र "अश्राद्धभोजी' "असूर्य्यम्पश्याः" अनयोरपि । भोजनादीत्यादिपदेन दर्शनग्रहणम् । अत्र तयोः "अश्राद्धभोजी" "असूर्य्यम्पश्याः" इत्यनयोः । तथा—भोजनादिरूपक्रियांशेन नञः सम्बन्धः, न च नैवेत्यर्थः । अत्रायं सरलार्थः—अश्राद्धभोजीत्यादौ अस्त्यंशद्वयम्—विशेषणत्वादप्रधानभूता भोजनादिक्रिया, विशेष्यत्वात् प्रधानभूतस्तत्कर्त्ता च ; तत्र नञोऽन्वयसन्देहे "अव्यक्तं प्रधानगामि" इति न्यायात् प्रधानभूतेन कर्त्रा सहैव नञोऽन्वय इति क्रियेतरपदार्थान्वयित्वात् पर्य्युदासत्वमेवेति । कातन्त्रवृत्तिकृतो दुर्गसिंहस्य मते तु "असूर्य्यम्पश्या राजदाराः" इत्यत्र नञः प्रसज्यप्रतिषेधत्वमेव । तथा चोक्तम्—"दृशिना सह सम्बद्धस्य नञः सूर्य्येण सह समासो गमकत्वात्" इति ।

(म) अत्र वैयाकरणसंवादमाह यदाहुरिति । श्राद्धेति । अत्रावधारणे हिशब्दः, अन्वयश्चास्य कर्त्तेत्यनेन । तथा च कर्त्तरि इनेर्विधानतः "व्रताभीक्ष्ण्ययोश्च" इत्यनेन कर्त्तरि णिनिप्रत्ययविधानात् श्राद्धभोजनशीलः कर्त्तैव प्रतीयते "यो यत्र प्रत्ययो जातः" इत्यादिन्यायादिति भावः, तु किन्तु तद्भोजनमात्रं केवलं श्राद्धभोजनं न प्रतीयते ; अतः प्रधानतया कर्त्रैव सह नञः सम्बन्ध इति शेषः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"असुक्ता" इत्यत्र तु (१) क्रिययैव सह सम्बन्ध इति दोष एव (य)।

एते च क्लिष्टत्वादयः समासगता एव पददोषाः [र]।

वाक्ये दुःश्रवत्वं यथा—[ल]

"स्मराद्यर्न्धः कदा लप्स्ये कार्त्तार्थ्यं विरहे तव॥" [व]

"कृतप्रवृत्तिरन्यार्थे कविर्वान्तं समश्नुते।" [श]

अत्र जुगुप्साव्यञ्जकाश्लीलता [ष]।

---

(य) उपसंहरन्नाह असुक्तेति। क्रिययैव सह सम्बन्ध इति। पदान्तरान्वयासम्भवात् "सा भवत्-कर्त्तृकमोचनाभाववती" इति प्रसज्यप्रतिषेधतया प्रतीतेश्चेति भावः। दोष एव विधेयाविमर्शदोष एव। प्रधानस्य नञर्थस्य समासेनाप्रधानतया निर्देशादित्याशयः।

(र) व्यवस्थापयति एते चेति। आदिशब्देन विरुद्धमतिकारिता विधेयाविमर्शयोर्ग्रहणम्। समासगता एव समासयोग्यपदवृत्तय एव तत्तद्दोषघटने पदान्तरसापेक्षपदप्रयोज्या एव, न पुनर्निरर्थकत्वादि-वत् पदान्तरनिरपेक्षपदप्रयोज्या अपीत्यर्थः। यथाश्रुतार्थकल्पने तु "धौरीदजाया वसते जन्मभुवः प्रसन्नाः" इत्यत्र क्लिष्टत्वम् "भवान्या ईशः" इत्यत्र विरुद्धमतिकारिता च न स्यात्। न स्यादेवेति चेन्न तत्तद्दोषयथा-वस्थमेव सत्त्वात्। केवलं विधेयाविमर्श एव पदप्रयोज्यः समासगत एव सम्भवति। तत्राप्युक्तविवरणे नानुपपत्तिरिति बोध्यम्। एतेन "विना समासं तेषामसम्भवात्" इति रामचरणोक्तं हेयम्।

(ल) वाक्यस्य पदघटितत्वेन पददोषज्ञानानन्तरमेव वाक्यदोषजिज्ञासोपस्थितेः "पदे पदांशे वाक्येऽर्थे" इत्युक्तक्रममुल्लङ्घ्य प्रथमं वाक्यदोषमेवाह वाक्य इति। वाक्यघटकीभूतानेकपदप्रयोज्यत्वं वाक्यदोषत्वमिति लक्षणमत्रानुसन्धेयम्।

(व) स्मरेति। "अन्यकर्म्मश्रतापेत उपेतत्वद्गतस्मृतिः।" इति मत्पूरितपूर्वार्द्धम्।

स्मराद्यर्न्धः कामपीड़या दिग्विदिग्ज्ञानशून्यः अहं तव विरहे कदा कार्त्तार्थ्यं त्वत्सङ्गमलाभेन कृता-र्थतां लप्स्ये प्राप्स्यामि।

हन्त! कार्त्तार्थ्यशब्दोऽयं काव्यप्रकाशाद्यलङ्कारग्रन्थकृतां दुःश्रवतादोषोदाहरणवेलायामद्वितीयमेव शरणम्। अत्र "स्मराद्यर्न्धः" "कार्त्तार्थ्यम्" इति पदद्वयस्यैव परुषवर्णतया श्रुतिदुःखावहत्वाद्वाक्यगतदुःश्रवत्वम्।

(श) वाक्यगतां जुगुप्साव्यञ्जकाश्लीलतामुदाहरति कृतेति।

"संग्रहीतुं चिरेणापि सन्तमर्थमशक्नुवन्।" इति मत्पूरितपूर्वार्द्धम्।

अन्यार्थे अन्यकविसंगृहीते भावे शब्दे च कृता प्रवृत्तिर्ग्रहणेच्छा येन स तादृशः कविः वान्तं समश्नुते अन्योद्गीर्णं ग्रहीतुमुद्युञ्जन् अन्योद्गीर्णग्रहणोद्योगी कुक्कुरादिरिव निन्दनीयो भवतीत्यर्थः।

(ष) अत्रेति। "वान्तं समश्नुते" इति पदद्वयस्य "अन्योद्गीर्णं श्लेष्मादिकं खादति" ईदृशार्थ-प्रत्यायकत्वादिति भावः। अत्र "समश्नुते" इति पदस्य स्वतो जुगुप्साव्यञ्जकत्वाभावेऽपि वान्तविषयकभोजन-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(१) इत्यत्र च इति क्वचित् पाठः।

"उद्यत्कमललौहित्यैर्वक्राभिर्भूषिता तनुः ।" (छ)

अत्र कमललौहित्यं पद्मरागः, वक्राभिर्वामाभिरिति नेयार्थता (ह) ।

"धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।

रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥" (च)

---

बोधकत्वाज्जुगुप्साव्यञ्जकत्वमिति वाक्यदोषत्वमेव । अथ तर्हि "प्रससार शनैर्वायुः" इति प्राक् प्रदर्शितपदगतजुगुप्साव्यञ्जकाश्लीलतोदाहरणेऽपि "वायुः प्रससार" इति समुदितस्यैव पदद्वयस्य जुगुप्साव्यञ्जकत्वाद्वाक्यदोषत्वमेव स्यादिति चेत्—

"तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गञ्च भुञ्जते । इतरार्थग्रहे येषां कवीनां स्यात् प्रवर्त्तनम् ॥"

इति काव्यप्रकाशोदाहृतमेवावाप्युदाहरणम् । अत्र हि वान्तं परोत्सर्गञ्च इति पदद्वयस्यैव क्षतवमित्यक्तपुरीषयोः प्रत्यायकतया वाक्यगतजुगुप्साव्यञ्जकाश्लीलता ।

वाक्यगतव्रीडाव्यञ्जकाश्लीलता यथा सरस्वतीकण्ठाभरणे—

"विद्यासभ्यसती रात्राविति या भवतः प्रिया । वनितागुह्यकेशानां कथं ते पेलवं धनम् ॥"

अत्र "वनितागुह्यकेशानाम्" इत्यत्र "वनिताया गुह्ये गुप्तस्थाने ये केशास्तेषाम्" इत्यर्थस्य "पेलवं धनम्" इत्यत्र च "पेलस्य अण्डकोषस्य वन्धनम्" इत्यर्थस्य च प्रत्यायकत्वाद्वाक्यगतव्रीडाव्यञ्जकाश्लीलता ।

वाक्यगतामङ्गलव्यञ्जकाश्लीलता यथा तत्रैव—

"प्रवासयति या कान्तं वसन्ते गृहसंस्थितम् । विना शपथदानेन पिशाची सा न चाङ्गना ॥"

अत्र संस्थित-विनाशशब्दाभ्यां मरणार्थस्य, पिशाचीशब्देन च प्रेतार्थस्य सूचनादमङ्गलव्यञ्जकाश्लीलता ।

अनुचितार्थतादीनां वाक्यगतत्वे ग्रन्थकृदनुक्तान्युदाहरणानि परस्तात् प्रदर्शयिष्यन्ते ।

(छ) वाक्यगतां नेयार्थतामुदाहरति उद्यदिति ।

"नवैश्च चम्पकदलैः कुन्तलाः समलङ्कृताः ॥" इति मत्पूरितपराद्धम् ।

वक्राभिर्वामाभिः स्त्रीभिः, उद्यत्कमललौहित्यैः प्रकाशमानपद्मरागैः करणैः, तनुः शरीरं भूषिता अलङ्कृता ।

(ह) नेयार्थतां समर्थयितुमाह अत्रेति । इति कविना अभिप्रेतमतो नेयार्थतेत्यर्थः । अत्रायमाशय'—कमललौहित्यपदेन पद्मगतरक्तिमैवाभिधीयते, न पुनः पद्मरागाख्यो मणिविशेषः ; वक्राशब्देन च कुटिलैवोच्यते न तु वामा । तेन च रूढिप्रयोजनरसत्त्वेऽपि कविना कमललौहित्यपदेन पद्मरागमणिरूपार्थस्य वक्राशब्देन च वामारूपार्थस्य अशक्तिवशेन लक्ष्यतया प्रकाशनात् अनेकपदगतत्वाच्च वाक्यगता नेयार्थता ।

(च) वाक्यगतं क्लिष्टत्वमुदाहरति धम्मिल्लस्येति । कुरङ्गशावस्य हरिणशिशोः अक्षिणी इव अक्षिणी यस्यास्तस्याः, अपूर्वा चमत्कारिणी बन्धव्युत्पत्तिर्बन्धनपरिपाटी यस्य तादृशस्य धम्मिल्लस्य संयतकेशकलापस्य शोभां प्रेक्ष्य दृष्ट्वा विद्यमानस्य कस्य जनस्य मानसं चित्तं कर्तृ, निकामं पर्य्याप्तं यथा स्यात्तथा न रज्यति अनुरक्तं न भवति । अपि तु सर्वस्यैव रज्यतीत्यर्थः ।

Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धः क्लिष्टः (क)।

"न्यक्कारो ह्ययमेव मे यदरयः" (१) इति (ख)।

अत्र च अयमेव न्यक्कार इति न्यक्कारस्य विधेयत्वं विवक्षितम्। तच्च शब्दरचनावैपरीत्येन गुणीभूतम् (ग)। रचना च पदद्वयस्य विपरीतेति वाक्यदोषः (घ)।

"आनन्दयति तु नेत्रे योऽसौ सुभ्रु! समागतः॥" (ङ)

इत्यादिषु "यत्तदोर्नित्यः सम्बन्धः" इति न्यायादुपक्रान्तस्य यच्छब्दस्य निराकाङ्क्षत्वप्रतिपत्तये तच्छब्दसमानार्थतया प्रतिपाद्यमाना इदमेतददःशब्दा

---

(क) उदाहृते क्लिष्टतादोषमुपपादयितुमाह अत्रेति। सम्बन्धः अन्वयः, क्लिष्टः क्लेशसाधितः। तथा चात्र परस्परान्वयिपदानामत्यन्तदूरवर्त्तित्वात् विशेषानुसन्धानेनैव तेषां परस्परमन्वयो ज्ञायत इति तद्विलम्बाद् रसस्यापि विलम्बेनैव प्रतीतिः अकार्यहान्या क्लिष्टत्वदोषः, स चानेकपदगतत्वाद्वाक्यगत इत्याशयः।

(ख) वाक्यगतं विधेयाविमर्शमुदाहरति न्यक्कार इति।

(ग) उक्तदोषमुदाहृते प्रतिपादयितुमाह अत्र चेति। विधेयत्वं विवक्षितमिति। तस्यैव परप्रतीतिविषयत्वादिति भावः। तच्च न्यक्कारगतविधेयत्वञ्च शब्दानां न्यक्कार इत्यादीनाम्, रचनाया विन्यासस्य, वैपरीत्येन गुणीभूतम् अप्रधानीभूतम्। तथा च शाब्दबोधे प्राक् प्रतीतिविषयत्वमुद्देश्यत्वं परं प्रतीतिविषयत्वञ्च विधेयत्वम्; तेन "यः सुन्दरः स आगतः" "पर्वतो वह्निमान्" इत्येवं शब्दविन्यासेनैव व्युत्पत्त्यनुसारात् स्वाहजिकी प्रतीतिरुत्पद्यते; "स आगतो यः सुन्दरः" "वह्निमान् पर्वतः" इत्थं वैपरीत्येन शब्दविन्यासे तु उद्देश्यताविधेयतयोः प्रतीतिर्वैपरीत्यमिव जायते। अतएवोक्तं मीमांसकैः—

"अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्। नह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रतितिष्ठति॥"

ग्रन्थकारोऽप्यनुपदमेवाह—"इदमेतददःशब्दा विधेया एव भवितुं युक्ताः" इति। ततश्चात्र उद्देश्यप्रत्यायकस्य यत्पदस्य परं सन्निवेशात् विधेयप्रत्यायकस्य इदम्पदस्य च पूर्वं विन्यासात् इदम्पदप्रत्यायितन्यक्कारगतविधेयत्वस्य गुणीभूतत्वेन प्रतीयमानतया विधेयाविमर्शदोषः। केचित्तु विधेयबोधकन्यक्कारपदस्य प्राङ्निर्देशात् उद्देश्यबोधकेदम्पदस्य च परं निर्देशाद्विधेयाविमर्शं इति व्याचक्षते।

(घ) ननु तथात्वेऽपि कथं वाक्यदोषत्वमित्याह रचनेति। पदद्वयस्य इदम्पदस्य यत्पदस्य च। रचना विन्यासः। तथा चानेकपदप्रयुक्तत्वाद्वाक्यदोषत्वमिति भावः।

(ङ) प्रकारान्तरेण विधेयाविमर्शमुदाहरति आनन्दयतीति।

"कान्तिमेकान्तिकीं बिभ्रत् कुमुदिन्याः शशी यथा।" इति मत्पूरितपूर्वार्द्धम्।

(च) उदाहृते दोषं समर्थयितुमाह इत्यादिष्विति। नित्यः परस्परापेक्ष्यापेक्षित्वरूपो नियतः।

---

(१) यत् इतिमात्रः पाठः क्वचित्;

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विधेया एव भवितुं युक्ताः। अत्र तु यच्छब्दनिकटस्थतया अनुवाद्यत्व-प्रतीतिकृत् (च)।

तच्छब्दस्यापि यच्छब्दनिकटस्थितस्य प्रसिद्धपरामर्शित्वमात्रम् (छ)। यथा—

"यः स ते नयनानन्दकरः सुभ्रु! स आगतः॥" (ज)

यच्छब्दव्यवधानेन स्थितास्तु निराकाङ्क्षत्वमवगमयन्ति (झ)। यथा—

"आनन्दयति ते नेत्रे योऽधुनाऽसौ समागतः॥" (ञ)

एवमिदमादिशब्दोपादानेऽपि (ट)।

यत्र च यत्तदोरेकस्यार्थत्वं सम्भवति, तत्रैकस्योपादानेऽपि निरा-

---

उपक्रान्तस्य उद्देश्यत्वेनाभिहितस्य। निराकाङ्क्षत्वप्रतिपत्तये आकाङ्क्षापूरणायेत्यर्थः, तच्छब्दसमानार्थतया तच्छब्दवत् प्रक्रान्तपदार्थोपस्थापकतया प्रतिपाद्यमानाः प्रयुज्यमानाः। विधेया एव विधेयबोधका एव, न पुनरुद्देश्यबोधका इति एवशब्दार्थः। अत्र तु "आनन्दयति ते नेत्रे" इत्यादौ तु। अनुवाद्यत्वप्रतीतिकृत् उद्देश्यताबोधजनकः, अदःशब्द इति शेषः। तेनात्रापि "हे सुभ्रु! योऽसौ समागतः, स ते तव नेत्रे आनन्दयति" इत्यमर्थप्रत्यायकतया विधेयताबोधकतच्छब्दस्य उद्देश्यताबोधकयच्छब्दात् प्रागेवाध्याहर्त्तव्यत्वात् "न्यक्कारो ह्ययमेव मे यदरयः" इत्यादिवदेव विधेयाविमर्श इति भावः।

(छ) इदानीं विधेयाविमर्शस्य प्रसङ्गाप्रसङ्गप्रदर्शनाय शब्दविन्यासप्रकारविशेषेणैव अर्थविशेषप्रतीतिरिति प्रदर्शयितुमाह तच्छब्दस्यापीति। न केवलमुदाहृते अदःशब्दस्य, तच्छब्दस्यापीत्यर्थः। अत्र तच्छब्द एतदिदंशब्दयोरप्युपलक्षणम्। प्रसिद्धपरामर्शित्वमत्र' केवलप्रसिद्धार्थोपस्थापकत्वम्, न पुनर्यच्छब्दाकाङ्क्षा-पूरकत्वमपीत्यर्थः।

(ज) य इति। "वसन्तविलसत्कान्तिश्यसत्कुञ्चितकुन्तलः।"

इति मत्पूरितपूर्वार्द्धम्। एवं परत्रापि।

अत्र यच्छब्दनिकटस्थितस्य 'स' इत्यस्य प्रसिद्धोपस्थापकत्वम्, द्वितीयस्य तु 'स' इत्यस्य विधेयबोधकत्वम् तेनात्र उद्देश्यविधेयबोधकयोर्यच्छब्दतच्छब्दयोर्यथानियममवस्थानान्न विधेयाविमर्शः।

(झ) यच्छब्देति। स्थिता इदमेतददःशब्दा इति सम्बन्धः। निराकाङ्क्षत्वं यच्छब्दस्येत्यर्थः।

(ञ) आनन्दयतीति। अधुना यः समागतः, असौ ते नेत्रे आनन्दयतीत्यन्वयः। तेनात्र य इत्यतः असावित्यस्य अधुनापदेन व्यवधानात् असावित्यदःशब्देन य इति यच्छब्दस्य निराकाङ्क्षत्वमवगमितम्। विधेयोपस्थापकस्य असावित्यस्य परमेव पाठादत्रापि न विधेयाविमर्शः।

(ट) एवमिति। तत्र इदंशब्दोपादाने यथा—

"योऽयं ते नयनानन्दकरः स समुपागतः।"

"आनन्दयति ते नेत्रे योऽधुनाऽयमुपागतः।"

एवमेतच्छब्दोपादानेनाप्युदाहार्यम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

काङ्क्षत्वप्रतीतिरिति न क्षतिः [ठ]। तथाहि, यच्छब्दस्योत्तरवाक्यगतत्वे-नोपादाने सामर्थ्यात् पूर्ववाक्ये यच्छब्दस्यार्थत्वम् [ड]। यथा—

"आत्मा जानाति यत् पापम्—"। (ढ)

एवम्—"यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे।
भास्वन्ति रत्नानि महौषधीश्च—" (ण)।

इत्यादावपि (त)।

तच्छब्दस्य प्रक्रान्तप्रसिद्धानुभूतार्थत्वे यच्छब्दस्यार्थत्वम् (थ)। क्रमेण यथा—　"स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते।
धातोः स्थान इवादेशं सुग्रीवं सन्न्यवेशयत्॥" (द)

---

(ठ) "यत्तदोर्नित्यः सम्बन्धः" इति न्यायस्य व्यभिचारं दर्शयितुमाह यत्र चेति। एकस्य एकतरस्य। आर्थत्वं तात्पर्य्येणैव बोध्यत्वम्।

(ड) उक्तमर्थमुपपादयितुमाह तथाहीति। सामर्थ्यात् यत्तदोः परस्परापेक्ष्यापेक्षित्वरूपसम्बन्धस्य नित्यत्वात्। आर्थत्वं तात्पर्य्यत एव बोध्यत्वम्।

(ढ) आत्मेति। "आत्मा जानाति यत् पापं प्रश्नो नान्यत्र युज्यते।
स्वाङ्गे व्रणस्य रूढ़स्य स्वयं वेत्ति हि वेदनाम्॥" इति मत्पूरितपरपादत्रयम्।

आत्मा जानाति, यत् पापं वर्त्तते। अत्र पूर्ववाक्ये तच्छब्दस्य तात्पर्य्यलभ्यत्वादुत्तरवाक्यगतयच्छब्दस्य निराकाङ्क्षत्वम्।

(ण) यच्छब्दस्य पद्यान्तररूपोत्तरवाक्यगतत्वेनोपादानेऽपि पद्यान्तरीयतच्छब्दस्यार्थत्वं प्रदर्शयितुमाह एवमिति। "पृथूपदिष्टां दुदुहुर्धरित्रीम्॥" इति शेषपादः।

दोहदक्षे दोहननिपुणे मेरौ सुमेरुपर्वते दोग्धरि दोहनकर्त्तरि स्थिते सति सर्वशैलाः यं हिमालयं वत्सं परिकल्प्य पृथुना राज्ञा उपदिष्टां धरित्रीं पृथिवीं भास्वन्ति दीप्तिमन्ति रत्नानि महौषधीश्च दुदुहुः। दुहिर्द्विकर्म्मकः। इति कुमारसम्भवे।

एतदादावुत्तरवाक्ये यच्छब्दस्य स्थितत्वात् "अस्त्युत्तरस्यां दिशि देवतात्मा" इत्यादौ पूर्ववाक्ये "स अस्ति" इति तच्छब्दस्यार्थत्वम्।

(त) इत्यादाविति। इत्यादावपि एवं तच्छब्दस्यार्थत्वमिति पूर्वेणान्वयः।

(थ) एवं तच्छब्दस्यार्थत्वं प्रदर्श्य यच्छब्दस्याप्यार्थत्वं विषयभेदेन प्रदर्शयितुमाह तच्छब्दस्येति। प्रक्रान्तः प्रकरणवशात् प्राप्तः, प्रसिद्धो विख्यातः अनुभूतः स्वयमनुभवविषयीकृतश्च अर्थो यस्य तस्य भावस्तत्त्वं-स्तथाभूते सति आर्थत्वं तात्पर्य्यलभ्यत्वम्। तच्छब्दस्य प्रस्तुतार्थवाचित्वे प्रसिद्धार्थवाचित्वे स्वयमनुभूतार्थ-वाचित्वे च यच्छब्दस्य अर्थवशाल्लभ्यत्वमिति सरलार्थः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(द) तत्र प्रथमं तच्छब्दस्य प्रस्तुतार्थवाचित्वे यच्छब्दनिराकाङ्क्षत्वमुदाहरति स इति। श्लोकोऽयं

स वः शशिकलामौलिस्तादात्म्यायोपकल्पताम् (१) ॥" (ध)

तामिन्दुसुन्दरमुखीं हृदि चिन्तयामि ॥" (न)

यत्र च यच्छब्दनिकटस्थितानामपीदमादिशब्दानां भिन्नलिङ्गविभक्तित्वम्, तत्रापि निराकाङ्क्षत्वमेव (प)। क्रमेण यथा—

विभाति मृगशावाक्षी येदं भुवनभूषणम् ॥" (फ)

इन्दुर्विभाति यस्तेन दग्धाः पथिकयोषितः ॥" (ब)

---

रघुवंशद्वादशसर्गे। स वीरो रामचन्द्रः, वालिनं हत्वा सुग्रीवेणैव चिरकाङ्क्षिते तस्य वालिनः पदे राजत्वे धातोर्हन्प्रभृतेः, स्थाने आदेशं वधादिकमिव सुग्रीवं सम्यग्विभ्रयत् स्थापितवान्।

अत्र स इति तच्छब्दः प्रस्तुतरामरूपार्थवाचित्वात् यच्छब्दं नाकाङ्क्षति।

(ध) तच्छब्दस्य प्रसिद्धार्थवाचित्वे यच्छब्दनिराकाङ्क्षत्वं दर्शयति स व इति।

"अनन्तभोगयुक्तोऽपि भोगहीनो भवान्तकृत्।" इति मत्पूरितपूर्वार्द्धम्।

स प्रसिद्धः शशिकलामौलिश्चन्द्रशेखरः शिवः, वो युष्माकं तादात्म्याय सायुज्यमुक्तये उपकल्पतां प्रभवतु। अत्र स इति तच्छब्दः प्रसिद्धार्थवाचित्वात् यच्छब्दं नापेक्षते।

(न) तच्छब्दस्य स्वयमनुभूतार्थवाचित्वे यच्छब्दनिराकाङ्क्षत्वमाह तामिति।

"आलिङ्गनेन गलितामिव कोमलाङ्गीं स्पर्शैः सुधामिव तनौ परिक्षिपयन्तीम्।

आनन्दमन्दमधुरं द्रुवतीव वाचाम्—" इति मत्पूरितपूर्वपादत्रयम्।

अत्र तामिति तच्छब्दस्य स्वयमनुभूतार्थवाचित्वात् यच्छब्दं नापेक्षते।

(प) "तच्छब्दस्यापि यच्छब्दनिकटस्थितस्य प्रसिद्धपरामर्शित्वमात्रम्" "एवमिदमादिशब्दोपादानेऽपि" इत्येताभ्यां यच्छब्दनिकटस्थितानामिदमादिशब्दानां केवलं प्रसिद्धपरामर्शित्वमेव न पुनराकाङ्क्षापूरकत्वमपीति पूर्वमभिहितम्, इदानीं तदत्ययं दर्शयितुमाह यत्र चेति। आदिशब्देन तदेतददःशब्दानां ग्रहणम्। निराकाङ्क्षत्वमेव यच्छब्दाकाङ्क्षापूरकत्वमेव।

(फ) यच्छब्दनिकटस्थितस्य भिन्नलिङ्गस्य इदंशब्दस्य यच्छब्दाकाङ्क्षापूरकत्वं दर्शयितुमाह विभातीति।

"अनन्यसमलावण्या मुनीनामपि मोहिनी।" इति मत्पूरितपूर्वार्द्धम्।

अत्र "भुवनभूषणम्" इति प्रकृतसमानलिङ्गभागितया इदमिति क्लीबलिङ्ग इदंशब्दः 'या' इत्यस्य भिन्नलिङ्गत्वादाकाङ्क्षां पूरयति।

(ब) यच्छब्दनिकटस्थितस्य भिन्नविभक्तिकस्य तच्छब्दस्य यच्छब्दाकाङ्क्षापूरकत्वमुदाहरति इन्दुरिति।

"अमन्दनयनानन्दकरः शीतकरोऽप्ययम्।" इति मत्पूरितपूर्वार्द्धम्।

य इन्दुर्विभाति तेन इन्दुना पथिकयोषितः प्रवासिनां वनिताः दग्धास्तापिताः।

अत्र 'यः' इति प्रथमान्तयच्छब्दस्य तेनेति तच्छब्दस्य तृतीयान्तत्वेन भिन्नविभक्तिकत्वादाकाङ्क्षां पूरयति।

---

(१) उपकल्प्यताम् इति क्वचित् पाठः।

CC-0. Vasishtha Tripathi Collection, Digitized By Siddhanta eGangotri Gyaan Kosha

क्वचिदनुपात्तयोर्द्वयोरपि सामर्थ्यादवगमः (भ)। यथा—

"न मे शमयिता कोऽपि भारस्येत्युर्वि ! मा शुचः ।
नन्दस्य भवने कोऽपि बालोऽस्त्यद्भुतपौरुषः ॥" (म)

अत्र योऽस्ति स ते भारस्य शमयितेति बुध्यते (य)।

"यद्यद्विरहदुःखं मे तत् को वाऽपहरिष्यति ॥"

इत्यत्रैको यच्छब्दः साकाङ्क्ष इति न वाच्यम् (र)। तथाहि यद्यदित्यनेन येन केनचिद्रूपेण स्थितं सर्वात्मकं वस्तु विवक्षितम्। तथाभूतस्य तस्य तच्छब्देन परामर्शः (ल)।

एवमन्येषामपि वाक्यगतत्वेनोदाहरणं बोध्यम् (व)।

---

एवमेतददःशब्दयोरप्युदाहार्य्यम् ।

(भ) क्वचिदिति । अनुपात्तयोर्वाक्ये अप्रयुक्तयोः, द्वयोरपि यच्छब्दतदाद्यन्यतमशब्दयोः सामर्थ्यात्तात्पर्य्यवशात् ।

(म) नेति । कंसभारार्दितां पृथिवीं प्रति ब्रह्मण आश्वासोक्तिरियम् । "कोऽपि जनः मे मम भारस्य शमयिता कंसादीनां व्यापादनेन विलोपयिता नास्ति" इति ज्ञात्वा हे उर्वि ! पृथिवि ! मा शुचः शोकं मा कृथाः । येन हि नन्दस्य भवने अद्भुतपौरुषः कोऽपि बालो बालकोऽस्ति ।

(य) अत्रेति । बुध्यते वक्तुस्तात्पर्य्यवशादिति भावः ।

(र) आशङ्काविशेषमपनेतुमाह यद्यदिति ।

"सखि ! कान्ते पदप्रान्ते प्रणिपत्य गतेऽधुना ।" इति सत्पूरितपूर्वार्द्धम् ।

इत्यत्रेति । एकेन तच्छब्देन एकस्यैव यच्छब्दस्य आकाङ्क्षापूरणादिति भावः ।

(ल) उपपादयति तथाहीति । सर्वात्मकं सर्वप्रकारम्, वस्तु दुःखरूपः पदार्थः विवक्षितं वक्त्रा इति शेषः । तथाभूतस्य सर्वात्मकस्य सर्वप्रकारस्य, तस्य दुःखरूपवस्तुनः, परामर्शः आकाङ्क्षापूरकत्वेन सम्बन्धः ।

क्वचित् सर्वात्मकतया उपस्थापकस्य एकस्यैव यच्छब्दस्य तच्छब्दद्वयेनाकाङ्क्षापूरणम् । यथा—

"ते ते सत्पुरुषाः परार्थघटकाः स्वार्थस्य बाधेन ये ।"

नैषधे—"तदहं विदधे तथा तथा दमयन्त्याः सविधे तव स्तवम् ।
हृदये निहितस्तया भवान् अपि नेन्द्रेण यथापनीयते ॥"

शान्तिशतके च—"तत्तत्कर्म्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चितम् ।"

एवमविवक्षायान्तु यत्तदोर्वीप्सितत्वम् । यथा रघुवंशे—

"सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥"

(व) एवमिति । तत्र वाक्यगतमनुचितार्थत्वं यथा काव्यप्रकाशे—

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"कुविन्दस्त्वं तावत् पटयसि गुणग्राममभितो यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो ! ।
शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा तथापि त्वत्कीर्त्तिर्भ्रमति विगताच्छादनमिह ॥"

अत्र पद्ये कुविन्दस्तन्तुवायस्त्वं गुणग्रामं तन्तुसमूहं पटयसि पटं करोषि, इत्याद्यर्थस्य प्रत्यायकतया स्तूयमानस्य राज्ञो निन्दाप्रत्यायनादनुचितार्थत्वम् ।

वाक्यगता अप्रयुक्तता यथा तत्रैव—

"स रातु वो दुश्च्यवनो भावुकानां परम्पराम् । अनेडमूकताद्यैश्च द्यतु दोषैरसम्मताम् ॥"

अत्र रादातोर्दाने, दुश्च्यवनशब्दस्य इन्द्रे, भावुकशब्दस्य मङ्गले, अनेडमूकशब्दयोर्बधिरे, दोधातोश्च खण्डने प्रसिद्धिसत्त्वेऽपि कविभिरनादृतत्वादप्रयुक्तता ।

वाक्यगता ग्राम्यता यथा सरस्वतीकण्ठाभरणे—

"कन्ये ! कामयमानं मां न त्वं कामयसे कथम् ।"

अत्र कामयमानमिति कामयसे इति च शब्दौ ग्राम्यौ ।

वाक्यगता अप्रतीतता यथा तत्रैव—

"किं भाषितेन बहुना रूपस्कन्धस्य सन्ति मे न गुणाः । गुणनान्तरीयकञ्च प्रेमेति न तेऽस्त्युपालम्भः ॥"

अत्र रूपस्कन्धनान्तरीयकशब्दौ बौद्धमीमांसादर्शनयोरेव विषयप्रपञ्चान्तर्गतार्थयोः प्रसिद्धावित्यप्रतीतता ।

वाक्यगता सन्दिग्धता यथा काव्यप्रकाशे—

"सुरालयोल्लासपरः प्राप्तपर्य्याप्तकम्पनः । मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यते ॥"

अत्र सुर-कम्पन-मार्गण-भूतिशब्दाः प्रकरणादिनियमाभावात् किं देव-सेना-शरसम्पदर्थाः, किंवा मद्य-सञ्चलन-पर्य्यटन-भस्मार्था इति सन्देहात् सन्दिग्धता ।

नेयार्थता तु ग्रन्थकृतैव "उद्यत्कमललौहित्यैः" इत्यादिना उदाहृता ।

वाक्यगता निहतार्थता यथा तत्रैव—

"सायकसहायबाहो ! मकरध्वजनियमितक्षमाधिपते ! ।
अब्जरुचिभास्वरस्ते भातितरामवनिप ! श्लोकः ॥"

अत्र बाण-कामदेव-सहिष्णुता पद्म-पद्मरूपार्थेषु प्रसिद्धानां सायक-मकरध्वज-क्षमाज-श्लोकशब्दानां यथाक्रमं तरवारि-समुद्र-पृथिवी-चन्द्र-यशोरूपेष्वप्रसिद्धेष्वर्थेषु प्रयोगान्निहतार्थता ।

वाक्यगता अवाचकता यथा मे पद्ये—

"मद्विप्रलब्धं पुनराह यस्त्वां तर्कः स किं तत्फलवाचि मूकः ? ।
अशक्यशङ्कव्यभिचारहेतुः वाणी न वेदा यदि सन्ति के तु ॥"

अत्र आह-वेदशब्दौ सूचनसत्यार्थयोरवाचकावित्यवाचकता । क्लिष्टताविधेयाविमर्शौ तु वाक्यगतौ ग्रन्थकृतैवोदाहृतौ ।

वाक्यगता विरुद्धमतिकारिता यथा मम—

"भाग्ये नैवाद्य सम्प्राप्ते नन्वभिप्रेत ! नागर ! । अविचार्य्यैव ॥"

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पदांशे श्रुतिकटुर्यथा—"तद्‌गच्छ सिद्ध्यै कुरु देवकार्य्यम्—" (अ)

"धातुमत्तां गिरिर्धत्ते।" (ब)

अत्र मत्ताशब्दः क्षीवार्थे निहितः (१) (स)।

"वर्ण्यते किं महासेनो विजेयो यस्य तारकः॥" (ह)

अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः (च)।

"पाणिः पल्लवपेलवः।" (क)

---

अत्र अभीष्ट-कष्ठाविष्टलार्थे प्रयुक्तावपि अभिप्रेतगलग्रहशब्दौ प्रेत-भारार्थौ सूचयत इति विदग्ध-मतिकारिता।

(अ) इदानीमुद्देशक्रमप्राप्तान् पदांशदोषानाह पदांश इति।

अर्थोऽयमर्थान्तरभाव्य एव।

अपेक्षते प्रत्ययमुत्तमं त्वां बीजाङ्कुरः प्रागुदयादिवाम्भः॥"

इति कुमारसम्भवतृतीयसर्गे शेषपादत्रयम्।

अत्र सिद्ध्यै इति पदस्य 'द्ध्यै' इत्यंशः परुषवर्णतया श्रुतिदुःखावहः।

(ब) "दुःश्रवत्रिविधाश्लीले"त्यादिकारिकाणां गणनामात्रपरत्वेन पाठक्रमस्याकिञ्चित्करत्वात्तमुल्लङ्घ्य यथेच्छमेवोदाहरन् प्रथमं निहतार्थं तावदुदाहरति धात्विति।

"धातुमत्तां गिरिर्धत्ते रत्नं धरति सागरः।

आकाशो वहति ज्योतिर्गुणं श्रयति सज्जनः॥" इति मत्पूरितशेषपादत्रयम्।

गिरिः पर्वतः धातुर्गैरिकादिरस्यास्तीति धातुमान् तस्य भावो धातुमत्ता तां "यदुत्तरवर्त्ती भावविहितः प्रत्ययस्तद्धर्मं वक्ति" इति न्यायात् गैरिकादिधातुमित्यर्थः।

(स) अत्रेति। क्षीवार्थे उन्मत्तारूपार्थे निहितः "मत्ते शौण्डोत्कटक्षीवाः" इत्यभिदधानैरमरादिभिः ख्यापितः अनुशिष्ट इत्यर्थः। तथा च मत्ताशब्दस्य प्रसिद्धेन क्षीवार्थेन अप्रसिद्धस्य मत्तारूपार्थस्य तिरोहित-प्रायीकृतत्वात् धातुमत्ताशब्दैकदेशगतत्वाच्च पदांशगत निहतार्थत्वम्।

(ह) पदांशगतमवाचकत्वमुदाहरति वर्ण्यत इति।

"महाशक्ति-महादेव-पुत्रः शक्तिधरः स्वयम्।" इति मत्पूरितपूर्वार्द्धम्।

(च) अत्रेति। कृत्यप्रत्ययो जिधातोः "स्वराद्यः" इति यप्रत्ययः। अवाचक इति। कृत्यप्रत्ययस्य "शक्ति च कृत्याः" इत्यनेन शक्यार्थबोधकत्वात् क्तप्रत्ययस्य च अतीतकालवृत्तिविजयकर्मत्वबोधकत्वादिति भावः।

(क) पदांशगतामश्लीलतां प्रदर्शयति पाणिरिति।

"वीणानिनादवद्वाणी बिम्बवद्गोहितोऽधरः।

मृणालवत्समे नेत्रे पाणिः पल्लवपेलवः॥" इति मत्पूरितपूर्वपादत्रयम्।

पल्लवपेलवः पल्लववत् कोमलः।

---

(१) निहत इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पेलवशब्दस्य आद्याक्षरे अश्लीले (ख) ।

"संग्रामे निहताः शूरा वचोबाणत्वमागताः ॥" (ग)

अत्र वचःशब्दस्य गीःशब्दवाचकत्वे नेयार्थत्वम् । यथा तत्रैव बाण-स्थाने शरेति पाठे । अत्र पदद्वयमपि न परिवृत्तिसहम् (घ) ।

जलध्यादौ तु उत्तरपदम्, वाड़वानलादौ तु पूर्वपदम् (ङ) ।

एवमन्येऽपि यथासम्भवं पदांशदोषा ज्ञेयाः (च) ।

---

(ख) पेलवेति । आद्याक्षरे 'पेल' इति प्रथमाक्षरद्वयम् । तथा च "अण्डकौ वृषणः पेलम्" इति हेमचन्द्रोक्तेः पेलशब्दस्य अण्डकोषप्रत्यायकतया व्रीड़ाव्यञ्जकत्वादश्लीलत्वम् । एवञ्च पेलवशब्दस्य प्रयोगमात्र एवायं दोष इति बोध्यम् ।

पदांशगता जुगुप्साव्यञ्जकाश्लीलता यथा—"गङ्गया पूयते पापी ।" अत्र पूयत इति शब्दस्य प्रथमाक्षरद्वयं घनीभूतविकृतरक्तबोधकत्वादश्लीलम् ।

पदांशगता अमङ्गलव्यञ्जकाश्लीलता यथा—"अभिप्रेतो महाधनः ।" अत्र अभिप्रेतशब्दस्य अन्तिमाक्षरद्वयम् अकृतसपिण्डनमृतबोधकत्वादश्लीलम् ।

(ग) पदांशगतां नेयार्थतामुदाहरति संग्राम इति ।

"स्वाम्यर्थे वा स्वदेशार्थे युध्यमाना मनस्विनः ।" इति मत्पूरितपूर्वार्द्धम् ।

वचोबाणत्वं गीर्वाणत्वं देवत्वमिति यावत्, आगताः सम्प्राप्ताः ।

(घ) अत्रेति । गीःशब्दवाचकत्वे गीःशब्दरूपलक्ष्यार्थोपस्थापकत्वे अभिप्रेते इत्यर्थः । तथा च "गीर्वाणा दानवारयः" इत्यमरोक्तेः, गीर्वाणीव बाणो बाणवदरातिनाशिका यस्येति व्युत्पत्तियोगाच्च गीर्वाणशब्दो देवतायां योगरूढ़ः । तेन पङ्कजादिवत् तत् पदद्वयमपि न परिवृत्तिसहम् । ततश्च रूढ़िं प्रयोजनञ्च विनापि कविना वचःशब्देन गीरूपलक्ष्यार्थप्रकाशनात् वचोबाणत्वपदैकदेशगतत्वाच्च पदांशगतं नेयार्थत्व-मित्याशयः । तत्रैव गीर्बाणशब्द एव । शरेति पाठ इति । "गीःशरत्वमुपागताः" इति प्रयोगेऽपि, तथा उक्तरीत्या पदांशगतं नेयार्थत्वम् । अत्र गीर्बाणशब्दे, पदद्वयं गीःपदं बाणपदञ्च, न परिवृत्तिसहं स्वस्वार्थबोधकशब्दान्तरनिवेशेऽपि न देवतारूपार्थबोधकं पङ्कजादिवद्योगरूढत्वादिति भावः ।

(ङ) प्रसङ्गादन्यत्रापि पदांशानां परिवृत्त्यसहत्वं दर्शयितुमाह जलध्यादाविति । प्रथमादिपदेन जल-धरादीनां ग्रहणम् । उत्तरपदं शेषभागः धिप्रभृतिरंश इत्यर्थः । द्वितीयादिपदेन च सरोजादीनां परिग्रहः । पूर्वपदं वाड़वाद्यंशः । न परिवृत्तिसहमिति पूर्वेणान्वयः । अरिसिंहोऽप्येवमेवाह । यथा—

"जलदादिषु पूर्वपदे सरोजमुख्येषु चोत्तरपदेषु । सुरपतिसमेषु चोभयपदेषु पर्यायपरिवृत्तिः ॥

इति परिवृत्तिसहा ये योगास्ते यौगिकाः शब्दाः । परिवृत्त्यसहा ये तु मिश्रा गीर्वाणतुल्यास्ते ॥"

तेन—"जलधौ वर्त्तते रवं कुर्वन्नित्तुरगानलः ।" इत्यादिषु वचोबाणत्वमित्यादिवदेव पदांशगतो नेयार्थतादोष इत्युन्नेयम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निरर्थकत्वादीनां त्रयाणाञ्च पदमात्रगतत्वेनैव लक्ष्ये सम्भवः (छ) ।
क्रमेण (१) यथा—"मुञ्च मानं हि मानिनि ! ॥" (ज)
अत्र हिशब्दो वृत्तिपूरणमात्रप्रयोजनः (झ) ।
"कुञ्जं हन्ति कृशोदरी" (ञ)

---

(च) एवमिति । तत्र पदांशगता अनुचितार्थता यथा—

"अङ्गकल्पतरुर्दत्ते फलं विज्ञस्तु तद्वान् ।"

अत्र कल्पतरुपदस्य 'कल्प' इत्यंशः 'हे अङ्गकल्प !' इति-सम्बोधनं द्योतयतीत्यनुचितार्थता ।

पदांशगता अप्रयुक्तता यथा—"एषोऽधिकवया वन्ध्या पुपुत्रीयिषति ध्रुवम् ।"

अत्र 'पुपु' इति द्विवचनस्य व्याकरणप्रसिद्धत्वेऽपि कविभिरनादृतत्वादप्रयुक्तता ।

पदांशगता ग्राम्यता यथा—"कुरुते जम्बुकी नीरे कूर्मस्येव नखादनम् ।"

अत्र नखभक्षणमित्यर्थे प्रयुक्तस्य नखादनमिति पदस्य खादनमित्यंशो ग्राम्यः ।

पदांशगता सन्दिग्धता यथा काव्यप्रकाशे—

"कश्चिन् कर्म्मणि सामर्थ्यमस्य नोत्तपतेतराम् । अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥"

अत्र साधुचर इति पदस्य 'चर' इत्यंशे "किं भूतपूर्वः साधु"रित्यर्थे "भूतपूर्वे चरट्" इत्यनेन चरट् प्रत्ययः, उत वा साधुषु चरतीत्यर्थे 'चरेष्ट' इति टप्रत्ययः, इति सन्देहात् सन्दिग्धता ।

पदांशगता विरुद्धमतिकारिता यथा—"भवान् कल्पतरुप्रायो दत्ते परमसत् फलम् ।"

अत्र परमसदिति पदस्य शेषाक्षरद्वयम् 'असत्' इति विरुद्धां मतिं करोतीति विरुद्धमतिकारिता ।

अप्रतीतत्व-क्लिष्टत्वयोस्तु पदांशगतत्वं न सम्भवतीति कारिकायां "दोषाः केचिद्भवन्त्येषु पदांशेऽपि" इत्यत्र केचिदिति, वृत्तौ चात्र "यथासम्भवम्" इति प्रयुक्तम् ।

(छ) "पदे परे" इति कारिकांशं व्याख्यातुमाह निरर्थकत्वादीनामिति । आदिशब्देन असमर्थत्व-च्युतसंस्कारत्वयोः संग्रहः । सम्भव इति । अतएव "परे पद एव" इति कारिकायामुक्तमित्याशयः ।

(ज) तत्र निरर्थकत्वमुदाहरति मुञ्चेति । तल्लक्षणन्तु छन्दःपूरणं विना अन्यप्रयोजनहीनप्रयोग-त्वम् । अतएव हि निरर्थकत्वमिति समाख्या । कवेः शक्तिहीनत्वज्ञापनद्वारा श्रोतुर्वैमनस्यापादनेन रसप्रकर्षहानिकरत्वादस्य दोषत्वम् । अयन्तु नित्यो दोषः, प्रतिप्रसवासम्भवेन सर्वदैव हेयत्वात् ।

"कोकिलः काकलीं वक्ति गुञ्जन् भ्रमति षट्पदः ।
पतितोऽहं पदान्ते च मुञ्च मानं हि मानिनि ! ॥" इति मत्पूरितपूर्वपादत्रयम् ।

(झ) अत्रेति । वृत्तिपूरणमात्रप्रयोजनः, अतएव निरर्थकत्वदोष इत्याशयः ।

(ञ) असमर्थत्वमुदाहरति कुञ्जमिति । तल्लक्षणन्तु सहकारिविरहेण विवक्षितार्थप्रत्यायनाशक्तत्वम् । अतएवास्यापि असमर्थत्वमिति संज्ञा । विवक्षितार्थाप्रत्यायकतया च रसस्यैव प्रतीतिबाधादस्य दोषत्वम् । प्रतिप्रसवाभावेन सर्वदैव हेयत्वादस्यापि नित्यदोषत्वम् ।

---

(१) क्रमतः इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र (१) हन्तीति गमनार्थे पठितमिति न तत्र समर्थम् (ट)

"गाण्डीवी कनकशिलानिभं भुजाभ्या-
माजघ्ने विषमविलोचनस्य वक्षः ॥" (ठ)

"आङो यमहनः" ( पा, १ । ३ । २८ ) "स्वाङ्गकर्मकाच्च" ( पा, १ । ३ । २८ । वृ, वा,) इत्यनुशासनबलादाङ्पूर्वस्य हनः स्वाङ्गकर्मकस्यैवात्मनेपदं नियमितम् । इह तु तल्लङ्घितमिति व्याकरणलक्षणहीनत्वात् च्युतसंस्कारत्वम् (ड) ।

नन्वत्र "आजघ्ने" इति पदस्य स्वतो न दुष्टता, अपि तु पदान्तरापेक्षयैव, इत्यस्य वाक्यदोषता । मैवम् । तथाहि, गुणदोषालङ्काराणां शब्दार्थगतत्वेन व्यवस्थितेस्तदन्वयव्यतिरेकानुविधायित्वं हेतुः (ढ) । इह तु दोषस्य

"साश्रङ्कं परिपश्यन्ती हरिणीचललोचना ।
रमणागमनाश्वासात् कुञ्जं हन्ति कृशोदरी ॥" इति मत्पूरितपूर्वपादत्रयम् ।

(ट) अत्रेति । पठितमपि "हन हिंसागत्योः" इत्यनेनेति शेषः । तत्र-गमनार्थे न समर्थं न प्रतीतिजननक्षमम्, सहकारिविरहादिति भावः ।

(ठ) च्युतसंस्कारतामुदाहरति गाण्डीवीति । तल्लक्षणन्तु व्याकरणलक्षणहीनत्वम् । तेन च्युतः संस्कारो व्याकरणकृतपरिमार्जनं यस्य तस्य भावश्च्युतसंस्कारतेति व्युत्पत्तिः । कवेर्व्याकरणज्ञानहीनत्वप्रतिपादनद्वारा तद्वचने श्रोतुर्वैमनस्यापादनेन रसप्रकर्षहानिकरत्वादस्य दोषत्वम् । एष तु महादोषः सर्वथैव नित्यः, सर्वथा प्रतिप्रसवाभावेन सर्वदैव हेयत्वात् ।

"उन्मज्जन्मकर इवामरापगाया वेगेन प्रतिमुखमेत्य बाणनद्याः ।"

इति किरातार्जुनीयसप्तदशसर्गे पूर्वार्द्धम् ।

गाण्डीवी अर्जुनः भुजाभ्यां कनकशिलानिभं स्वर्णमयप्रस्तरतुल्यं विषमविलोचनस्य त्रिलोचनस्य किरातरूपिणो महादेवस्य वक्षः आजघ्ने आहतवान् ।

(ड) अत्र च्युतसंस्कारतां समर्थयति आङ् इति । तल्लङ्घितमिति । पराङ्गकर्मकत्वेऽप्यात्मनेपदविधानादिति भावः । न च कनकशिलानिभं कनकनिकषपाषाणतुल्यं श्यामवर्णं स्ववक्ष एव आजघ्ने इत्यर्थं इति वाच्यम् । युद्धे प्रवर्त्तमानानां वीराणां स्ववक्षस आघातादर्शनात् तत्पूर्वमेव हि दर्पप्रकाशार्थे तत्करणदर्शनात् ।

(ढ) आजघ्ने इत्यस्य वाक्यदोषत्वमाशङ्कते नन्विति । स्वतो न दुष्टतेति । स्वाङ्गकर्मकत्वे कर्म्मणि च आत्मनेपदस्य साधुत्वादिति भावः । पदान्तरापेक्षया विषमविलोचनस्य वक्ष इति पराङ्गबोधक-

(१) तत्रेति क्वचित् पाठः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"आजघ्ने" इति पदमात्रस्यैवान्वयव्यतिरेकानुविधायित्वम्। पदान्तराणां परिवर्त्तनेऽपि तस्य तादवस्थ्यादेवेति पददोष एव [ण]। तथा यथेष्टात्मनेपदस्य परिवृत्तावपि न पददोषः [त]।

एवं "पद्मः" इत्यत्राप्रयुक्तस्य पदगतत्वं बोध्यम् [थ]।

एवं प्राकृतादि-व्याकरण-लक्षण-हानावपि च्युतसंस्कारत्वमूह्यम् [द]।

इह तु शब्दानां सर्वथा प्रयोगाभावे असमर्थत्वम्, विरलप्रयोगे निहृ-

---

पदापेक्षया। वाक्यदोषतेति। वाक्यघटकानेकपदप्रयोज्यत्वादिति भावः। शब्दार्थगतत्वेन व्यवस्थिते शाब्दत्वार्थत्वनियमस्य, तयोः शब्दार्थयोः, अन्वयव्यतिरेकानुविधायित्वम् अन्वयव्यतिरेकानुसारित्वम्। तथा च यत्र तत्तच्छब्दसत्त्वे तेषां गुणादीनां सत्ता तदसत्त्वे च तेषामप्यसत्ता तत्र गुणादीनां शाब्दत्वम्। एवमार्थत्वमपि।

(ण) ननु तेन किमित्याह इहेति। गाण्डीवीत्यादिपद्य इत्यर्थः। पदमात्रस्यैव न पुनः सापेक्षपदान्तरस्येत्यर्थः। तथा च 'आजघ्ने' इति पदसत्त्वे च्युतसंस्कारतादोषसत्ता, तत्पदासत्त्वे च तद्दोषासत्ता। पदान्तराणां परिवर्त्तनेऽपि विषमविलोचनस्य वक्ष इत्यत्र विलोचनस्योर इति पाठेऽपि तस्य च्युतसंस्कारतादोषस्य, तादवस्थ्यात् तद्रूपेणावस्थानादेव इति पदमात्रस्यैवेत्याद्युक्तिं प्रति हेतुः। इति हेतोः पददोष एव न पुनर्वाक्यदोष इत्यर्थः। तथा च पदान्तरासत्त्वेऽपि तद्दोषसत्त्वेन व्यतिरेकव्यभिचाराद्वाक्यव्यापकत्वाभावेन नायं वाक्यदोष इति भावः।

(त) ननु तर्हि 'आजघ्ने' इत्यात्मनेपदसत्त्वे च्युतसंस्कारतादोषसत्ता, तदसत्त्वे च तदसत्ता इत्यात्मनेपदस्यैव उक्तदोषं प्रत्यन्वयव्यतिरेकानुविधायितया बीजत्वात् च्युतसंस्कारतादोषोऽयं पदांशगत एवास्तामित्याह तथेति। परिवृत्तावपि "आजघान" इति पाठेऽपि। तथा हन्प्रकृतेरपि 'प्रजह्रे' इति पाठेन हन्प्रकृतेः परिवृत्तावपि न पददोष इत्यर्थः। इति हेतोः। अत्रायमाशयः—"आजघ्ने" इत्यात्मनेपदसत्त्वे हन्प्रकृतिसत्त्वे च च्युतसंस्कारतादोषसत्ता, तयोरसत्त्वे च तदसत्तेति उभयांशस्यैवान्वयव्यतिरेकाभ्यां दोषघटकत्वात्तदुभयांशस्यैव च पदरूपत्वात् पददोष एवायम्। "धातुमत्तां गिरिधत्ते" इत्यादौ तु मत्ताशब्दसत्त्वे निहतार्थत्वसत्ता तदसत्त्वे च तदसत्त्वेति पदैकदेशस्यैव दोषघटकत्वात् पदांशदोष एव। एवञ्च अन्वयव्यतिरेकानुसारिण गुणदोषालङ्काराणां वाक्यव्यापित्वे वाक्यगतत्वम्, पदमात्रव्यापित्वे पदगतत्वम्, पदांशमात्रव्यापित्वे च पदांशगतत्वमिति नियम इति।

(थ) नियममिममन्यत्राप्यतिदिशन्नाह एवमिति। अनया रीत्येत्यर्थः। अप्रयुक्तस्य अप्रयुक्ततादोषस्य। तथा च "पद्मः" इति पद्मशब्दसत्त्वे ततः पुंलिङ्गसत्त्वे च अप्रयुक्ततादोषसत्ता तयोरसत्त्वे च तदसत्तेति उभयांशस्यैव दोषघटकत्वादत्राप्रयुक्ततायाः पदगतमेवेति भावः।

(द) एवमिति। तथा च "सर्वत्रात्मनेपदस्य परस्मैपदम्" इति प्राकृतादिव्याकरणसूत्रात् 'करीअदि' इति प्रयोक्तव्ये 'करीअदे' इति प्रयोगे च्युतसंस्कारत्वम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तार्थत्वम् (ध)। निहतार्थत्वमनेकार्थशब्दविषयम्, अप्रतीतत्वन्त्वेकार्थ-स्यापि शब्दस्य सार्वत्रिकप्रयोगविरहः (न)। अप्रयुक्तत्वैकार्थशब्दविषयम् असमर्थत्वमनेकार्थशब्दविषयम् (प)। असमर्थत्वे हन्त्यादयोऽपि गमनार्थे पठिताः, अवाचकत्वे दिनादयः प्रकाशमयाद्यर्थे न तथा, इति परस्पर-भेदः (फ)।

एवं पददोषसजातीया वाक्यदोषा उक्ताः, सम्प्रति तद्विजातीया उच्यन्ते—(ब)

---

(ध) इदानीमुक्तदोषाणां कतिपयस्य लक्षणविशेषैक्यमाशङ्क्य परस्परं भेदं निर्दिशन्नादौ विवक्षितार्थ-प्रत्यायनमन्थरत्वेन असमर्थत्वनिहतार्थत्वयोरैक्ये प्राप्ते भेदमाह इहेति। सर्वथा स्वार्थप्रधानतया सर्वप्रकारे-णेत्यर्थः। तेन हन्धातोर्गत्यर्थप्रधानतया गच्छतीत्यर्थे हन्तीति सर्वत्रैव प्रयोगाभावात् "कुञ्जं हन्ति कृशो-दरी" इत्यादावसमर्थत्वम्। अन्यार्थप्रधानतया गतर्थे प्रयोगस्तस्यैव। यथा—पद्भ्यां हन्यते गम्यते अस्या-मिति पद्धतिः पन्थाः, एवं जङ्घा, उद्धत इत्यादि। अतएव "हन हिंसागत्योः" इति गत्यर्थे पाठः सार्थकः। विरलप्रयोगो—"अकालसन्ध्यामिव धातुमत्ताम्" इत्यादिरूपाल्पप्रयोगो।

(न) सर्वप्रकारस्योक्तेषु विवक्षितार्थप्रत्ययनमन्थरत्वेन निहतार्थत्वाप्रतीतयोरभेदे प्राप्ते भेदमाह निहतार्थत्व-मिति। निहतार्थत्वे—"धातुमत्तां गिरिर्धत्ते" इत्यादौ मत्ताशब्दस्य क्षीव-तत्सत्तारूपावनेकार्थौ; अप्रतीतत्वे तु—"योगेन दलिताशयः" इत्यादौ आशयशब्दस्य वासनारूप एक एवार्थः, योगशास्त्रं विना अन्यत्र प्रयोगाभावश्चेति ज्ञेयम्।

(प) कविभिरनुक्तत्वरूपेण अप्रयुक्तत्वासमर्थत्वयोरभेदमाशङ्क्य भेदं दर्शयति अप्रयुक्तत्वमिति। अप्र-युक्तत्वे—"भाति पद्मः सरोवरे" इत्यत्र पद्मशब्दस्य एकसरोजरूप एवार्थः। असमर्थत्वे तु "कुञ्जं हन्ति कृशो-दरी" इत्यत्र हन्धातोर्हिंसागतिरूपौ द्वावेवार्थौ इत्यूह्येयम्।

(फ) विवक्षितार्थबोधकत्वेन असमर्थत्वावाचकत्वयोरभेदे प्राप्ते भेदमाह असमर्थे इति। अपि-शब्दस्य गमनार्थे इत्यनेनान्वयः तेन गमनार्थेऽपीत्यर्थः। न तथा केनाप्यमरादिना न पठिता इत्यर्थः। तथा च तदर्थे सत्यपि सहकारिविरहात्तद्बोधनाक्षमत्वमसमर्थत्वम्। यथा—"कुञ्जं हन्ति कृशोदरी।" अत्र "हन हिंसागत्योः" इत्यनेन गत्यर्थे सत्यपि चरणादिसहकारिविरहात्तदर्थबोधनाक्षमत्वेन असमर्थत्वम्। अवाचक-त्वन्तु तदर्थासत्त्वेन तद्बोधनाक्षमत्वम्। यथा—"दिनं मे त्वयि सम्प्राप्ते ध्वान्तच्छन्नापि यामिनी।" अत्र दिनपदस्य प्रकाशमयार्थासत्त्वेन तद्बोधनाक्षमत्वादवाचकत्वमित्याशयः।

एवम् अनुचितार्थत्वमशक्यार्थविषयम्, विरुद्धमतिकारित्वन्तु शक्यार्थविषयमिति भेदः।

(ब) एवमिति। तद्विजातीयाः पददोषविजातीया वाक्यदोषा इत्यर्थः। अत्र पदे प्रसक्त्या वाक्ये प्रसक्तत्वं पददोषसजातीयवाक्यदोषत्वम्, पदे अप्रसक्त्या वाक्यमात्रे प्रसक्तत्वं पददोषविजातीयवाक्यदोषत्व-मिति दिक्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

४ । वर्णानां प्रतिकूलत्वं लुप्ताहतविसर्गते ।
अधिकन्यूनकथित-पदता हतवृत्तता (१) ॥
पतत्प्रकर्षता सन्धौ विश्लेषाश्लीलकष्टताः ।
अर्द्धान्तरैकपदता समाप्तपुनरात्तताः ॥
अभवन्मतसम्बन्धा-क्रमामतपरार्थताः ।
वाच्यस्यानभिधानञ्च भग्नप्रक्रमता तथा ॥
त्यागः प्रसिद्धेरस्थाने न्यासः पदसमासयोः ।
सङ्कीर्णता गर्भितता दोषाः स्युर्वाक्यमात्रगाः ॥ (अ)

वर्णानां रसानुगुण्यविपरीतत्वं प्रतिकूलत्वम् (म) । यथा मम—

(अ) वर्णानामिति । वर्णानां प्रतिकूलत्वं प्रतिकूलवर्णता । लुप्ता आहताश्च (ओत्वं प्राप्ताश्च) विसर्गा ययोस्ते लुप्ताहतविसर्गे वाक्ये तयोर्भावौ लुप्ताहतविसर्गते । अत्रापि "द्वन्द्वात् परः श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यते" इति न्यायात् लुप्तविसर्गता, आहतविसर्गता च । अधिकानि न्यूनानि कथितानि च पदानि येषां वाक्यानां तेषां भावास्तास्तथोक्ताः । अधिकपदता, न्यूनपदता, कथितपदता च । हतं वृत्तं छन्दो यस्य वाक्यस्य तस्य भावो हतवृत्तता । पतन् स्खलन् प्रकर्षो यस्य वाक्यस्य तस्य भावः पतत्प्रकर्षता । सन्धौ विषये विश्लेषस्य अश्लीलकष्टते च तास्तथोक्ताः, सन्धिविश्लेषः, सन्ध्यश्लीलता, सन्धिकष्टता च । अर्द्धान्तरे पद्यस्यान्यस्मिन्नर्द्धे एकं पदं यस्य वाक्यस्य तस्य भावः सा अर्द्धान्तरैकपदता । समाप्तमपि पुनरात्तं गृहीतमारब्धं वाक्यमिति तस्य भावः सा समाप्तपुनरात्तता । अभवन्ननुपपद्यमानः मतः अभिमतः सम्बन्धः अन्वयो यत्र तदभवन्मतसम्बन्धं वाक्यम्, न विद्यते क्रमो यत्र तदक्रमं वाक्यम्, अमतः अनभिमतः परो द्वितीयः अर्थो यस्य तदमतपरार्थं वाक्यञ्च तेषां भावास्तास्तथोक्ताः । तेन अभवन्मतसम्बन्धता, अक्रमता, अमतपरार्थता च । वाच्यस्य वक्तव्यस्य अनभिधानं वाच्यानभिधानम् । भग्नः प्रकारान्तरेण द्वितीयादिप्रयोगान्नष्टः प्रक्रम उपक्रमो यत्र तद्भग्नप्रक्रमं वाक्यं तस्य भावो भग्नप्रक्रमता । प्रसिद्धित्यागः । अस्थाने अनुपयुक्तस्थाने पदसमासयोर्न्यासः सन्निवेशः । तेन अस्थानस्थपदता, अस्थानस्थसमासता च । सङ्कीर्णता, गर्भितता च । एते त्रयोविंशतिर्दोषाः, वाक्यमात्रगाः केवलवाक्यगता एव स्युः ।

(म) तत्र प्रतिकूलवर्णतां लक्षयति वर्णानामिति । अत्र वर्णानामिति पदमावर्त्तनीयम् । तेन वर्णानां रसानुगुण्यविपरीतत्वं प्रकृतरसविरोधित्वं वर्णानां प्रतिकूलत्वं प्रतिकूलवर्णतेत्यर्थः । अस्य च प्रकृतरसविरोधित्वेन तत्प्रतीतिप्रतिबन्धकत्वाद्दोषत्वम् । असौ तु नित्यो दोषः, सव्यङ्ग्यस्येव विरोधित्वेन प्रतिप्रसवासम्भवात् ।

(१) हतवृत्तताः इति पूर्वेण सह समासात् सविसर्गः पाठः क्वचित् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"ओवट्टइ उल्लट्टइ सअणे कहिं पि मोट्टाअइ णो परिहट्टइ हिअएण फिट्टइ लज्जाइ खुट्टइ दिहीए सा ।" (य)

अत्र टकाराः शृङ्गाररसपरिपन्थिनः केवलं शक्तिप्रदर्शनाय निबद्धाः (र)। एषाञ्चैक-द्वि-त्रि-चतुः-प्रयोगे (१) न तादृग् रसभङ्ग इति न दोषः (ल)।

"गता निशा इमा बाले !" (व)।

अत्र लुप्तविसर्गाः (श)।

आहता ओत्वं प्राप्ता विसर्गा यत्र (ष)। यथा—

(य) उदाहरति ओवट्टइ इति। "उद्वर्तयति उल्लोटयति शयने कस्मिन्नपि मोट्टायति नो परिघट्टयति हृदयेन स्फोटयति लज्जया खट्टयति धृतेः सा ।" इति संस्कृतानुवादः। कस्याश्चिद्विरहावस्थावर्णनेयम्। सा युवतिः शयने शय्यायां स्थिता कस्मिन्नपि क्षणे उद्वर्तयति शरीरमुत्तानं करोति, कस्मिन्नपि क्षणे उल्लोटयति शरीरं विलुठितं करोति, कस्मिन्नपि क्षणे मोट्टायति प्रागुक्तलक्षणं मोट्टायितं करोति, कस्मिन्नपि क्षणे नो परिघट्टयति शरीरं न सञ्चालयति, कस्मिन्नपि क्षणे हृदयेन मनसा स्फोटयति स्वजीवनं छिनत्ति मर्त्तुमिच्छतीत्यर्थः, कस्मिन्नपि क्षणे लज्जया धृतेर्धैर्यात् धैर्यमवलम्ब्येत्यर्थः खट्टयति आत्मनोऽवस्थां सम्वृणोति।

(र) अत्रेति। शृङ्गाररसस्य परिपन्थिनो विरोधिनः, विकटतया स्वविरोधिरौद्रादिरसव्यञ्जकत्वादिति भावः।

(ल) फलितार्थमाह एषाञ्चेति। एषां प्रतिकूलवर्णानाम्। रसभङ्गो रसबोधप्रतिबन्धः। उदाहृते दुःश्रवत्वमपि वर्त्तत एवेति बोध्यम्। शुद्धोदाहरणन्तु—

"विहिताशङ्कसाशङ्क ! दितिनन्दनमन्दिरे। अनङ्ग ! मङ्गलमयीं नालिङ्गैः पुनरङ्गनाम् ॥"

अत्र रौद्ररसे माधुर्य्यव्यञ्जकवर्णसद्भावात् प्रतिकूलवर्णता।

(व) लुप्तविसर्गतामुदाहरति गता इति। तल्लक्षणन्तु बहुतरविसर्गलोपवत्त्वम्। तेनैकद्विमात्रविसर्गलोपे नायं दोषः। बहुतरविसर्गलोपेन श्रोतुर्विरक्तिरिव जायत इति रसप्रकर्षनाशादस्य दोषत्वम्। अयमपि नित्यो दोषः प्रतिप्रसवाभावात्।

"गता निशा इमा बाले ! त्वत्कान्तश्चिन्तयैव मे।
इदानीं यदि सम्प्राप्ता निश्चिन्तं कुरु किङ्करम् ॥" इति मत्पूरितपरपादत्रयम्।

(श) अत्रेति। लुप्तविसर्गा वाक्यस्य दोषं जनयन्तीति शेषः। बहुतरविसर्गस्थितावपि दुःश्रवत्वमेव। यथा—

"अरः खरः खलः कान्तः कायः कोपधनः कृशः।
च्युतो मानोऽधिको रागी मोही जातोऽसवो गताः ॥"

एष तु असमस्तता नाम दोष इति सरस्वतीकण्ठाभरणकाराः।

(१) प्रयोगेण इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"धीरो वरो नरो याति।" (ख)।

"पल्लवाकृतिरक्तोष्ठी।" (छ)। अत्राकृतिपदमधिकम् (च)।

एवम्—"सदाशिवं नौमि पिनाकपाणिम्।" (क) इति विशेषणमधिकम् (ख)।

"कुर्य्यां हरस्यापि पिनाकपाणेः" (ग) इत्यत्र पिनाकपाणिपदं विशेषप्रतिपत्त्यर्थमुपात्तमिति (१) युक्तमेव (घ)।

---

(घ) आहतविसर्गताशब्दं व्युत्पादयति आहता इति। यत्र वाक्ये, तदाहतविसर्गं वाक्यं तस्य भाव आहतविसर्गता। एतेन ओत्वप्राप्तबहुविसर्गवत्त्वमाहतविसर्गतेति लक्षणमभिप्रेतम्। अस्य दूषकताबीजत्वादिकन्तु पूर्ववदूह्यम्।

(ख) आहतविसर्गतामुदाहरति धीर इति।

"धीरो वरो नरो याति समुज्ज्वलपरिच्छदः।
आकर्षन्निव रूपेण गुणेन च जयन्निव॥" इति-मत्पूरितत्रिपादं पद्यम्।

(छ) अधिकपदत्वं प्रदर्शयति पल्लवेति। तल्लक्षणन्तु—अनावश्यकपदवत्त्वमधिकपदत्वमिति। निरर्थकतादोषः पदगतः अयन्तु वाक्यगत इत्युभयोर्भेदः। अनावश्यकपदस्य सार्थक्यानुसन्धानेन विलम्बाद्विलम्बेन रसप्रतीतेरस्य दोषत्वम्। अयन्त्वनित्यो दोषः "गुणः क्वाप्यधिकं पदम्" इति वक्ष्यमाणेन प्रतिप्रसवात्।

"पल्लवाकृतिरक्तोष्ठी सरोजसदृशेक्षणा।
शरच्चन्द्रमुखी सा मे हृदि राज्यमुपार्जयत्॥" इति मत्पूरितपरत्रिपादं पद्यम्।

पल्लवाकृती पल्लवसदृशौ रक्तौ ओष्ठौ यस्याः सा तथोक्ता।

(च) अत्रेति। आकृतिपदाभावेऽपि "पल्लवमिव रक्तौ ओष्ठौ यस्याः सा पल्लवरक्तोष्ठी" इति बहुव्रीहिणैव तदर्थप्रतीतेरिति भावः।

(क) एवमिति। "विरिञ्चि-दामोदर-रुद्ररूपैः सृष्टिस्थितिप्रत्यवहारहेतुम्।
चिरन्तनं योगिगणैकलक्ष्यं सदाशिवं नौमि पिनाकपाणिम्॥"
इति मत्पूरितपूर्वत्रिपादं पद्यम्।

(ख) इतीति। विशेषणं पिनाकपाणिपदम्। अधिकमिति। तस्य सवार्हताया अप्रयोजकत्वादित्याशयः।

(ग) विशेषणस्य सार्थकस्थले तु न दोष इति दर्शयितुमुदाहरति कुर्य्यामिति।

"तव प्रसादात् कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा।
कुर्य्यां हरस्यापि पिनाकपाणेर्धैर्य्यच्युतिं के मम धन्विनोऽन्ये॥"
इति कुमारसम्भवे श्लोकसमुदायः।

---

(१) उपात्तत्वादिति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा वा—"वाचमुवाच कौत्सः।" (ङ)

अत्र वाचमित्यधिकम्, उवाचेत्यनेनैव गतार्थत्वात् (च)।

क्वचित्तु विशेषणदानार्थं तत्प्रयोगो युज्यते। यथा—"उवाच मधुरां वाचम्" इति (छ)।

केचित्त्वाहुः—यत्र विशेषणस्यापि क्रियाविशेषणत्वं सम्भवति, तत्रापि तत्प्रयोगो न घटते (ज)। यथा—

"उवाच मधुरं धीमान्" इति (झ)।

"यदि मय्यर्पिता दृष्टिः किं ममेन्द्रतया तदा॥" (ञ)

---

(घ) इत्यत्रेति। विशेषप्रतिपत्त्यर्थं हरस्य दुर्जयताबोधार्थम्, उपात्तं प्रयुक्तम्। युक्तमेवेति। तादृशदुर्जयस्यापि हरस्य जयेनात्मनोऽसाधारणवीरत्वसूचनादिति भावः।

(ङ) प्रकारान्तरेणाधिकपदतामुदाहर्त्तुमाह यथा वेति। रघुवंशपञ्चमसर्गे—

"अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतमना महर्षिः।
स्पृशन् करेणानतपूर्वकायं संप्रस्थितो वाचमुवाच कौत्सः॥"

(च) अत्रेति। गतार्थत्वात् श्रोतृभिरवगतविषयत्वात्, वचधातोरेव वचनोच्चारणार्थत्वादिति भावः।

(छ) क्वचिदिति। तत्प्रयोगो वचधातोः कर्मतया वागादेः प्रयोगः।

"उवाच मधुरां वाचं चकारातीव सत्क्रियाम्।
महान्तो हि विजानन्ति कर्त्तव्यं सभ्यसंसदि॥" इति मत्पूरितं परपादत्रयम्।

अत्र मधुरामिति विशेषणदानार्थं वाचमित्यस्य प्रयोगो युक्त इति नाधिकपदतादोष इति ग्रन्थकृन्मतम्।

(ज) केचिदिति। विशेषणस्यापि कर्मविशेषणत्वेनाभिमतस्यापि। तत्प्रयोगः क्रियासमानार्थक-कर्मपदप्रयोगः, न घटते न युज्यते; क्रियाविशेषणेनैव कर्मविशेषणार्थलाभात् क्रिययैव च तादृशकर्मार्थ-बोधनादनावश्यकतया अधिकपदताप्रसङ्गादिति तेषामाशयः। यत्रेत्यादिना क्वचित्तु तादृशकर्मविशेषणस्य क्रियाविशेषणत्वं न सम्भवतीत्यपि सूचितम्। यथा—

"वेदस्योवाच वाचं स शीघ्रमोघोपयोगिनीम्।" अत्र तु नाधिकपदतादोषः।

(झ) उक्तरीत्या निर्दोषं तन्मतीयमुदाहरणमाह उवाचेति। प्रागुक्तमेवात्रापि पूरणमूह्यम् एतेन "उवाच मधुरां वाचम्" इत्यत्रापि अधिकपदत्वमेवेति तेषां मतमिति बोध्यम्। "उवाच मधुरां वाचम्" इत्यतः "उवाच मधुरं धीमान्" इत्यस्य प्रतीतिवैषम्यमेव एतन्मतस्यास्वरसताबीजम्।

(ञ) न्यूनपदतामुदाहरति यदीति। तल्लक्षणन्तु—अनिर्येयान्वयिवाचकपदहीनवाक्यत्वं न्यूनपद-त्वम्। अत्रानिर्येयेत्यभिधानात् "यामि यद्यनुमन्यसे" इत्यादौ 'अहम्' 'त्वम्' इति कर्त्तृपदयोरनुक्तावपि उत्तमपुरुष-मध्यमपुरुषयोः प्रयोगेणैव तयोर्निश्चयान्न न्यूनपदत्वम्। अन्वयीत्युक्तेश्च वाक्यान्तरीयपदा-नभिधाने नास्य प्रसक्तिः। वाचकेत्यभिधानाच्च [illegible] नातिव्याप्तिः। अयमेवाध्याहार

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र प्रथमे त्वयेति पदं न्यूनम् (ट) ।

"रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन् ॥" (ठ)

अत्र लीलाशब्दः पुनरुक्तः (ड) ।

एवम्—"जक्षुर्विसं धृतविकाशिविसप्रसूनाः ।" (ढ)

अत्र विसशब्दस्य "धृतपरिस्फुटतत्प्रसूनाः" इति सर्वनाम्नैव परामर्शो युक्तः [ण] ।

हतवृत्तम्—लक्षणानुसरणेऽप्यश्रव्यम्, रसाननुगुणम्, [१] अप्राप्तगुरुभावान्तलघु च [त] । क्रमेण यथा—

---

इत्युच्यते । अनुक्तस्यान्वयिपदस्यानुसन्धानविलम्बेन रसप्रतीतिविलम्बादस्य दोषत्वम् । अयं पुनरनित्यो दोषः "उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः" इति वक्ष्यमाणेन प्रतिप्रसवात् ।

"व्यञ्जती याचितं रागं फुल्लपाथोजसन्निभा ।" इति मत्पूरितपूर्वार्द्धम् ।

(ट) अत्रेति । प्रथमे पादे, त्वयेति पदम् अपि तेतिक्रियायाः कर्त्तृभूतमित्यर्थः ।

(ठ) कथितपदताया उदाहरणमाह रतीति । तल्लक्षणन्तु—अभिन्नार्थकसमानानुपूर्वीकपदान्तरवद्वाक्यत्वं कथितपदत्वमिति । "स सुरभिं सुरभिम्" इत्यादौ भिन्नार्थत्वात् "रामो दाशरथिः" इत्यादौ च भिन्नानुपूर्वीकत्वान्न कथितपदत्वम् । एकस्यैव पदस्यासकृदुपादाने तदर्थानुसन्धानव्यग्रतया श्रोतुर्विलम्बेन रसप्रतीतेरस्य दोषत्वम् । अयमप्यनित्यो दोषः—"कथितञ्च पदं पुनः" इत्यादिना प्रतिप्रसवस्य वक्ष्यमाणत्वात् ।

"स्पृशन् सुमनसोऽशेषा लतामालिङ्ग्य नर्त्तयन् ।" इति मत्पूरितपूर्वार्द्धम् ।

सलीलं सखेलं वहन् अनिलो वायुः रतिलीलाश्रमं सुरतकेलिजनितपरिश्रमम्, भिन्ते नाशयति ।

(ड) अत्रेति । पुनरुक्तः रतिलीलेति सलीलमिति च वारद्वयमभिहितः अतएव कथितपदतादोष इति भावः ।

(ढ) प्रकारान्तरेणोदाहरणमाह एवमिति । शिशुपालवधपञ्चमसर्गे—

"सक्तुः पयः पपुरनेनिजुरम्बराणि जक्षुर्विसं धृतविकाशिविसप्रसूनाः ।
सैन्याः प्रियामनुपभोगनिरर्थकत्व-दोषप्रवादममृजन्नगनिम्नगानाम् ॥"

धृतानि विकाशीनि प्रस्फुटन्ति विसप्रसूनानि पद्मानि यैस्ते तादृशाः सैन्याः विसं मृणालं जक्षुर्भक्षितवन्तः । अत्र विसशब्दस्य द्विरुपादानात् कथितपदता ।

(ण) अत्रेति । सर्वनाम्नैव सर्वनामान्तर्गततच्छब्देनैव, परामर्शः उपस्थितिः । एवञ्च सति पुनर्विसशब्दानुपादानान्न कथितपदतादोष इत्याशयः ।

---

(१) रसानुगुणम् इति पुस्तकान्तरेष्वसङ्गतः पाठः, काव्यप्रकाशेऽपि रसानुगुणम् इत्येव पठितत्वात् तस्यैवोचितत्वात् ।

CC-0. Jangamwadi Math Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"हन्त ! सततमेतस्या हृदयं भिन्ते मनोभवः कुपितः ।" [थ]

"अयि ! मयि मानिनि ! मा कुरु मानम् ।" [द]

इदं वृत्तं हास्यरसस्यैवानुकूलम् [ध] ।

"विकसित-सहकार-भार-हारि-परिमल एष समागतो वसन्तः ॥" [न]

यत्पादान्ते लघोरपि गुरुभाव उक्तः, तत् सर्वत्र द्वितीयचतुर्थपाद-विषयम् । प्रथमतृतीयपादविषयन्तु वसन्ततिलकादेरेव [प] ।

(त) हतवृत्ततामाह हतेति । छन्दोगतदोषवत्त्वं हतवृत्तत्वमिति हतवृत्ततायाः सामान्यलक्षणम् । छन्दोवैरूप्ये च श्रोतुर्विरक्तिजननात् रसप्रकर्षनाशेनास्य दोषत्वम् । एवञ्च नित्य एवायं दोषः प्रतिप्रसवासम्भवेन सर्वदैव हेयत्वात् । तच्च त्रिविधम्—लक्षणानुसरणेऽपि तत्तच्छन्दसः पूर्णलक्षणानुगमनेऽपि अश्रव्यम् अश्रुतिमधुरम्, रसस्य प्रकृतरसादेः अननुगुणम् अननुकूलम्, तथा न प्राप्तौ गुरुभावौ गुरुत्वं येन सः अप्राप्तगुरुभावो वर्णः अन्ते पादसमाप्तिभे देशे लघुर्यस्य वाक्यस्य तत्तथोक्तञ्च वाक्यं हतवृत्तमित्यन्वयः । हतवृत्तमित्यत्रापि हतं वृत्तं छन्दो यस्येति बहुव्रीहिणा उक्तोऽन्वयः सूपपन्न एवेति भाव्यम् ।

(थ) तत्र "लक्षणानुसरणेऽप्यश्रव्यम्" इत्यस्योदाहरणमाह हन्तेति ।

"शून्यमिदमनुभवन्त्या भुवनं दूरगतदयितायाः ॥" इति मत्पूरितपरार्द्धम् ।

कुपितो मनोभवः कामः, एतस्या नायिकाया हृदयं सततमेव भिन्ते विदारयति व्यथयतीत्यर्थः । अत्र "यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥" इत्युक्तार्यालक्षणानुसरणेऽपि प्रथमपादे सहसा अनुष्टुभ इव प्रतीतिः, हठाच्च द्वितीयपादे आर्याप्रकारोपस्थितिरिति वैरूप्यादश्रव्यतया हतवृत्तत्वम् ।

(द) रसाननुगुणमित्येतदुदाहरति अयीति । अस्य मत्पूरणीयं परपादत्रयं यथा—

"अयि ! मयि मानिनि ! मा कुरु मानं पतति पदेऽयं न भवतु यानम् ।
कति कति सहिता मन्मथपीडास्तदपि न याता मानक्रीड़ा ॥"

(ध) इदमिति । वृत्तं पज्झटिका नाम च्छन्दः, हास्यरसस्यैव अनुकूलं परिपोषकम्, न पुनरन्यशृङ्गाररसस्येति छन्दोवैरूप्यात् हतवृत्तता । इदमानुकूल्यमनानुकूल्यञ्च श्रोतुरेव प्रतीतिसाक्षिकमिति हेतुर्नोक्तः । अतएव च प्रतीतिसाक्षिकत्वादाह नागोजिभट्टः—"करुणे पुष्पिताग्रादीनाम्, शृङ्गारादौ पृथ्वीस्रग्धरादीनाम्, वीरे शिखरिणीमन्दाक्रान्तादीनाम्, हास्ये च दोधकस्य आनुगुण्यम् ।" इति ।

(न) अप्राप्तगुरुभावान्तलघुत्वे उदाहरति विकसितेति । अस्य मत्पूरितपूर्वार्द्धं यथा—

"अलिकुलसङ्कुलितः सुमञ्जुकुञ्जः परभृतकूजितपूर्णकाननान्तः ।"

विकसितस्य सहकारभारस्य आम्रकुसुमसमूहस्य हारी मनोहरः परिमलः सौरभं यस्मिन् स तादृशः, एष वसन्तः, कालः समागतः ।

"अयुजि नयुगरेफतो यकारः" इत्यनेन पुष्पिताग्राछन्दसः प्रथमतृतीयपादयोरन्तिमाक्षरस्य यगणान्तिमत्वेन गुरुत्वावश्यकत्वात् अत्र च तदभावात् हतवृत्तता ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(प) ननु 'हारि' इत्यत्र ह्रस्वस्यापि इकारस्य पादान्तगततया विकल्पेन गुरुत्वप्राप्तेः—"अयुजि नयुगरेफतो यकारः" इति लक्षणसमन्वयेऽपि कथं हतवृत्तत्वमित्याह यदिति । उक्तः—

"संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसम्मिश्रम् । विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन ॥"

इत्यादिना छन्दःशास्त्रकारैरिति शेषः । सर्वत्र सर्वेषु छन्दःसु । "वसन्ततिलकादेरेव" इत्यत्र आदिपदेन इन्द्रवज्रोपेन्द्रवज्रा-मालिनी-प्रहर्षिणी-शार्दूलविक्रीडितप्रभृतीनां ग्रहणम् । एषां हि प्रथमतृतीयपादयोरपि अन्तिमवर्णस्य लघुत्वे उदाहृतवन्न श्रुतिशैथिल्यमुपलभ्यते इति न तत्र लघुवर्णप्रयोगेऽपि हतवृत्तता । येषां पुनरार्या-पज्झटिका-तोटक-पुष्पिताग्रा-भुजङ्गप्रयातादीनां प्रथमतृतीयपादयोरन्तिमवर्णस्य लघुत्वेन उदाहृतवत् श्रुतिशैथिल्यमुपलभ्यते, तेषां तत्र तत्प्रयोगे हतवृत्तत्वमेव ।

केचित्तु "आदिपदेन इन्द्रवज्रोपेन्द्रवज्रयोः संग्रहः" इति वदन्ति । तदसत्, अन्येषामपि प्रथमतृतीयपादयोरन्तिमवर्णलघुत्वस्य बहुलमुपलम्भात् । तथा च—

"विकचनवकुसुम्भस्वच्छसिन्दूरभासा प्रबलपवनवेगोद्भूतवेगेन तूर्णम् ।
तटविटपलताग्रालिङ्गनव्याकुलेन दिशि दिशि परिदग्धा भूमयः पावकेन ॥"

इति ऋतुसंहारे प्रथमसर्गे २४श श्लोके मालिन्यां तृतीयपादान्तिमवर्णस्य लघुत्वम् ।

"उत्पुष्यद्‌गलधूलिनिस्फुटप्रसर्पत् प्रत्यग्रव्रतजभरीनिवासपाद्यः ।
दर्पांशुप्रचुरमधु स्मितस्फुटश्रि-चक्राजार्चितचरणः शिवः प्रमाणम् ॥"

इति महावीरचरिते षष्ठाङ्के १४श श्लोके प्रहर्षिण्यां तृतीयपादान्तिमवर्णस्य लघुत्वम् ।

"अस्मिन् दिग्विजयोद्यते पतिरयं मे स्यादिति ध्यायति कम्पं सात्त्विकभावमञ्चति रिपुक्षोणीन्द्रदारा धरा ।
अस्यैवाभिमुखं निपत्य समरे यास्यन्तिरूर्ध्वं निजः पन्था भास्वति दृश्यते विस्मयः प्रत्यर्थिभिः पार्थिवैः ॥"

इति नैषधे द्वादशसर्गे २९श श्लोके शार्दूलविक्रीडिते प्रथमपादान्तिमवर्णस्य लघुत्वम् ।

मृच्छकटिकानवमाङ्कस्थे ४२ श्लोके तृतीयचरणान्तिमाक्षरस्य लघुत्वम् ।

मृच्छकटिकादशमाङ्के १३ श्लोके प्रथमतृतीययोरुभयोरेवान्तिमाक्षरस्य लघुत्वम् ।

"द्रव्यं लब्धं द्यूतेनैव दारा मित्रं द्यूतेनैव । दत्तं भुक्तं द्यूतेनैव सर्वं नष्टं द्यूतेनैव ॥" इति मृच्छकटिकद्वितीयाङ्के प्रथमतृतीयपादयोरन्तिमाक्षरस्य लघुत्वम् ।

"मा गाः प्रत्युपकारकातरतया वैवर्ण्यमाकर्ण्य हे कर्णाटवसुन्धराधिप ! सुधासिक्तानि सूक्तानि मे" इति कर्णाटवर्णने प्रथमचरणान्तिमाक्षरस्य लघुत्वम् ।

"भोक्ता शक्तिधरः कुमारनिपुणो वस्त्राणि विश्वस्तव
शम्भो ! किं भवितेति चिन्तितवती पायादसौ पार्वती ॥"

इति कातन्त्रपरिशिष्टटीकायां तृतीयचरणान्तिमाक्षरस्य लघुत्वम् ।

इत्थमन्यत्रापि नवीनकवीनां प्रबन्धेष्वपि च प्रचुरमेव परिलक्षणीयम् ।

अथ तेष्वपि हतवृत्तत्वमेव ब्रूमः । अहो साहसम् ! तदेवं हतवृत्तताभारेण महाकवीनमूनभिहत्य वरमात्ममति-परित्यक्त नैव आदिपदस्य [illegible] "आदिपदेन [illegible] संग्रहः" इति ।

CC-0 ... Digitized by ... Kosha

अत्र "प्रमुदितसौरभ आगतो वसन्तः" इति पाठो युक्तः [फ] ।

यथा वा—[ब]

"अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
सम्भाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलात्
दृष्टे यत्र पतन्ति मूढ़मनसामस्त्राणि वस्त्राणि च ॥" [भ]

अत्र "वस्त्राणि च" इति बन्धस्य श्लथत्वस्रुतिः । "वस्त्राण्यपि" इति पाठे तु दार्ढ्यमिति न दोषः [म] । 'इदमप्राप्तगुरुभावान्तलघु' इति काव्यप्रकाशकारः [१] [य] । 'वस्तुतस्तु लक्षणानुसरणेऽप्यश्रव्यम्' इत्यन्ये [२] [र] ।

(फ) अत्रेति । "संयुक्ताद्यं दीर्घम्" इति न्यायेन संयोगात् प्राग्वर्त्तिनो वर्णस्य लघोरपि गुरुत्वातिदेशात् प्रशब्दपूर्ववर्त्तित्वेन 'हारि' इति रूपस्य इकारस्य गुरुत्वभावेन हतवृत्ततादोषासम्भवादित्याशयः ।

(ब) ननु "यत्पादान्ते लघोरपि" इत्यादिना यदुक्तं तत् सर्वमेव प्रमाणहीनम् । महाकविनिबन्धेषु उक्तप्रकारदर्शनमेव प्रमाणमिति चेन्न उदाहृतश्लोकेषु तद्व्यभिचारस्यापि दर्शनात् । किञ्च, "विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन" इत्यतिदेशवाक्यस्य सामान्यमुखप्रवृत्ततया सर्वेषामेव पादानामन्तिमलघुवर्णस्य गुरुत्वभावे प्राप्ते "विकसितसहकारहारि" इत्यन्तिमलघुवर्णस्यापि गुरुत्वभावात् कुतो नाम हतवृत्ततायाः प्रसङ्ग इत्यत उदाहरणान्तरे प्रकारान्तरेण हतवृत्ततां दर्शयितुमाह यथा वेति ।

(भ) अन्या इति । ताः, गुणाः शौर्य्यसौन्दर्य्यादय एव रत्नानि तेषां रोहणभुव उत्पत्तिक्षेत्राणि, अन्याः साधारणविलक्षणाः ; धन्या पुण्यवती सा मृत् एतद्देहोपादानभूता मृत्तिका, अन्यैव साधारणमृत्तिकाविलक्षणैव ; ते खलु सम्भारा जलाद्युपकरणान्यपि, अन्य एव साधारणविलक्षणा एव ; यैर्गुणरत्नरोहणभूप्रभृतिभिस्त्रिभिः करणैः, विधिना कर्त्रा, एष युवा सृष्टो निर्म्मितः । यत्र यूनि दृष्टे सति, मूढ़मनसां भयेन कामवेगोदयेन च कर्त्तव्याकर्त्तव्यज्ञानहीनात्मनाम्, श्रीमत आयुष्मतः अस्य यूनः कान्तिं समरारम्भकालीनवीरश्रीमां स्वाभाविकसौन्दर्य्यञ्च जुषन्ते सेवन्ते मनसा अनुभवन्तीति तेषां तासाञ्च, द्विषां शत्रूणां करतलात् अस्त्राणि पतन्ति ; स्त्रीणाञ्च नितम्बस्थलात् वस्त्राणि पतन्ति । महावीरः परममनोहरश्चैष युवेति भावः ।

(म) अत्र हतवृत्ततां प्रतिपादयितुमाह अत्रेति । बन्धस्य लघुवर्णेन रचितान्तिमभागस्य श्लथत्वस्रुतिः लघुवर्णस्वभावादुपान्ते संयोगाभावाच्च शैथिल्यश्रवणम् । तथा च शार्दूलविक्रीड़िते वृत्ते अन्तिमवर्णस्य गुरुत्वनियमेन दृढ़त्वश्रवणावश्यकत्वादत्र तु तदभावात् हतवृत्ततेति भावः । समाधानमाह—वस्त्राण्यपीति । दार्ढ्यम् उपान्ते संयुक्तवर्णसत्त्वाद्दृढ़त्वस्रुतिः, इति हेतोर्न दोष न हतवृत्तता ।

(१) काव्यप्रकाशकारपादाः इति क्वचित् पाठः । (२) अश्रव्यत्वम् इति पुस्तकान्तरे पाठः ।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"प्रोज्ज्वलज्ज्वलनज्वाला-विकटोरुसटाच्छटः ।
श्वासक्षिप्तकुलक्ष्माभृत् पातु वो नरकेशरी ॥" (ल)

अत्र क्रमेणानुप्रासप्रकर्षः पतितः (व) ।

"दलिते उत्पले एते अक्षिणी अमलाङ्गि ! ते" ॥ (श)

---

(य) आप्ततरमतं प्रमाणयति इदमिति। काव्यप्रकाशे इदमित्यादिपाठादर्शनात् अप्राप्तगुरुभावान्त-लघुस्थले एतस्योदाहरणाच्च इति काव्यप्रकाशकारो मन्यत इत्यर्थः ।

(र) ये तु हतवृत्ततायाः अपरभेदद्वयमनावश्यकं मन्यमानाः सकलसंग्रहोपपत्तेः केवलं लक्षणानु-सरणेऽप्यश्रव्यतारूपं भेदमेवाङ्गीकुर्वन्ति तन्मतमाह वस्तुतस्त्विति ।

इदमवालोचनीयम्—"यत्पादान्ते लघोरपि गुरुभाव उक्तः" इत्यादिनियमाभिधानमकिञ्चित्करम्, तादृशनियमप्रमाणाभावात्, "विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन" "गुरुः पादान्तगोऽपि वा" इति सामान्य-शास्त्रस्य विना कारणं सङ्कोचकल्पनापत्तेः, उक्तनियमेन चतुर्थचरणान्तिमाक्षरतया गुरुत्वावश्यम्भावेऽपि लघुत्वाभिप्रायेण "वस्त्राणि च" इत्यत्र आत्मन एव हतवृत्ततादोषप्रदर्शनानुपपत्तेः, तथैव तु गुरुत्वावश्यम्भावेऽपि "इदमप्राप्तगुरुभावान्तलघु" इत्याप्ततरकाव्यप्रकाशकारमतेन सह दुर्निवारविरोधप्रसङ्गाच्च । अतः "यत्पादान्ते" इत्याद्यभिधानन्तु प्रायिकत्वेन प्रदर्शनमात्रपरम् । सर्वेष्वेव छन्दःसु सर्वेषामेव पादानामन्तिमलघुवर्णस्य विकल्पेन गुरुत्वमेव । तत्र च वर्णविशेषस्वभावात् शैथिल्यश्रवणे हतवृत्ततादोषः, दृढत्वश्रवणे तु नासौ दोष इत्यत्रत्यग्रन्थपर्यालोचनादभ्रान्त एव सिद्धान्तः । तेन च 'भारहारि' 'वस्त्राणि च' इत्युभयत्रापि पादान्त-गतत्वेन गुरुत्वसम्भवेऽपि स्वल्पप्राणवर्णतया शैथिल्यश्रवणादेव हतवृत्ततादोष इति सर्वमवदातम् ।

कण्ठाभरणकारस्तु यतिभङ्गमपि दोषान्तरत्वेनाह स्म । यथा—

"अस्थाने विरतिर्यस्य तत्तु भग्नयतीष्यते ।"

(ल) पतत्प्रकर्षतामुदाहरति प्रोज्ज्वलदिति । तल्लक्षणन्तु क्रमिकप्रकर्षहीनत्वम् । क्रमिकप्रकर्ष-ह्रासेन श्रोतुरानन्दस्यापि क्रमिकह्रासात् रसप्रकर्षहानेरस्य दोषत्वम् । अयमनित्यो दोषः, "पतत्प्रकर्षता तथा" इत्यनेन क्वचिद्गुणतया वक्ष्यमाणत्वात् ।

प्रोज्ज्वलत उद्दीप्यमानस्य ज्वलनस्य वह्नेः ज्वाला शिखेव विकटा भीषणा उर्वी महती च सटाच्छटा जटासमूहो यस्य सः । तथा श्वासेन निश्वासवायुना क्षिप्ता दूरं नीताः कुलक्ष्माभृतः कुलपर्वता येन सं तादृशो नरकेशरी नरसिंहरूपी भगवान् वो युष्मान् पातु रक्षतु ।

(व) अत्रेति । तथा च प्रथमे चरणे एकविधैरेव त्रिभिः संयुक्तज्वकारैर्घटितोऽनुप्रासः परम-मनोहरः, द्वितीये त्रिभिरसंयुक्तटकारैर्विहित इति पूर्वस्मात् किञ्चिदपकृष्टः तृतीये च संयुक्तक्षकार-द्वयेन घटित इति द्वितीयादपि निकृष्टः, चतुर्थे च पुनः केवलरेफद्वयेन घटित इति तृतीयादप्यपकृष्ट इति भावः ।

(श) सन्धिविश्लेषोदाहरणमाह दलिते इति । तत्र सन्धिविहीनत्वमेव सन्धिविश्लेषः । स च त्रिविध

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवंविधसन्धिविश्लेषस्य असकृत् प्रयोग एव दोषः । अनुशासनमुल्लङ्घ्य वृत्तभङ्गभयमात्रेण सन्धिविश्लेषस्य तु सकृदपि (ष) । यथा—

"वासवाशामुखे भाति इन्दुश्चन्दनबिन्दुवत् ॥" (स)

"चलण्डामरचेष्टितः ।" इति (ह) ।

---

सत्त्वे असकृत्प्रयुक्तः, विधिसत्त्वे तु सकृदप्यप्रयुक्तश्चेति द्विविधः । ईदृशे च सन्धिविश्लेषे श्रोतुः कथमिव विरक्तिरुपजायत इति रसप्रकर्षनाशाद्दोषत्वम् । एष तु नित्य एव दोषः प्रतिप्रसवाभावात् ।

"मुखं पूर्णः शरच्चन्द्रो मृणालञ्च भुजद्वयम् ।" इति मत्पूरितपूर्वार्द्धम् ।

हे अमलाङ्गि ! ते तव एते अक्षिणी चक्षुषी, दलिते प्रस्फुटिते उत्पले नीलोत्पलयुगलस्वरूपे इत्यर्थः । अत्र पदान्तरप्रयोगेणैवेष्टार्थबोधनसम्भवेऽपि निषेधसत्त्व एव सन्ध्यकरणात् सन्धिविश्लेषः ।

(ष) अनुभवसिद्धां व्यवस्थामाह एवंविधेति । सकृदपि सकृत्प्रयोगेऽपि दोष इत्यनुषज्यते । तथैव श्रोतुर्वैमनस्यापातादित्यभिप्रायः ।

(स) द्वितीयप्रकारं सन्धिविश्लेषमुदाहरति वासवेति । अस्य मत्पूरितपूर्वार्द्धं यथा—

"राजते तारकाराजी रत्नराशिरिवाम्बरे ।"

वासवाशामुखे पूर्वदिशः उपरिभागे इन्दुश्चन्द्रः चन्दनबिन्दुवत् भाति ; इदानीमपि पादपान्तरितापरांशतया कियदंशस्यैव प्रकाशादिति भावः ।

अत्र 'भाति इन्दुः' इत्यत्र सन्धिप्राप्तावपि तदकरणात् सन्धिविश्लेषः । न च तथात्वे च्युतसंस्कारतैवास्तामिति वाच्यम्—

"संहितैकपदे नित्या नित्या धातूपसर्गयोः । सूत्रेष्वपि तथा नित्या सैवान्यत्र विभाषया ॥"

इत्युक्तेभिन्नपदे सन्धेर्वैकल्पिकत्वेन व्याकरणलक्षणहीनत्वाभावात् । एवञ्च "अनुशासनमुल्लङ्घ्य" इति वृत्तिपङ्क्तेः पक्षे प्राप्तमप्यनुशासनमतिक्रम्येत्यर्थः । एतेन "अत्र नित्यं संहितैकपदवत्पादेष्वर्द्धान्तवर्जम्" इत्यनुशासनात् "पद्ये सन्धेर्नित्यत्वमिति तल्लङ्घनाद्दोषः" इति रामचरणोक्तमपास्तम् । तथात्वे च्युतसंस्कारताया दुर्निवारत्वात् । किञ्च नित्यं संहितेति नित्यसंहितासम्भवप्रदर्शनपरम्, न तु नित्यमेव सन्धिविधानपरम् । अन्यथा "अथ प्रदोषे दोषज्ञः संवेशाय विशाम्पतिम्" इत्यादावपि सन्धेर्नित्यत्वे विसर्गस्थित्या सन्धिविश्लेषदोषापत्तिः ।

(ह) सन्ध्यश्लीलतामुदाहरति चलेति । सन्धिनैव घटिता अश्लीलता सन्ध्यश्लीलता । एतेन पदांशगताश्लीलतादोषादस्य भेदोऽपि दर्शितः । न च पदांशगता अश्लीलता सन्धिघटिता । ईदृशपदश्रवणेन श्रोतुर्वैमनस्यापातात् रसप्रकर्षनाशिनास्य दोषत्वम् । अयन्तु अनित्यो दोषः, "सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः" इति वक्ष्यमाणेन सामान्याश्लीलताया एव गुणत्वेन प्रतिप्रसवात् ।

"वेगादुड्डीय गगने चलण्डामरचेष्टितः ।
अयमुत्पतते पत्री ततोऽत्रैव रुचिङ्कुरु ॥" इति काव्यप्रकाशे पूर्णं पद्यम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चलन् भ्रमन्, डामरमुद्धतं चेष्टितं कार्य्यं यस्य सः ।

अत्र सन्धौ जुगुप्साव्यञ्जकमश्लीलत्वम् (च)।

"उर्व्यसावत्र तर्वालो मर्वन्ते चार्ववस्थितिः।" (क)

अत्र सन्धौ कष्टत्वम् (ख)।

"इन्दुर्विभाति कर्पूरगौरैर्धवलयन् करैः।
जगन्मा कुरु तन्वङ्गि! मानं पादानते प्रिये॥" (ग)

---

(च) अत्रेति। सन्धौ सति। तथा च चलन् डामरचेष्टित इत्यत्र सन्धिनिष्पन्नस्य चलण्डामरशब्दस्य अन्तर्गतो लण्डाशब्दः प्रगाढं दीर्घाकारं पुरीषं बोधयतीति जुगुप्साव्यञ्जकत्वमिति भावः।

अत्रार्थे क्लीवलिङ्गोऽपि लण्डशब्दो दृश्यते। यथा श्रीभागवते—

"समेधमानेन स कृष्णबाहुना निरुद्धवायुश्चरणांश्च निक्षिपन्।
प्रस्विन्नगात्रः परिवृत्तलोचनः पपात लण्डं विसृजन् क्षितौ व्यसुः॥"

व्रीडाव्यञ्जकसन्ध्यश्लीलता यथा—अत्रैव पद्ये रुचिं कुरु इत्यत्र सन्धिनिष्पन्नस्य रुचिङ्कुरु इति शब्दस्य अन्तर्गतः 'चिङ्कु' इति शब्दो देशविशेषे स्त्रीणां योनिदेशान्तर्गतमवयवविशेषं बोधयतीति व्रीडाव्यञ्जकं सन्ध्यश्लीलत्वम्। एवमेव काव्यप्रकाशटीकायां महेश्वरः।

अमङ्गलव्यञ्जकं सन्ध्यश्लीलत्वं यथा—"श्रयति चिरमरणं दुर्बलः।" अत्र चिरम् अरणम् इत्यत्र सन्धिनिष्पन्नस्य चिरमरणशब्दस्य अन्तर्गतो मरणशब्दः अमङ्गलं व्यनक्तीति।

(क) सन्धिकष्टतामुदाहरति उर्व्यसाविति। सन्धिनैव घटिता कष्टता सन्धिकष्टता। अत्रापि पूर्ववदेव क्लिष्टत्वदोषाद्भेदः समुन्नेयः। सन्धिवशेनार्थप्रतीतिविलम्बात् रसप्रतीतेरपि विलम्बेन तत्प्रकर्षनाशादस्य दोषत्वम्। अयमप्यनित्यो दोषः,—"वैयाकरणमुख्ये तु" इत्यादिना क्वचित् प्रतिप्रसवस्य वक्ष्यमाणत्वात्।

"नात्रजु युज्यते गन्तुं शिरो नमय तन्मनाक्॥" इति काव्यप्रकाशे पराईम्।

अत्र मरोर्मरुभूमेः, अन्ते प्रान्तदेशे, चारुर्मनोहरा अवस्थितिरवस्थानं यस्याः सा, असौ दृश्यमाना उर्वी महती, तरूणाम् आली वृक्षाणां श्रेणी, वर्त्तत इति शेषः।

(ख) अत्रेति। संन्धौ सति, कष्टत्वम् अर्थबोधे श्रोतुः क्लिष्टत्वम्। अतः सन्धिकष्टतादोष इत्याशयः।

(ग) अर्द्धान्तरैकपदतामुदाहरति इन्दुरिति। तल्लक्षणन्तु स्वावस्थानार्द्धादपरार्द्धसन्निविष्टैकमात्रपदवद्वाक्यत्वमर्द्धान्तरैकपदत्वमिति। अत्र मात्रपदादर्द्धान्तरे अनेकपदसत्त्वे नायं दोष इति बोध्यम्। एकार्द्धावस्थितवाक्यस्य एकस्मिन् पदे अपरार्द्धावस्थिते तदनुसन्धानेन श्रोतुर्विलम्बाद्विलम्बेन रसप्रतीतिरिति दोषत्वमस्य। अयन्तु नित्यो दोषः प्रतिप्रसवासम्भवात्। एष च पूर्वार्द्धवाक्यघटकैकपदस्य परार्द्धे पाठे, परार्द्धवाक्यघटकैकपदस्य च पूर्वार्द्धे पाठे सम्भवतीति द्विविधः। एवमयं पद्य एव सम्भवति गद्ये अर्द्धनियमाभावात्।

अत्र प्रथमप्रकारे उदाहरणम् इन्दुरिति। इन्दुश्चन्द्रः कर्पूरवत् गौरैः शुभ्रैः करैः रश्मिभिः जगत् धवलयन् धवलीकुर्वन् सन् विभाति। अतएव हे तन्वङ्गि! पादानते प्रिये मयि मानं मा कुरु।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र जगदिति प्रथमार्द्धे पठितुमुचितम् (घ) ।

"नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः ।
पतन्ति शशिनः पादा भासयन्तः क्षमातलम् ॥" (ङ)

अत्र चतुर्थपादो वाक्यसमाप्तावपि पुनरात्तः (च) ।

अभवन्मतसम्बन्धो यथा—(छ)

"या जयश्रीर्मनोजस्य यया जगदलङ्कृतम् ।
यामेणाक्षीं विना प्राणा विफला मे कुतोऽद्य सा ॥" (ज)

---

अत्र प्रथमार्द्धगतवाक्यघटकीभूतस्य 'जगत्' इत्येकमात्रपदस्य परार्द्धे पाठादर्द्धान्तरैकपदता ।

द्वितीयप्रकारे यथा—"बाले ! ललितवल्लीयम् आश्लिष्यति तरुन्तु माम् ।
अरावसन्नमासन्नं कथं नाश्लिष्यसि प्रियम् ॥"

अत्र मत्प्रणीतपद्ये द्वितीयार्द्धगत-वाक्यघटकीभूतस्य मामित्येकपदस्य द्वितीयार्द्ध एव पाठो युक्तः ।

(घ) अत्रेति । तथा पाठे च नासौ दोष इति भावः ।

(ङ) समाप्तपुनरात्ततामुदाहरति नाशयन्त इति । तल्लक्षणन्तु समाप्तवाक्यस्ययत्किञ्चित्पदविशेषण-तया पदान्तरोपादानम् । वाक्यस्य समाप्तत्वञ्च विवक्षितकारकादिलाभेन निराकाङ्क्षत्वमेव । समाप्तस्य पुन-रात्तत्वे पुनरप्याकाङ्क्षोदयेन तदन्वयिपदानुसन्धानविलम्बात् रसप्रतीतिविलम्बेनास्य दोषत्वम् । अयन्तु अनित्यो दोषः, "समाप्तपुनरात्तत्वं न दोषो न गुणः क्वचित्" इत्यनेन क्वचित् प्रतिप्रसवस्य वक्ष्यमाणत्वात् । एष तु क्वचित् कर्तृपदस्य क्वचित् कारकान्तरस्य क्वचित् सम्बन्धिपदस्य च विशेषणतया पदान्तरोपादानात् सम्भव-तीति बहुविधः ।

तत्र कर्तृपदविशेषणतया पदान्तरोपादाने यथा नाशयन्त इति । शशिनश्चन्द्रस्य पादाः किरणाः, घन-ध्वान्तं निविडान्धकारं नाशयन्तः, वियोगिनो जनान् तापयन्तः, क्षमातलं भूतलं भासयन्तः प्रकाशयन्तश्च सन्तः पतन्ति ।

(च) अत्रेति । चतुर्थपादश्चतुर्थपादगतं भासयन्त इति पदम् । पुनरात्तः पादा इत्यस्य विशेषणतया पुनः प्रयुक्तः । अतएवात्र समाप्तपुनरात्ततेति भावः ।

कर्मविशेषणतया पदान्तरोपादाने यथा मम—

"स्मितस्नपितदन्ताली माश्लेषप्रसरद्भुजाम् । प्रेयसीं चुम्बति प्रेयान् रोमाञ्चितकलेवराम् ॥"

अत्र वाक्यसमाप्तावपि कर्मविशेषणतया पुनश्चतुर्थपादपदोपादानात् समाप्तपुनरात्तत्वम् । एवमन्यत्रा-प्यूह्यम् ।

(छ) अभवन्मतसम्बन्धतां दर्शयति अभवन्मतेति । एतत्पदस्य व्युत्पत्तिस्तु प्रागेव दर्शिता । लक्षणन्तु पदविशेषस्य अभिमतसम्बन्धानुपपत्तिमद्वाक्यत्वमभवन्मतसम्बन्धत्वमिति । वक्तुरभिमतसम्बन्धानुपपत्त्या श्रोतु-र्वैमनस्योदयेन रसप्रकर्षनाशादस्य दोषत्वम् । नित्य एवायं दोषः प्रतिप्रसवाभावात् । एष तु क्वचिदाकाङ्क्षा-विरहेण क्वचिद्वा प्रयुक्तपदस्य योग्यताया अभावेन अभिमतसम्बन्धानुपपत्तौ सम्भवतीति द्विविधः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र यच्छब्दनिर्दिष्टानां वाक्यानां परस्परनिरपेक्षत्वात् तदेकान्तःपातिना एणाक्षीशब्देन अन्येषां सम्बन्धः कवेरभिमतो नोपपद्यत एव (झ)।

"यां विनामी वृथा प्राणा एणाक्षी सा कुतोऽद्य मे।" (ञ)

इति तच्छब्दनिर्दिष्टवाक्यान्तःपातित्वे तु सर्वैरपि यच्छब्दनिर्दिष्टवाक्यैः सम्बन्धो घटते (ट)।

यथा वा—(ठ)

"ईक्षसे यत् कटाक्षेण तदा धन्वी मनोभवः॥" (ड)

अत्र यदित्यस्य तदेत्यनेन सम्बन्धो न घटते (ढ)। "ईक्षसे चेत्" इति तु युक्तः पाठः (ण)।

---

(ज) तत्रायमुदाहरति येति। या मनोजस्य कामदेवस्य जयश्रीर्विजयलक्ष्मीः, यया जगदलङ्कृतम्, याम् एणाक्षीं हरिणलोचनां विना मे मम प्राणाः विफलाः, अद्य सा कुतः कुत्र वर्त्तते ?।

(झ) उदाहृते अभवन्मतसम्बन्धतामुपपादयितुमाह अत्रेति। यच्छब्देन निर्दिष्टानां चिह्नितानाम्। परस्परनिरपेक्षत्वादन्योन्याकाङ्क्षाविरहात्। अयन्तु नोपपद्यत एवेत्येतत् प्रति हेतुः। तेषु वाक्येषु मध्ये एकस्य वाक्यस्य अन्तःपातिना अन्तर्गतेन। अन्येषां वाक्यानाम्। तथा च "या एणाक्षी मनोजस्य जयश्रीः, यया एणाक्ष्या जगदलङ्कृतम्, यामेणाक्षीं विना मे प्राणा विफलाः" इत्थं सर्वत्र यच्छब्दविशेष्यविधया एणाक्षीशब्दसम्बन्धः कवेरभिमत इति एकत्र एणाक्षीशब्दोपन्यासादेव प्रतीयते ; स तु सम्बन्धः वाक्यानां परस्पराकाङ्क्षाविरहात् एणाक्षीमिति द्वितीयाविभक्तिनिर्देशाच्च न घटत इत्यभवन्मतसम्बन्धतादोष इति भावः।

(ञ) यादृशपाठेन एणाक्षीशब्दस्य सर्वत्र सम्बन्धो घटते तादृशपाठमाह यामिति।

(ट) इतीति। तच्छब्दनिर्दिष्टवाक्यान्तःपातित्वे प्रदर्शितप्रकारेण एणाक्षीशब्दस्य तच्छब्दान्वितवाक्यान्तर्गतत्वे तु सति। सम्बन्धो घटत इति। "यत्तदोर्नित्यः सम्बन्धः" इति न्यायेन परस्पराकाङ्क्षासत्त्वात्, तच्छब्दविशेष्यभूतपदार्थस्य सर्वयच्छब्दानामेव विशेष्यत्वसम्भवादिति भावः। अतएव "यां विनामी" इत्यादिपरिवर्त्तितपाठे नाभवन्मतसम्बन्धतादोष इति बोध्यम्।

(ठ) प्रयुक्तपदस्य योग्यताया अभावेनाभिमतसम्बन्धानुपपत्तौ द्वितीयप्रकाराभवन्मतसम्बन्धतामुदाहर्त्तुमाह यथा वेति।

(ड) ईक्षस इति। "सन्निधत्से यदा कान्ते! सन्निधत्तेऽप्यसौ तदा।" इति मत्पूरितपूर्वार्द्धम्। यद्यदा त्वं कटाक्षेण ईक्षसे जनं पश्यसि, तदा तं प्रति मनोभवः कामदेवो धन्वी धनुर्धारी भवति।

(ढ) अत्रेति। यदित्यस्य प्रथमान्ततया कालार्थकतत्प्रत्ययान्तेन सहान्वये योग्यताया अभावादित्याशयः। अतएव ईक्षसे यदित्यादावपि अभवन्मतसम्बन्धतादोषः।

(ण) उक्तदोषसमाधानप्रकारं दर्शयति ईक्षसे चेदिति। युक्तः पाठ इति। चेदित्यस्य यद्यर्थकतया तदेत्यनेन सम्बन्धस्य सुघटत्वादित्यभिप्रायः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा वा—(त)

"ज्योत्स्नाचयः पयःपूरस्तारकाः कैरवाणि च।
राजति व्योमकासार-राजहंसः सुधाकरः॥" (थ)

अत्र व्योमकासारशब्दस्य समासे गुणीभावात्तदर्थस्य न सर्वैः संयोगः (द)। विधेयाविमर्शे यदेवाविमृष्टं तदेव दुष्टम्। इह तु प्रधानस्य कासारपदार्थस्य प्राधान्येनाप्रतीतिः सर्वोऽपि पयःपूरादिशब्दार्थस्तदङ्गतया न प्रतीयत इति सर्ववाक्यार्थविरोधावभास इत्युभयोर्भेदः (ध)।

"अनेन च्छिन्दता मातुः कण्ठं परशुना तव।
बद्धस्पर्द्धः कृपाणोऽयं लज्जते मम भार्गव!॥" (न)

---

(त) प्रकारान्तरेण योग्यताया अभावादभिमतसम्बन्धानुपपत्तौ अभवन्मतसम्बन्धतां दर्शयितुमाह यथा वेति।

(थ) ज्योत्स्नेति। ज्योत्स्नानां चयः समूह एव पयःपूरो जलराशिः, तारका नक्षत्राण्येव कैरवाणि कुमुदानि च। तथा सुधाकरश्चन्द्र एव, व्योम आकाशमेव कासारः सरोवरः तस्य राजहंसो राजति।

(द) अत्रेति। गुणीभावात् राजहंसमात्रस्यैव विशेषणीभूतत्वात्, तदर्थस्य व्योमकासारशब्दाभिधेयस्य, सर्वैर्ज्योत्स्नाचयरूपपयःपूरादिभिः सह संयोगः सम्बन्धो नोपपद्यत इति शेषः। तथा च आकाशरूपे सरोवरे ज्योत्स्नासमूहरूपो जलराशिः, नक्षत्ररूपाणि चन्द्ररूपश्च राजहंसो राजति इति हि कवेरभिमतः सम्बन्धः स तु नोपपद्यत एव, व्योमकासारशब्दस्य राजहंसशब्देन सह समासेन तन्मात्रस्यैव विशेषणीभूततया अन्यैः सह सम्बन्धे योग्यताया अभावात् ईदृशैकदेशेन सह अन्येषां सम्बन्धस्य अव्युत्पन्नत्वादित्याशयः। अतएवात्रापि अभवन्मतसम्बन्धत्वमेव। "राजति व्योम्नि कासारे" इति पाठे तु नोक्तो दोषः।

(ध) ननु तर्हि विधेयाविमर्शेन सहैक्यापत्तिरित्याह विधेयेति। यदेव पदम्, अविमृष्टम् अप्राधान्येन निर्दिष्टम्। सर्वेषां वाक्यानामर्थस्य विरोधावभासः अनन्वितत्वेन प्रतीतिः। तथा चात्र साङ्गरूपकमलङ्कारः, तेन व्योम्नि कासारत्वारोपः प्रधानम्; ज्योत्स्नाचयादौ पयःपूरत्वाद्यारोपस्तु तन्निर्वाहकतया तदङ्गमित्यवश्यं वक्तव्यम्; किन्तु कासारपदार्थस्य समासेनाप्रधानीकृतत्वात् तदङ्गतया पदार्थान्तराणां न प्रतीतिः, अप्रधानानां परस्परमङ्गाङ्गिभावेनाङ्गीकारादित्याशयः। न च तथापि वाक्यगतविधेयाविमर्शेन सहैक्यापत्तिरिति वाच्यम्, तादृशदोषाणां पदद्वयादिगतत्वेनैव वाक्यगतत्वस्य परिभाषितत्वात् अस्य तूक्तरीत्या सर्ववाक्यगतत्वस्य वास्तवत्वात्।

(न) प्राचीनमते प्रकारान्तरेणायोग्यतायामेव अभवन्मतसम्बन्धतामुदाहरति अनेनेति। हे भार्गव! परशुराम! मातुः कण्ठं छिन्दता अनेन तव परशुना सह बद्धस्पर्द्धः आरब्धवैरः अयं मम कृपाणस्तरवारिः लज्जते; गुरुतरपातकिना सह वैराचरणस्यापि तत्पापसंक्रामकत्वेनानौचित्यादिति भावः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र "भार्गवनिन्दायां प्रयुक्तस्य मातृकण्ठच्छेदनकर्त्तृत्वस्य (१) परशुना सम्बन्धो न युक्तः" इति प्राच्याः (प)।

"परशुनिन्दामुखेन भार्गवनिन्दाधिक्यमेव वैदग्ध्यं द्योतयति" इत्याधुनिकाः (फ)।

अक्रमता यथा—(ब)

"समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम्।
शरदि हंसरवाः परुषीकृतस्वरमयूरमयू रमणीयताम्॥" (भ)

अत्र परामृश्यमानवाक्यानन्तरमेव इतिशब्दप्रयोगो युज्यते, (२) न तु प्रणिगदन्त इत्यनन्तरम् (म)। एवम्—(य)

"इयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः (३)।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥" (र)

---

(प) अत्रेति। न युक्त इति। तथा च अचेतने परशौ कारकान्तरप्रयोजकत्वरूपस्य कर्त्तृत्वस्य स्थातुमयोग्यत्वात् कवेरभिमतोऽपि परशौ कर्त्तृत्वसम्बन्धो नोपपद्यत इत्यभवन्मतसम्बन्धतादोष एवेति भावः। प्राच्याः प्राचीनाः।

(फ). परश्विति। परशोर्निन्दामुखेन निन्दाद्वारा। वैदग्ध्यं कवेर्निर्म्माणनैपुण्यम्। तथा च "स्थाली पचति" इत्यादाविव करणभूते परशौ कर्त्तृत्वारोपः; तेन चारोपितेनापि कर्त्तृत्वेनाचेतनस्यापि परशोर्निन्दा, तत्र तु चेतनस्यैव वास्तवकर्त्तृत्वेन च निन्दायां का कथेति निन्दाधिक्यमुन्नेयम्। एवञ्च परशौ कर्त्तृत्वसम्बन्धो घटत एवेति नाभवन्मतसम्बन्धतादोष इत्याधुनिकानामाशयः।

(ब) अक्रमतां दर्शयति अक्रमतेति। तत्र स्वानुपस्थाप्यपदोत्तराव्ययपदप्रयोगवत्त्वमक्रमत्वम्। स्वपद-मव्ययपदपरम्। अस्थाने अव्ययपदप्रयोगे अक्रमता अस्थाने अनव्ययपदप्रयोगे तु अस्थानस्थपदतेति भेदः। अस्य तु उपस्थाप्यपदानुसन्धानविलम्बेन रसप्रतीतिविलम्बाद्दोषत्वम्। अयन्तु नित्य एव दोषः प्रतिप्रसवाभावात्।

(भ) अक्रमतामुदाहरति समय इति। शिशुपालवधषष्ठसर्गे श्लोकोऽयम्। समयः काल एव शरीरिणां बलाबलं प्रबलदुर्बलभावं करोति, इति प्रणिगदन्त इव ब्रुवन्त इव, शरदि शरत्काले हंसानां रवा नादाः परुषीकृताः कर्कशीकृताः स्वराः कण्ठशब्दा येषां ते तथोक्ता मयूरा यस्मिन् कर्म्मणि तद्यथा तथा रमणीयतां चारुताम्, अयुः प्रापाः।

(म) अत्रेति। परामृश्यमानवाक्यानन्तरमेव स्वोपस्थाप्यमानवाक्यात् परमेव। तथा च "समय एव करोति बलाबलम् इति वदन्त इवात्र शरीरिणाम्" इति पाठे नैष दोष इत्याशयः।

---

(१) छेदकर्त्तृत्वस्य छेदनस्य इति पाठभेदौ। (२) युक्त इति क्वचित् पाठः।
(३) कपालिन इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र त्वमित्यनन्तरमेव चकारो युक्तः (ल) ।

अमतपरार्थता यथा—(व)

"राममन्मथशरेण ताड़िता—" इत्यादि (१६२ पृष्ठे) ।

अत्र शृङ्गाररसस्य व्यञ्जको द्वितीयोऽर्थः प्रकृतरसविरोधित्वादनिष्टः (श)।

वाच्यस्यानभिधानं यथा—(ष)

"व्यतिक्रमलवं कं मे वीक्ष्य वामाक्षि ! कुप्यसि ? ॥" (स)

अत्र व्यतिक्रमलवमपीत्यपिरवश्यं वक्तव्यो नोक्तः (ह) ।

---

(य) पदान्तरेणाक्रमतां दर्शयितुमाह एवमिति ।

(र) इयमिति । कुमारसम्भवपञ्चमसर्गे श्लोकोऽयम् । सम्प्रति इयं पदार्थं इयं पिनाकिनः शिवस्य समागमप्रार्थनया संसर्गेच्छया शोचनीयतां गतं प्राप्तम् । किन्तु इयमित्याह । कान्तिमती नित्यमेव शोभावती सा प्रसिद्धा, कलावतश्चन्द्रस्य कला च षोड़शभागैकभागश्च, तथा अस्य दृश्यमानस्य लोकस्य भुवनस्य नेत्रकौमुदी कौमुदीवन्नयनानन्दकारिणी त्वञ्च ।

(ल) अत्रेति । चकारेण त्वमित्यस्यैवोपस्थापनीयत्वादिति भावः । एवञ्च "जगद्वशस्त्वञ्च विशुद्ध-चन्द्रिका ।" इति चतुर्थचरणपाठे तु नायं दोष इति बोध्यम् ।

(व) अमतपरार्थतां दर्शयति अमतेति । अमतः प्रकृतरसविरोधिरसव्यञ्जकत्वादनभिमतः, परार्थो द्वितीयार्थो यस्य वाक्यस्य तत्तथोक्तम्, तस्य भावः सा । तथा च प्रकृतरसविरोधिरसव्यञ्जकद्वितीयार्थबोधक-वाक्यत्वममतपरार्थत्वमिति लक्षणम् । व्यज्यमानेन विरोधिरसेन प्रकृतरसस्यापकर्षजननादस्य दोषत्वम् । अयमपि नित्य एव दोषः प्रतिप्रसवाभावात् ।

(श) अत्रेति । प्रकृतरसस्य बीभत्सरसस्य विरोधित्वात् "आद्यः करुणबीभत्सरौद्रवीरभयानकैः" इत्युक्तनयेन साक्षादप्रतिबन्धकत्वात् ।

(ष) वाच्यानभिधानमाह वाच्यस्येति । अवश्यवक्तव्यस्यानभिधानं वाच्यस्यानभिधानम् । अवश्य-वक्तव्यस्यानभिधानात्तदनुसन्धानविलम्बेन रसप्रतीतिविलम्बादस्य दोषत्वम् । अयन्त्वनित्य एव दोषः, "चक्रा-वानन्दमग्नाः" इत्यादिना न्यूनपदताया: प्रतिप्रसवेनास्यापि प्रतिप्रसवात् अनयोः समानविषयत्वात् ।

(स) वाच्यानभिधानमुदाहरति व्यतिक्रमेति । अस्य मत्पूरितपूर्वार्द्धं यथा—

"नान्यां दृश्यापि पश्यामि वसाम्येव च तेऽन्तिके ।"

हे वामाक्षि ! सुलोचने ! मे मम कं कञ्चित् व्यतिक्रमलवं त्रुटिलेशमपि वीक्ष्य कुप्यसि ? क्रुद्धासि किमिति काकुः ।

(ह) अत्रेति । अवश्यं वक्तव्य इति । अन्यथा अभिप्रेतार्थो नोपपद्यत इति भावः । अत्र कमित्यस्य अनिर्द्दिष्टार्थबोधकत्वे तु नायं दोष इति ध्येयम् । तथा च सतीदमुदाहरणम्—

"याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा ॥" इति ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न्यूनपदत्वे वाचकपदस्यैव न्यूनता विवक्षिता, अपेस्तु न तथात्व-मित्यनयोर्भेदः (च) ।

एवमन्यत्रापि (क) । यथा वा—(ख)

"चरणानतकान्तायास्तन्वि ! कोपस्तथापि ते ॥" (ग)

अत्र 'चरणानतकान्तासि' इति वाच्यम् (घ) ।

भग्नप्रक्रमता यथा—(ङ)

"एवमुक्तो मन्त्रिमुख्यैः रावणः प्रत्यभाषत ।" (च)

---

अत्र मोघापि लब्धकामापि इति अपिद्वयमवश्यं वक्तव्यं किन्तु नोक्तमिति वाच्यानभिधानद्वयमेव ।

(च) ननु न्यूनपदत्ववाच्यानभिधानयोः को भेदः, येनोभयमङ्गीक्रियत इत्याह न्यूनेति । अपेरपि-शब्दस्य तु, न तथात्वं न वाचकत्वम्, उपसर्गत्वेन द्योतकभावरूपत्वादिति भावः ।

(क) एवमिति । अन्यत्रापि अन्यविधद्योतकपदाभावस्थलेऽपि एवं वाच्यानभिधानमूहनीयमित्यर्थः । यथा—"नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः ।"

अत्र 'न तु' इति तुशब्दोऽवश्यं वक्तव्यः, किन्तु नोक्त इति ।

(ख) ननु अकिञ्चित्करं वाचकत्वद्योतकत्वभेदमनङ्गीकृत्य वरमुभयोरेकतरमेवाङ्गीक्रियतामित्यतो न्यूनपदताया अविषये वाच्यानभिधानं दर्शयितुमाह यथा वेति ।

(ग) चरणेति । "वचनेनानुनीतासि स्वेष्टवस्तुस्तुतासि च ।" इति मत्पूरितपूर्वार्द्धम् ।

हे तन्वि ! कृशाङ्गि ! चरणे आनतः कान्तो यस्यास्तस्यास्ते तव तथापि कोपः । अत्र तथापीत्यने-नावश्यमपेक्षणीयस्य वाक्यान्तरस्यानभिधानाद्वाच्यानभिधानदोषः ।

(घ) नन्वत्र तथापीत्यनेन किं नामापेक्षणीयं यद्वाच्यं स्यादित्याह अत्रेति । वाच्यमवश्यं व्यक्तव्यम् । अन्यथा तथापीत्यस्यान्वयः कथमपि नोपपद्यत इति भावः । अत्र तु न न्यूनपदत्वप्रसङ्गः, कस्यापि पदस्य न्यूनत्वाभावात् । न च तथापि, तथापीत्यस्य अभिमतसम्बन्धानुपपत्तेरभवन्मतसम्बन्धतादोष एवायमिति वाच्यम्; अभिमतपदप्रयोगेण समाधेयत्वे अभवन्मतसम्बन्धतादोषः, अभिमतवाक्यप्रयोगेण समाधेयत्वे तु वाच्यानभिधानदोष इति नियमस्य सुवचत्वादिति दिक् ।

(ङ) भग्नप्रक्रमतां दर्शयति भग्नेति । भग्नो नष्टः प्रक्रमः प्रथमप्रकारो यत्र वाक्ये तस्य भावः सा । तेन प्रक्रान्तभिन्नप्रकारपदवत्त्वं भग्नप्रक्रमत्वमिति लक्षणम् । भिन्नप्रकारत्वञ्च समानकारकत्वे भिन्नवचनादि-मत्त्वं समानार्थकत्वे च भिन्नप्रकृतिमत्त्वमित्याद्यूहनीयम् । देवदत्तो ग्रामान् गच्छतीत्यादौ भिन्नवचनवत्त्वेऽपि समानकारकत्वाभावान्नातिप्रसङ्गः । भिन्नप्रक्रमवत्पदप्रयोगकारणानुसन्धानविलम्बात् रसप्रतीतिविलम्बेनास्य दोषत्वम् । अयन्तु नित्य एव दोषः प्रतिप्रसवाभावात् ।

(च) तत्र धातुरूपप्रकृतिभेदे भग्नप्रक्रमतामुदाहरति एवमिति । अस्य मत्पूरितपराद्धं यथा—

"मानभङ्गमुरीकृत्य नार्पयाम्येव जानकीम् ॥"

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र वचधातुना प्रक्रान्तं प्रतिवचनमपि तेनैव वक्तुमुचितम् । तेन 'रावणः प्रत्यवोचत' इति पाठो युक्तः (छ) । एवञ्च सति न कथितपदत्वदोषः, तस्योद्देश्यप्रतिनिर्द्देश्यव्यतिरिक्तविषयकत्वात् (ज) । इह हि वचनप्रतिवचनयोरुद्देश्यप्रतिनिर्द्देश्यत्वम् (झ) । यथा—(ञ)

"उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।" (ट)

इत्यत्र यदि पदान्तरेण स एवार्थः प्रतिपाद्यते तदा अन्योऽर्थ इव प्रतिभासमानः प्रतीतिं स्थगयति (ठ) । यथा वा—(ड)

"ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च (१) शूलिनम् ।
सिद्धञ्चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥" (ढ)

---

वच 'उक्त' प्रत्यभाषत' इति पदयोः प्रकृतिभेदाद्भिन्नप्रकारत्वमिति भग्नप्रक्रमता ।

(छ) अत्रेति । प्रक्रान्तम् उक्त इति पदमिति शेषः । प्रतिवचनं प्रतिवचनबोधकं पदम् । तेनैव वचधातुनैव । युक्त इति । तादृशपाठे च अभिन्नप्रकृतिकत्वान्न भग्नप्रक्रमतेति भावः ।

(ज) ननु "रावणः प्रत्यवोचत" इति पाठे वचप्रकृतेरभिन्नार्थकत्वादेकानुपूर्वीकत्वाच्च पुनः कथितपदत्वदोषप्रसङ्ग इत्याह एवञ्चेति । तस्य कथितपदत्वदोषस्य । उद्देश्यं प्राक्प्रयोज्यमेव प्रतिनिर्द्देश्यं परमपि प्रयोज्यं यत्र विषये स तथोक्तस्तस्मात् व्यतिरिक्तो भिन्नो विषयः स्थलं यस्य तस्य भावस्तस्मात् । तथा च येन शब्देन यादृशोऽर्थः प्राक्प्रत्यायितः सहसैव, तेन शब्देनैव यत्र तादृश एवार्थः पुनः प्रत्याय्यते पूर्वापरयोरुभयोरर्थयोरभेदज्ञापनाय, स उद्देश्यप्रतिनिर्द्देश्यो नाम विषयः, तत्र न कथितपदत्वदोषः, तथात्वेन रसापकर्षजननाभावात् प्रत्युत तदुत्कर्षस्यैव जननादिति भावः ।

(झ) अत्र किन्तदित्याह इहेति । हि तथाहि । इह "एवमुक्तो मन्त्रिमुख्यै रावणः प्रत्यवोचत" इत्यत्र । तथा च मन्त्रिमुख्यैर्यादृशभावेन रावण उक्तः, रावणोऽपि तादृशभावेनैव तत्प्रत्युक्तवानिति वचनप्रतिवचनयोरुक्तिप्रत्युक्त्योरभेदबोधनादुद्देश्यप्रतिनिर्द्देश्यत्वमित्यर्थः ।

(ञ) अत्र स्वोक्तिदृढ़त्वाय काव्यप्रकाशधृतं प्रसिद्धप्रमाणमुदाहर्त्तुमाह यथेति ।

(ट) उदेतीति । "सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥" इति काव्यप्रकाशे परार्द्धम् ।

(ठ) ईदृशस्थले प्रत्युत शब्दान्तरप्रयोग एव दोषो भवतीति बोधयितुमाह इत्यत्रेति । पदान्तरेण रक्तप्रभृतिशब्देन, स एवार्थस्ताम्ररूप एवार्थः प्रतिपाद्यते बोध्यते । अन्योऽर्थ इव शब्दस्यान्यत्वादर्थोऽप्यन्य इव, प्रतिभासमानो बुद्धौ प्रकाशमानः, प्रतीतिम् उभयोरभेदज्ञानम्, स्थगयति आपाततो निवर्त्तयति । तथा चोक्तं काव्यप्रकाशटीकायां महेश्वरेण—"न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते ।"

तेन च ईदृशस्थले एकविधमेव शब्दद्वयं प्रयोज्यम्, तथापि न कथितपदत्वमित्याशयः ।

(ड) प्रातिपदिकात्मकसर्वनामरूपप्रकृतिभेदे भग्नप्रक्रमतामुदाहर्त्तुमाह यथा वेति ।

---

(१) [illegible] पाठः।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र 'अस्मै' इति इदमा प्रक्रान्तस्य तेनैव तत्समानार्थाभ्यामेतददः-शब्दाभ्यां वा परामर्शो युक्तः न तच्छब्देन [ण]। यथा वा—[त]

"उदन्वच्छिन्ना भूः स च पतिरपां योजनशतम् ।" [थ]

अत्र "मिता भूः पत्यापां स च पतिरपाम्" इति युक्तः पाठः [द]। एवम्—[ध]

"यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥" [न]

---

(ढ) ते इति। कुमारसम्भवषष्ठसर्गे श्लोकोऽयम्। ते सप्तर्षयः, हिमालयमामन्त्र्य 'वयमिदानीं गच्छामः ?' इत्यापृच्छ्य शूलिन शिवं पुनः प्रेक्ष्य साक्षात्कृत्य च अस्मै शूलिने सिद्धं निष्पन्नम् अर्थं प्रयोजनं निवेद्य च, तेन शूलिना विसृष्टाः सन्तः खमाकाशम् उद्दिश्य उत्पतिताः ।

(ण) अत्रेति। इदमा इदंशब्देन। तेनैव इदमैव इदंशब्देनैव। तत्समानाभ्याम् इदं-शब्दसमानार्थाभ्याम्। परामर्शः सम्बन्धः। ननु एतददःशब्दाभ्यां परामर्शेऽपि पर्यायान्तरप्रयोगेण प्रक्रम-भङ्गात् "उदन्वच्छिन्ना भूः" इत्यादिवत् भग्नप्रक्रमतैवेति चेत्, सत्यम्। अतएव एतददःशब्दाभ्यां परामर्शपक्षे वाशब्देनानास्थां द्योतयति। उक्तिस्तु दोषलघुताप्रदर्शनार्थेति। अतएव काव्यप्रकाशकारेणोक्तम्— "अनेन विसृष्टा इति तु वाच्यम्" इति।

(त) एकपर्य्यायत्वेऽपि प्रकृतिभेदे भग्नप्रक्रमतामुदाहर्त्तुमाह यथा वेति।

(थ) उदन्वदिति। अस्य मत्पूरितपरपादत्रयं यथा—

"उदन्वच्छिन्ना भूः स च पतिरपां योजनशतं चतुष्कं तस्यापि प्रसृतिपुटकं येन विधृतम्।
गिरौ विन्ध्यश्चोच्चैरतिरविपथं येन नमितं महर्षिः सोऽगस्त्यो जयति जठरे जीर्णदनुजः ॥"

भूः पृथिवी उदन्वता समुद्रेण, छिन्ना परिच्छिन्ना, स च अपां पतिरुदन्वान् योजनशतं शतयोजनव्यापीत्यर्थः। अत्र उदन्वदित्यनेन प्रक्रम्य पुनरपां पति.रात तस्यैव पर्यायीभूतप्रकृत्यन्तरस्य प्रयुक्तत्वाद्भग्नप्रक्रमतेत्याशयः।

(द) तत्समाधानप्रकारं दर्शयितुमाह अत्रेति। भूः पृथिवी अपां पत्या समुद्रेण मिता परिमिता, स च अपां पतिः योजनशतमित्युक्तेनान्वयः। अत्र अपां पतिरिति प्रक्रान्तस्य पुनरपां पतिरित्यनेनैवोप-सहारान्न भग्नप्रक्रमता, उद्देश्यप्रतिनिर्द्देश्यविषयत्वाच्च न कथितपदतेति भावः।

(ध) प्रत्ययभेदे भग्नप्रक्रमतां दर्शयितुमाह एवमिति।

(न) यश इति। किरातार्जुनीयतृतीयसर्गे अर्जुनं प्रति द्रौपद्या उक्तिरियम्। यशः कीर्त्तिम् अधिगन्तुं लब्धुम्, सुखलिप्सया सुखं लब्धुमिच्छया वा, मनुष्यसंख्या मानुषमध्य ग[illegible]नाम् अतिवर्त्तितुम् अति-क्रमितु वा, अभियोगभाजाम् अभिनिवेशशालिनाम्, निरुत्सुकानां प्रियतमाद्यर्थमनुत्कण्ठि[illegible]नां [illegible] सिद्धिः पूर्वोक्तयशःप्रभृतिनिष्पत्तिः समुत्सुका नितान्तोत्कण्ठिता कान्तेव अङ्कं क्रोडं समीपमित्यर्थः, उपै[illegible]ति।

अत्र यशोऽधिगन्तुमिति तुमुन्प्रत्ययेन प्रक्रम्य पुनः सुखलिप्सयेति सन्प्रत्ययस्य प्रयुक्तत्वेन प्रत्ययभेदाद्भग्न-प्रक्रमतेति भावः।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र 'सुखमीहितुम्' इत्युचितम् [प] ।

अत्राद्ययोः प्रकृतिविषयः प्रक्रमभेदः । तृतीये पर्य्यायविषयः । चतुर्थे प्रत्ययविषयः [फ] । एवमन्यत्रापि [ब] ।

प्रसिद्धित्यागो यथा—[भ]

"घोरो वारिमुचां रवः ।" [म]

(प) तत्समाधानं दर्शयितुमाह अत्रेति । सुखम् ईहितुमीप्सितुमित्येवार्थः । उचितं पठनमित्यर्थः । ईहायपाठे तु एकविधतुम्प्रत्ययान्न भग्नप्रक्रमतेत्याशयः ।

(फ) ननूदाहृतेषु कुत्र कीदृशः प्रक्रमभेद इत्याह अत्रेति । आद्ययोः "एवमुक्तो मन्त्रिमुख्यैः" "ते हिमालयमामन्त्र्य" इत्यनयोः । तृतीये "उदन्वच्छिन्ना भूः" इत्यत्र । पर्य्यायविषय एकपर्य्यायेऽपि प्रकृतिविषय इत्यर्थः । यथाश्रुतन्तु न सङ्गच्छते, उदन्वदपांपतिशब्दयोः पर्य्यायभेदाभावात् एकार्थवाचकभिन्नानुपूर्वीकशब्दस्यैव पर्य्यायपदार्थत्वात् । चतुर्थे "यशोऽधिगन्तुम्" इत्यादौ ।

(ब) एवमिति । अन्यत्रापि उपसर्ग-कारक-वचनभेदादिष्वपि एवमूहनीयमित्यर्थः । तत्रोपसर्गभेदे यथा किराते—"विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।"

अत्र विपदापदिति 'वि' 'आङ्' इत्युपसर्गभेदाद्भग्नप्रक्रमता ।

कारकभेदे यथा नैषधे—

"कयाचिदालोक्य नलं ललज्जे कयापि तद्भासि हृदा ममज्जे ।
तं कापि मेने स्मरमेव कन्या भेजे मनोभूवशभूयमन्या ॥"

अत्र कर्त्तृकारकाणामनुक्तोक्ततया भेदाद्भग्नप्रक्रमता ।

वचनभेदे भग्नप्रक्रमता यथा शिशुपालवधे—

"काचित् कीर्णा रजोभिर्दिवमनुविदधे भिन्नवक्त्रेन्दुलक्ष्मीः
अश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत् कम्पमापुः
प्रस्थाने पार्थिवानामशिवमिति पुरो भावि नार्य्यः शशंसुः ॥"

अत्र काचिदित्येकवचनान्तेन प्रक्रम्य पुनः काश्चिदिति बहुवचनान्तस्य प्रयुक्तत्वाद्भग्नप्रक्रमता । एवं लिङ्गभेदादिष्वप्यूहनीयम् ।

(भ) प्रसिद्धित्यागमाह प्रसिद्धीति । उक्तमेव स्पष्टं लक्षणम् । अप्रसिद्धशब्दप्रयोगादर्थप्रतीतिविलम्बेन रसप्रतीतेरपि विलम्बादस्य दोषत्वम् । प्रतिप्रसवाभावादयं नित्यो दोषः ।

(म) उदाहरति घोर इति । अस्य मत्पूरितापरपादत्रयं यथा—

"द्योतते महती विद्युत् घोरो वारिमुचां रवः ।
यामिनी तमसाच्छन्ना तत् कान्तो दुर्लभोऽद्य मे ॥"

वारिमुचां मेघानाम्

...ha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र मेघानां गर्जितमेव प्रसिद्धम् (य)। यदाहुः—

"मञ्जीरादिषु रणितप्रायं पक्षिषु तु कूजितप्रभृति।

स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम्॥" इत्यादि (र)।

अस्थानस्थपदता यथा—(ल)

"तीर्थे तदीये गजसेतुबन्धात् प्रतीपगामुत्तरतोऽस्य गङ्गाम्।

अयत्नबालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः॥" (व)

अत्र तदीयपदात् पूर्वं गङ्गामित्यस्य पाठो युक्तः (श)।

एवम्—"हितान्न यः संशृणुते स किम्प्रभुः।" (ष)

अत्र 'संशृणुते' इत्यतः पूर्वं नञः स्थितिरुचिता (स)।

---

(य) अत्रेति। न तु रव इति वाक्यशेषः। तेन प्रसिद्धित्यागो नाम दोष इत्याशयः।

(र) मञ्जीरेति। मञ्जीरं नूपुरम्, आदिशब्दात् कङ्कणादयश्च तेषु, रणितप्रायं रणितक्वणितादिक-मित्यर्थः, पक्षिषु तु कूजितं प्रभृतिशब्दात् रुतादिकञ्च। सुरते स्तनितं मणितम् आदिशब्दात् रुतादिकञ्च। मेघे आदिशब्दात् सिंहादौ च गर्जितं प्रमुखशब्दात् स्तनितादिकञ्च पदं तत्तदर्थे प्रयोक्तव्यमिति सर्वं वाल्लयः। तथा अश्वशब्दे ह्रेषितादि, हस्तिशब्दे बृंहितादि प्रयोक्तव्यम्।

(ल) अस्थानेति। अनुपयुक्तस्थाने वाचकपदप्रयोगवत्त्वमस्थानस्थपदत्वम्। तत्र अस्थाने वाचक-पदप्रयोगे अस्थानस्थपदता, अस्थाने द्योतकपदप्रयोगे तु अक्रमतेत्युभयोर्भेदः। अन्वयोपयोगिस्थानानु-सन्धानविलम्बेन रसप्रतीतेर्विलम्बादस्य दोषत्वम्। अयमपि नित्य एव दोषः प्रतिप्रसवाभावेन सर्वदैव हेयत्वात्।

(व) उदाहरति तीर्थ इति। श्लोकोऽयं रघुवंशषोडशसर्गे। तदीये गङ्गासम्बन्धिनि तीर्थे जलावतरणदेशे गजसेतुबन्धात् हस्तिसमूहेन कश्चित् सेतुं निर्माय प्रतीपगां प्रतिकूलवाहिनीं गङ्गाम् उत्तरत उत्तीर्य्य गच्छतः अस्य कुशस्य सम्बन्धे नभोलङ्घनाय आकाशातिक्रमणाय लीलाश्चलाः पक्षा येषां ते तादृशा हंसाः, अयत्नेनैव बालव्यजनीबभूवुश्चामरीभूताः।

(श) अत्रेति। युक्त इति। तथा पाठे पूर्ववस्तुपरामर्शिना तच्छब्देन गङ्गायाः परामर्शसम्भवा-दिति भावः। यथास्थितपाठे तु पूर्ववस्तुपरामर्शिना तच्छब्देन परवर्त्तिन्या गङ्गायाः परामर्शासम्भवा-दस्थानस्थपदतादोष इति बोध्यम्। मल्लिनाथस्तु विन्ध्यपर्वतसम्बन्धिनि इत्यभिप्रेत्य "तदीये वैन्ध्ये" इत्याह स्म। तथाविधे अर्थे तु नोक्तो दोषः। किन्तु 'गङ्गासम्बन्धिनि' इत्यभिप्रायेण तदीय इत्यस्य पूर्वं पाठे तु तद्दोषसम्भव एवेति ग्रन्थकर्त्तुरपि न न्यूनतापत्तिः उदाहरणस्य स्थलप्रदर्शनमात्ररूपत्वादिति भाव्यम्।

(ष) प्रकारान्तरोदाहरणमाह एवमिति। किराते श्लोकसमुदायो यथा—

"स किं सखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किम्प्रभुः।

सदानुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः॥"

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र च पदमात्रस्थास्थाने निवेशेऽपि सर्वमेव वाक्यं विवक्षितार्थप्रत्यायने मन्थरमिति वाक्यदोषता (ङ)। एवमन्यत्रापि (च)।

इह केऽप्याहुः—"पदशब्देन वाचक एव प्रयोगो निगद्यते, (१) न च नञो वाचकता, निर्विवादात् स्वातन्त्र्येणार्थबोधनविरहादिति यथा "द्वयं गतम्" इत्यादौ त्वमित्यनन्तरं चकारानुपादानादक्रमता तथात्रापि" इति (क)।

अस्थानस्थसमासता यथा—(ख)

"अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोषनिःसरदलिश्रेणीकृपाणं शशी ॥" (ग)

---

(घ) अत्रेति। उचितेति। अन्यथा 'हिताव' इतिशब्दः 'अहितात्' इति भ्रममिव जनयतीति भावः। वस्तुतस्तु इदमेवास्थानस्थपदताया उदाहरणम्। यथा मम—

"पत्युर्नखपदं मत्वा प्रातः परिहसत्यलम्। सुवक्रकुङ्कुमलवं स्तने दृष्ट्वा सखी सखीम् ॥"

अत्र सुवक्रकुङ्कुमलवे एव नखचिह्नभ्रमात् नखपदमित्यतः पूर्वं सुवक्रकुङ्कुमलवमित्यस्य पाठौचित्येऽपि तदकरणादस्थानस्थपदतादोषः स्पष्टः।

(ङ) ननु पदघटितत्वात् पददोष एवायमित्याह अत्रेति। किञ्चेति चार्थः। पदमात्रस्य केवलपदस्य। सर्वमेव निखिलपदान्वितमेव। मन्थरं विलम्बजनकम्।

(च) एवमिति। अन्यत्रापि, एवं वाक्यव्यापकत्वेन वाक्यदोषता ऊहनीयेत्यर्थः।

(क) इहेति। वाचक एवेति। घटपदं पटपदमित्यादिप्रयोगदर्शनात् चपदं वापदमित्यादिप्रयोगादर्शनाच्चेति भावः। प्रयुज्यत इति प्रयोगः शब्दः। स्वातन्त्र्येण पदान्तरसाहाय्यं विना। अर्थबोधनविरहात् अर्थबोधकत्वाभावात्। इति हेतोः। अत्रापि "हिताव यः संशृणुते स किम्प्रभुः" इत्यत्रापि, तथा—य इत्यनन्तरं नञोऽनुपादानादक्रमतादोष एवेत्यर्थः। एतन्मतेऽपि "तीर्थे तदीये" इत्यादावस्थानस्थपदतैव तदीयशब्दस्य वाचकत्वेन अक्रमताया असम्भवात् द्योतकपदस्यास्थाने प्रयोग एव अक्रमताया अङ्गीकारादिति बोध्यम्।

(ख) अस्थानस्थसमासतादोषमाह अस्थानेति। स्वव्यङ्ग्यरसाव्यञ्जकशब्दे समासस्य स्थितिरस्थानस्थसमासता स्वपदं समासपरम्। तथा च समासस्य स्थानान्तरे अवस्थानेन स्वपोषणीयरसस्यापोषकत्वाद्दोषत्वम्। अयमपि नित्य एव दोषः प्रतिप्रसवाभावात्।

(ग) अद्यापीति। एष मानः कुतोऽपि कारणादभिमानः, स्तनावेव शैलौ उन्नतत्वात् कठिनत्वाच्च

(१) वाचकमेव प्रायो निगद्यत इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र कोपिन उक्तौ समासो न कृतः, कवेरुक्तौ कृतः (घ)।

वाक्यान्तरपदानां वाक्यान्तरेऽनुप्रवेशः सङ्कीर्णत्वम् (ङ)। यथा—

"मुञ्च चन्द्रं कुरङ्गाक्षि! पश्य मानं नभोऽङ्गने।" (च)

अत्र नभोऽङ्गने चन्द्रं पश्य मानं मुञ्चेति युक्तम् (छ)।

क्लिष्टत्वमेकवाक्यविषयमित्यस्माद्भिन्नम् (ज)।

वाक्यान्तरे वाक्यान्तरानुप्रवेशो गर्भितता (झ)। यथा—

"रमणे चरणप्रान्ते प्रणतिप्रवणेऽधुना।
वदामि सखि! ते तत्त्वं कदाचिन्नोचिताः क्रुधः॥" (ञ)

---

एवं तौ तावेव दुर्गं दुर्गद्वयं ताभ्यां विषमे दुष्प्रवेशे सीमन्तिनीनां रमणीनां हृदि हृदये, अद्यापि अधुनापि नमोदयसमयेऽपीत्यर्थः, स्थातुं वाञ्छति इच्छति? अतएव मां धिक्, इत्यस्मात् क्रोधादिव, आलोहितो रक्तवर्णः असौ शशी चन्द्रः, प्रोद्यन्त उदयमानाः दूरतरे देशे प्रसारिताश्च कराः किरणाः हस्ताश्च यस्य स तथोक्तः सन्, तत्क्षणात् फुल्लतां प्रस्फुटतां कैरवाणां कुमुदानां कोषेभ्यः सम्पुटेभ्यः वहिरावरणेभ्यश्च निःसरन्ती वहिर्गच्छन्ती या अलीनां मधुकराणां श्रेणी सैव कृपाणः कृष्णवर्णत्वाल्लम्बमानत्वाच्च तरवारिस्तं कर्षति आकृष्य गृह्णाति; तमेव मानं निहन्तुमिति भावः।

(घ) अत्रेति। कोपिनो मानं प्रति क्रुद्धस्य चन्द्रस्य, उक्तौ अद्यापीत्यादि धिक्शब्दपर्यन्ते वाक्ये। कवेरुक्तौ फुल्लदित्यादौ कविवाक्ये। अत्रायमाशयः—दीर्घसमासो हि ओजोगुणव्यञ्जकः ओजोगुणश्च रौद्ररसादावेव प्रयोजनीयः रौद्ररसस्य क्रुद्धस्य चन्द्रस्यैव वाक्ये न पुनः सुस्थस्य कवेः। तेन चन्द्रवाक्ये दीर्घसमासस्यावश्यकत्वेऽपि तदकरणात्, कवेर्वाक्ये तदनावश्यकत्वेऽपि तत्करणाच्च स्वव्यञ्जरसाव्यञ्जकशब्दे समासस्यावस्थिततया उदाहृते अस्थानस्थसमासतादोष इति।

(ङ) सङ्कीर्णत्वदोषं लक्षयति वाक्येति। सङ्कीर्णत्वं नाम मिश्रितत्वम्, तेनैतादृशं लक्षणमिति बोध्यम्। तत्तदन्वयिपदानुसन्धानविलम्बेन रसप्रतीतिविलम्बादस्य दोषत्वम्। अयमपि नित्यो दोषः प्रतिप्रसवाभावात्।

(च) मुञ्चेति। अस्य सत्पूरितपराद्धं यथा—

"सम्प्राप्तोऽहं रसालत्वं भव त्वञ्चेह माधवी॥"

(छ) अत्रेति। युक्तं पठनमिति शेषः। तथा च सति नोक्तदोष इत्याशयः।

(ज) अथात्रापि अन्वयव्यवधानेनार्थप्रतीतेरपि व्यवधानात् क्लिष्टत्वदोष एवास्तामित्याह क्लिष्टत्वमिति। क्लिष्टत्वमेकवाक्यविषयम् इदं पुनरनेकवाक्यविषयम्, इति हेतोः, क्लिष्टत्वम् अस्मात् सङ्कीर्णत्वदोषाद्भिन्नमित्यर्थः। तेनात्रानेकवाक्ये न क्लिष्टत्वदोष इति भावः।

(झ) गर्भिततादोषं लक्षयति वाक्येति। स्पष्टं लक्षणम्। गर्भः अभ्यन्तरगतं वाक्यमस्य सञ्जात इति गर्भितं वाक्यं तस्य भावो गर्भितता। अत्रापि वाक्यान्तरस्य वाक्यान्तरे प्रवेशादन्वयिपदानुसन्धानविलम्बेन रसप्रतीतिविलम्बाद्दोषत्वम्। अयन्त्वनित्यो दोषः "गर्भितत्वं गुणः क्वापि" इति वक्ष्यमाणेन क्वचित् प्रतिप्रसवात्।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अर्थदोषानाह—(ट)

५ । अपुष्टदुष्क्रमग्राम्य-व्याहताश्लीलकष्टताः ।
अनवीकृतनिर्हेतु-प्रकाशितविरुद्धता ॥
सन्दिग्धपुनरुक्तत्वे ख्यातिविद्याविरुद्धते ।
साकाङ्क्षता सहचर-भिन्नताऽस्थानयुक्तता ॥
अविशेषे विशेषश्चानियमे नियमस्तथा ।
तयोर्विपर्य्ययो विध्यनुवादायुक्तते तथा ।
निर्मुक्तपुनरुक्तत्वमर्थदोषाः प्रकीर्त्तिताः ॥ (ठ)

तद्विपर्य्ययो विशेषेऽविशेषो नियमेऽनियमः (ड) ।

अत्रापुष्टत्वं मुख्यानुपकारित्वम् (ढ) । यथा—

---

(ञ) रमण इति । रमणे पत्यौ, चरणप्रान्ते तव पदसमीपे, प्रणतिप्रवणे पतनायोत्सुके सति, अधुना इतः प्रभृति, कदाचिदपि क्रुधस्तव कोपाः, न उचिताः, हे सखि ! ते तव समीपे तत्त्वमेतद्याथार्थ्यं वदामि ।

अत्र "वदामि सखि ! ते तत्त्वम्" इति वाक्यस्य "रमणे चरणप्रान्ते प्रणतिप्रवणे अधुना कदाचित् क्रुधो नोचिताः" इति वाक्यमध्ये प्रवेशाद्गर्भिततादोषः ।

(ट) वाक्यदोषानभिधायेदानीमुद्देशक्रमप्राप्तानर्थदोषानभिधातुं शिष्येभ्यस्तानुद्बोधयति अर्थेति । अन्वयव्यतिरेकानुविधायितया अर्थप्रयोज्यदोषत्वमर्थदोषत्वमिति सामान्यलक्षणमत्रानुसन्धेयम् । अर्थश्चात्र शक्य-लक्ष्य-व्यङ्ग्यरूपस्त्रिविध एव ।

(ठ) अपुष्टेति । अत्रापि "द्वन्द्वात् परः श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यते" इति न्यायेन द्वन्द्वात् परं तप्रत्ययः सर्वत्र सम्बध्यते । तेन अपुष्टता, दुष्क्रमता, ग्राम्यता, व्याहतता, अश्लीलता, कष्टता, अनवीकृतता, निर्हेतुता, प्रकाशितौ विरुद्धोऽर्थौ येन स प्रकाशितविरुद्धोऽर्थस्तस्य भावः सा, सन्दिग्धता, पुनरुक्तता, ख्यातिविरुद्धता, साकाङ्क्षता, सहचरभिन्नता, अस्थानयुक्तता, अविशेषे अर्थस्य सामान्यतौचित्ये विशेषस्तदेकदेशपरत्वम्, तथा अनियमे नियमः तयोर्विपर्य्ययो विपरीतत्वम्, तच्च विशेषे अविशेषः नियमे अनियमश्चेति, विध्ययुक्तता, अनुवादायुक्तता तथा निर्मुक्तपुनरुक्तता चेति त्रयोविंशतिप्रकारा अर्थदोषाः प्रकीर्त्तिताः ।

(ड) एतेष्वस्पष्टतया तद्विपर्य्ययपदमेव व्याचष्टे तद्विपर्य्यय इति ।

(ढ) उद्देशक्रमेण तान् यथासम्भवं सोदाहरणं लक्षयन्नादावपुष्टार्थत्वं लक्षयति अत्रेति । एतेषु मध्ये इत्यर्थः । मुख्यानुपकारित्वम् उद्देश्यानुपयोगित्वम् । उद्देश्यानुपयोगिनोऽर्थस्य सन्निवेशकारणानुसन्धानविरहेण च [illegible] दोषत्वम् । अयं खलु नित्य एव दोषः प्रतिप्रसवासम्भवात् ।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"विलोक्य वितते व्योम्नि विधुं मुञ्च रुषं प्रिये ! ।" (ख)

अत्र विततशब्दो मानत्यागं प्रति न किञ्चिदुपकुरुते (त)।

अधिकपदत्वे पदार्थान्वयप्रतीतेः समकालमेव वाधप्रतिभासः, इह तु पश्चादिति विशेषः (थ)।

दुष्क्रमता यथा—(द)

"देहि मे वाजिनं राजन् ! गजेन्द्रं वा मदालसम् ॥ (ध)

अत्र गजेन्द्रस्य प्रथमं याचनमुचितम् (न)।

"स्वपिहि त्वं समीपे मे स्वपिम्येवाधुना प्रिय ! (१)।" (प)

अत्रार्थो ग्राम्यः (फ)।

---

(ख) उदाहरति विलोक्येति। अस्य मत्पूरितपरार्द्धं यथा—

"एहि निष्पिष्य वक्षोभ्यां हन्मो विरहवैरिणम् ॥"

हे प्रिये ! वितते विस्तृते व्योम्नि आकाशे विधुं चन्द्रं विलोक्य रुषं मानं मुञ्च परित्यज।

(त) लक्ष्ये लक्षणं योजयितुमाह अत्रेति। विततशब्दो विततशब्दस्यार्थः। न किञ्चिदुपकुरुत इति। अतएवात्र अपुष्टतादोष इति भावः। एवं चन्द्रदर्शनमात्रस्यैव मदनोद्दीपकतया मानत्यागोपयोगित्वात् चन्द्रस्य व्योमवर्त्तित्वरूपार्थोऽपि मानत्यागानुपयोगीति व्योम्नीति पदमप्यनावश्यकमिति बोध्यम्।

(थ) नन्वर्थस्यानुपयोगित्वेनानावश्यकतयां तदुपस्थापकशब्दस्यापि तथैवानावश्यकमिति अधिकपदत्वदोष एवायमास्तामित्याह अधिकपदत्व इति। वाधप्रतिभासः अनावश्यकतया वैयर्थ्यज्ञानम्। पश्चात् पदार्थान्वयप्रतीतेः परम्। विशेषो भेदः। अत्र सहृदयानां प्रतीतिरेव प्रमाणमित्याशयः।

(द) दुष्क्रमतेति। विपरीतत्वेन दूषितक्रमवत्त्वं दुष्क्रमत्वम्। अत्रापि यथायथक्रमानुसन्धानविलम्बेन रसादिप्रतीतिविलम्बाद्दोषत्वम्। नित्य एवायं दोषः समाधानासम्भवात्।

(ध) देहीति। अस्य मत्पूरितपूर्वार्द्धं यथा--

"तुष्टोऽसि कर्म्मणानेन चेत् पुष्टोऽसि गजवाजिभिः।"

(न) अत्रेति। उचितमिति। गजेन्द्रस्यैवाधिकमूल्यत्वादिति भावः। लोके हि अधिकमूल्यमेव वस्तु प्रथमं याच्यते, तदप्राप्तिसम्भवे तु स्वल्पमूल्यमिति नियमः। अत्र तु स्वल्पमूल्यस्यैव वाजिनः प्रथमयाचनात् तन्नियमविपरीततया क्रमस्य दूषितत्वात् दुष्क्रमत्वमिति बोध्यम्।

(प) ग्राम्यताया उदाहरणमाह स्वपिहीति। अत्रापि अशिक्षितसाधारणप्रयोज्यत्वं ग्राम्यत्वमित्येव लक्षणम्। ग्राम्यत्वेन निकृष्टार्थस्य ज्ञानमात्रेणैव श्रोतुर्वैमनस्योदयात् रसप्रकर्षनाशेनास्य दोषत्वम्। अयमनित्यो दोषः, "ग्राम्यत्वमधमोक्तिषु" इति सामान्यत एव प्रतिप्रसवस्य वक्ष्यमाणत्वात्।

"कण्ठयोरुपकण्ठे हि विरहोऽतीवदुःसहः ॥" इति मत्पूरितपरार्द्धम्।

---

(१) प्रिये ! इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कस्यचित् प्रागुत्कर्षमपकर्षं वा अभिधाय पश्चात्तदन्यप्रतिपादनं व्याहतत्वम् (ब)। यथा—

"हरन्ति हृदयं यूनां न नवेन्दुकलादयः ।
वीक्ष्यते यैरियं तन्वी लोकलोचनचन्द्रिका ॥" (भ)

अत्र येषामिन्दुकला नानन्दहेतुस्तेषामेवानन्दाय तन्व्याश्चन्द्रिकात्वारोपः (म)।

"हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
यथाशु जायते पातो न तथा पुनरुन्नतिः ॥" (य)

---

(फ) अवेति। अर्थः "खपिहि खपिमि" इति पदयोरभिधेयम्, ग्राम्यः, हालिकाद्यशिक्षितसाधारणप्रयोज्यत्वादिति भावः।

(ब) व्याहतत्वं लक्षयति कस्यचिदिति। कस्यचिद्वस्तुनः प्रागुत्कर्षमभिधाय पश्चादपकर्षप्रतिपादनम्, किंवा प्रागपकर्षमभिधाय पश्चादुत्कर्षप्रतिपादनं व्याहतत्वमित्यर्थः। पूर्वापरयोः परस्परविरोधेन परस्परमेव व्याहन्यमानत्वात् व्याहतत्वमिति संज्ञा। अतएव च श्रोतुः क्वापि विश्वासासम्भवात् वैमनस्योदयेन रसप्रकर्षहानेरस्य दोषत्वम्। अयन्तु नित्य एव दोषः प्रतिप्रसवासम्भवात्।

(भ) हरन्तीति। नवेन्दुकलादयो नूतनोदितचन्द्रकलाप्रभृतयः यूनां हृदयं न हरन्ति; यैर्युवभिः, लोकलोचनयोः चन्द्रिका ज्योत्स्नारूपा इयं तन्वी कृशाङ्गी वीक्ष्यते दृश्यते।

(म) उदाहृते दोषं प्रतिपादयितुमाह अवेति। नानन्दहेतुरिति। हृदयाहरणादिति भावः। तथा च नवेन्दुकलादयो हृदयं न हरन्तीत्यनेन चन्द्रकलायाः प्रागपकर्षमभिधाय पश्चाच्च तत्किरणात्मकचन्द्रिकात्वारोपेणैव नायिकाया उत्कर्षप्रतिपादनात् तस्याश्चन्द्रकलाया अपि सुतरामेव उत्कर्षप्रतिपादनं कृतमिति व्याहतत्वदोष इति सरलार्थः।

उत्कर्षाभिधानानन्तरमपकर्षप्रतिपादने यथा मम—

"कामकान्त्या किल कान्तं कामिनीनां मनो हरन्। असामान्यैस्तु लावण्यैः काममेव जयत्ययम् ॥"

अत्र यस्यैव कामस्य कान्त्या कामिनीनां मनो हरति तमेव कामं जयतीति कामस्य प्रागुत्कर्षमभिधाय पश्चादपकर्षप्रतिपादनाद्व्याहतत्वम्।

(य) अश्लीलतामुदाहरति हन्तुमिति। अर्थस्य व्रीडा-जुगुप्सामङ्गलान्यतमव्यञ्जकत्वमश्लीलत्वमिति लक्षणम्। व्रीडाव्यञ्जकतया सङ्कोचजननेन, जुगुप्साव्यञ्जकतया विरागोत्पादनेन, अमङ्गलव्यञ्जकतया चोद्वेगप्रवर्त्तनेन, रसप्रकर्षनाशकत्वादस्य दोषत्वम्। अयमप्यनित्यो दोषः, "सुरतारम्भगोष्ठ्यादा"विति वक्ष्यमाणेन सामान्यत एव प्रतिप्रसवात्।

हन्तुमेव प्रवृत्तस्य, विनाशयितुमेव प्रवृत्तस्य उद्यतस्य, विवरैषिणश्छिद्रान्वेषिणः सतः स्तब्धस्य निष्पन्दभावेनावस्थितस्य जनस्य यथा आशु शीघ्रं पातः प्रतीपाक्रमणात् पराभवो जायते, तथा शीघ्रं पुनरुन्नतिर्न जायते।

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

अत्रार्थोऽश्लीलः (र) ।

"वर्षत्येतदहर्पतिर्न तु घनो धामस्थमच्छं पयः
सत्यं सा सवितुः सुता सुरसरित्पूरो यया प्लावितः ।
व्यासस्योक्तिषु विश्वसित्यपि न कः श्रद्धा न कस्य श्रुतौ
न प्रत्येति तथापि मुग्धहरिणी भास्वन्मरीचिष्वपः ॥" (ल)

---

द्वितीयोऽर्थस्तु—हन्तुमेव योनौ प्रहर्तुमेव प्रहतस्य आरभमाणस्य, स्तब्धस्य दृढभावेन दण्डायमानस्य, विवरं पिणी योनिरन्ध्रं मुहुः प्रविष्टमिच्छोः पुरुषाङ्गस्य, यथा आशु पातो वीर्यपातेन शैथिल्यं जायते, तथा आशु पुनरुन्नतिः पुनरप्युद्गमो न जायत इति । उभयवाच्ये वशब्दस्तत्प्रतीतिज्ञानाभावं द्योतयति ।

(र) अत्रेति । अर्थो द्वितीयोऽर्थः, अश्लीलः, त्रिधाप्यश्लीलकत्वादिति भावः । अतएवावार्थगता व्रीडाव्यञ्जकाश्लीलता । अर्थगता जुगुप्साव्यञ्जकाश्लीलता यथा—

"अनन्तकृमिसङ्कीर्णं दृश्यं व वमिकारणम् । स्रवत् पर्युषितं गूथं सुधा विशति कुक्कुरी ॥"

अर्थगता अमङ्गलव्यञ्जकाश्लीलता यथा मम—

"अकाले प्रस्थितं कान्तं वीक्ष्य विच्छेदकातरा । एकाकिनी वासगृहे स्थिता वाष्पं विमुञ्चति ॥"

अत्र बहिर्गमनार्थे प्रयुक्तेनापि प्रस्थितपदेन मरणार्थस्यापि बोधनादर्थगता अमङ्गलव्यञ्जकाश्लीलता ।

(ल) कष्टतादोषोदाहरणमाह वर्षतीति । कष्टबोध्यार्थता कष्टता । अर्थस्य दुर्बोधतया तद्बोधविलम्बेनैव रसबोधविलम्बादस्य दोषत्वम् । अयमप्यनित्यो दोषः, "वैयाकरणमुख्ये तु" इत्यादिना क्वचित् प्रतिप्रसवस्य वक्ष्यमाणत्वात् ।

नायक एव नायिकान्तराय धनसम्पदं ददाति, तया च धनसम्पदा तस्या वसनभूषणादिकं वर्द्धितम्, इति नायकः स्वयं वदति लोकोऽपि वदति, तथापि अपरा मुग्धा नायिका, तत् सकलं न विश्वसितीति तां प्रति भङ्ग्या नायकस्योक्तिरियं वर्षतीति । अहर्पतिः सूर्यः, धामस्थं निजकिरणस्थितम्, अच्छं निर्मलम्, एतत् पयो जलं वर्षति ; न तु घनो मेघो वर्षतीत्यन्वयः । मेघस्य जलादिमात्ररूपत्वादिति भावः । "आदित्याज्जायते वृष्टिः" इति स्मृतेः । सा यमुना सवितुः सूर्यस्य सुता इति सत्यम्, आदित्येन जलवर्षणात् तज्जलस्यैव च यमुनारूपेण परिणतत्वादित्याशयः । अतएव च विष्णुपुराणम्—"सूर्यस्य पत्नी संज्ञाऽभूत् तनया विश्वकर्मणः । मनुर्यमो यमी चैव तदपत्यानि वै मुने ॥" यया यमुनया सुरसरितो गङ्गायाः पूरः प्रवाहः प्लावितः परिवर्द्धितः । व्यासस्य, उक्तिषु "विवस्वानष्टभिर्मासैरादायापो रसात्मिकाः । वर्षत्यम्बु ततस्तस्मादन्नादप्यखिलं जगत् ॥" इत्यादिपुराणात्मकवाक्येषु को न विश्वसिति ? अपि तु सर्व एव विश्वसितीत्यर्थः कस्य वा जनस्य श्रुतौ "आदित्याज्जायते वृष्टिः" इत्यादिश्रुतिवाक्ये श्रद्धा विश्वासो नास्ति, अपि तु सर्वस्यैवास्तीत्यर्थः । तथापि मुग्धहरिणी बुद्धिहीना मृगी, भास्वन्मरीचिषु सूर्यकिरणेषु अपो जलानि सन्तीति शेषः न प्रत्येति न विश्वसिति ।

अत्र अप्रस्तुतसूर्यकर्तृकवर्षणादिकथनात् प्रस्तुतानामात्मकर्तृकधनदानादीनां प्रतीतेरप्रस्तुतप्रशंसालङ्कारः कवेरभिप्रेतः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र यस्मात् सूर्य्याद्दृष्टेर्यमुनायाश्च प्रभवस्तस्मात्तयोर्जलमपि सूर्य्य-प्रभवम् । ततश्च सूर्य्यमरीचीनां जलप्रत्ययहेतुत्वमुचितम् । तथापि मृगो भ्रान्तत्वात्तत्र जलप्रत्ययं न करोति । अयमप्रस्तुतोऽप्यर्थो दुर्बोधः, दूरे चास्मात् (१) प्रस्तुतार्थबोध इति कष्टार्थत्वम् (व) ।

"सदा चरति खे भानुः सदा वहति मारुतः ।
सदा धत्ते भुवं शेषः सदा धीरोऽविकत्थनः ॥" (श)

अत्र सदेत्यनवीकृतत्वम् (ष) । अत्रास्य पदस्य पर्य्यायान्तरेणोपादानेऽपि यदि नान्यद्विच्छित्त्यन्तरम्, तदाऽस्य दोषस्य सद्भाव इति कथितपदत्वाद्भेदः (स) ।

---

(व) उदाहृते कष्टतादोषं प्रतिपादयितुमाह अत्रेति । यस्माद्धेतोः । प्रभव उत्पत्तिः । तस्माद्धेतोः । तयोर्दृष्टियमुनयोः । सूर्य्यप्रभवं सूर्य्यादुत्पन्नम् । दृष्टियमुनयोर्जलाभिन्नत्वादिति भावः । षष्ठीसप्तम्योरर्थं प्रति भेदाभावात् सूर्य्यमरीचीनां सूर्य्यकिरणेष्वित्यर्थः, जलप्रत्ययहेतुत्वं जलमस्तीति विश्वासकारणत्वम् अप्रस्तुतोऽप्यर्थ इति अपिशब्दो भिन्नक्रमे । तथा च अयमप्रस्तुतोऽर्थो वर्षतीत्यादिना साक्षादुक्तोऽपीत्यर्थः । दुर्बोध इति । बहुतरशास्त्रयुक्तिकार्य्यकारणभावादिसम्पादितत्वादिति भावः । अस्मात् साक्षाद्वाक्येनोक्तादपि अप्रस्तुतार्थात्, प्रस्तुतार्थबोधो दूरे अत्यन्तव्यवहित इत्यर्थः वाक्येनानुक्तत्वादिति भावः । इति हेतोः ।

(श) अनवीकृतत्वमाह सदेति । एकविधशब्देन पुनः पुनरेकार्थकथनमनवीकृतत्वम् । अतएव अन्यविधशब्देन अर्थस्य अनूतनीकृतत्वादनवीकृतत्वमिति संज्ञाप्युपपद्यते । एवं तत्रवर्णेनैव एकविधशब्दद्वारा पुनः पुनरेकार्थावगमेन, श्रोतुर्विरागोत्पत्तिरिति रसप्रकर्षनाशादस्य दोषत्वम् । अयन्तु नित्यो दोषः प्रतिप्रसवाभावात् ।

भानुः सूर्य्यः सदा खे आकाशे चरति, मारुतो वायुः सदा वहति, शेषोऽनन्तनागः सदा भुवं पृथिवीं धत्ते धारयति, धीरो जनोऽपि सदा अविकत्थनः अनात्मश्लाघाकरो भवति ।

(ष) उदाहृते दोषमुपपादयति अत्रेति । सदेत्यनवीकृतत्वं सदेत्येकविधशब्देनैव पुनः पुनः सततरूपार्थकथनादनवीकृतत्वदोष इत्यर्थः ।

(स) नन्वनेकवारमेकविधशब्दोपादानात् कथितपदत्वदोष एवायमास्तामित्याह अत्रेति । अस्य पदस्य सदाशब्दस्य, पर्य्यायान्तरेण सर्वदासन्ततादिरूपेण भिन्नानुपूर्वीकत्वेन उपादानेऽपि । अन्यद्विच्छित्त्यन्तरम् अपरविधचमत्कारिताविशेषो न जायते । अस्य अनवीकृतत्वाख्यस्य । सद्भावो विद्यमानता स्यादेव । न पुनः कथितपदत्वस्यापि तत्र सद्भावः, एकार्थकैकानुपूर्वीकशब्दसद्भाव एव तत्सद्भावनियमादिति भावः । एतेन "सदा चरति" इत्यादौ कथितपदत्वं सम्भवत्येव ; किन्तु—

"सदा चरति खे भानुर्नित्यं वहति मारुतः । चिरं धत्ते भुवं शेषोऽनिशं धीरोऽविकत्थनः ॥"

(१) अस्मात् [illegible]

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नवीकृतत्वं यथा—(ङ)

"भानुः सकृद्युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवहः प्रयाति ।
बिभर्त्ति शेषः सततं धरित्रीं षष्ठांशवृत्तेरपि धर्म्म एषः ॥" (च)

"गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमपि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र ! त्वामहमपि यतं (१) स्वस्ति भवते ॥" (क)

अत्र द्वितीयशस्त्रमोचने हेतुर्नोक्त इति निर्हेतुत्वम् (ख) ।

---

इति पाठे न कथितपदत्वम् । अनवीकृतत्वन्तु स्यादेव अन्यविच्छित्तिविशेषाभावादिति बोध्यम् ।

(ङ) यत्र तु शब्दान्तरप्रयोगेण नवीकृततया विच्छित्तिविशेषस्तत्र नायं दोष इत्याशयेन नवीकृतत्व दर्शयितुमाह नवीकृतत्वमिति ।

(च) भानुरिति । अभिज्ञानशकुन्तलपञ्चमाङ्के श्लोकोऽयम् । भानुः सूर्य्यः, सकृदेकवारमेव युक्ता जगद्भ्रमणाय रथे निबद्धाः तुरङ्गा अश्वा येन स तथोक्तः । सूर्य्यः खल्वेकवारमेव रथे तुरङ्गान् योजयित्वा जगति केवलं विचरत्येव न तु कदापि विश्राम्यतीत्याशयः । गन्धवहो वायुरपि रात्रिन्दिवमेव वहति, न तु क्षणमपि विश्राम्यतीति भावः । शेषः अनन्तनागः सततमेव धरित्रीं बिभर्त्ति न तु कदापि तां मस्तकादवतार्य्य विश्रामं लभत इत्यभिप्रायः । षष्ठांशेन प्रजाभ्यः करत्वेन शस्यादीनां षष्ठांशग्रहणेन वृत्तिर्जीविका यस्य तादृशस्य राज्ञोऽपि एष एव सर्वदा जगत्पालनरूप एव धर्म्मः ।

अत्रोक्तविधविच्छित्तिसत्त्वान्नानवीकृतत्वदोष इति ज्ञेयम् ।

(क) निर्हेतुतामाह गृहीतमिति । आकाङ्क्षितहेतुशून्यत्वं निर्हेतुत्वम् । हेतोराकाङ्क्षासत्त्वेऽपि तदनभिधानेन तदनुसन्धानविलम्बात् रसप्रतीतिविलम्बेनास्य दोषत्वम् । अयन्त्वनित्यो दोषः, "निर्हेतुता तु ख्यातेऽर्थे दोषतां नैव गच्छति" इति वक्ष्यमाणेन प्रतिप्रसवात् ।

वेणीसंहारनाटके अश्वत्थाम्नोक्तमिदं गृहीतमित्यादि पद्यम् । हे शस्त्र ! येन मत्पित्रा द्रोणेन परिभवभयात् परकर्त्तृकापमानाशङ्कावशात्, नोचितमपि ब्राह्मणस्य शस्त्रधारणनिषेधादसङ्गतमपि त्वं शस्त्रम्, गृहीतं धृतमासीः ; तथा यस्य मत्पितुर्द्रोणस्य प्रभावात् कश्चिदपि जनस्तव शस्त्रस्य विषयो लक्ष्यः नाभूत् इति न खलु, अपि तु देवो वा मानुषो वा सर्व एव तव लक्ष्योऽभूदिति तव काचिदपि नावमाननासीदिति भावः । तेनापि मत्पित्रा द्रोणेन सुतशोकात् अलीकपुत्रमरणवृत्तान्तश्रवणजनितशोकात् त्वं शस्त्रं परित्यक्तम्, तु किन्तु भयात् त्वं न परित्यक्तम् । अहमपि त्वां शस्त्रं विमोक्ष्ये परित्यक्ष्यामि । तेन च यते समान्तिकात् गच्छते भवते स्वस्ति मङ्गलमस्तु ।

(ख) अत्रेति । द्वितीयशस्त्रमोचने अश्वत्थाम्नः शस्त्रपरित्यागे ।

---

(१) यता इति पाठान्तरम् ।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"कुमारस्ते नराधीश ! श्रियं समधिगच्छतु ॥" (ग)

अत्र त्वं म्रियस्वेति विरुद्धार्थप्रकाशनात् प्रकाशितविरुद्धत्वम् (घ) ।

"अचला अबला वा स्युः सेव्या ब्रूत मनीषिणः ! ॥" (ङ)

अत्र प्रकरणाभावाच्छान्तशृङ्गारिणोः को वक्तेति निश्चयाभावात् सन्दिग्धत्वम् (च) ।

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥" (छ)

---

(ग) प्रकाशितविरुद्धतामुदाहरति कुमार इति । अनिष्टार्थव्यञ्जकत्वं प्रकाशितविरुद्धत्वम् । अनिष्टार्थप्रकाशेन श्रोतृहृदयेऽमोदयाच्चमत्कारितात्मकरसप्रकर्षनाशेनास्य दोषत्वम् । एष तु नित्य एव दोषः प्रतिप्रसवाभावात् ।

"समस्तगुणवानेष राज्यभारसहः सुधीः ।" इति मत्पूरितपूर्वार्द्धम् ।

श्रियम् इतोऽपि शिक्षासम्पदं समधिगच्छतु सम्यक्प्राप्नोतु ।

(घ) अत्रेति । अयमाशयः—"श्रियं समधिगच्छतु" इत्यत्र राजलक्ष्मीं सम्प्राप्नोतु इत्यर्थोऽपि प्रकाश्यते । एवञ्च पितरि जीवति पुत्रस्य राज्यादिप्राप्त्यसम्भवात् "त्वं म्रियस्व ततः परमयं कुमारो राजलक्ष्मीं सम्प्राप्नोतु" इत्यनिष्टार्थोऽपि प्रकाशत इति । ननु विरुद्धमतिकारितादोषेण सहास्य को भेद इति चेत् ; उच्यते—'भूतयेऽस्तु भवानीशः' इत्यत्र भवानीशशब्दपरिवर्त्तने विरुद्धमतिकारितादोषो नावतिष्ठत इति स शाब्दो दोषः । अत्र तु कुमारादिशब्दपरिवर्त्तनेऽपि ईदृशार्थसत्त्वे एव प्रकाशितविरुद्धता दोषोऽवतिष्ठत एवेत्ययमार्थो दोष इति शाब्दत्वार्थत्वभेदाद्भेद इति ।

(ङ) सन्दिग्धतादोषमाह अचला इति । सन्देहविषयीभूतार्थत्वं सन्दिग्धत्वम् । सन्दिग्धविषये एकतरनिर्णयाय कारणानुसन्धानविलम्बेन रसप्रतीतिविलम्बादस्य दोषत्वम् । अयन्त्वनित्यो दोषः, "सन्दिग्धत्वं तथा व्याजस्तुतिपर्य्यवसायि चेत्" इत्यनेन सामान्यत एव प्रतिप्रसवस्य वक्ष्यमाणत्वात् ।

"विहायापरकर्म्माणि समासक्तधिया मया ।" इति मत्पूरितपूर्वार्द्धम् ।

हे मनीषिणो ज्ञानिनः ! मया अचला ईश्वरोपासनार्थं पर्वताः, अबला सुरतसम्भोगार्थं वनिता वा सेव्याः सेवनीयाः स्युरिति यूयं ब्रूत उपदिशत ।

(च) अत्रेति । प्रकरणाभावाद्धेतुः प्राक्प्रस्तुतत्वाभावात् । अत्र अबला वा इति वाशब्दस्याबलान्वये अबलास्तनास्याप्रकाशेन शान्तो वक्ता सम्भवति ; एवमचला वा इति वाशब्दस्याचलान्वये अचलस्तनास्याप्रकाशेन शृङ्गारी वक्तापि स्यादिति वक्तृनिश्चयाभाव इति भावः । अत्रापि पूर्ववत् शाब्दत्वार्थत्वभेदेनैव प्रागुक्तसन्दिग्धत्वदोषादस्य भेदः ।

(छ) पुनरुक्ततामाह सहसेति । येन केनचित् प्रत्यायितस्यार्थस्य पुनरपि प्रत्यायनं पुनरुक्तता । द्वितीयवारप्रत्यायनकारणान्वेषणविलम्बेन रसप्रतीतिविलम्बादस्य दोषत्वम् । अयमप्यनित्यो दोषः, "धनुर्ज्या-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र द्वितीयार्द्धे व्यतिरेकेण (१) द्वितीयपादस्य वार्थं इति पुनरुक्तता (ज)।

प्रसिद्धिविरुद्धता यथा—(झ)

"ततश्चचार समरे शितशूलधरो हरिः॥" (ञ)

अत्र हरेः शूलं लोकेऽप्रसिद्धम् (ट)। यथा वा—(ठ)

"पादाघातादशोकस्ते सञ्जाताङ्कुरकण्टकः।" (ड)

अत्र पादाघातादशोकेषु पुष्पमेव जायत इति प्रसिद्धम्, नत्वङ्कुर इति कविसमयख्यातिविरुद्धता (ढ)।

---

दिषु शब्देषु" इत्यादिना वक्ष्यमाणेन प्रतिप्रसवात्। अत्रापि प्रागुक्तरीत्यैव कथितपदत्वाद्भेदः। किञ्च, एकानुपूर्वीकशब्दस्य द्विःप्रयोगे कथितपदत्वम्, भिन्नानुपूर्वीकशब्दैरेकस्यैवार्थस्य द्विःप्रत्यायने पुनरुक्तता। प्रमाणान्तरेण प्रतीतस्यार्थस्य शब्देन पुनः प्रत्यायने अपुष्टता, शब्देनैव प्रतीतस्यार्थस्य शब्देनैव पुनः प्रत्यायने पुनरुक्ततेति भेदः। व्योम्नो विततत्वन्तु प्रत्यक्षेणापि प्रतीयते।

किरातार्जुनीयद्वतीयसर्गे सहसेत्यादिश्लोकः। सहसा अविचार्य, क्रियां यत्किञ्चिदपि कार्य्यम्, न विदधीत लोको न कुर्य्यात्। येन हि अविवेकः अविवेचनपूर्वककार्य्यकरणम्, परमापदां महाविपदां पदं स्थानं हेतुरित्यर्थः। हि तथाहि, गुणलुब्धा गुणपक्षपातिन्यः सम्पदः, विमृश्यकारिणं विवेचनपूर्वककार्य्यकारिणं जनम्, स्वयमात्मनैव वृणते अवलम्बन्ते। न तत्र चेष्टापेक्षेति भावः।

(ज) अत्रेति। द्वितीयार्द्धे वृणत इत्यादिवाक्ये, व्यतिरेकेण विपरीतभावेन, द्वितीयपादस्यैव अविवेक इत्यादेरेव अर्थो वर्त्तत इति शेषः। तथा च यथा 'अरोगी सुखी' इत्युक्ते 'रोगी दुःखी' इति स्वभावत एव प्रतीयते, तथा 'अविवेकः परमापदां पदम्' इत्युक्ते 'विवेकः परमसम्पदां पदम्' इत्यपि स्वभावादेव प्रतीयते। तथापि वृणत इत्यादिना पुनस्तस्यैवार्थस्य प्रत्यायनात् पुनरुक्ततेति भावः।

(झ) ख्यातिविरुद्धतामाह प्रसिद्धीति। ख्यातिरिति प्रसिद्धिरिति च नार्थान्तरमिति "ख्यातिविद्याविरुद्धते" इति कारिकोक्तेन सह नास्य विरोधः। लोकसमाजे कविसम्प्रदायादौ च प्रसिद्धस्य, अन्यथावर्णनं प्रसिद्धिविरुद्धत्वम्। प्रसिद्धिविरोधेनार्थप्रतीतिरेव प्रतिबध्यत इति दूरे तावदास्तां रसप्रतीतिरिति दोषत्वमस्य। अयन्त्वनित्यो दोषः, "कवीनां समये ख्याते गुणः ख्यातविरुद्धता" इति वक्ष्यमाणेन प्रतिप्रसवात्।

(ञ) तत इति। "सिंहनादेन तीव्रेण त्रासयन्नसुरान् पुरः।" इति मत्पूरितपूर्वार्द्धम्।

(ट) अत्रेति। किन्तु शिवस्यैव प्रसिद्धमिति भावः।

(ठ) कविसम्प्रदायप्रसिद्धिविरुद्धतामुदाहर्त्तुमाह यथा वेति।

(ड) पादेति। "मुखमद्येन पुष्पं च वकुलानां कुलं किल॥" इति मत्पूरितपरार्द्धम्।

हे प्रिये! ते तव पादाघातात् अशोको वृक्षः, सञ्जातम् अङ्कुरः वालिकाप्ररोह एव कण्टकं यस्मिन् स तथोक्तः।

---

(१) द्वितीयार्द्धे व्यतिरेकेण, द्वितीयार्द्धव्यतिरेकेण इति पाठभेदौ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"अधरे करजक्षतं मृगाक्ष्याः ।" (ण)

अत्र शृङ्गारशास्त्रविरुद्धत्वाद्विद्याविरुद्धता (त) ।

एवमन्यशास्त्रविरुद्धत्वमपि (थ) ।

"ऐशस्य धनुषो भङ्गं क्षत्रस्य च समुन्नतिम् ।
स्त्रीरत्नञ्च कथं नाम मृष्यते भार्गवोऽधुना ? ॥" (द)

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षति (१) (ध) ।

---

(ढ) अत्रेति । श्लोकेषु वृत्तेषु । कवीनां समयेन वर्णनानियमेन या ख्यातिः प्रसिद्धिस्तद्विरुद्धता । तथा च वक्ष्यति—"पादाघातादशोकं विकसति वकुलं योषितामास्यमद्यैः" इति ।

(ण) विद्याविरुद्धतामाह अधर इति । व्याकरणेतरशास्त्रोक्तनियमराहित्यं विद्याविरुद्धत्वम् । अत्र व्याकरणेतरेत्यभिधानात् व्याकरणशास्त्रोक्तनियमराहित्ये च्युतसंस्कारतैवेति बोध्यम् । विद्याविरुद्धोक्तेर्मिथ्याज्ञानेन रसप्रतीतेरेव प्रतिबन्धादस्य दोषत्वम् । अयमप्यनित्यो दोषः, हास्यरसे अस्योपयोगयोगित्वेन गुणत्वात् ।

"अधरे करजक्षतं मृगाक्ष्या अलका देहलता कचा विकीर्णाः ।
नयने च निमीलिते कथञ्चित् कथयन्त्येव रतं नवीनमेते ॥"

इति मत्पूरितपरपादत्रयः श्लोकः ।

मृगाक्ष्या हरिणलोचनायाः, अधरे ओष्ठे करजक्षतं नखाघातचिह्नम् ।

(त) अत्रेति । शृङ्गारशास्त्रविरुद्धत्वात् अधरे करजक्षतस्येत्यर्थः । तथा च कामशास्त्रम्—

"नखाघातः प्रदातव्यो यथास्थानानि कर्मसु । पार्श्वयोः स्तनयोश्चैव ऊरौ चैव नितम्बके ॥
कक्षस्थले च कर्णान्ते कपोले बाहुमूलके । ग्रीवायां कण्ठदेशे च नखाघातं समाचरेत् ॥"

(थ) एवमिति । ऊहनीयमिति शेषः । तत्र श्रुतिशास्त्रविरुद्धत्वं यथा—

"प्रातःसन्ध्यां करोत्येष मध्याह्ने धार्मिको द्विजः ।"

अत्र ब्राह्मणकर्त्तव्यायाः प्रातःसन्ध्याया मध्याह्ने करणात् श्रुतिशास्त्रविरुद्धता ।

(द) साकाङ्क्षतां दर्शयितुमाह ऐशस्येति । अनुपपद्यमानार्थस्य स्वोपपत्तये अनुक्तार्थसापेक्षत्वं साकाङ्क्षत्वम् । निर्हेतुतायां हेतोराकाङ्क्षितत्वमात्रम्, न पुनर्हेतुं विना अर्थस्यानुपपत्तिः ; अत्र तु आकाङ्क्षितमनुक्तार्थं विना उक्तस्यार्थस्यानुपपत्तिरेवेति निर्हेतुतादोषादस्य भेदः । अतएव च न्यूनपदत्वदोषादप्यस्य भेद इति भाव्यम् । आकाङ्क्षितार्थानभिधानेन विवक्षितार्थानवगमात् रसप्रतीतिप्रतिबन्धे नास्य दोषत्वम् । अयन्तु नित्यो दोषः प्रतिप्रसवाभावात् ।

भार्गवः परशुरामः, अधुना ऐशस्य शिवसम्बन्धिनो धनुषो भङ्गम्, क्षत्रस्य क्षत्रियजातेः समुन्नतिञ्च स्त्रीरत्नं सीताञ्च उपेक्षितुं कथं नाम मृष्यते शक्नोति ? अपि तु कथमपि नेत्यर्थः ।

(ध) अत्रेति । आकाङ्क्षति मृष्यत इति पदस्यार्थ इति शेषः । तथा च स्वगुरुहरधनुर्भङ्गः क्षत्रिय-

---

(१) आकाङ्क्षता इत्यपि पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"सज्जनो दुर्गतौ मग्नः कामिनी गलितस्तनी ।
खलः पूज्यः समज्यायां तापाय मम चेतसः ॥" (न)

अत्र सज्जनः कामिनी च शोभनौ, तत्सहचरः खलोऽशोभन इति सहचरभिन्नत्वम् (प) ।

"आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ? ॥" (फ)

---

जातेरभ्युदयश्च परशुरामस्य अनिष्ट इति तत्र तस्य असह्यता सम्भवति ; स्त्रीरत्नन्तु तस्य नानिष्टमिति कथं तत्र तस्य असह्यता सम्भवतीति स्त्रीरत्नापेक्षाया एव असह्यत्वसम्भवात् मृष्यत इति पदस्यार्थोऽनुपपद्यमानः स्वोपपत्तये अनुक्तस्य उपेक्षितुमिति पदस्यार्थमाकाङ्क्षतीति साकाङ्क्षतादोष इति भावः ।

(न) सहचरभिन्नतामुदाहरति सज्जन इति । उत्कृष्टापकृष्टयोरेकभावेनैकत्र निर्देशः सहचरभिन्नता । "साधुः खलं पश्यति" इत्यादौ कारकभेदाद्भिन्नभावेन निर्देशे नायं दोष इत्यत उक्तमेकभावेनेति । अमृतविषयोरिव उत्कृष्टापकृष्टयोरेकत्र समावेशे कथमपि श्रोतुरुद्वेगोदयात् रसस्य चमत्कारिताहानेरस्य दोषत्वम् । अयमपि नित्यो दोषः समाधानाभावात् ।

समज्यायां परिषदि । क्वचिदपकृष्टोत्कृष्टयोरप्येकत्र निर्देशे यथा मम—

"मूर्खो हास्याय बन्धाय दस्युस्तापाय दुःसुतः । सत्पुत्रो विधिना सृष्टः स्वर्गाय च सुखाय च ॥"

(प) अत्रेति । कामिनी शोभना स्वरूपेणैव, न तु गलितस्तनत्वेनेति बोध्यम् ।

(फ) अस्थानयुक्ततामुदाहरति आज्ञेति । अस्थाने वाक्यार्थसमाप्तिरस्थानयुक्तता । स्थाने उपयुक्त स्थाने युक्तता वाक्यार्थसमाप्तेर्योग इति स्थानयुक्तता न स्थानयुक्तता अस्थानयुक्तता । सा च द्विविधा— समाप्त्यावश्यकत्वे आधिक्यम्, आधिक्यावश्यकत्वे च समाप्तिरिति । तत्राद्ये अनावश्यकाधिक्यकारणानुसन्धानविलम्बेन रसप्रतीतिविलम्बः, द्वितीये तु आधिक्यावश्यकत्वेऽपि तदभावात् रसप्रतीतेरपूर्णतेति दोषत्वमस्य । समाप्तपुनरात्ततायां विशेषणस्य पुनरुपादानम्, इह तु विशेष्यस्य ; अधिकपदत्वे प्रतीतिसमकालमेवाधिक्यप्रतीतिः अत्र तु पश्चादिति ताभ्यां सहास्य आधिक्यप्रकारे भेदः । स्वोपपत्तये न्यूनपदत्वे अनुक्तं पदं साकाङ्क्षत्वे चानुक्तमर्थमाकाङ्क्षति, अत्र तु नोपपत्तय इति ताभ्यां सहास्य न्यूनत्वप्रकारे भेदः । अयमपि नित्यो दोषः प्रतिप्रसवासम्भवात् ।

प्रथमप्रकारे उदाहरणमाज्ञेति । बालरामायणे शतानन्दस्योक्तिरियम् । आज्ञा शक्रशिखामणिप्रणयिनी इन्द्रस्य चूड़ारत्नसङ्गिनी स्वयमिन्द्रेणापि शिरसा ध्रियत इत्यर्थः । शास्त्राण्येव नवं चक्षुः, भूतपतौ पिनाकिनि शिवे भक्तिः, लङ्केति नाम दिव्या पुरी पदं वासस्थानम् । द्रुहिणान्वये ब्रह्मणो वंशे उत्पत्तिश्च । तत्तस्मात्, अहो ईदृग् गुणवान् वरो न लभ्यते । तदा अस्मै एव सीता दीयतामित्याह स्यादिति । एष

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र न रावण इत्येतावतैव समाप्यम् (व)।

"हीरकाणां निधेरस्य सिन्धोः किं वर्णयामहे ।" (भ)

अत्र रत्नानां निधेरित्यविशेष एव वाच्यः (म)।

"आवर्त्त एव नाभिस्ते नेत्रे नीलसरोरुहे ।
तरङ्गा वलयस्तेन त्वं लावण्याम्बुवापिका ॥" (य)

अत्र आवर्त्त एवेति नियमो न वाच्यः (र)।

"यान्ति नीलनिचोलिन्यो रजनीष्वभिसारिकाः ॥" (ल)

---

चेत् रावणो न स्यात् दुराचारत्वेन विख्याननामा रावणो यदि न स्यादित्यर्थः, तदा अस्मै सीता दातव्यैव स्यादिति भावः। सर्वत्र सर्वेष्वेव जनेषु सर्वे गुणाः पुनः क्व नु दृश्यन्ते सन्ति ? अपि तु क्वापि नेत्यर्थः।

(व) अत्रेति। समाप्यं वाक्यमिति शेषः। तथा चात्र न रावण इत्यत्रैव वाक्यसमाप्तेरावश्यकत्वेऽपि क्व नु पुनरित्यादेरयोग्यसमर्थकवाक्यस्य अनावश्यकाधिक्यादस्थानयुक्तत्वादोष इति भावः।

द्वितीयप्रकारे उदाहरणं यथा मम—

"किशोरमुल्लसत्कान्तिमाकण्ठमग्नमम्बुनि । मत्वा युवतिमात्मेच्छां वितनोत्येष कामुकः ॥"

अत्र "क्व विवेकः स्मराकुले" इति समर्थकवाक्ये नाधिक्यावश्यकत्वेऽपि पूर्वमेव समाप्तेरस्थानयुक्तता।

(भ) अविशेषे विशेषमुदाहरति हीरकाणामिति। सामान्ये अभिधातव्ये विशेषाभिधानम् अविशेषे विशेषः। ईदृशस्थले विवक्षितार्थप्रतीतिविलम्बेन रसप्रतीतेरपि विलम्बादस्य दोषत्वम्। अयमपि नित्यो दोषः प्रतिप्रसवाभावात्।

"नास्य रत्नानि शिष्यन्ते सर्वैरपि च संग्रहे ॥" इति मत्पूरितपरार्द्धम्।

(म) अत्रेति। अविशेषः सामान्यम्। तथा च सति न दोष इति भावः।

(य) अनियमे नियममाह आवर्त्त इति। नियमप्रयोजनाभावेऽपि तदभिधानम् अनियमे नियमः। अप्रयोजनस्याभिधाने तत्प्रयोजनानुसन्धानविलम्बेन रसप्रतीतिविलम्बादस्य दोषत्वम्। प्रतिप्रसवाभावादयमपि नित्यो दोषः।

हे प्रिये ! ते तव नाभिः आवर्त्तो जलभ्रमिरेव, नेत्रे नयनद्वयं नीलसरोरुहे नीलपद्मद्वयम्, वलयस्त्रिवल्यश्च तरङ्गाः, तेन हेतुना, त्वं लावण्याम्बुनो वापिका दीर्घिका।

(र) अत्रेति। नियमो नियमार्थक एवशब्दः। न वाच्यः प्रयोजनाभावात्।

(ल) विशेषे अविशेषमाह यान्तीति। विशेषेऽभिधातव्ये सामान्याभिधानं विशेषे अविशेषः। अनुपपत्तिज्ञानेन रसप्रतीतिप्रतिबन्धादस्य दोषत्वम्। उक्तादेव हेतोरयमपि दोषो नित्यः।

"अतिनिःशब्दसञ्चाराः परितः प्रेरितेक्षणाः ।" इति मत्पूरितपूर्वार्द्धम्।

नीलनिचोलिन्यः अन्धकारे यथा कश्चिल्लक्षयितुं न शक्नुयात् तदर्थं परिहितनीलवसनाः अभिसारिकाः प्रागुक्तलक्षणा नायिका रजनीषु यान्ति।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र तमिस्रास्विति रजनीविशेषो वाच्यः (व)।

"आपातसुरसे भोगे निमग्नाः किं न कुर्वते ॥" (श)

अत्र आपात एवेति नियमो वाच्यः (ष)।

ननु वाच्यस्यानभिधाने "व्यतिक्रमलवम्" इत्यादावपेरभावः, इह चैवकारस्येति कोऽनयोर्भेदः ? अत्राह—"नियमस्यावचनमेव पृथग्भूतं नियमपरिवृत्तेर्विषयः" इति ; तन्न, तथा सत्यपि द्वयोः शब्दार्थदोषतायां नियामकाभावात् (स)। तत् का गतिरिति चेत् "व्यतिक्रमलवम्" इत्यादौ शब्दोच्चारणानन्तरमेव दोषप्रतिभासः, इह तु अर्थप्रत्ययानन्तरमिति भेदः (ह)।

एवञ्च शब्दपरिवृत्तिसहत्वासहत्वाभ्यां पूर्वैरुक्तोऽपि शब्दार्थदोषविभाग एवं पर्य्यवस्यति, यो दोषः शब्दपरिवृत्त्यसहः स शब्ददोष एव ; यश्च पदार्था-

(व) अत्रेति। तमिस्रासु अन्धकारान्वितासु रात्रिषु। तथा च "तमिस्रा तामसी रात्रिः" इत्यमरः। वाच्य इति। तथा सति अन्धकारसमानवर्णतया नीलवसनानां लोकैरलक्ष्यतया गोपनेनैव गमनं सिध्यतीति नोक्तो दोष इति भावः। रजनीष्विति सामान्याभिधाने तु ज्योत्स्नान्वितरात्रीणामपि प्राप्तेस्तासु नीलवसनानामनायासेन लक्ष्यतया गोपनगमनानुपपत्तिरिति कवेरभिप्रेतासिद्धेरुक्तदोष एवेति बोध्यम्।

(श) नियमे अनियममुदाहरति आपातेति। नियमे अभिधातव्ये तदनभिधानं नियमे अनियमः। तथा चार्थस्य विवक्षितभावेनाप्रतीत्या रसादेश्चमत्कारिताह्रासादस्य दोषत्वम्। एषोऽपि नित्य एव दोषः प्रतिप्रसवाभावात्।

"संसारकूपसम्भूते गभीरे पङ्कसङ्कुले।" इति मत्पूरितपूर्वार्द्धम्।

आपातसुरसे प्रथमत एव सुखकरे, भोगे विषयोपभोगे निमग्ना जनाः।

(ष) अत्रेति। आपात एव उपस्थितिमात्रमेव। वाच्य इति। तथा सति अर्थस्य विवक्षितभावेनैव प्रतीतेर्नोक्तदोष इत्याशयः।

(स) वाच्यानभिधानेन सह नियमे अनियमस्य भेदं दर्शयितुं पृच्छति नन्विति। आह कश्चिदिति शेषः। अवचनमनुक्तिरेवं, पृथग्भूतं व्यतिरिक्तं सत् अनियमपरिवृत्तेर्नियमेऽनियमाख्यदोषस्य। तथा च नियमद्योतकशब्दानभिधाने नियमेऽनियमः, तद्भिन्नद्योतकशब्दानभिधाने तु वाच्यानभिधानमिति सामान्यविशेषभावेनानयोर्भेद इति तस्याभिप्रायः। द्वयोर्वाच्यानभिधानदोषनियमानियमदोषयोः। शब्दार्थदोषतायामिति। वाच्यानभिधानस्य शब्ददोषत्वे नियमानियमदोषस्य चार्थदोषत्वे इत्यर्थः, नियामकाभावात् उभयोरपि शब्दाभावघटिततया शब्ददोषत्वस्यैव सम्भवेन नियमानियमदोषस्य अर्थदोषत्वे निश्चायकाभावादित्यर्थः।

(ह) तदिति। का गतिरुभयोर्भेदनिरूपणे क उपायः। दोषप्रतिभासो दोषप्रतीतिः। भेद इति। एवञ्चोभयोः शब्दार्थदोषतायामपि नियामकोपपत्तिरिति भावः।

(च) नन्वेवं शब्दार्थयोः प्रतीत्यानन्तर्य्यमात्रेणैव शब्दार्थदोषयोर्विभागे सिद्धान्तिते प्राचीनमत-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न्वयप्रतीतिपूर्वबोध्यः सोऽपि शब्ददोषः; यथार्थप्रतीत्यनन्तरबोध्यः सोऽर्थाश्रय इति (च)।

एवञ्च अनियमपरिवृत्तित्वादेरप्यधिकपदत्वादेर्भेदो बोद्धव्यः (क)।

अमतपरार्थत्वे तु "राममन्मथशरेण—" इत्यादौ (१६२ पृष्ठे) नियमेन वाक्यव्यापित्वाभिप्रायाद्वाक्यदोषता (ख)। अश्लीलत्वादौ तु न नियमेन वाक्यव्यापित्वम् (ग)।

"आनन्दितस्वपक्षोऽसौ परपक्षान् हनिष्यति॥" (घ)

---

विरोधः; ते हि केवलं शब्दपरिवृत्तिसहत्वे अर्थदोषत्वं शब्दपरिवृत्त्यसहत्वे तु शब्ददोषत्वमित्थं शब्दार्थदोषौ विभजन्ते इत्याह एवञ्चेति। एतेन "निरुक्तभेदे प्राचीनस्वरसमप्याह एवञ्चेति" इति रामचरणोक्तमपास्तम्। तथात्वे "एवं पर्य्यवस्यति" इत्यादिना प्राचीनमतस्यार्थान्तरकल्पनानुपपत्तेः। एवञ्च अस्मन्मते शब्दार्थयोः प्रतीत्यानन्तर्य्येण शब्दार्थदोषविभागस्य सिद्धान्ते चेत्यर्थः। शब्दपरिवृत्तिसहत्वासहत्वाभ्यां शब्दपरिवर्त्तने दोषस्य स्थित्यस्थितिभ्याम्। पूर्वैः प्राचीनैः। तथा च यो यो दोषस्तत्तच्छब्दपरिवर्त्तनेऽपि केवलमर्थमाश्रित्यावतिष्ठते, स सोऽर्थदोषः; यो यस्तु दोषः केवलशब्दाश्रिततया तत्तच्छब्दपरिवर्त्तने नावतिष्ठते स स शब्ददोषः, उभयत्राप्यन्वयव्यतिरेकानुसारित्वादिति प्राचीनानामाशयः। एवं पर्य्यवस्यति—युक्त्या वक्ष्यमाणप्रकारेण परिणमते। तं प्रकारमेवाह यो दोष इति। पदानां ये अर्थास्तेषाम् अन्वयप्रतीतेः परस्परसम्बन्धबोधात् पूर्वं बोध्यः, तत्तच्छब्दश्रवणानन्तरमेव बोधगम्य इत्यर्थः। सोऽपि शब्ददोष इति। स्वश्रवणमात्रमेव ज्ञायमानतया केवलशब्दघटितत्वादिति भावः। अर्थाश्रय इति। स्वप्रतीत्यनन्तरमेव प्रतीयमानतया केवलार्थघटितत्वादित्याशयः। इतीति। अनेन प्रकारेण पर्य्यवस्यतीत्यर्थः।

(क) उक्तसिद्धान्तमन्यत्रापि सञ्चारयति एवञ्चेति। किञ्चेति चार्थः। एवमनेन प्रकारेण। अनियमपरिवृत्तित्वम् अनियमे नियमः, आदिशब्दादपुष्टत्वास्थानयुक्ततादेर्ग्रहणम्। द्वितीयादिशब्दात् न्यूनपदत्वसमाप्तपुनरात्ततादेः परिग्रहः। तथा च अधिकपदत्वे शब्दश्रवणानन्तरमेव दोषप्रतीतिः अनियमे नियमादौ तु अर्थप्रतीत्यनन्तरमेवेत्यादिरूपो भेदः समुन्नेयः।

(ख) अर्थैवमर्थप्रतीत्यनन्तरमेव प्रतीयमानतया अमतपरार्थतादोषस्य अर्थदोषत्वसम्भवेऽपि कथं वाक्यदोषमध्ये परिगणनमित्याह अमतेति। नियमेन अवश्यम्भावेन। एतेनोक्तरीत्या अमतपरार्थता अर्थदोष एव वास्तविक इति सूचितम्।

(ग) अथ तर्हि "हन्तुमेव प्रवृत्तस्य" इत्यादावपि अश्लीलार्थस्य वाक्यव्यापित्वाद्वाक्यदोषत्वसम्भवे कथमयमर्थदोषमध्ये परिगणित इत्याह अश्लीलेति। नियमेन अवश्यम्भावेन। तथा च "हन्तुमेव प्रवृत्तस्य" इत्यादौ वाक्यव्यापित्वसम्भवेऽपि "अकाले प्रस्थितं कान्तम्" इत्यादौ केवलप्रस्थितपदव्यापित्वेन वाक्यव्यापित्वाभावादर्थगत एवाश्लीलतादोष इत्याशयः।

(घ) विध्ययुक्ततामुदाहरति आनन्दितेति। अयोग्ये विधित्वारोपो विध्ययुक्तता। विधित्व समापिका

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र परपक्षं हत्वा स्वपक्षमानन्दयिष्यतीति विधेयम् (ङ)।

"चण्डीशचूडाभरण ! चन्द्र ! लोकतमोऽपह !।
विरहिप्राणहरण ! कदर्थय न मां वृथा ॥" (च)

अत्र विरहिण उक्तौ तृतीयपादस्यार्थो नानुवाद्यः (छ)।

"लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिति गतेवाम्बुधिं यस्य कीर्त्तिः ॥" (ज)

---

क्रिया । तथा च असमापकक्रियायामपि समापकक्रियात्वारोपेण प्रतीतिविपर्य्यासात् रसप्रतीतिप्रतिबन्ध इति दोषत्वमस्य । अयमपि नित्यो दोषः प्रतिप्रसवाभावात् ।

"कुमारो मारतुल्यश्रीः कुमारसमविक्रमः ।" इति मत्पूरितपूर्वार्द्धम् ।

आनन्दितेत्यादौ परपक्षहननेन स्वपक्षानन्दजननस्याभिप्रेततया, आनन्दनक्रियायामेव समापनौचित्ये हननक्रियायां समापनाद्विध्ययुक्तता । अथैवं विधेयाविमर्शेन सहास्य को भेद इति चेत्; उच्यते—"आनन्द्यासौ निजान् पक्षान् परपक्षान् हनिष्यति" इति पाठे विधेयाविमर्शस्य प्रसङ्ग एव नास्ति, अयन्तु स्यादेवेति विषयभेदाद्भेदः । अथवा शब्दश्रवणानन्तरमेव विधेयासमर्शप्रतीतिः, अयन्तु अर्थप्रतीत्यनन्तरमेवेति भेदः ।

(ङ) अत्रेति । विधेयं विधातुं समापयितुं योग्यमित्यर्थः । तथा सति नोक्तो दोष इत्याशयः ।

(च) अनुवादायुक्ततामुदाहरति चण्डीशेति । अनुवादस्य विधिविरोधित्वमनुवादायुक्तता । अत्रानुवादो नामोद्देश्यविशेषणम् । अस्य तु विधिविशेषणयोः परस्परविरोधप्रत्यायकतया रसप्रतीतिप्रतिबन्धकत्वाद्दोषत्वम् । प्रतिप्रसवाभावादयमपि नित्यो दोषः ।

हे चण्डीशचूडाभरण ! दुर्गापतेः शिवस्यापि शिखालङ्कार ! हे चन्द्र ! हे लोकतमोऽपह ! जगदन्धकारनाशक ! हे विरहिप्राणहरण ! मां विरहिणं वृथा न कदर्थय मदनोद्दीपनेनानर्थकं नीत्पीड़य ।

अत्र विरहिण एव निरर्थककदर्थनविधिना सह स्वाभाविकतया सार्थकस्येव विरहिप्राणहरणविशेषणस्यानुपपत्त्या विरोधादनुवादायुक्तता ।

(छ) अतएव समाधानप्रकारमाह अत्रेति । नानुवाद्यो न चन्द्रविशेषणतया स्थापनीयः । तथा च "विरहिप्राणहरण !" इत्यत्र "जगदानन्दजनन !" इत्युक्तौ तु नायं दोष इत्याशयः ।

(ज) निर्म्मुक्तपुनरुक्तत्वदोषमुदाहरति लग्नमिति । समाप्तस्यापि वाक्यार्थस्य कारकान्तरेण पुनरुपादानं निर्म्मुक्तपुनरुक्तत्वम् । अतएव विशेषणमात्रेण पुनरुपादाने समाप्तपुनरात्तता, विशेष्यीभूतकारकान्तरेण पुनरुपादाने तु निर्म्मुक्तपुनरुक्ततेत्यनयोर्भेदः । निर्म्मुक्तः समाप्तोऽपि पुनरुक्त इति निर्म्मुक्तपुनरुक्तो वाक्यार्थस्तस्य भावः सा । अत्र मध्ये आकाङ्क्षाभङ्गेन रसभङ्गोऽपि प्रतीयत इति दोषत्वमस्य । पाठपरिवर्त्तनमन्तरेण समाधानासम्भवादयमपि नित्य एव दोषः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र विदितं तेऽस्त्वित्यनेन समापितमपि वचनं तेनेत्यादिना पुनरुपात्तम् (झ) ।

अथ रसदोषानाह—

६ । रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि ।
परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः ॥
आक्षेपः कल्पितः कृच्छ्रादनुभावविभावयोः ।
अकाण्डे प्रथनच्छेदौ तथा दीप्तिः पुनः पुनः ॥
अङ्गिनोऽननुसन्धानमनङ्गस्य च कीर्त्तनम् ।
अतिविस्तृतिरङ्गस्य प्रकृतीनां विपर्य्ययः ॥
अर्थानौचित्यमन्यच्च (१) दोषा रसगता मताः । (ञ)

---

राज्ञः प्रशंसेयं लग्नमित्यादिः । रागेण शत्रुरुधिरेण अनुरागेण च आहतानि व्याप्तानि अङ्गानि समस्तावयवा यस्यास्तया, ययैव असियष्ट्या कृशतरवारिणा असियष्टिवत् कृशाङ्ग्या कयाचित् स्वैरिण्या च, इह अधुना, अरीणां कण्ठे लग्नं शिरश्छेदाय आलिङ्गनाय च संसक्तम् । या च असियष्टिः, इह मातङ्गानां हस्तिनां कामशास्त्रोक्तहस्तिलक्षणविशिष्टपुरुषविशेषाणाञ्च अपि उपरि पतन्ती तेषां वधाय तैः सह रमणाय च संसजन्ती सती, परपुरुषैः शत्रुपक्षीयलोकैः पतिभिन्नजनैश्च दृष्टा । तस्यामसियष्ट्यां स्वैरिण्याञ्च सक्त आसक्तः अयं मत्पतीभूतो राजा, किञ्चित् मत्सुखादिकं न गणयति न चिन्तयति ; अपि च तेन राज्ञा अहं भृत्येभ्यः स्वसेवकेभ्यो दत्तास्मि ; इति ते तव मत्पितुः समुद्रस्य विदितं ज्ञातमस्तु । अनन्तरञ्च स्वकन्याया दुःखमोचनाय यत् कर्त्तव्यं भवति तत् कुर्य्या इति भावः । श्रियाः समुद्रोत्पन्नाया लक्ष्म्याः नियोगादादेशात् इति पूर्वोक्तं गदितुं कथयितुमिव यस्य कीर्त्तिः श्रीसहचरी च अम्बुधिं समुद्रं गता । दुष्टोऽपि सुचारुरेवायं श्लोकः ।

(झ) अत्रेति । वचनं वचनार्थम्, तेनेत्यादिना "तेनास्मि दत्ता भृत्येभ्यः" इत्यनेन । पुनरुपात्तं तेनेति कर्त्रा, अस्मीति कर्म्मणा, भृत्येभ्य इति सम्प्रदानेन च पुनर्गृहीतम् ।

(ञ) रसस्येति । स्वशब्देन रसस्योक्तिरेको दोषः । स पुनर्द्विविधः—रसशब्देन रसस्योक्तिः शृङ्गारादिशब्देन रसस्योक्तिश्चेति । स्थायिसञ्चारिणोर्भावयोरपि स्वशब्देनोक्तिरित्यन्वयः । तेन स्वशब्देन स्थायिभावस्योक्तिः स्वशब्देन सञ्चारिभावस्योक्तिश्चेति द्वौ । परिपन्थी विरोधी यो रसस्तस्य अङ्गम् अङ्गस्वरूपो यो विभावादिस्तस्य परिग्रह उपादानम् । कृच्छ्रात् कष्टात् अनुभावविभावयोः आक्षेपः प्रतीतिः कल्पितः । अकाण्डे अनवसरे रसस्य प्रथनं विस्तारः तथा छेदो भङ्गश्च । तथा रसस्य पुनः पुनर्दीप्तिरुद्दीपनम् । अङ्गिनः

---

(१) अर्थानौचित्यमिति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रसस्य स्वशब्दो रसशब्दः शृङ्गारादिशब्दश्च (ट)। क्रमेण यथा—

"तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः कोऽप्यजायत॥" (ठ)

"चन्द्रमण्डलमालोक्य शृङ्गारे मग्नमन्तरम्॥" (ड)

स्थायिभावस्य स्वशब्दवाच्यत्वं यथा—

"अजायत रतिस्तस्यास्त्वयि लोचनगोचरे॥" (ढ)

व्यभिचारिणः स्वशब्दवाच्यत्वं यथा—

---

प्रधानरसस्य अननुसन्धानम् अनुद्बोधनम्। अनङ्गस्य अङ्गत्वमप्राप्तस्य रसस्य कीर्त्तनञ्च। अङ्गस्य अङ्गरूप-रसस्य अतिविस्तृतिरत्यन्तबाहुल्यकरणम्। प्रकृतीनां नायकादीनां तत्स्वभावानाञ्च विपर्ययः अन्यथा-करणम्। अस्य अनौचित्यदोषान्तर्भावेऽपि पृथगुपन्यासस्तन्मध्ये प्राधान्यज्ञापनार्थः, गोवृषन्यायात्। अथ अन्यदन्यप्रकारमनौचित्यञ्चेति दोषा रसगता मताः। तेन रसस्य स्वशब्दवाच्यत्वम्, स्थायिनः स्वशब्दवाच्यत्वम्, सञ्चारिणः स्वशब्दवाच्यत्वम्, विरोधिरसाङ्गग्रहणं कष्टाच्चिप्तानुभावत्वं कष्टाच्चिप्तविभावत्वम्, अकाण्डे रस-प्रथनम्, अकाण्डे रसच्छेदः, पुनः पुनारसोद्दीप्तिः, अङ्गिरसाननुसन्धानम्, अनङ्गरसकीर्त्तनम्, अङ्गरसाति-विस्तृतिः, प्रकृतिविपर्ययः, अनौचित्यञ्चेति नाम चतुर्द्दश रसदोषा ज्ञेयाः।

(ट) रसस्येति। स्वस्य रसस्य वाचकः शब्दः स्वशब्दः, स च विनिगमनाविरहात् सामान्यरसवाचको विशेषरसवाचकश्चेत्युभयमपि ग्राह्यमित्यभिप्रायेण स्वशब्दो रसशब्दः शृङ्गारादिशब्दश्चेति। तत्र रसशब्देन शृङ्गारादिशब्देन वा रसस्योपस्थाप्यत्वं रसस्य स्वशब्दवाच्यत्वम्। एवं स्थायिसञ्चारिणोः स्वशब्दवाच्यत्वेऽपि लक्षणमूह्यम्। सूक्ष्मवसनावृतः कामिनीकुचकलस इव व्यञ्जनावृत्तिगम्यः किञ्चिदायासेनेवानुभूयमानो रसः सुतरामेव मधुरायते, स्फीतालोकमध्यवर्त्ती निर्म्मुक्तपरिस्फुटः स इव च साक्षादुच्यमानो विनायासमनुभूयमानो रसश्चमत्कारिताविहीन इव प्रतिभातीति रसस्य प्रकर्षनाशकत्वादस्य दोषत्वम्। स्थायिसञ्चारिणोः स्वशब्द-वाच्यत्वेऽप्येवमेव ज्ञेयम्। अयन्तु नित्य एव दोषः पाठपरिवर्त्तनमन्तरेण समाधानासम्भवात्। एवं स्थायिनः स्वशब्दवाच्यत्वदोषोऽपि।

(ठ) तत्राद्यमुदाहरति तामिति। अस्य मत्पूरितपूर्वार्द्धं यथा—

"वयसा षोड़शीं साक्षादुर्वशीमिव सुन्दरीम्।"

नः अस्माकम्, कोऽपि अनिर्वचनीयः। अत्र रसशब्दोपादानात् रसस्य स्वशब्दवाच्यत्वम्।

(ड) द्वितीयमुदाहरति चन्द्रेति। अस्य मत्पूरितपूर्वार्द्धं यथा—

"कूजत्कोकिल उद्याने सुरसौगन्ध्यसुन्दरे।"

अत्र शृङ्गारशब्दोपादानात् रसस्य स्वशब्दवाच्यत्वम्।

(ढ) अजायतेति। अस्य मत्पूरितपूर्वार्द्धं यथा—

"आगते माधवीकुञ्जं मनोभवमनोहरे।"

रतिरनुरागः। अत्र रतिशब्दोपादानात् शृङ्गारस्थायिभावस्य स्वशब्दवाच्यत्वम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"जाता लज्जावती मुग्धा प्रियस्य परिचुम्बने ॥" (ण)

अत्र प्रथमे पादे "आसीन्मुकुलिताक्षी सा" इति लज्जाया अनुभावमुखेन कथने युक्तः पाठः (त)।

"मानं मा कुरु तन्वङ्गि! ज्ञात्वा यौवनमस्थिरम् ॥" (थ)

अत्र यौवनास्थैर्यनिवेदनं शृङ्गाररसस्य परिपन्थिनः शान्तरसस्याङ्गं शान्तस्यैव च विभाव इति शृङ्गारे तत्परिग्रहो न युक्तः (द)।

"धवलयति शिशिररोचिषि भुवनतलं लोकलोचनानन्दे ।
ईषत्क्षिप्तकटाक्षा स्मेरमुखी सा निरीक्ष्यतां तन्वी ॥" (ध)

अत्र रसस्योद्दीपनालम्बनविभावावनुभावपर्य्यवसायिनौ स्थिताविति कष्टकल्पना (न)।

---

(ण) जातेति। अस्य मत्पूरितपूर्वार्द्धं यथा—

"श्लिष्टा वामेन हस्तेन दक्षिणेनन्नमितानना।"

अत्र लज्जाशब्दोपादानात् व्यभिचारिभावस्य स्वशब्दवाच्यत्वम्। अयन्त्वनित्यो दोषः, "क्वचिदुक्तौ स्वशब्देन न दोषो व्यभिचारिणः" इति वक्ष्यमाणेन प्रतिप्रसवात्।

(त) समाधानं दर्शयितुमाह अत्रेति। अनुभावमुखेन मुकुलिताक्षत्वरूपानुभावद्वारा। तदानीं नयनमुद्रणस्य लज्जाजन्यतया तदनुभावत्वमिति बोध्यम्। युक्त इति अनुभावेन प्रत्यायितस्य लज्जारूपव्यभिचारिभावस्य यथायथमेव संवृतत्वसत्त्वादित्याशयः।

(थ) विरोधिरसाङ्गग्रहणमुदाहरति मानमिति। अस्य मत्पूरितपूर्वार्द्धं यथा—

"स्थायी विमलचन्द्रोऽयं स्थिरो मलयमारुतः।"

(द) अत्रेति। परिपन्थिनो विरोधिनः "शान्तस्तु वीर-शृङ्गार-रौद्र-हास्य-भयानकैः" इति प्रागुक्तन्यायात्। अङ्गं निर्वाहकम्। विभाव उद्दीपनविभावः। न युक्त इति। विरोधिपुष्टिकरस्य स्वहानिकरत्वादिति भावः।

(ध) कष्टाक्षिप्तानुभावत्वमुदाहरति धवलयतीति। अत्र नामानुसारेणैव लक्षणं दोषत्वबीजञ्चोन्नेयम्। प्रतिप्रसवाभावादयन्तु नित्य एव दोषः।

लोकलोचनानामानन्दे आनन्दजनके, शिशिररोचिषि शीतांशौ चन्द्रे, भुवनतलं धवलयति धवलं कुर्वति सति, ईषत् क्षिप्तः कटाक्षस्त्वां प्रति कुटिलदृष्टिर्यया सा, स्मेरं सस्मितं मुखं यस्याः सा तथोक्ता च, या पूर्वं तवाशेषानुनयेनाप्यनपनेयमाना आसीत् सा तन्वी कृशाङ्गी निरीक्ष्यतामवलोक्यताम्। इदानीं चन्द्रदर्शनेनेयं क्रमेण क्षीयमाणमाना जायत इत्यनुभूयतामिति भावः।

(न) अत्रेति। उद्दीपनविभावः—चन्द्र-कटाक्षपात-मन्दहासरूपत्रितयात्मकः, आलम्बनविभावस्तु तादृशी नायिका, तावेव अनुभावं नायककर्तृकनायिकानिरीक्षणरूपं पर्य्यवसाययतः पर्य्यवसाने बोधयत इति तौ। कष्टकल्पना अनुभावस्य त्वयं। तथा चात्र नायककर्तृकनायिकानिरीक्षणरूपोऽनुभावो वचनेन

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"परिहरति रतिं मतिं लुनीते स्खलतितरां परिवर्त्तते च भूयः।
इति बत विषमा दशाऽस्य देहं परिभवति प्रसभं किमत्र कुर्म्मः॥" (प)

अत्र रतिपरिहारादीनां करुणादावपि सम्भवात् कामिनीरूपो विभावः कष्टादाक्षेप्यः (फ)।

अकाण्डे प्रथनं यथा—वेणीसंहारे द्वितीयेऽङ्के प्रवर्त्तमानानेकवीरसङ्क्षये काले दुर्य्योधनस्य भानुमत्या सह शृङ्गारप्रथनम् (ब)।

छेदो यथा—वीरचरिते राघवभार्गवयोर्द्धाराधिरूढ़े संग्रामे (१) "कङ्कणमोचनाय गच्छामि" इति राघवस्योक्तिः (भ)।

पुनः पुनर्दीप्तिर्यथा—कुमारसम्भवे रतिविलापे (म)।

नाभिहितः किन्तु चन्द्रादिरूपोद्दीपनविभावेन नायिकारूपालम्बनविभावेन च सम्भवपरतया अनुमातव्य इति कष्टेनानुभावकल्पनात् कष्टाचिप्तानुभावत्वम्।

(प) कष्टाचिप्तविभावत्वमुदाहरति परीति। अत्रापि नामानुसारेणैव लक्षणं दोषत्वबीजञ्चोन्नेयम्। अयमपि नित्यो दोषः। दुर्ल्लभनायिकायामनुरक्तस्य वयस्यस्य वयस्यान्तरकर्त्तृकावस्थावर्णनेयम्। अयं सखा रतिमन्यपदार्थेष्वनुरागं परिहरति परित्यजति, मतिं बुद्धिं लुनीते छिनत्ति धैर्य्यसम्पादिनीं बुद्धिमपि त्यजतीत्यर्थः, स्खलतितरामत्यन्तमिव वाक्यस्खलनमाचरति, भूयो वारं वारं परिवर्त्तते शय्यायां पार्श्वपरिवर्त्तनं करोति च। बत खेदे। इति इत्थं विषमा भीषणा दशा अवस्था अस्य वयस्यस्य देहं शरीरं प्रसभं बलेन परिभवति क्लिश्नाति। अत्र वयं किं कुर्म्मः।

(फ) अत्रेति। करुणादावित्यादिशब्देन विषयवैराग्यजनकशान्तरसस्य ग्रहणम्। विभाव आलम्बनविभावः। कष्टात् प्रकरणपर्य्यालोचनकष्टात्, आक्षेप्य आदेयः।

(ब) अकाण्डे रसप्रथनमुदाहरति अकाण्ड इति। विरोधिरसाभ्यन्तरे प्राधान्येन रसविशेषप्रसारणम् अकाण्डे रसप्रथनम्। अत्र प्राधान्येनेत्यभिधानात् अङ्गभावेन विरोधिरसोपन्यासो न दोषः। तथा च वक्ष्यति—"विरोधिनोऽपि स्मरणे" इत्यादि। विरोधिरसयोः परस्परोपमर्द्योपमर्द्दकभावेनोभयोरपि चमत्कारिताहानेरस्य दोषत्वम्। अयमपि नित्यो दोषः प्रतिप्रसवाभावात्। प्रवर्त्तमानो विद्यमानः अनेकेषां वीराणां पुत्रभ्रातृप्रभृतीनां सङ्क्षयो यस्मिन् तादृशे। तत्र विरोधिनो वीररसस्याभ्यन्तरे शृङ्गारप्रसारणादकाण्डे रसप्रथनम्।

(भ) अकाण्डे रसच्छेदमुदाहरति छेद इति। पुष्टिमन्तरेणैव सहसैव रसभङ्गः अकाण्डे रसच्छेदः। रसभङ्गेन तत्प्रकर्षस्यापि भङ्ग इति दोषत्वमस्य। एषोऽपि नित्य एव दोषः पुष्टिकारणमन्तरेण समाधानासम्भवात्। द्वाराधिरूढ़े पुरद्वारे उपस्थितप्राये। उक्तिरुक्तिजनितः।

(म) पुनः पुनारसोद्दीप्तिं दर्शयति पुनरिति। यस्य कस्यापि रसस्य वारं वारमेवोद्दीपनं पुनः पुनर्दीप्तिः। अमृतस्यापि पुनः पुनरास्वादे विरक्तिरुपजायत इति किमुत रसस्येति दोषत्वमस्य। अयमपि नित्यो

(१) द्वारधिरूढ़े अन्योन्यसंग्रामे, धाराधिरूढ़े संग्रामे इति पाठभेदौ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अङ्गिनोऽननुसन्धानं यथा—रत्नावल्यां चतुर्थेऽङ्के वाभ्रव्यागमने सागरिकाया विस्मृतिः (य)।

अनङ्गस्य कीर्त्तनं यथा—कर्पूरमञ्जर्यां राजनायिकयोः कृतं वसन्तस्य वर्णनमनादृत्य वन्दिवर्णितस्य प्रशंसनम् (१) (र)।

अङ्गस्यातिविस्तृतिर्यथा—किराते सुराङ्गनाविलासादिः (ल)।

प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्चेति। तेषां धीरोदात्तादिता, तेषामप्युत्तमाधममध्यमत्वम्। तेषु च यो यथाभूतः, तस्यायथावर्णने प्रकृतिविपर्ययो दोषः (व)। यथा—धीरोदात्तस्य रामस्य धीरोद्धतवत् छद्मना

---

दोषः कियतः परित्यागमन्तरेण समाधानासम्भवात्। तथा च कुमारसम्भवचतुर्थसर्गे "अयि जीवितनाथ!" इत्यादिना आरब्धे करुणरसे "मधुरात्मानमदर्शयत् पुरः" इत्यनन्तरम् "तमवेक्ष्य रुरोद सा भृशम्" इत्यादिना पुनरप्युद्दीपनम्।

(य) अङ्गिन इति। अङ्गिनोऽननुसन्धानं प्रधानपात्रानुल्लेखेन प्रधानरसस्यानुद्बोधनम्। आलम्बनोल्लेखे सत्यपि सहसा रसभङ्गे अकाण्डे रसच्छेदः, आलम्बनानुल्लेखेन रसभङ्गे तु अङ्गिनोऽननुसन्धानमित्यनयोर्भेदः। तदानीं रसस्य नाशेनैव तत्प्रकर्षनाशाद्दोषत्वमस्य। अयमपि नित्यो दोषः। वाभ्रव्यस्य तदाख्यस्य कञ्चुकिनः, आगमने। विस्मृतिर्विस्मृतिप्रयुक्तम्।

(र) अनङ्गस्येति। अनङ्गस्य कीर्त्तनं प्रधानरसानुपयोगिनो रसस्योद्बोधनम्। तदवसरे प्रधानरसस्तिरोहित इव भवतीति दोषत्वमस्य। अयमपि नित्यो दोषः। स्वयमात्मभ्याम्। अनादृत्य उपेक्ष्य। प्रशंसनं प्रशंसनप्रयुक्तम्।

(ल) अङ्गस्येति। अङ्गस्यातिविस्तृतिः अङ्गभूतरसस्यातिबाहुल्येनोद्बोधनम्। अनेनापि प्रधानो रसश्छिन्न इव प्रतिभातीति दोषत्वमस्य। अयमपि नित्यो दोषः। किराते किरातार्जुनीये काव्ये। तथा च तत्र वीरः प्रधानो रसः, शृङ्गारादयश्चाङ्गरसाः, किन्तु सप्तमसर्गादारभ्य दशमसर्गं यावत् चतुर्ष्वेव सर्गेषु शृङ्गारवर्णनात् वीरो रसश्छिन्न इव प्रतिभातीति।

(व) प्रकृतिविपर्ययदोषं लक्षयितुमादौ प्रकृतीर्विभजते प्रकृतय इति। प्रक्रियते प्रकर्षेण रस उद्बोध्यते आभिरिति प्रकृतयो नायकादयः। ताश्च त्रिविधा इत्याह दिव्या इति। दिवि भवा दिव्याः—देव-दानव-गन्धर्व-यक्ष-राक्षसादयः। अदिव्या दिव्यभिन्नाः—मानुषा दुष्मन्तादयः। दिव्यादिव्याः—दिव्या अपि अदिव्याभिमानिनः श्रीरामचन्द्रादयः। तेषां दिव्यादीनां धीरोदात्तादिता, आदिशब्देन धीरोद्धता-धीरललितता-धीरप्रशान्तता गृह्यन्ते। तेषामपि धीरोदात्तादीनाम्, उत्तमाधममध्यमत्वमपि प्रकृतिरित्यर्थः। एतेन प्रकृतिशब्दोऽत्र स्वभावपरोऽपीति दर्शितम्।

इदानीं लक्षणमाह तेष्विति। यथाभूतः प्रसिद्ध इति शेषः। अयथावर्णने अतद्रूपत्वेन वर्णने।

---

(१) प्रशंसेति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बालिवधः । यथा वा कुमारसम्भवे उत्तमदेवतयोः पार्वतीपरमेश्वरयोः सम्भोग-शृङ्गारवर्णनम् । "इदं पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितम्" इत्याहुः (श) ।

अन्यदनौचित्यं देशकालादीनामन्यथा यद्वर्णनम् । तथा सति काव्यस्यासत्यताप्रतिभासेन विनेयानामुन्मुखीकारासम्भवः (ष) ।

७ । एभ्यः पृथगलङ्कार-दोषाणां नैव सम्भवः ॥ (स)

एभ्य उक्तदोषेभ्यः । तथाहि—उपमायामसादृश्यासम्भवयोः, उपमानस्य जाति-प्रमाणगत-न्यूनत्वाधिकत्वयोः, अर्थान्तरन्यासे उत्प्रेक्षितार्थसमर्थने चानुचितार्थत्वम् (ह) । क्रमेण यथा—

ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम् ॥" (च)

---

एवञ्च काव्यस्य मिथ्यात्वप्रतीत्या श्रोतॄणामश्रद्धोदयेन रसास्वाद एव न जायत इति दोषत्वमस्य । अयमपि नित्यो दोषः, तत्तद्वर्णनपरिवर्त्तनं विना समाधानासम्भवात् ।

(श) उदाहरति यथेति । पित्रोर्मातापित्रोः । आहुः काव्यप्रकाशकारा इति शेषः ।

(ष) प्रकृतिविपर्य्ययेतरत् सामान्यमनौचित्यं लक्षयति अन्यदिति । आदिपदेन जातिवयःप्रभृतीनां ग्रहणम् । अन्यथा वर्णनं विपरीतधर्म्मवर्णनम् । अस्य दोषत्वबीजमाह तथेति । अन्यथा वर्णने सतीत्यर्थः । असत्यताप्रतिभासेन मिथ्यात्वज्ञानेन, विनेयानां काव्याध्यापनेन शिक्षणीयानाम् । इदञ्च श्रोतृसामान्योपलक्षणम् । उन्मुखीकारासम्भवः प्रवृत्त्यसम्भवः । तथा च रसप्रतीतिरेव न स्यादिति भावः । अयमपि नित्यो दोषः तत्तत्परित्यागमन्तरेण परिहारासम्भवात् । उदाहरणं मम—

"हिमाद्रौ सुमहान् ग्रीष्मः पौषे पुष्प्यति पङ्कजम् । अग्निहोत्री स चाण्डालः तरुण्यां रमते शिशुः ॥"

अत्र क्रमेण देश-काल-जाति-वयसामन्यथावर्णनादनौचित्यम् ।

(स) ननु "हीनोपमं भवेच्चान्यदधिकोपममेव च । असदृक्षोपमञ्चान्यदधिकोपममेव च ॥" इत्यादिना भोजराजादिभिः केषाञ्चिदलङ्कारदोषाणामपि गणितत्वात् प्रधानतो दोषाणां षड्विधत्वसम्भवे कथं त्वया "ते पुनः पञ्चधा मताः" इति पञ्चविधत्वमात्रमभिधीयत इत्याह एभ्य इति । स्पष्टम् । तथा च तैरलङ्कार-दोषत्वेन परिगणितानां सर्वेषामेव दोषाणामस्मदुक्तदोषेष्वेवान्तर्भावसम्भवात् तथात्वेन षड्विधत्वकल्पनं गौरवादन्याय्यमित्याशयः ।

(ह) भोजराजादिपरिगणितानामलङ्कारदोषाणां स्वोक्तदोषेष्वन्तर्भावं दर्शयितुमाह तथाहीति । उपमायामुपमालङ्कारे, असादृश्ये साधारणधर्म्माभावात् सादृश्यराहित्ये, असम्भवे तादृशोपमानपदार्थाप्रसिद्धौ, तथा तत्रैवोपमालङ्कारे उपमेयापेक्षया उपमानस्य जातिगते न्यूनत्वे अधिकत्वे च, एवं प्रमाणगते न्यूनत्वे अधिकत्वे च अनुचितार्थत्वमनुचितार्थत्वदोषः । प्रमाणमत्र परिमाणम् । तथा अर्थान्तरन्यासेऽलङ्कारे उत्प्रेक्षितार्थस्य समर्थने च अनुचितार्थत्वमेव दोषः सम्भवतीत्यर्थः । एवञ्च असदृशोपमादिदोषान्तराङ्गी-करणम[illegible]मेवेति भावः ।

[illegible]asishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"प्रज्वलज्जलधारावन्निपतन्ति शरास्तव ।" (क)
"चण्डाल इव राजाऽसौ संग्रामेऽधिकसाहसः ।" (ख)
"कर्पूरखण्ड इव राजति चन्द्रबिम्बम् ।" (ग)
"हरवन्नीलकण्ठोऽयं विराजति शिखावलः ॥" (घ)

---

(च) तत्रोपमायामसादृश्ये अनुचितार्थत्वमुदाहरति ग्रथ्नामीति ।

"आत्मीयचित्तगगनोदयिनं मनोज्ञं हर्षान्धकारनिकरं विषतां हरन्तम् ।
वैधेयबुद्धिकुमुदान्यपि फुल्लयन्तं ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम् ॥"

इति मत्पूरितपूर्वत्रिपादः श्लोकः ।

वितता विस्तृता अर्था रश्मयः किरणा इव यस्य तम्, काव्यं शशीव तम्, ग्रथ्नामि निबध्नामि रचयामीति यावत् । अत्र अर्थरश्म्योः काव्यशशिनोश्च कश्चिदपि साधारणधर्मो नास्तीति सादृश्याभावादुपमायामनुचितार्थत्वदोषः । "न चात्र रूपकसम्भवोऽपीति वाच्यम्, तस्यापि सादृश्यमूलकत्वेन तत्रापि तद्दोषतादवस्थ्यात्" इति रामचरणः, तदसत् ग्रथ्नामीति उपमायाः साधकतया रूपकस्य च बाधकतया रूपकसम्भावनाया एवाभावात् ग्रन्थकारस्योदाहरणानौचित्याच्च ।

(क) उपमायां तादृशोपमानपदार्थासम्भवे अनुचितार्थत्वमुदाहरति प्रज्वलदिति ।

"रक्ताक्तातालवद्भूमौ लुठन्त्यरिशिरांसि च ॥" इति मत्पूरितपरार्द्धम् ।

अत्र ज्वलत्काष्ठमित्यादिवत् ज्वलनं नाम वह्निना दह्यमानत्वं तच्च जले असम्भवमेवेति उपमानपदार्थासम्भवादुपमायामनुचितार्थत्वम् ।

(ख) उपमायामुपमानस्य जातिगतन्यूनत्वे अनुचितार्थत्वमुदाहरति चण्डाल इति ।

"सैन्याय दुर्द्धरान्तेन श्रयत्येव जयश्रियम् ॥" इति मत्पूरितपरार्द्धम् ।

अत्रोपमेयभूतक्षत्रियजातीयराजापेक्षया उपमानभूतचण्डालस्य जातिगतं न्यूनत्वं राज्ञोऽपि तद्वदेव नीचत्वं द्योतयतीत्युपमायामनुचितार्थत्वम् ।

(ग) उपमायामुपमानस्य प्रमाणगतन्यूनत्वे अनुचितार्थत्वमुदाहरति कर्पूरेति ।

"नक्षत्रराजिपरिराजितसर्वभागे स्वच्छेऽन्तरीक्षहृदये विशदं सदृश्यम् ।
श्वेतांशुजालधवलीकृतदिग्विभागं कर्पूरखण्ड इव राजति चन्द्रबिम्बम् ॥" .

इति मत्पूरितपूर्वत्रिपादः श्लोकः ।

अत्रोपमेयभूतचन्द्रबिम्बापेक्षया उपमानभूतकर्पूरखण्डस्य प्रमाणगतं न्यूनत्वं चन्द्रबिम्बस्यापि तद्वदेव क्षुद्रत्वं बोधयतीत्युपमायामनुचितार्थत्वम् ।

(घ) उपमायामुपमानस्य जातिगताधिकत्वे अनुचितार्थत्वमुदाहरति हरवदिति ।

"सदा नगवरस्थायी कुमारेण निषेवितः ।" इति मत्पूरितपूर्वार्द्धम् ।

हरवत् शिव इव, नीलः कण्ठो यस्य स नीलकण्ठः, अयं शिखा अस्यास्तीति शिखावलो मयूरः, विराजति शोभते ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"स्तनावद्रिसमानौ ते ।" (ङ)

"दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव ॥" (च)

एवमादिषु उत्प्रेक्षितार्थस्य असम्भूततयैव प्रतिभासनं स्वरूपमित्यनुचितमेव तत्समर्थनम् (छ) ।

यमकस्य पादत्रयगतस्याप्रयुक्तत्वं दोषः (ज) । यथा—

"सहसालिजनैः स्निग्धैः सह सा कुञ्जमन्दिरम् ।
उदिते रजनीनाथे सहसा याति सुन्दरी ॥" (झ)

उत्प्रेक्षायां यथाशब्दस्योत्प्रेक्षाद्योतकत्वेऽवाचकत्वम् (ञ) । यथा—

---

अत्रोपमेयभूतपक्षीजातीयमयूरापेक्षया उपमानभूतदेवजातीयहरस्य जात्या अधिकत्वं सादृश्यं विघटयतीत्यनुचितार्थत्वम् ।

(ङ) उपमायामुपमानस्य प्रमाणगताधिकत्वे अनुचितार्थत्वमुदाहरति स्तनाविति ।

"स्तनावद्रिसमानौ ते श्रोणी द्वीपद्वयोपमौ ।
दोलसत्त्वसमा नासा त्वमाश्चर्या वरानने ! ॥" इति मत्पूरितपरत्रिपादं पद्यम् ।

अत्रोपमेयभूतस्तनापेक्षया उपमानभूताद्रेः प्रमाणगतमधिकत्वं पूर्ववदेव सादृश्यं विघटयतीत्यनुचितार्थत्वम् ।

(च) उत्प्रेक्षायामुत्प्रेक्षितार्थसमर्थने अनुचितार्थत्वमुदाहरति दिवाकरादिति । कुमारसम्भवप्रथमसर्गे हिमालयवर्णनमिदम् । यो हिमालयः दिवा दिवसात् भीतमिव सन्तं गुहासु लीनं लुक्कायितभावेनावस्थितम् अन्धकारं दिवाकरात् सूर्य्यात् रक्षति ; सः अस्तीति पूर्वेणान्वयः । तथाहि शरणं प्रपन्ने आगते क्षुद्रे जनेऽपि सतीव सज्जने इव उच्चैःशिरसामुन्नतमस्तकानां महात्मनामित्यर्थः ममत्वं स्नेहः नूनं निश्चितमेव जायत इति शेषः ।

(छ) उदाहृते अनुचितार्थत्वमुपपादयति एवमिति । उत्प्रेक्षितार्थस्य आरोपितविषयस्य दिवसाद्भीतत्वरूपस्य, असम्भूततयैव अनुत्पन्नतयैव, अथवा अचेतने अन्धकारे चेतनधर्मस्य भयस्यासम्भवात् मिथ्यात्वेनैवेत्यर्थः, प्रतिभासनं प्रकाशनं ज्ञानमिति यावत्, स्वरूपं स्वभावः, इति हेतोः तस्य उत्प्रेक्षितार्थस्य समर्थनम् अर्थान्तरन्यासेन दृढीकरणं सत्यतया प्रतिपादनमनुचितमेव । अतएवोदाहृते अनुचितार्थत्वदोष इत्याशयः ।

(ज) यमकस्येति । पादत्रयगतस्येति गतशब्दो भावसाधनः ; तेन केवलपादत्रयावस्थितेरित्यर्थः । अप्रयुक्तत्वमिति । तथासम्भवेऽपि कविभिरनादृतत्वादिति भावः ।

(झ) सहसेति । सा सुन्दरी रजनीनाथे निशाकरे उदिते सति स्निग्धैरात्मानं प्रति स्नेहपरायणैः आलिजनैः सखीजनैः सह, हसेन हासेन सहेति सहसा सहासमुखी सती, सहसा तत्क्षणात् कुञ्जमन्दिरं लतादिपिहितस्थानरूपं गृहं याति ।

अत्र तृतीयपादे सहसेति पदाभावेन यमकाभावात् ईदृशत्रिपादगतयमकस्य शास्त्रनिषेधाभावेन सम्भवेऽपि कविभिरनादृतत्वादप्रयुक्तत्वं दोषः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"एष मूर्त्तो यथा धर्म्मः क्षितिपो रक्षति क्षितिम्॥" (ट)

एवमनुप्रासे वृत्तिविरुद्धस्य प्रतिकूलवर्णत्वम् (ठ)। यथा—"ओवट्टइ उल्लट्टइ—" इत्यादौ (४५८ पृष्ठे) (ड)।

उपमायाञ्च साधारणधर्म्मस्याधिकन्यूनत्वयोरधिकपदत्वं न्यूनपदत्वञ्च (ढ)। क्रमेणोदाहरणम्—

"नयनज्योतिषा भाति शम्भुर्भूतिसितद्युतिः।
विद्युतेव शरन्मेघो नीलवारिदखण्डधृक्॥" (ण)

अत्र भगवतो नीलकण्ठत्वस्याप्रतिपादनाच्चतुर्थपादोऽधिकः (त)।

"कमलालिङ्गितस्तार-हारहारी मुरं द्विषन्।
विद्युद्विभूषितो नील-जीमूत इव राजते॥" (थ)

अत्रोपमानस्य सबलाकत्वं वाच्यम् (द)।

---

(ञ) उत्प्रेक्षायामिति। उत्प्रेक्षालङ्कारे। उत्प्रेक्षाद्योतकत्वे उत्प्रेक्षाद्योतनाय प्रयुक्तत्वे इत्यर्थः। अवाचकत्वमिति। यथाशब्दस्य सादृश्यमात्रवाचकत्वेन इवशब्दवत् सम्भावनार्थवाचकत्वाभावादिति भावः।

(ट) एष इति। "शिष्टे दुष्टे प्रयुञ्जानोऽनुग्रहं निग्रहं जने।" इति मत्पूरितपूर्वार्द्धम्। अत्र मूर्त्तो धर्म्म इव इत्यर्थे यथाशब्दप्रयोगादवाचकत्वम्।

(ठ) एवमिति। अनुप्रासे अलङ्कारे, वृत्तिविरुद्धस्य विरोधिरसगतगुणव्यञ्जकवर्णविन्यासस्य, प्रतिकूलवर्णत्वं तदाख्यो दोषः।

(ड) ओवट्टइ इति। अत्र टकारसमूहविन्यासस्य प्रकृतशृङ्गाररसविरोधिवीररसगतौजोगुणव्यञ्जकत्वात् प्रतिकूलवर्णत्वम्।

(ढ) उपेति। क्रमेणेति चार्थः। साधारणधर्म्मस्य उपमानोपमेयोभयवृत्तियोग्यधर्म्मस्य, अधिकन्यूनत्वयोः अधिकत्वे न्यूनत्वे चेत्यर्थः। तथा च अधिकत्वे अधिकपदत्वं न्यूनत्वे च न्यूनपदत्वमित्यर्थः।

(ण) तत्राद्यमुदाहरति नयनेति। भूत्या भस्मना सिता शुभ्रा द्युतिर्दीप्तिर्यस्य स तादृशः शम्भुः शिवः, नीलवारिदखण्डधृक् शरन्मेघो विद्युतेव नयनज्योतिषा तृतीयनेत्रतेजसा भाति।

(त) अत्रेति। भगवतः शम्भोः। अप्रतिपादनाद्विशेषणविधया अनभिधानात्। न चात्र शम्भुविशेषणतया नीलकण्ठत्वस्यानभिधानान्न्यूनपदत्वमपि सम्भवतीति वाच्यम्। वक्ष्यमाणस्य उक्तानुसारित्वनियमेन उक्ते नीलकण्ठपदानभिधानादवक्ष्यमाणेऽपि 'नीलवारिदखण्डधृक्' इत्यनभिधानस्यैवौचित्यात् तथैव च अधिकपदत्वस्यैव न्याय्यत्वात्। उत्तरवाक्ये वमेव नाधिकपदत्वमित्यूहनीयम्।

(थ) द्वितीयमुदाहरति कमलेति। कमलया लक्ष्म्या आलिङ्गितः, तथा तारेण दीर्घेण हारेण मुक्तामालया हारी मनोहरः, मुरं द्विषन् मुरारिः कृष्णः, विद्युता विभूषितो नीलजीमूतो नीलमेघ इव राजते शोभते।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अस्यामेवोपमानोपमेययोर्लिङ्गवचनभेदस्य कालपुरुषविध्यादिभेदस्य च भग्नप्रक्रमत्वम् (ध)। क्रमेणोदाहरणम्—

"सुधेव विमलश्चन्द्रः ।" (न)

ज्योत्स्ना इव सिता कीर्त्तिः ।" (प)

"काप्यभिख्या तयोरासीद्‌व्रजतोः शुद्धवेशयोः ।

हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥" (फ)

अत्र तथाभूतचित्राचन्द्रमसोः शोभा न खल्वासीत्, अपि तु सर्वदापि भवति (ब)।

---

(द) सर्वेति । उपमानस्य नीलजीमूतस्य, बलाकया वकपङ्क्तिरूपया सहेति सबलाकत्वं तारहारोपमानरूपतया वकपङ्क्तिरूपोपयुक्तत्वमित्यर्थः, वाच्यं वक्तव्यम्। तथा च "तडिद्युक्तो बलाकावान् नीलाब्द इव राजते" इत्युक्ते नोक्तदोष इत्याशयः। किन्तु नीलजीमूतविशेषणतया तदनभिधानादत्र न्यूनपदत्वमिति बोध्यम्।

(ध) दण्डिप्रभृतीनामुपमागतदोषान्तराणि भग्नप्रक्रमतायामन्तर्भावयितुमाह अस्यामिति। अस्यामेव उपमायामेव। लिङ्गं पुंस्त्वादि। वचनम् एकवचनादि। भेदो वैषम्यम्। कालो वर्त्तमानादिः। पुरुषः प्रथमपुरुषादिः। विधिर्विधिबोधकतिङ्विभक्तिः। आदिशब्दाद्विभक्त्यन्तराणि च। तेषां भेदोऽपि वैषम्यम्। तथा च उपमानपदस्य स्त्रीलिङ्गत्वे उपमेयपदस्य च पुंलिङ्गत्वे तद्वैपरीत्ये वा प्रक्रान्तलिङ्गवैषम्याद्भग्नप्रक्रमत्वमित्याद्यर्थ ऊहनीयः।

(न) उपमायामुपमानोपमेययोर्लिङ्गभेदे भग्नप्रक्रमतामुदाहरति सुधेवेति।

"सुधेव विमलश्चन्द्रो वारीव शीतला शिला।

वीणानाद इवोद्गीतिर्भृङ्गानां मधुरा प्रिये ! ॥" इति मत्पूरितपरत्रिपादं पद्यम्।

अत्र सुधेत्युपमानपदं स्त्रीलिङ्गेन प्रक्रम्य चन्द्र इत्युपमेयपदं च पुंलिङ्गाभिधानेन प्रक्रमभङ्गात्तत्र च विमल इति साधारणधर्मवाचकपदस्य लिङ्गव्यत्ययावश्यकत्वाद्भग्नप्रक्रमता।

(प) उपमायामुपमानोपमेययोर्वचनभेदे भग्नप्रक्रमतामाह ज्योत्स्ना इति।

"ज्योत्स्ना इव सिता कीर्त्तिः स्थिताः श्रीरिव कान्तयः।

शौर्याणीव महज्ज्ञानं राजंस्त्वमतुलो भुवि ॥" इति मत्पूरितपरत्रिपादं पद्यम्।

अत्र ज्योत्स्ना इति बहुवचनेनोपमानपदं प्रक्रम्य कीर्त्तिरित्युपमेयपदे चैकवचनाभिधानात्तत्र च सितेति साधारणधर्मस्यान्यथाभावावश्यम्भावाद्भग्नप्रक्रमता।

(फ) उपमायामुपमानोपमेययोः कालभेदे भग्नप्रक्रमतामुदाहरति कापीति। रघुवंशप्रथमसर्गस्थमिदं पद्यम्। व्रजतोर्वशिष्ठाश्रमं गच्छतोः, शुद्धवेशयोर्निर्मलपरिच्छदयोः, तयोः सुदक्षिणादिलीपयोः, योगे एकत्र गमनवेलायां हिमनिर्मुक्तयोर्हेमन्तकालातिक्रान्तयोः, चित्राचन्द्रमसोश्चित्रानक्षत्रचन्द्रयोरिव कापि अनिर्वचनीया अभिख्या शोभा आसीत्।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"लतेव राजसे तन्वि ! ।" (भ)

अत्र लता राजति, त्वन्तु राजसे (म) ।

"चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथा" । (य)

अत्र मार्कण्डेयमुनिर्जीवत्येव, न खल्वेतदस्य 'जीवतु' इत्यनेन विधेयम् (र) । इह तु यत्र लिङ्गवचनभेदेऽपि न साधारणधर्म्मस्यान्यथाभावस्तत्र न दोषः (ल) । क्रमेणोदाहरणम्—

---

(ब) अत्र प्रक्रमभङ्गं दर्शयितुमाह अत्रेति । तथाभूतचित्राचन्द्रमसोर्हिमनिर्मुक्तयोश्चित्राचन्द्रमसोः । सर्वदापि हेमन्तकालानन्तरं वर्षे वर्षेऽपि । तथा च तयोरभिख्या आसीदित्यतीतकालेनोपमेयं प्रक्रम्य तादृश-चित्राचन्द्रयोर्योगस्य वर्षे वर्षेऽप्यवश्यम्भावितया तत्रातीतकालान्वयबाधेनोपमाने अस्तीत्यभिधानावश्यकत्वाद्भग्न-प्रक्रमतेत्याशयः ।

(भ) उपमायामुपमानोपमेययोः पुरुषभेदे भग्नप्रक्रमतामाह लतेवेति ।

"लतेव राजसे तन्वि ! चूतस्येव ममान्तिके ।
सा शाखयेव बाहुभ्यां कथं नाश्लिष्यसीह माम् ॥" इति मत्पूरितपरत्रिपादं पद्यम् ।

(म) अत्र प्रक्रमभङ्गं दर्शयति अत्रेति । लतेत्युपमानपदस्य नामत्वात् राजत इति प्रथमपुरुषः प्रक्रान्तव्यः, त्वमित्युपमेयपदस्य च युष्मत्त्वान्मध्यमपुरुषः प्रयोक्तव्य इति प्रक्रमभङ्गाद्भग्नप्रक्रमता इत्याशयः ।

(य) उपमायामुपमानोपमेययोर्विधिभेदे भग्नप्रक्रमतां दर्शयति चिरमिति ।

"लभतां सर्वशास्त्रे च विद्यां जीव इव ध्रुवम् ॥" इति मत्पूरितपरार्द्धम् ।

(र) उदाहृते दोषमुपपादयति अत्रेति । जीवत्येवेति । तस्य स्वत एव चिरजीवित्वादिति भावः । एतच्चिरजीवनम्, अस्य मार्कण्डेयस्य, जीवतु इत्यनेन न खलु विधेयम् । अत्रायमाशयः—अप्राप्तप्रापको हि विधिः । ततश्च मार्कण्डेयस्य स्वत एव चिरजीवित्वेन तेन तस्य प्राप्तत्वात् तत्र तद्विध्यसम्भवात् "यथा मार्कण्डेयो मुनिश्चिरं जीवति, तथा ते सूनुश्चिरं जीवतु" इत्थमवश्यं वक्तव्यम् । तथा च सति जीवतीति प्रक्रम्य जीवत्वित्यस्य वक्तव्यतया प्रक्रमभङ्गाद्भग्नप्रक्रमतेति ।

(ल) प्रतिप्रसवमाह इहेति । उपमागतदोषप्रकरण इत्यर्थः । लिङ्गवचनभेदेऽपि उपमानोपमेय-बोधकशब्दयोरित्यर्थः साधारणधर्म्मस्य उपमानोपमेयोभयवृत्तिधर्म्मबोधकशब्दस्य, न अन्यथाभावः युगपदेवोभया न्वयेऽपि न स्वरूपवैषम्यम् । न दोषो न भग्नप्रक्रमतादोषः, रसाद्यपकर्षद्वारा सहृदयानामुद्वेगजनकस्यैव दोषत्वौचित्यात्, ईदृशस्थले तु सर्वसामञ्जस्येन तेषामुद्वेगाजनकतया दोषत्वसामान्यस्यैवाभावादित्याशयः । अतएव दण्ड्याचार्य्योऽप्याह स्म काव्यादर्शे—

"न लिङ्गवचने भिन्ने न हीनाधिकतापि वा ।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥"

एतेन "न दोषो नोपमादोषः । भग्नप्रक्रमत्वस्य तु प्रसक्त्यभावेन तन्निषेधस्यात्र न सम्भवः" इति रामचरणोक्तं इयम्, उपमागतभग्नप्रक्रमतायाः एव प्रस्ततया दोषपदेन तदपकर्षस्यैवौचित्यात् "लिङ्गवचनभेदेऽपि" इत्युक्त्या

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"मुखं चन्द्र इवाभाति ।" (व)

"तद्वेशोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥" (श)

पूर्वोदाहरणेषु उपमानोपमेययोरेकस्यैव साधारणधर्म्मेणान्वयसिद्धेः प्रक्रान्तस्यार्थस्य स्फुटोऽनिर्वाहः (ष)।

एवमनुप्रासे वैफल्यस्यापुष्टार्थत्वम् (१) (स)। यथा—

---

ग्रन्थकारस्यापि तथैवाभिप्रायावधारणात्, "सुधेव विमलश्चन्द्रः" इत्यादाविव "मुखं चन्द्र इवाभाति" इत्यादावपि लिङ्गादिभेदेन भग्नप्रक्रमतायाः प्रसक्तौ वाधाभावाच्च ।

(व) लिङ्गभेदेऽपि भग्नप्रक्रमताया अभावं दर्शयति मुखमिति ।

"मुखं चन्द्र इवाभाति रम्भेवोरुर्विराजते ।
चन्द्रिकेव शरीरन्ते तन्वं परमसुन्दरी ॥"

इति नत्पूरितपरत्रिपादं पद्यम् ।

अत्रोपमेयोपमानयोर्मुखचन्द्रयोर्लिङ्गभेदेन प्रक्रमभङ्गेऽपि आभातीत्यस्य उभयान्वयेऽपि क्रियात्वेन स्वरूपवैषम्याभावान्न भग्नप्रक्रमता ।

(श) वचनभेदेऽपि भग्नप्रक्रमताया अभावं दर्शयति तद्वेश इति । मधुरताभृती माधुर्य्यपूर्णौ माधुर्य्यवन्तश्च, अन्याभिः स्त्रीभिः अन्यासां स्त्रीणां वेशैरित्यर्थः असदृशः असमानः असमानाश्च, तदीयास्तन्नायिकासम्बन्धिनो विभ्रमा विलासा इव, तस्या नायिकाया वेशः, परामत्यन्तां शोभां दधते धारयति धारयन्ति स्म च ।

अत्र तद्वेश इत्यनेनान्वये असदृश इत्यत्र टक्प्रत्ययान्ततया मधुरताभृत इत्यत्र च भृधातोः क्तप्रत्ययान्ततया अकारान्तत्वादेकवचनम्, दधते इति च दधधातोर्लटः प्रथमपुरुषैकवचनम् । एवं विभ्रमा इत्यनेनान्वये असदृशो मधुरताभृत इत्युभयत्रापि क्विप्प्रत्ययान्ततया व्यञ्जनान्तत्वाद्बहुवचनम्, दधते इति च धाधातोर्लटः प्रथमपुरुषबहुवचनम् । इत्यत्रोपमेयोपमानयोर्वचनभेदेन प्रक्रमभङ्गेऽपि असदृशादिशब्दानां स्वरूपवैषम्याभावान्न भग्नप्रक्रमता ।

(ष) अनयोः पूर्वोदाहरणेभ्यो वैषम्यं दर्शयितुमाह पूर्वोदाहरणेष्विति । "सुधेव विमलश्चन्द्रः" इत्यादिष्वित्यर्थः । साधारणधर्म्मेण साधारणधर्म्मबोधकपदेन । प्रक्रान्तस्य प्रथमाभिहितस्य, अर्थस्य सुधादिपदार्थस्य, स्फुटोऽनिर्वाहः स्पष्टा अनिष्पत्तिः आकाङ्क्षितधर्म्मेण सहोपस्थितिर्न स्पष्टेत्यर्थः, विमलादिशब्दानां पुंलिङ्गादिमत्त्वेन केवलचन्द्रादिविशेषणतया पर्य्यवसानात् तेन च सुधादिपदार्थानां धर्म्माकाङ्क्षायाः सत्त्वादिति भावः । अतएवात्र केचिदुपमागतोऽभवन्मतसम्बन्धतादोष एवेति वदन्ति ।

---

(१) वैकल्यस्य इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"अनणुरणन्मणिमेखलमविरलशिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणि ! रणरणकमकारणं कुरुते ॥" (ङ)

एवं समासोक्तौ साधारणविशेषणवशात् परार्थस्य प्रतीतावपि पुनस्तस्य शब्देनोपादानस्य अप्रस्तुतप्रशंसायां व्यञ्जनयैव प्रस्तुतार्थावगतेः शब्देन तदभिधानस्य च पुनरुक्तत्वम् (च)। क्रमेणोदाहरणम्—

"अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ।
निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥" (क)

अत्रापरदिगित्येतावतैव तस्या गणिकात्वं प्रतीयते (ख)।

---

(घ) एवमिति। अनुप्रासे वैफल्यस्य केवलानुप्रासघटकतया शब्दविशेषवैयर्थ्यस्य। अत्रानुप्रासपदं शब्दालङ्कारमात्रोपलक्षणम्।

(ङ) अनणिति। परिभ्रमन्तीं काञ्चिदवलोक्य कस्यचित् कामुकस्योक्तिरियम्। हे अरुणचरणे! अलक्तकरञ्जिततया रक्तवर्णचरणे! अनणु रणन्ती दीर्घं शब्दायमाना मणिमेखला यत्र यत्। तथा अविरलं निरन्तरं शिञ्जानौ अव्यक्तं शब्दं कुर्वन्तौ मञ्जू मनोहरौ मञ्जीरौ नूपुरौ तत्र तत्। परिसरणं तव परिभ्रमणं कर्तृ, अकारणं निरर्थकं रणरणकं कुरुते ममोद्वेगं जनयति। परपुरुषनिस्पृहायास्तव ममाभिलाषपूरणाशक्तत्वादिदं रणरणककरणमनर्थकमेवेति भावः।

मणिमेखलादीनां खलु रणनमेव मदनोद्वेगं जनयति न पुनर्दीर्घं रणनम्; तेनात्र अनणुपदं केवलमनुप्रासमेव घटयति, न तु रणरणककरणं प्रति किञ्चिदुपकुरुत इति मुख्यानुपकारित्वादपुष्टार्थत्वम्। अत्र रामचरणादीनां कष्टस्पष्टव्याख्यान्तराणि सदसत्तया सुधीभिरेव विवेचनीयानि।

(च) एवमिति। समासोक्तौ तदाख्यालङ्कारे। एवमप्रस्तुतप्रशंसायामपि। साधारणविशेषणवशात् उभयोरप्यर्थयोः सम्भवपरविशेषणप्रभावात्, परार्थस्य द्वितीयार्थस्य। पुनरुक्तत्वमिति। एतेन येन केनापि प्रतीतस्यार्थस्य पुनरुक्तावेव पुनरुक्तत्वम्, न तु केवलवाचकपदेनैवोक्तस्य पुनरुक्तौ पुनरुक्तत्वमिति सूचितम्।

(क) तत्र समासोक्तावुदाहरति अन्विति। शिशुपालवधनवमसर्गस्थमिदं पद्यम्। अपरा पश्चिमा दिगेव गणिका वेश्या, अनुरागवन्तम् अस्तकालीनलौहित्यवन्तम् आत्मानं प्रति प्रेमवन्तमपि च, लोचनयोः सुखं सुखकरम्, अतापकरं तेजोविहीनतया शान्तप्रकृतिकतया च सन्तापाजनकम्, वपुः शरीरम्, दधतं धारयन्तम्, अपेतवसुम् अस्तोन्मुखत्वाद्विनष्टकिरणम् आत्मन एव दानान्निर्धनीभूतञ्च, रविं सूर्यं विटञ्च, वियदालयात् आकाशरूपगृहात् निरकासयत् द्वीपान्तरं नीतवती बहिष्कृतवती च।

(ख) अत्रेति। प्रतीयत इति। अनुरागवन्तमपीत्यादिसाधारणविशेषणवशाद्व्यञ्जनयेति शेषः। रविमित्येतावतैव विटमितिवदिति भावः। तेनात्र गणिकापदेन पुनस्तस्या एवाभिधानात् पुनरुक्ततादोष इति बोध्यम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"आहूतेषु विहङ्गमेषु मशको नायान् पुरो वार्य्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां धुरम्।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतसं प्रभुमिवानामृष्टतत्त्वान्तरम्॥" (ग)

अत्राचेतसः प्रभोरभिधानमनुचितम् (घ)।

एवमनुप्रासे प्रसिद्धग्रभावस्य ख्यातविरुद्धत्वम् (ङ)। यथा—

"चक्राधिष्ठिततां चक्री गोत्रं गोत्रभिदुच्छ्रितम्।
वृषं वृषभकेतुश्च प्रायच्छंद्यस्य भूभुजः (१)॥" (च)

उक्तदोषाणाञ्च क्वचिददोषत्वं क्वचिद्गुणत्वमित्याह—(छ)

(ग) अप्रस्तुतप्रशंसायामुदाहरति आहूतेष्विति। पद्यमिदं भल्लटशतके। राजगणेष्वाहूतेषु तव कदाचिदग्रे कदाचिच्च मध्ये कश्चित् क्षुद्रभूस्वाम्यपि आगत इति तन्निन्दाभिप्रायेणोक्तिरियम्। विहायसा गच्छन्तीति विहङ्गमा मयूरादयः पक्षिणः, तेषु आहूतेषु सत्सु, विहङ्गमम्मन्यो मशकोऽपि पुरोऽग्रत एव आयान् आगच्छन् सन् केनापि न वार्य्यते। तृणमणिः (गाफुरदाना इति ख्यातः) सामान्यमणिविशेषः, मणीनां वास्तविकरत्नानां मरकतादीनां मध्ये वा धुरि अग्रे वा वसन् तिष्ठन् धुरं मणीनामिव भारं धत्ते। सोऽपि न केनचिदपसार्य्यत इति भावः। तथा तेजस्विनामपि चन्द्रनक्षत्रादीनामपि मध्ये खद्योतोऽपि प्रचलितुं न कम्पते न बिभेति। अतएव अनामृष्टम् अविविक्तं तत्त्वान्तरम् आत्मनी यथार्थतौ भेदौ येन तं तादृशम्, प्रभुं क्षुद्रं भूस्वामिनमिव, अचेतसममनस्विनं स्वपरवैषम्यानभिज्ञं सामान्यं क्षुद्रं मशकादिकं धिक् स्वपरवैषम्यानभिज्ञत्वादेव निन्दामीत्यर्थः।

(घ) अत्रेति। अनुचितमिति। अप्रस्तुतानां समानां मशकादीनामभिधानादेव व्यञ्जनया प्रस्तुतस्य क्षुद्रतया समस्य प्रभोः प्रतीतेरिति भावः। अतएवात्र व्यञ्जनया प्रतीतस्यापि पुनरभिधानात् पुनरुक्तत्वम्।

(ङ) एवमिति। अनुप्रासे प्रसिद्ध्यभावस्य केवलानुप्रासघटकतया निबद्धस्य शब्दस्य अभिलषितपदार्थान्वये प्रसिद्धिराहित्यस्येत्यर्थः। अत्राप्यनुप्रासपदं शब्दालङ्कारमात्रोपलक्षणम्।

(च) चक्रेति। यस्य भूभुजो राज्ञः चक्री चक्रपाणिर्विष्णुः चक्राधिष्ठिततां चक्रवर्त्तित्वं सार्वभौमत्वम्, गोत्रभिदिन्द्रः उच्छ्रितमुच्चं गोत्रं कुलम्, वृषभकेतुर्वृषध्वजः शिवश्च वृषं धर्म्मम्, प्रायच्छत् प्रदत्तवान्।

अत्र चक्रिप्रभृतिपदानि केवलमनुप्रासघटनायैव निबद्धानि, न तु विष्णोश्चक्रवर्त्तित्वदानम् इन्द्रस्योच्चकुलदानं शिवस्य च धर्म्मदानं लोके शास्त्रे वा प्रसिद्धमिति ख्यातविरुद्धता।

(छ) इदानीं केषाञ्चिद्दोषाणामनित्यत्वं प्रतिपादयितुं प्रतिप्रसवमाह उक्तेति। उक्तदोषाणाञ्च मध्ये केषाञ्चिदित्यर्थः। क्वचित् रसादीनामुत्कर्षान्यतरजननाभावस्थले अदोषत्वं दोषत्वगुणत्वोभयेनैव रहितत्वम्। क्वचित् रसादीनामुत्कर्षजननस्थले प्रत्युत गुणत्वमेवेत्यर्थः।

(१) प्रायच्छद्यस्य भूभुजः इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

८। वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते।
रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत्॥ (ज)

एषु चास्वादस्वरूपविशेषात्मकतया मुख्यगुणप्रकर्षोपकारित्वाद्गुण इति व्यपदेशो भाक्तः (झ)। क्रमेण यथा—

"तद्विच्छेदकृशस्य कण्ठलुलितप्राणस्य मे निर्दयं
क्रूरः पञ्चशरः शरैरतिशितैर्भिन्दन् मनो निर्भरम्।
शम्भोर्भूतकृपाविधेयमनसः प्रोद्दामनेत्रानल-
ज्वालाजालकरालितः पुनरसावास्तां समस्तात्मना॥" (ञ)

अत्र शृङ्गारे कुपितो वक्ता (ट)।

---

(ज) तत्र दुःश्रवविविधाश्लीलेत्याद्युद्देशक्रमेण यथासम्भवं दोषान् प्रतिप्रसूते वक्तरीति। वक्तरि क्रोधसंयुक्ते सति तस्य तस्य वाक्यस्य पदस्य वा दुःश्रवत्वं तथा वाच्ये वक्तव्यविषये समुद्धते अतीवभयङ्करे सति तद्वर्णनात्मकस्य वाक्यस्य पदस्य वा दुःश्रवत्वं रौद्रादिरसाभावेऽपि गुणो भवेत्। तु किन्तु रौद्रादौ रसे तद्व्यञ्जक-वाक्यगतं दुःश्रवत्वम् अत्यन्तमेव गुणो भवेदित्यर्थः। रौद्रादावित्यादिपदेन वीर-बीभत्स-भयानकानां ग्रहणम्।

(झ) ननु गुणानां रसधर्मत्वस्य वक्ष्यमाणत्वात् एषाञ्च शब्दवृत्तित्वेन रसधर्मत्वासम्भवात् कथं गुणत्व-मित्याह एष्विति। एषु गुणतया व्याख्यायमानेषु दुःश्रवत्वादिषु। आस्वाद्यन्त इत्यास्वादा रसभावादयः, तेषां स्वरूपविशेषात्मकतया धर्मविशेषरूपतया मुख्यगुणानां माधुर्य्यादीनां प्रकर्षोपकारित्वात् प्रकर्षोत्पत्त्यनुकूलत्वात्, गुण इति व्यपदेशः संज्ञा, भाक्तो गौणः।

(ञ) वक्तरि क्रुद्धे दुःश्रवत्वस्य गुणत्वं दर्शयति तद्विच्छेदेति। तस्याः प्रियाया विच्छेदेन कृशस्य, कण्ठे लुलिता उपस्थिताः प्राणा यस्य तस्य मे मम मनः, अतिशितैः सुतीक्ष्णैः शरैः निर्दयं निर्भरमत्यन्तञ्च यथा स्यात्तथा भिन्दन् विदारयन् अतएव क्रूरो नृशंसः असौ पञ्चशरः कन्दर्पः, पुनरपि समस्तात्मना सर्वप्रकारेण, भूतेषु प्राणिषु या कृपा तस्या विधेयं वशीभूतं मनो यस्य तस्य शम्भोः शिवस्य, प्रोद्दामो जाज्वल्य-मानो यो नेत्रानलस्तृतीयनयनवह्निस्तस्य ज्वालानां शिखानां जालेन समूहेन करालितो दह्यमानतया भीषणीकृत आस्तां भवतु।

(ट) अत्रेति। अनङ्गं प्रति क्रोधस्य मनःक्षोभमात्ररूपतया वास्तविकत्वाभावेन स्थायिभावत्वाभावान्नात्र रौद्रो रसः; किन्तु रतेरेव स्थायिभावत्वात् शृङ्गार एव रस इत्याशयेनाह शृङ्गार इति। कुपितो वक्तेति। तथा च वक्तरि कुपिते रौद्ररसप्रसङ्गेन ओजोगुणावश्यम्भावे विकटवर्णानामावश्यकत्वात् अत्र तु "अतिशितैर्भिन्दन्" "शम्भोर्भूत" इत्यादौ विद्यमानो विकटवर्णात्मको दुःश्रवत्वदोषः प्रत्युत गुणतामेव भजत इत्याशयः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"मूर्द्ध व्याधूयमानध्वनदमरधुनीलोलकल्लोलजालो-
द्भूताम्भःक्षोददम्भात् प्रसभमभिनभः क्षिप्तनक्षत्रलक्षम्।
ऊर्द्धन्यस्ताङ्घ्रिदण्डभ्रमिभवरभसोद्यन्नभस्वत्प्रवेग-(१)
भ्रान्तब्रह्माण्डखण्डं प्रवितरतु शिवं शाम्भवं ताण्डवं वः॥" (ठ)

अत्रोद्धतताण्डवं वाच्यम् (ड)। इमे पद्ये मम।

रौद्रादिरसे तु एतद्द्वितयापेक्षयापि दुःश्रवत्वमत्यन्तं गुणः (ढ)। यथा—"उत्कृत्योत्कृत्य कृत्तिम्" इत्यादि (२०५ पृष्ठे)। अत्र बीभत्सो रसः।

९। सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः। (ण)

(ठ) उद्धतवक्तृव्ये दुःश्रवत्वस्य गुणत्वं दर्शयति मूर्द्धेति। मूर्द्धनि मस्तके व्याधूयमाना शरीरसञ्चलनेन सञ्चाल्यमाना, अतएव ध्वनन्ती शब्दायमाना या अमरधुनी गङ्गा तस्या, लोलाश्चञ्चलात् कल्लोलजालात् महातरङ्गसमूहात् उद्भूतानामुत्क्षिप्तानाम् अम्भःक्षोदानां जलविन्दूनां दम्भात् छलात् अभिनभः नभसि प्रसभं हठात् क्षिप्तं विकीर्णं नक्षत्राणां लक्षं समूहो यस्मिन् तत्तथोक्तम्। ऊर्द्धं न्यस्त उत्तोलितः यः अङ्घ्रिदण्डस्तस्य या भ्रमिघूर्णनं तस्मादेव उत्पन्नो यो रभसो वेगस्तेन उद्यन्नुत्पद्यमानो यो नभस्वान् वायुस्तस्य प्रवेगेन भ्रान्तं घूर्णितं ब्रह्माण्डखण्डं यस्मिन् तत्तथोक्तञ्च, शम्भोरिदं शाम्भवं ताण्डवम् उद्धतनृत्यं कर्त्तृ, वो युष्माकं शिवं मङ्गलं प्रवितरतु अर्पयतु।

(ड) अत्रेति। उद्धतताण्डवमतीवभयङ्करनृत्यं वाच्यं वक्तव्यविषयः। तथा चात्र कोमलस्य शिवविषयकरतिभावस्य आस्वाद्यत्वेऽपि वर्णनीयविषयस्य नितान्तविकटत्वात् विकटशब्दैरेव च तत्प्रतिपादने ततोऽप्यतिविकटतया तत्प्रतीतेः स्वाभाविकत्वात् "मूर्द्धव्याधूयमानध्वनत्" इत्यादौ विद्यमानो विकटशब्दात्मको दुःश्रवत्वदोषः प्रत्युत गुण एव पर्य्यवस्यतीति भावः।

(ढ) रौद्रेति। एतद्द्वितयापेक्षया कुपितवक्तृस्थलीयोद्धतवाच्यस्थलीयदुःश्रवत्वापेक्षया। तत्र रौद्ररसे यथा मम वङ्गीयप्रतापनाटके—

"प्रकाण्डभुजमण्डलव्यथितचण्डकोदण्डतो ज्वलज्ज्वलनवज्रवज्जवगतैर्निशातैः शरैः।
ध्वनन्ननिशमुन्नतं विजयवङ्गगर्ज्जोऽधुना विजोऽपि पतितो यतः क्षितितले ततः पात्यसे॥"

वीररसे यथा—"भो लङ्केश्वर! दीयताम्" इत्यादौ 'धनुर्ज्यावन्ध' इत्यत्र।

भयानकरसे यथा—"अश्नन्नुवन् सोढुम्" इत्यादौ 'विभ्यद्दिवसानि' इत्यत्र।

(ण) अश्लीलतादोषं प्रतिप्रसूते सुरतेति। सुरतारम्भगोष्ठी आरब्धसुरतविषयकालापः, तथा च विश्वः—"गोष्ठी सभायां संलापे।" आदिशब्दात् शमकथाप्रभृतयश्च तस्मिन् अश्लीलत्वं नाम दोषः, तथा पुनर्गुण एव; अधमोक्तौ ग्राम्यत्वस्येव तत्र तत्र रसप्रकर्षस्यैव जनकत्वादित्याशयः।

(१) प्रवेश इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तथा पुनरिति गुण एव । यथा—

"करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोड़िते ।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥" (त)

अत्र हि सुरतारम्भगोष्ठ्यां "द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु" इति कामशास्त्रस्थितिः (थ) । आदिशब्दात् शमकथाप्रभृतिषु बोद्धव्यम् (द) ।

---

(त) तत्र व्रीड़ाव्यञ्जकाश्लीलताया गुणत्वमुदाहरति करीति । करिहस्तेन स्वपक्षीयहस्तिनः शुण्डया प्रविश्य, सम्बाधे नराश्वादीनां घनसन्निवेशेन सङ्कीर्णे अन्तर्विपक्षसेनामध्ये विलोड़िते विलोड्यावकाशे कृते सति, पुंसो वीरपुरुषस्य ध्वजः केतुः साधनानां विपक्षसैन्यानाम् अन्तस्तस्मिन्नेवाभ्यन्तरे उपसर्पन् उपगच्छन् सन् विराजते ।

द्वितीयार्थस्तु—करिहस्तेन "तर्जन्यनामिकायुक्ता मध्यमा पृष्ठतो यदि । करिहस्त इति प्रोक्तः कामशास्त्रविशारदैः ॥" इति तर्कवागीशधृतकामशास्त्रानुसारात् संयुक्तायतर्जन्यनामिकापृष्ठारूढमध्यमाङ्गुलीरूपकविमलिङ्गेन, सम्बाधे स्वभावतः सङ्कुचितेऽपि अन्तर्योनिमध्ये प्रविश्य विलोड़िते विलोड्य प्रसारिते सति, पुंसो रमणप्रवृत्तस्य पुरुषस्य ध्वजो लिङ्गम्, साधनान्तस्तस्मिन्नेव योनिमध्ये उपसर्पन् मुहुरुपगच्छन् विराजते ।

अत्रैतस्या व्रीड़ाव्यञ्जकाश्लीलतायाः सहसा श्रोतुरपि रिरंसोद्दीपकतया प्रकृतरसप्रकर्षजनकत्वाद्गुणत्वम् । एवमन्यत्राप्यूह्यम् ।

(थ) ननु सुरतविषयकाश्लीलतामात्रे कथं कवीनां द्व्यर्थपदविन्यास इत्याह अत्रेति । सुरतारम्भगोष्ठ्यां सुरतारम्भालापमात्रे । द्व्यर्थैः पदैः, रहस्यवस्तु गोपनीयाङ्गव्यवहारादिकं पिशुनयेत् सूचयेत्, न पुनः स्पष्टमभिदध्यादित्यर्थः । अतएव "हन्तुमेव प्रवृत्तस्य" इत्यादावपि द्व्यर्थपदविन्यास इति बोध्यम् । न चानया रीत्या "हन्तुमेव प्रवृत्तस्य" इत्यादावपि प्रतिप्रसव एवास्तामिति वाच्यम्, तत्र "यथाशु जायते पातः" इत्यनेन सुरतारम्भाभावस्यैव ज्ञापितत्वात् ।

(द) आदिशब्दादिति । अत्रापि प्रभृतिशब्दात् नाटकीयप्रस्तावना-पताका-विदिष्टपात्रकथानां ग्रहणम् । तत्र शमकथायां यथा शान्तिशतके—

"समाश्लिष्यत्युच्चैर्घनपिशितपिण्डं स्तनधिया मुखं लालाक्लिन्नं पिबति चषकं सासवमिव ।
अमेध्ये क्लेदार्द्रे पथि च रमते स्पर्शरसिको महामोहान्धानां किमिह रमणीयं न भवति ? ॥"

अत्र जुगुप्साव्यञ्जकाश्लीलता वैराग्योत्पादकतया गुण एव ।

नाटकीयप्रस्तावनायां यथा वेणीसंहारे—

"सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः । निपतन्ति धार्त्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥"

अत्र दुर्योधनादीनां मरणरूपामङ्गलव्यञ्जकाश्लीलता चमत्कारित्वातिशयसूचनाद्गुण एव ।

नाटकीयपताकायां यथा तत्रैव—"देव ! भग्नं भग्नम्" इत्यादि ।

अत्रापि दुर्योधनोरुभङ्गरूपामङ्गलव्यञ्जकाश्लीलता चमत्कारित्वातिशयसूचनादेव गुणः ।

विदिष्टपात्रकथायां यथा चण्डाम्—"केचिन्नष्टा महाहवात् ।"

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१० । स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते ॥ (घ)

यथा—"पर्वतभेदिपवित्रं जैत्रं नरकस्य बहुमतङ्गहनम् ।
हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत ॥" (न)

अत्र इन्द्रपक्षे पवित्रशब्दो निहतार्थः, सिंहपक्षे मतङ्गशब्दो मातङ्गार्थेऽप्रयुक्तः (प) ।

---

अत्र पलायनार्थे प्रयुक्तेन नष्टशब्देन विद्विष्टानामेवासुराणां मरणसूचनात्ताहशामङ्गलव्यञ्जकाश्लीलता गुण एव । अत्र असुराणामिव प्रजास्वनत्याचारित्वाद्दुर्य्योधनादीनां न साधारण्यस्यैव विद्विष्टतेति नाटकीयप्रस्तावनापताकयोः पृथगुपादानम् ।

(घ) स्यातामिति । श्लेषसमासोक्त्याद्यलङ्कारेषु ध्वनिषु च अनेकार्थप्रत्यायनमात्रमिह श्लेषः आदिशब्दात् प्रौढ़ोक्तिश्च तस्मिन्, निहतार्थाप्रयुक्तते निहतार्थत्वम् अप्रयुक्तत्वञ्चैतौ दोषौ अदोषौ स्यातां नापि दोषौ नापि गुणौ स्यातामित्यर्थः । तथा च तत्र तत्र तयोर्दोषत्वाङ्गीकारेण परिहरणीयत्वे श्लेषादिरलङ्कारो ध्वनिस्तत्प्रौढ़ोक्तिश्च प्रायेण न घटत एवेत्यगत्या तयोरदोषत्वम्, चमत्कारितान्तरजननाभावाच्च अगुणत्वमित्याशयः ।

(न) तत्र श्लेषे तयोरदोषत्वमुदाहरति पर्वतेति । पर्वतं, क्रौञ्चनामकाचलं भिनत्ति परशुरामरूपेण विदारयतीति पर्वतभेदी स चासौ पवित्रश्चेति तम्, नरकस्य नरकासुरस्य जैत्रं जयशीलम्, बहुमतं सर्वैरादृतम्, गहनं दुर्बोधस्वरूपञ्च, हरिं विष्णुमिव । पर्वतान् भिनत्ति पक्षच्छेदनेन तेषां हृदयं विदारयतीति पर्वतभेदी यः पविं वज्रं त्रायते हस्तेन पालयति दधातीति पर्वतभेदिपवित्रस्तम्, जैत्रं जिष्णुम्, नरकस्य स्वानुकम्पनीयमनुष्यमात्रस्य बहुमतमनुग्राहकत्वेनात्यादृतम्, गहनं दुर्जयञ्च, हरिमिन्द्रमिव । अत्र पक्षे नरकस्येत्यनुकम्पायां कप्रत्ययः । तथा करप्रहारेण पर्वतमपि भिनत्तीति पर्वतभेदी महाबल इत्यर्थः स चासौ पवित्रो दुर्गाया वाहनत्वात् पूतस्वभावश्चेति तम्, नरकस्य क्षुद्रमानुषस्य जैत्रं जयशीलम्, तथा बहून् मतङ्गान् गजान् हन्तीति तञ्च, हरिं सिंहमिव । अत्र पक्षे नरकस्येति अल्पार्थे कप्रत्ययः । पर्वतभेदि हिमालयविदारि गोमुखाख्यहिमालयशृङ्गं भित्त्वा निर्गतमित्यर्थः, पवित्रं पावनम्, नरकस्य निरयस्य जैत्रं जयशीलं निवारकमित्यर्थः, बहुमतं धार्म्मिकजनैरत्यादृतम्, गहनं महावेगम्, पतत् पृथिव्यामवतरत्, सुरसरिदम्भो गङ्गाजलम्, नमत हे लोकाः ! नरकजयाय नमस्कुरुत ।

(प) अत्रेति । निहतः प्रसिद्धेन पावनरूपेणार्थेन उपस्थितौ प्रतिहतः अर्थो वज्रधारिरूपार्थो यस्य सः, पवित्रशब्दः पावनार्थे प्रसिद्धः वज्रधारिरूपे इन्द्रे तु निहतार्थ इत्यर्थः । अतएवात्र पक्षे निहतार्थतादोष इति भावः । अप्रयुक्त इति । मतङ्गजत्वेन लक्षणया प्रसिद्धिसत्त्वेऽपि कविभिर्नोक्त इत्यर्थः । अतएवात्र अप्रयुक्ततादोष इति भावः । किन्तु उभावपि श्लेषविषयत्वाददोषाविति बोध्यम् ।

ध्वनौ यथा—"भुक्तिमुक्तिकृदेकान्त—" इत्यादौ (२४२ पृष्ठे) ।

अत्र मुक्तिशब्दो मोक्षे प्रसिद्धः, विरहवेदनात्यागे तु निहतार्थ इति ।

वक्तुः प्रौढ़ोक्तौ यथा—

CC-0.Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

११ । गुणः स्यादप्रतीतत्वं ज्ञत्वञ्चेद्वक्तृवाच्ययोः । (फ)

यथा—"त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम् ।
तद्दर्शिनमुदासीनं (१) त्वामेव पुरुषं विदुः ॥" (ब)

१२ । स्वयं वापि परामर्शे—(भ)

अप्रतीतत्वं गुण इत्यनुषज्यते । यथा—
"युक्तः कलाभिस्तमसां विवृद्ध्यै क्षीणश्च ताभिः क्षतये य एषाम् ।
शुद्धं निरालम्बपदावलम्बं तमात्मचन्द्रं परिशीलयामि ॥" (म)

---

"असुरस्त्वया न्यवधि कोऽपि मधुरिति कथं प्रतीयते ।
दण्डदलितसरघः प्रथसे मधुसूदनस्त्वमिति सूदयन् मधु ॥"

अत्र मधुसूदनशब्दो मधुदैत्यदमनार्थ एव प्रसिद्धः, मधुमक्षिकादलनार्थे तु निहतार्थः ।

(फ) गुण इति । चेद्यदि वक्तृवाच्ययोर्वक्तुः श्रोतुश्च ज्ञत्वं तत्तच्छब्दस्य सङ्केताभिज्ञत्वं स्यात्, तदा अप्रतीतत्वं नाम दोषो गुण एव स्यात् । तथा च एकदेशमात्रप्रसिद्धतया तदनभिज्ञस्य वक्तुः श्रोतुश्च प्रतीत्यभावादेव अप्रतीतत्वस्य दोषत्वं वक्तव्यम्, किन्त्विदानीं वक्तुः श्रोतुश्चाभिज्ञतया तदर्थप्रतीतौ सत्यां कथमप्रतीतत्वं कथं वा तस्य दोषत्वमुपपद्यते अपि तु कथमपि न । प्रत्युत गम्भीरविषयतया चमत्कारित्वातिशयाद्गुणत्वमेवेत्याशयः ।

(ब) त्वामिति । कुमारसम्भवद्वितीयसर्गे ब्रह्माणं प्रति देवानां स्तुतिरियम् । हे देव ! त्वां पुरुषार्थौ भोगापवर्गौ प्रवर्त्तयति उत्पादयतीति तां तादृशीं प्रकृतिं मूलकारणम् आमनन्ति ब्रुवन्ति । तथा त्वामेव तद्दर्शिनं साक्षित्वेन तस्याः प्रकृतेर्द्रष्टारम्, उदासीनं सर्वतोऽसङ्गं पुरुषं चित्स्वरूपं विदुर्वदन्ति । उभयत्रापि योगिन इति शेषः ।

अत्र "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः---" "नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः । गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति" "द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः" "असङ्गो ह्ययं पुरुषः—" इत्येतेषामर्थानां सांख्य-योगदर्शनयोरेव प्रसिद्धतया तदनभिज्ञवक्तृश्रोतृपक्षे अप्रतीतत्वमेवासीत्, किन्तु वक्तृभिर्देवैः श्रोत्रा च ब्रह्मणा अभिज्ञतया सर्वेषामेवोक्तार्थानां प्रतीतत्वादप्रतीतत्वन्तु न स्यादेव, प्रत्युत गुणत्वमेव ।

(भ) स्वयमिति । स्वयमात्मना वा परामर्शे उक्तौ । तथा च अभिज्ञस्य वक्तुः स्वगतत्वेनाभिधानेऽपि अप्रतीतत्वं गुण एवेत्यर्थः । अत्रापि पूर्ववदेवाशय ऊहनीयः ।

(म) युक्त इति । य आत्मा तमसां तमोगुणजनिताज्ञानानां विवृद्ध्यै विशेषेण वृद्धये, कलाभिः पृथिव्यादिभिः स्वजनितांशैर्युक्तो भवति विराट्स्वरूपेण परिणमते । तथा य आत्मा एषां तमसां क्षतये नाशाय ताभिः कलाभिः क्षीणो विहीनश्च भवति तुरीयब्रह्मरूपेणावतिष्ठते । चन्द्रपक्षे तु तमसामन्धकाराणां

---

(१) तद्दर्शिनमुदासीनमिति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१३ । कथितञ्च पदं पुनः ॥
विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि ।
दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने ॥
अर्थान्तरसंक्रमित-वाच्ये हर्षेऽवधारणे । (य)

गुण इत्येव । यथा—"उदेति सविता ताम्रः" इत्यादि (४७४ पृष्ठे)। अत्र विहितानुवादः (र)।

"हन्त ! हन्त ! गतः कान्तो वसन्ते सखि ! नागतः ।" (ल)। अत्र विषादः।

"चित्रं चित्रमनाकाशे कथं सुमुखि ! चन्द्रमाः ! ।" (व)। अत्र विस्मयः।

"सुनयने ! नयने निधेहि ।" (श) इत्यत्र लाटानुप्रासः।

---

विछन्नैः कलाभिः षोड़शभागैः क्षीणो विहीनो भवति ; पुनरेषां तमसां क्षतये नाशाय ताभिः कलाभिर्युक्तश्च भवतीत्यर्थः। निरालम्बपदे आधेयताशून्यस्थाने स्वस्मिन् अन्यत्र तु आकाश इत्यर्थः अवलम्बः अवस्थानं यस्य तम्, तम् आत्मा परमात्मा चन्द्र इव तम्, परिशीलयामि सर्वदा विचिन्तयामि ।

अत्र "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतम्" "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" "प्रवहेन्मुक्तादिवैषिकाम्" "स एष आत्मा अजरः—स्वस्थः" इत्यादीनां शारीरकभाष्यधृतानामर्थानामनभिज्ञैरन्यैरप्रतीतत्वेन दोषोऽपि अभिज्ञस्य वक्तुरात्मनः प्रतीतिविषयत्वाद्गुण एव ।

(य) कथितमिति । किञ्चेति चार्थः। कथितं पदं कथितपदत्वाख्यो दोषः, विहितानुवाद्यत्वादिष्वेकादशस्थानेषु पुनर्गुण एवेत्यर्थः। गुणत्वहेतुस्तु उदाहरणानुपदं द्रष्टव्यः।

(र) अत्रेति । विहितानुवाद उद्देश्यप्रतिनिर्देश्यत्वम् । तथा च उद्देश्यप्रतिनिर्देश्यस्थले युगपदेकविधशब्दद्वयप्रयोगेण सत्वरमेव शाब्दबोधात् सत्वरमेव रसप्रतीतेर्गुणत्वम् ।

(ल) हन्तेति । "इदानीमन्तकः क्रान्त-जीवनान्तं करोतु मे ॥" इति मत्पूरितपरार्धम् । अत्र हन्त हन्तेति शब्दद्वयेन कथितपदत्वदोषो विषादाधिक्यसूचनाद्गुणः ।

(व) चित्रमिति । "आकाश एव सर्वाणि ज्योतींषि विचरन्ति चेत् ॥" इति मत्पूरितपरार्धम् । अत्रापि चित्रं चित्रमिति पदद्वयेन कथितपदत्वं विस्मयाधिक्यसूचनाद्गुणः ।

(श) सुनयने इति । अस्य मत्पूरितसमस्तांशो यथा—

"पत्यौ नते सुनयने ! नयने निधेहि कान्तस्य शून्यहृदये हृदयं विधेहि ।
बाले ! विलासिनि ! तदाशु ममाङ्कमेहि तृष्णातुराय नितरामभृतं प्रदेहि ॥"

अत्र नयने नयने इति पदद्वयेन कथितपदत्वं लाटानुप्रासघटकतया वैचित्र्यविशेषजनकत्वाद्गुणः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"नयने तस्यैव नयने च" इत्यादौ (२४० पृष्ठे) अर्थान्तरसंक्रमितवाच्यो ध्वनिः (ष)। एवमन्यत्र (स)।

१४। सन्दिग्धत्वं तथा व्याजस्तुतिपर्य्यवसायि चेत्॥ (ह)

गुण इत्येव। यथा—

"पृथु कार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव!।
विलसत्करेणु गहनं सम्प्रति सममावयोः सदनम्॥" (क्ष)

---

(ष) नयने इति। अत्रापि नयने नयने इति पदद्वयेन कथितपदत्वम् अर्थान्तरसंक्रमितवाच्यध्वनि-घटकतया चमत्कारातिशयप्रयोजकत्वाद्गुणः।

(स) एवमिति। अन्यत्र क्रोधादावेवमूह्यमित्यर्थः। तत्र क्रोधे यथा वीरचरिते—

"दुष्ट! दुष्ट! विज्ञातचेष्ट!" इति।

अत्र क्रोधाधिक्यसूचनात् कथितपदत्वं गुणः।

दैन्ये यथा मम चक्रीयप्रतापे—"कल्याणीं ननु रक्ष रक्ष चपलं कल्याणि! बालाबलात्।"

अत्र दैन्यवासाधिक्यसूचनात् कथितपदत्वं गुणः।

अनुकम्पायां यथा शाकुन्तले—"आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः।"

अत्राश्रममृगे अनुकम्पातिरेकद्योतनात् कथितपदत्वं गुणः।

प्रसादने यथा अपराधभञ्जनस्तोत्रे—"क्षन्तव्यो मेऽपराधः शिव! शिव! शिव! भोः! श्रीमहादेव! शम्भो!।"

अत्रानुनयातिशयसूचनात् कथितपदत्वं गुणः।

हर्षे यथा मम—"सखि! सखि! मम कान्तः साम्प्रतं प्राप्त एषः।"

अत्र हर्षाधिक्यप्रत्यायनात् कथितपदत्वं गुणः।

अवधारणे यथा शान्तिशतके—

"शृणु हृदय! रहस्यं यत् प्रशस्तं मुनीनां न खलु न खलु योषित् सन्निधिः संविधेयः।"

अत्र योषित् सन्निधेरवश्यवर्जनीयत्वसूचनात् न खलु न खल्विति कथितपदत्वं गुणः।

वस्तुतस्तु विषादाद्यभिधानं कतिपयप्रदर्शनमात्रपरम्, वीप्सामात्र एव कथितपदत्वं गुण इति बोध्यम्। अतएव "आदाय वकुलगन्धानन्धीकुर्वन् पदे पदे भ्रमरान्।" इत्यादौ पदे पदे इत्यादिकं कथितपदत्वमपि गुण एव।

(ह) सन्दिग्धत्वमिति। सन्दिग्धत्वं नाम दोषः, तथा गुण एव; चेद्यदि तत् व्याजस्तुतौ कस्मिन् स्तवे पर्य्यवसायि परिणतं भवेत्।

(क्ष) पृथ्विति। हे देव! राजन्! सम्प्रति आवयोस्तव मम च सदनं भवनम्, समं समानम्। तथा च पृथूनि विशालानि कार्त्तस्वरपात्राणि स्वर्णभाजनानि यस्मिन् तत्तथोक्तम्, भूषिताः सर्वे अलङ्कृताः

CC-0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

१५। वैयाकरणमुख्ये तु प्रतिपाद्येऽथ वक्तरि।
कष्टत्वं दुःश्रवत्वं वा—(क)

गुण इत्येव। यथा—

"दीधीवेवीङ्समः (१) कश्चिद्गुणवृद्ध्योरभाजनम्।
क्विप्प्रत्ययनिभः कश्चिद्यत्र सन्निहिते न ते॥" (ख)

अत्रार्थः कष्टः, वैयाकरणस्य वक्ता (ग)।

---

निःशेषाः सर्व एव परिजना यस्मिन् तत्तादृशम्, तथा विलसन्तीभिः परिभ्रमन्तीभिः करेणुभिर्हस्तिनीभिः गहनं दुर्गमम्, तव भवनम्। तथा मम भवनमपि पृथुकानां शिशूनाम् आर्त्तस्वरपात्रं खाद्यपेयाद्यभावात् क्रन्दनध्वनिस्थानम्, भुवि मृत्तिकायाम् उषिता आसनाद्यभावादवस्थिताः निःशेषाः सकलाः परिजना यत्र तत्तादृशम्, तथा बिलेषु गर्त्तेषु सीदन्ति अवतिष्ठन्ते ये ते बिलसदो मूषिकाः, कुत्सिता बिलसद इति बिलसत्का दुष्टमूषिकास्तेषां रेणुभिस्तदुत्तोलितधूलिभिर्गहनं दुर्गमम्। द्वितीयार्थे बिलसत्क इति कुत्सायां कप्रत्ययः।

अत्र पृथूनि कार्त्तस्वरपात्राणि यस्मिन् तदित्यर्थः? किंवा पृथुकानामार्त्तस्वरस्य पात्रमित्यर्थः? इत्यादिसन्देहात् सन्दिग्धत्वदोषो राज्ञी व्याजस्तुतिपर्य्यवसायितया उभयथापि सत्यत्वाद्गुण एव।

(क) वैयेति। वैयाकरणो मुख्यो मुखमादिर्यस्य तस्मिन् वैयाकरणादिके जने प्रतिपाद्ये बोद्धव्ये श्रोतरीत्यर्थः अथवा वक्तरि, कष्टत्वं दुःश्रवत्वं वा दोषो गुण एव। मुख्यशब्देन नीरस-स्मार्त्त-तार्किकादि-परिग्रहः।

(ख) दीधीति। कश्चिज्जनः, दीधीवेवीङ्समः "दीधीङ् दीप्तिदेवनयोः" "वेवीङ् व्यतिना तुल्ये" इत्येताभ्यां धातुभ्यां समस्तुल्यः गुणो दयादाक्षिण्यादिः वृद्धिरभ्युदयस्तयोरभाजनमपात्रम्, अन्यत्र तु "अर् पूर्वे हे सन्ध्यक्षरे च गुणः" "आर् उत्तरे च वृद्धिः" इति सूत्राभ्यां सङ्केतिते गुणवृद्धी तयोरभाजनमविषयः "दीधी-वेव्योः" इत्यनेन गुणनिषेधेन वृद्धिनिषेधात् गुणबाधिका वृद्धिरिति ज्ञापकात्। कश्चिज्जनश्च क्विप्प्रत्ययनिभः क्विप्प्रत्ययेन तुल्यः, विलुप्तस्वरूप इत्यर्थः; एकत्र ककारपकारयोरनुबन्धत्वेन स्वत एवापगमात् विकारस्य तु "वेर्लोपोऽपृक्तस्य च" इत्यनेन लोपात्, अन्यत्र तु किञ्चिदपि कर्त्तुमक्षमतया सतोऽप्यसत्कल्पत्वादिति भावः। यत्र जने क्विप्प्रत्यये च, ते उक्तप्रकारे उभे अपि गुणवृद्धी न सन्निहिते न प्रसक्ते अपि; एकत्र "क्ङ्ति यश्च योत्तवर्जम्" इत्यनेन गुणनिषेधेन वृद्धिनिषेधात्, अन्यत्र तु तत्प्राप्त्युपयोगिप्राक्तनपुण्याभावादिति भावः।

(ग) अत्रेति। कष्टः साधारणपक्षे कष्टबोध्यः, तत्तद्व्याकरणसूत्रानुसन्धानलभ्यत्वादित्याशयः। वैयाकरणस्य वक्तेति। तथा च तस्य तत्तत्सूत्राणां सततमेव स्मृत्युदिततया कष्टप्रयोज्यत्वबोध्यत्वाभावात् व्याकरणे ज्ञानविशेषव्यञ्जकत्वाच्च गुणत्वमित्यभिप्रायः।

स्मार्त्तवक्तृत्वे यथा मम वङ्गीयप्रतापे—

---

(१) दीधीवेवीट्समः इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवमस्य प्रतिपाद्यत्वेऽपि (घ)।

"अत्रातार्क्षमुपाध्याय ! (१) त्वामहं न कदाचन ।" (ङ)

अत्र दुःश्रवत्वम् । वैयाकरणो वाच्यः । एवमस्य वक्तृत्वेऽपि (च)।

१६ । ग्राम्यत्वमधमोक्तिषु ॥ (छ)

गुण इत्येव । यथा मम—

"एसो ससहरविम्बो दीसइ हेअङ्गवीणपिण्डो व्व ।
एदे अस्ससमोहा पड़न्ति आसासु दुद्धाधर व्व ॥" (ज)

इयं विदूषकोक्तिः ।

१७ । निर्हेतुता तु ख्यातेऽर्थे दोषतां नैव गच्छति । (झ)

"आत्मनो जननाशौचं शावाशौचन्तु विद्विषाम् । प्रायश्चित्तञ्च सन्दिग्ध-पापेष्वस्तु तव ध्रुवम् ॥"

अत्र आर्त्तवक्तृत्वादेव कष्टत्वं गुण उक्तायुक्तः ।

(घ) एवमिति । अस्य वैयाकरणादेः, प्रतिपाद्यत्वे बोद्धव्यत्वे । यथा मम—

"सोपसर्गं मूलशून्यं केवलप्रत्ययात्मकम् । पौरहित्यं गुरो ! राज्ञः साम्प्रतं व्यतिसे यथा ॥"

अत्र हे गुरो ! 'व्यतिसे' इति पदं यथा व्यतीत्युपसर्गसहितम्, 'अस्' इति मूलधातुना शून्यम्, 'से' इति केवलप्रत्ययस्वरूपञ्च ; तथा राज्ञः पौरहित्यमपि मम उपसर्गेणोपद्रवेण सहितम्, मूलशून्यं दृढ़ताहीनम्, केवलप्रत्ययात्मकं विश्वासविषयमात्रमित्यर्थं कष्टत्वं वैयाकरणबोद्धव्यत्वाद्‍गुण एव । एवं आर्त्तादिप्रतिपाद्यत्वेऽप्युदाहार्य्यम् ।

(ङ) वैयाकरणे बोद्धव्ये दुःश्रवत्वस्य गुणत्वमुदाहरति अत्रेति ।

"अकार्षीत्तेन मे विद्यां हन्त ! सैवाक्तज्ञता ॥" इति मत्पूरितपरार्द्धम् ।

अतार्क्षं दक्षिणादानादिना न तृप्तीकृतवान् । अतार्क्षमित्यत्र दुःश्रवत्वम् ।

(च) एवमिति । अस्य वैयाकरणादेः । यथा भट्टिकाव्ये—"धनुर्व्यकार्षीद्‍गुरुबाणगर्भम् ।" नीरस-तार्किकवक्तृत्वे कष्टत्वं गुणो यथा मुद्राराक्षसे—"साध्ये निश्चितमन्वयेन" इत्यादि ।

(छ) ग्राम्यत्वमिति । अधमस्य अशिक्षितजनस्य उक्तिषु ग्राम्यत्वं नाम दोषो गुण एव ।

(ज) एसो इति । "एष शशधरविम्बो दृश्यते हैयङ्गवीनपिण्ड इव । एते अस्रसमूहाः पतन्ति आशासु दुग्धधारा इव ॥" इति संस्कृतानुवादः । हैयङ्गवीनपिण्डः पूर्वदिनोत्पन्नदुग्धनिष्पन्नघृतपिण्डः । अस्रसमूहाः शशधरस्येव किरणजालानि । आशासु दिक्षु ।

अत्र दुग्धधाराशब्दो ग्राम्यः । तथा च अशिक्षितजनस्य नागरोपनागरशब्दप्रयोग एव कथमप्यलीकता प्रतीयते, ग्राम्यशब्दप्रयोगे तु शिशोरर्द्धस्फुटवाक्य इव योग्यत्वात् कथमपि कौतूहलमुदेतीति नितान्ताशिक्षितविदूषकोक्तेरेवास्य गुणत्वमित्यवधेयम् ।

(१) अत्राक्षार्षम् इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"सम्प्रति सन्ध्यासमयश्चक्रद्वन्द्वानि विघटयति ।" (ञ)

**१८ । कवीनां समये ख्याते गुणः ख्यातविरुद्धता ॥ (ट)**

कविसमयख्यातानि च—(ठ)

**१९ । मालिन्यं व्योम्नि पापे यशसि धवलता वर्ण्यते हासकीर्त्त्योः**
**रक्तौ च क्रोधरागौ सरिदुदधिगतं पङ्कजेन्दीवरादि ।**
**तोयाधारेऽखिलेऽपि प्रसरति च मरालादिकः पक्षिसङ्घो**
**ज्योत्स्ना पेया चकोरैर्जलधरसमये मानसं यान्ति हंसाः ॥ (ड)**
**पादाघातादशोकं विकसति वकुलं योषितामास्यमद्यैः**
**यूनामङ्गेषु हाराः स्फुटति च हृदयं विप्रयोगस्य तापैः ।**

---

(झ) निर्हेतुतेति । ख्यातेऽर्थे लोकप्रसिद्धे विषये निर्हेतुता नाम दोषस्तु नैव दोषतां गच्छति । गुणतामपि नैव गच्छति चमत्कारितान्तरजननाभावादित्यपि बोध्यम् ।

(ञ) सम्प्रतीति । चक्रद्वन्द्वानि चक्रवाकदम्पतीन् विघटयति परस्परं वियोजयति । अत्र सन्ध्यासमयस्य चक्रवाकदम्पतीनां परस्परवियोजकत्वं लोकप्रसिद्धमिति हेतोराकाङ्क्षया असत्त्वान्न निर्हेतुतादोष इति बोध्यम् ।

(ट) कवीनामिति । ख्याते प्रसिद्धे कवीनां समये नियमे, ख्यातविरुद्धता नाम प्रागुक्तो दोषः, गुण एव स्यात् ।

(ठ) अथ कानि कविसमयख्यातानीत्याह कवीति ।

(ड) मालिन्यमिति । निराकारतया सामान्यत एव रूपशून्येऽपि व्योम्नि आकाशे पापे च मालिन्यं कृष्णवर्णो वर्ण्यते कविभिरिति शेषः । ईदृग्वर्णनमेव कविसमय इति भावः । एवमन्यत्रापि । "कटाहतलमलिनमाकाशम्" "अमान्धकारोपममुग्रपापम् ।" यशसि हासकीर्त्त्योश्च धवलता वर्ण्यते । "हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूतपथः सितीकृतः ।" "नृपः सितच्छवितकीर्त्तिमण्डलः" "यशः कीर्त्तिः समज्ञा च" इत्यमरोक्तेर्यशःकीर्त्त्योः पर्य्यायत्वेऽपि "खड्गादिप्रभवा कीर्त्तिर्विद्यादिप्रभवं यशः" इति कारणभेदेन भेदाङ्गीकारादत्र यशःकीर्त्त्योः पृथगुपन्यासः । क्रोधरागौ रोषानुरागौ रक्तौ वर्ण्येते । "सरागया स्रुतघनघर्म्मतोयया" "सन्ध्यारागसमं स रागनिवहम् ।" पङ्कजेन्दीवरादि आदिपदात् शैवालञ्च, सरिदुदधिगतं वर्ण्यते । "पद्मैरनन्वीतवधूमुखद्युत—निम्नगाः ।" अखिलेऽपि तोयाधारे जलाशये मरालादिको हंसप्रभृतिः पक्षिसङ्घः प्रसरति सञ्चरति चेति वर्ण्यते । "चुकूज कूले कलहंसमण्डली ।" चकोरैः स्वनामख्यातैः पक्षिभिः ज्योत्स्ना पेया पातव्येति वर्ण्यते । "अपि मर्मैष चकोरशिशुर्मुनेः ।" जलधरसमये वर्षाकाले हंसाः मानसं सरोवरं यान्ति । "मानसोत्काः—सम्पत्स्यन्ते नभसि भवती राजहंसाः सहायाः ॥"

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मौर्वी रोलम्बमाला धनुरथविशिखाः कौसुमाः पुष्पकेतोः
भिन्नं स्यादस्य बाणैर्युवजनहृदयं स्त्रीकटाक्षेण तद्वत् ॥ (ढ)
अह्न्यम्भोजं निशायां विकसति कुमुदं चन्द्रिका शुक्लपक्षे
मेघध्वानेषु नृत्यं भवति च शिखिनां नाप्यशोके फलं स्यात्।
न स्याज्जाती वसन्ते न च कुसुमफले गन्धसारद्रुमाणा-
मित्याद्युन्नेयमन्यत् कविसमयगतं सत्कवीनां प्रबन्धे ॥ (ण)

एषामुदाहरणान्याकरेषु स्पष्टानि (त)।

२०। धनुर्ज्यादिषु शब्देषु शब्दास्तु धनुरादयः।
आरूढत्वादिबोधाय—(थ)

---

(ढ) पादेति। योषितां पादाघातात् अशोकं पुष्पं विकसति इति वर्ण्यते। "सर्वाशोकतरूणाम्" इत्यादि मालविकाग्निमित्रपञ्चमाङ्के। योषितामास्यमद्यैर्मुखोद्गारितमद्यैः वकुलं पुष्पञ्च विकसति इति वर्ण्यते। "वकुलं विचकास योषिताम्।" यूनामङ्गेषु हारा मुक्तामाला वर्ण्यन्ते। "आमुक्त-मुक्तालतमस्य वक्षः।" यूनां हृदयञ्च विप्रयोगस्य तापैः प्रियतमाविच्छेदसन्तापैः स्फुटति विदीर्य्यत इति वर्ण्यते। "हा हा देवि! स्फुटति हृदयम्।" पुष्पकेतोर्मदनस्य मौर्वी धनुषो गुणः रोलम्बमाला भ्रमरावली वर्ण्यते। "अलिपङ्क्तिरनेकशस्तया गुणकृत्ये धनुषो नियोजिता।" पुष्पकेतोरेव धनुः कौसुमं कुसुममयं वर्ण्यते। "पीतोऽसि तन्वा जितपुष्पधन्वा।" अथ पुष्पकेतोर्विशिखा बाणा अपि कौसुमाः कुसुममया वर्ण्यन्ते। "तव कुसुमशरत्वं शीतरश्मित्वमिन्दोः।" अस्य पुष्पकेतोर्बाणैः तद्वत् स्त्रीकटाक्षेण युवजनहृदयं भिन्नं विदीर्णं स्यात्। "फलस्तनस्थानविदीर्णरागिहृद्विशच्छुकास्यस्मरकिंशुकाशुगाम्।" "अवान्तरे जघ्नुरमुं कटाक्षैः।"

(ण) अह्नीति। उभयोरेवोभयोर्विकासदर्शनेऽपि अह्नि अम्भोजं निशायाञ्च कुमुदं विकसति इति वर्ण्यते। "कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव।" चन्द्रिका शुक्लपक्ष एव वर्ण्यते। "शुक्ले हि पक्षं समुपैति चन्द्रिका।" अन्यत्र सम्भवेऽपि मेघध्वानेष्वेव शिखिनां नृत्यं भवतीति च वर्ण्यते। "प्रवृत्तनृत्यं कुलमद्य बर्हिणाम्।" अशोके वृक्षे फलं नापि स्यात्; वसन्ते काले जातीपुष्पं न स्यात्; गन्धसारद्रुमाणां चन्दनवृक्षाणां कुसुमफले न च स्याताम्। सर्वत्र कविवर्णनायामिति शेषः। इत्यादि उन्नेयमनुसन्धेयम्। अन्यत् कविसमयगतं कवीनां नियमनिर्द्दिष्टं वर्णनं सत्कवीनां कालिदासादीनां प्रबन्धे उन्नेयमित्यन्वयः। तथा च यशःकीर्त्त्योर्धवलतावत् तद्विपरीतत्वेन दुर्यशोदुष्कीर्त्त्योर्मालिन्यमेव वर्ण्यते। यथा—"वितेनुरङ्गारमिवायशः परे।" विस्तरस्तु अलङ्कारशेखर-रसगङ्गाधर-काव्यचिन्तामण्यादिष्वनुसन्धेयः।

(त) एषामिति। आकरेषु सत्कवीनां ग्रन्थेषु। तानि तु यथास्थानं दर्शितान्येव।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"पूरिते रोदसोध्वानैर्धनुर्ज्यास्फालनोद्भवैः।" (द)

अत्र ज्याशब्देनापि गतार्थत्वे धनुःशब्देन ज्याया धनुष्याततीकरणं (१) बोध्यते (ध)।

आदिशब्दात् "भाति कर्णावतंसस्ते।" अत्र कर्णस्थितत्वबोधनाय कर्णशब्दः। एवं श्रवणकुण्डल-शिरःशेखरप्रभृतिः। एवं निरुपपदो मालाशब्दः पुष्पस्रजमेवाभिधत्ते इति स्थितावपि "पुष्पमाला विभाति ते।" अत्र पुष्पशब्द उत्कृष्टपुष्पबुद्धये (न)। एवं "मुक्ताहारः" इत्यत्र मुक्ताशब्देन अन्यरत्नामिश्रितत्वम् (प)।

२१। प्रयोक्तव्याः स्थिता अमी ॥ (फ)

धनुर्ज्यादयः सत्काव्यस्थिता एव निबद्धव्याः, न त्वस्थिता जघनकाञ्चीकरकङ्कणादयः (ब)।

---

(थ) क्वचित् पुनरुक्ततादोषं गुणत्वेन प्रतिप्रसूते धनुरिति। धनुर्ज्यादिषु शब्देषु विद्यमाना इत्यर्थः, धनुरादयः शब्दास्तु आरूढत्वादिबोधाय धनुरादिषु योजितत्वादिज्ञापनाय प्रयोक्तव्या इत्यन्वयः।

(द) पूरिते इति। "सिंहनादैरमित्राणां भिन्नानि हृदयान्यपि ॥" इति मत्पूरितपरार्द्धम्।

रोदसी द्यावापृथिव्यौ।

(ध) अत्रेति। गतार्थत्वे प्राप्तधनुर्गुणार्थत्वे, "मौर्वी ज्या शिञ्जिनी गुणः" इत्यमरवाक्यादीनां तत्रैव सङ्केतग्रहादिति भावः। आततीकरणं विस्तृतीकरणम्।

(न) कारिकायाः प्रथमादिशब्दग्राह्यान् दर्शयितुमाह आदिशब्दादिति। "पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरे" इत्यमरकोषात् अवतंसशब्देनैव कर्णभूषणे प्राप्ते कर्णस्थितत्वबोधनाय कर्णशब्द इत्यर्थः। तथा कुण्डलशेखरशब्दाभ्यामेव कर्णभूषणशिरोभूषणयोः प्राप्तावपि तत्र तत्र स्थितत्वबोधनाय श्रवणशिरःशब्दाविति भावः। पुष्पस्रजमेवाभिधत्त इति। तत्रैव भूरिप्रयोगादित्याशयः।

(प) कारिकाया द्वितीयादिपदग्राह्यं दर्शयितुमाह तृतीय एवमिति। हारशब्देनैव मुक्तामयहारप्रतीतावपि पुनर्मुक्ताशब्देनेत्यर्थः। अन्येति। एतेन आरूढत्वादीत्यादिशब्देन अमिश्रितत्वादिग्रहणमिति सूचितम्।

(फ) प्रयोक्तव्या इति। वृत्तिव्याख्ययैवेदं स्पष्टीभूतम्।

(ब) अमी इत्यस्य विशेष्यमाह धनुर्ज्यादय इति। शब्दा इति शेषः। स्थिता इत्यस्यार्थमाह सदित्यादि। एतदुक्तेर्नियमार्थत्वमाह एवेति। नियमव्यवच्छेद्यमाह न त्विति। अस्थिता इति। सत्काव्येष्विति शेषः। एतेन "उत्क्षिप्तं करकङ्कणद्वयमिदम्।" इत्यादौ पुनरुक्ततादोष एवेति बोध्यम्।

---

(१) आयत्तीकरणमिति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२२ । उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः । (भ)

यथा—

"गाढ़ालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद ! माऽति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥" (म)

अत्र पीड़येति न्यूनम् (य) ।

२३ । क्वचिन्न दोषो न गुणः—(र)

न्यूनपदत्वमित्येव । यथा—

"तिष्ठेत् कोपवशात् प्रभावपिहिता ? दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेत् ? मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्त्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्त्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ? ॥" (ल)

---

(भ) उक्ताविति । आनन्दमग्नस्य आदिशब्दाद्दुःखमग्नादेश्च उक्तौ न्यूनपदता नाम दोष गुण एव स्यात् । आनन्दादिभिरभिभूततया अन्वयिपदाभिधाने अनवधानसूचनद्वारा आनन्दादीनामत्यन्ताधिक्यसूचनादित्यभिप्रायः ।

(म) गाढ़ेति । श्लोकोऽयममरुशतके । गाढ़ालिङ्गनेन वामनीकृतौ खर्वीकृतौ कुचौ यस्याः सा चासौ प्रोद्भिन्नः प्रकाशितो रोमोद्गमो रोमाञ्चो यस्याः सा चेति परपदस्य विशेष्यत्वविवक्षया कर्मधारये पूर्वपदस्य पुंवद्भावः । सान्द्रेण निविड़ेन स्नेहरसातिरेकेण मां प्रति प्रणयाधिक्येन विगलन्निपतत् श्रीमतः सुन्दरात् नितम्बादम्बरं वसनं यस्याः सा । हे मानद ! मा माम्, मा पीड़य, मां मा अतिपीड़य, अलम् अनेनालिङ्गनव्यापारेणेत्यर्थः, इति क्षामाक्षरोल्लापिनी पीड़येतिपदानभिधानादल्पाक्षरभाषिणी सा प्रियतमेत्यर्थः, किन्नु, सुप्ता परं किमप्यकथनात् किं निद्रिता ? निस्पन्दत्वात् किन्नु, मृता ? भुजद्वयान्तरालादवहिर्गमनेन किन्नु मे मम मनसि लीना ? वहिः सर्वथैवाननुभवात् मनस्येव विलीना विशेषेण लीना किन्नु ? ।

(य) अत्रेति । पीड़येति पदमिति शेषः । एतदुपलक्षणम्, अलमित्यनेनान्वययोग्यम् आलिङ्गनेनेति पदमपि न्यूनमिति बोध्यम् ।

(र) क्वचिदिति । क्वचित्तत्तत्पदस्य अनायासबोध्यत्वस्थले प्रागुक्तं न्यूनपदत्वं न दोषो न वा गुण इत्यर्थः । अनयोर्गुणत्वस्तु द्वत्तावेव विवृता ।

(ल) तिष्ठेदिति । विक्रमोर्वशीयस्थं [illegible] पुरूरवस उक्तिरियम् । एवं ग्री

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र "प्रभावपिहिता" इति "भवेत्" इति च इत्यनन्तरम् "नैतद्यतः" इति पदानि न्यूनानि (व)।

एषां पदानां न्यूनतायामपि एतद्वाक्यव्यङ्ग्यस्य वितर्काख्यव्यभिचारिभावस्योत्कर्षाकरणान्न गुणः, "दीर्घं न सा" इत्यादिवाक्यजन्यया च प्रतिपत्त्या "तिष्ठे"दित्यादिवाक्यप्रतिपत्तेर्बोधः (१) स्फुटमेवावभासत इति न दोषः (श)।

२४ । गुणः क्वाप्यधिकं पदम् ॥ (ष)

यथा—"आचरति दुर्जनो यत् सहसा मनसोऽप्यगोचरानर्थान् ।
तन्न न जाने जाने स्पृशति मनः किन्तु नैव निष्ठुरताम् ॥" (स)

---

कोपवशात् मां प्रति कुतश्चित् प्रणयकोपात् प्रभावेण स्वर्गवासित्वमहिम्ना पिहिता प्रच्छन्नदेहा सती कुत्रापि तिष्ठेत् ? किमिति काकुः । अन्यत्राप्येवम् । नैतत्, यतः, सा उर्वशी दीर्घं न कुप्यति । तथा च कोपेन प्रच्छन्नापि दीर्घकालस्थायिकोपाभावेन क्षणात् परमेव पुनरागच्छेदिति भावः । तर्हि किं स्वर्गायैव उत्पतिता उद्गता भवेत् ? एतदपि न, यतः, अस्या उर्वश्या मनः, मयि पुनर्भावार्द्रं प्रेमस्निग्धम् । अतश्चिरविरहं स्वतो न कुर्य्यादित्याशयः । तर्हि किमसुरैरपहृतेत्याह तामिति । विबुधद्विषोऽपि असुरा अपि मे मम पुरोवर्त्तिनीमदृतो विद्यमानां तामुर्वशीं हर्त्तुं न च नहि शक्ताः । तेषां तादृशसाहसवशयोरभावादित्यभिप्रायः । अथ च सा नयनयोरत्यन्तमेव अगोचरमविषयतां याता प्राप्तेत्ययं को नाम विधिर्व्यापारः ? ।

(व) नन्वत्र कुत्र किं नाम पदं न्यूनमित्याह अत्रेति । इति त्रीण्येव पदानि न्यूनानीत्यर्थः । अन्यथा दीर्घमित्यादि मयीत्यादि च हेतुतयोपन्यस्तं वाक्यं नोपपद्यत इत्याशयः ।

(श) कारिकास्थपाठक्रमस्य केवलच्छन्दःपूरणायोपन्यस्तत्वेनाकिञ्चित्करत्वात् गुणदोषयोर्मध्ये प्राग्गुणत्वोपपादनस्येव अगुणत्वादोषत्वयोर्मध्येऽपि प्रागगुणत्वस्योपपादनौचित्यात् प्रथममगुणत्वं पश्चाददोषत्वमुपपादयितुमाह एषामिति । 'न' 'एतत्' 'यतः' इति त्रयाणामित्यर्थः । उत्कर्षाकरणात् "किं वक्षः प्रियया" इत्यादौ "करतले विन्यस्य वक्त्राम्बुजम्" इत्यनेनेव अत्र केनचित् पदान्तरेण पुष्टत्वाकरणादित्यर्थः । प्रतिपत्त्या प्रतीत्या द्वारा । वाक्यप्रतिपत्तेर्वाक्यजन्यप्रतीतेः, बाधो निरासः । तथा च "नैतद्यतः" इति शब्दत्रयप्रतिपाद्यः "तिष्ठेत्" इत्यादिवाक्यार्थबाधनिरासः "दीर्घं न सा कुप्यति" इति वाक्यजन्येनैव बोधेन तदन्यथानुपपत्त्या स्पष्टं प्रतिपादित इति न दोष इत्याशयः ।

(ष) गुण इति । क्वापि अवधारणबोधनस्थले अधिकं पदम् अधिकपदता नाम दोषो गुण एव ।

(स) आचरतीति । दुर्जनः सहसैव यत् मनसोऽपि अगोचरान् अविषयान् अभावनीयानित्यर्थः,

---

(१) बोध इति पुस्तकान्तरेष्वसङ्गतः पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha
६६

अत्र "न न जाने" इत्यनेन अयोगव्यवच्छेदाद्विच्छित्तिविशेषः (१) (ङ)। द्वितीये "जाने" इत्यनेन "अहमेव जाने" इत्यन्ययोगव्यवच्छेदाद्विच्छित्तिविशेषः (२) (च)।

२५।' समाप्तपुनरात्तत्वं न दोषो न गुणः क्वचित्। (क)

यथा—"अन्यास्ता गुणरत्न—" इत्यादि (४६४ पृष्ठे)।

अत्र प्रथमार्द्धेन वाक्यसमाप्तावपि द्वितीयार्द्धवाक्यं पुनरुपात्तम् (ख)। एवञ्च विशेषणमात्रस्य पुनरुपादाने समाप्तपुनरात्तत्वम्, न वाक्यान्तरस्येति विज्ञेयम् (ग)।

---

अर्थात् कार्य्याणि आचरति करोति ; तत् न जाने इति न, अपि तु जाने एव ; एवं जाने अहमेव जाने इत्यर्थः। तर्हि कथं न तद्देव प्रतिकरोषीत्याह स्मृशतीति। किन्तु मम मनः नैव निष्ठुरतां स्पृशति दुर्जनमनीवत् क्रूरतामाश्रयति।

(ङ) अवधारणं नाम द्विविधम्—अयोगव्यवच्छेदः अन्ययोगव्यवच्छेदश्चेति। अत्र तूभयोरेव घटनाद्गुणत्वमिति क्रमादाह अत्रेति। आद्ये इत्यूह्यम्। अयोगस्य आत्मनि दुर्जनकार्य्यविषयकज्ञानासम्बन्धस्य व्यवच्छेदान्निराकरणाद्विच्छित्तिविशेषचमत्कारितातिशयः। तथा च 'जाने' इत्यनेनैवोपपत्तौ नञ्द्वयाधिक्यादधिकपदत्वप्रसक्तावपि नञ्द्वयेनैव उक्तविधवैचित्र्यातिशयबोधनात् प्रत्युत गुणत्वमेवेति भावः।

(च) ननु 'न जाने इति न, अपि तु जाने' इत्यर्थे द्वितीयेन जाने इत्यनेनैव अयोगव्यवच्छेद इति चेत्, नेत्याह द्वितीय इति। द्वितीये अवधारणप्रकारे इत्यर्थः। अन्यस्मिन् जने यो योगः दुर्जनकार्य्यविषयकज्ञानसम्बन्धस्तस्य व्यवच्छेदान्निराकरणात् विच्छित्तिविशेषचमत्कारातिशयः तथा च "न न जाने" इत्यनेनैवायोगव्यवच्छेदप्रत्यायनात् द्वितीयेन 'जाने' इत्यनेन तु अन्ययोगव्यवच्छेदस्यैव प्रत्यायनमिति भावः। अतएवात्राधिकपदत्वसम्भवेऽपि गुणत्वमेवेति बोध्यम्। न चात्र 'न न जाने जाने' इत्येकानुपूर्वीकशब्दानामसकृदभिधानात् कथितपदत्वमेवेति वाच्यम्, आनुपूर्वीभेदाभावेऽपि अर्थभेदात् अभिन्नार्थकैकानुपूर्वीकशब्दानामसकृदभिधान एव कथितपदत्वदोषव्यवस्थापनात्। किन्तु ईदृशविषये कथितपदत्वमपि गुण एव। तथा चोक्तम्—"कथितञ्च पदं पुनः" इत्यादि।

(क) समाप्तेति। क्वचित् अन्वयस्य समाप्तावपि वाक्यान्तरेण पुनरुपात्तस्थले समाप्तपुनरात्तत्वं नाम दोषो न दोषः, न वा गुणः।

(ख) अत्रेति। पुनरुपात्तं यदेत्यनेन पूर्ववाक्यसाकाङ्क्षतया पुनर्गृहीतम्। अतएवात्र प्रागुक्तविशिष्टलक्षणाभावे तद्दोषप्रसक्तौ प्रतिप्रसव इति बोध्यम्। तथा चात्र पूर्ववाक्यसाकाङ्क्षद्वितीयवाक्येन रसापकर्षाजननात्र दोषत्वम्, विच्छित्तिविशेषाजननाच्च न गुणत्वमित्यवधेयम्।

---

(१) अन्ययोगव्यवच्छेदाद्विच्छित्तिविशेषः, अन्ययोगव्यवच्छेदः इति पाठभेदौ।

(२) अत्र न न जाने इत्यन्ययोगव्यवच्छेदाद्विच्छित्तिविशेषः इतिमात्रः समुदायेन पाठः क्वचित्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विभावादिपरिपोषस्य प्रकृतरसप्रतिकूलप्रायत्वादित्येषां स्वशब्दाभिधानमेव न्याय्यम् (ढ)।

२९। सञ्चार्य्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः। (ण)

यथा—"क्वाकार्य्यं शशलक्ष्मणः क्व च कुलम्" इत्यादि (२२२ पृष्ठे)।

अत्र शमाङ्गानां वितर्क-मति-शङ्का-धृतीनामभिलाषाङ्गौत्सुक्य-स्मृति-दैन्य-चिन्ताभिस्तिरस्कारः, पर्य्यन्ते चिन्ताप्रधानमास्वादप्रकर्षमाविर्भावयति (त)।

३०। विरोधिनोऽपि स्मरणे साम्येन वचनेऽपि वा ॥
भवेद्विरोधो नान्योन्यमङ्गिन्यङ्गत्वमाप्तयोः। (थ)

---

तादृशभयादीनामवासम्भवात् त्वराद्वारा औत्सुक्यस्यैव विलम्बेन प्रतीतिः स्यादेवेति भावः। अतएव औत्सुक्यस्य न प्रतीतिरित्यनुक्त्वा न झटिति प्रतीतिरित्युक्तम्। क्रियोऽनुभावस्य लज्जाकार्य्यस्य, व्यावर्त्तनस्य निवर्त्तनस्य। तथा च व्यावर्त्तनरूपानुभावद्वारा क्रियः प्रतिपादने तस्याश्च न झटिति प्रतीतिः, व्यावर्त्तनस्य कोपादिनापि सम्भवादिति पूर्ववदेवार्थः। अवादिशब्देन भयादीनां परिग्रहः। अतएवात्र गत्यन्तराभावात् व्यभिचारिणः स्वशब्देनोक्तावपि न दोष इत्याशयः।

(ढ) अथ साध्वसहासयोर्विभावाद्यभिधानेनैव प्रतिपादनं युक्तमित्याह साध्वसेति। विभावादिभिर्विभावाद्यभिधानैः परिपोषस्तस्य। प्रकृतरसस्य शृङ्गारस्य प्रतिकूलप्रायत्वात् साध्वसस्य विभावादिकृतपरिपोषे भयानकरसत्वप्राप्त्या विरोधित्वात्, हासस्य च विभावादिकृतपरिपोषे हास्यरसत्वप्राप्त्या प्राधान्ये सति शृङ्गारस्योपमर्द्दकत्वेन तद्विरोधितुल्यत्वादित्यर्थः। इति एतेभ्यो हेतुभ्य इत्यर्थः। एषाम् औत्सुक्य-ह्री-साध्वस-हासाख्यव्यभिचारिभावानाम्।

(ण) "परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः" इत्यस्य प्रतिप्रसवमाह सञ्चार्य्यादेरिति। विरुद्धस्य विरोधिरसाङ्गभूतस्य सञ्चार्य्यादेर्व्यभिचारिभावादेः, बाध्यत्वेन उपमर्द्यत्वप्रकारेण वचः कथनं गुणः। अवादिपदेन विभावानुभावयोर्ग्रहणम्।

(त) गुणत्वमुपपादयति अत्रेति। शमाङ्गानां शान्तरसनिर्वाहकानाम्। अभिलाषाङ्गानि शृङ्गाररसनिर्वाहिका या औत्सुक्य-स्मृति-दैन्य-चिन्तास्ताभिः, तिरस्कार उपमर्द्दनमप्रधानीकरणमित्यर्थः; पर्य्यन्ते शेषे, चिन्तैव प्रधानं यत्र तादृशम्, आस्वादप्रकर्षं रसोत्कर्षम्, आविर्भावयति प्रकाशयति। अतएवास्य गुणत्वमित्याशयः। अत्र "कः खलु युवा धन्योऽधरं पास्यति" इति पर्य्यवसाने चिन्ताया एव धारावाहित्वात् प्रधानत्वमिति बोध्यम्।

(थ) विरोधिरसयोरेकत्र समावेशो दोष एवेति रसानां विरोधाङ्गीकारादेवाङ्गीकृतम्, सम्प्रति तत्रापि प्रतिप्रसवमाह विरोधिनोऽपीति। विरोधिनोऽपि रसस्याङ्गस्य स्मरणे केवलस्मृतौ, अथवा विरोधिनोऽपि रसस्य

Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥
॥ अत्र शृङ्गारः करुणस्याङ्गम् ॥



क्रमेण यथा—"अयं स रसनोत्कर्षी—" इत्यादि (२५६ पृष्ठे)। अत्रालम्बनविच्छेदेन रतेररसात्मतया स्मर्य्यमाणानां तदङ्गानां शोकोद्दीपकतया करुणानुकूलता (द)।

"सरागया स्रुतघनघर्म्मतोयया कराहतिध्वनितपृथूरुपीठया।
मुहुर्मुहुर्दशनविलङ्घितोष्ठया रुषा नृपाः प्रियतमयेव भेजिरे॥" (ध)

अत्र सम्भोगशृङ्गारो वर्णनीयस्य वीरव्यभिचारिणः क्रोधस्यानुभावसाम्येन विवक्षितः (न)।

"एकं ध्याननिमीलनान्मुकुलितप्रायं द्वितीयं पुनः
पार्वत्या वदनाम्बुजस्तनभरे सम्भोगभावालसम्।

---

साम्येन वचने सादृश्येन कथने सादृश्यप्रदर्शनार्थमुपादान इत्यर्थः, तथा अङ्गिनि कस्मिंश्चित् रसे भावादौ वा प्रधानभावेन स्थिते सति तस्य अङ्गत्वमाप्तयोः प्राप्तयोः कयोश्चिद्विरोधिनो रसयोः, अन्योन्यं परस्परं विरोधो नाम दोषो न भवेत्; किन्तु यथासम्भवं गुण एवेति भावः। आप्तयोरिति द्विवचनमनेकोपलक्षणम्।

(द) अत्रेति। आलम्बनस्य नायकस्य भूरिश्रवसः, विच्छेदेन मरणाच्चिरवियोगेन, रतेरनुरागस्य अरसात्मतया शृङ्गाररसरूपेणापरिणततया। एतेन "अत्र शृङ्गारः करुणस्याङ्गम्" इति चतुर्थे यदुक्तं तत्र शृङ्गारपदं तदीयस्थायिभावपरम्, तथा रसरूपेण परिणतिस्थले विरोध एवेति च बोध्यम्। तदङ्गानां शृङ्गारानुभावानां रसनोत्कर्षणादीनाम्, शोकोद्दीपकतया चिरविच्छेदे सति प्रियजनकृतोपकारस्मरणस्य नितान्तशोकोद्दीपकतायाः स्वाभाविकत्वादिति भावः, करुणानुकूलता प्रकृतकरुणरसस्य पुष्टिजनकतेति सम्भाव्यमानः शृङ्गारकरुणयोर्विरोधः प्रत्युत गुण एव पर्य्यवसित इत्याशयः।

(ध) साम्येन वचने विरोधाभावं दर्शयितुमुदाहरति सरागयेति। शिशुपालवधसप्तदशसर्गे श्लोकोऽयम्। सरागया "रक्तौ च क्रोधरागौ" इति कविसमयात् लौहित्ययुक्तया सानुरागया च, स्रुतानि स्वावेगात् उत्थोद्रेकाच्च गलितानि घनानि निविड़ानि घर्म्मतोयानि यस्यां यस्याश्च तया करस्य आहत्या आघातेन ध्वनितं शब्दितं पृथु वृहत् ऊरुपीठम् ऊरुदेशो यस्यां यस्याश्च तया। वीराः क्रोधोदये निजोरुदेशं कामिनः कामोद्दीपनाय कामिन्यूरुदेशञ्च, आघ्नन्तीति प्रसिद्धम्। मुहुर्मुहुर्वारं वारं दशनैर्दन्तैः विलङ्घितो दष्ट ओष्ठो यस्यां यस्याश्च तया। रुषा क्रोधेन प्रियतमयेव नृपाः शिशुपालपक्षीया राजानो भेजिरे आश्रिताः।

(न) अत्रेति। वीरे वीररसे व्यभिचारिणः सञ्चारिभावरूपस्य क्रोधस्य अनुभावसाम्येन कार्य्यसादृश्येन विवक्षितः कविनेति विरोधिनोरपि वीरशृङ्गारयोरेकत्र समावेशो न दोषाय परस्परोपमर्द्दोपमर्द्दकभावादित्याशयः। अत्र वीरव्यभिचारिण इत्यनेन उत्साहस्यैव स्थायिभावत्वाद्वीर एव रसः, क्रोधस्तु तत्रैव सञ्चारी भाव इति सूचनेन क्रोधस्य स्थायिभावत्वाभावात् रुषेत्यनेन तस्योक्तावपि न स्थायिनः स्वशब्दोक्तिदोषो [illegible] वीरो रस इति सूचितम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२६। गर्भितत्वं गुणः क्वापि—(घ)

यथा—"दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मात् प्रादुरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम्॥" (ङ)

अत्र "वदन्त एव" इत्यादि वाक्यं वाक्यान्तरप्रवेशात् चमत्कारातिशयं पुष्णाति (च)।

२७। पतत्प्रकर्षता तथा॥ (छ)

तथेति क्वचिद्गुणः (ज)। यथा—"चञ्चद्भुज—" इत्यादि (३२४ पृष्ठे)। अत्र चतुर्थपादे सुकुमारार्थतया शब्दाडम्बरत्यागो गुणः (झ)।

२८। क्वचिदुक्तौ स्वशब्देन न दोषो व्यभिचारिणः।
अनुभावविभावाभ्यां रचना यत्र नोचिता॥ (ञ)

---

(ग) फलितार्थमाह एवञ्चेति। "अन्यास्ता" इत्यादौ वाक्यान्तरेण पुनरुपादानात् समाप्तपुनरात्तत्वदोषाभावे चेत्यर्थः। वाक्यान्तरस्य पुनरुपादाने तु न समाप्तपुनरात्तत्वमित्यर्थः। अतएवास्माभिस्तत्र तथैव लक्षणमभिहितम्।

(घ) गर्भितत्वमिति। क्वापि चमत्कारातिशयजननस्थले गर्भितत्वं नाम प्रागुक्तो दोषो गुण एव।

(ङ) दिङ्मातङ्गेति। प्रभाकरोक्तोऽयं श्लोकः। दिङ्मातङ्गघटया दिग्दन्तिसमूहेन विभक्ता नियमिताः चत्वारः आघाटाः सीमानो यस्याः सा तथोक्ता मही साध्यते आयत्तीक्रियते; सिद्धापि समस्तराजगणविजयेन आयत्तीभूतापि सा मही, इति वदन्त एव हि वयम् आश्चर्यरसेन रोमाञ्चिता जाता इति यूयं पश्यत; विप्राय कश्यपाय प्रतिपाद्यते दीयते। अपरं किं ब्रूम इति शेषः। यस्मात् इदं कथाद्भुतम् उक्तवृत्तान्तरूपमाश्चर्यं प्रादुरभूत्, यत्रैव च अस्तं गतम्, यस्मात् परं वीरो दाता च नाभूत् न भविष्यति चेत्यर्थः, तस्मै रामाय भार्गवाय नमः।

(च) अत्रेति। वाक्यान्तरप्रवेशात् "सिद्धा सापि विप्राय प्रतिपाद्यते" इति वाक्यमध्ये प्रवेशात्, अत्रत्यदानवीररसस्य चमत्कारातिशयं पुष्णाति वक्तुरात्मनो विस्मयातिशयद्योतनेन द्योतयति।

(छ) पतदिति। पतत्प्रकर्षता नाम दोषः, तथा गुण इत्यर्थः।

(ज) तथेतीति। क्वचित् अर्थानुरूपशब्दस्थले।

(झ) अत्रेति। सुकुमारार्थतया प्रियतमाकेशबन्धनरूपकोमलविषयाभिधेयतया। गुण इति। शब्दकोमलतया च स्वापि [illegible]प्रतीतिरिति भावः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यत्र अनुभावविभावमुखेन प्रतिपादने विशदप्रतीतिर्नास्ति, यत्र च विभावानुभावकृतपुष्टिराहित्यमेवानुगुणम्, तत्र व्यभिचारिणः स्वशब्देनोक्तौ न दोषः (ट)। यथा—

"औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः॥" (ठ)

अत्रौत्सुक्यस्य त्वरारूपानुभावमुखेन प्रतिपादने सङ्गमे (१) न झटिति प्रतीतिः, त्वराया भयादिनापि सम्भवात्, ह्रियोऽनुभावस्य च व्यावर्त्तनस्य (२) कोपादिनापि सम्भवात् (ड)। साध्वस-हासयोस्तु

(ञ) यथासम्भवं शब्दार्थदोषान् प्रतिप्रसूयेदानीं रसदोषानपि तथैव प्रतिप्रसूते क्वचिदिति। क्वचित् व्यभिचारिणः सञ्चारिभावस्य स्वशब्देनोक्तौ न दोषः व्यभिचारिणः स्वशब्दवाच्यत्वं नाम दोषो न भवति गुणोऽपि न भवतीत्यर्थः। क्वचिदिति कुर्वन्नाह अन्विति। यत्र स्थले अनुभावविभावाभ्यां केवलानुभाव-विभावबोधकैः शब्दैरित्यर्थः, रचना ग्रथनं नोचिता अभिप्रेतार्थप्रत्यायनासम्भवात् न सम्भवपरा।

(ट) यत्रेति। अनुभावविभावमुखेन केवलानुभावविभावबोधकशब्दद्वारा, प्रतिपादने कवेरभिप्रेतार्थ-प्रतिपादनचेष्टायाम्, विशदप्रतीतिर्नास्ति सहृदयानां सुस्पष्टावगमो न स्यादित्यर्थः। अनुगुणं रसादिप्रतीतेरनुकूलम्।

(ठ) औत्सुक्येनेति। रत्नावलीनाटिकाया एको नान्दीश्लोकोऽयम्। नवे सङ्गमे पत्या सह नवसङ्गमं प्रति औत्सुक्येन उत्कण्ठया कृता त्वरा यस्याः सा सहभुवा सहजया ह्रिया लज्जया व्यावर्त्तमाना पुनर्निवर्त्त-माना, बन्धुवधूजनस्य भ्रातृभार्य्यावर्गस्य तैस्तैर्वचनैः, "लज्जां परिहर" "गृहं प्रविश" इत्यादिवाक्यैः, पुनरपि आभिमुख्यं वासगृहगमनायाभिमुखत्वम्, नीता प्रापिता, अग्रे सम्मुखदेशे वरं दृष्ट्वा आत्तः प्राप्तः साध्वसरसो भयं यया सा, हसता च तेन वरेण हरेण श्लिष्टा आलिङ्गिता, तेन च संरोहत्पुलका उत्पद्यमानरोमाञ्चा, गौरी पार्वती, वो युष्माकं शिवाय मङ्गलाय अस्तु।

(ड) उदाहृतपद्ये औत्सुक्य-ह्री-साध्वस-हासाश्चत्वार एव व्यभिचारिभावाः। तेषामौत्सुक्यह्रियौ "निर्वेदावेगदैन्य"—इत्यादिना परिगणिते, साध्वसहासौ तु "शृङ्गारवीरयोर्हासः" इत्यादिना व्यभिचारिभावत्वेन गृहीतौ। ते चात्र सर्व एव स्वशब्देनोक्ता इति "रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि" इति प्रागुक्त-नियमेन चत्वार एव व्यभिचारिणः स्वशब्दोक्तिदोषाः प्रसक्तास्तेषां प्रतिप्रसवाय युक्तिं दर्शयितुमाह अत्रेति। त्वरारूपानुभावमुखेन स्वकार्य्यत्वरारूपानुभावद्वारा, प्रतिपादने प्रत्यायनचेष्टायाम्, सङ्गमे हरेण सह सङ्गमविषये, न औत्सुक्यस्य झटिति प्रतीतिः। भयादिना इत्यादिशब्देन हर्षादीनां ग्रहणम्। आद्योपान्तपर्य्यालोचने तु

(१) क्वचित् सङ्गमे इति पाठो न दृश्यते। (२) व्यावर्त्तमानस्य इति क्वचित् पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अन्यद्दूरविकृष्टचाप-मदन-क्रोधानलोद्दीपितं

शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥" (प)

अत्र शान्त-शृङ्गार-रौद्र-रसपरिपुष्टा भगवद्विषया रतिः (फ)। यथा वा—(ब)

"क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं

गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।

आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः

कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥" (भ)

अत्र कविगता भगवद्विषया रतिः प्रधानम्। तस्याः परिपोषकतया भगवतस्त्रिपुरध्वंसं प्रति उत्साहस्यापरिपुष्टतया रसपदवीमप्राप्ततया भावमात्रस्य करुणोऽङ्गम्। तस्य च 'कामीव' इति साम्यबलादायातः शृङ्गारः (म)। एवञ्चाविश्रान्तिधामतया करुणस्याङ्गतैवेति द्वयोरपि करुणशृङ्गारयो-

---

(प) अङ्गिनि भावे अङ्गत्वं प्राप्तानां रसानां परस्परविरोधाभावं दर्शयितुमुदाहरति एकमिति। एकं नेत्रम्, ध्यानेन निमीलनात् इन्द्रियाणां स्वस्वकार्थ्याद्यर्मीकृतत्वात् मुकुलितप्रायं मुद्रितप्रायम्, द्वितीयं पुनर्नेत्रम्, पार्वत्या वदनाम्बुजेन युक्तः स्तनभरः स्तनयोर्विशालता स तथोक्तस्तस्मिन्। मध्यपदलोपी समासः, सम्भोगभावेन चुम्बनमर्द्दनाद्यभिलाषेण अलसं निश्चलम्। अन्यत् तृतीयं नेत्रम्, दूरविकृष्टं स्वप्रहाराय पूर्णमाकृष्टं चापं धनुर्येन तस्मिन् मदने क्रोधानलेन उद्दीपितम्। अतएव समाधिसमये योगकाले भिन्नरसं विभिन्नप्रकाररसत्रयव्यञ्जकं शम्भोर्नेत्रत्रयं वो युष्मान् पातु रक्षतु ।

(फ) अत्रेति। प्रथमे पादे शान्तः, द्वितीये शृङ्गारः, तृतीये च रौद्रो रसः। तथा चात्र शम्भुविषयको रतिभावः प्रधानम्, शान्तादयो रसास्तु तदङ्गतां प्राप्ता इति "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्" इति पूर्वमीमांसासूत्रन्यायेन तेषामङ्गभूतरसानां सम्भाव्यमानः परस्परविरोधः परस्परसम्बन्धाभावादसम्पन्न इति न दोष इत्याशयः ।

(ब) परम्परया अङ्गत्वं प्राप्तयोरपि रसयोर्न विरोध इति दर्शयितुमाह यथा वेति ।

(भ) क्षिप्त इति। अमरुशतकस्य श्लोकोऽयम्। साश्रूणि एकत्र शोकादन्यत्र ईर्ष्यामानात् सजलानि नेत्रोत्पलानि यासां ताभिः त्रिपुरयुवतिभिः, यः शाम्भवः शराग्निः आर्द्रापराधः सद्यः कृतापराधः कामी पतिरिव, हस्तावलग्नः दाहार्थं मानभञ्जनार्थं च हस्तेषु संसक्तः सन्नेव क्षिप्तो दूरमपसारितः, प्रसभमभिहतोऽपि बलेन निराकृतोऽपि अंशुकान्तं वसनप्रान्तम् आददानो गृह्णन्, दाहार्थं चुम्बनार्थं च केशेषु गृह्णन् सन्नेव अपास्तस्त्यक्तः, चरणनिपतितः सन्नपि सम्भ्रमेण त्वरया स्वगौरवेण च न ईक्षितो न दृष्टः, आलिङ्गन् सर्वाङ्गं व्याप्नुवन् आश्लिष्यंश्च सन्नेव अवधूतः दूरापसरणेन परित्यक्तः; स शम्भोरयं शाम्भवः शराग्निः, वो युष्माकं दुरितं पापं दहतु नाशयतु ।

(म) अविरोधमुपपादयितुमाह अत्रेति। भगवद्विषया शम्भुगोचरा, रतिरनुरागः प्रधानम्, तस्या एव-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भगवदुत्साहपरिपुष्टतद्विषयरतिभावास्वादप्रकर्षकतया यौगपद्यसद्भावादङ्गत्वेन न विरोधः (य) ।

ननु समूहालम्बनात्मकपूर्णघनानन्दस्वरूपस्य रसस्य तादृशेनेतररसेन कथं विरोधः सम्भावनीयः ? एकवाक्ये निविशप्रादुर्भावयौगपद्यविरहेण परस्परोपमर्दकत्वानुपपत्तेः (र)। नाप्यङ्गाङ्गिभावः ; द्वयोरपि पूर्णतया स्वातन्त्र्येण विश्रान्तेः (ल)। सत्यमुक्तम् । अतएवात्र प्रधानेतरेषु रसेषु

---

विश्रामधामत्वादिति भावः। परिपोषकतया अवस्थितस्येति शेषः, उत्साहस्येत्यन्वयः। अपरिपुष्टतया विभावादिभिरजातपरिपुष्टिकतया । अयन्तु रसपदवीमप्राप्ततां प्रति हेतुः। रसपदवीं वीररसत्वम् । अप्राप्ततयेति च भावमात्रत्वं प्रति हेतुः। भावमात्रस्य केवलभावरूपेण विद्यमानस्य उत्साहस्येति पूर्वेणान्वयः ; "उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते" इति नियमादिति भावः। तस्य च करुणस्य सम्बन्धे। साम्यबलात् कामिसादृश्यप्रभावात्, आयातौ बुद्धावुपस्थितः।

(य) एवञ्चेति। साम्यबलात् शृङ्गारस्य आयातत्वे चेत्यर्थः। अविश्रान्तिधामतया आकाङ्क्षया अनिवृत्तेः स्थानतया। करुणस्य अङ्गिनः सम्बन्धे शृङ्गारस्य अङ्गत्वेनेत्यर्थः शृङ्गारस्य करुणोपजीवित्वादिति भावः। भगवतः शम्भोरुत्साहेन परिपुष्टो यस्तद्विषयरतिभावः कवेः शम्भुविषयकानुरागाख्यो भावः स एव आस्वादो रसप्रायस्तस्य प्रकर्षकतया पुष्टिजनकत्वेनोत्कर्षजनकतया, यौगपद्यसम्भवात् युगपदेवावस्थानसम्भवात् । तथा चात्र कवेः शम्भुविषया रतिः प्रधानम्, शम्भोरुत्साहस्तु तदङ्गम्, करुणश्च तस्याप्युत्साहस्याङ्गम्, शृङ्गारश्च पुनः तस्यापि करुणस्याङ्गमिति परम्परया अङ्गत्वप्राप्तयोरपि परस्परविरोधिनोः करुणशृङ्गारयोरङ्गत्वादेव न विरोध इति सरलार्थः।

(र) रसानां परस्परविरोधस्यैवासम्भवेन तद्दोषत्वस्याप्यसम्भवात् तत्प्रतिप्रसवोऽपि निरर्थक एवेत्याशङ्कते नन्विति। समूहालम्बनं युगपद्विभावादिबहुविषयकज्ञानमेव आत्मा स्वरूपं यस्य स चासौ पूर्णः अखण्डः आनन्दान्तरेणासम्मिश्रः घनो निविडश्च आनन्दः स्वरूपं यस्य स चेति तस्य। तादृशेन समूहालम्बनात्मकपूर्णघनानन्दस्वरूपेण। निविशप्रादुर्भावयोरवस्थानोत्पत्त्योः, यौगपद्यविरहेण एककालीनत्वाभावेन, परस्परोपमर्दकत्वानुपपत्तेः अन्योन्यपरिपुष्टप्रतिबन्धकत्वासङ्गतेः। तथा च विरोधो नाम परस्परबाध्यबाधकत्वम्, तच्च एकस्मिन्नेव काले एकस्मिन्नेव च स्थाने अवस्थितानामुत्पन्नानां वा सम्भवति। तेन रसानां ज्ञानानन्दरूपत्वात् क्षणिकतया "अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते" इति सिद्धान्तेन च एकस्मिन्नेव वाक्ये युगपदवस्थानोत्पत्त्योरसम्भवेन निरुक्तविरोधासम्भव इत्याशयः।

(ल) रसानां परस्पराङ्गाङ्गिभावानुपपत्त्या तेन तद्विरोधदोषप्रतिप्रसवस्याप्यनुपपत्तिरित्याशङ्कते नापीति। अङ्गाङ्गिभावो रसानामिति शेषः। द्वयोरपि रसयोः। द्विशब्दोऽत्रानेकोपलक्षणम्। पूर्णतया अखण्डतया, स्वातन्त्र्येण स्वस्वप्रधानभावेन, विश्रान्तेरवस्थितेः। तथा च प्रधानमङ्गि अप्रधानञ्चाङ्गम्। तेन प्रधानाप्रधानयोरेव परस्परोपकार्योपकारकभावे अङ्गाङ्गिभावः सम्पद्यते। अत्र तु उभयोरेव प्रधानत्वात् कथमङ्गाङ्गिभावः, कथं वा तेन तद्विरोधसमाधानमित्यभिप्रायः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वातन्त्र्यविश्रामराहित्यात् पूर्णरसभावमात्राच्च विलक्षणतया सञ्चारिरसनाम्ना व्यपदेशः प्राच्यानाम् (व)। अस्मत्पितामहानुज-कविपण्डित-मुख्य-श्रीचण्डीदासपादानान्तु खण्डरसनाम्ना (श)। यदाहुः—

"अङ्गं बाध्योऽथ संसर्गी यद्यङ्गी स्याद्रसान्तरे ।
नास्वाद्यते समग्रं तत्ततः खण्डरसः स्मृतः ॥" इति (ष)।

ननु "आद्यः करुण-बीभत्स-रौद्र-वीर-भयानकैः" इत्युक्तनयेन विरोधिनोर्वीरशृङ्गारयोः कथमेकत्र—(स)

"कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरस्फारोड्डमरपुलकं वक्त्रकमलम् ।

---

(व) उक्तानुपपत्तिमङ्गीकृत्य समाधत्ते सत्यमिति। अतएव उक्तरूपानुपपत्तेरेव, अत ईदृशे अनेकरसानामेकत्रावस्थितिस्थले। इदमत्रावधेयम्—वाक्यार्थाकाङ्क्षानिवृत्तिपर्य्यन्तस्थायी रसः प्रधानः, तत्पूर्वमेव विरतश्चाप्रधान इति। स्वातन्त्र्यविश्रामराहित्यात् स्वस्य प्रधानभावेनावस्थानाभावात्। अयन्तु विलक्षणतां प्रति हेतुः। पूर्णरसभावमात्रात् केवलपूर्णरसत्वमपेक्ष्य विलक्षणतया विभिन्नरूपतया। अङ्गरसेषु केवलपूर्णत्वांश एव वैलक्षण्यम्, न पुनः समूहालम्बनत्वघनानन्दत्वांशयोरपीति सूचयितुमत्र मात्रपदमुपात्तमिति बोध्यम्। व्यपदेशो नाम, प्राच्यानां प्राचीनानाम्। अत्रायमभिप्रायः—प्राच्यानां यथा व्यभिचारिभाव उन्मग्नः सन् स्थायिभावमुपकृत्य निर्मग्नो भवतीति स्थायिन उपकाराय सञ्चरणात् सञ्चारिभाव इति व्यपदिश्यते, तथा अङ्गरसोऽपि उत्पन्नः सन् प्रधानरसमुपकृत्य तत्पूर्वमेव विरतो भवतीति प्रधानरसस्योपकाराय सञ्चरणात् सञ्चारिरस इति व्यपदिश्यते।

(श) अस्मादिति। खण्डरसनाम्ना प्रधानेतरेषु रसेषु व्यपदेश इति पूर्वेणान्वयः।

(ष) अङ्गमिति। अङ्गी अन्यत्र प्रधानोऽपि रसः, रसान्तरे अन्यत्र अन्यस्मिन् रसे यदि अङ्गमुपकारितया अप्रधानं स्यात्, अथवा, बाध्यो विरोध्योऽपि केवलस्मृतिविषयतया अवस्थितः स्यात्, अथवा संसर्गी अविरोधितया अनुपकारितया च सम्मिलितः स्यात्; तदा स समग्रं पूर्णं यथा स्यात्तथा न आस्वाद्यते न अनुभूयते; ततः कारणात् स खण्डरसः स्मृतः। समग्रास्वादाभावेनाखण्डत्वाभावात् खण्डत्वमेवेति खण्डरस इति व्यपदेश एव युक्त इत्याशयः। तत्र अङ्गं यथा—"एकं ध्याननिमीलनात्" इत्यादौ शान्तरसादिकं देवविषयरतेरङ्गम्। "अयं स रसनोत्कर्षी" इत्यादौ शृङ्गारः करुणस्य बाध्यः। "कपोले जानक्याः" इत्यादौ शृङ्गारो वीरस्य संसर्गी। त एते शान्तादयः प्राचीनमते सञ्चारिरसाः, चण्डीदासमते तु खण्डरसा इति बोध्यम्।

(स) अथ "विरोधिनोऽपि स्मरणे" इत्यादिना केवलस्मरणादिस्थलवितये विरोधसमाधानं नोपपद्यते, तदधिकस्याप्यावश्यकत्वादित्याशङ्कते नन्विति। एकत्र "इत्यादौ समावेश" इति परेणान्वयः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुहुः पश्यन् शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढ़यति रघूणां परिवृढ़ः ॥" (ङ)

इत्यादौ समावेशः ? । अत्रोच्यते—इह खलु रसानां विरोधितायाः अविरोधितायाश्च त्रिधा व्यवस्था । कयोश्चिदालम्बनैक्येन, कयोश्चिदाश्रयैक्येन, कयोश्चिन्नैरन्तर्य्येण इति (च) । तत्र वीरशृङ्गारयोरालम्बनैक्येन विरोधः, (क) तथा हास्य-रौद्र-बीभत्सैः सम्भोगस्य, (ख) वीर-करुण-रौद्रादिभिर्विप्रलम्भस्य (ग) । आलम्बनैक्येन आश्रयैक्येन च वीरभयानकयोः, (घ) नैरन्तर्य्यविभावैक्याभ्यां शान्तशृङ्गारयोः (ङ) । त्रिधाऽपि अविरोधः—वीरस्याद्भुतरौद्राभ्याम्, शृङ्गारस्याद्भुतेन, भयानकस्य बीभत्सेनेति (च) ।

---

(ङ) कपोल इति । रघूणां परिवृढ़ा राघवश्रेष्ठो रामः, करिकलभस्य हस्तिशावकस्य दन्तद्युतिं दशनकान्तिं मुष्णाति अपहरतीति तस्मिन् अत्यन्तनिर्मले इत्यर्थः, कपोले कपोलावच्छेदे स्मरेण कामावेगेन स्मेरा विकसिताः स्फारोड्डमराः पीवरोच्चाः पुलका रोमाञ्चा यस्मिन् तत्तादृशम्, जानक्याः सीतायाः वक्त्रकमलं मुखपद्मं मुहुर्वारं वारं पश्यन्, इतश्च रजनिचरसेनायाः खरदूषणादिसैन्यस्य कलकलं कोलाहलम्, शृण्वन् सन् जटानां जूटस्य समूहस्य ग्रन्थिं द्रढ़यति युद्धोद्द्योगाय दृढ़भावेन बध्नाति ।

अत्र शृङ्गारे सीता आलम्बनविभावः, तस्यास्तादृशः कपोल उद्दीपनविभावः, वक्त्रकमलदर्शनमनुभावः रतिश्च स्थायी भावः । वीरे तु रजनिचरसेना आलम्बनविभावः, तदीयकोलाहल उद्दीपनविभावः । जटाजूटग्रन्थिदृढ़ीकरणमनुभावः । उत्साहश्च स्थायी भाव इति बोध्यम् ।

(च) इदानीं समाधानमाह अत्रेति । उच्यते सिद्धान्त इति शेषः । व्यवस्था नियमः । आश्रयैक्येन नायकैक्येन । नैरन्तर्य्येण नैकट्येन ।

(क) तत्रेति । तेष्वपि विरोधिरसेषु मध्ये इत्यर्थः । वीरशृङ्गारयोरिति एकस्मिन्नालम्बने युगपदुत्साहरत्योरसम्भवादिति भावः ।

(ख) तथेति । सम्भोगस्य सम्भोगशृङ्गारस्य । तथा आलम्बनैक्येन विरोध इत्यर्थः । सम्भोगकाले हासक्रोधजुगुप्सानामनुदयादित्याशयः । विप्रलम्भकाले तु हासः सम्भवतीति सम्भोगस्येत्युक्तम् ।

(ग) वीरेति । आदिपदाद्भयानकबीभत्सयोर्ग्रहणम् । विप्रलम्भस्य शृङ्गारस्य आलम्बनैक्येन विरोध इत्यनुषङ्गः । एकस्मिन्नेवालम्बने अनुरागकाले उत्साहशोकक्रोधभयजुगुप्सानामुत्पत्त्यभावादित्यभिप्रायः ।

(घ) आलेति । एकस्मिन्नेव काले एकं प्रति एकस्य उत्साहभययोरनुदयादिति भावः ।

(ङ) नैरेति । नैरन्तर्य्यविभावैक्याभ्यां नैकट्येन आलम्बनैक्येन चेत्यर्थः । शमरत्योरव्यवधाने एकस्मिन्नेव आलम्बने उत्पत्त्योरसम्भवादित्यभिप्रायः । अत्र आश्रयैक्येनापि शान्तशृङ्गारयोर्विरोध इति बोध्यम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तेनात्र वीरशृङ्गारयोर्भिन्नालम्बनत्वान्न विरोधः (छ)।

एवञ्च वीरस्य नायकनिष्ठत्वेन भयानकस्य प्रतिनायकनिष्ठत्वेन निबन्धे भिन्नाश्रयत्वे न विरोधः (ज)। यच्च नागानन्दे प्रशमाश्रयस्यापि जीमूतवाहनस्य मलयवत्यनुरागो दर्शितः, तत्र "अहो गीतम् ? अहो वादितम् ?" इत्यद्भुतस्यान्तरा निवेशनान्नैरन्तर्याभावान्न शान्तशृङ्गारयोर्विरोधः (झ)। एवमन्यदपि विज्ञेयम् (ञ)।

"पाण्डु क्षामं वदनम्" इत्यादौ च (१७९ पृष्ठे) पाण्डुतादीनामङ्गभावः करुणविप्रलम्भेऽपीति न विरोधः (ट)।

---

(च) विधापीति। आलम्बनैक्येन आश्रयैक्येन नैरन्तर्येण चेत्यर्थः। वीरस्याद्भुतरौद्राभ्यामविरोध एवञ्च समावेशसम्भवः, एकस्मिन्नेव जने एकस्यैव जनस्य क्रमश उत्साहविस्मयक्रोधानां सम्भवादित्याशयः। शृङ्गारस्य अद्भुतेन सहाविरोधः, एकस्यामेव नायिकायाम् एकस्यैव नायकस्य युगपदेवानुराग रूपादिजनितरतिविस्मययोरुत्पत्तिदर्शनादित्यभिप्रायः। भयानकस्य बीभत्सेन सहाविरोधः, एकस्मिन्नेव पिशाचादौ एकस्यैव एकदैव च भयजुगुप्सयोरुदयादिति भावः।

(छ) तेनेति। उक्तव्यवस्थानां युक्तियुक्तत्वेनेत्यर्थः। अत्र "कपोले जानक्याः" इत्याद्युदाहृतपद्ये। भिन्नालम्बनत्वादिति। तथा च वीरे उत्साहस्यालम्बनं रजनिचरसेना शृङ्गारे; रतेरालम्बनञ्च सीतेति भिन्नालम्बनद्वये उत्साहरत्योः क्रमेणोत्पत्तौ बाधाभावादिति भावः।

(ज) आश्रयैक्येन वीरभयानकयोर्विरोध इत्युक्तम्, इदानीमाश्रयभेदेन तु तयोर्न विरोध इति दर्शयितुमाह एवञ्चेति। आश्रयैक्ये नैव वीरभयानकयोर्विरोधस्य युक्तत्वे चेत्यर्थः। वीरस्य वीररसघटकोत्साहस्य। भयानकस्य भयानकरसघटकभयस्य। भिन्नाश्रयत्वे सतीत्यर्थः। एतेनान्यत्रापि एवंविधविषये न विरोध इति सूचितम्।

(झ) ननु शान्तशृङ्गारयोर्विरोधे सति नागानन्दनाटके एकस्यैव नायकस्य जीमूतवाहनस्य शान्तशृङ्गारौ कथमुपपद्येते इत्याह यच्चेति। प्रशमाश्रयस्यापि शान्तरसघटकशमगुणवतोऽपि। अद्भुतस्य अद्भुतरसस्य, अन्तरा शान्तशृङ्गारयोर्मध्ये। ध्वनिकारोऽप्येवमेवाह स्म। यथा—

"एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान्। रसान्तरव्यवधिना रसो व्यङ्ग्यः सुमेधसा ॥"

(ञ) एवमिति। अन्यदपि अविरोधित्वम्। यथा—शृङ्गारस्य नायकनिष्ठत्वे वीरस्य च प्रतिनायकनिष्ठत्वे न विरोध इत्यादि।

(ट) ननु "पाण्डु क्षामम्" इत्यादौ करुणरसानुभावरूपाणां कथं शृङ्गारेऽप्यनुभावरूपेण प्रवेशः, अङ्गिनोः करुणशृङ्गारयोर्विरोधेन तदङ्गानामपि विरोधौचित्यादित्याह पाण्ड्विति। अङ्गभावोऽङ्गत्वम्। न केवलं करुणे, करुणविप्रलम्भेऽपीत्यर्थः। एतेन विरोधिरसयोः साधारणाङ्गानां समावेशे न विरोधः, किन्तु असाधारणाङ्गानां समावेश एव विरोध इति सूचितम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

३१ । अनुकारे च सर्वेषां दोषाणां नैव दोषता ॥ (ठ)

सर्वेषां दुःश्रवत्वप्रभृतीनाम् । यथा—

"एष दुश्च्यवनं नौमीत्यादि जल्पति कश्चन ।" (ड)

अत्र दुश्च्यवनशब्दोऽप्रयुक्तः (ढ) ।

३२ । अन्येषामपि दोषाणामित्यौचित्यान्मनीषिभिः ।

अदोषता च गुणता ज्ञेया चानुभयात्मता ॥ (ण)

(ठ) अन्विति । अनुकारे अनुकरणे केनचिदुक्तस्य शब्दस्य अविकलमेव पुनरुक्तावित्यर्थः, सर्वेषामेव दुःश्रवत्वादीनां दोषाणां नैव दोषता नापि गुणतेत्यपि बोध्यम्, अत्र रसादीनामसम्भवेन तदपकर्षकत्वोत्कर्षकत्वयोरुभयोरेवासम्भवादित्याशयः । एवञ्च अनुकरणशब्दादावदोषत्वम्, अनुकार्य्यशब्दादौ तु नित्यदोषानित्यदोषत्वव्यवस्थै त्यवधेयम् ।

(ड) एष इति । "शिवं शेविति कश्चिच्च ब्रवीत्येव पुनः पुनः ॥" इति मत्पूरितपरार्द्धम् ।

(ढ) अत्रेति । दुश्च्यवनशब्द इन्द्रार्थे कोषादौ प्रसिद्धोऽपि कविभिरनादृतत्वादप्रयुक्त इति सम्भाव्यमानोऽप्यप्रयुक्ततादोषः, अत्रानुकरणप्रवृत्तित्वाददोष एवेति भावः । एवं शिवधातोरात्मनेपदित्वात् "शिवं शेव" इत्यत्रानुकार्य्यस्थले जातोऽपि च्युतसंस्कारतादोषः पूरितप्रकारे अनुकरणप्रवृत्तित्वाददोष एवेति बोध्यम् ।

एवम्—"चणं विश्रम्यतां जाल्म ! स्कन्धस्ते यदि बाधति ।

न तथा बाधते स्कन्धो यथा बाधति बाधते ॥"

अत्र बाधधातोरात्मनेपदित्वेऽपि बाधतीति परस्मैपदप्रयोगादनुकार्य्यगतत्वाच्च पूर्वार्द्धे च्युतसंस्कारतादोष एव । उत्तरार्द्धे तु बाधतीति प्रयोगस्य पूर्वार्द्धोक्तबाधतीति स्वरूपाविर्भावकतया अनुकरणजातीयत्वान्न दोषः ।

यत्त "शब्दस्यानुकरणे च्युतसंस्कारस्यादोषत्वं यथा—"पश्यैष च गवित्याह सुत्रामाणं यजेति च ।" अत्र प्रथमे पादे गोशब्दस्य निर्विभक्तिकतया च्युतसंस्कारत्वम्" इति रामचरणः । अहो ! महानेवायं व्याकरणविभ्रमस्तर्कवागीशस्य । तथा च 'गवित्याह' इत्यादौ विभक्त्यर्थ एव इतिशब्दप्रयोगादुक्तार्थतया न पुनर्विभक्तिः ; इदमेवोदाहृतमपि च कातन्त्रपरिशिष्टे श्रीपतिना—"सम्बुद्धौदिति किं गवित्ययमाह ।" तदीयटीकाकृता गोपीनाथेनापि अस्मदुक्तानुरूपमेव सिद्धान्तितम् । प्रयोगाश्चैवं भामतीकारादीनां सहस्रश एव परिलक्ष्यन्ते—'स्वाभाविकेति' 'शिवेति' इत्यादयः । अतः कथम् 'गवित्याह' इत्यत्र निर्विभक्तिकतया च्युतसंस्कारतादोषप्रसङ्ग इति सुधीभिर्विभावनीयम् ।

(ण) अन्येषामिति । इति एवम्, औचित्यादौचित्यानुसारात् युक्त्यनुसारादित्यर्थः, मनीषिभिः अन्येषामपि दोषाणां दोषतया प्रागभिहितानाम्, अदोषता क्वचित् प्रसक्तदोषत्वपरीत्यैव गुणता, क्वचित् स्वभावत एव गुणता, क्वचिच्च अनुभयात्मता दोषत्वगुणत्वोभयशून्यरूपता स्वमतेत्यर्थः ज्ञेया, सर्वत्रैव युक्तिवशादेव दोषगुणादीनां व्यवस्थितेरिति भावः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनुभयात्मता अदोषगुणात्मता (१) (त) ।

इति साहित्यदर्पणे दोषनिरूपणो नाम

सप्तमः परिच्छेदः ॥०॥

---

तत्र प्रसक्तदोषत्वं परीत्येन गुणता यथा मम—

"रावणे द्रुतमाक्रान्ते देवविद्रावणे रणे । स्वचक्रं च गतेऽधावत् शूलमादाय माधवः ॥"

अत्र चक्रपाणेः शूलग्रहणस्य अप्रसिद्धत्वेन प्रसक्तोऽपि ख्यातिविरुद्धतादोषस्तत्समरस्य सङ्कुलतादिद्योतनेन प्रत्युत गुण एव ।

स्वभावत एव दोषस्य गुणता यथा शिशुपालवधे—

"व्रजतः क्व तात ! वजसीति परिचयगतार्थमस्फुटम् ।

धैर्य्यमभिनदुदितं शिशुना जननीनिभर्त्सनविवृद्धमन्युना ॥"

अत्र "वज व्रज गतौ" इति वजधातोरपि गमनार्थे पाठादप्रसक्त एव अवाचकत्वदोषः; किन्तु व्रजसीति सरेफोच्चारणासमर्थेन शिशुना तत्स्थल एव 'वजसि' इत्युच्चारितत्वात् सम्भाव्यमानोऽवाचकत्वदोषः शिशोरस्फुटवाक्यतासूचनेन चमत्कारिताविशेषजननात् स्वभावत एव गुणः ।

अनुभयात्मता यथा मम—"एकादश्यां द्विजो भुङ्क्ते भक्ष्यकीटवनाकुले ।"

अत्र "एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि" इति स्मृतिशास्त्रविरोधेन प्रसक्तस्य विद्याविरुद्धतादोषस्य भक्ष्यकीटरोगे भोजनाभावे जीवननाशसम्भवाददोषता, कथमप्युत्कर्षाजननाच्च अगुणता । इत्यमन्यत्राप्यनुसन्धेयम् ।

(त) उभयशब्दाभिधेयं स्पष्टयितुं व्याचष्टे अन्विति ।

इति महामहोपाध्याय-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां साहित्यदर्पण-टीकायां कुसुमप्रतिमायां सप्तमः परिच्छेदः ॥०॥

---

(१) अनुभयता अदोषगुणता इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# अष्टमः परिच्छेदः ।

—:०:—

गुणानाह—(क)

१ । रसस्याङ्गित्वमाप्तस्य धर्म्माः शौर्य्यादयो यथा ।

गुणाः—(ख)

यथा खल्वङ्गित्वमाप्तस्यात्मन उत्कर्षहेतुत्वात् शौर्य्यादयो गुणशब्दवाच्याः, तथा काव्ये अङ्गित्वमाप्तस्य रसस्य धर्म्माः स्वरूपविशेषा माधुर्य्यादयोऽपि स्वसमर्पकपदसन्दर्भस्य काव्यव्यपदेशस्यौपयिकानुगुण्यभाज इत्यर्थः (ग)। यथा चैषां रसमात्रस्य धर्म्मत्वं तथा दर्शितमेव (घ)।

---

(क) "उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः" इत्युद्देशक्रमेण के नाम गुणा इत्याकाङ्क्षायां प्रसङ्गसङ्गत्यैव गुणानाहेत्यर्थः। सामान्यतो गुणान् लक्षयतीति तात्पर्य्यम्।

(ख) रसस्येति। यथा अङ्गित्वमाप्तस्य शरीरित्वं प्राप्तस्य आत्मनः शौर्य्यम् आदिशब्दादौदार्य्यदयादयो गुणाः तथा अङ्गित्वमाप्तस्य शब्दार्थादिसमुदायमध्ये प्राधान्यं प्राप्तस्य रसस्य धर्म्मा गुणा उच्यन्ते इत्यर्थः। अत्रापि रस्यत इति व्युत्पत्त्या रसपदेन भावादयोऽपि गृह्यन्त इति बोध्यम्। तथा च स्थिरत्वे सति रसादीनां साक्षादुत्कर्षजनकधर्म्मत्वं गुणत्वमिति लक्षणम्। अत्र स्थिरत्वे सतीत्यभिधानादस्थिरेषु रसवदाद्यलङ्कारेषु, साक्षादित्यभिधानात् परम्परयोत्कर्षजनिकासु रीतिषु, तदुभयाभिधानाच्च शब्दार्थालङ्कारेषु नातिव्याप्तिः। रसादीनामुत्कर्षजनकत्वाभावाच्च रसत्वादौ नातिप्रसङ्गः। एतेन गुणानां रसधर्म्मत्वमपि प्रतिपादितम्।

(ग) यथेति। अङ्गिशब्दश्च पादङ्गित्वमिति उपमाने उपमेये च योजयति अङ्गित्वमाप्तस्यात्मन इति, अङ्गित्वमाप्तस्य रसस्येति च। स्वं रसं समर्पयन्ति व्यञ्जन्तीति स्वसमर्पकाणि यानि पदानि तेषां सन्दर्भस्य समूहस्य रसव्यञ्जकवाक्यस्येत्यर्थः यः काव्यव्यपदेशस्तस्य औपयिकमुपायभूतमुपयोगीति यावत् यदानुगुण्यमनुकूलता तद्भजन्तीति ते रसव्यञ्जकवाक्यस्य काव्यसंज्ञाया प्रयोजका इति साकल्येन सरलार्थः। एतत्तु काव्यप्रकाशकारमत एवाभिहितम्; तन्मते "तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" इति काव्यलक्षणेन गुणानामपि काव्यत्वप्रयोजकतया काव्यसंज्ञाया अपि प्रयोजकत्वात्। स्वमते तु "वाक्यं रसात्मकं काव्यम्" इति लक्षणात् रसादीनामेव काव्यत्वप्रयोजकतया गुणानां तदप्रयोजकत्वात् काव्यसंज्ञाया अप्यप्रयोजकत्वमेवेति बोध्यम्।

(घ) ननु वामनादिभिर्गुणानां शब्दार्थधर्म्मत्वस्योक्तत्वात् भवदुक्तं केवलरसधर्म्मत्वं कथमुपपद्यत

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२ । माधुर्य्यमोजोऽथ प्रसाद इति ते त्रिधा ॥ (ङ)

ते गुणाः । तत्र—

३ । चित्तद्रवीभावमयो ह्लादो माधुर्य्यमुच्यते । (च)

यत्तु केनचिदुक्तम्—"माधुर्य्यं द्रुतिकारणम्" इति, तन्न, द्रवीभावस्य आस्वादस्वरूपाह्लादाभिन्नत्वेन तत्कार्य्यत्वाभावात् (छ) ।

द्रवीभावश्च स्वाभाविकानाविष्टत्वात्मक-काठिन्य-मन्यु-क्रोधादिकृत-दीप्तत्व-विस्मय-हासाद्युपहितविक्षेपपरित्यागेन रत्याद्याकारानुविद्धानन्दोद्बोधेन सहृदयचित्तार्द्रप्रायत्वम् (ज) ।

---

इत्याह यथा चेति । एषां गुणानाम् । दर्शितमेव, प्रथमपरिच्छेदे काव्यप्रकाशकृतः काव्यलक्षणदूषणप्रकरण इत्यर्थः । परमपि यथाकथञ्चिद्दर्शयिष्यते च ।

(ङ) माधुर्य्यमिति । अत्र माधुर्य्यमित्यादिभिस्त्रिभिः शब्दैर्गणनादेव त्रिविधत्वे प्राप्ते पुनस्त्रिधेत्यभिधानं तदधिकसंख्याव्यवच्छेदार्थम् । यदुक्तं प्राचीनैः—

"श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥"

(च) तत्र माधुर्य्यं लक्षयति चित्तेति । चित्तस्य द्रवीभावमयो गलितप्रायत्वरूपः, ह्लाद आनन्दविशेषो माधुर्य्यं नाम गुण उच्यते ; मधुरस्य रसस्य भाव इति व्युत्पत्तेः । तथा च रसोऽप्यानन्दविशेष एव, अस्य तु तदंशरूपत्वात्तद्धर्म्मत्वसिद्धिरिति बोध्यम् ।

(छ) ननु चित्तेत्यादिना चित्तद्रवीभाव एव माधुर्य्यमिति भवतोक्तम्, काव्यप्रकाशकृता तु "आह्लादकत्वं माधुर्य्यं शृङ्गारे द्रुतिकारणम्" इत्यनेन चित्तद्रवीभावकारणमेव माधुर्य्यमभिहितमिति परस्परविरोध इत्यतस्तां काव्यप्रकाशोक्तिं दूषयितुमाह यत्त्विति । केनचित् काव्यप्रकाशकृता । द्रुतिकारणं चित्तस्य द्रवीभावजनकम् । द्रुतिद्रवीभावशब्दयोरभिन्नार्थत्वादाह द्रवीभावस्येति । आस्वादस्वरूपो रसादिरूपो य आह्लादस्तस्य अभिन्नत्वेन एकत्वेन तत्कार्य्यत्वाभावात् माधुर्य्यजन्यत्वाभावात् । अत्रायमाशयः—चित्तस्य द्रवीभावाह्लादयोर्भेदस्याननुभवादभेद एव वाच्यः आह्लादकत्वञ्चाह्लाद एव माधुर्य्यस्य तत्स्वरूपतयैव लक्षितमिति सर्व्वेषामेवाभेदात् कथं माधुर्य्यं द्रुतिकारणं भवितुमर्हति, कार्य्यकारणयोर्भेदस्यावश्यकत्वादित्यतो युक्तमेवोक्तम्—"चित्तद्रवीभावमयः" इति ।

(ज) ननु द्रवीभावस्य आस्वादस्वरूपाह्लादाभिन्नत्वे भवदुक्तरीत्यैव रसमाधुर्य्ययोरप्यभिन्नत्वमेव न पुनर्माधुर्य्यस्य रसधर्म्मत्वमित्याह द्रवीभावश्चेति । स्वाभाविकं सर्व्वेषामेव स्वभावसिद्धम् अनाविष्टत्वं तत्तत्काव्यश्रवणादावमनोयोगित्वमेव आत्मा स्वरूपं यत् स तथोक्तः । विक्षेपविशेषणमेतत् । काठिन्यं तत्तत्काव्यशब्दानां नितान्तदुर्बोधता, मन्युः शोको दैन्यं वा, क्रोधः कुतश्चित् सञ्जातपूर्व एव कोपः, आदिपदात् भयग्रहणादयस्तैः [illegible] दीप्तत्वं [illegible] तेन, विस्मयेन [illegible] आश्चर्य्यं च,

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तच्च—(झ)

४। सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात् ॥ (ञ)

सम्भोगादिशब्दा उपलक्षणानि, तेन सम्भोगाभासादिष्वप्येतस्य स्थितिर्ज्ञेया (१) (ट)।

५। मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्ट-ठ-ड-ढान् विना।
र-णौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः।
अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा ॥ (ठ)

यथा—"अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्गयः।
जनयन्ति मुहुर्यूनामन्तः सन्तापसन्ततिम् ॥" (ड)

---

हासेन, आदिशब्दात् आवेगादिना च उपहित उपस्थापितो जनितो यो विक्षेपो विषयान्तरासक्तत्वं तस्य परित्यागेन, रतेरनुरागस्य आदिशब्दात् शोकशमयोश्च आकारैः स्वरूपैः अनुविद्धः सम्मिलितो य आनन्दस्तस्य उद्बोधेन आविर्भावेन, सहृदयानां चित्तस्य आर्द्रप्रायत्वं प्रायेण गलितरूपत्वम्। एवञ्च माधुर्यात्मकताद्दृशद्रवीभावस्य रस एव जनक इति माधुर्यस्य रसधर्मत्वं सिद्धमेवेति भावः।

(झ) तच्चेति। तन्माधुर्यञ्चेत्यर्थः।

(ञ) सम्भोग इति। तच्च माधुर्यं सम्भोगादौ क्रमादधिकम्। तथा च हास्यवत्सलरसापेक्षया सम्भोगे शृङ्गारे अधिकम्, सम्भोगादपि करुणे रसे अधिकम्, करुणादपि विप्रलम्भे शृङ्गारे अधिकम्, विप्रलम्भादपि शान्ते रसे अधिकमित्यर्थः।

(ट) सम्भोगेति। सम्भोगादौ माधुर्यगुणः तत्समानप्राये तदाभासादौ किं न स्यादित्याकाङ्क्षायाम् उपलक्षणबीजमिति बोध्यम्। एतस्य माधुर्यगुणस्य।

(ठ) माधुर्यगुणव्यञ्जकानाह मूर्ध्नीति। मूर्ध्नि, मस्तके उपरिभागे इत्यर्थः, वर्गाणामन्त्यवर्णेन ङ-ञ-ण-न-म-रूपशेषाक्षरेण युक्ता मिलिताः, ट-ठ-ड-ढान् विना अपरे ककारादयो मकारान्ता वर्णाः, अङ्क-शङ्क-सङ्ग-सन्न इत्यादिरूपाः शब्दा इत्यर्थः, तथा लघू लघुप्रयत्नेनोच्चार्यौ वर्णान्तरेणासंयुक्तावित्यर्थः, र-णौ रेफ-मूर्धन्य-णकारौ च, तस्य माधुर्यगुणस्य व्यक्तौ व्यञ्जने प्रकाशे कारणतां गताः, उक्तविधा एव वर्णा माधुर्यगुणव्यञ्जका इत्यर्थः। अवृत्तिः सर्वथा समासरहिता, वा अथवा अल्पवृत्तिरल्पसमासविशिष्टा, मधुरा सुकोमलपदघटितत्वेन सुश्रव्या, रचना शब्दविन्यासश्च, तथा तद्व्यक्तौ कारणतां गता माधुर्यगुणव्यञ्जिका इत्यर्थः।

(ड) वर्गान्त्यवर्णसंयुक्तवर्णानां माधुर्यव्यञ्जकतामुदाहरति अनङ्गेति। अनङ्गस्य मदनस्य मङ्गलभुवो माङ्गलिकावासभूताः, तस्या नायिकाया अपाङ्गस्य नेत्रप्रान्तस्य भङ्गयो व्यापाराः, यूनामन्तरन्तःकरणे मुहुः सन्तापसन्ततिं कामोत्तापधारां जनयन्ति।

---

(१) अत्र यथा इति क्वचित् पाठः।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा वा मम—

> "लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्
> समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् ।
> मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्
> रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि ॥" (ढ)

## ६ । ओजश्चित्तस्य विस्तार-रूपं दीप्तत्वमुच्यते । वीर-बीभत्स-रौद्रेषु क्रमेणाधिक्यमस्य तु ॥ (ण)

अस्य ओजसः । अत्रापि वीरादिशब्दा उपलक्षणानि, तेन वीराभासादावप्यस्यावस्थितिः ।

---

अत्र प्रथमार्द्धे कवर्गान्तिमवर्णरूपरिस्थैर्ङकारैः सह संयुक्तास्तद्वर्गीयगकाराः, द्वितीयार्द्धे तवर्गान्तिमवर्णरूपरिस्थैर्नकारैः सह संयुक्तास्तद्वर्गीयतकाराश्च माधुर्य्यगुणं द्योतयन्ति । अल्पा चात्र वृत्तिः ।

(ढ) अवृत्तावल्पवृत्तौ चैकवर्गेव उक्तविधवर्गान्तरवर्णानां माधुर्य्यव्यञ्जकतामुदाहरति लतेति । गुञ्जन् रुवन् मदवान् मदमत्तश्च अलिपुञ्जो भ्रमरसमूहो यत्र तं तादृशं लताकुञ्जं चपलयन् चपलीकुर्वन् सञ्चालयन्, अङ्गं विहारपरायणानां गात्रं समालिङ्गन् संस्पृशन्, अनङ्गं कामं द्रुततरमतिसत्वरं प्रबलयन् प्रबलीकुर्वन् वर्द्धयन्, दलितं प्रस्फुटितम् अरविन्दं पद्मं मन्दं मन्दं तरलयन् तरलीकुर्वन् शनैः शनैः सञ्चालयन्, तथा रजोवृन्दं पुष्पाणां परागसमूहं विन्दन् गृह्णन्, मरुत् वायुः, दिशि दिशि, मकरन्दं पुष्पमधु, किरति विक्षिपति ।

अत्र प्रथमे पादे ञकारजकाराः, द्वितीये ङकारगकाराः, तृतीये नकारदकाराः, चतुर्थे च नकारदकारा माधुर्य्यगुणं व्यञ्जन्ति । प्रथमे चतुर्थे च पादे अल्पा वृत्तिः, द्वितीयतृतीययोस्तु पादयोरवृत्तिरेव ।

लघु-र-णयोरुदाहरणं यथा—"अनगुरणन्मणिमेखलम्" इत्यादि ।

मधुरा रचना यथा—"चलन्नगङ्गल लङ्घारयं हयं स वाहवाहोचितवेशपेशलः ।
प्रमोदनिष्यन्दतराक्षिपक्ष्मभिर्व्यलोकि लोकैर्नगराङ्गनैर्जनैः ॥"

अत्र श्रुतिमात्रतोऽर्थबोधाभावान्न प्रसादगुण इति बोध्यम् ।

टवर्गान्तवर्णेन मूर्द्धि युक्ताष्ट-ठ-ड-ढास्तु माधुर्य्यं न व्यञ्जन्ति । यथा मम—

"षण्टने कुण्ठमध्यस्य ! पिण्डीमत्यांभयीर्वं तु । षण्डं सण्डोवमानेन किं पुनर्मिश्रितं त्वया ? ॥"

(ण) ओजोगुणं लक्षयति ओज इति । चित्तस्य विस्ताररूपं विस्फारितत्वस्वरूपम्, दीप्तत्वं जायमानविस्मयवशादुज्ज्वलत्वप्रायम् ओजो नाम गुण उच्यते । अस्य व्युत्पत्तिः स्पष्टा । एतेन "दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति" इति काव्यप्रकाशलक्षणं कटाक्षितम् । तथा च ओजश्चित्तविस्तृतिरूपदीप्तत्वाङ्गीकारेणैवोपपत्तौ तद्धेतुत्वरूपधर्मान्तरकल्पने गौरवमेवेति भावः । अस्य ओजोगुणस्य तु वीर-बीभत्स-रौद्रेषु क्रमेणाधिक्यम् । तथा च वीरापेक्षया बीभत्से, बीभत्सापेक्षया च रौद्रे रसे ओजसः प्राचुर्य्यमित्यर्थः ।

षण्डीदासस्तु हास्याद्भुतभयानकेष्वपि ओजसः स्थितिमाह स्म ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

७। वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ।
उपर्यधो द्वयोर्वा स-रेफः (१) ट-ठ-ड-ढैः सह॥
शकारश्च षकारश्च तस्य व्यञ्जकतां गताः।
तथा समासबहुला घटनौद्धत्यशालिनी॥ (त)

यथा—"चञ्चद्भुज—" इत्यादि (३२४ पृष्ठे) (थ)।

८। चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः।
स प्रसादः समस्तेषु रसेषु रचनासु च॥ (द)

---

(त) ओजोगुणव्यञ्जकवर्णादीन्निर्दिशति वर्गस्येति। यस्य कस्यचित् सजातीयस्य विजातीयस्य वा वर्गस्य आद्यतृतीयाभ्यां वर्णाभ्यां युक्तौ संयुक्तौ तदन्तिमौ द्वितीयचतुर्थौ वर्णौ तस्य व्यञ्जकतां गतौ। तथा च एकस्यैव वर्गस्य भिन्नस्य वर्गस्य वा प्रथमवर्णेन संयुक्तो द्वितीयो वर्णः, किंवा तृतीयवर्णेन संयुक्तश्चतुर्थो वर्ण ओजोगुणव्यञ्जक इत्यर्थः। यथा—द्राक् खनति, द्राग् घर्षति, द्राक् फलति, द्राग् धावति। उपरि सरेफो वर्णो यथा—दर्प इति। अधः सरेफो वर्णो यथा—दीप्र इति। द्वयोर्युगपदेव उपर्यधश्च सरेफो वर्णो वा। यथा—आर्द्र इति। इदन्तूपलक्षणम्। तथा च माधुर्यगुणव्यञ्जकभिन्नं संयुक्तवर्णसामान्यं विसर्गयुक्तो वर्णश्च ओजोगुणव्यञ्जक इति महान्तः। माधुर्यगुणे ट-ठ-ड-ढा निषिद्धाः, इह तु नेत्याह ट-ठ-ड-ढैः सहेति। तथा च ट-ठ-ड-ढाः संयुक्ता असंयुक्ता वा ओजोगुणव्यञ्जका इत्यर्थः। यथा—कुट्टाकः, विसंष्ठुलः, गड्डलिका, शण्ढः। विकटः, कमठः, डम्बरः, मूढः। वर्णान्तरेणासंयुक्तोऽपि तालव्यः शकारश्च मूर्द्धन्यः षकारश्च इमे तस्य ओजोगुणस्य व्यञ्जकतां गताः प्राप्ताः। यथा—"आस्वादितद्विरदशोणितशोणशोभाम्।" "कर्षति शीर्षमेषः।" तथा समासबहुला घटना असंयुक्तवर्णादिभिरपि दीर्घसमासयुक्ता रचना, तथा औद्धत्यशालिनी घटना दीर्घसमाससंयुक्तवर्णादीनामभावेऽपि विकटार्थबोधिनी रचना ओजोगुणव्यञ्जकतां गतेत्यर्थः। यथा—"अविरत-चलित-बाण-निवह-निपतित-वीर-देह-निचय-निचित-भूभागः।" "करिवार-निकराणां छेदभेदौ विधाय" इत्यादि।

(थ) चञ्चदिति। अत्र 'द्भु' इति 'द्ध' इति च तृतीयवर्णयुक्तश्चतुर्थो वर्णः, 'भ्रमित' इति अधः-सरेफो वर्णः, 'रड्ड' इति संयुक्तो डकारः, 'शो' 'शो' इति तालव्यशकारौ, अन्ये च संयुक्ता वर्णा ओजोगुणव्यञ्जका इति भावः।

(द) प्रसादगुणं लक्षयति चित्तमिति। अनलः शुष्केन्धनमिव यो गुणः क्षिप्रं शीघ्रं चित्तं व्याप्नोति आविष्टं करोति साकल्येन सम्बध्नाति च, स प्रसादो नाम गुण उच्यत इति पूर्वस्मादनुषज्यते। प्रसादयति स्वसौन्दर्यद्वारा विषयान्तरसम्बन्धनिवर्त्तनेन चित्तं प्रसन्नं करोतीति व्युत्पत्तिः। स च प्रसादगुणः समस्तेषु शृङ्गारादिषु रसेषु, समस्तासु रचनासु अल्पवृत्तिषु अल्पवृत्तिषु वा पदयोजनासु [illegible]।

(१) सरेफो इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

व्याप्नोति आविष्टं करोति (१) (ध)।

९। शब्दास्तद्व्यञ्जका अर्थ-बोधकाः श्रुतिमात्रतः। (न)

यथा—"सूचीमुखेन सकृदेव कृतव्रणस्त्वं
मुक्ताकलाप! लुठसि स्तनयोः प्रियायाः।
बाणैः स्मरस्य शतशो विनिकृत्तमर्म्मा
स्वप्नेऽपि तां कथमहं न विलोकयामि॥" (प)

१०। एषां शब्दगुणत्वञ्च गुणवृत्त्योच्यते बुधैः॥ (फ)

शरीरस्य शौर्य्यादिगुणयोग इवेति शेषः (ब)।

---

(ध) गुणपक्षे व्याप्नोतीत्यस्य फलितार्थमाह व्याप्नोतीति। आविष्टं स्वस्मिन्नभिनिविष्टम्। एतेनास्य चमत्कारितातिशयः सूचितः।

(न) ननु समस्तास्वेव रचनासु अस्य सम्भवाङ्गीकारे मधुरायाम् अवृत्तिरचनायामल्पवृत्तिरचनायाञ्च माधुर्य्यगुणेन सह साङ्कर्य्योपपत्तिरित्याह शब्दा इति। श्रुतिमात्रतः श्रवणानन्तरमेव अर्थबोधकाः शब्दाः तस्य प्रसादगुणस्य व्यञ्जकाः। तथा च अवृत्त्यल्पवृत्तिस्थले सरलशब्दव्यञ्जकत्वे प्रसादगुणः, श्रुतिमाधुर्य्ये सति असरलशब्दव्यञ्जकत्वे माधुर्य्यगुणः, विकटार्थबोधकशब्दव्यञ्जकत्वे च ओजोगुण इति व्यञ्जकभेदाद्भेद इति भावः।

(प) सूचीति। हे मुक्ताकलाप! हारान्तर्गतमुक्तासमूह! सूच्या मुखेन अग्रभागेन सकृदेकवारमेव कृतव्रणः कृतच्छिद्रस्त्वम्, प्रियायाः स्तनयोर्लुठसि। अहन्तु स्मरस्य मदनस्य बाणैः शतश एव विनिकृतमर्म्मा कृतहृदयच्छिद्रोऽपि सन्, स्वप्नेऽपि तां प्रियां कथं न विलोकयामि। यदि कृतच्छिद्रत्वमेव प्रियाप्राप्तिहेतुस्तदा त्वत्तो बहुधैव कृतच्छिद्रोऽहं कथं त्वमिव प्रियां न प्राप्नोमि, इत्यहो विषम एव विधिर्नियम इति भावः। अत्र श्रुतिमात्रत एवार्थबोधकशब्दव्यञ्जकत्वेन सहसैव चित्तव्यापनात् प्रसादगुणः।

(फ) ननु "रसस्याङ्गित्वमाप्तस्य धर्म्माः" इत्यनेन गुणानां रसधर्म्मत्वाङ्गीकारे वामनादिप्राचीनसम्मतमेषां शब्दार्थधर्म्मत्वं कथं सङ्गच्छत इत्याह एषामिति। अत्र शब्दपदमर्थोपलक्षणम्। किञ्चेति चार्थः। बुधैर्वामनादिभिः, गुणवृत्त्या गुणवृत्तिवत् (लक्षणावृत्तिवत्) गुरुतरेण स्वाश्रयरसादिव्यञ्जकत्वरूपपरम्परासम्बन्धेनेत्यर्थः, एषां माधुर्य्यौजःप्रसादगुणानां शब्दगुणत्वं शब्दार्थयोरुभयोरपि धर्म्मत्वमुच्यते। न पुनः साक्षादेषां शब्दार्थधर्म्मत्वमप्युच्यते, गुणानां रसादिभिः सहैकास्वादविषयत्वेन रसादिधर्म्मत्वस्यैव वास्तविकतया तेषां शब्दार्थयोर्वृत्तित्वे साक्षात्सम्बन्धासम्भवादिति भावः।

(ब) शरीरस्येति। आदिशब्देन तेजःप्रभृतीनां ग्रहणम्। तथा च यथा शौर्य्यतेजःप्रभृतयो गुणाः साक्षादात्मन्येव वर्त्तमाना अपि स्वाश्रयाश्रयत्वरूपपरम्परासम्बन्धेन शरीरेऽपि वर्त्तन्ते; तथा माधुर्य्यादयो गुणाः साक्षात् रसादावेव वर्त्तमाना अपि स्वाश्रयरसादिव्यञ्जकतारूपपरम्परासम्बन्धेन शब्दार्थयोरपि वर्त्तन्त इत्यर्थः।

---

(१) आविष्करोति इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

११ । श्लेषः समाधिरौदार्य्यं प्रसाद इति ये पुनः ।
गुणाश्चिरन्तनैरुक्ता ओजस्यन्तर्भवन्ति ते ॥ (भ)

ओजसि भक्त्या ओजःशब्दवाच्ये (१) शब्दार्थधर्म्मविशेषे (म) ।
तत्र श्लेषो बहूनामपि पदानामेकपदवद्भासनात्मा (य) । यथा—

"उन्मज्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धतः
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिनीः ।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथायं तथा
प्रायः प्रेङ्खदसंख्यशङ्खधवला वेलेयमुद्गच्छति ॥" (र)

अयं बन्धवैकट्यात्मकत्वादोज एव (ल) ।

---

(भ) इदानीं वामनादिभिरङ्गीकृतानि गुणान्तराणि स्वोक्तेषु गुणदोषाभावाऽलङ्कारगुणीभूतव्यङ्ग्येषु अन्तर्भावयितुमाह श्लेष इति । चिरन्तनैः प्राचीनैः, श्लेषः समाधिः औदार्य्यं प्रसाद इति नामधेयैः पुनर्गुणा उक्ताः, ते अस्मत्सम्मते ओजसि गुणे अन्तर्भवन्ति ।

(म) ननु ओजःशब्दस्य चित्तविस्ताररूपदीप्तत्व एव शक्तेः कथं तत्र शब्दधर्म्माणां श्लेषादीनामन्तर्भाव इत्याह ओजसीति । भक्त्या उपादानलक्षणया, ओजःशब्देन वाच्ये प्रतिपाद्ये । अतोऽत्र उपादानलक्षणया ओजःशब्देन शब्दार्थधर्म्मविशेषस्य बोधनात् तत्र च शब्दधर्म्माणां श्लेषादीनामन्तर्भावसम्भवान्नोक्तदोष इत्याशयः ।

(य) वामनादिमते श्लेषं लक्षयति तत्रेति । तेषु श्लेषादिषु मध्ये । एकपदवत् एकस्य पदस्येव, भासनात्मा अलक्षितसन्धिकतया प्रतीयमानता । एकेन पदेन अन्यस्य पदस्य अभिन्नभावेन श्लेषणात् श्लेष इति समाख्या । तथा च वामनः—

"यत्रैकपदवद्भावः पदानां भूयसामपि । अनालक्षितसन्धीनां स श्लेषः परमो गुणः ॥"

(र) उन्मज्जदिति । समुद्रस्य पूरारम्भवर्णनेयम् । उन्मज्जतां जलमध्यादुत्तिष्ठतां जलकुञ्जरेन्द्राणां जलहस्तिश्रेष्ठानां रभसेन वेगेन य आस्फालः शरीरान्दोलनं तस्य अनुबन्धेन परम्परया उद्धत उत्थितः, सर्वाः पर्वतानां कन्दरोदरभुवो गुहाभ्यन्तरभूमीः प्रतिध्वानिनीः प्रतिध्वनिमतीः कुर्वन् कुर्वती च, श्रुतिपथस्य कर्णविवरस्य उन्माथी विदारी विदारिणी च, तथा उच्चैर्विशालः अयं ध्वनिर्यथा उच्चरति उत्तिष्ठति ; तथा प्रायो बाहुल्येन प्रेङ्खद्भिः प्रचलद्भिः असंख्यैः शङ्खैः धवला शुभ्रीकृता इयं वेला पूरारम्भेण विकृतसमुद्रजलम् उद्गच्छति तीरे उत्तिष्ठति ।

अत्र 'उन्मज्जज्जल' 'प्रेङ्खदसंख्य' इति बहूनां पदानां हठादलक्षितसन्धिकतया एकैकपदवत् प्रतीयमानत्वात् वामनादिमते श्लेषो नाम शब्दगुणः ।

(ल) अस्य ओजस्यन्तर्भावमुपपादयति अयमिति । अयं वामनादिमतसिद्धः श्लेषो नाम गुणः,

---

(१) ओजःपदवाच्ये इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

समाधिः—आरोहावरोहक्रमः। आरोह उत्कर्षः, अवरोहः अपकर्षः, तयोः क्रमो वैरस्यानावहो विन्यासः। यथा—"चञ्चद्भुज—" इत्यादि। अत्र पादत्रये क्रमेण बन्धस्य गाढ़ता, चतुर्थपादे तु अपकर्षः। तस्यापि च तीव्रप्रयत्नोच्चार्य्यतया ओजस्विता (ब)।

उदारता विकटत्वलक्षणा। विकटत्वञ्च पदानां नृत्यत्प्रायत्वम् (भ)। यथा— "सुचरण-(१) विनिविष्टैर्नूपुरैर्नर्त्तकीनां

झणिति रणितमासीत् तत्र चित्रं कलञ्च॥" (म)

अत्र च तन्मतानुसारेण रसानुसन्धानमन्तरेणैव शब्दप्रौढ़ोक्तिमात्रेण ओजः (य)।

---

धन्वर्णकठ्यास्तकत्वात् बहुतरसंयुक्तवर्णादिघटिततया प्रगाढ़रचनारूपत्वात्। एतेन स्वमते शब्दगतं ओजोगुणो विकटशब्दसन्धात्मक एवेति सूचितम्।

(ब) वामनादिमते समाधिं लक्षयति समाधिरिति। तथा च वामनः—

"आरोहन्त्यवरोहन्ति क्रमेण यतयो हि यत्। समाधिर्नाम स गुणस्तेन पूता सरस्वती॥"

उक्तलक्षणं व्याचष्टे आरोह इति। उत्कर्षो रचनायाः प्रगाढ़ता, अपकर्षश्च रचनायाः शैथिल्यम्। वैरस्यानावहो विरक्त्यजनकः। तथा च प्रथमतो रचनायाः प्रगाढ़ता, परञ्च शैथिल्यम् इत्ययमेव आरोहावरोहक्रमः स एव च समाधिरिति सरलार्थः। उक्तरूपेण रचनासमाधानात् समाधिरिति संज्ञा। पादत्रये प्राथमिके इति शेषः। अपकर्षो रचनायाः शैथिल्यम्। ननु चतुर्थपादस्य शैथिल्येऽपि कथं तस्य ओजस्यन्तर्भाव इत्याह तस्यापीति। चतुर्थपादस्यापीत्यर्थः। तीव्रप्रयत्नोच्चार्य्यतया उच्चैःसर्वव्यत्योति पदस्येति शेषः। ओजस्विता ओजोगुणवत्ता।

(भ) वामनादिमते औदार्य्यगुणं लक्षयति उदारतेति। विकटत्वमेव लक्षणं स्वरूपं यस्याः सा तादृशी रचना, उदारता औदार्य्यं नाम गुणः। पदानां नृत्यत्प्रायत्वरूपोदारतया उदारतेति नाम। ननु विकटत्वञ्चेत् गाढ़त्वम्, तदा तन्मतसिद्धेन ओजसा सह औदार्य्यस्य साङ्कर्य्यापत्तिरित्याह विकटत्वञ्चेति।

(म) सुचरणेति। तत्र नृत्यशालायां नर्त्तकीनां सुचरणयोः सुन्दरयोः पादयोः विनिविष्टैः प्रदत्तैः नूपुरैः 'झण्' इति द्रुतं चित्रमाश्चर्य्यं कलं मधुरास्फुटञ्च रणितं शब्द आसीत्।

(य) अथ सुचरणेत्यादौ नियतसहचरवीरादिरसाभावात् कथमोजोगुणः, तदभावे च कथं प्राचामौदार्य्यगुणस्य तत्रान्तर्भावः सम्भवतीत्याह अत्र चेति। तन्मतानुसारेण वामनादिमतानुसरणेन। शब्दप्रौढ़ोक्तिमात्रेण केवलरचनाप्रगाढ़तयैव, ओजः ओजोगुणः अस्माभिरप्यङ्गीक्रियत इति शेषः। यदाह वामनः—

---

(१) स्वचरण— इति क्वचित् पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रसाद ओजोमिश्रितशैथिल्यात्मा (ङ)। यथा—

"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदात् पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्॥" (च)

**१२। माधुर्य्यव्यञ्जकत्वं यदसमासस्य दर्शितम्।**
**पृथक्पदत्वं माधुर्य्यं तेनैवाङ्गीकृतं पुनः॥ (क)**

यथा—"श्वासान् मुञ्चति" इत्यादि (१४१ पृष्ठे) (ख)।

**१३। अर्थव्यक्तेः प्रसादाख्य-गुणेनैव परिग्रहः।**
**अर्थव्यक्तिः पदानां हि झटित्यर्थसमर्पणम्॥ (ग)**

---

"पदन्यासस्य गाढ़त्वं वदन्त्योजः कवीश्वराः। अनेनाधिष्ठिताः प्रायः शब्दाः श्रोत्ररसायनम्॥"

(ङ) वामनादिमते प्रसादगुणं लक्षयति प्रसाद इति। ओजसा मिश्रितं शैथिल्यमेव आत्मा स्वरूपं यस्य स तादृशो बन्धः। यस्मिन् बन्धे क्वचित् प्रगाढ़ता क्वचिच्च शिथिलता स तादृशो बन्धः प्रसादो नाम गुण इत्यर्थः। सभ्यानां मनसः प्रसादनात् प्रसाद इति व्युत्पत्तिः। तथा च वामनः—

"श्लथत्वमोजसा मिश्रं प्रसादञ्च प्रचक्षते। अनेन न विना सत्यं स्वदते काव्यपद्धतिः॥"

(च) यो य इति। पूर्व्वमेव विवृतमेतत् (३२५ पृष्ठे)। अस्य पद्यस्य सर्व्वेष्वेव चरणेषु प्रसादगुणस्य स्पष्टप्रदर्शनाय उन्धृतस्यापि पुनः समस्तस्योद्धार इति बोध्यम्।

अत्र मद इत्यन्ते बन्धस्य गाढ़त्वादोजः, "पाण्डवीनां चमूनाम्" इत्यत्र पुनः शैथिल्यम्। इत्यमन्यत्राप्यूह्यम्। अतो वामनादिसम्मतः प्रसादगुणः। सोऽपि च पुनर्गाढ़बन्धांशे स्वसम्मते ओजसि शिथिलबन्धांशे तु प्रसादे अन्तर्भूत एव इत्याशयः। एवञ्च कारिकायामोजःपदं प्रसादस्याप्युपलक्षणं मन्तव्यम्।

(क) इदानीं पृथक्पदत्वलक्षणस्य वामनादिसम्मतमाधुर्य्यगुणस्य स्वसम्मते अवृत्तिस्थलीयमाधुर्य्यगुणे अन्तर्भावं दर्शयितुमाह माधुर्य्येति। असमासस्य 'अवृत्तिरल्पवृत्तिर्वा' इत्यत्र अवृत्तीत्यनेन समासाभावस्य, यत् माधुर्य्यव्यञ्जकत्वमस्माभिर्दर्शितम्, तेनैव पृथक्पदत्वम् असमस्तपदत्वरूपं वामनादिसम्मतं माधुर्य्यमस्माभिरपि पुनरङ्गीकृतम्। अस्मत्सम्मते अवृत्तिस्थलीयमाधुर्य्यगुण एव वामनादिसम्मतशाब्दमाधुर्य्यगुणस्यान्तर्भाव इत्याशयः। यदाह वामनः—"बन्धे पृथक्पदत्वञ्च माधुर्य्यमुदितं बुधैः।"

(ख) श्वासानिति। अत्र 'लग्नार्गम्' 'भुजावल्लरीम्' इत्यनयोः किञ्चित्समाससत्त्वेऽपि समासस्वल्पत्वांशमादायैव लक्षणं सङ्गमनीयम्। अथवा—"बाले! नाथ! विमुञ्च मानिनि! रुषम्" इत्यादिकम् (१९५ पृष्ठे) उदाहर्त्तव्यम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्पष्टमुदाहरणम् (घ)।

१४। ग्राम्यदुःश्रवतात्यागात् कान्तिश्च सुकुमारता। (ङ)

अङ्गीकृतेति सम्बन्धः (च)। कान्तिरौज्ज्वल्यम्। तच्च ह्यालिकादिपदविन्यासवैपरीत्येनालौकिकशोभाशालित्वम् (छ)।

सुकुमारता अपारुष्यम् (ज)। अनयोरुदाहरणे स्पष्टे (झ)।

१५। क्वचिद्दोषस्तु समता मार्गाभेदस्वरूपिणी।
अन्यथोक्तगुणेष्वस्या अन्तःपातो यथायथम्॥ (ञ)

---

(ग) वामनादिसम्मतस्य अर्थव्यक्तिनाम्नो गुणस्य स्वसम्मते प्रसादगुणे अन्तर्भावं दर्शयितुमाह अर्थेति। अस्माकं प्रसादाख्यगुणेनैव अर्थव्यक्तेः परिग्रहः सम्पन्न इति शेषः। तेषामर्थव्यक्तिर्नाम गुणः अस्माकं प्रसादगुण एवान्तर्भूत इत्यर्थः। हि यस्मात्, पदानां झटिति अर्थस्य समर्पणं ज्ञानमेव तन्मते अर्थव्यक्तिर्नाम ; अर्थस्य व्यक्तिर्बुद्धौ स्पष्टोपस्थितिरिति व्युत्पत्तेः। तथा च वामनः—

"पश्चादिव गतिर्वाचः पुरस्तादिव वस्तुनः।
यत्रार्थव्यक्तिहेतुत्वात् सोऽर्थव्यक्तिः स्मृतो गुणः॥"

(घ) स्पष्टमिति। "सूचीमुखेन सकृदेव" इत्यादेः प्रामत्वादित्याशयः।

(ङ) प्राचां कान्तिसुकुमारताख्ययोरपि गुणयोः स्वमते संग्रहं दर्शयितुमाह ग्राम्येति। ग्राम्यदुःश्रवयोर्भावौ ग्राम्यदुःश्रवते तयोस्त्यागात्। तथा च ग्राम्यताया दोषत्वाङ्गीकारेण तत्परित्यागसूचनात् कान्तिः, दुःश्रवतायाश्च दोषत्वस्वीकारेण तत्परित्यागस्यापि द्योतनात् सुकुमारता चास्माभिरङ्गीकृतेत्यर्थः।

(च) अङ्गीति। सम्बन्धः "तेनैवाङ्गीकृतं पुनः" इत्यतोऽनुषङ्ग इत्यर्थः।

(छ) कान्तिरिति। औज्ज्वल्यं व्याचष्टे तच्चेति। आदिपदेन अशिक्षितजनमात्रग्रहणम्। ह्यालिकादीनां पदविन्यासस्य वैपरीत्येन नागरोपनागरशब्दप्रयोगेणेत्यर्थः। तथा च भोजदेवः—"यदुज्ज्वलत्वं बन्धस्य काव्ये सा कान्तिरुच्यते।"

(ज) प्राचीनमते सुकुमारतां लक्षयति सुकुमारतेति। अपारुष्यं बन्धस्य रूक्षवर्णराहित्यम्। यदाह कण्ठाभरणे भोजदेवः—"अनिष्ठुराक्षरप्रायं सुकुमारमिति स्मृतम्।"

(झ) अनयोरिति। तत्र ग्राम्यतात्यागेन कान्तिर्यथा—"मध्यस्ते हरते मनः।" दुःश्रवतात्यागेन सुकुमारता यथा—"आमोदं यातु तन्वङ्गी कदानङ्गवशंवदा।"

(ञ) प्राचां समतानामकगुणस्यापि स्वमते व्यवस्थामाह क्वचिदिति। मार्गाभेदस्वरूपिणी उपक्रमोपसंहारयोरेकप्रकाररचनात्मिका, समता नाम गुणः, क्वचित्तु सुकुमारार्थे उत्कटरचनास्थले उत्कटार्थे सुकुमाररचनास्थले च प्रतिकूलवर्णत्वं नाम दोष एव। अन्यथा तादृशवैपरीत्याभावस्थले तस्याः समताया उक्तगुणेषु ओजःप्रभृतिषु मध्ये यथायथं यथासम्भवम् अन्तःपाती भवेत्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मसृणेन विकटेन वा मार्गेणोपक्रान्तस्य सन्दर्भस्य तेनैव परिनिष्ठानं मार्गाभेदः (ट)। स च क्वचिद्दोषः (ठ)। तथाहि—(ड)

"अव्यूढाङ्गमरूढपाणि-(१) जठराभोगञ्च बिभ्रद्वपुः
पारीन्द्रः शिशुरेष पाणिपुटके सम्मातु किं तावता ।
उद्यद्दुर्द्धरगन्धसिन्धुरशतप्रोद्दामदानार्णव-
स्रोतःशोषणरोषणात् पुनरितः कल्पाग्निरल्पायते ॥" (ढ)

अत्र उद्धतेऽर्थे वाच्ये सुकुमारबन्धत्यागो गुण एव (ण)। अनेवंविधस्थले माधुर्य्यादावेवान्तःपातः (त)। यथा—"लताकुञ्जं गुञ्जन्—" इत्यादि (५३७ पृष्ठे) (थ)।

---

(ट) मार्गाभेदशब्दं विवृणोति मसृणेनेति। मसृणेन कोमलेन। मार्गेण रचनाप्रकारेण, उपक्रान्तस्य आरब्धस्य, सन्दर्भस्य वाक्यस्य महावाक्यस्य वा, तेनैव तादृशेनैव मार्गेण, परिनिष्ठानं समापनम्। तथा च वामनः—

"प्रतिपाद्यं प्रतिश्लोकमेकमार्गपरिग्रहः। दुर्बन्धो दुर्विभावश्च समतेति मतो गुणः॥"

(ठ) स चेति। मार्गाभेदरूपः प्राचीनसम्मतः समताख्यो गुणश्चेत्यर्थः।

(ड) एकेनैव पद्येन उभयोरेव दोषगुणयोरुदाहरणं दर्शयितुमाह तथाहीति।

(ढ) अव्यूढाङ्गमिति। अव्यूढानि अचिरजातत्वादसम्पूर्णानि अङ्गानि करचरणादीनि यस्य सत्, अरूढः अनुत्पन्नः पाणिजठरयोर्हस्तोदरयोराभोगो विस्तारो यस्य तत्तादृशञ्च वपुः शरीरं बिभ्रत् धारयन्, एष शिशुः पारीन्द्रः सिंहः, पाणिपुटके मानुषस्य हस्तप्रसृतौ, सम्मातु अवस्थातुं योग्यो भवतु, तावता अस्य तादृशक्षुद्रत्वेन किम्?। उद्यत उपस्थितस्य, दुर्द्धरस्य दुर्दमस्य गन्धसिन्धुरशतस्य गन्धहस्तिसमूहस्य यत् प्रोद्दामं विशालं दानार्णवस्रोतः मदजलसागरप्रवाहः तस्य शोषणे भयजननद्वारा शुष्कताजनके रोषणं क्रोधो यस्य तस्मात्तथोक्तात् इतः शिशुपारीन्द्रात् कल्पाग्निः पुनः प्रलयकालीनो वह्निरपि अल्पायते अल्प इवाचरति। अयमाकृतौ क्षुद्रोऽपि वस्तु सुमहानेवेति भावः।

अत्र प्रथमार्द्धे अचिरजातसिंहशिशोर्वर्णनीयतया सुकुमार एवार्थः, किन्तु कविना समतागुणप्रवर्त्तनाय सर्वत्र उत्कटैव रचना प्रवर्त्तितेति प्रथमार्द्धे प्रतिकूलवर्णत्वं नाम दोष एवेति भावः।

(ण) द्वितीयार्द्धे तु उत्कटार्थसद्भावात् उत्कटरचनात्मिका सा समता गुण एवेत्याह अत्रेति। अस्मिन् पद्य इत्यर्थः। उद्धतेऽर्थे द्वितीयार्द्धगते इति शेषः, प्रचण्डक्रोधस्य वर्णनीयत्वादित्याशयः। सुकुमारबन्धत्यागः कोमलरचनाया अकरणम्, गुण एव, अर्थानुरूपत्वादित्यभिप्रायः।

(त) अनेवमिति। सुकुमारार्थे सुकुमाररचनास्थले उत्कटार्थे उत्कटरचनास्थले चेत्यर्थः। माधुर्य्यादावित्यादिपदात् स्वसम्मतप्रसादौजसोर्ग्रहणम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(१) अगूढपाणि इति पाठान्तरम्।

१६। ओजः प्रसादो माधुर्य्यं सौकुमार्य्यमुदारता।
तदभावस्य दोषत्वात् स्वीकृता अर्थगा गुणाः॥ (द)

ओजः—साभिप्रायत्वरूपम्। प्रसादः—अर्थवैमल्यम्। माधुर्य्यम्—उक्तिवैचित्र्यम्। सौकुमार्य्यम्—अपारुष्यम्। उदारता—अग्राम्यत्वम् (ध)। एषां पञ्चानामप्यर्थगुणानां यथाक्रममपुष्टार्थाधिकपदानवीकृतामङ्गलरूपाश्लीलग्राम्याणां निराकरणेनैवाङ्गीकारः। स्पष्टान्युदाहरणानि (न)।

---

(थ) लतेति। अत्र अर्थस्यापि सुकुमारतया आर्थीपान्त-सुकुमाररचनात्मिका समता स्वसम्मतमाधुर्य्यगुण एवान्तर्भूतेति भावः। एवं प्रसादौजसोरप्यनुसन्धेयम्।

(द) अधुना भोजदेवादिसम्मतानामोजःप्रभृतीनां दशविधानामर्थगुणानामपि स्वमते तदभावानां दोषत्वाङ्गीकारादिभिरेवाङ्गीकारमाह ओज इति। ओजः, प्रसादः, माधुर्य्यम्, सौकुमार्य्यम्, उदारता च एते पञ्च अर्थगा अर्थनिष्ठाः प्राचीनसम्मता गुणाः, तेषामभावस्य असद्भावस्य दोषत्वात् दोषत्वस्वीकारात् स्वीकृता अस्माभिरिति शेषः। अत्रायमाशयः—दोषाः खलु परिहार्य्याः गुणास्तु ग्राह्या इति हि रीतिः। एवञ्च ओजःप्रभृतीनामसद्भावस्य दोषत्वाङ्गीकारेण तस्य परिहार्य्यत्वसूचनात् सद्भावस्य गुणत्वं ग्राह्यत्वञ्च सूचितमेवेति। एवमन्यत्राप्याशयोऽनुसन्धेयः।

"अर्थप्रौढ़िरोजः" इत्योजसः सामान्यलक्षणम्। अर्थप्रौढ़िस्तु पञ्चविधा—"पदार्थे वाक्यरचना वाक्यार्थे च पदाभिधा। प्रौढ़िर्व्याससमासौ च साभिप्रायत्वमस्य च॥" इति वामनमतम्।

(ध) तत्र प्रथमप्रकारचतुष्टयस्य 'क्वचित्' इत्यादिना अगुणत्वं वक्ष्यति। पञ्चमप्रकारन्तु दोषाभावत्वेन गुणतया अङ्गीकुर्वन्नाह ओज इति। साभिप्रायत्वरूपं विशेषणपदार्थस्य मुख्योपयोगित्वेन वक्तुरभिप्रेतत्वम्। अर्थस्य वैमल्यं विशदत्वम्। उक्तेर्वैचित्र्यं क्रोधादावप्यतीव्रत्वम्। अपारुष्यमनिष्ठुरत्वम्। अग्राम्यत्वं हालिकाद्यशिक्षितजनैरप्रयोज्यत्वम्। एवमेवैषां लक्षणानि सरस्वतीकण्ठाभरणादावनुसन्धेयानि।

(न) एषामिति। तत्र अपुष्टार्थस्य निराकरणेन् स्वमते ओजसोऽङ्गीकारः सम्पन्नः। यथा—"विलोक्य पूर्णिमापूर्णं विधुं मुञ्च रुषं प्रिये!।" अत्र पूर्णिमापूर्णमिति विशेषणार्थस्य मानत्यागं प्रत्युपयोगित्वेन वक्तुरभिप्रेतत्वात् नापुष्टार्थतादोषः, प्रत्युत साभिप्रायत्वरूपः प्राचीनसम्मत ओजोगुण एव।

अधिकपदनिराकरणेन प्रसादस्याङ्गीकारः सञ्जातः। यथा—"कुर्य्यां हरस्यापि पिनाकपाणेः।" अत्र पिनाकपाणिपदेन हरस्य दुर्जयत्वबोधनात् "सदाशिवं नौमि पिनाकपाणिम्" इत्यादिवन्नाधिकपदतादोषः, प्रत्युत अर्थवैमल्यरूपः प्रसादगुण एव।

अनवीकृतपदनिराकरणेन माधुर्य्यस्याङ्गीकारः प्रतिपन्नः। यथा—"भानुः सकृद्युक्त" इत्यादि। अत्र नवीकृतत्वात् "सदा चरति खे भानुः" इत्यादिवन्नानवीकृतत्वदोषः, प्रत्युत उक्तिवैचित्र्यरूपो माधुर्य्यगुण एव।

अमङ्गलरूपाश्लीलार्थनिराकरणेन सौकुमार्य्यस्याङ्गीकार आयातः। यथा—"दशासु शेषः खलु तद्दशाया, तथा नभः पुष्यतु कोरकेण।" अत्र मृतिपदानभिधानात् नामङ्गलरूपाश्लीलार्थतादोषः, प्रत्युत अपारुष्यरूपः सौकुमार्य्यगुण एव।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१७ । अर्थव्यक्तिः स्वभावोक्त्यलङ्कारेण तथा पुनः ।
रसध्वनिगुणीभूतव्यङ्ग्याभ्यां (१) कान्तिनामकः ॥ (प)

अङ्गीकृत इति सम्बन्धः । अर्थव्यक्तिः—वस्तुस्वभावस्फुटत्वम् । कान्तिः—दीप्तरसत्वम् (फ) । स्पष्टे उदाहरणे (ब) ।

१८ । श्लेषो विचित्रतामात्रमदोषः समता परम् । (भ)

श्लेषः क्रमकौटिल्यानुल्वणत्वोपपत्तियोगरूपघटनात्मा । तत्र—क्रमः क्रियासन्ततिः । विदग्धचेष्टितं कौटिल्यम् । अप्रसिद्धवर्णनाविरहोऽनुल्वणत्वम् । उपपादकयुक्तिविन्यास उपपत्तिः । एषां योगः सम्मेलनं स एव रूपं यस्या घटनायास्तद्रूपः श्लेषो वैचित्र्यमात्रम् । अनन्यसाधारणरसोपकारित्वातिशयविरहादिति भावः (म)। यथा—"दृष्ट्वैकासनसंस्थिते प्रियतमे" इत्यादि (११८ पृष्ठे)।

---

ग्राम्यार्थनिराकरणेन च उदारतया अङ्गीकारः प्राप्तः । यथा—"निद्रातुमुपकण्ठं मे भज त्वमधुना प्रिय ! ।" अत्र ग्राम्यार्थपरित्यागात् "स्वपिहि त्वं समीपे मे स्वपिम्येवाधुना प्रिय ! ।" इत्यादिवन्न ग्राम्यतादोषः, प्रत्युत उदारतागुण एव ।

(प) अर्थेति । स्वभावोक्त्यलङ्कारेण स्वभावोक्त्यलङ्काराङ्गीकारेण, अर्थव्यक्तिर्नाम प्राचीनसम्मतोऽर्थगुणः पुनः तथा अङ्गीकृत इत्यर्थः । एवं रसस्य ध्वनिगुणीभूतव्यङ्ग्याभ्यां तयोरङ्गीकाराभ्यामित्यर्थः कान्तिनामकोऽपि प्राचामर्थगुणः अङ्गीकृतः ।

(फ) अर्थेति । वस्तुनः पदार्थस्य स्वभावानां स्वरूपाणां स्फुटत्वं साकल्येन स्पष्टं प्रतीयमानत्वम् । दीप्तरसत्वं स्पष्टप्रतीयमानरसत्वम् । तथा च सरस्वतीकण्ठाभरणे—"अर्थव्यक्तिः स्वरूपस्य साक्षात् कथनमुच्यते । कान्तिर्दीप्तरसत्वं स्यात्—।"

(ब) स्पष्टे इति । तत्रार्थव्यक्तेरुदाहरणं यथा शाकुन्तले—"ग्रीवाभङ्गाभिरामम्" इत्यादि । अत्र स्वभावोक्त्यलङ्कारेणैव अर्थव्यक्तिरूपो गुणः प्राप्तः । कान्तेर्यथा—"शून्यं वासगृहम्" इत्यादि । अत्र शृङ्गाररसध्वनिनैव कान्तिरूपो गुणः संगृहीतः । "अयं स रसनोत्कर्षी" इत्यादौ तु रसस्य गुणीभूतव्यङ्ग्यतया कान्तिरूपो गुणः सम्पादित इति बोध्यम् ।

(भ) इदानीं प्राचीनसम्मतयोः श्लेषसमताख्यगुणयोरगुणत्वमुपपादयितुमाह श्लेष इति । श्लेषो नाम प्राचां गुणः विचित्रतामात्रं केवलं वैचित्र्यमेव, न पुनर्वस्तुत एव गुणः । तथा समता नाम प्राचां गुणः परं केवलम् अदोष एव, न पुनर्गुणः ।

---

(१) [illegible]नामेति क्वचित् पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र दर्शनादयः क्रियाः। उभयसमर्थनरूपं कौटिल्यम्। लोकसंव्यवहाररूपमनुल्बणत्वम्। "एकासनसंस्थिते" "पश्चादुपेत्य" "नयने पिधाय" "ईषद्वक्रितकन्धर" इति चोपपादकानि, एषां योगः (य)। अनेन च वाच्योपपत्तिग्रहणव्यग्रतया रसास्वादो व्यवहितप्राय इत्यस्यागुणता (र)।

समता च प्रक्रान्तप्रकृतिप्रत्ययाविपर्य्यासेनार्थस्य (१) विसंवादिताविच्छेदः; स च प्रक्रमभङ्गरूपदोषविरह एव (ल)। स्पष्टमुदाहरणम् (व)।

१९। न गुणत्वं समाधेश्च—(श)

समाधिश्च अयोन्यन्यच्छायायोनिरूपद्विविधार्थदृष्टिरूपः (ष)। तत्रायोनिरर्थो यथा—

(म) अत्र श्लेषं लक्षयति श्लेष इति। उक्तलक्षणं स्वयमेव विवृणोति तत्रेति। क्रियायाः सन्ततिः समूहः। विदग्धचेष्टितं निपुणव्यवहारः। अप्रसिद्धवर्णनाया विरहः अभावः। उपपादिका उक्तविषयसमर्थनकारिणी या युक्तिस्तस्या विन्यासः स्थापनम्। अनन्यसाधारणम् अन्यैरसमानं यत् रसोपकारित्वं तस्यातिशयविरहादतिरेकाभावात्। असाधारणभावेनैव यो रसमुपकरोति स एव गुण इत्याशयः।

(य) अत्रेति। आदिपदेन पश्चादुपगमनादीनां परिग्रहः। उभयसमर्थनरूपं ज्येष्ठानुरञ्जनकनिष्ठावञ्चनयोर्युगपदेव विधानस्वरूपम्, कौटिल्यं चातुर्य्यम्। लोकसंव्यवहाररूपम् अन्यत्रापि लोकानां तथाभूतप्रसिद्धव्यवहारात्मकम्। उपपादकानि तादृशानुरञ्जनवञ्चनयोः सङ्घटनसम्पादकानि। एषां क्रमादीनां योगः सम्मेलनात्मकः प्राचां श्लेषो नाम गुणः सम्पन्न इति शेषः।

(र) उक्तविधश्लेषस्य अगुणत्वमुपपादयति अनेनेति। उक्तविधश्लेषेण चेत्यर्थः, अस्य तु व्यवहितप्राय इति परेणान्वयः। व्यवहितप्रायत्वं प्रति हेतुमाह वाच्योपपत्तीति। वाच्यस्य नयनपिधानादिवक्तव्यविषयस्य उपपत्तिग्रहणं सम्भवपरत्वानुसन्धाने व्यग्रतया श्रोतुर्व्यासक्ततया। व्यवहितप्रायः किञ्चिद्व्यवहित इव, इति हेतोरस्य श्लेषस्य अगुणता न गुणता न वा दोषतेत्यर्थः। रसस्योत्कर्षाजननान्न गुणता, वास्तविकव्यवधानाजननाच्च न दोषतेति भावः।

(ल) प्राचां मते समतागुणं निरुच्य स्वमते तस्यादोषमात्ररूपत्वं निर्वक्ति समतेति। प्रक्रान्तयोः प्रथममभिहितयोः प्रकृतिप्रत्यययोः अविपर्य्यासेन परस्तादवैषम्येण, अर्थस्य वक्तव्यविषयस्य विसंवादिताया वैषम्येन प्रतीयमानतायाः विच्छेदः अभावः, यादृशैः प्रकृतिप्रत्ययादिभिरारम्भणं तादृशैरेव तैः समापनं समतेत्यर्थः। तथा च सरस्वतीकण्ठाभरणे—"अवैषम्यं क्रमवतां समत्वमिति कीर्त्तितम्।" स च प्राचां समतागुणः, स्वमते प्रक्रमभङ्गरूपदोषस्य विरहः अभाव एव, न पुनरतिरिक्तः कश्चिद्गुण इत्यर्थः, रसादीनामुत्कर्षाजननाभावादिति भावः।

(व) स्पष्टमिति। यथा—"न दीयते तथा स्वाङ्गं दीयते तु स्थितं परम्।"

(श) नेति। समाधेश्च प्राचीनसम्मतस्य समाधिनामकस्य अर्थगुणस्यापि च अस्मन्मते न गुणत्वम्।

(ष) विभागप्रदर्शनगर्भं समाधिं लक्षयति समाधिश्चेति। समाधिरर्थदृष्टिरिति लक्षणम्। अर्थ-

(१) प्रक्रान्तप्रकृतिप्रत्ययविपर्य्यासेन इत्यसङ्गतः पाठः क्वचित्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"सद्यो मुण्डितमत्तहूणचिबुकप्रस्पर्द्धि नारङ्गकम्।" (ख)

अन्यच्छायायोनिर्यथा—

"निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि।
नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी॥" (ह)

अत्र नीलोत्पलनयनयोरतिप्रसिद्धं सादृश्यं विच्छित्तिविशेषेण निबद्धम् (च)। अस्य चासाधारणशोभानाधायकत्वान्न गुणत्वम्, किन्तु काव्यशरीरमात्रनिर्वर्त्तकत्वम् (१) (क)।

क्वचित् "चन्द्रम्" इत्येकस्मिन् पदार्थे वक्तव्ये "अत्रेर्नयनसमुत्थं ज्योतिः" इति वाक्यवचनम्। क्वचित् "निदाघशीतलहिमकालोष्णसुकुमारशरीरावयवा योषित्" इति वाक्यार्थे वक्तव्ये 'वरवर्णिनी' इति पदाभिधानम्। क्वचिदेकस्य वाक्यार्थस्य किञ्चिद्विशेषनिवेशादनेकैर्वाक्यैरभिधानमित्येवंरूपो व्यासः। क्वचिद्बहुवाक्यप्रतिपाद्यस्य एकवाक्येनाभिधानमित्येवंरूपः समासश्च। इत्येवमादीनामन्यैरुक्तानां न गुणत्वमुचितम्, अपि तु वैचित्र्यमात्रावहत्वम् (ख)।

---

दृष्टियार्थावबोधविशेषः। अर्थश्च द्विविधः—अयोनिरन्यच्छायायोनिश्चेति। तत्र न विद्यते योनिः प्रसिद्धिरूपं कारणं यस्य सः अयोनिः, तथा अन्येषु काव्येषु या छाया प्रतिबिम्बं स्वरूपवर्णनप्रसिद्धिरित्यर्थः सैव योनिः कारणं यस्य सः अन्यच्छायायोनिः।

(ख) सद्य इति। सद्यो मुण्डितं कृतक्षौरं यत् मत्तहूणस्य मद्यपानान्मत्तहूणदेशीयम्लेच्छस्य चिबुकं तस्य प्रस्पर्द्धि तुल्यं नारङ्गकं पक्वं नारङ्गफलम्।

अत्र मत्तहूणचिबुक-पक्वनारङ्गयोः सादृश्यं काव्यान्तरेष्वप्रसिद्धमिति सादृश्यरूपोऽर्थः अयोनिः।

(ह) निजेति। अम्बुनि जले निजनयनयोः प्रतिबिम्बैः प्रतारिता जले पतितेषु निजनयनप्रतिबिम्बेषु नीलोत्पलज्ञानेन तानि चेतुमुपस्थिता तेषाञ्च छायामात्रतया चेतुमसामर्थ्यात् प्रतारणामापन्नेत्यर्थः, कापि कुसुमं लुनाति चिनोतीति कुसुमलावी कर्म्मण्यण्प्रत्ययान्ताद्दीप्रत्ययः. मालाकारिणी, यथार्थेऽपि नीलोत्पले करमर्पयितुं विमृशति विवेचनं करोति।

(च), अन्यच्छायायोनित्वं दर्शयितुमाह अत्रेति। अतिप्रसिद्धं काव्यान्तरेषु शतशो निबद्धत्वादिति भावः। तर्हि कथमत्र पुनर्निबद्धमित्याह विच्छित्तीति। विच्छित्तिविशेषेण चमत्कारितातिशयप्रयोजकत्वेन। तथा च अतिप्रसिद्धमपि सादृश्यमत्र विन्यासविशेषगुणेन नूतनमिव सञ्जातमिति भावः।

(क) इदानीं समाधेरगुणत्वमुपपादयति अस्येति। अस्य समाधेः, असाधारणशोभाया रसादीनामनुपमसौन्दर्यस्य अनाधायकत्वादजनकत्वात्। काव्यशरीरमात्रस्य अर्थात्मककेवलकाव्यदेहस्य निर्वर्त्तकत्वं निष्पादकत्वम्।

---

(१) निवर्त्तकत्वम् इति क्वचित् पाठः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२० । तेन नार्थगुणाः पृथक् ॥ (ग)

तेन उक्तप्रकारेण । अर्थगुणा ओजःप्रभृतयः प्रोक्ताः (घ) ।

इति साहित्यदर्पणे गुणविवेचनो

नामाष्टमः परिच्छेदः ॥०॥

---

(ख) ननु "पदार्थे वाक्यरचना वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥"

इति वामनोक्तानां पञ्चप्रकाराणामोजसामन्तिमप्रकारस्य साभिप्रायत्वस्य अपुष्टार्थतादोषाङ्गीकारेण वाङ्गीकृतत्वं दर्शितम्, अपरेषां चतुर्णां प्रकाराणां कथमङ्गीकारः सम्पन्न इत्याकाङ्क्षायां तेषामगुणत्वमेव प्रतिपादयितुमाह क्वचिदिति । अगुणत्वप्रतिपादनप्रकरण एव यस्य कस्याप्यगुणत्वप्रतिपादनस्य कर्त्तव्यत्वात् ओजसो व्यवस्थाप्रकरणमुल्लङ्घ्य अस्य सन्दर्भस्यात्रोपन्यास इति द्रष्टव्यम् । क्वचित् रघुवंशादौ । वाक्यस्य वचनमुक्तिः । यथा रघुवंशे—"अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः ।" ब्रह्मणः कश्चित् पुत्रोऽत्रिस्तस्य नयनाच्च जातश्चन्द्र इति पुराणवार्त्ता । क्वचिदुद्भटादौ । निदाघे ग्रीष्मकाले शीतलाः हिमकाले चोष्णाः सुकुमाराश्च शरीरावयवा यस्याः सा । तथा च रुद्रः—"शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला । भर्त्तृभक्ता च या नारी सा भवेद्वरवर्णिनी ॥" यथा—"उपस्थिता सा वरवर्णिनीयम् ।" क्वचिन्नैषधादौ । किञ्चिद्विशेषनिवेशमभिप्रेत्य व्यासो विस्तरः । यथा—नैषधे द्वितीयसर्गे दमयन्त्युदरस्य कृशत्वरूपवाक्यार्थस्य मेरुदण्डनियताहेमकाञ्चीरूपविशेषाभिप्रायेण "उदरं नत" "उदरं परिमाति" इत्यादिश्लोकद्वयेनाभिधानम् । क्वचित् चाणक्यनीत्यादौ । समासः संक्षेपः । यथा—"मातृवत् परदारेषु परद्रव्येषु लोष्ट्रवत् । आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः ॥" मातरमिव परदारानाद्रियते, मातरमिव परदारान् सम्मानयति, मातरमिव परदारान् नाकाङ्क्षति चेत्यादिबहुवाक्यप्रतिपाद्यस्य अर्थस्य "मातृवत् परदारेषु" इत्येकवाक्येनाभिधानम् । अन्यैर्वामनादिभिः । गुणत्वं नोचितमिति । रसादीनामुत्कर्षाजनकत्वादिति भावः ।

(ग) गुणनिरूपणप्रकरणमुपसंहरन्नाह तेनेति । तेन उक्तप्रकारेण, अर्थगुणा वामनोक्ता भोजराजोक्ता दण्ड्युक्ता वा अर्थवृत्तयो गुणाः, न पृथक् नातिरिक्ताः ; अपि तु अन्यदुक्त-गुणदोषाभाव-रसध्वनि-गुणीभूतव्यङ्ग्यालङ्कारेष्वेवान्तर्भूता इति भावः ।

(घ) तेनेति । प्रोक्ताः प्राक् प्रदर्शिताः ।

इति महामहोपाध्याय-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां साहित्यदर्पण-टीकायां कुसुमप्रतिमायां गुणविवेचनो नाम अष्टमः परिच्छेदः ॥०॥

—०—

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# नवमः परिच्छेदः ।

——:०:——

अथोद्देशक्रमप्राप्तमप्यलङ्कारनिरूपणं बहुवक्तव्यत्वेनोल्लङ्घ्य रीतिमाह—(क)

१ । पदसङ्घटना रीतिरङ्गसंस्थाविशेषवत् ।

उपकर्त्री रसादीनाम्—[ख]

रसादीनाम् अर्थाच्छब्दार्थशरीरस्य काव्यस्यात्मभूतानाम् (ग) ।

२ । सा पुनः स्याच्चतुर्विधा ॥

वैदर्भी चाथ गौड़ी च पाञ्चाली लाटिका तथा । (घ)

---

(क) अथ गुणनिरूपणानन्तरम्, उद्देशक्रमेण "उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः" इति नामकीर्तनक्रमेण प्राप्तमपि आकाङ्क्षितमपि, अलङ्कारनिरूपणम्, बह्वो वक्तव्या विषया यत्र तत्त्वेन हेतुना उल्लङ्घ्य अतिक्रम्य अकृत्वा रीतिमाह निरूपयति मूलकार इति शेषः सूचीकटाहन्यायेनेत्याशयः । गुणनिरूपणानन्तरं तदभिव्यञ्जकतया रीतेराकाङ्क्षितत्वादेव प्रसङ्गसङ्गतिरिति द्रष्टव्यम् ।

(ख) रीतिं लक्षयति पदेति । अङ्गसंस्थाविशेषवत् शरीरे यथास्थाने करचरणाद्यवयवसन्निवेश इव शब्दार्थशरीरे काव्ये पदसङ्घटना यथास्थाने पदानां संयोजना रीतिः । अथ तर्हि "गोरपत्यं बलीवर्दो घासमत्ति मुखेन सः" इत्यादावपि पदसङ्घटनासत्त्वेन रीतिरस्त्वामित्याह उपेति । आदिपदेन रसाभासभावादीनां ग्रहणम् । उपकर्त्री परम्परया परिपोषिका । एतेन रसाद्यभावस्थले रीतीनामप्यभाव इति सूचयता तासामनियतत्वं सूचितम् । तथा च रसाद्युपकारकः पदविन्यासो रीतिरिति रीतिलक्षणं फलितम् । रीयते ज्ञायते गुणविशेषोऽनयेति रीतिः, गत्यर्थकरीधातोः करणे क्तिः । रीतिः, प्रथा, व्यवहार इति पर्य्यायाः । यथाख्यानत्वलाभाय कारिकायां विशेषपदमिति बोध्यम् ।

(ग) स्वमतस्य युक्तियुक्तत्वसम्पादनाय "रीतिरात्मा काव्यस्य" इति वामनमते दत्तमपि दोषमेव पुनः स्मारयितुमाह रसादीनामिति । अर्थात् मुख्या सम्भावनाविषयत्वात् शब्दार्थावेव शरीरं यस्य तस्य । तथा च—"विशिष्टपदरचना रीतिः" इति वामनमते रीतिलक्षणम् । तेन च पदं नाम शब्दविशेषः, शब्दश्च काव्यस्य शरीरमेव । एवञ्च शरीरं कथमात्मा भवितुमर्हतीति "रीतिरात्मा काव्यस्य" इति वामनमतमयुक्तमेवेति भावः ।

(घ) रीतिं विभजते सेति । सा रीतिः पुनश्चतुर्विधा स्यात्—वैदर्भी, गौडी, पाञ्चाली, लाटी

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सा रीतिः । अत्र—(ङ)

३ । माधुर्य्यव्यञ्जकैर्वर्णै रचना ललितात्मिका ॥
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते । [च]

यथा—"अनङ्गमङ्गलभुवः—" इत्यादि (५२६ पृष्ठे) (छ) ।

रुद्रटस्त्वाह—

"असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी ।
वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा च सुविधेया ॥" (ज)

अत्र दशगुणास्तन्मतोक्ताः श्लेषादयः (झ) ।

४ । ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः ॥
समासबहुला गौड़ी—[ञ]

---

चेति । तत्र विदर्भाणां विदर्भदेशीयकवीनामियमिति वैदर्भी । गौड़ानां गौड़देशीयकवीनामियमिति गौड़ी । पाञ्चालानां पाञ्चालदेशीयकवीनामियमिति पाञ्चाली । लाटानां लाटदेशीयकवीनामियमिति च लाटी । लाटिकेति तु संज्ञायां कप्रत्ययश्छन्दःपूरणार्थः । विदेहोत्कलादिदेशोद्भवकवीनां रीतयस्तु एतास्वेव यथासम्भवमन्तर्भूता इति ताः पृथङ् न गणिताः । तथापि 'वैदेही' 'औत्कली' इत्यादिसंज्ञामपहाय वैदर्भ्यादिसंज्ञाकरणे बीजन्तु तस्यास्तस्या रीतेस्तत्र तत्र देशे प्रथमाविर्भावः प्राचुर्य्यं वेति प्रतीयते ।

(ङ) तत्रेति । तासु रीतिषु मध्ये इत्यर्थः ।

(च) वैदर्भीं लक्षयति माधुर्य्येति । माधुर्य्यस्य तदाख्यस्य गुणस्य व्यञ्जकैर्वर्णैः, ललितात्मिका शब्दतः अर्थतश्च सुकोमला, अवृत्तिः सर्वथा समासरहिता, अल्पवृत्तिर्द्विवमात्रपदवृत्तिसमासविशिष्टा वा रचना पदयोजना वैदर्भी नाम रीतिरिष्यते कविभिरिति शेषः ।

(छ) अनङ्गेति । अत्र माधुर्य्यगुणव्यञ्जकवर्णद्वारा अनङ्गेत्यादिपदत्रयमात्रवृत्तिसमासविशिष्टसुकुमारार्थकरचनया वैदर्भी रीतिः ।

(ज) असमस्तेति । असमस्ता सर्वथा समासरहिता, एकं सकृन्मात्रं समस्ता पदद्वयमात्रवृत्तिसमासविशिष्टेत्यर्थः, स्वसम्मतैः श्लेषादिभिर्दशभिर्गुणैर्युक्ता, कादिवर्गाणां द्वितीया वर्णा बहुलाः प्रचुरा यस्यां सा, तथा स्वल्पप्राणानि अतीव्रोच्चारणानि अक्षराणि वर्णा यस्यां सा तादृशी वैदर्भी रीतिः सुविधेया कविना सुन्दरभावेन निबद्धव्या ।

ईदृश्यास्तु वैदर्भ्याः प्रायेणैव लक्ष्यासम्भवाल्लक्षणमिदमसमञ्जसमित्याशयः । इदानीन्तनपुस्तके तु नेदं रुद्रवचनं दृश्यते ।

(झ) स्वमते काव्यप्रकाशमते च त्रिभ्योऽधिकगुणाभावादाह अत्रेति ।

(ञ) गौड़ीं लक्षयति ओज इति । ओजःप्रकाशकैस्तेजोगुणव्यञ्जकैः वर्णैः पुनराडम्बर उत्कटो

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

यथा—"चञ्चद्भुज—" इत्यादि (३२४ पृष्ठे) (ट)।

पुरुषोत्तमस्त्वाह—

"बहुतरसमासयुक्ता सुमहाप्राणाक्षरा च गौड़ीया ।
रीतिरनुप्रास-महिम-परतन्त्रा स्तोकवाक्या च (१) ॥" (ठ)

५ । वर्णैः शेषैः पुनर्द्वयोः ।
समस्त-पञ्चष-पदो बन्धः पाञ्चालिका मता ॥ [ड]

बन्धो रचना गौड़ी ; तथा समासबहुला ओजःप्रकाशकवर्णाभावेऽपि केवलबहुतरपदवृत्तिसमासविशिष्टा रचना च गौड़ी नाम रीतिरिति द्विविधमेव गौड़ीलक्षणं मन्तव्यम्, अन्यथा बहुतरसमासविशिष्टकेवलौजोव्यञ्जकवर्णबन्धस्थले ओजःप्रकाशकवर्णशून्यकेवलसमासबहुलस्थले च रीतिमात्रस्यैवाप्रवेशः स्यात् । अतएव रचनेत्यध्याहृतव्यपदविशेषणतयैव समासबहुलेति स्त्रीलिङ्गेन निर्द्दिष्टम् । एकलक्षणाभिप्राये तु बन्ध इत्यस्य विशेषणतया पुंस्त्वेनैव निर्द्दिश्येत । तत्र ओजःप्रकाशकवर्णबन्धस्थले वीरादिरसानामेव सत्तानियमः, ओजोगुणस्य वीरादिरसेष्वेव व्यवस्थापनात् । समासबाहुल्यस्थले तु न रसनियमः, सर्वेष्वेव रसेषु समासबाहुल्यसम्भवात् ।

(ट) चञ्चदिति । अत्र तु ओजःप्रकाशकवर्णद्वारा आड़म्बरबन्धसद्भावात् समासबाहुल्यसद्भावाच्च निरुक्तस्य द्विविधस्यैव गौड़ीलक्षणस्य सङ्गतिः ।

"उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वम्भर ! विश्वमीशिषे ।
ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः ॥"

अत्र समासबाहुल्याभावेऽपि ओजःप्रकाशकवर्णैः केवलाड़म्बरबन्धसद्भावादेव गौड़ी रीतिः ।

"विकचकमलगन्धैरन्धयन् भृङ्गमालाः सुरभितमकरन्दं मन्दमावाति वातः ।
प्रमदमदनमाद्यद्यौवनोद्दामरामा-रमणरभसखेदस्वेदविच्छेददक्षः ॥"

अत्र प्रथमार्द्धे वैदर्भी रीतिः । द्वितीयार्द्धे तु ओजःप्रकाशकवर्णबन्धाभावेऽपि केवलसमासबाहुल्यादेव गौड़ी रीतिः ।

(ठ) बहुतरेति । बहुतरसमासयुक्ता, सुमहाप्राणानि अतितीव्रप्रयत्नोच्चार्य्याणि अक्षराणि वर्णा यस्यां सा, अनुप्रासस्य महिमा बाहुल्यं तस्य परतन्त्रा अधीना तद्विशिष्टेत्यर्थः, तथा स्तोकमल्पं वाक्यं "वाक्यं स्याद्योग्यताकाङ्क्षा—" इत्यादिलक्षणं यस्यां सा तादृशी च रीतिर्गौड़ीया गौड़ी ।

अनुप्रासभावस्थले बहुवाक्यस्थले चाव्याप्तेरिदमपि लक्षणमसमञ्जसमित्यभिप्रायः ।

(ड) पाञ्चालीं निरूपयति वर्णैरिति । द्वयोर्वैदर्भीगौड्यो रीत्योः शेषैरवशिष्टैः माधुर्य्यगुणौजोगुणयोर्व्यञ्जकभिन्नैरित्यर्थः वर्णैः पुनः, समस्तानि समासविशिष्टानि पञ्च वा षड् वा परिमाणमेषामिति पञ्चषाणि पदानि यस्मिन् तादृशो बन्धो रचना पाञ्चालिका पाञ्चाली नाम रीतिर्मता । अत्र समस्तपञ्चषपद इति मध्यमपरिमाणसमासविशिष्टपदपरम् ।

(१) अक्लीभवाक्या चेति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्वयोर्वैदर्भीगौड्योः। यथा—

"मधुरया मधुबोधितमाधवी-मधुसमृद्धिसमेधितमेधया।
मधुकराङ्गनया मुहुरुन्मद-ध्वनिभृता निभृताक्षरमुज्जगे॥" (ढ)

भोजस्त्वाह—"समस्तपञ्चषपदामोजःकान्तिसमन्विताम्।
मधुरां सुकुमाराञ्च पाञ्चालीं कवयो विदुः॥" (ण)

६। लाटी तु रीतिर्वैदर्भी-
पाञ्चाल्योरन्तरा (१) स्थिता। (त)

यथा—"अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम्।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोड़ताम्रस्तमांसि॥" (थ)

---

(ढ) मधुरयेति। शिशुपालवधषष्ठसर्गे वसन्तवर्णनमिदम्। मधुरया मनोहरया, मधुना वसन्तकालेन बोधिता प्रकाशिता प्रकाशितकुसुमेत्यर्थः या माधवी लता तस्या मधुसमृद्ध्या मधुसम्पदा समेधिता संवर्द्धिता मेधा प्रतिभा यस्यास्तया, तथा उन्मदयतीत्युन्मदस्तं तादृशं ध्वनिं बिभर्त्तीति उन्मदध्वनिभृत् तया, मधुकराङ्गनया भ्रमर्य्या, मुहुरविरतम्, निभृताक्षरमस्पष्टवर्णं यथा स्यात्तथा उज्जगे उच्चैर्गीतम्।

अत्रत्या वर्णा न माधुर्य्यगुणव्यञ्जकाः, न वा ओजोगुणव्यञ्जकाः, समासश्च प्रथमार्द्धे मध्यमपरिमाण एवेति पाञ्चाली रीतिः।

(ण) समस्तेति। कवयः, समस्तानि समासविशिष्टानि पञ्च वा षड़् वा परिमाणमेषामिति पञ्चषाणि पदानि यस्यां ताम्, ओजःकान्तिभ्यां सुसम्मताभ्यां गुणाभ्यां समन्विताम्, मधुरां सुश्रव्यां सुकुमारां कोमलाञ्च रीतिं पाञ्चालीं विदुः। इदानीन्तनभोजग्रन्थे सरस्वतीकण्ठाभरणे तु "आश्लिष्टश्लथभावाञ्च पुराणच्छायमाश्रिताम्" इति पूर्वार्द्धे पाठभेदः।

अत्र ओजःकान्तिभ्यां समुच्चिताभ्यामेवान्वितामित्यर्थकत्वे उक्तोदाहरणे ओजसोऽभावादव्याप्तेरिदमपि लक्षणमसमञ्जसम्। ओजसा कान्त्या वा समन्वितामित्यर्थकत्वे तु ओजोगुणसमन्वितत्वे सुकुमारत्वासम्भवात् लक्षणार्थस्यैवानुपपत्तिरित्याशयः।

(त) लाटीं लक्षयति लाटीति। वैदर्भीपाञ्चाल्यो रीत्योः अन्तरा मध्ये स्थिता रीतिस्तु लाटी। वैदर्भीरीतिघटकैः कतिपयैः पाञ्चालीरीतिघटकैश्च कतिपयैर्वर्णैर्घटिता रचना लाटी रीतिरित्यर्थः।

---

(१) अन्तरे इति पाठान्तरम्।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कश्चिदाह—"मृदुपदसमाससुभगा युक्तैर्वर्णैर्न चातिभूयिष्ठा ।
उचितविशेषणपूरितवस्तुन्यासा भवेल्लाटी ॥" (द)

अन्ये त्वाहुः—"गौड़ी डम्बरबन्धा स्याद्वैदर्भी ललितक्रमा ।
पाञ्चाली मिश्रभावेन लाटी तु मृदुभिः पदैः ॥" (ध)

७ । क्वचित्तु वक्त्राद्यौचित्यादन्यथा रचनादयः ॥ (न)

वक्त्रादीत्यादिशब्दाद्वाच्यप्रबन्धौ । रचनादीत्यादिशब्दाद्वृत्तिवर्णौ (प) । तत्र वक्त्रौचित्याद्यथा—

---

(य) अयमिति । पद्मिनीनां मुद्राभञ्जनः सङ्कुचितभावनाशकः प्रकाशक इत्यर्थः, उदयगिरेर्या वनाली वनश्रेणी तस्या बालमन्दारपुष्पं सद्योविकसितमन्दारकुसुमस्वरूपः अरुणवर्ण इत्यर्थः, विरहेण रात्रौ परस्परविच्छेदेन विधुरं विह्वलं यत् कोकद्वन्द्वं चक्रवाकमिथुनं तस्य बन्धुः पुनःपरस्परमेलनसम्पादनेन बान्धवः, तथा कुपितस्य कपेर्वानरस्य कपोलक्रोड़वत् गण्डमध्यभागवत् ताम्रस्ताम्रवर्णः, अयं सूर्यः, तमांसि अन्धकारान् विभिन्दन् नाशयन् उदयति ।

अत्र 'द्र' 'न्द' 'न्द्व' 'न्धु' 'न्द' इत्येते वर्णा माधुर्य्यव्यञ्जकतया वैदर्भीघटकाः, अपरे च वर्णाः पाञ्चालाघटका इति लाटी रीतिः ।

(द) मृद्विति । मृदूनां सुकुमाराणामिव पदानां समासेन सुभगा मनोहरा, युक्तैः संयुक्तैर्वर्णैः अतिभूयिष्ठा अतिबहुला न च बहुतरसंयुक्तवर्णैरविशिष्टेत्यर्थः, तथा उचितैरुपयुक्तैः सार्थकैरिति तात्पर्य्यम्, विशेषणैः पूरितो वस्तुन्यासः अर्थनिर्देशो यस्यां सा तादृशी रचना लाटी रीतिर्भवेत् ।

मृदुपदानामेव समासावश्यकत्वे सर्ववादिसिद्धलाटीस्थले "अयमुदयति" इत्यादौ "कोकद्वन्द्वबन्धु" "कपोलक्रोड़" इत्युभयत्र प्रगाढ़पदानां समासादव्याप्तिरिति लक्षणमिदमपि न सुष्ठुतरमित्याशयः ।

(ध) गौड़ीति । डम्बर उत्कटो बन्धो रचना यस्यां सा तादृशी रीतिर्गौड़ी स्यात् ; ललितो मधुरः क्रमः शब्दविन्यासपरम्परा यस्यां सा तथोक्ता रीतिर्वैदर्भी स्यात् ; मिश्रभावेन एकत्र गौड़ीवैदर्भ्योः सम्मिश्रणेन सम्पन्ना रीतिः पाञ्चाली स्यात् ; तथा मृदुभिरेव पदैस्तु सम्पन्ना रीतिर्लाटी स्यात् ।

ईदृशलक्षणस्वीकारे डम्बरप्रयोगशून्यकेवलसमासबहुलस्थले गौड़ी न स्यात् । वैदर्भी पाञ्चाली च समासे असमासे वा स्यादिति सन्देहः, "अयमुदयति" इत्यादौ च "कोकद्वन्द्वबन्धुः" "कपोलक्रोड़" इत्यनयोः प्रगाढ़पदसत्त्वाल्लाटी न स्यात् इत्यतो नेदमपि लक्षणं सङ्गच्छत इत्यभिप्रायः ।

(न) क्वचिदिति । क्वचित्तु वक्त्रादीनां वक्तृप्रभृतीनाम् औचित्यात् स्वभावानुसारेण न्याय्यत्वात्, अन्यथा योग्यविपरीता अपि रचनादयो रीतिप्रभृतयः स्युः । तथात्वे च न प्रतिकूलवर्णतादोष इति भावः ।

(प) कारिकायामादिशब्दाभ्यां ग्राह्यान् दर्शयति वक्त्रादीति । वाच्यो वक्तव्यविषयः, प्रबन्धो ग्रन्थविशेषः । वृत्तिश्छन्दः, वर्णोऽक्षरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥" (फ)

अत्र वाच्यस्य क्रोधाद्यनभिव्यञ्जकत्वेऽपि (१) भीमसेनवक्तृत्वेनोद्धता रचनादयः (ब)। वाच्यौचित्याद्यथोदाहृते—"मूर्द्धव्याधूयमान—" इत्यादौ (५०९ पृष्ठे) (भ)। प्रबन्धौचित्याद्यथा—नाटकादौ रौद्रेऽपि अभिनय-प्रतिकूलत्वेन न दीर्घसमासादयः (म)। एवमाख्यायिकायां शृङ्गारेऽपि न

(फ) मन्थेति। पद्यमिदं वेणीसंहारे। मन्थेन मन्थनेन आयस्तम् उद्वेलितं यदर्णवाम्भः समुद्र-जलं तेन प्लुतं पूर्णं कुहरं रन्ध्रं गुहा यस्य स तादृशश्चलन् भ्राम्यन् यो मन्दरः पर्वतस्तस्य ध्वानः शब्द इव धीरो गम्भीरः, गर्जन्ती या प्रलयघनघटा प्रलयकालीनमेघसमूहः तस्या अन्योन्यसंघट्टवत् परस्परसंघर्षजनित-शब्दवत् चण्डो भयङ्करः। कृष्णाया द्रौपद्याः क्रोधस्य अग्रदूतः प्रथमविज्ञापकदूतस्वरूपः, कुरुकुलनिधनस्य उत्पातनिर्घातवात औत्पातिकनिर्घातवायुशब्दस्वरूप इत्यर्थः, तथा कोणस्य वादनदण्डस्य आघातेषु सत्सु अस्मत्सिंहनादस्य यत् प्रतिरसितं प्रतिध्वनिस्तस्य सखा सदृशः, अयं दुन्दुभिः केन ताडितः दुन्दुभिताडनेन शब्दः कृत इत्यर्थः।

निर्घातमाह तिथितत्त्वे—

"यदाऽन्तरीक्षे बलवान् मारुतो मरुताहतः।
पतत्यधः स निर्घातो जायते वायुसम्भवः॥"

(ब) अत्रेति। वाच्यस्य अर्थस्य। क्रोधादीत्यादिपदेन उत्साहजुगुप्सयोः संग्रहः। भीमेति। एतेन भीमस्योद्धतस्वभावत्वं सूचितम्। रचनादय इत्यादिशब्देन दीर्घसमास-महाप्राणवर्णानां ग्रहणम्। ननूदाहृते तादृशशब्दस्य उद्धतत्वेनैव वाच्योद्धतत्वादुद्धतरचनादयो युज्यन्ते, किमुद्धतस्वभावभीमसेनवक्तृत्व-रूपयुक्त्वोपायकल्पनयेति चेत्—"भो लङ्केश्वर! दीयतां जनकजा रामः स्वयं याचते" इत्यादिकमेव शुद्धोदा-हरणम्। तथा अत्र वाच्यस्योत्साहाभिव्यञ्जकत्वेऽपि कोमलस्वभावरामवक्तृकत्वेन कोमला रचनादयः।

(भ) वाच्येति। "मूर्द्धव्याधूयमान—" इत्यादौ कोमलस्वभावसूत्रधारवक्तृकत्वेऽपि तादृशताण्डव-स्योद्धततया उद्धतवाच्यत्वादुद्धता रचनादयः।

(म) प्रबन्धेति। नाटकादावित्यादिशब्देन प्रकरणादीनां ग्रहणम्। रौद्रेऽपीति। शृङ्गारादि-कोमलरसेषु का कथा उत्कटे रौद्रादिरसेऽपीत्यर्थः। एतत्तु गद्यपरम्, पद्ये दीर्घसमासादावपि अभिनय-प्रतिकूलत्वासम्भवात्। यथा—"मय्येव भ्रुकुटिधरः संवृत्तः ?।" एतेन उत्तररामचरितादौ गद्ये दीर्घ-समासादयः प्रतिकूलवर्णताख्यदोषा एवेति सूचितम्।

(१) क्रोधाद्यभिव्यञ्जकत्वेऽपि इति पुस्तकान्तरेषु पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मसृणवर्णादयः (य)। कथायां रौद्रेऽपि नात्यन्तमुद्धताः (र)। एवमन्यदपि ज्ञेयम् (ल)।

इति साहित्यदर्पणे रीतिविवेचनो नाम (१)

नवमः परिच्छेदः ॥९॥

---

(य) एवमिति। मसृणवर्णैः कोमलवर्णैः, आदिशब्दात् यथासम्भवसंयुक्तवर्णमाधुर्य्यव्यञ्जकवर्णदीर्घसमासाभावानां ग्रहणम्। यथा दशकुमारचरिते—"किञ्चिद्विकसदिन्दीवरकह्लारकैरवराजीवराजि—" इत्यादि। एतत्तु कदाचित्सम्भवपरत्वेन प्रदर्शनमात्रम्। वस्तुतस्तु एतद्व्यभिचार एव भूयान्। एवमुत्तरत्रापि।

(र) कथायामिति। उद्धता वर्णा इति शेषः। यथा कादम्बर्य्याम्—"निशितत्रिशूलदारितान्धकमहासुर—" इत्यादि।

(ल) एवमिति। केवलशृङ्गारिनायकस्य कृत्रिमकोपे रौद्रेऽपि नात्यन्तमुद्धता वर्णाः। यथा शाकुन्तले—

"कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम्।

अयमाचरत्यविनयं मुग्धासु तपस्विकन्यकासु ॥"

इति महामहोपाध्याय-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां साहित्यदर्पणटीकायां कुसुमप्रतिमायां रीतिविवेचनो नाम नवमः परिच्छेदः ॥९॥

---

(१) रीतिविवेको नाम इत्यपि पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# दशमः परिच्छेदः ।

———:०:———

अथावसरप्राप्तानलङ्कारानाह—(क)

१ । शब्दार्थयोरस्थिरा ये धर्म्माः शोभातिशायिनः ।
रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत् ॥ (ख)

(क) इदानीमलङ्कारनिरूपणे अवसरसङ्गतिं दर्शयति अथेति । अत्राथशब्दः अलङ्कारनिरूपणरूपकार्य्यान्तरारम्भे निरतिशयगहनस्य तस्य मङ्गलार्थं वा, रीतिनिरूपणानन्तर्य्यस्याभिधानक्रमेणैव प्राप्ततया तत्सूचनाय पुनरथशब्दोपादानस्य वैयर्थ्यापत्तेः । कार्य्यान्तराभावोऽवसरः । तथा च "उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः" इत्युद्देशक्रमेण गुणनिरूपणानन्तरं प्राप्तमप्यलङ्कारनिरूपणं सूचीकटाहन्यायेनापहाय कृते रीतिनिरूपणे प्राप्तो योऽवसरस्तेन प्राप्तान् पूर्वोद्देशवशान्निरूपणप्रसक्तान् अलङ्कारानाह निरूपयति मूलकार इति शेषः ।

(ख) अज्ञाते सामान्ये तद्विशेषज्ञानासम्भवादादौ सामान्यमलङ्कारलक्षणमाह शब्देति । अत्र शब्दार्थयोरित्युपलक्षणम्, रसादिधर्म्मस्वरूपाणां रसवदाद्यलङ्काराणामपि वक्ष्यमाणत्वात् । तथा शब्दार्थयोरिति साहित्यमभिधानक्रियापेक्षया, गर्गा भोज्यन्तामित्यादिवत् ; न तु तद्धर्म्मसम्बन्धापेक्षया अनुप्रासादीनां केवलशब्दधर्म्मत्वात् उपमादीनाञ्च केवलार्थधर्म्मत्वात् । अस्थिराः सर्वत्र अस्थायिनः शब्दे अर्थे वा स्थित एव अलङ्कारात्मकतद्धर्म्मैरपि स्थातव्यमिति नियमरहिता इत्यर्थः, निरलङ्कारयोरपि शब्दार्थयोर्बहुलमुपलम्भादिति भावः । शोभां काव्यस्य सौन्दर्य्यम् अतिशाययन्ति अतिशयेनोत्पादयन्तीति शोभातिशायिनः । रसादीनित्यादिशब्देन रसाभास-भाव-भावाभास-सन्धि-शबलतानां तेषामभावस्थले तयोः शब्दार्थयोरपि च ग्रहणम् । एतेन रसाद्यभावस्थले रामचरणेन यदलङ्काराणां गौणत्वमभिहितं तदपास्तम्, मुख्यत्वसम्भवे गौणत्वाङ्गीकारस्यान्याय्यत्वात् । उपकुर्वन्त उत्कर्षयन्तः । अलङ्क्रियते काव्यमेभिरित्यलङ्कारा इति करणव्युत्पन्नोऽयमलङ्कारशब्दः । अङ्गदं केयूरम् आदिशब्दात् हारादीनां ग्रहणम् । अस्थिराः शोभातिशायिनो रसादीनुपकुर्वन्तः शब्दार्थयोर्ये धर्म्मास्ते अङ्गदादिवदलङ्कारा इत्यन्वयः । एतेन—

साक्षात् परम्परया वा रसाद्युत्कर्षजनकत्वे सति अनियतशोभातिशायिकाव्यधर्म्मत्वमलङ्कारत्वम् ।

इत्यलङ्कारलक्षणं पर्य्यवसितम् । तथा च साक्षादेव रसाद्युत्कर्षजनकत्वं रसवदाद्यलङ्काराणाम् । स्वाश्रयव्यङ्ग्यतारूपपरम्परासम्बन्धेन रसाद्युत्कर्षजनकत्वमनुप्रासोपमादीनाम् । काव्यशब्देन च स्वशरीरभूतौ शब्दार्थौ स्वात्मभूता रसादयश्चेति समुदाय एवोच्यत इति सर्वत्र लक्षणसङ्गतिः । तत्र कालिदासप्रणीतत्वादिरूपकाव्यधर्म्मेऽतिव्याप्तिवारणाय सत्यन्तदलम् । गुणेऽतिव्याप्तिवारणाय अनियतेति । शब्दे अर्थे च

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—अङ्गदादयः शरीरशोभातिशायिनः शरीरिणमुपकुर्वन्ति, तथा-ऽनुप्रासोपमादयः शब्दार्थशोभातिशायिनो रसादेरुपकारका ये ते अलङ्काराः (१) (ग)। अस्थिरा इति नैषां गुणवदावश्यकी स्थितिः (घ)।

शब्दार्थयोः प्रथमं शब्दस्य बुद्धिविषयत्वात् शब्दालङ्कारेषु वक्तव्येषु शब्दार्थालङ्कारस्यापि पुनरुक्तवदाभासस्य चिरन्तनैः शब्दालङ्कारमध्ये लक्षितत्वात् प्रथमं तमेवाह—(ङ)

**२। आपाततो यदर्थस्य पौनरुक्त्यावभासनम् (२)।**
**पुनरुक्तवदाभासः स भिन्नाकारशब्दगः॥ (च)**

---

यस्य कस्यचिद्गुणस्यावश्यस्थातव्यत्वात्तेषां नियतत्वमेवेति बोध्यम्। रीतिष्वतिव्याप्तिवारणाय च शोभातिशायीति विशेषणम्। रीतीनां शोभामात्रजनकत्वमेव, न पुनः शोभातिशयजनकत्वमित्यवधेयम्।

(ग) कारिकागतानामितरशब्दानां सुगमार्थताभिप्रायेण केवलमङ्गदादिवदिति सादृश्यमात्रं स्पष्टयति यथेति। शरीरस्य शोभातिशायिनः शोभातिशयजनकाः, शरीरिणं तच्छरीरगतमात्मानम्, उपकुर्वन्ति सन्तोषोत्पादनेनानुकूलयन्ति। अनुप्रासादयः शब्दालङ्काराः शब्दशोभाम् उपमादयश्चार्थालङ्कारा अर्थशोभामतिशाययन्तीत्युभयवर्गप्रदर्शनायोभयोपादानम्। शब्दार्थयोः शोभातिशायिनः शोभातिशयजनकाः। उपकारका उत्कर्षजनकाः। ये धर्माः।

(घ) अस्थिरा इत्यस्य व्यावृत्तिमाह अस्थिरा इति। एषाम् अलङ्कारत्वेनाभिमतानां शब्दार्थधर्माणाम्। आवश्यकी नियता। तथा च रसादिमति शब्दे अर्थे च यस्य कस्यचिद्गुणस्य नियतैव स्थितिः, अलङ्काराणान्तु न तथा, तेषां कादाचित्कत्वादिति अस्थिरा इत्यनेन गुणो व्यावर्त्यत इति भावः।

(ङ) प्रथमं शब्दालङ्काराणां लक्षणकरणे युक्तिं प्रदर्शयन् तत्रापि शब्दार्थोभयालङ्काररूपस्य पुनरुक्तवदाभासस्य सर्वप्रथमं लक्षणकरणे युक्तिं प्रदर्शयति शब्देति। शब्दार्थयोर्मध्ये। प्रथममर्थज्ञानात् पूर्वम्। शब्दज्ञानानन्तरमेव तत्सङ्केतग्रहद्वारा अर्थस्य ज्ञायमानत्वादिति भावः। प्रथमं शब्दालङ्कारेषु वक्तव्येष्वित्यर्थः। शब्दार्थालङ्कारस्य शब्दार्थोभयनिरूपितालङ्कारस्य। चिरन्तनैः प्राचीनैः। लक्षितत्वात् कृतलक्षणकत्वात्। प्राचीनानां रीतिमनुसरतैव पुनरुक्तवदाभासस्य प्रथमं लक्षणं कृतम्, अन्यथा अस्योभयालङ्कारत्वात् काव्यप्रकाशकारवदुभयालङ्कारमध्य एव लक्षणं क्रियेतेति भावः।

(च) आपातत इति। आपाततः श्रवणमात्रेणैव, न तु पर्य्यालोचनात् परमपीति भावः, अर्थस्य अभिधेयस्य यत् पौनरुक्त्येन पुनरुक्तत्वप्रकारेण अवभासनं प्रतीतिः, भिन्नाकारशब्दगः विभिन्नाकृतिविशिष्टशब्दवर्त्ती, स पुनरुक्तवदाभासो नाम अलङ्कार उच्यत इति शेषः। परत्र पुनरुक्तेति भावे क्तः। तेन अर्थस्य पुनरुक्तावत् पुनरुक्तत्ववत् आभासात् आपाततः प्रतीतेरेवास्य पुनरुक्तवदाभास इति संज्ञा। अत्र

---

(१) क्वचित् ये ते इति नास्ति। (२) पौनरुक्त्येन भासनमिति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उदाहरणम्—"भुजङ्गकुण्डली व्यक्त-शशि-शुभ्रांशु-शीतगुः ।
जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः ॥" (छ)

अत्र भुजङ्गकुण्डल्यादिशब्दानाम् आपातमात्रेण सर्पाद्यर्थतया पौनरुक्त्यप्रतिभासनम् । पर्य्यवसाने तु भुजङ्गरूपं कुण्डलं विद्यते यस्येत्याद्यन्यार्थत्वम् (ज)। पायादव्यादित्यत्र क्रियागतोऽयमलङ्कारः, "पायात्" इत्यस्य "अपायात्" इत्यत्र पर्य्यवसानात् (झ)।

भुजङ्गकुण्डलीतिशब्दयोः प्रथमस्यैव परिवृत्तिसहत्वम् । हरः शिव इति द्वितीयस्यैव । शशि-शुभ्रांशु इति द्वयोरपि । "भाति सदानत्यागः" इति न द्वयोरपीति शब्दपरिवृत्तिसहत्वासहत्वाभ्यामस्योभयालङ्कारत्वम् (ञ)।

---

भिन्नाकारशब्दग इत्यभिधानात् भिन्नाकारशब्दगतत्वे पुनरुक्तवदाभासः, अभिन्नाकारशब्दगतत्वे तु "स सुरभिं सुरभिं सुमनोभरैः" इत्यादौ यमकमेवेति बोध्यम् ।

(छ) शब्दस्य अभङ्गभङ्गाभ्यामयं द्विविधः ; तत्र प्रथमं शब्दस्य अभङ्गे उदाहरणं भुजङ्गेति । भुजङ्ग एव कुण्डलमस्यास्तीति भुजङ्गकुण्डली, व्यक्तः प्रकाशितः शशिवत् कर्पूरवत् शुभ्रांशुः श्वेतकिरणः शीतगुः शीतरश्मिश्चन्द्रो यस्मिन् सः "कर्पूरश्चन्द्रसंज्ञकः" इत्यमरः, तथा चेतोहरो मनोहरः, शिवो महादेवः, सदा अपायाद्विपदः न केवलं मां जगन्त्यपि भुवनान्यपि अव्यात् रक्ष्यात् इत्याशीर्विभक्तिः ।

अत्र भुजङ्गकुण्डलीति सर्पवाचकयोः शब्दयोः, शशि-शुभ्रांशु-शीतगुरिति चन्द्रवाचकानां शब्दानाम्, पायादव्यादिति रक्षार्थकक्रिययोश्च श्रवणमात्रेणैव तत्तदर्थस्य पुनरुक्ततया प्रतीतेः, पर्य्यालोचने तु उक्तव्याख्यानरूपभेदात् पुनरुक्तवदाभासः ।

(ज) उक्तं लक्ष्ये लक्षणं सङ्गमयति अत्रेति । प्रथमादिपदेन शशिशब्दप्रभृतीनां द्वितीयादिपदेन च चन्द्राद्यर्थानां ग्रहणम् । आपातमात्रेण श्रुतावुपस्थितिमात्रेण । पौनरुक्त्यप्रतिभासनं पुनरुक्ततया प्रतीतिः । पर्य्यवसाने तु उपस्थितेः परन्तु अर्थानुसन्धानवेलायान्त्वित्यर्थः । तृतीयादिपदेन कर्पूराद्यन्यार्थानां ग्रहणम् । अन्यार्थत्वमिति । तत्तु व्याख्यायामेव प्रदर्शितम् ।

(झ) "भिन्नाकारशब्दगः" इत्यत्र शब्दपदस्य सामान्यमुखप्रवृत्ततया अर्थबोधकशब्दमात्रपरत्वादाह पायादिति । क्रियागतः क्रियावाचकशब्दाश्रयनिरूपितः । नन्वस्तु क्रियागतः, तथात्वेऽपि कथमनयोरर्थभेद इत्याह पायादिति । इत्यस्य शब्दस्य । इत्यत्र रूपे । पर्य्यवसानात् सन्धौ लुप्तस्य अकारस्य प्रश्लेषकल्पनेन परिणतत्वात्, अन्यार्थत्वमित्यनुषज्यते ।

(ञ) ननु कथमस्य शब्दार्थोभयालङ्कारत्वमित्याह भुजङ्गेति । प्रथमस्यैव भुजङ्गशब्दस्यैव । एवशब्देन द्वितीयस्य व्यवच्छेदः । परिवृत्तिसहत्वं सर्पार्थकशब्दान्तरप्रयोगेण परिवर्त्तनेऽपि प्रकृतपुनरुक्तवदाभासघटकत्वम् । अत्रेदमवधेयम्—अन्वयव्यतिरेकाभ्यामेव गुणदोषालङ्काराणां शाब्दत्वस्य आर्थत्वस्य तदुभयरूपत्वस्य च व्यवस्था ; अन्यथा शब्दार्थयोर्नित्यसम्बन्धतया सर्वत्रैव सर्वेषामेव शाब्दत्वार्थत्वसङ्करा-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ३। अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्। (ट)

पक्षे स्तङ्गेऽव्यवस्थैव न स्यात्। तथा च "भुजङ्गकुण्डली" इत्यत्र भुजङ्गशब्दस्थाने पन्नगशब्दोपादानेऽपि पुनरुक्तवदाभासस्य सम्भव एव, सर्पभिन्नार्थकसुवर्णादिशब्दोपादाने तु तस्य न प्रसक्तिरपि; इत्यतः सर्प-रूपार्थसत्त्वे पुनरुक्तवदाभाससत्ता, सर्परूपार्थासत्त्वे तु पुनरुक्तवदाभासासत्ता, इत्यन्वयव्यतिरेकाभ्यां भुजङ्गेत्यंशे पुनरुक्तवदाभासस्य आर्थत्वम्। कुण्डलीतिशब्दस्य तु न परिवृत्तिसहत्वम्। तथाहि कुण्डलिशब्दस्थाने सर्पार्थकभुजगशब्दोपादाने सर्पभिन्नार्थकभूषणादिशब्दोपादाने वा पुनरुक्तवदाभासस्यासम्भव एव, आद्ये पर्य्यवसानेऽप्यर्थभेदासम्भवात् द्वितीये आपाततोऽपि पौनरुक्त्यावभासनाभावात्। एवञ्च कुण्डलिशब्दसत्त्वे पुनरुक्तवदाभाससत्ता कुण्डलिशब्दासत्त्वे तु पुनरुक्तवदाभासासत्तेति कुण्डलीत्यंशे पुनरुक्तवदाभासस्य शाब्द-त्वम्। तेन चास्य शब्दार्थोभयघटितत्वात्तदुभयालङ्कारत्वम्। एवमेवोत्तरत्रापि पर्य्यालोचनीयम्।

द्वितीयस्यैव शिवशब्दस्यैव परिवृत्तिसहत्वमित्यनुषङ्गः, न तु हर इत्यस्यापीत्यर्थः। तेन शिव इत्यंशे आर्थत्वं हर इत्यंशे च शाब्दत्वमिति भावः। द्वयोः शब्दयोः अपिशब्दात् तृतीयस्य शीतगुशब्दस्य च परिवृत्ति-सहत्वमित्यन्वयः। तेन द्वितीयपादे केवलार्थत्वमेवेत्याशयः। द्वयोरपि दानत्यागशब्दयोर्न परिवृत्तिसहत्वमिति सम्बन्धः। तेनात्र केवलशाब्दत्वमेवेत्यभिप्रायः। इति हेतोः, शब्दानां परिवृत्तेः परिवर्त्तनस्य सहत्वमसहत्वञ्च ताभ्याम्, अस्य पुनरुक्तवदाभासस्य।

भातीति श्लोकसमुदायो यथा काव्यप्रकाशे—

"अरिवधदेहशरीरः सहसारथिसूततुरगपादातः। भाति सदानत्यागः स्थिरतायामवनितलतिलकः॥"

इदमेव च शब्दस्य भङ्गे उदाहरणम्।

अस्यार्थः—न विद्यते रथी रथारोही सूतः सारथिः तुरगोऽश्वः पादातं पदातिसमूहश्च यस्य सः अरथिसूततुरगपादातोऽपि सन्, सहसा शीघ्रमेव, अरीणां वधदा विनाशविधायिनी ईहा चेष्टा यस्मिन् तदरि-वधदेहं शरीरं यस्य स तथोक्तः स्थिरतायाम् अगः पर्वत इव, तथा अवनितलतिलकश्च भवान्, सत्सु साधु-जनेषु आनत्या विशेषनम्रभावेन विद्यमानः सन् भाति राजते।

अत्र देहशरीरयोः सारथिसूतयोः दानत्यागयोश्च शब्दयोरापाततोऽर्थस्य पुनरुक्ततया प्रतीतेः पर्य्यवसाने तु व्याख्यातरूपभेदात् पुनरुक्तवदाभासः। अत्र देह-सारथि-दानशब्दघटने शब्दान्तराणां भङ्गः।

(ट) शब्दालङ्कारेष्वपि अतिप्रसिद्धतया प्रथममनुप्रासमेव सामान्येन लक्षयति अन्विति। स्वरस्य वैषम्ये सत्यपि अपिशब्दात् साम्ये सत्यपि च यत् शब्दसाम्यं व्यञ्जनवर्णमात्रसादृश्यम्, सोऽनुप्रास इत्यर्थः। अत्र एकस्थानोच्चार्य्यत्वरूपं साम्यं ग्राह्यम्। एकस्थानोच्चार्य्यत्वञ्च केषाञ्चिद्व्यञ्जनानाम् एकविधाकृतिमत्त्वेन केषाञ्चिच्च एकतालव्यत्वादिना सम्भवति। तेन स्वरस्य साम्ये वैषम्ये वा एकस्थानोच्चार्य्यव्यञ्जनावृत्तिरनुप्रास इति फलितम्। तत्र एकतालव्यादिव्यञ्जनावृत्तौ श्रुत्यनुप्रासः, एकविधाकृतिमद्व्यञ्जनावृत्तौ तु अन्ये अनुप्रासा इति सर्वत्र लक्षणसङ्गतिः। एवम् अन्त्यानुप्रासलाटानुप्रासयोः स्वरस्य साम्यमेवावश्यकम्, अन्येषान्तु न तथा।

न चैवं स्वरव्यञ्जनयोरुभयोरेव साम्ये यमकेऽप्यस्य लक्षणस्य सङ्गतेरतिव्याप्तिरिति वाच्यम्, सामान्यविशेष-न्यायेनास्य यमकेतरविषयत्वकल्पनात् तत्रानुप्रासः सामान्यं यमकन्तु विशेष इति।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वरमात्रसादृश्यन्तु वैचित्र्याभावान्न गणितम् (ठ)। रसाद्यनुगतत्वेन प्रकर्षेण न्यासोऽनुप्रासः (ड)।

४। छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा ॥ (ढ)

छेकश्छेकानुप्रासः (ण)। अनेकधेति स्वरूपतः क्रमतश्च (त)। "रसः सरः" इत्यादेः क्रमभेदेन सादृश्यं नास्यालङ्कारस्य विषयः (थ)। उदाहरणं मम तातपादानाम्—(द)

---

(ठ) ननु कारिकायां स्वरस्य वैषम्येऽपीत्यभिधानात् शब्दपदेन व्यञ्जनमात्रमेव गृहीतम्, किन्तु केवलस्वराणामपि तद्वदेव साम्यसम्भवे कथं तन्न गृहीतमित्याह स्वरेति। स्वरमात्रसादृश्यन्तु केवलस्वराणामेव साम्यन्तु। न गणितम् अनुप्रासत्वं न लक्षितम्। व्यञ्जनसाम्याभावे केवलस्वरसाम्यं नानुप्रास इत्यर्थः। वैचित्र्याभावात् वैचित्र्यस्यैव चालङ्काररूपत्वादिति भावः। तेन "नर पच" इत्यत्र व्यञ्जनसाम्याभावे अकार-रूपस्वरचतुष्टयमात्रस्य साम्ये नानुप्रास इति बोध्यम्।

(ड) अनुप्रासशब्दस्य योगार्थं दर्शयति रसादीति। आदिपदेन रसाभासादीनां ग्रहणम्। रसादीनाम् अनुगतत्वेन अनुकूलकत्वेन इत्यनुशब्दस्यार्थः। प्रकर्षेणेति प्रशब्दस्यार्थः। न्यासः स्थापनं प्रयोग इति आसशब्दस्यार्थः।

(ढ) छेकानुप्रासं लक्षयति छेक इति। व्यञ्जनसङ्घस्य व्यञ्जनवर्णसमूहस्य सकृत् एकवारमात्रम् अनेकधा अनेकप्रकारेण साम्यं सादृश्यं छेकश्छेकानुप्रासः। समूहो नाम बहूनामेव सम्भवति, न पुनरेकस्य द्वयोर्वा। तेन एकक्रमेणावस्थितानां बहुतरव्यञ्जनवर्णानामेकविधाकृतिमत्त्वरूपमेकवारमात्रसादृश्यं छेकानुप्रास इत्यर्थः। अत्र बहुतरेत्युपादानात् "धृतचूताङ्कुर" इत्यत्र केवलतकारद्वयस्य सादृश्ये वृत्त्यनुप्रासविषये नातिव्याप्तिः। एकैकस्य दलस्य मध्ये वर्णान्तरव्यवधाने तु सादृश्ये नायमलङ्कारः "सन्निहिते बुद्धिरन्तरङ्गा" इति न्यायात्। यथा—"मुनिर्जयति योगीन्द्रो जलं सिन्धोः पपौ च यः।" अत्र हि "ज यो" "ज यः" इत्यनयोर्द्वयोरेकैकस्यैव मध्ये वर्णान्तरैर्व्यवधानम्। तेनात्र श्रुत्यनुप्रास एव।

अस्य सामान्यरूपतया विशेषेतरपरत्वनियमाद्विशेषभूतयोरन्त्यानुप्रासलाटानुप्रासयोर्यथासम्भवं प्राप्तावपि नातिव्याप्तिरित्यवधेयम्।

(ण) छेक इति। एतेन भीमसेनशब्दस्य भीम इतिवत् छेकानुप्रासशब्दस्य छेक इत्येकदेश एव कारिकायामुपात्तः, लोके छेकानुप्रासशब्दस्यैव प्रसिद्धत्वादित्यभिप्रायः सूचितः।

(त) अनेकधेतीति। उभयत्रापि तृतीयान्तात्तस्। तेन स्वरूपत एकविधाकृतिमत्त्वेन, क्रमतश्च एकविधपौर्वापर्येण चेत्यर्थः। उत्तरत्राप्येवम्।

(थ) तत्र एकविधाकृतिमत्त्वरूपसाम्यस्यैव लक्ष्यतया तत्प्राप्त्यसम्भवात् क्रमत इत्यस्य व्यावृत्तिमाह रस इति। क्रमभेदेन भिन्नपौर्वापर्येण, सादृश्यं केवलैकविधाकृतिमत्त्वेन साम्यम्। अस्य छेकानुप्रासस्य, न विषयो न स्थानम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"आदाय वकुलगन्धानन्धीकुर्वन् पदे पदे भ्रमरान् ।
अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः ॥" (ध)

अत्र "गन्धानन्धी" इति संयुक्तयोः, "कावेरीवारि" इत्यसंयुक्तयोः, "पावनः पवनः" इति बहूनां व्यञ्जनानां सकृदावृत्तिः (न) ।

छेको विदग्धः, तत्प्रयोज्यत्वादेष छेकानुप्रासः (प) ।

५ । अनेकस्यैकधा साम्यमसकृद्वाऽप्यनेकधा ।
एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते ॥ (फ)

---

(द) उर्दांत । अत्र ताते गौरवातिशयद्योतनाय तातपादशब्दस्यैव ताते लक्षणा । तद्गौरवादेव च बहुवचनम् । स्ववंशपरम्पराया एव च कवित्वसुख्यातिं सूचयितुमिदमभिहितम् । तथा चालङ्कार-शास्त्रीयोदाहरणानां सम्भवद्विषयताभावप्रदर्शनप्रयोजनतया श्रुत्यादिवदाप्तवाक्यत्वावश्यकत्वाभावात् ईदृशमुदाहरणं नादृढमित्यवधेयम् । एवमन्यत्रापि ।

(ध) आदायेति । कावेर्या नद्याः वारिणा तद्वारिस्पर्शेनेत्यर्थः पावनः पवित्रताजनकः अयं पवनो वायुः, वकुलानां कुसुमानां गन्धानादाय पदे पदे स्थाने स्थाने भ्रमरान् अन्धीकुर्वन् तद्गन्धप्रापणेन तन्मधुपानक्षोभजननादन्धवन्मुग्धान् कुर्वन् मन्दमन्दम् एति आगच्छति ।

(न) उदाहृते लक्षणं योजयति अत्रेति । संयुक्तयोर्न्कारसंयुक्तयोर्धकारयोः । असंयुक्तयोर्वकाररिकारयोः । बहूनामसंयुक्तानामिति शेषः । सकृदावृत्तिरेकवारमात्रं पुनरुच्चारणम् । अतएवात्र छेकानुप्रास इति भावः । अत्र संयुक्तयोरसंयुक्तयोरित्यनेन संयोगासंयोगनैरपेक्ष्येण केवलव्यञ्जन-सामान्यस्यैव उक्तविधसादृश्ये अयमलङ्कारो भवतीति दर्शितम् । "पदे पदे" "मन्दमन्दम्" इति वीप्सितपदेषु तु उक्तविधसाम्यसत्त्वेऽपि वैचित्र्याभावान्नायमलङ्कार इति बोध्यम् ।

(प) इदानीं छेकानुप्रासशब्दस्य व्युत्पत्तिमाह छेक इति । विदग्धः सुरसिकपण्डितः । तथा च रभसः—"छेकश्चिपु विदग्धेषु गृहासक्तमृगाण्डजे ।"

(फ) वृत्त्यनुप्रासं लक्षयति अनेकस्येति । अनेकस्य व्यञ्जनवर्णस्य, एकधा स्वरूपत एव सकृत्साम्यं वृत्त्यनुप्रास इत्येकं लक्षणम् । अत्र एकधेत्यभिधानात् छेकानुप्रासे नातिव्याप्तिः । अनेकस्य व्यञ्जनस्य एकधा स्वरूपत एव असकृद्वा साम्यं वृत्त्यनुप्रास इति द्वितीयं लक्षणम् । अत्र तु एकधेति असकृदिति चोक्तत्वात् छेकानुप्रासे नातिप्रसङ्गः । प्रथमे पादे सकृदसकृदित्यनयोरेकस्याप्यनभिधानात् सामान्यत एव तदुभयं लभ्यत इति बोध्यम् । वा अथवा, अनेकस्य व्यञ्जनस्य अनेकधा स्वरूपतः क्रमतश्च असकृत् साम्यं वृत्त्यनुप्रास इति तृतीयं लक्षणम् । अत्र अपिशब्दादनेकस्येत्यनुषज्यते । असकृदिति विशेषणाच्च छेकानुप्रासे न लक्षणसङ्गतिः । एकस्य व्यञ्जनवर्णस्य सकृत् साम्यं वृत्त्यनुप्रास इति चतुर्थं लक्षणम् । अत्राप्यपिशब्दात् असकृदित्यनुषज्यते । तेन एकस्य व्यञ्जनवर्णस्य असकृत् साम्यञ्च वृत्त्यनुप्रास इति पञ्चमं लक्षणम् । अनयो-रेकस्येत्यभिधानात् छेकानुप्रासे नातिव्याप्तिः । तथा च वृत्त्यनुप्रासः समुदायेन पञ्चविध इति द्रष्टव्यम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एकधा स्वरूपत एव, न तु क्रमतोऽपि। अनेकधा स्वरूपतः क्रमतश्च। सकृदपीत्यपिशब्दादसकृदपि। उदाहरणम्—

"उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीड़त्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः।
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः॥" (य)

अत्र "रसोल्लासैरमी" इति रसयोरेकधैव साम्यम्, न तु तेनैव क्रमेणापि। द्वितीये पादे (१) कलयोरसकृत् तेनैव क्रमेण च। प्रथमे एकस्य मकारस्य (२) सकृत्, धकारस्य चासकृत् (भ)।

रसविषयव्यापारवती वर्णरचना वृत्तिः, तदनुगतत्वेन प्रकर्षेण न्यसनाद् वृत्त्यनुप्रासः (म)।

अस्यापि सामान्यरूपतया विशेषेतरपरत्वनियमात् विशेषभूतयोरन्त्यानुप्रासलाटानुप्रासयोर्यथासम्भवं प्राप्तावपि नातिव्याप्तिरिति चावधेयम्।

(य) एकेनैव पद्येन निरुक्तपञ्चविधानामेव वृत्त्यनुप्रासानां लक्ष्याणि दर्शयति उन्मीलदिति। वसन्तवर्णनेयं जयदेवस्य। ध्यानं प्रियतमायाश्चिन्तनमेव अवधानं मनोयोगस्तस्य क्षणे समये प्राप्तः प्राणसमाया दयितायाः समागमरसेन सम्भोगासङ्गेन उल्लास आनन्दो यैस्तथोक्तैः, पथिकैर्विदेशस्थैः कामिभिजनैः, उन्मीलत्सु परितः प्रसरत्सु मधुगन्धेषु कुसुमरससौरभेषु लुब्धा ये मधुपा भ्रमरास्तैर्व्याधूतेषु समाकम्पितेषु चूताङ्कुरेषु आम्रमुकुलेषु तत्समीपेष्वित्यर्थः क्रीड़तां खेलया विचरतां कोकिलानां याः काकल्यः सूक्ष्मकल-रवास्तासां कलकलैः कोलाहलैः उद्गीर्णा उत्पादिताः कर्णेषु ज्वराः सन्तापा येषु ते तादृशाः, अमी वसन्त-कालीया वासरा दिवसाः, कथं कथमपि अतिकष्टेनेत्यर्थः नीयन्ते अतिक्रम्यन्ते।

(भ) उदाहृतं लक्षणानि सङ्गमयितुमाह अत्रेति। इति इत्यत्र, र-सयो रेफदन्त्यसकारयोः, एकधैव स्वरूपत एव, साम्यं सकृत् सादृश्यम्। न त्विति। "रसो" इत्यत्र रेफस्य पूर्ववर्त्तित्वात् "सैर" इत्यत्र तु तस्य परवर्त्तित्वादिति भावः। अतएवात्र प्रथमलक्षणसङ्गतिः। अतएव च पद्यस्य अन्त्यभागमादाय प्रदर्शनारम्भ इति बोध्यम्। "वासराः" इत्यस्य च "सराः" इत्यंशमादाय "रसो" इत्यनेन तद्देव एकधैवासकृत् साम्याद्द्वितीयलक्षणसङ्गतिरित्यनुसन्धेयम्। क-लयोः ककार-लकारयोः, तेनैव क्रमेण चकारात् स्वरूपेण च असकृत् साम्यम्। अतस्तृतीयलक्षणसङ्गतिरित्याशयः। प्रथमे पादे इत्यनुषज्यते। सकृत् साम्यम्। अतश्चतुर्थलक्षणसङ्गतिरित्यभिप्रायः। एकस्य धकारस्य च असकृत् साम्यम्। अतश्च पञ्चम-लक्षणसङ्गतिरिति भावः। "उद्गीर्णकर्ण" इत्यत्र तु छेकानुप्रासः। "समा समा" इत्यत्र च यमकमेवेत्यनु-सन्धेयम्।

(१) क्वचित् पादे तु इति पाठः। (२) तकारस्य इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

६ । उच्चार्य्यत्वाद्यदेकत्र स्थाने तालुरदादिके ।
साद्दश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते ॥ (य)

उदाहरणम्—"द्दशा दग्धं मनसिजं जीवयन्ति द्दशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥" (र)

अत्र "जीवयन्ति" इति "याः" इति, "जयिनीः" इति (१) जकार-यकारयोरेकत्र स्थाने तालौ उच्चार्य्यत्वात् साद्दश्यम् (ल) । एवं दन्त्यकण्ठ्यानामप्युदाहार्य्यम् (व) ।

(म) इदानीं छत्यनुप्रासशब्दस्य योगार्थमाह रसेति । रसविषयव्यापारी रसादीनां पुष्टिस्तद्वती अनकतासम्बन्धेन तद्विशिष्टा रसादिपुष्टिकारिणीत्यर्थः, वर्णरचना वैदर्भी-गौड़ी-पाञ्चाली-लाटी-संज्ञक-रीतिरूपा वर्णयोजना । तदनुगतत्वेन तदनुकूलकत्वेन । न्यसनात् स्थापनादभिधानादित्यर्थः ।

(य) श्रुत्यनुप्रासं निरूपयति उच्चार्य्यत्वादिति । रदा दन्ताः । आदिशब्देन ओष्ठ-मूर्द्ध-कण्ठानां ग्रहणम् । तथा च तालुरदादिके एकत्र एकस्मिन् स्थाने उच्चार्य्यत्वात् उच्चार्य्यत्वं पुरस्कृत्य उच्चारणीयत्वरूप मित्यर्थः, व्यञ्जनस्यैव केवलव्यञ्जनवर्णस्य यत् साद्दश्यम्, तत् श्रुत्यनुप्रास उच्यते । अत्र एकस्थानोच्चार्य्यत्व-रूपसाद्दश्यग्रहणात् एकविधाकृतिसत्त्वरूपस्वरूपापेक्षा नास्तीति प्रतिपादितम् । एवशब्देन च स्वराणामेक-स्थानोच्चार्य्यत्वरूपं साद्दश्यं वैचित्र्याभावान्न श्रुत्यनुप्रास इति सूचितम् ।

(र) द्दशेति । पद्यमिदं विद्धशालभञ्जिकायाम् । या वामलोचनाः, द्दशा शिवस्य तृतीयनेत्रेण दग्धं मनसिजं मदनं द्दशैव द्दष्ट्यैव जीवयन्ति । अतएव विरूपाक्षस्य विषमनेत्रस्य शिवस्य जयिनीर्विजय-कारिणीः, ता वामलोचना महिलाः स्तुमो नुमः ।

(ल) उदाहृते लक्षणं योजयति अत्रेति । तालाविति । "इवर्ण-चवर्ग-य-शास्तालव्याः" इत्यनु-शासनादिति भावः । साद्दश्यमिति । अतएव श्रुत्यनुप्रास इति शेषः ।

(व) एवमिति । दन्त्यकण्ठ्यानामिति बहुवचनादोष्ठ्यमूर्द्धन्यानामपि ग्रहणम् ।

तत्र दन्त्यानां यथा नैषधे—

"तदहं विदधे तथा तथा दमयन्त्याः सविधे तव स्तवम् ।
हृदये निहितस्तया भवान् अपि नेन्द्रेण यथापनीयते ॥"

अत्र "लृवर्ण-तवर्ग-ल-सा दन्त्याः" इत्यनुशासनात् त-थ-द-ध-न-सकाराणामेकदन्तस्थानोच्चार्य्यतया साद्दश्यात् श्रुत्यनुप्रासः ।

कण्ठ्यानां यथा शिशुपालवधे—

"हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥"

(१) इत्यत्र इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एष च सहृदयानामतीवश्रुतिसुखावहत्वाच्छ्रुत्यनुप्रासः (ग)।

७। व्यञ्जनं चेद्यथावस्थं सहाद्येन स्वरेण तु।
आवर्त्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत्॥ (घ)

"यथावस्थम्" इति यथासम्भवमनुस्वार-विसर्ग-स्वरसंयुक्ताक्षरविशिष्टम् (ङ)। एष च प्रायेण पादस्य पदस्य चान्ते प्रयोज्यः (च)। पादान्तगो यथा मम—

---

अत्र "अवर्ण-कवर्ग-ह-विसर्जनीयाः कण्ठ्याः" इति न्यायात् ह-ख-क-गकाराणामेककण्ठस्थानीयोच्चार्यतया सादृश्यात् श्रुत्यनुप्रासः।

ओष्ठ्यानां यथा उद्भटः—

"पिनाक-फणि-बालेन्दु-भस्म-मन्दाकिनीयुता।
तथापि भव! ते मूर्त्तिरपवर्गफलप्रदा॥"

अत्र "उवर्ण-पवर्गोपध्मानीया ओष्ठ्याः" इति नियमात् प-फ-ब-भ-मकाराणामेकौष्ठस्थानीयोच्चार्यतया सादृश्यात् श्रुत्यनुप्रासः।

मूर्द्धन्यानां यथा मम वङ्गीयप्रतापनाटके—

"वसति विषधरश्चेत् साधु पीयूषराशिं विकिरति किरणं वा शीतलश्चेन् खरांशुः।
नहि खलु खललोकात् सत्प्रशंसा तथापि क्वचिदपि हि जनानां क्षीयते न स्वभावः॥"

अत्र "ऋवर्ण-टवर्ग र षा मूर्द्धन्याः" इत्यनुशासनात् ष-र-षकाराणामेकमूर्द्धस्थानीयोच्चार्यत्वात् श्रुत्यनुप्रासः।

(ग) इदानीं श्रुत्यनुप्रासशब्दस्य योगार्थमाह एष चेति। एषोऽलङ्कारः।

(घ) अन्त्यानुप्रासं लक्षयति व्यञ्जनमिति। अवस्थां प्रथमोच्चारितव्यञ्जनावस्थामनतिक्रम्य स्थितमिति यथावस्थं व्यञ्जनम्, चेद्यदि, आद्येन प्राथमिकेन प्रथमोच्चारितव्यञ्जनपूर्ववर्त्तिस्वरसमानाकारेण स्वरेण सह आवर्त्त्यते पुनरुच्चार्यते; तत्तदा अन्त्यानुप्रासः। नन्वन्त्यानुप्रास इति संज्ञां प्रति को हेतुरित्याह अन्त्ययोज्यत्वादिति। अन्त एव अन्त्यः स्वार्थे यः। तथा च अन्त्ये पादस्य पदस्य वा अवसाने योज्यत्वात् प्रयोज्यत्वादेव अस्य अन्त्यानुप्रास इति संज्ञेत्याशयः। अत्र यथावस्थमित्यनेन प्रथमोच्चारितव्यञ्जनपरवर्त्तिस्वरमात्रमेव ग्राह्यम्, न तु तदाद्यस्वरोऽपि तस्य तत्पूर्वव्यञ्जनावस्थारूपतयैव प्रसिद्धत्वादित्यत आह आद्येन स्वरेण सहेति।

(ङ) यथावस्थपदस्यार्थमाह यथेति। अत्रानुस्वारविसर्गौ व्यञ्जनात् पूर्ववर्त्तिनौ परवर्त्तिनौ च ग्राह्यौ, स्वरस्तु व्यञ्जनात् परवर्त्त्येव, संयुक्ताक्षरं यस्मिन् सम्मिलितवर्गः, तैर्विशिष्टमिति परोच्चारणीयव्यञ्जनविशेषणम्।

(च) भूयोदर्शनं संज्ञाव्युत्पत्तिश्चानुसृत्य व्यवस्थामाह एष चेति। अन्त्यानुप्रास इत्यर्थः। प्रायेण बाहुल्येन पादस्य अन्ते, क्वचित् पदस्य अन्ते चेत्यर्थः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"केशः काशस्तवकविकासः कायः प्रकटितकरभविलासः ।
चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पम् ॥" (घ)

पदान्तगो यथा—"मन्दं हसन्तः पुलकं वहन्तः" इत्यादि (क) ।

**८ । शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्य्यमात्रतः ।**
**लाटानुप्रास इत्युक्तो—(ख)**

उदाहरणम्—"स्मेरराजीवनयने ! नयने किं निमीलिते ।
पश्य निर्जितकन्दर्पं कन्दर्पवशगं प्रियम् ॥" (ग)

---

(घ) केश इति । जराजीर्णतायामपि अत्यन्तविषयासक्तं कञ्चित् प्रति कस्यचिन्निन्दाव्यञ्जकोक्तिरियम् । केशः, काशस्तवकस्य काशकुसुमगुच्छस्य विकास इव विकासः प्रकाशो यस्य स तथाभूतः, पक्वतया अतीवशुभ्रवर्णः सञ्जात इत्यर्थः ; कायः शरीरम्, प्रकटितो व्यक्तीकृतः करभस्य करिशावकस्य विलास इव विलासो भङ्गी येन स तथोक्तः कुब्जीभूत इति तात्पर्यम् । तथा चक्षुः दग्धो यो वराटकः कपर्द्दकस्तत्कल्पं तत्तुल्यम् ; तथापि चेतश्चित्तं कर्त्तृ अनल्पं विशालं कामं विषयासक्तिं न त्यजति । अहो मोहप्रभाव इति भावः ।

अत्र प्रथमपादान्तगत 'काशः' इत्यंशः द्वितीयपादान्ते, तृतीयपादान्तगतस्य 'अल्पम्' इत्यंशश्चतुर्थपादान्ते पुनरुच्चारित इति आद्यस्वरेण सह यथावस्थितव्यञ्जनस्य पुनरुच्चारणादन्त्यानुप्रासः ।

(क) मन्दमिति । अस्य मत्पूरितपरपादत्रयं यथा—

"मन्दं हसन्तः पुलकं वहन्तः प्रत्यग्रकान्ताः स्मरतापतान्ताः ।
वने प्रशस्ते तरुणास्त्रयस्ते चलत्सुचेलं विविशुः सखेलम् ॥"

अत्र "हसन्तः" इति पदान्तगतः 'अन्तः' इत्यंशः "वहन्तः" इति पदस्यान्ते पुनरुच्चारित इति अन्त्यानुप्रासः ।

(ख) लाटानुप्रासं निरूपयति शब्देति । तात्पर्य्यमात्रतस्तात्पर्य्यविषयीभूतात् केवलादन्वयादेव भेदं वक्तुरभिप्रेतसम्बन्धमात्रभेदेनैव शब्दार्थयोर्भेदे सतीत्यर्थः, शब्दार्थयोरुभयोरेव यत् पौनरुक्त्यं पुनरुक्तिः, स लाटानुप्रास इत्युक्तः, कविभिरिति शेषः । अत्र "स्मेरराजीवनयने ! लोचने किं निमीलिते" इत्यादौ अर्थमात्रपौनरुक्त्ये शब्दपौनरुक्त्याभावे अतिव्याप्तिवारणायाह शब्देति । "स सुरभिं सुरभिं सुमनोभरैः" इत्यादौ शब्दमात्रपौनरुक्त्ये अर्थपौनरुक्त्याभावे यमके अतिव्याप्तिवारणायोक्तमर्थेति । "चित्रं चित्रमनाकाशे कथं सुमुखि ! चन्द्रमाः" इत्यादौ चित्रं चित्रमिति शब्दार्थयोरुभयोरेव पौनरुक्त्ये तात्पर्य्यमात्रतोऽपि भेदाभावस्थले अतिव्याप्तिनिरासायाह "भेदे तात्पर्य्यमात्रतः" इति ।

(ग) स्मेरेति । स्मेरं प्रस्फुटं राजीवं पद्ममिव नयनं यस्यास्तत्सम्बोधनम् । नयने नेत्रद्वयं किं निमीलिते मानवशान्मुद्रिते ? । निर्जितो रूपेण विजितः कन्दर्पो येन तं तादृशं प्रियं पतिं कन्दर्पवशगं कामायत्तं पश्य । अतो मानमपहायैनं चरितार्थयेति भावः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"सकलकलम्" इत्यादौ च नोपमाप्रतिभोत्पत्तिहेतुः श्लेषः, पूर्णोपमाया निर्विषयत्वापत्तेः। "कमलमिव मुखं मनोज्ञमेतत्" इत्याद्यस्ति पूर्णोपमाया विषय इति चेन्न; यदि "सकलकलम्" इत्यादौ शब्दश्लेषतया नोपमा, तत् किमपराद्धं "मनोज्ञम्" इत्यादावर्थश्लेषेण (ट)।

"स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ किन्तु।
आश्रित्य शब्दमात्रं सामान्यमिहापि सम्भवतः॥" (ठ)

इति रुद्रटोक्तदिशा गुणक्रियासाम्यवच्छब्दसाम्यस्याप्युपमाप्रयोजकत्वात् (ड)।

ननु गुणक्रियासाम्यस्यैव उपमाप्रयोजकता युक्ता, तत्र साधर्म्यस्य वास्तवत्वात्। शब्दसाम्यस्य तु न तथा, तत्र साधर्म्यस्य अवास्तवत्वात्। ततश्च पूर्णोपमाया अन्यथाऽनुपपत्तेर्गुणक्रियासाम्यस्यैवार्थश्लेषविषयतापरित्यागे पूर्णोपमाविषयता युक्ता, न तु "सकलकलम्" इत्यादौ शब्दसाम्यस्यैवेति चेन्न; "साधर्म्यमुपमा" इत्येवाविशिष्टस्य उपमालक्षणस्य शब्दसाम्यादव्यावृत्ते-

---

(ट) इदानीमवशिष्टं श्लेषेण पूर्णोपमाया बाध्यत्वं निरसितुमाह सकलेति। उपमायाः प्रतिभा-प्रकाशः प्रतीतिरिति यावत् तस्या उत्पत्तेर्हेतुः कारणं "सकलकलम्" इत्यादौ नोपमा, किन्तूक्तरीत्या श्लेष एवेति न वाच्यमित्यर्थः। निर्विषयत्वापत्तेरिति। श्लेषं विना पूर्णोपमाया असम्भवात् श्लेषेण पूर्णोपमाया बाध्यत्वे पूर्णोपमाङ्गीकारवैयर्थ्यापत्तेरिति भावः। अस्तीति। कमलमित्यादौ शब्दश्लेषासम्भवादिति भावः। अपराद्धमिति। तथा च शब्दश्लेषेण उपमा बाध्येत, अर्थश्लेषेण तु न, इत्यत्र विनिगमनाभावात् "कमलमिव" इत्यादावपि अर्थश्लेषेण पूर्णोपमाया बाध्यत्वात्तस्या निर्विषयत्वमेवेत्याशयः।

(ठ) स्वमते वृद्धसंवादमाह स्फुटमिति। एतौ उपमासमुच्चयौ स्फुटं स्पष्टम् अर्थालङ्कारौ अर्थप्रयोज्यतया अर्थालङ्कारत्वेन सर्वैरेव स्पष्टं प्रतीयमानावित्यर्थः। किन्तु तथापि सामान्यमुभयगत-धर्मबोधकम्, शब्दमात्रं केवलमेकानुपूर्वीकं शब्दम् आश्रित्य इह श्लेषविषयेऽपि सम्भवतः प्रसजतः; "साधर्म्यमुपमा" "गुणयौगपद्ये समुच्चय" इति लक्षणद्वये सामान्यत एव साधर्म्य-गुणयौगपद्ययोराश्रयणा-दिति भावः।

"जने नवीने-तपने च रागः" इत्यादौ रागोऽनुरागो रक्तिमा चेति श्लिष्टशब्दप्रतिपाद्यगुणद्वययौगपद्येऽपि समुच्चय इति रुद्रटमतम्। तेन "समुच्चयपदमत्र तुल्ययोगितादीपकपरञ्च" इति रामचरणस्य निरर्थक-लक्षणाकल्पना हेया।

(ड) इतीति। रुद्रटोक्तया दिशा प्रकारेण। उपमाप्रयोजकत्वादिति। "कमलमिव" इत्यादिवत् "सकलकलम्" इत्यादावपि पूर्णोपमैवेति शेषः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रभावात् (ढ)। यदि च शब्दसाम्ये साधर्म्म्यमवास्तवत्वान्नोपमाप्रयोजकम्, तदा कथं "विद्वन्मानस—" इत्यादौ आधारभूते चित्तादौ सरोवराद्यारोपो राजादेर्हंसाद्यारोपप्रयोजकः (ण)।

किञ्च, यदि वास्तवसाम्य एवोपमाऽङ्गीकार्य्या, तदा कथं त्वयापि "सकलकलम्" इत्यादौ बाध्यभूता उपमा अङ्गीक्रियते (त)। किञ्चात्र श्लेष-स्यैव साम्यनिर्वाहकता, न तु साम्यस्य श्लेषनिर्वाहकता, श्लेषबन्धतः प्रथमं

---

(ढ) श्लेषव्यपदेशवादी पुनः शङ्कते नन्विति। वास्तवत्वादयथार्थत्वात्। तथा च साधर्म्यं नाम तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वम्। तच्च "कमलमिव मुखं मनोज्ञम्" इत्यादौ कमलगतसौन्दर्य्यात्मक-धर्म्मवत्त्वरूपं मुखे यथायथमेव विद्यत इत्याशयः। न तथा नोपमाप्रयोजकता युक्तेत्यर्थः। अवास्तवत्वात् मिथ्याभूतत्वात्। तथाहि "सकलकलम्" इत्यादौ तात्पर्य्यविषयीभूतमुक्तविधं किमपि चन्द्रविम्बसाधर्म्म्यं पुरे नास्त्येवेति भावः। ततश्च उक्तयुक्त्या च। अन्यथाऽनुपपत्तेः अर्थश्लेषस्यापि विषयपरित्यागे असम्भवात्। एतेन पूर्णोपमाया अर्थश्लेषापवादकत्वमभिहितम्। गुणक्रियासाम्यस्यैव पूर्णोपमाविषयता युक्तेत्यन्वयः। अर्थ-श्लेषस्य स्वविषयतायाः परित्यागे सतीत्यर्थः। तथा च सामान्यस्य विशेषेतरपरत्वनियमात् "कमलमिव मुखं मनोज्ञम्" इत्यादिकं स्वयोग्यमपि विषयं परिहृत्य सामान्यरूपे अर्थश्लेषे "प्रवर्त्तयन् क्रियाः साध्वीः—" इत्यादौ वक्ष्यमाणे पूर्णोपमाया अविषये स्थिते सति, विशेषरूपा पूर्णोपमा "कमलमिव" इत्यादौ समाविशतीति सर-लार्थः। शब्दसाम्यस्यैवेति। पूर्णोपमाविषयता युक्तेति पूर्वेणान्वयः। अविशिष्टस्य वास्तवत्वावास्तवत्वरूप-विशेषरहितस्य सामान्यत एव काव्यप्रकाशकारेणोक्तस्य वास्तविकतया सर्वेषामेवाभिमतस्य चेत्यर्थः। शब्दसाम्या-द्यावृत्तेरभावात् विनिगमकाभावेन "सकलकलम्" इत्यादिकं शब्दसाम्यस्थलमपहाय अन्यत्र नियमनासम्भवा-दित्यर्थः।

(ण) ननु शब्दसाम्यस्य अवास्तवत्वमेव उक्तनियमे विनिगमकमित्याह यदि चेति। आधारभूते उपमेयत्वेन विषयरूपे। अत्र सरोवरपदं सरोवरत्वपरम्। एवं हंसपदमपि हंसत्वपरम्। तन्नदारोपरूपः कथमत्र श्लिष्टपरम्परितरूपकालङ्कार इत्याशङ्कार्थः। तथा च "सकलकलम्" इत्यादौ शब्दसाम्ये साधर्म्म्य-मवास्तवत्वादयथा नोपमाप्रयोजकम्, तथा "विद्वन्मानस—" इत्यादौ श्लिष्टपरम्परितरूपकप्रयोजकमपि न स्यात् साधर्म्म्यवत्तया उपमानोपमेययोरभेदज्ञानस्यैव रूपकालङ्कारत्वात् तस्य च साधर्म्म्यस्य "विद्वन्मानस—" इत्यादा-वपि अवास्तवतया समानन्यायादित्याशयः।

(त) ननु आरोपात्मकतया रूपकस्यैवावास्तवत्वात् तत्प्रयोजकं साधर्म्म्यमप्यवास्तवं भवितुमर्हति; उपमायास्तु वास्तवतया तत्प्रयोजकसाधर्म्म्यस्यापि वास्तवत्वमेवापेक्षितमित्याह किञ्चेति। वास्तवसाम्य एव गुणक्रियासाम्यादयथार्थसाधर्म्म्य एव। अङ्गीकार्य्या त्वयेति शेषः। बाध्यभूता शब्दश्लेषेण बाधनीयरूपा। तथा च "सकलकलम्" इत्यादौ साधर्म्म्यस्य अवास्तवतया उपमाप्रयोजकत्वाभावात्तस्याः प्रसक्तिरेव नास्ति,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

साम्यस्यासम्भवात्, इत्युपमाया एवाङ्गित्वेन व्यपदेशो ज्यायान्, "प्रधानेन हि व्यपदेशा भवन्ति" इति न्यायात् (१) (थ)।

ननु शब्दालङ्कारविषये अङ्गाङ्गिभावसङ्करो नाङ्गीक्रियते, तत् कथमत्र श्लेषोपमयोरङ्गाङ्गिभावः सङ्कर इति चेन्न; अर्थानुसन्धानविरहिण्यनुप्रासादाविव तथाऽनङ्गीकारात् (द)। एवं दीपकादावपि ज्ञेयम् (ध)।

---

तथापि कथं त्वया शब्दश्लेषेण उपमाया बाध्यत्वादित्यभिप्रायेण "श्लेषेणैव व्यपदेशो भवितुं युक्तः" इत्यभिहितमित्याशयः।

(थ) नन्वास्तां तावदवास्तवसाधर्म्येऽप्युपमा, तथापि "सकलकलम्" इत्यादौ "श्लेषस्य प्राधान्येन श्लेषेणैव व्यपदेशो भवितुं युक्तः" इत्युक्तिरेव मे युक्तिसहेत्याह किञ्चेति। साम्यनिर्वाहकता अभिन्नानुपूर्वीकशब्दोपस्थाप्यत्वरूपसादृश्यघटकता। श्लेषमन्तरा "सकलकलम्" इत्यनेकार्थकशब्दयोजनायाः, प्रथमं पूर्वम्। तेन च अन्यथासिद्धिशून्यनियतपूर्ववर्त्तिनः कारणत्वात् साम्यनिर्वाहं प्रति तन्नियतपूर्ववर्त्तिनः श्लेषस्यैव कारणत्वमिति भावः। उपमायाः पूर्णोपमाया एव, अङ्गित्वेन कार्यतया उद्देश्यत्वात् प्रधानत्वेन, व्यपदेशः "अत्र पूर्णोपमालङ्कारः" इत्येवं संज्ञानिर्द्देशः, ज्यायान् श्रेयान् उचित इत्यर्थः। काव्यप्रकाशकारोऽप्येवम्।

एतेन "सकलकलम्" इत्यादौ वामनादिमते "अत्र श्लेषोऽलङ्कारः, अत्र श्लेषोपमालङ्कारः" इत्येवं व्यपदेशः, काव्यप्रकाशकार-साहित्यदर्पणकारयोर्मते तु "अत्र पूर्णोपमालङ्कारः" इत्येवं व्यपदेश इति व्यपदेशभेद एव एतावद्विचारफलमिति बोध्यम्।

(द) "उपमाया एवाङ्गित्वेन" इत्युक्तिं प्रति तृतीयः शङ्कते नन्विति। नाङ्गीक्रियत इति। अङ्गाङ्गिभावो हि निर्वाहकनिर्वाह्यभावः। एवञ्च अनुप्रासादिशब्दालङ्कारास्तादृशं शब्दालङ्कारान्तरं कदापि न निर्वाहयन्तीति युक्तेरिति बोध्यम्। अत्र "सकलकलम्" इत्यादौ। अर्थानुसन्धानविरहिणि अर्थावधारणनिरपेक्षे केवलशब्दावृत्तिसापेक्षे इत्यर्थः। अनुप्रासादावित्यादिशब्देन यमकभाषासमयोर्ग्रहणम्। तथाऽनङ्गीकारात् अङ्गाङ्गिभावसङ्करास्वीकारात्। तत्रैवोक्तयुक्तेः सामञ्जस्यात्, श्लेषोपमयोस्तु अर्थानुसन्धानसापेक्षत्वेन निर्वाह्यनिर्वाहकभावस्यावश्यम्भावादङ्गाङ्गिभावः सङ्करः सम्भवत्येवेत्यभिप्रायः।

(ध) एवमिति। आदिशब्देन तुल्ययोगितादीनां ग्रहणम्। यथा "सकलकलम्" इत्यादौ शब्दश्लेषसत्त्वेऽपि प्राधान्यात् पूर्णोपमाव्यपदेशः, तथा "स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं—" इत्यादौ शब्दश्लेषसत्त्वेऽपि प्राधान्यात् दीपकव्यपदेशः "स्तोकेनोन्नतिमायाति" इत्यादौ च अर्थश्लेषसत्त्वेऽपि प्राधान्यात् तुल्ययोगिताव्यपदेश इत्यर्थः।

---

(१) इत्युक्तन्यायादिति क्वचित् पाठः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्त्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥" (न)

अत्र शरद्वर्णनया प्रकरणेन धार्त्तराष्ट्रादिशब्दानां हंसाद्यर्थाभिधाने नियमात् दुर्योधनादिरूपोऽर्थः शब्दशक्तिमूलो वस्तुध्वनिः (प)। इह च प्रकृतप्रबन्धाभिधेयस्यार्थस्य सूच्यतयैव विवक्षितत्वादुपमानोपमेयभावो न विवक्षित इति नोपमाध्वनिर्न वा श्लेष इति सर्वमवदातम् (फ)।

---

(न) मतान्तरद्वयं निरसितुमुदाहरति सत्पक्षा इति। वेणीसंहारनाटकप्रस्तावनायां नटस्योक्तिरियम्। सन्तः सुन्दराः पक्षाः पतत्राणि येषां ते, मधुराः सुश्रव्या गिरो रवा येषां ते, प्रसाधिताः स्वावस्थानेनालङ्कृता आशा दिशो यैस्ते, तथा मदेन आनन्देन उद्धता उत्कटा आरम्भा विहारादिव्यापारा येषां ते तथाभूताश्च, धार्त्तराष्ट्राः कृष्णवर्णचञ्चुचरणविशिष्टा हंसविशेषाः, कालवशात् शरत्कालप्रभावात्, मेदिनीपृष्ठे निपतन्ति वर्षासमयप्राप्तमानससरोवरादागत्य भूमण्डले विचरन्तीत्यर्थः। "धार्त्तराष्ट्राः सितेतरैः" इत्यमरः।

द्वितीयोऽर्थस्तु—सन्तो महावीरत्वादिना अभ्यर्हिताः पक्षा भीष्मद्रोणादयः सहाया येषां ते, मधुरगिरः प्रियवचनाः, प्रसाधिताशा आयत्तीकृतसर्वदिशः, तथा मदेन अहङ्कारेण उद्धता विकटा आरम्भा युद्धादिव्यवहारा येषां ते तादृशाः, धृतराष्ट्रस्य राज्ञोऽपत्यानीति धार्त्तराष्ट्रा दुर्योधनादयः, कालवशात् कालप्राप्तिवशात् मरणादित्यर्थः मेदिनीपृष्ठे भूतले निपतन्ति अवलुण्ठन्ति।

अत्र धार्त्तराष्ट्रा दुर्योधनादय इव धार्त्तराष्ट्रा हंसा निपतन्तीति "हिमसुक्ताचन्द्ररुचिरः" इत्यादिवदुपमाध्वनिरिति केचित्। अपरे तु द्वितीयार्थस्यापि प्रकृतप्रबन्धाभिधेयत्वेनाभिधानात् "नीतानामाकुलीभावम्" इत्यादिवदेव प्रकृतश्लेष/ इत्याहुः।

(प) तत्र स्वमतमाह अत्रेति। शरद्वर्णनया शरद्वर्णनारूपेण। प्रथमादिपदेन पक्षादिशब्दानाम्, द्वितीयादिपदेन च पतत्राद्यर्थानां ग्रहणम्। नियमात् "संयोगो विप्रयोगश्च" इत्याद्युक्तन्यायेन नियमितत्वात्। वस्तुध्वनिरिति। "पन्थिअ ण एत्थ सत्थरमत्थि" इत्यादिचतुर्थपरिच्छेदोदाहृतवदिति भावः।

(फ) प्रदर्शितमतद्वयं निरस्यति इह चेति। किञ्चेति चार्थः, इह "सत्पक्षाः" इत्यादिश्लोके। प्रकृतप्रबन्धाभिधेयस्य प्राक् प्रस्तुत-वेणीसंहाराख्यग्रन्थवाच्यस्य, अर्थस्य दुर्योधनादिपतनरूपस्य, सूच्यतयैव अत्यन्तचमत्कारिताविधानार्थमवश्यव्यङ्ग्यतयैव। न विवक्षित इति। अत्रायमाशयः—सर्वत्रैव आवश्यकभावेनोपमेयं वर्णयता कविना तस्य दृढत्वमावं सम्पादयितुमनावश्यकभावेनैव उपमानं प्रदर्श्यते; अत्र तु अत्यन्तचमत्कारिताविधानाय दुर्योधनादिपतनरूपस्य द्वितीयार्थस्य आवश्यकभावेनैव द्योतयितुमभिप्रेतत्वादुपमानत्वं न विवक्षितम्, तदविवक्षया च उभयोरुपमानोपमेयभाव एव न विवक्षित इति। न वा श्लेष इति। शरद्वर्णनारूपप्रकरणवशेन प्रथमार्थस्यैव वाच्यत्वनियमेन द्वितीयार्थस्य केवलं व्यङ्ग्यतया वाच्यत्वाभावादिति भावः। अवदातं निर्म्मलं सर्वं एव विषयः परिष्कृत इत्यर्थः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**१५। पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते ॥ (ब)**

आदिशब्दात् खड्ग-मुरज-चक्र-गोमूत्रिकादयः (भ)। अस्य च तथाविधलिपि-सन्निवेश-विशेषवशेन चमत्कारविधायिनामपि वर्णानां तथाविधश्रोत्राकाश-समवाय-विशेषवशेन चमत्कारविधायिभिर्वर्णैरभेदेनोपचाराच्छब्दालङ्कारत्वम् (म)। तत्र पद्मबन्धो यथा मम—(य)

"मारमा सुषमा चारु-रुचा मारवधूत्तमा।
मात्तधूर्त्तमावासा सा वामा मेऽस्तु मा रमा॥" (र)

---

एतेन प्रकरणादिनियमाभावादुभयार्थस्यैवाभिधेयत्वे श्लेषः, एकतरस्यार्थस्य अभिधेयत्वे अन्यतरस्य तु व्यङ्ग्यत्वं तयोश्चोपमानोपमेयभावसत्त्वे उपमाध्वनिः, तदसत्त्वे तु शब्दशक्तिमूलवस्तुध्वनिप्रभृतिरित्यवधेयम्।

(ब) चित्रं नामालङ्कारं लक्षयति पद्मेति। वर्णानामकारादीनां पत्रादौ लिखितानामित्यर्थः पद्माद्याकारहेतुत्वे पद्मप्रभृत्याकृतिसम्पादकत्वे चित्रं नामालङ्कार उच्यते। पत्रादौ पद्माद्याकृतिसम्पादको वर्णविन्यासश्चित्रालङ्कार इत्यर्थः। अस्य चित्रसम्पाद्यतया चित्रमिति नाम।

(भ) आदीति। अत्राप्यादिशब्दात् लता-वृक्षादीनां ग्रहणम्।

(म) ननु पत्रादौ पद्माद्याकृतिसम्पादकवर्णविन्यासस्य चित्रालङ्कारत्वे शब्दरूपत्वाभावात् कथमस्य शब्दालङ्कारत्वम्, येन शब्दालङ्कारप्रकरणे गणनमुपपद्यत इत्याह अस्य चेति। चित्रालङ्कारस्य चेत्यर्थः। तथाविधः पद्मादिप्रकारो यो लिपिसन्निवेशविशेषः पत्रादौ चित्रविन्यासविशेषः तस्य वशेन प्रभावेण चमत्कारविधायिनां वर्णानां चित्ररूपाणामित्यर्थः। तथाविधः पद्मादिप्रकारो यः श्रोत्राकाशसमवायविशेषः कर्णविवरे सम्बन्धविशेषस्तद्वशेन चमत्कारविधायिभिर्वर्णैः शब्दात्मकैः सह अभेदेनोपचारात् तादात्म्येन व्यवहारात्। चित्रभूतानामपि वर्णानामुच्चारणकाले शब्दरूपतयाविर्भावात् तेषां चित्रितानां वर्णानां तदुच्चारणेनोत्पन्नानां शब्दरूपवर्णानाञ्च कारण-कार्य्यरूपतया परस्परमभेदमङ्गीकृत्य चित्रालङ्कारस्य शब्दालङ्कारत्वं व्यवस्थाप्यत इत्यर्थः।

(य) अत्रेति। चित्रालङ्कारमध्ये इत्यर्थः। पद्मबन्धो वर्णरचना पद्माकृतिसम्पादको वर्णविन्यास इत्यर्थः। अन्यत्राप्येवम्।

(र) मारेति। इष्टदेवतान्तिके आत्मानं प्रति लक्ष्मीदेव्या अप्रतिकूलताचरणप्रार्थनेयम्। मारस्य कन्दर्पस्य, मा माता, सुषमा सुन्दरी, चारुरुचा सुन्दरप्रभया मारवध्वा रतिदेवीतोऽपि उत्तमा उत्कृष्टा, तथा मा आत्तो न गृहीतो धूर्त्तमस्य अत्यन्तदुष्टजनस्य आवासो गृहं यया सा तथोक्ता, सा प्रसिद्धा, रमा लक्ष्मीदेवी, मे मम वामा कदापि प्रतिकूला, मा अस्तु न भवतु। "मा च मातरि माने च" इति रभसः। "सुषमं साधु शोभनम्" इत्यमरः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एषोऽष्टदलपद्मबन्धो दिग्दलेषु निर्गमप्रवेशाभ्यां श्लिष्टवर्णः, किन्तु विदिग्दलेष्वन्यथा, कर्णिकाक्षरन्तु श्लिष्टमेव (ल) ।

एवं खड्गबन्धादिकमप्यूह्यम् (व) ।

---

(ल) एष इति । अष्टभिर्दलैः पत्रैः पद्मबन्धः पद्माकृतिसम्पादको वर्णविन्यासः । तद्विन्यासपाठयोः प्रकारमाह दिगिति । दिग्दलेषु पूर्व-दक्षिण-पश्चिमोत्तरदिग्वर्त्तिपत्रेषु, निर्गमप्रवेशाभ्यां यथासम्भवं वहिर्गमनान्तर्गमनाभ्याम्, श्लिष्टवर्णः द्विः पठनीयतया श्लिष्टवर्णद्वयविशिष्टः । विदिग्दलेषु आग्नेय-नैऋत-वायव्येशानकोणस्थपत्रेषु, अन्यथा क्वचित् प्रवेश एव क्वचिच्च निर्गम एव, तथा अश्लिष्टवर्णश्च । कर्णिकाक्षरन्तु मध्यवर्त्ती वर्णस्तु श्लिष्टमेव, बहुवारपठनीयत्वादिति भावः । तथा चास्य विशेषलक्षणं सरस्वतीकण्ठाभरणे—

"कर्णिकायां न्यसेदेकं द्वे द्वे दिक्षु विदिक्षु च । प्रवेशनिर्गमौ दिक्षु कुर्य्यादष्टदलाम्बुजे ॥"

एवम्भूतलक्षणस्य दिङ्मात्रप्रदर्शनपरतया चमत्कारिताविधायित्वे प्रकारान्तरेणापि पद्मबन्धादिकं भवतीत्युन्नेयम् ।

उदाहृतपद्मबन्धचित्रं यथा—(१)




पूर्वदिक् ।

प्रकारान्तरपद्मबन्धचित्रं यथा मम—(२)




(२) श्लोको यथा—"हरः शिवो मे सुरमानसौका रिष्टं हरेन्मां सुतवत् समव्य ।
दाता च भूयात् सुखमार्त्तिघाती सदा तदा स्वां सुकृती कृतार्थः ॥"

अस्य उद्धारस्तु—दलाग्र-'ह'-कारादारभ्य सरलभावेन द्वि-द्वि-दलवर्णाः क्रमशः पठनीयाः एवञ्च कर्णिकाक्षरं श्लिष्टं स्यात् चमत्कारिताविशेषस्तु दलाग्र-'ह'-कारादारभ्य दक्षिणावर्त्तेन दलाग्रवर्णानां क्रमशः पाठे "हरिदासकाव्यतीर्थः" इति कविनाम भवतीति ।

(व) एवमिति । ऊह्यं काव्यप्रकाश-सरस्वतीकण्ठाभरणादिष्विति शेषः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(१) तत्र खड्गबन्धचित्रं यथा काव्यप्रकाशे—




(१) श्लोको यथा—

"मारारिशक्र-रामेभ-मुखैरासाररंहसा ।
सारारब्धस्तवा नित्यं तदार्त्तिहरणक्षमा ॥
माता नतानां संघट्टः श्रियां बाधितसम्भ्रमा ।
मान्याथ सीमा रामाणां शं मे दिश्यादुमाद्रिजा ॥"

अनयोर्व्याख्या तु काव्यप्रकाशीयमहेश्वरटीकायां रामचरणटीकायां वानुसन्धेया ।

(२) मुरजबन्धचित्रं यथा मम रुक्मिणीहरणमहाकाव्ये—

(मुरजो मृदङ्गस्तद्वदन्धो वर्णविन्यासो मुरजबन्धः ।)

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| स | ह | सो | च्च | त | मा | न | श्रीः |
| सा | ह | सो | र्जि | त | मा | न | सः |
| स | ह | सो | द्ध | र्द्ध | मा | न | श्रीः |
| स | ह | सो | च्च | त | मा | न | नः |

(२) श्लोको यथा—

"सहसोच्चतमानश्रीः
साहसोर्जितमानसः ।
सहसोद्धर्द्धमानश्रीः
सहसोच्चतमाननः ॥"

उच्चतमाना उत्कर्षं याचमाना श्रीर्लक्ष्मीर्देवी यं स उच्चतमानश्रीः आरूढ़वानर इत्यादिवद्बहुव्रीहिः । सहसा तत्क्षणादेव साहसेन ऊर्जितमुत्तेजितं मानसं मनो यस्य सः । सहसा बलेन उद्वर्द्धमाना श्रीर्वीरश्रोभा यस्य सः । तथा सहसं हास्ययुक्तम् उच्चतमसुन्नतञ्च आननं यस्य स तादृशः कृष्णः, अयु तदिति परश्लोकेनान्वयः ।

चक्रबन्धः शिशुपालवधीनविंशसर्गे अनुसन्धेयः ।

(३) गोमूत्रिकाबन्धचित्रं यथा मम रुक्मिणीहरणमहाकाव्ये—

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| दो | प्र | नी | ता | व | ली | श्या | मं | धा | म | स | न्तु | ट | लो | क | वम् |
| प | प्र | च्छ | ला | ह | ली | चं | मं | भू | म | द | न्तु | र | ली | का | कम् |

(३) अस्य श्लोकस्तु वामतो यथारीतिपाठेनैव सम्पद्यत इति द्रष्टव्यम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

काव्यान्तर्गड्‌भूततया तु नेह प्रपञ्च्यते (१) (अ)।

१६। रसस्य परिपन्थित्वान्नालङ्कारः प्रहेलिका।

उक्तिवैचित्र्यमात्रं सा च्युतदत्ताक्षरादिका॥ (ब)

च्युताक्षरा दत्ताक्षरा च्युतदत्ताक्षरा च (स)। उदाहरणम्—

"कूजन्ति कोकिलाः साले यौवने फुल्लमम्बुजम्।
किं करोतु कुरङ्गाक्षी वदनेन निपीड़िता॥" (ह)

अत्र "रसाले" इति वक्तव्ये "साले" इति "रः" च्युतः। "वने" इत्यत्र

---

एषां लक्षणानि सरस्वतीकण्ठाभरणादावनुसन्धेयानि। चित्रान्तरोदाहरणानि तु शिशुपालवध-किरातार्जुनीय-मदीयरुक्मिणीहरणादिषु यथेष्टं दर्शनीयानि।

(अ) ननु महाकविकाव्यनिवहेषु बाहुल्येनैव निबद्धश्चित्रालङ्कारो भोजराजादिभिरपि प्रायेणैव लक्षणोदाहरणाभ्यां प्रपञ्चितः, भवता तु कथं न प्रपञ्च्यत इत्याह काव्यान्तरिति। काव्यस्यान्तर्मध्ये गड्‌भूततया ग्रन्थिरूपतया ग्रन्थिरूपत्वे नात्यन्तकठिनत्वान्नीरसतयेत्यर्थः, इह साहित्यदर्पणे न प्रपञ्च्यते लक्षणोदाहरणाभ्यां न विस्तरतो विरच्यते, चित्रालङ्कार इति शेषः। प्राचीनानुरोधेनैव स्पृशतापि इक्षुदण्डस्य ग्रन्थिभाग इव नितान्तकाठिन्यात् रसाविष्कारदुष्करतया चित्रालङ्कारः परित्यज्यत इत्याशयः। काव्यप्रकाश-कृताप्येवमेव परित्यक्तः।

(ब) अथ "प्रहेलिका सकृत्प्रश्नः" इति भोजराजलक्षणात् "अभिप्रेतार्थसंवरणकारिवचनविन्यासः प्रहेलिका" इति साम्प्रदायिकलक्षणात् "प्रहेलिका तु सा ज्ञेया वचः संहृतिकारि यत्" इति प्राचीनान्तर-लक्षणाच्च प्रहेलिकाया अलङ्कारतया तल्लक्षणं भवताप्यवश्यमभिधेयमित्याह रसस्येति। रसस्य परिपन्थित्वात् आस्वादविलम्बजनकत्वेन विरोधित्वात् प्रहेलिका नालङ्कारः। किन्तु च्युतदत्ताक्षरादिका सा प्रहेलिका उक्तिवैचित्र्यमात्रं केवलोक्तिगताश्चर्यमात्रप्रयोजिकेत्यर्थः। तथा च रसास्वादविलम्बजनकतया दोषत्वस्यैव सम्भवेऽपि उक्तिवैचित्र्यमादायैव प्राचां प्रहेलिकायामलङ्कारपदप्रयोगः, स पुनर्गौण एवेत्याशयः।

(स) आदिशब्दग्राह्यं दर्शयति च्युतेति। च्युतं दत्तञ्च अक्षरं यस्यां सा। भोजराजस्तु अक्षर-मुष्टिः बिन्दुमती अर्थवती चेत्यधिकं भेदत्रयं मन्यमानः साकल्येन प्रहेलिकां षड्‌विधामाह स्म।

(ह) एकोदाहरणेनैव च्युताक्षरादिभेदत्रयं दर्शयति कूजन्तीति। सखीं प्रति सख्यन्तरस्योक्ति-रियम्। कोकिलाः साले रसाले चूततरौ कूजन्ति अव्यक्तं शब्दायन्ते, यौवने वने जले अम्बुजं पद्मं फुल्लं प्रस्फुटितम्, वदनेन मदनेन निपीड़िता कुरङ्गाक्षी हरिणलोचना सा नायिका पतिविरहादिदानीं किं करोतु। इति ब्रूहीति भावः।

---

(१) काव्यान्तर्गड्‌भूता या सा तु नेह प्रपञ्च्यते इति मूलकारिकारूपः पाठः क्वचित्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"यौवने" इति "यौ" दत्तः। "वदनेन" इत्यत्र "मदनेन" इति "मः" च्युतः "वः" दत्तः (च)।

आदिशब्दात् क्रियाकारकगुप्तादयः (क)। तत्र क्रियागुप्तिर्यथा—

"पाण्डवानां सभामध्ये दुर्य्योधन उपागतः।
तस्मै गाश्च हिरण्यञ्च सर्वाण्याभरणानि च॥" (ख)

अत्र "दुर्य्योधनः" इत्यत्र "अदुर्य्योऽधनः" इति "अदुः" इति क्रियागुप्तिः (ग)। एवमन्यत्रापि (घ)।

अथावसरप्राप्तेष्वर्थालङ्कारेषु प्राधान्यात् सादृश्यमूलेषु लक्षितव्येषु तेषामप्युपजीव्यत्वेन प्रथममुपमालङ्कारमाह—(ङ)

**१७। साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः। (च)**

---

(च) उदाहृते च्युताचरत्वादिस्थलं दर्शयितुमाह अत्रेति।

(क) आदिशब्दस्य व्यवस्थावाचित्वात् पुनरपि तदन्याख्यान् दर्शयितुमाह आदिशब्दादिति। अत्राप्यादिशब्दात् सम्बोधनगुप्तादीनां ग्रहणम्।

(ख) पाण्डवानामिति। राजसूययज्ञसमाप्तौ दानवर्णनमिदम्। पाण्डवानां सभाया मध्ये यः अधनी दरिद्र उपागत उपस्थित आसीत्, तस्मै गाश्च हिरण्यं सुवर्णञ्च, सर्वाणि आभरणानि च अदुर्दत्तवन्तः, दाननियुक्ताः कर्णादय इति शेषः।

(ग) नन्वत्र कथं क्रियागुप्तिरित्याह अत्रेति। तथा चापाततः "दुर्य्योधनः" इति धृतराष्ट्रज्येष्ठपुत्रस्यैव प्रतीतेः क्रियागुप्तिरिति भावः।

(घ) एवमिति। अन्यत्र कारकगुप्तादावप्येवमुदाहरणमूह्यमित्यर्थः। यथा—पाण्डवानामित्यत्रैव "उपागतः" इत्यस्य "अधनः" इति कर्त्तृकारकगुप्तिः। विस्तरस्तु सरस्वतीकण्ठाभरणकाव्यादर्शादावनुसन्धेयः।

(ङ) इदानीमर्थालङ्काराणां निरूपणे सङ्गतिं तत्रापि चोपमाया एव प्रथमाभिधाने युक्तिञ्चाह अथेति। अथशब्दोऽयमर्थालङ्कारनिरूपणारम्भे, शब्दालङ्कारनिरूपणानन्तर्य्यस्याभिधानक्रमेणैव प्राप्तत्वात्तदैयर्थ्यापत्तेः। अवसरप्राप्तेषु शब्दालङ्कारनिरूपणस्य संक्षेपेणैव समापिततया कार्य्यान्तराभावादवसरः प्राप्तस्तेन निरूपणीयेषु अर्थालङ्कारेषु लक्षितव्येष्विति परेणान्वयः। प्राधान्यादिति। चमत्कारविशेषविधायितया प्रचुरतया चेति भावः। एतच्च सादृश्यमूलेषु प्रथमं लक्षितव्येषु इत्येतत् प्रत्येवहेतुः। लक्षितव्येषु लक्षणादिभिर्निरूपयितव्येषु सत्सु, तेषामपि सादृश्यमूलानामलङ्काराणामपि, उपजीव्यत्वेन प्राधान्यादाश्रयणीयत्वेन।

(च) साम्यमिति। वाक्यस्य ऐक्ये एकत्वे सति, द्वयोरुपमानोपमेयभावेनाभिमतयोः अवैधर्म्यं तात्पर्य्यविषयीभूतविरुद्धधर्म्मरहितम्, वाच्यम् इवादिभिः शब्दैः क्यङादिभिः प्रत्ययैः उपमितादिभिः समासैर्वा स्पष्टप्रतिपाद्यम्, साम्यं सादृश्यम् उपमा। ननु "मुखं तव तथा भाति यथा रात्रौ चन्द्रमाः"

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**रूपकादिषु साम्यस्य व्यङ्ग्यत्वम् (छ)। व्यतिरेके च वैधर्म्म्यस्याप्युक्तिः (ज)। उपमेयोपमायां वाक्यद्वयम् (झ)। अनन्वये च एकस्यैव साम्योक्तिः (ञ)। इत्यस्या भेदः (ट)।**

---

इत्यादौ वाक्यद्वये अव्याप्तिरिति चेन्न, वाक्यैक्य इत्यनेन साकाङ्क्षवाक्यगतत्वे इत्यस्याभिप्रेतत्वात्, अत्र तूभयोरपि वाक्ययोः साकाङ्क्षत्वात्। एतेनोपमेयोपमायां द्वयोरपि वाक्ययोः परस्परनिराकाङ्क्षतया नातिव्याप्तिरपीति द्रष्टव्यम्। इत्थञ्च—

तात्पर्य्यविषयीभूतविरुद्धधर्म्माभाववत्त्वे सति इवादिप्रतिपाद्यसाकाङ्क्षवाक्यगतोभयसादृश्यत्वमुपमात्वमिति लक्षणं पर्य्यवसितम्।

"या गम्याः सत्सहायानां यासु खेदो भयं यतः। तासां किं यन्न दुःखाय विपदामिव सम्पदाम्॥"

इति किरातार्जुनीयपद्यादौ विपत्त्व-सम्पत्त्वयोः सर्वथा विरुद्धयोरपि धर्म्मयोर्विरुद्धत्वेन कवेस्तात्पर्य्यविषयीभूतत्वाभावान्नाव्याप्तिः।

"हसति यामपि शक्रभर्त्तृकाम्" इत्यादौ हसतीत्यादीनां साम्यप्रतिपादकतया दण्डिनाभिहितत्वान्नाव्याप्तिः। "राजपुरुषः" इत्यादौ लुप्तविभक्तेरिव "विधवति मुखाब्जम्" इत्यादावपि प्राचीनमते लुप्तक्यङादेरर्थवाचकत्वाङ्गीकारात् साम्यस्य वाच्यतया लक्षणसङ्गतिः। "मुखमस्त्री" इत्यादावुपमितसमासेन "शशाङ्कवदना" इत्यादौ च बहुव्रीहिसमासेन साम्यस्य प्रतिपादितत्वादुपमोपपत्तिः। तथा द्वयोरिति उभयेति चानेकोपलक्षणम्। तेन "हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत" इत्यादौ बहूनां सादृश्ये नाव्याप्तिः। "रूपानुरूपं वसनम्" इत्यादौ चोपमानोपमेयभावाभावात् वैचित्र्याभावाच्च नातिव्याप्तिरिति सारसंक्षेपः।

(छ) रूपकादिभिः सहोपमाया भेदप्रदर्शनच्छलेन वाच्यमित्यादिविशेषणपदानां कारिकापाठक्रमेण व्यावृत्तिमाह रूपकादिष्विति। आदिपदेन परिणामप्रतिवस्तूपमादीनां ग्रहणम्। तथा च व्यङ्ग्यसाम्यव्यवच्छेदार्थमेव वाच्यमिति विशेषणमित्याशयः। एवञ्च लक्षणाप्रतिपाद्यसाम्यस्थलेऽपि उपमैवेति ग्रन्थकृदभिप्रायो बोध्यः। यथा—"सरसिजप्रत्यर्थि पाणिद्वयम्।" अत्र प्रत्यर्थिशब्देन सदृशं लक्ष्यत इति नव्याः।

(ज) अवैधर्म्म्यमित्यस्य व्यावृत्तिमाह व्यतिरेके चेति। "अकलङ्कं मुखं तस्या न कलङ्कीविधुर्यथा" इत्यादिव्यतिरेकालङ्कारस्थले चेत्यर्थः। वैधर्म्म्यस्य उदाहृते अकलङ्कत्वकलङ्कित्वरूपस्य। तथा च व्यतिरेकस्थले अतिव्याप्तिवारणार्थम् अवैधर्म्म्यमिति विशेषणमिति भावः।

(झ) वाक्यैक्य इत्यस्य व्यावृत्तिं दर्शयति उपेति। अत्रोपमेयोपमापदं रसनोपमाया अप्युपलक्षणम्। तथा चोपमेयोपमायां रसनोपमायाञ्च वाक्यद्वयं परस्परनिराकाङ्क्षमनेकवाक्यमित्यर्थः। तत्रोपमेयोपमायां यथा—"कमलेव मतिः" इत्येकं वाक्यम्, "मतिरिव कमला" इति च द्वितीयम्। रसनोपमायां यथा—"चन्द्रायते शुक्लरुचापि हंसः" इत्येकं वाक्यम्, "हंसायते चारुगतेन कान्ता" इत्यादिकञ्च द्वितीयादि। एवञ्चात्र वाक्यैक्य इत्यभिधानात् उपमेयोपमायां रसनोपमायाञ्च साम्यस्य परस्परनिराकाङ्क्षानेकवाक्यगतत्वादुपमालक्षणस्य नातिव्याप्तिरित्यभिप्रायः। एतदुक्तिवशेन "साधर्म्म्यमुपमाभेदे" इति काव्यप्रकाशलक्षणं कदर्थितमिति बोध्यम्।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१८। सा पूर्णा यदि सामान्य-धर्म्म औपम्यवाचि च ।
उपमेयञ्चोपमानं भवेद्वाच्यम्—(ठ)

सा उपमा। साधारणधर्म्मो द्वयोः साहश्यहेतू गुणक्रिये मनोज्ञत्वादि (ड)। औपम्यवाचकमिवादि (ढ)। उपमेयं मुखादि। उपमानं चन्द्रादि (ण)।

---

(ञ) द्वयोरित्यस्य व्यावृत्तिमाह अनन्वये चेति। तथा च "राजीवमिव राजीवम्" इत्यादावेकमात्र-पदार्थस्य साम्ये अनन्वयालङ्कारस्थले अतिव्याप्तिनिरासार्थमत्र द्वयोरित्यभिहितमित्याशयः।

(ट) इतीति। इति अनया रीत्या, अस्या उपमायाः, भेदो रूपकादिभ्यः पार्थक्यम्।

(ठ) उपमा च पूर्णालुप्ताभेदेन प्रधानतो द्विविधेति दर्शयन् प्रथमं पूर्णां लक्षयति सेति। यदि सामान्यधर्म्म उपमानोपमेयोभयवृत्तिधर्म्मबोधकं पदम्, औपम्यवाचि साहश्यवाचकं पदञ्च प्रयुक्तं भवेदित्यर्थः तथा उपमेयमुपमानञ्च वाच्यमुल्लिखितं भवेत्; तदा सा उपमा पूर्णा पूर्णोपमाभिधाना स्यादित्यर्थः। सर्वाङ्गपूर्णत्वादित्याशयः।

(ड) सामान्यधर्म्मादिपदानि क्रमशो विवरीतुमाह साधारणेति। सामान्यसाधारणशब्दयोः पर्य्यायतया सामान्यधर्म्म इत्यस्य स्थाने साधारणधर्म्म इति प्रयोगेऽपि न दोषः। द्वयोरुपमानोपमेयत्वेनाभिमतयोः पदार्थयोः, साहश्यस्य हेतू घटिके। तथा च तद्भिन्नत्वे सति सम्भाव्यमानतद्गतानेकधर्म्मवत्त्वं नाम साहश्यम्। तेन च स धर्म्मस्तस्य साहश्यस्य घटक एव भवति, धनमिव धनित्वस्येति भावः। गुणश्च क्रिया चेति गुणक्रिये। एतच्चोपलक्षणम्, एकविधशब्दोपस्थाप्यत्वमपि शाब्दः सामान्यधर्म्म इत्युन्नेयम्। मनोज्ञत्वादिपदेन भातिप्रभृति-क्रियायास्साहश्यशाब्दधर्म्मस्य च ग्रहणम्। तथा च "कमलमिव मुखं मनोज्ञम्" इत्यादौ मनोज्ञत्वादिरूपो गुणः सामान्यधर्म्मः। "मुखं चन्द्र इवाभाति" इत्यादौ आभातीत्यादिरूपा क्रिया सामान्यधर्म्मः। "सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव" इत्यादौ सकलकलमित्येकविधशब्दोपस्थाप्यत्वरूपः स्वरूपविशेषः सामान्यधर्म्मः।

(ढ) औपम्येति। एतच्च अव्ययानामपि केषाञ्चिच्छब्दानां वाचकत्वमङ्गीकुर्वतां वैयाकरणैकदेशी-यानां मतमाश्रित्याभिहितमिति बोध्यम्। आदिशब्देन यथादिशब्दानां वदादिप्रत्ययानां बहुव्रीहिसमासस्य च ग्रहणम्। दण्डिना तु—"इव-वद्वा-यथा-शब्दाः" इत्यादिना औपम्यवाचकाः कियन्तः शब्दाः परिगणिता उन्नेयाः।

(ण) उपेति। उपमीयते सहशीक्रियते यत्तदुपमेयं साहश्याश्रयः पदार्थः। यस्य दृष्टान्तो मुखादिति। "चन्द्रवन्मुखम्" इत्यादौ मुखादिकमित्यर्थः। उपमीयते सहशीक्रियते येन तदुपमानं साहश्यस्य नियतसम्बन्धी पदार्थः। तत्र दृष्टान्तश्चन्द्रादीति। "चन्द्रवन्मुखम्" इत्यादौ चन्द्रादिक-मित्यर्थः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१९ । इयं पुनः ॥

श्रौती यथेववाशब्दा इवार्थो वा वतिर्यदि ।
आर्थी तुल्यसमानाद्यास्तुल्यार्थो यत्र वा वतिः ॥ (त)

यथेववादयः शब्दा उपमानानन्तरप्रयुक्ततुल्यादिपदसाधारणा अपि श्रुतिमात्रेणोपमानोपमेयगतसादृश्यलक्षणसम्बन्धं बोधयन्तीति तत्सद्भावे श्रौती उपमा (थ)। एवं "तत्र तस्येव" इत्यनेन इवार्थे विहितस्य वतेरुपादाने (द)।

तुल्यादयस्तु—"कमलेन तुल्यं मुखम्" इत्यादावुपमेय एव, "कमलं मुखस्य तुल्यम्" इत्यादावुपमान एव, "कमलं मुखञ्च तुल्यम्" इत्यादावुभयत्रापि विश्राम्यन्तीति, अर्थानुसन्धानादेव साम्यं प्रतिपादयन्तीति तत्सद्भावे

---

(त) श्रौतीरूपेण आर्थीरूपेण च पूर्णोपमां द्विधा विभजते इयमिति। इयं पुनः पूर्णोपमा, यदि यथाशब्दः इवशब्दः, "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वकोषदर्शनात् उपमावाचको वाशब्दः, बहुवचनात् इवार्थे 'व'-निपातश्च इवार्थो वतिः प्रत्ययो वा वर्त्तते, तदा श्रौतीत्याख्यायते ; श्रुतिमात्रेण सादृश्यावगमात्। यत्र तु तुल्यः, समानः, आद्यशब्दात् सदृशादयः, शब्दाश्च वर्त्तन्ते, तुल्यार्थो वतिः प्रत्ययो वा वर्त्तते, तत्र आर्थीत्यभिधीयते ; अर्थानुसन्धानेनैव सादृश्यावगमात्।

(थ) ननु यथादयस्तुल्यादयश्च शब्दाः सादृश्यप्रत्यायने समानसमर्था एवेति कथं तत्तच्छब्दमात्रमादायैव श्रौत्यार्थीरूपद्विविधभेदकल्पनेत्याह यथेवेति। उपमानानन्तरम् उपमानबोधकशब्दात् परं प्रयुक्तानि विन्यस्तानि यानि तुल्यादिपदानि तेषां साधारणाः समाना अपि, श्रुतिमात्रेण षष्ठीवत् श्रवणमात्रेणैव उपमानोपमेयगतं सादृश्यलक्षणं साम्यस्वरूपं सम्बन्धं बोधयन्ति शब्दशक्तिमहिम्ना प्रत्याययन्ति, इति हेतोः, तेषां यथेववादिशब्दानां सद्भावे विद्यमानत्वे।

(द) एवमिति। "तत्र तस्येव" इति (५। १। ११६) पाणिनिसूत्रम्। तत्रेति सप्तम्यन्तात् तस्येति षष्ठ्यन्ताच्च शब्दादिवार्थे वतिप्रत्ययो भवतीत्यर्थः। वतेर्वतिप्रत्ययस्य उपादाने श्रौती उपमेति पूर्वेणान्वयः।

(ध) इदानीमार्थीति संज्ञामुपपादयितुमाह तुल्यादय इति। शब्दा इति पूर्वेणान्वयः। आदिशब्दात् समान-सदृश-हसति-प्रत्यर्थिप्रभृतिशब्दानां ग्रहणम्। उपमेये मुख एव, विश्राम्यन्तीति परेणान्वयः। तुल्यमिति मुखमिति चानयोः समानविभक्तिकत्वादिति भावः। एवमुत्तरयोरपि। मुखस्येति "दीर्घकाया जलम्" इत्यादिवदधिकरणतासम्बन्धे षष्ठी। उपमाने कमले एव। न चात्र कमलशब्दतुल्यशब्दयोः समानविभक्तिकत्वात् कमलस्योपमेयत्वमेवेति वाच्यम्, मुखकमलशब्दयोः समभिव्याहारस्थले कमलस्योपमानतया चिरप्रसिद्धत्वात्। काव्यप्रकाशटीकायां महेश्वरोऽप्येवमेवाह स्म। विश्राम्यन्ति अवतिष्ठन्ते समानविभक्तिक-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आर्थी (ध)। एवं "तेन तुल्यम्" इत्यादिना तुल्यार्थे विहितस्य वतेरुपादाने (न)।

२०। द्वे तद्धिते समासेऽथ वाक्ये—(प)

द्वे श्रौती आर्थी च। उदाहरणम्—

"सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ।
हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले!॥" (फ)

अत्र क्रमेण त्रिविधा श्रौती (ब)।

---

त्वादिशब्दैस्तत्प्रत्यायनेन प्राधान्यं प्रत्याययन्तीत्यर्थः। साम्यम् उपमेयत्वप्रतिपादकं विशेष्यीभूतं सादृश्यमित्यर्थः। तेषां तुल्यादिशब्दानां सद्भावे विद्यमानत्वे, आर्थी उपमेत्यन्वयः।

(न) एवमिति। इत्यादिना "तेन तुल्यं क्रिया चेद्वतिः" (५।१।११५) इति पाणिनिसूत्रेणेत्यर्थः। तथा च तेनेति तृतीयान्तात् तुल्यमित्यर्थे वतिप्रत्ययो भवति, तत्तुल्यं चेत् क्रिया क्रियाविशेषणत्वेन क्रियारूपं भवतीत्यर्थः। यथा—ब्राह्मणेन तुल्यमधीते ब्राह्मणवदधीते क्षत्रियः। वतेर्वतिप्रत्ययस्य उपादाने आर्थी उपमेति पूर्वेणान्वयः। काव्यप्रकाशकारोऽप्येवम्।

(प) श्रौत्यार्थीभेदेन द्विविधाया अपि तस्याः पूर्णोपमायाः पुनस्त्रिविधत्वमाह द्वे इति। द्वे पूर्वोक्ते पूर्णोपमे श्रौत्यार्थीभेदेन द्विविधापि पूर्णोपमेत्यर्थः, प्रत्येकमेव तद्धिते समासे अथ तथा वाक्ये च सम्भवत इत्यर्थः।

(फ) सौरभमिति। हे बाले! तव मुखस्य सौरभम् अम्भोरुहवत् पद्मस्येव, स्तनौ कुम्भाविव पीनौ स्थूलौ। एवं यथा शरदिन्दुः हृदयं मदयति, तथा तव वदनं कर्तृ हृदयं मदयति आनन्दयति।

(ब) अत्रेति। तथा च प्रथमवाक्ये सामान्यधर्मः सौरभम्, अम्भोरुहमुपमानम्, मुखमुपमेयम्, वतिप्रत्ययश्चौपम्यवाचीति पूर्णोपमायाः सामान्यलक्षणसङ्गतिः। एवमन्यत्राप्यूह्यम्। सा चात्र पूर्णोपमा "तत्र तस्येव" इत्यनेन इवार्थे वतिप्रत्ययविधानात् तद्धितगता श्रौती।

द्वितीयवाक्ये "कुम्भाविव" इत्यत्र "इवेन समासो विभक्त्यलोपश्च" इति वार्त्तिकोक्त्या समासाश्रयणात् समासगता श्रौती पूर्णोपमा।

द्वितीयार्द्धस्य तु वाक्यरूपत्वात् यथाशब्दस्य श्रौतीघटकत्वाच्च वाक्यगता श्रौती पूर्णोपमा।

ननु प्रथमद्वितीययोरपि वाक्यत्वेन वाक्यगता श्रौत्या पूर्णोपमा तद्धितगता-समासगतयोस्तयोः साङ्कर्यापत्तिः। न चापि तयोः क्रियाभावाद्वाक्यत्वाभाव इति वाच्यम्, अवश्यमेव क्रियाया अध्याहरणीयत्वात् अन्यथा आकाङ्क्षानिवृत्त्यसम्भवेन अन्वयसमाप्त्यसम्भवात् "चकितमृगलोचनाभ्याम्" इत्यादिवक्ष्यमाणस्य क्रियाभावे वाक्यगतत्वे उदाहरणत्वासम्भवाच्चेति चेन्न, तद्धितगता-समासगतयोर्विशेषरूपत्वेनापवादरूपतया सामान्यरूपाया वाक्यगताया बाधकत्वाङ्गीकारात्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः।
चकितमृगलोचनाभ्यां सदृशी च चपले लोचने तस्याः॥" (भ)

अत्र क्रमेण त्रिविधा आर्थी (म)।

२१। पूर्णा षड़ेव तत्। (य)

स्पष्टम् (र)।

२२। लुप्ता सामान्यधर्म्मादेरेकस्य यदि वा द्वयोः॥
त्रयाणां वानुपादाने श्रौत्यार्थी सापि पूर्ववत्। (ल)

सा लुप्ता। तद्भेदमाह—

२३। पूर्णावद्धर्म्मलोपे सा विना श्रौतीन्तु तद्धिते॥ (व)

---

(भ) मधुर इति। तस्यास्तरुण्याः अधरः सुधावन्मधुरः, पाणिः पल्लवतुल्योऽतिपेलवः अतिशयेन कोमलः, तथा लोचने च चकितमृगस्य त्रस्तहरिणस्य लोचनाभ्यां सदृशी चपले चञ्चले।

अत्र पेलवशब्दस्य आद्याक्षरे अश्लीलं इति पदांशगताश्लीलतादोषो भवत्येव, अन्यथा "पाणिः पल्लवपेलवः" इति सप्तमपरिच्छेदोदाहरणेऽप्यसौ दोषो न स्यात् समानन्यायात्। अतः "न दोषः" इति रामचरणोक्तं चिन्त्यम्। तथापि न किञ्चिदुद्वेजनीयं दोषस्यालङ्कारप्रतिबन्धकत्वाभावात्।

(म) अत्रेति। तथा च प्रथमवाक्ये अधरः सुधातुल्यमेव मधुरतया आस्वाद्यते इत्यर्थविवक्षया "तेन तुल्यं क्रिया चेद्वतिः" इत्यनेन तुल्यार्थे वतिप्रत्ययात् तद्धितगता आर्थी पूर्णोपमा। द्वितीयवाक्ये पल्लवेन तुल्य इति समासात् समासगता आर्थी पूर्णोपमा। द्वितीयार्द्धस्य च वाक्यरूपत्वात् चकितमृगलोचनाभ्यामित्यत्र, समासे सत्यपि सदृशी इत्यनेन समासाभावाच्च वाक्यगतैव आर्थी पूर्णोपमा। अत्रापि पूर्ववदेव पूर्ववाक्ययोर्न वाक्यगता आर्थी पूर्णोपमेत्यूहनीयम्।

(य) सङ्कलयति पूर्णेति। तत्तस्मात् उक्तविधभेदनिरूपणादित्यर्थः, पूर्णा पूर्णोपमा षड़ेव षट्प्रकारैव। ते च प्रकारा अनुपदमेवोक्ता अनुसन्धेयाः।

(र) स्पष्टमिति। इदं वाक्यं सुबोधमित्यर्थः। अतो न किञ्चिद्व्याख्यातमित्याशयः।

(ल) लुप्तोपमां लक्षयति लुप्तेति। सामान्यधर्म्मादेरिति "द्वन्द्वः सामासिकस्य च" इति वतिवन्निर्द्धारण एव षष्ठ्या एकवचनम्। आदिशब्देन उपमानस्य उपमेयस्य औपम्यवाचकानामिवादिशब्दानाञ्च ग्रहणम्। तथा च सामान्यधर्म्मादेर्मध्ये यस्य कस्यचिदेकस्य, यदि वा अथवा ययोः कयोश्चित् द्वयोः, किंवा येषां केषाञ्चित् त्रयाणाम् अनुपादाने अनभिधाने लुप्ता लुप्तोपमा भवति। सामान्यधर्म्मादीनां मध्ये एकप्रभृतेरनुपादान-रूपलोपादेवास्या लुप्तोपमेति संज्ञा। ; लुप्तोपमापि पूर्ववत् पूर्णोपमावत् श्रौती आर्थी चेति प्रथमतो द्विविधेत्यर्थः।

(व) पूर्वकारिकायां "सामान्यधर्म्मादेः" इति धर्म्मस्य प्रथमनिर्द्देशात् धर्म्मलोप एव लुप्तोपमां प्रथमं

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सा लुप्तोपमा धर्म्मस्य साधारणगुणक्रियारूपस्य लोपे पूर्णावदिति पूर्वोक्त-रीत्या षट्प्रकारा, किन्त्वत्र तद्धिते श्रौत्या असम्भवात् पञ्चप्रकारा (अ)।
उदाहरणम्—

"मुखमिन्दुर्यथा पाणिः पल्लवेन समः प्रिये ! ।
वाचः सुधा इवौष्ठस्ते (१) विम्बतुल्यो मनोऽश्मवत् ॥" (ब)

---

विभजते पूर्णावदिति । सा लुप्तोपमा धर्म्मलोपे सामान्यधर्म्मस्यानुपादाने सति तद्धिते श्रौतीं विना तु श्रौतीरूपं भेदं विहाय तु पूर्णावत् पूर्णोपमासमसंख्यकप्रकारा भवतीत्यर्थः ।

(अ) धर्म्मस्येति । साधारण उपमानोपमेयोभयवृत्तिर्यो गुणक्रियारूपस्तस्य । पूर्वोक्तरीत्या श्रौती तद्धितगता समासगता वाक्यगता चेति त्रिविधा, आर्थी च तथैव त्रिविधेति प्रागुक्तप्रकारेण, षट्प्रकारा षड्-विधा भवितुं योग्यापीत्यर्थः । अत्र सामान्यधर्म्मलोपे सति । असम्भवादिति । अत्रायमभिप्रायः—"तत्र तस्येव" इत्यनेन सप्तम्यन्तात् षष्ठ्यन्ताच्च वतिप्रत्ययो विधीयते, सा पुनः सप्तमी षष्ठी च विभक्तिर्यत् कश्चित् सामान्यधर्म्ममपेक्ष्यैव सम्भवति । एवञ्च सामान्यधर्म्मानुपादाने तस्याः सप्तम्याः षष्ठ्याश्चासम्भवात् तदन्त एव प्रसक्तस्य वतिप्रत्ययस्याप्यसम्भवेन सामान्यधर्म्मलोपे श्रौत्या अप्यसम्भव एव । तथा च "सौरभमम्भोरुहवन्मुखस्य" इत्यत्र सौरभरूपसामान्यधर्म्मानुपादाने न खलु केवलम् "अम्भोरुहस्य" इति षष्ठी विभक्तिस्तदन्ते वतिप्रत्ययो वा उपपद्यत इति । अतएवाह पञ्चप्रकारेति । तथाहि सामान्यधर्म्मलोपे समासगता वाक्यगता चेति द्विविधा श्रौती, तद्धितगता समासगता वाक्यगता चेति त्रिविधा च आर्थीति मिलित्वा समुदायेन पञ्चविधा लुप्तोपमा ।

(ब) मुखमिति । हे प्रिय ! तव मुखम् इन्दुर्यथा चन्द्र इव । अत्र यथाशब्दस्योपादानात् आनन्दयतीति क्रियारूपसामान्यधर्म्मस्य चानुपादानात् वाक्यगता श्रौती लुप्तोपमा ।

पाणिः पल्लवेन सम इति समशब्दस्योपादानात् कोमल इति गुणरूपसामान्यधर्म्मस्य चानुपादानात् वाक्यगता आर्थी लुप्तोपमा ।

वाचः सुधा इव इति इवशब्दस्योपादानात् मधुरा इति सामान्यधर्म्मस्य चानुपादानात् इवशब्देन सह प्रागुक्तन्यायेन समासाच्च समासगता श्रौती लुप्तोपमा ।

ते तव ओष्ठो विम्बतुल्य इति तुल्यशब्दस्योपादानात् लोहितवर्ण इति सामान्यधर्म्मस्य चानुपादानात् विम्बशब्देन सह तुल्यशब्दस्य समासाच्च आर्थी समासगता लुप्तोपमा ।

तथा मनः अश्मवत् पाषाणवत् इति तृतीयान्तादश्मशब्दात् तुल्यार्थे वतिप्रत्ययविधानात् कठिनमिति सामान्यधर्म्मस्य चानुपादानात् तद्धितगता आर्थी लुप्तोपमा ।

अत्र पञ्चानामेव स्थलानां वाक्यत्वेन सर्वत्रैव वाक्यगत-लुप्तोपमात्वप्रसक्तावपि तद्धितगतायाः समास-गतायाश्च विशेषरूपत्वेन तदपवादरूपत्वात् तद्धितगता-समासगतयोर्व्यतिरिक्तस्थल एव वाक्यगतायाः प्रवृत्तिरिति पूर्वमप्युक्तम् ।

---

(१) इवौष्ठस्ते इति क्वचित् पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२४। आधारकर्म्मविहिते द्विविधे च क्यचि क्यङि।
कर्म्म-कर्त्तोर्णमुलि च स्यादेवं पञ्चधा पुनः॥ (ख)

धर्म्मलोपे लुप्तेत्यनुषज्यते (छ)। क्यच्-क्यङ्-णमुलः कलापमते यिन्नायिणमः (च)। क्रमेणोदाहरणम्—

"अन्तःपुरीयसि रणेषु सुतीयसि त्वं
पौरं जनं तव सदा रमणीयते श्रीः।
दृष्टः प्रियाभिरमृतद्युतिदर्शमिन्द्र-
सञ्चारमत्र भुवि सञ्चरसि क्षितीश!॥" (क)

---

(ख) पुनरपि लुप्तोपमामेव प्रकारान्तरेण विभजते आधारेति। आधारकर्म्मविहिते क्यचि द्विविधे लुप्तोपमे अधिकरणकारकाद्विहिते क्यचि एकविधा, कर्म्मकारकाद्विहिते क्यचि च एकविधेति मिलित्वा एकस्मिन् क्यच्येव द्विविधे लुप्तोपमे इत्यर्थः। आधारकर्म्मविहिते द्विविधे क्यचि द्विविधा लुप्तोपमा इत्यन्वयो वा। क्यङि प्रत्यये एकविधा, तथा कर्म्म-कर्त्रोर्णमुलि कर्म्मणि णमुलि कर्त्तरि णमुलि च प्रत्येकमेकैकविधतया द्विविधा एवमित्थं मिलित्वा सामान्यधर्म्मलोपे लुप्तोपमा समुदायेन पुनः पञ्चधा स्यादित्यर्थः।

(छ) धर्म्मेति। पूर्वकारिकातो "धर्म्मलोपे" इति "सा" तत्पदवाच्य "लुप्ता" इति च अनुषज्यते अनुकृष्यते, आकाङ्क्षितत्वादिति भावः।

(च) सर्वैरपि वैयाकरणैरलङ्कारशास्त्रस्यादरणीयत्वात् पाणिनीय-क्यजादिप्रत्ययस्वरूपाणि कालापिकानवबोधयितुमाह कलापेति। अत्र यथासंख्येनान्वयः। मुग्धबोधमते तु क्य-ञ्य-चणम इत्यवधेयम्।

(क) एकपद्येनैव निरुक्तपञ्चविधलुप्तोपमायाः क्रमेणोदाहरणमाह अन्तरेति। हे क्षितीश! राजन्! त्वं रणेषु अन्तःपुरीयसि अन्तःपुरेष्विवाचरसि अन्तःपुरेष्विव सुखं विहरसीत्यर्थः। अत्र अन्तःपुरेत्यधिकरणात् पाणिनिमते "उपमानादाचारे" इत्यत्र "अधिकरणाच्च" इति वार्त्तिकोक्त्या क्यच्, कलापमतेऽपि "उपमानादाचारे" इत्यत्र "आधारादपि स्यात्" इति दुर्गसिंहोक्त्या यिन्, मुग्धबोधमते "ढडीपमानादाचारे क्यः" इति सूत्रेण च क्यः प्रत्ययः।

[पौ]रं जनं सुतीयसि सुतं पुत्रमिवाचरसि पुत्रतुल्यं स्नेहनिर्भ[रा]दरं मन्यसे इत्यर्थः। अत्रापि सुतमिति कर्म्मपदात् मतत्रये उक्तसूत्रत्रयेण क्रमात् क्यच् यिन् क्यश्च प्रत्ययः।

श्रीर्लक्ष्मीः सदा तव रमणीयते रमणी वनितेवाचरति वनितेव सुखभोगं सम्पादयतीत्यर्थः। अत्र रमणीति कर्त्तृपदात् पाणिनिमते "कर्त्तुः क्यङ् सलोपश्च" इत्यनेन क्यङ्, कलापमते "कर्त्तुरायिः सलोपश्च" इत्यनेनायिः, मुग्धबोधमते तु "घान्ञ्यक्ती सलोपश्च" इत्यादिना ञ्यप्रत्ययः।

प्रियाभिरमृतद्युतेरिव दर्शनममृतद्युतिदर्शं त्वं दृष्टः चन्द्रवन्नयनानन्दकरत्वेन दृष्ट इत्यर्थः। अत्र अमृतद्युतीति कर्म्मण्युपपदे दृश्धातोः पाणिनिमते "उपमाने कर्म्मणि च" इत्यनेन णमुल्, कलापमते "कर्म्मणि

CC-0. Kavikulaguru Kalidas Sanskrit University Ramtek Collection Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र "अन्तःपुरीयसि" इत्यत्र सुखविहारास्पदत्वस्य, "सुतीयसि" इत्यत्र स्नेहनिर्भरत्वस्य च साधारणधर्मस्य लोपः (ख)। एवमन्यत्र (ग)।

इह च यथादि-तुल्यादि-विरहात् श्रौत्यादिविशेषचिन्ता नास्ति (घ)।

इदञ्च केचिदौपम्यप्रतिपादकस्य इवादेर्लोपे (१) उदाहरन्ति, तदयुक्तम्; क्यङादेरपि तदर्थविहितत्वेन औपम्यप्रतिपादकत्वात् (ङ)। ननु क्यङादिषु सम्यगौपम्यप्रतीतिर्नास्ति, प्रत्ययत्वेनास्वतन्त्रत्वात् इवादिप्रयोगाभावाच्चेति न वाच्यम्; कल्पबादावपि तथाप्रसङ्गात् (च)। न च कल्पबादीनामिवादि-तुल्यतया औपम्यस्य वाचकत्वम्, क्यङादीनान्तु द्योतकत्वम्; इवादीनामपि

चोपमाने" इत्यनेन णम्, मुग्धबोधमते तु "चणम् वाभीक्ष्ण्ये पूर्वकाले" इत्यनेनैव वाशब्दस्य व्यवस्थावाचित्वात् चणम्प्रत्ययः।

तथा अत्र भुवि इन्द्र इव सञ्चरणमितीन्द्रसञ्चारं सञ्चरसि ऐश्वर्य्यातिशयादिन्द्र इवाप्रतिहतं सञ्चरसीत्यर्थः। अत्रापि. इन्द्रेति कर्त्तर्य्युपपदे सपूर्वकचरधातोर्स्तत्वयोऽप्युक्तसूत्रत्रयेण क्रमात् णकुल्, णम्, चणम् वा प्रत्ययः।

(ख) ननूदाहृतप्रयोगेषु कुत्र कीदृशस्य सामान्यधर्म्मस्य लोपः, येन तेषु लुप्तोपमाविशेषाः स्युरित्याह अत्रेति। सुखविहारास्पदत्वस्य, "अन्तःपुरीयसि रणेषु" इत्यत्र अनायासविचरणाश्रयत्वरूपस्य, साधारणधर्म्मस्येति परेणान्वयः। उपमानोपमेयभूतयोरुभयोरपि रणान्तःपुरयोस्तादृशधर्म्मस्य सत्त्वादिति भावः। एवमुत्तरत्रापि। स्नेहनिर्भरत्वस्य "पौरं जनं सुतीयसि" इत्यत्र वात्सल्यातिशयाश्रयत्वस्य।

(ग) एवमिति। अन्यत्र "रमणीयते श्रीः" इत्यादिषु त्रिषु स्थलेष्वपि एवमूह्यमित्यर्थः। तथा च "रमणीयते श्रीः" इत्यत्र सुखभोगसम्पादकत्वस्य, "प्रियाभिरम्भतद्युतिदर्शम्" इत्यत्र नयनानन्दकरत्वस्य, "इन्द्रसञ्चारं सञ्चरसि" इत्यत्र अप्रतिहतसञ्चरणस्य च सामान्यधर्म्मस्य लोपः।

(घ) नन्वमीषां पञ्चानामेव पुनः श्रौत्यार्थीरूपभेदद्वयेन पुनर्द्विविधत्वात् समुदायेन दशविधत्वे प्राप्ते कथं पञ्चैतिमात्रमुक्तमित्याह इह चेति। क्यजादिप्रत्ययमात्रघटितलुप्तोपमायाञ्चेत्यर्थः। आदिशब्देन आर्थीग्रहणम्। तथा च श्रुतिमात्रेण सादृश्यबोधकानां यथादिशब्दानामभावात् श्रौतीरूपभेदचिन्ता नास्ति। एवमर्थानुसन्धानेन सादृश्यप्रतिपादकानां तुल्यादिशब्दानामभावात् आर्थीरूपभेदचिन्तापि नास्तीति सरलार्थः। श्रौतीभिन्नाया एवार्थीत्वाङ्गीकारे त्वस्या आर्थीत्वमस्त्येवेति बोध्यम्।

(ङ) इवादेर्लोपे समासे सा कर्म्माधारक्यचि क्यङि। कर्म्मकर्त्रोर्णमुलि—" इति काव्यप्रकाशकारमतं दूषयितुमाह इदञ्चेति। "अन्तःपुरीयसि रणेषु" इत्यादिसदृशञ्चेत्यर्थः, काव्यप्रकाशे "पौर सुतीयति जनम" इत्याद्युदाहरणदर्शनात्। केचित् काव्यप्रकाशकाराः। लोपे अनुपादाने। आदिपदेन क्यज्णमुलोर्ग्रहणम्। तदर्थविहितत्वेन इवार्थविहितत्वेन। औपम्येति। "यो यत्र प्रत्ययो जातः" इत्यादिन्यायादिति भावः।

(१) वतेर्लोपे, इवादेर्लोपश्च इति पाठभेदो।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वाचकत्वे निश्चयाभावात् (छ)। वाचकत्वे वा "समुदितं पदं वाचकम्" "प्रकृतिप्रत्ययौ स्वस्वार्थबोधकौ" इति च मतद्वयेऽपि वत्यादि-क्यङाद्योः साम्यमेवेति (ज)।

यच्च केचिदाहुः—"वत्यादय इवाद्यर्थेऽनुशिष्यन्ते, क्यङादयस्त्वाचारार्थे" इति, तदपि न। न खलु क्यङादय आचारमात्रार्थाः अपि तु सादृश्याचारार्था इति (झ)।

तदेवं धर्मलोपे दशप्रकारा लुप्ता (ञ)।

(च) उक्तखमतं प्रति शङ्कते नन्विति। अस्वतन्त्रत्वात् स्वार्थस्यापि प्रत्यायने अस्वाधीनत्वात् प्रकृतिसाहाय्यं विना स्वार्थस्यापि प्रत्यायनादित्यर्थः। तथा चोक्तं कातन्त्रपरिशिष्टे श्रीपतिना—"प्रत्ययास्तु नियोगतः प्रकृतीरनुगच्छन्तस्तदार्थापेक्षयैव स्वार्थानभिदधानाः" इति। कल्पवादाविति। पाणिनिमते "ईषदसमाप्तौ कल्पप्-देश्यदेशीयरः" इति सूत्रे प पकारानुबन्धः "कल्पप्" इति प्रत्ययः। कलापमते तु अकारान्त एव कल्पप्रत्ययः। आदिपदेन देश्य-देशीययोर्ग्रहणम्। तथा प्रसङ्गात् औपम्यप्रतीत्यभावप्रसङ्गात्। तथा च सति "इन्द्रकल्पो नृपः सोऽयम्" इत्यादावुपमाया अभावप्रसङ्ग इत्याशयः।

(छ) पुनः शङ्कते न चेति। इत्यादि तुल्यतयेति। "देशीय-देश्य-कल्पादिः" इति सादृश्यवाचकशब्दप्रदर्शनप्रकरणे दण्डिनोक्तेरिति भावः। क्यङादीनामित्यादिपदेन क्यच्-णमुलोर्ग्रहणम्। द्योतकत्वमिति। वाच्यमिति शेषः, तस्य च न चेत्यनेनान्वयः। तेषामिवाद्यर्थे विधानाभावात्, किन्तु आचाराद्यर्थे विधानेन उपमानपदसमभिव्याहारमात्रादौपम्यस्य द्योतकत्वमात्रमित्याशयः। निश्चयाभावादिति। "अव्यया हि द्योतका न तु वाचकाः" इति केषाञ्चिन्नियमाभिधानादित्यभिप्रायः।

(ज) ननु भवतामपि इवादीनामौपम्यावाचकत्ववादिमतावलम्बने "चन्द्र इव मुखम्" इत्यादावुपमालक्षणस्याव्याप्तिः "औपम्यवाचकमिवादि" इति स्वोक्तिविरोधश्चेत्यत आह वाचकत्वे वेति। आलङ्कारिकैरिवादीनामौपम्यावाचकत्वाङ्गीकारे वेत्यर्थः। समुदितं प्रकृतिप्रत्ययसमुदायात्मकमेव पदं वाचकं युगपदेवोभयार्थबोधकम्, न तु प्रकृतिमात्रं प्रत्ययमात्रं वा वाचकमित्यर्थः। स्वस्वार्थबोधकौ क्रमेण निज-निजार्थबोधकौ। साम्यमेवेति। उभयोरपि सादृश्यसम्बन्धिप्रत्ययत्वादिति भावः।

(झ) काव्यप्रकाशकारमतानुयायिनां चण्डीदासादीनामपि मतं दूषयितुमाह यच्चेति। अनुशिष्यन्ते "तत्र तस्येव" इत्यादिना शास्त्रेण विधीयन्ते। तथा च वत्यादीनामिवार्थे विधानादौपम्यवाचकत्वम्, क्यङादीनान्तु आचारार्थे विधानादाचारार्थवाचकत्वम्, "यो यत्र प्रत्ययो जातः" इत्यादिन्यायात्। तेन क्यङादिप्रत्ययस्थले औपम्यप्रतिपादकलोपाभिधानमेव सङ्गच्छत इति तेषामाशयः। सादृश्याचारार्थाः सादृश्यस्य व्यवहारार्थाः। तथा च रमणीवाचरति सुतमिवाचरति इत्येवमाद्यर्थे "रमणीयते" "सुतीयति" इत्यादौ राजनि श्रिया रमणीसदृशाचरणस्य पौरजने च राज्ञः पुत्रतुल्याचरणस्य प्रतीतेः क्यङादीनां सादृश्याचरणमेवार्थः, न पुनः केवलाचरणमर्थ इति "अन्तःपुरीयसि रणेषु" इत्यत्र भूतानामिवादेर्लोपे काव्यप्रकाशकृतामुदाहरणमयुक्तमेवेति भावः।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२५। उपमानानुपादाने द्विधा वाक्यसमासयोः। (ट)

उदाहरणम्—

"तस्या मुखेन सदृशं रम्यं नास्ते न वा नयनतुल्यम्।" (ठ)

अत्र मुख-नयन-प्रतिनिधि-वस्त्वन्तरयोर्गम्यमानत्वादुपमानलोपः (ड)। अतएव च "मुखेन सदृशम्" इत्यत्र "मुखं यथेदम्" इति, "नयनतुल्यम्" इत्यत्र "दृगिव" इति पाठे श्रौत्यपि सम्भवतीति अनयोर्भेदयोः प्रत्येकं श्रौत्यार्थीत्व-भेदेन चतुर्विधत्वसम्भवेऽपि प्राचीनानां रीत्या द्विप्रकारत्वमेवोक्तम् (ढ)।

---

(ञ) धर्मलोपे लुप्तोपमामुपसंहरन् समुदायेन तत्सङ्कलनमाह तदेवमिति। पूर्णावदित्याद्युक्त्या पञ्चप्रकारा आधारेत्याद्युक्त्या च पञ्चप्रकारेति मिलित्वा समुदायेन दशप्रकारेत्यर्थः। तर्कवागीशस्तु एकस्या आर्थ्या एव तद्धितादिगतत्वेन कञाादिगतत्वेन च षट्प्रकारत्वमङ्गीकृत्य पुनः धर्मलोपालोपाभ्यां द्वैविध्यात् समुदायेन षोड़शप्रकारत्वमङ्गीकृतवान्। तत्तु "इह च यथादितुल्यादिविरहात् श्रौत्यादिविशेषचिन्ता नास्ति" इत्युक्त्या ग्रन्थकर्त्तुरनभिप्रेतत्वात् तादृशभेदानामन्यथापि सम्भवाच्चोपेक्षणीयम्।

(ट) धर्मलोपे लुप्तोपमामभिधायेदानीमुपमानोपमेययोरुपमानस्यैव प्रथमं बुद्धिविषयत्वात्तल्लोप एव लुप्तोपमामाह उपेति। उपमानस्य अनुपादाने अनभिधाने वाक्यसमासयोर्वाक्यगतत्वेन समासगतत्वेन च पुनर्द्विधा लुप्तोपमेत्यनुषज्यते। इदमत्रावधेयम्—उपमानपदानुपादाने तदुत्तरप्रयोज्यानां श्रौतीप्रतिपाद-कानामिवादिशब्दानामुपादानासम्भवात् श्रौतीभेदसामान्यस्यैवासम्भवः। न खलु चन्द्रपदानुपादाने "इव मुखम्" इतिमात्रः प्रयोगः सम्भवति। तथा उपमानपदानुपादानेनैव तदुत्तरमात्रकर्त्तव्यवतिप्रत्ययादीना-मसम्भवादार्थीमध्येऽपि तद्धितगतभेदस्यासम्भव एवेति पारिशेष्यादुपमानानुपादाने आर्थीमध्ये केवलेन वाक्य-गतत्वेन समासगतत्वेन च लुप्तोपमा द्विधेति।

(ठ) तस्या इति। "तदतुलना ललनासु प्रतिभाति सा मे मनोरमा॥" इति मत्पूरितपरार्द्धम्। अत्र नास्ते इत्यन्तवाक्ये उपमानानुपादानात् वाक्यगता लुप्तोपमा। तथा नवा नयनतुल्यमित्यत्र तु तुल्यशब्देन समासात् उपमानानुपादानाच्च समासगता लुप्तोपमा।

न चात्र मुखनयनयोर्भिन्नविभक्तिकतया उपमानत्वमेवेत्याशङ्कनीयम्, चन्द्रोत्पलयोरुपमानत्वेन मुख-नयनयोस्तु तदुपमेयत्वेन सहृदयसमाजेऽत्यन्तप्रसिद्धत्वात्, प्रतीपालङ्कारे तु प्रौढ़िवशादेव तद्वैपरीत्यकल्पनात्, अत्र तु तादृशप्रौढ़े रप्यभावात्।

(ड) नन्वनुपादानं नाम विद्यमानस्य वस्तुनोऽनभिधानम्, तेनात्र मुखसदृशरम्यस्य नयनतुल्यरम्यस्य चोपमानभूतवस्तुन आकाशकुसुमादिवदत्यन्तमेवाविद्यमानत्वे तयोरनुपादानासम्भवात् कथमिदमुदाहरणं सङ्गच्छत इत्याह अत्रेति। मुखनयनयोः प्रतिनिधिनी उपमानत्वेन सदृशे ये वस्त्वन्तरे चन्द्रोत्पलरूपावन्य-पदार्थौ तयोर्गम्यमानत्वात् सर्वथा विद्यमानत्वेन व्यञ्जनया प्रतीयमानत्वात् उपमानयोस्तयोर्लोपः अनुपादानं सम्भवतीति शेषः। अतो न काचिदनुपपत्तिरिति भावः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२६ । औपम्यवाचिनो लोपे समासे क्विपि च द्विधा ॥ (ण)

क्रमेणोदाहरणम् —

"वदनं मृगशावाक्ष्याः सुधाकरमनोहरम् ।" (त)

"गर्दभति श्रुतिपरुषं व्यक्तं निनदन् महात्मनां पुरतः ।" (थ)

अत्र 'गर्दभति' इत्यत्र औपम्यवाचिनः क्विपो लोपः (द)। न चेह उपमेयस्यापि लोपः, 'निनदन्' इत्यनेनैव निर्देशात् (ध)।

---

(ढ) ननूपमानपदानुपादानात्तदुत्तरप्रयोज्यानामिवादिशब्दानां वत्यादिप्रत्ययानाञ्चासम्भवदुक्तरीत्या द्विविधैवास्तु, किन्तु मुखाद्युपमेयपदोत्तरमिवादिशब्दप्रयोगसम्भवात् श्रौतीरूपभेदसम्भवेन चतुर्विधैव सम्भवतीत्याह अत्रैव चेति। अनयोर्वाक्यसमासगतयोः।

(ण) औपम्येति। औपम्यवाचिनः सादृश्यवाचकमात्रस्य इवादिशब्दस्य तुल्यादिशब्दस्य च लोपे अनुपादाने समासे क्विपि प्रत्यये च द्विधा लुप्तोपमेत्यनुषज्यते।

अत्रापीदमवधेयम्—इवादिशब्दाभावात् श्रौतीसामान्यस्यैवासम्भवः, तुल्यादिशब्दाभावाच्च तुल्यार्थकवतिप्रत्ययासम्भवात् तद्धितगताया आर्थ्या अप्यसम्भवः, अपवादरूपायाः समासगतायाः प्रसक्त्या च वाक्यगताया आर्थ्या अप्यप्रसक्तिरिति पारिशेष्यात् आर्थी समासगतैकविधा क्विप्प्रत्ययगता चैकविधेति मिलित्वा औपम्यवाचिनो लोपे लुप्तोपमा केवलद्विविधेति।

(त) वदनमिति। "कदलीसुन्दरावूरू मृणालमृदुलौ भुजौ ॥" इति मत्पूरितपरार्द्धम्।

मृगशावस्य हरिणशिशोरक्षिणी इव अक्षिणी चक्षुषी यस्यास्तस्या वदनं सुधाकरमनोहरं चन्द्रवत् सुन्दरम्। अत्र सुधाकर इव मनोहरमिति वाक्ये "उपमानानि सामान्यवचनैः" इत्यनेन कर्मधारयसमासादौपम्यवाचिनो लोपे समासगता लुप्तोपमा।

(थ) गर्दभतीति। "कुङ्कुरति च परपदानि विलिहन् परदत्तमात्रार्थी ॥" इति मत्पूरितपरार्द्धम्।

महात्मनां पुरतः समीपे व्यक्तं स्पष्टं श्रुतिपरुषं श्रवणकर्कशं यथा स्यात्तथा निनदन् शब्दायमानो गर्दभति गर्दभ इवाचरति।

(द) अत्रेति। "सर्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्यः" इति वार्त्तिकोक्त्या विहितस्य "क्विपः सर्वापहारी"त्यादिना लोप इत्यर्थः। "निनदन्" इत्यनेन निर्द्देशात् सामान्यधर्मस्य तु न लोप इत्यवधेयम्। अतएवात्र क्विप्प्रत्ययगता लुप्तोपमा।

(ध) नेति। लोप इति वाच्यमिति शेषः।. अनिर्द्देशादिति भावः। निर्द्देशात् उपमेयस्याप्युपादानात्। विशेषणनिर्द्देशेनैव विशेष्यस्याप्युपस्थितत्वादित्याशयः।

ननु विशेषणमात्रोपादानेनैव विशेष्यस्याप्युपादानसिद्धाङ्गीकारे "तस्या मुखेन सदृशं रम्यं नास्ते" इत्यत्रापि रम्यमिति विशेषणेन तद्विशेष्योपादानसिद्ध्या उपमानोपादानसिद्धेः उपमानानुपादाने "तस्या मुखेन" इत्याद्युदाहरणं कथं सङ्गच्छत इति चेत् "गर्दभति" इत्यादौ "व्यक्तम्" इत्यत्र "सोऽयम्" इति पठित्वा उपमेयमुपादेयमिति दिक्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२७। द्विधा समासे वाक्ये च लोपे धर्म्मोपमानयोः। (न)

"तस्या मुखेन" इत्यादौ "रम्यम्" इति स्थाने "लोके" इति पाठे अनयोरुदाहरणम् (प)।

२८। क्विप्समासगता द्वेधा धर्म्मेवादिविलोपने ॥ (फ)

उदाहरणम्—"विधवति मुखाब्जमस्याः।" (ब)

अत्र "विधवति" इति मनोहरत्व-क्विप्प्रत्यययोर्लोपः (भ)। "मुखाब्जम्" इति च समासगा (म)। केचित्त्वत्रापि प्रत्ययलोपमाहुः (य)।

---

(न) इत्यस्यैककलोपे लुप्तोपमामुक्त्वा इदानीं द्विद्विलोपे लुप्तोपमां दर्शयति द्विधेति। धर्म्मः सामान्यधर्म्मः उपमानञ्च एतयोर्लोपे युगपदुभयोरेवानुपादाने समासे वाक्ये च द्विधा लुप्तोपमेत्यनुषज्यते।

अत्रापि प्रागुक्तयुक्तेरेव पारिशेष्यात् समासगता वाक्यगता चेति द्विविधेत्यनुसन्धेयम्।

(प) उदाहरणान्तरान्वेषणपरिश्रमपरिहारार्थम् उदाहृतमेव किञ्चित् परिवर्त्योदाहरति तस्या इति। "तस्या मुखेन तद्दृशं लोके नास्ते" इति पाठे रम्यमिति सामान्यधर्म्मानुपादानात् उपमानानुपादानाच्च वाक्यगता अत्रत्या लुप्तोपमा। "न वा नयनतुल्यम्" इत्यस्य तु यथास्थितमेव पाठे रम्यमित्यनुषञ्जनीयसामान्यधर्म्मानुपादानात् उपमानानुपादानात् तुल्यशब्देन समासाच्च अत्रत्या लुप्तोपमेत्यभिप्रायः।

न चैतद्दृशपाठेऽपि पूर्वोक्तया सहास्याः साङ्कर्य्यापत्तिरिति वाच्यम्, पूर्वस्याः केवलोपमानानुपादान एव विषयत्वात्, अस्यास्तु धर्म्मोपमानयोरुभयोरेवानुपादाने विषयत्वादिति।

(फ) क्विबिति। धर्म्मः सामान्यधर्म्मः, इवादिः सादृश्यवाचकः, एतयोरुभयोरेव विलोपने युगपदनुपादाने क्विप्प्रत्ययगता समासगता चेति द्वेधा पुनर्द्विविधा लुप्तोपमेत्यनुषङ्गः। अत्रापि सम्भवपरत्वात् क्विप्प्रत्ययगतत्वमतिरिक्तमुपादीयते पूर्वोक्तयुक्तेः पारिशेष्याच्च श्रौत्यार्थ्योर्मध्ये केवलसमासगतत्वमदीयत इति ध्येयम्।

(ब) विधेति। "विधवति मुखाब्जमस्याः कुन्दति नितरां तनुतनुदशनाली।

चम्पकति निखिलमङ्गं तदिदं किमपि तरुणीरत्नम् ॥"

इति मत्पूरितपरविपादः पद्यसमुदायः।

(भ) अत्रेति। विधुरिवाचरतीति विधवति। एवञ्च मनोहरत्वरूपसामान्यधर्म्मस्य लोपोऽनुपादानम्। "सर्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्यः" इति वार्त्तिकोक्त्या विहितस्य सादृश्यवाचकस्य क्विप्प्रत्ययस्य च सर्वापहारित्वाल्लोपः। कलापमते तु "कर्त्तुरायिः सलोपश्च" इत्यनेन विहितस्य आयेः "आयिलोपश्च विज्ञेयः" इति दुर्गसिंहोक्त्या लोपः।

(म) मुखाब्जमिति। मुखमब्जमिव इति विग्रहे "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इत्यनेन कर्म्मधारयसमासात् मनोहरत्वरूपसामान्यधर्म्मलोपात् इवादिलोपाच्च समासगता लुप्तोपमेयमित्यर्थः। न च मुखमेवाब्जमिति मयूरव्यंसकादित्वात् रूपकसमास आशङ्कनीयः, पद्मस्य चन्द्रतुल्याचरणासम्भवेन विधवतीत्यस्य उपमायाः बाधकत्वात् रूपकस्य च बाधकत्वात्। चन्द्रमुखीति यङ्गोष्ठावपि समासगा द्रष्टव्या।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

२९ । उपमेयस्य लोपे तु स्यादेका प्रत्यये क्यचि । (र)

यथा—"अरातिविक्रमालोक-विकस्वरविलोचनः ।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥" (ल)

अत्र सहस्रायुधमिवात्मानमाचरतीति वाक्ये उपमेयस्यात्मनो लोपः (व) । न चेह औपम्यवाचकलोपः, उक्तादेव न्यायात् (श) ।

अत्र केचिदाहुः—"सहस्रायुधेन सह वर्त्तत इति ससहस्रायुधः स इवाचरतीति वाक्यात् ससहस्रायुधीयतीति पदसिद्धौ विशेष्यस्य शब्दानुपात्तत्वादिहोपमेयलोपः" इति । तन्न विचारसहम्, कर्त्तरि क्यचोऽनुशासनविरुद्धत्वात् (ष) ।

---

(य) केचिदिति । न केवलं गर्दभतीति पूर्वोदाहरणे विधवतीत्यत्रापीत्यर्थः, क्विप्प्रत्ययलोपात् प्रत्ययलोपमेवाहुः, न पुनः सादृश्यवाचकलोपमिति तात्पर्य्यम् । अत्रास्वरसतावीजन्तु केवलप्रत्ययत्वेन प्रत्ययस्योपादानमनुपादानं वा उपमाया अप्रयोजकमेव सादृश्याभिधानाभावात् । सादृश्यवाचिप्रत्ययलोपाभिधाने तु स्वपक्षनिक्षेप एवेति ।

(र) उपमानलोपे उपमानसंसृष्टधर्म्मवादिलोपे च लुप्तोपमामभिधायेदानीमुपमेयलोपे तत्संसृष्टधर्म्मलोपे च लुप्तोपमामभिधत्ते उपेति । उपमेयस्य लोपे अनुपादाने तु क्यचि प्रत्यये, कलापमते यिनि, मुग्धबोधमते च क्ये, एका एकविधा लुप्तोपमा स्यात् ।

अत्रेयं युक्तिरवधेया—क्यजादौ "इह च यथादि-तुल्यादि-विरहात् श्रौत्यादिविशेषचिन्ता नास्ति" इति प्रागुक्तेः षड्विधत्वसम्भावनाया एवाभावात् तद्विलक्षणैकविधेति । केचित्तु श्रौतीभिन्नाया एवार्थीत्वाभ्युपगमात् अर्थानुसन्धानेनैव सादृश्यावगमाच्च इयमपि लुप्तोपमा आर्थीविशेष एवेति वदन्ति ।

(ल) अरातीति । अरातिविक्रमस्य शत्रुपराक्रमस्य आलोकेन दर्शनेन विकस्वरे समरोत्साहेन विस्फारप्राप्ते विलोचने विशालनयनद्वयं यस्य सः, तथा कृपाणेन असिना उदग्रौ वीरसमाजे उन्नतौ दोर्दण्डौ बाहुदण्डौ यस्य सः, स राजा सहस्रायुधीयति सहस्रमायुधानि यस्य स तादृशः पुरुषस्तमिवात्मानमाचरति, एककृपाणेनैव सहस्रसंख्यकायुधकार्य्यकरणादिति भावः ।

(व) नन्वरातीत्यादौ स इति तत्पदेनैवोपमेयनिर्द्देशादुपमेयलोपे कथमिदमुदाहरणं सङ्गच्छत इत्याह अत्रेति । तथा च सहस्रायुधांशे उपमेयभूतस्यात्मनो लोपमादायैव इदमुदाहरणमित्यभिप्रायः । न चात्र सामान्यधर्म्मस्यापि लोप इति वाच्यम्, पूर्वार्द्धेनैव तस्य निर्द्देशात् ।

(श) नेति । इह सहस्रायुधीयतीत्यत्र, औपम्यवाचकस्य इवादेर्लोप इति वाच्यमिति शेषः । उक्तादेव न्यायात् "इदञ्च केचित्" इत्यादिप्रागुक्तयुक्तेः ।

(ष) उक्तोदाहरणे प्रकारान्तरेणोपमेयलोपवादिनां मतं दूषयितुमाह अत्रेति । पदसिद्धौ सत्याम् । विशेष्यस्य ससहस्रायुधीयतीति क्रियायाः कर्त्तुः, शब्दानुपात्तत्वात् केनचित् शब्देनानुपादानात् । कर्त्तरि कर्त्तृपदे स्वाव्यवहितपूर्वे सति कर्त्तृकारकादित्यर्थः, क्यचः कलापमते यिनः, अनुशासनविरुद्धत्वात्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

३० । धर्म्मोपमेयलोपेऽन्या—(ख)

यथा—"यशसि प्रसरति भवतः क्षीरोदीयन्ति सागराः सर्वे ।" (छ)

अत्र क्षीरोदमिवात्मानमाचरन्तीति उपमेय आत्मा साधारणधर्म्मः शुक्लता च लुप्तौ (च) ।

३१ । त्रिलोपे च समासगा ॥ (क)

यथा—"राजते मृगलोचना ॥" (ख)

अत्र मृगस्य लोचने इव चञ्चले लोचने यस्या इति समासे उपमाप्रतिपादक-साधारणधर्म्मोपमानानां लोपः (ग) ।

३२ । तेनोपमाया भेदाः स्युः सप्तविंशतिसंख्यकाः ॥ (घ)

पूर्णा षड्विधा, लुप्ता चैकविंशतिविधेति मिलित्वा सप्तविंशति-प्रकारोपमा (ङ) ।

---

सूत्राभावादित्यर्थः । तथा च "उपमानादाचारे" इत्यनुशासनेन कर्म्मभूतादेव नाम्नः क्यच् विधीयत इति कर्त्तृभूतात् ससहस्रायुधशब्दात् क्यच्प्रत्ययस्यासम्भव एवेति भावः ।

(ख) धर्म्मेति । धर्म्मः सामान्यधर्म्म उपमेयञ्च, एतयोर्लोपे युगपदनुपादाने अन्या अपरैकविधा लुप्तोपमा स्यादित्यनुषज्यते ।

अत्रापि प्रागुक्तयुक्तेरेवैकविधेति भाव्यम् ।

(छ) यशसीति । "प्रवहति वितरणसलिले नदीयन्ति मरुभूमयश्च ॥" इति मत्पूरितपरार्द्धम् ।

(च) अत्रेति । अत्रापि क्षीरोदांशे आत्मन उपमेयत्वमिति बोध्यम् ।

(क) इदानीम् इवाद्युपमानोपमेयसामान्यधर्म्माणां मध्ये यावत्सम्भवं लोपे लुप्तोपमामाह त्रिलोप इति । त्रयाणाम् उपमान-सादृश्यवाचकशब्द-साधारणधर्म्माणां लोपे अनुपादाने समासगा समासगता अन्या एकविधा लुप्तोपमा स्यादित्यनुषङ्गः ।

उक्तानां त्रयाणामनुपादाने समासं विना अन्यत्रासम्भवादियमप्येकविधैवेति बोध्यम् ।

(ख) राजत इति । "गजेन्द्रगमना श्यामा कोमला कोकिलस्वना ।
हंसवाणी प्रिया सेयं राजते मृगलोचना ॥" इति मत्पूरितपूर्वत्रिपादं पद्यम् ।

(ग) अत्रेति । उपमाप्रतिपादक इवशब्दः, साधारणधर्म्मश्चञ्चलत्वम्, उपमानञ्च प्रथमलोचनपदम्, एषां लोपोऽनुपादानम्, अतएवात्र त्रिलोपे समासगा लुप्तोपमेति भावः । एकशेषतया द्वितीयलोचनपद-स्थितेर्नोपमेयलोप इत्यवधेयम् ।

(घ) उपमाप्रकरणमुपसंहरन्निदानीं समुदायेनोपमायाः सङ्कलनमाह तेनेति । उक्तविधभेदसमूह-सम्भवेनेत्यर्थः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(ङ) पृथक्कृत्य भेदानां सप्तविंशतिसंख्यकत्वं दर्शयति पूर्णेति । तथा च—

नामानि । उदाहरणानि ।

पूर्णोपमा ६
- श्रौती ३—
  - तद्धितगता १ ··· सौरभमम्भोरुहवन्मुखस्य ।
  - समासगता १ ··· कुम्भाविव स्तनौ पीनौ ।
  - वाक्यगता १ ··· हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले ! ।
- आर्थी ३—
  - तद्धितगता १ ··· मधुरः सुधावदधरः ।
  - समासगता १ ··· पल्लवतुल्योऽतिपेलवः पाणिः ।
  - वाक्यगता १ ··· चकितमृगलोचनाभ्यां सदृशौ चपले च लोचने तस्याः ।

लुप्तोपमा २१

सामान्यधर्म्मलोपे ५
- श्रौती २—
  - समासगता १ ··· वाचः सुधा इव ।
  - वाक्यगता १ ··· मुखमिन्दुर्यथा ।
- आर्थी ३—
  - तद्धितगता १ ··· मनोऽश्ववत् ।
  - समासगता १ ··· ओष्ठस्ते बिम्बतुल्यः ।
  - वाक्यगता १ ··· पाणिः पल्लवेन समः ।

प्रत्यये ५
- क्यचि २—
  - आधारात् क्यचि १ ··· अन्तःपुरीयसि रणेषु ।
  - कर्म्मणः क्यचि १ ··· पौरं जनं सुतीयसि ।
- क्यङि १—
  - कर्त्तुः क्यङि १ ··· श्रीस्तव रमणीयते ।
- णमुलि २—
  - कर्म्मणि णमुलि १ ··· अमृतद्युतिदर्शं दृष्टः ।
  - कर्त्तरि णमुलि १ ··· इन्द्रसञ्चारं सञ्चरसि ।

उपमानलोपे २—
- वाक्यगता १ ··· तस्या मुखेन सदृशं रम्यं नास्ते ।
- समासगता १ ···न वा नयनतुल्यं रम्यमास्ते ।

इवादिलोपे २—
- समासगता १ ··· सुधाकरमनोहरं वदनम् ।
- क्विप्प्रत्ययगता १ ··· गर्द्दभति श्रुतिपरुषं व्यक्तं विनदन् महात्मनां पुरतः ।

सामान्यधर्म्म उपमानञ्च एतयोरुभयोर्लोपे २—
- समासगता १ ··· लोके न वा नयनतुल्यमास्ते ।
- वाक्यगता १ ··· तस्या मुखेन सदृशं रम्यं लोके नास्ते ।

सामान्यधर्म्म इवादिश्च एतयोरुभयोर्लोपे २—
- क्विप्प्रत्ययगता १ ··· विधवति मुखाब्जमस्याः ।
- समासगता १ ··· मुखाब्जमस्याः ।

उपमेयलोपे क्यचि १—
- कर्म्मणः क्यचि १ ···विकस्वरविलोचनः ससहस्रायुधीयति ।

सामान्यधर्म्म उपमेयञ्च एतयोरुभयोर्लोपे १—
- कर्म्मणः क्यचि १ ··· क्षीरोदीयन्ति सागराः ।

उपमानम्, इवादि, सामान्यधर्म्मश्च एषां सर्व्वेषां लोपे १—
- समासगता १ ··· राजते मृगलोचना ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एषु चोपमाभेदेषु मध्ये अलुप्तसाधारणधर्म्मेषु भेदेषु विशेषः प्रतिपाद्यते (च)।

३२। एकरूपः क्वचित् क्वापि भिन्नः साधारणो गुणः।
भिन्ने बिम्बानुबिम्बत्वं शब्दमात्रेण वा भिदा॥ (छ)

तत्र (१) एकरूपे यथोदाहृतम्—"मधुरः सुधावदधरः" इत्यादि (ज)। बिम्बप्रतिबिम्बत्वे यथा—

"भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम्।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव॥" (झ)

अत्र "श्मश्रुलैः" इत्यस्य "सरघाव्याप्तैः" इति दृष्टान्तवत् प्रतिबिम्बनम् (ञ)। शब्दमात्रेण भिन्नत्वे यथा—

---

(च) इत्यस्य लुप्तसाधारणधर्म्मत्वेन अलुप्तसाधारणधर्म्मत्वेन च सर्वा एवोपमा द्विविधा भवितुमर्हन्ति तत्राह एषु चेति।

(छ) एकेति। साधारणो गुणः सामान्यो धर्म्मः क्वचित् एकरूप एकप्रकारो न पुनर्वस्तुत एवैक इत्याशयः, क्वापि कुत्रापि भिन्नो वस्तुतः प्रकारतश्च भेदविशिष्ट एव। ननु भिन्नत्वे तस्य सामान्यधर्म्मत्वमेव नोपपद्यते उपमानोपमेयोभयवृत्तित्वासम्भवादित्याह भिन्न इति। भिन्ने सामान्यधर्म्मे बिम्बानुबिम्बत्वं बिम्बप्रतिबिम्बत्वभावत्वम्। तथा च यथा मुखादिबिम्बस्य दर्पणादिप्रतिबिम्बस्य च बिम्बत्वेन प्रतिबिम्बत्वेन च भेदः सौसादृश्यवत्तया पुनरभेदः, तथात्रापि उपमानोपमेयगतधर्म्मयोर्व स्तुतो भेदः सौसादृश्यवत्तया पुनरभेद इत्याशयः। एवमन्यत्रापि। निष्कर्षस्तु—बिम्बानुबिम्बत्वं प्रणिधानगम्यसाम्यत्वम्। प्रणिधानञ्च तात्पर्य्यपर्य्यालोचनम्। वा अथवा शब्दमात्रेण केवलेन शब्देनैव भिदा न पुनर्वस्तुतोऽपि भिदा भेदः। एवञ्च वस्तुतो भिन्नत्वेऽपि सौसादृश्यवत्तया अभिन्नत्वात् शब्दमात्रेण भिन्नत्वेऽपि वस्तुतः अभिन्नत्वाच्च सामान्यधर्म्मत्वोपपत्तिरिति भावः।

(ज) तत्रेति। तेषु मध्य इत्यर्थः। अत्रायमाशयः—सुधायां मधुरत्वं नाम सुस्वादुत्वेन सकलप्रियत्वम्, अधरे तु चुम्बनसुखसम्पादकत्वेन कामिमात्रप्रियत्वमिति प्रियत्वरूपः प्रकार एव एव, वास्तविकस्वादांशे तु भिन्न एवेति। इदन्तु गुणस्यैकरूपत्वे उदाहरणम्। क्रियाया एकरूपत्वे यथा—"स्त्रीवद्यात्रवहरत्वेप दुर्बलः प्रबले नरे।"

(झ) भल्लेति। रघुवंशचतुर्थसर्गे श्लोकोऽयम्। स रघुः, भल्लेन स्वनामख्यातेनास्त्रेण अपवर्जितैः स्कन्धान्निपातितैः, श्मश्रुलैः श्मश्रुविशिष्टैः, तेषां यवनानां शिरोभिर्मस्तकैः, सरघाव्याप्तैर्मधुमक्षिकापूर्णैः क्षौद्रपटलैर्मधुचक्रसमूहैरिव महीं भूमिम्, तस्तार आच्छादयामास।

---

(१) अत्र इति क्वचित् पाठः। क्वचित्तु द्वयमपि न दृश्यते।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"स्मेरं विधाय नयनं विकसितमिव नीलमुत्पलं मयि सा।
कथयामास कृशाङ्गी मनोगतं निखिलमाकूतम्॥" (ट)

अत्र एके एव स्मेरत्वविकसितत्वे प्रतिवस्तूपमावच्छब्दभेदेन निर्दिष्टे (ठ)।

३४। एकदेशविवर्त्तिन्युपमा वाच्यत्वगम्यते।
भवेतां यत्र साम्यस्य—(ड)

यथा—"नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः।
पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव॥" (ढ)

---

(ञ) उदाहृते बिम्बानुबिम्बत्वं दर्शयितुमाह अत्रेति। प्रतिबिम्बनं प्रणिधानपरायणपक्षे सदृशीकरणम्। तथा च यथा सरघाभिः क्षौद्राणां श्यामत्वं तथा श्मश्रुभिः शिरसां श्यामत्वमिति प्रणिधानेनैवो-भयोः साम्यं गम्यमिति भावः।

(ट) स्मेरमिति। सख्युः समीपे कस्यचिज्जनस्याभीष्टरमण्या वर्णनमिदम्। सा कृशाङ्गी विकसितं नीलमुत्पलमिव मयि नयनं स्मेरं विधाय विस्फारितं कृत्वा मनोगतं निखिलम् आकूतम् अभिप्रायं कथयामास कथनवत् सूचयामास।

(ठ) अत्रेति। एके एव उभयोरपि विस्फारकरूपत्वादभिन्ने एव। अत्र एकविस्फारकरूपपदार्थस्य स्मेरमिति विकसितमिति च शब्दद्वयोपस्थाप्यत्वयोर्द्वित्वात् 'एके' इति द्विवचनोपपत्तिः, "अग्नेः सम्बुद्धावित्येके" इति कातन्त्रवृत्तौ एकमतावलम्बिबहुत्वात् 'एके' इति बहुवचनोपपत्तिवत्, "द्वयं गतं सम्प्रति शोचनीयताम्" इति कुमारादौ द्वित्वविशिष्टयोः पार्वतीचन्द्रकलयोरेकविधशोच्यत्वार्थकत्वात् 'द्वयम्' इत्येकवचनोपपत्तिवत्, "व्यथां द्वयेषामपि मेदिनीभृताम्" इति माघादौ द्वित्वविशिष्टयो राजगण-पर्वतगणयोर्बहुत्वात् 'द्वयेषाम्' इति बहुवचनोपपत्तिवच्च। अतोऽत्र "संख्यार्थादेकशब्दात् द्विवचनासम्भवात्" इत्याद्युक्ता रामचरणस्य पाठान्तरकल्पनं भ्रमविजृम्भितमेवेति सुधीभिर्भाव्यम्। शब्दभेदेन निर्दिष्टे स्मेरमिति विकसितमिति च भिन्नशब्दाभ्यामभिहिते।

(ड) शुद्धोपमानिरूपणात् परमेव उपमाविशेषस्याकाङ्क्षोदयात् काव्यप्रकाशकारादिभिरनङ्गीकृतानपि विलक्षणलक्ष्यतया युक्तियुक्तत्वादिदानीमुपमाविशेषान् लक्षयन् प्रथममेकदेशविवर्त्तिनीमुपमां लक्षयति एकेति। यत्र स्थले साम्यस्य वाच्यत्वगम्यते भवेतां सादृश्यस्य अभिधाबोध्यत्वं व्यञ्जनाबोध्यत्वञ्च स्यात्, तत्र, एकदेश-विवर्त्तिनी नामोपमा भवेदित्यर्थः, एकदेशे साम्यस्य वाच्यत्वभागे विवर्त्तते मूललक्षणागमनाद्विशेषेणावतिष्ठत इति व्युत्पत्तेः। एकदेशविवर्त्तिरूपकस्थल एव तेन सहास्या भेदं दर्शयिष्यामः।

(ढ) नेत्रैरिति। शरद्वर्णनेयम्। सरःश्रियो जलाशयशोभाः, नेत्रैरिव उत्पलैः कुवलयैः, मुखैरिव पद्मैः, स्तनैरिव चक्रवाकैः पक्षिभिश्च पदे पदे स्थाने स्थाने विभान्ति स्म। अत्र विभान्तीत्यत्र वाक्यसमाप्तावपि चतुर्थपादेन पुनरात्तत्वात् समाप्तपुनरात्ततादोषः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र उत्पलादीनां नेत्रादीनां सादृश्यं वाच्यम्, सरःश्रोणाद्याङ्गना-सादृश्यं (१) गम्यम् (ण) ।

३५ । कथिता रसनोपमा (२) ॥

यथोर्द्ध्वमुपमेयस्य यदि स्यादुपमानता । (त)

यथा—"चन्द्रायते शुक्लरुचापि हंसो हंसायते चारुगतेन कान्ता ।
कान्तायते स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः ॥" (थ)

(ण) लक्ष्ये लक्षणं सङ्गमयितुमाह अत्रेति । नेत्रादीनां नेत्रादिभिः सहेत्यर्थः । वाच्यमिति सर्वत्र इवशब्दसत्त्वादित्याशयः । गम्यं व्यञ्जनया बोध्यम्, सरःश्रिय इत्यत्र इवशब्दाभावादिति भावः । उदाहृते नेत्राद्युपमानत्वे नोत्पलादीनां प्रसिद्धिसत्त्वेऽपि प्रधानानां सरःश्रोणमङ्गनोपमानत्वेन प्रसिद्ध्यभावान्न प्रतीपालङ्कारप्रसङ्गः ।

(त) कथितेति । ऊर्द्धमनतिक्रम्येति यथोर्द्धम् "शास्त्रे ह्यवहायवहारः" इति न्यायात् परपरमित्यर्थः, उपमेयस्य यदि उपमानता स्यात्, तदा सा रसनोपमा कथिता । तथा च यथा रसनायां काञ्चीदाम्नि स्वर्णादि-गुटिकानामेकैकस्यैव आपेक्षिकं पूर्वपूर्वत्वं परपरत्वञ्च, तथात्रापि पौर्वापर्य्येण एकैकपदार्थस्य आपेक्षिक-मुपमेयत्वमुपमानत्वञ्चेति रसनावद्विन्यासादस्या रसनोपमेति संज्ञा ।

(थ) चन्द्रेति । हंसः, शुक्लरुचापि न केवलं शान्तमूर्त्तितया शुभ्रप्रभयापि चन्द्रायते चन्द्र इवाचरति । कान्ता कमनीयाङ्गी रमणी चारुगतेन मनोहरगमनेन हंसायते स हंस इवाचरति । वारि जलम्, स्पर्श-सुखेन सुखजनकस्पर्शेन, कान्तायते सा कान्तेवाचरति । विहाय आकाशञ्च स्वच्छतया निर्म्मलतया वारीयते तद्वारीवाचरति ।

अत्र चन्द्रापेक्षया उपमेयभूतस्य हंसस्य कान्तापेक्षया उपमानत्वम्, कान्तायाश्च वार्य्यपेक्षया उपमानत्वम्, वारिणश्च विहायोऽपेक्षया उपमानत्वमिति लक्षणसङ्गतिः ।

इदन्तु शुक्लरुक्प्रभृतिसाधारणधर्म्मभेदे उदाहरणम् । साधारणधर्म्मस्याभेदेऽपि रसनोपमा सम्भवति । यथा तर्कवागीशधृतम्—

"महीभृतो वदान्यस्य भारतीवामला मतिः । चेष्टा मतिरिव स्वच्छा चेष्टेव गुणसन्ततिः ॥"

अत्र स्वच्छत्वरूपः साधारणधर्म्म एक एव । क्वचित् साधारणधर्म्मानुक्तावपीयं सम्भवति । यथा रघुवंशे—"आकारसदृशप्राज्ञः प्रज्ञया सदृशागमः । आगमैः सदृशारम्भ आरम्भसदृशोदयः ॥"

सरस्वतीकण्ठाभरणकारास्तु रसनागत-गुटिका-श्रेणीक्रमेणोत्तरोत्तरमुपमाप्रत्ययमात्रेणैव रसनोपमा स्यादिति मन्यन्ते । तथा च तन्मते इदमप्युदाहरणम् । यथा कादम्बर्य्याम्—

"कृतं मे वपुषि वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकर इव मदेन, नवयौवनेन पदम् ।"

(१) अङ्गनासाम्यमिति पाठान्तरम् । (२) रसनोपमेति तालव्यमध्यः पाठः क्वचित् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

३६ । मालोपमा यदेकस्योपमानं बहु दृश्यते ॥ (द)

यथा—"वारिजेनेव सरसी शशिनेव निशीथिनी ।
यौवनेनेव वनिता नयेन श्रीर्मनोहरा ॥" (ध)

क्वचिदुपमानोपमेययोर्द्वयोरपि प्रकृतत्वं दृश्यते—(१) (न)

"हंसश्चन्द्र इवाभाति जलं व्योमतलं यथा ।
विमलाः कुमुदानीव तारकाः शरदागमे ॥" (प)

---

अतएवास्माभिरपि कादम्बरीटीकायामुदाहृतवाक्ये रसनोपमैव निवेशिता । वस्तुतस्तु दृष्टलक्ष्यव्यापनार्थं दर्पणकारस्यापि रसनोपमाभेदान्तराङ्गीकरणमावश्यकमेव । किञ्च उदाहृते मालोपमाप्रसिद्धलक्षणे लक्षणात् सातिशयवैचित्र्यवैषम्याच्च मालोपमाङ्गीकारेणाकाङ्क्षानिवृत्तिः साधीयसी न स्यादिति प्रकृतवैचित्र्यविज्ञैर्विवेचनीयम् ।

ननु "चन्द्रायते" इत्यादौ प्रकृतोपमा अस्ति न वा ? अस्ति चेत् कथं न तया व्यपदेशः ? नास्ति चेत् प्रकृतलक्षणव्यापनात् कथं नास्ति ?। उच्यते—यथा अगृहीतकुण्डलादिभावस्य स्वर्णस्य स्वर्णत्वेन व्यपदेशः, गृहीतकुण्डलादिभावस्य तु कुण्डलादित्वेनैव व्यपदेशो न पुनः स्वर्णत्वेन, तथात्रापि साधारणोपमाया रसनोपमाभावमापन्नत्वे असाधारणरसनोपमात्वेनैव व्यपदेशो युक्तः । तथा चोक्तं शारीरकशाङ्करभाष्यटीकायां वाचस्पतिमिश्रैः—"असाधारण्येन हि व्यपदेशा भवन्ति । यथा—क्षिति-जल-पवन-बीजादि-सामग्री-समवधानजन्माप्यङ्कुरः शालिबीजत्वेन व्यपदिश्यते शाल्यङ्कुर इति न क्षित्याद्यङ्कुर इति तेषां कार्य्यान्तरेऽपि साधारणात् ।"

(द) एकत्रानेकोपमायाः समावेशे वैचित्र्यवैलक्षण्यान्नामवैलक्षण्येन तामेव लक्षयति मालोपमेति । एकस्य उपमेयस्य यत् बहु बहुलमनेकमित्यर्थः, उपमानं दृश्यते तन्मालोपमा स्यात्, मालया अनेकत्वेनोपमा मालोपमेति व्युत्पत्तेः ।

(ध) वारिजेनेति । नयेन नीतिप्रयोगेण श्रीः सम्पत्, वारिजेन पद्मेन सरसी सरोवर इव, शशिना निशीथिनी रात्रिरिव यौवनेन वनितेव च मनोहरा जायते ।

अत्रोपमेयभूतायाः श्रियाः सरसी-निशीथिनी-वनितारूपबहूपमानत्वान्मालोपमा ।

अत्र बह्वित्यस्य अनेकार्थपरत्वविवक्षणादुपमानद्वयमात्रदर्शनेऽपि मालैमैव । यथा कुमारसम्भवे—

"तां हंसमालाः शरदीव गङ्गां महौषधिं नक्तमिवात्मभासः ।
स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः ॥"

वारिजेनेत्यादौ गुणस्य तामित्यादौ च क्रियायाः साधारणधर्मत्वं ज्ञेयम् ।

(न) क्वचिदिति । प्रकृतत्वं प्रस्तुतत्वेन वर्णनायोग्यत्वमित्यर्थः । एतेन उपमेयस्यैव प्रकृतत्वम्, न पुनरुपमानस्येति प्राचां नियमाभिधानं प्रायिकमेवेति सूचितम् ।

---

(१) क्वचित् [illegible] पाठो दृश्यते ।

CC-0. [illegible] Collection. Digitized By Siddhānta eGangotri Gyaan Kosha

"अस्य राज्ञो गृहे भान्ति भूपानां ता (१) विभूतयः ।
पुरन्दरस्य भवने कल्पवृक्षभवा इव ॥" (फ)

अत्रोपमेयभूतविभूतिभिः "कल्पवृक्षभवा इव" इत्युपमानभूता विभूतय आक्षिप्यन्त इत्याक्षेपोपमा। अत्रैव "गृहे" इत्यस्य "भवने" इत्यनेन प्रतिनिर्देशात् प्रतिनिर्देश्योपमा (ब) इत्यादयश्च न लक्षिताः, एवंविधवैचित्र्यस्य सहस्रधा सन्दर्शनात् (भ)।

३७। उपमानोपमेयत्वमेकस्यैव त्वनन्वयः। (म)

अर्थादेकवाक्ये (य)। यथा—

---

(प) हंस इति। शरदागमे शरत्कालप्रवृत्तौ, हंसचन्द्र इव आभाति परिष्कृतवर्णत्वेन प्रकाशते, व्योमतलमाकाशतलं यथा तथैव जलं निर्मलमित्यर्थः, तथा तारका नक्षत्राणि कुमुदानीव विमला जायन्ते।

अत्र शरदो वर्णने तदङ्गानामुपमेयोपमानभूतानामुभयेषामपि हंसचन्द्रादीनां प्रकृतत्वेन वर्णनायोग्यत्वादर्शनमित्याशयः। तथा "विमलाः कुमुदानीव तारकाः" इत्यत्र "मुखेव विमलश्चन्द्रः" इत्यादिवत् लिङ्गभेदे भग्नप्रक्रमतादोषः। तथापि न किञ्चिदुद्वेजनीयम्, दोषाणामलङ्कारप्रतिबन्धकत्वाभावात्।

(फ) मतान्तरे उपमाभेदान्तरप्रदर्शनायोदाहरति अस्येति। अस्य राज्ञो गृहे भूपानामन्येषां राज्ञां ता युद्धजिता विभूतयः सम्पदः, पुरन्दरस्य भवने देवराजस्य गृहे, कल्पवृक्षभवा विभूतय इव भान्ति।

(ब) प्राचामुपमाभेदान्तराणि दर्शयति अत्रेति। "उपमेयभूताविभूतिभिः ता विभूतयः" इत्यनेनोक्ताभिरित्यर्थः। आक्षिप्यन्ते शब्दानुपात्ता अपि व्यञ्जनया प्रत्याय्यन्ते, इति हेतोः, आक्षेपोपमा नामोपमाभेद इत्यर्थः। प्रतिनिर्देशादुपमानत्वेन प्रत्यवस्थापनात्, प्रतिनिर्देश्योपमा नामोपमाभेद इति तात्पर्य्यम्।

(भ) इदानीमीदृशभेदान्तरलक्षणाकरणमयुक्तमित्याशयेनाह इत्यादयश्चेति। न लक्षिता लक्षणादिभिर्न निरूपिताः। सहस्रधा असंख्यप्रकारैरित्यर्थः। तथा च तैर्यथा उक्ततरभेदा न लक्षिताः, तथाऽस्माभिरपि तदुक्ताक्षेपोपमादिभेदो न लक्षिता इत्याशयः।

(म) अनन्वयं नामालङ्कारं लक्षयति उपेति। एकस्यैव तु पदार्थस्य उपमानोपमेयत्वं युगपदेव उपमानत्वमुपमेयत्वञ्च कल्पितञ्चेत् तदा अनन्वयो नामालङ्कारः स्यात्। तथा च उपमेयत्वं नाम उपमानभिन्नत्वे सति उपमानगतसम्भाव्यमानैकधर्म्मवत्त्वम्। तेनोभयत्राप्युभयभेदास्यावश्यकत्वादेकस्मिन्नेव पदार्थे युगपदुपमानत्वोपमेयत्वयोः सत्तासम्बन्धोऽसम्भव एवेति न विद्यते अन्वयः सत्तासम्बन्धो यस्मिन्निति व्युत्पत्त्या अनन्वय इति संज्ञासिद्धिः।

(य) ननु "चन्द्रायते शुक्लरुचापि हंसः" इत्यादौ एकस्यैव हंसादेश्चन्द्राद्यपेक्षया उपमेयत्वं कान्ताद्यपेक्षया चोपमानत्वम्, तथा "कमलेव मतिर्मतिरिव कमला" इत्यादावपि एकस्यैव मत्यादेरुपमेयत्वमुपमानत्वञ्चेति रसनोपमायाम् उपमेयोपमायाञ्च अस्य अनन्वयलक्षणस्यातिव्याप्तिरित्याह अर्थादिति। सामान्यविशेष-

(१) उपमानभूता इति पाठान्तरम्।

CC-0. Jangamwadi Math Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"राजीवमिव राजीवं जलं जलमिवाजनि ।
चन्द्रश्चन्द्र इवातन्द्रः शरत्समुदयोद्यमे ॥" (र)

अत्र राजीवादीनामनन्यसदृशत्वप्रतिपादनार्थमुपमानोपमेयभावो वैवक्षिकः (ल)। "राजीवमिव पाथोजम्" इति चास्य लाटानुप्रासाद्विविक्तो विषयः (व)। किन्त्वत्रौचित्यादेकशब्दप्रयोग एव श्रेयान्। तदुक्तम्—(श)

"अनन्वये च शब्दैक्यमौचित्यादानुषङ्गिकम्।
अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकम् ॥" (ष)

---

न्यायादित्यर्थः। तथा च अनेकवाक्यं विना रसनोपमाया उपमेयोपमायाश्चासम्भव एवेति तयोरनेकवाक्यमेव विषयः, अस्य तु एकवाक्ये अनेकवाक्ये च सम्भवात् सामान्यविशेषन्यायेन एकवाक्यमेव विषयः कल्प्यत इत्याशयः।

(र) राजीवमिति। शरदः कालस्य समुदयेन सम्पूर्णभावेन उद्यमे प्रवृत्तौ आविर्भावे सति, राजीवं राजीवमिव पद्मं पद्ममिव अतन्द्रं वर्षापङ्कादिकृतमालिन्यहीनम् अजनि; जलं जलमिव अतन्द्रं कर्दमादिमलहीनमजनि; तथा चन्द्रश्च चन्द्र इव अतन्द्रो घनावरणरूपमलशून्यः अजनि जातः।

अत्रैकैकस्यैव राजीवादेरुपमानत्वादुपमेयत्वाच्च अनन्वयः। अयन्तु उपमावदेव पूर्णो लुप्तस्तद्धितादिगततया षड्विधः पञ्चविधः क्यजादिप्रत्ययप्रतिपाद्यश्च सम्भवतीत्युन्नेयम्।

(ल) ननूक्तरीत्या उपमानोपमेययोः परस्परभेदस्यावश्यकत्वात् कथमेकस्मिन्नेवासावुपमानोपमेयभावः सम्भवतीत्याह अत्रेति। वैवक्षिकः कविना विवक्षयैवारोपितः, न पुनर्वास्तविक एव स इति भावः।

(व) अथानन्वयस्थलमात्र एव लाटानुप्रासलक्षणव्यापनादनयोर्नियतसाङ्कर्यापत्तिरित्याह राजीवमिति। पाथोजमपि पद्मम्। अस्य अनन्वयस्य, लाटानुप्रासात् लाटानुप्रासविषयात्, विविक्तो विभिन्नः। तथा च "राजीवमिव पाथोजम्" इत्यादौ शब्दस्य पौनरुक्त्याभावान्न लाटानुप्रासप्रसक्तिः, उभयोरेव शब्दयोर्वाच्यस्य एकपद्मरूपपदार्थस्य तु उपमानत्वादुपमेयत्वाच्च अनन्वयप्रसक्तिरस्त्येवेति विषयभेदसम्भवान्नानयोर्नियतसाङ्कर्यापत्तिरित्याशयः।

(श) ननु तर्हि कथमनन्वयस्य कुत्रापि स्थले "राजीवमिव पाथोजम्" इतिवद्भिन्नशब्दप्रयोगो न दृश्यत इत्याह किन्त्विति। अत्र अनन्वये। उचितत्वादिति। तथा च शब्दयोरभेदस्थल एव श्रवणमात्रमेकस्योपमानोपमेयभावप्रतीतिः सम्पद्यते, शब्दभेदे तु अर्थानुसन्धानात् परमेवोपमानोपमेयभावप्रतीतिरिति उचितत्वमिति भावः। एकशब्दप्रयोगः अभिन्नानुपूर्वीकशब्दद्वयविन्यासः। श्रेयान् प्रशस्ततमः। अत्र प्राचीनसंवादमाह तदुक्तमिति।

(ष) अनेति। अनन्वये अलङ्कारे, औचित्यात् प्रदर्शितहेतुना सङ्गतत्वात् शब्दयोरैक्यमभिन्नानुपूर्वीकत्वम्, आनुषङ्गिकमनियतम्, "राजीवमिव पाथोजम्" इत्यादौ विषयतासम्भवादिति भावः। अस्मिन् लाटानुप्रासे तु शब्दैक्यं साक्षादेव प्रयोजकं सर्वथैव नियतम्, अन्यथा लाटानुप्रासासम्भवादित्यभिप्रायः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ३८। पर्य्यायेण द्वयोरेतदुपमेयोपमा मता ॥ (स्र)

एतदुपमानोपमेयत्वम्। अर्थाद्वाक्यद्वये (ह)। यथा—

"कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः।
धरणीव धृतिर्धृतिरिव धरणी सततं विभाति बत यस्य (१)॥" (च)

अथ तर्हि "राजीवमिव राजीवम्" इत्यादौ शब्दैक्ये अनन्वयस्थले लाटानुप्राससाङ्कर्य्यमनिवार्य्यमेवेति चेन्न, इवाद्यौपम्यप्रतिपादकसत्त्वे अनन्वयः तदसत्त्वे तु लाटानुप्रास इति विषयविभागस्य सर्वथा सुवचत्वात्।

(स्र) पर्य्यायेणेति। द्वयोः पदार्थयोः पर्य्यायेण विपर्य्यासेन परिवर्त्तनेनेति यावत्, एतदुपमानोपमेयत्वम्, उपमेयोपमा नामालङ्कारो मता। तथा च पूर्ववाक्ये यदुपमानं परवाक्ये तच्चेदुपमेयं स्यात् एवं पूर्ववाक्ये यदुपमेयं परवाक्ये तच्चेदुपमानं स्यात् तदा उपमेयोपमा नामालङ्कारो भवेदिति सरलार्थः। अतएव काव्यप्रकाशे—"विपर्य्यास उपमेयोपमा तयोः" इत्यत्र विपर्य्यास इति वृत्तौ च परिवृत्तिरित्युक्तम्। पूर्ववाक्यस्थेन उपमानेन परवाक्ये उपमेयेन सता निष्पादिता उपमा उपमेयोपमा इति हि व्युत्पत्तिः। अत्र पर्य्यायेणेत्यभिधानात् "मुखं तव तथा भाति यथा राजति चन्द्रमाः" इत्यादावुपमानोपमेयभावापरिवर्त्तनस्थले नातिव्याप्तिः। न च "मुखमिव कमलम्" इत्यादौ युगपदेव द्वयोरुपमानोपमेयत्वमिति तद्वारणाय पर्य्यायेणेति" इति रामचरणोक्तं युक्तमिति वाच्यम्, मुखमिव कमलमित्यस्य एकमात्रवाक्यतया "अर्थाद्वाक्यद्वये" इति वृत्त्युक्तिविरोधात्। "चन्द्रायते" इत्यादौ रसनोपमायां वाक्यद्वयसत्त्वात् "हंस इत्यादेरुपमेयोपमानभावपरिवर्त्तनसत्त्वाच्च तत्रातिव्याप्तिनिराशाय द्वयोरित्युक्तम्।

"सन्निहिते बुद्धिरन्तरङ्गा" इति न्यायादुपमानोपमेयभावस्य सन्निहितपरिवृत्तिस्थल एवायमलङ्कारः। तेन "मुखं शशीव कान्तायाः दिवसे मामतोषयत्। रात्रौ तोषयते सोऽयं शशी मुखमिवाधुना॥" इत्यादौ व्यवहितपरिवर्त्तने उपमाद्वयमेव।

"राजा सूर्य्य इवाधृष्यः सूर्य्यो राजेव राजते। कमलेव मतिस्तस्य लक्ष्मीः सापि च धीरिव॥" इत्यादौ साधारणधर्म्मभेदे शब्दभेदे च उपमानोपमेयभावपरिवृत्तिप्रतीतिः स्थगितेव स्यादिति नोपमेयोपमा।

(ह) अर्थादिति। योग्यत्वादित्यर्थः। तथा च वाक्यद्वयं विना द्वयोरुपमानोपमेयभावपरिवृत्तिर्न सम्भवतीति भावः। काव्यप्रकाशकारोऽप्येवम्।

(च) कमलेवेति। अत्र हर्षे बतशब्दः। यस्य राज्ञः सततम्, कमला राजलक्ष्मीरिव मतिर्बुद्धिः, सा मतिरिव च सा कमला, राजलक्ष्मीर्यथा असाधारणी बुद्धिरपि तथैव असाधारणीत्यर्थः, एवमन्यत्रापि। तनुः शरीरमिव विभा कान्तिः, सा विभेव च सा तनुः। धरणी आयत्तीकृता भूमिरिव धृतवैर्य्यम्, सा धृतिरिव च सा धरणी, विभाति वर्त्तते।

अत्र पूर्ववाक्ये कमलाया उपमानत्वं मतेश्चोपमेयत्वम्, परवाक्ये तु तस्याः कमलाया उपमेयत्वं मतेश्चोपमानत्वमित्याद्युपमानोपमेयभावपरिवृत्तेरुपमेयोपमा।

(१) विभाति तव यस्य बत इति क्वचित् पाठः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्रास्य राज्ञः श्रीवृद्धग्रादिसदृशं (१) नान्यदस्तीत्यभिप्रायः (क)।

३९। सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते। (ख)

यथा—"अरविन्दमिदं वीक्ष्य खेलत्खञ्जनमञ्जुलम्।
स्मरामि वदनं तस्याश्चारुचञ्चललोचनम्॥" (ग)

"मयि सकपटम्" इत्यादौ च (१६६ पृष्ठे) स्मृतेः सादृश्यानुभवं विनोत्थापितत्वान्नायमलङ्कारः (घ)। राघवानन्दमहापात्रास्तु वैसादृश्यात् स्मृतिमपि स्मरणालङ्कारमिच्छन्ति। तत्रोदाहरणं तेषामेव (ङ)। यथा—

"शिरीषमृद्वी गिरिषु प्रपेदे यदा यदा दुःखशतानि सीता।
तदा तदाऽस्याः सदनेषु सौख्यलक्षाणि दध्यौ गलदश्रु रामः॥" (च)

---

(क) अत्र कवेरौदृशोपमानोपमेयभावपरिवर्त्तने अभिप्रायमाह अत्रेति। आदिशब्देन तनुविभादीनां ग्रहणम्।

(ख) वाच्यसाम्यघटितानलङ्कारानभिधायेदानीं व्यङ्ग्यसाम्यघटितानभिधातुं तत्र स्मरणालङ्कारगतव्यङ्ग्यसाम्यस्य अन्यान्यालङ्कारगतव्यङ्ग्यसाम्यापेक्षया स्पष्टप्रतीयमानत्वेन प्रधानत्वात्तमेव स्मरणालङ्कारं प्रथममाह सदृशेति। सदृशस्य वस्तुनः अनुभवात् दर्शनादिप्रत्यक्षात् जायमाना, वस्तुनः पूर्वानुभूतपदार्थस्य स्मृतिः स्मरणं नामालङ्कार उच्यते। अत्र स्मरणमिति भावे प्रत्ययात् व्युत्पत्तिः स्पष्टा।

(ग) अरविन्दमिति। खेलता उपरि सञ्चरता खञ्जनेन पक्षिणा मञ्जुलं सुन्दरम्, इदमरविन्दं पद्मं वीक्ष्य दृष्ट्वा, अहम्, चञ्चले लोचने यत्र तत्तादृशं चारु स्वभावसुन्दरम्, तस्याः कामिन्या वदनं स्मरामि।

अत्र खेलत्खञ्जनत्वचञ्चललोचनसदृशः अरविन्दस्य स्वभावत एव मुखसदृशमिति सर्वथैव मुखसदृशस्य अरविन्दस्य दर्शनाज्जायमानायास्तादृशमुखस्मृतेः स्मरणालङ्कारः।

(घ) ननु "सदृशज्ञानचिन्ताद्यैः भ्रूसमुन्नमनादिकृत्। स्मृतिः पूर्वानुभूतार्थविषयज्ञानमुच्यते॥" इति प्रागुक्तलक्षणा सामान्यतो वस्तुस्मृतिरेव स्मरणालङ्कार उच्यताम्, किं सदृशानुभवादिति स्मृतेः कारणनिर्द्देशेनेत्याह मयीति। उत्थापितत्वात् चिन्ताजन्यसंस्कारेणाविर्भावितत्वात्। अयं स्मरणाख्यः। तथा चाश्मन्मते संस्कारोद्बोधनद्वारा सदृशवस्तुज्ञानजन्या स्मृतिरेव स्मरणालङ्कारः, न पुनश्चिन्तादिजन्या स्मृतिरपि। अतएव सदृशानुभवादिति स्मृतेः कारणनिर्द्देश इत्याशयः। काव्यप्रकाशकारोऽप्येवम्।

(ङ) अतएवानभिप्रेतं मतमाह राघवेति। वैसादृश्यात् विसदृशपदार्थानुभवाज्जायमानामित्यर्थः, स्मृतिं वैचित्र्यवतीमेव। तेषां राघवानन्दमहापात्राणामेव।

(च) शिरीषेति। शिरीषमृद्वी शिरीषकुसुमवत् कोमलाङ्गी सीता, गिरिषु पर्वतेषु यदा यदा दुःखशतानि सर्वेष्वेव व्यापारेषु बहुतरदुःखानि प्रपेदे प्राप। तदा तदैव रामः, सदनेषु राजधानीस्थगृहेषु अस्याः

---

(१) श्रीवृद्धगादिसदृशम् इत्यपि क्वचित् पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ४० । रूपकं रूपितारोपः (१) विषये निरपह्नवे ॥ (छ)

सीतायाः सौख्यलक्षाणि सर्वेष्वेव व्यापारेषु असंख्यसुखानि, गलन्ति निर्गच्छन्ति अश्रूणि यस्मिन् कर्म्मणि तद्‌ यथा तथा दध्यौ सस्मार ।

अत्र विसदृशानां दुःखयुतानामनुभवात् तद्वैपरीत्यसम्बन्धेन सम्बन्धिनां सुखलक्षाणां स्मृतेर्वैचित्र्यसत्त्वाच्च स्मरणालङ्कार इति राघवानन्दमहापात्राणामाशयः ।

एतन्मतेऽपि "बहु विचिन्त्य परं स्मृतवान् कथाम्" इत्यादौ वैचित्र्याभावान्नायमलङ्कार इति बोध्यम् ।

(छ) व्यङ्ग्यसाम्येष्वलङ्कारेषु रूपकस्यान्यतमप्रधानत्वादतिप्रसिद्धत्वाच्चेदानीं सामान्यतो रूपकं लक्षयति रूपकमिति । निरपह्नवे शब्दतस्तात्पर्य्यतो वा प्रतिषेधरहिते, विषये उपमेयपदार्थे, रूपितस्य निरूपितस्य रूपकघटकत्वेनावधारितस्य उपमानाभेदस्य उपमानपदार्थतादात्म्यस्येति यावत्, आरोपः सादृश्यातिशयवशात् प्रागुक्तया सारोपाख्यलक्षणया आरोपणं रूपकम् ।

यथास्थिते उपमेये उपमानस्याभेदारोपो रूपकालङ्कार इति सरलार्थः । रूपयति उपमानोपमेययोरभेदारोपणं करोतीति रूपकमिति व्युत्पत्तिः । अस्मिन्नर्थे रूपकमिति नित्यनपुंसकलिङ्गः शब्दः कारकमितिवत् ।

इदमत्रावधेयम्—"मुखचन्द्रः" इत्यादौ समासस्थले रूपके मुखमेव चन्द्र इति मयूरव्यंसकादित्वात् रूपककर्म्मधारयः ; उपमायान्तु मुखं चन्द्र इवेति "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इत्यनेन उपमितकर्म्मधारयः। तत्र रूपके आरोप्यमाणत्वेन विशेष्यतया उपमानपदार्थ एवोपमेयं तिरोधाय क्रियायामन्वेति ; उपमायान्तु आरोपभावेन वर्णनामुख्योद्देश्यत्वेन च विशेष्यतया उपमेयपदार्थ एवोपमानं तिरोधाय क्रियया सम्बध्यते । तेन "मुखचन्द्रः प्रकाशते" इत्यादौ प्रकाशस्य प्रभारूपतया चन्द्रे सम्भवात् मुखे चासम्भवात् प्रकाशत इति पदं रूपकस्य साधकम् उपमायास्तु बाधकमिति रूपकमेव । "युवा प्रियाया मुखचन्द्रं चुम्बति" इत्यादौ चुम्बनस्य वक्त्रसंयोगरूपतया मुखे सम्भवात् चन्द्रे चासम्भवात् चुम्बतीति पदमुपमायाः साधकं रूपकस्य च बाधकमित्युपमैव एवं "सुन्दरं वदनाम्बुजम्" इत्यादौ सौन्दर्य्यरूपसामान्यधर्म्मप्रयोगेण "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इत्यनेनोपमितसमासासम्भवात् सुन्दरमितिपदमुपमाया बाधकमेवेति पारिशेष्यात् रूपकमेव । "मुखचन्द्रं पश्यति" इत्यादौ तु मुखस्य चन्द्रस्य च दर्शनसम्भवेन उभयोरपि साधकबाधकाभावात् उपमारूपकयोः सन्देहसङ्कर एव । एतद्वृत्तावपि किञ्चित् परस्ताद्वक्ष्यति ।

उपमेये उपमानाभेदप्रतीतेः सारोपाख्यलक्षणामूलकत्वे रूपकम्, साध्यवसानाख्यलक्षणामूलकत्वे तु अतिशयोक्तिः । अतएव द्वितीयपरिच्छेदे "विषयस्यानिगीर्णस्य" इत्यादिकारिकावृत्तौ "इयमेव रूपकालङ्कारस्य बीजम्" इत्युक्तम् । तथा च उपमेयस्य कथञ्चिदप्यनपलापे सति उपमानाभेदारोपेण रूपकम्, उपमेयस्य कथञ्चिदप्यवलोपे सति उपमानाभेदारोपेण अतिशयोक्तिरिति भेदः ।

---

(१) रूपितारोपादिति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"रूपित" इति परिणामाद्यवच्छेदः (ज)। एतच्च तत्प्रस्तावे (१) विवेचयिष्यामः (झ)। "निरपह्नवे" इत्यपह्नुतिव्यवच्छेदार्थम् (ञ)।

४१। तत् परम्परितं साङ्गं निरङ्गमिति च त्रिधा। (ट)

तद्रूपकम्। तत्र—(ठ)

४२। यत्र कस्यचिदारोपः परारोपणकारणम्॥
तत् परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनम्।
प्रत्येकं केवलं मालारूपञ्चेति चतुर्विधम्॥ (ड)

तत्र श्लिष्टशब्दनिबन्धनं केवलपरम्परितं यथा—

---

(ज) रूपितपदव्यावृत्तिमाह रूपितेति। परिणामात् परिणामालङ्कारविषयात् व्यवच्छेदो रूपकस्य व्यावृत्तिः। तथा च रूपितस्य प्रागुक्तभावेन उपमानाभेदमात्रस्य आरोप एव रूपकम्, न तु तत्र प्रकृतोपयोगित्वमपि प्रयोजकमिति भावः। एवञ्च उपमेये केवलोपमानाभेदारोप एव रूपकम्, उपमेये आरोप्यमाणस्य उपमानाभेदस्य प्रकृतोपयोगित्वे तु परिणाम इत्यनयोर्भेद इति सिद्धम् एतच्चोपरिष्टाद्वृत्तावपि वक्ष्यति।

(झ) नन्वनयोर्विभिन्नत्वं विवृत्याभिधीयताम्, कथमन्यथा परिणामाद्यवच्छेदः स्पष्टमवबुध्यते इत्याह एतच्चेति। रूपकपरिणामयोर्विभिन्नत्वञ्चेत्यर्थः। तत् प्रस्तावे परिणामप्रकरणे। तथा चेदानीमपि परिणामस्वरूपस्यानवगततया तद्भेदप्रदर्शनमसम्भवमेवेति तत्प्रकरण एवोभयोर्भेदं प्रदर्शयिष्याम इति भावः।

(ञ) "निरपह्नवे" इत्यस्य व्यवच्छेद्यमाह निरपह्नव इति। अपह्नुतिव्यवच्छेदार्थं कारिकायामभिहितमिति शेषः। तथा च शब्दतस्तात्पर्य्यतो वा प्रतिषेधोऽपह्नवः। इत्यञ्च निरपह्नवे उपमेये उपमानस्याभेदारोपो रूपकम्, सापह्नवे तूपमेये उपमानस्याभेदारोपोऽपह्नुतिरित्यनयोरपि भेदः।

(ट) रूपकं विभजति तदिति। तत् रूपकसामान्यम्। परम्परा कार्य्यकारणभावश्रेणी अस्य सञ्जातेति परम्परितम्। तारकादित्वादितच्। अङ्गैः समस्तप्रतिपादकैः सहेति साङ्गम्। निरङ्गम् एकेनापि प्रतिपादकेन हीनम्।

(ठ) तत्रेति। तेषु त्रिविधेषु रूपकेषु मध्य इत्यर्थः।

(ड) परम्परितं लक्षयन् विभजते यत्रेति। यत्र स्थले कस्यचिदेकस्य आरोपः, परस्य अन्यस्य आरोपणे आरोपे कारणं निमित्तं भवति, तत्तत्र परम्परितं रूपकं ज्ञेयमिति शेषः। एतेन रूपकत्वे सति आरोपान्तरनिमित्तीभूत आरोपः परम्परितमिति फलितम्। तच्च परम्परितं प्रथमं द्विधा विभजते श्लिष्टेति। निबध्यते प्रयोज्यते अनेनेति निबन्धनं प्रयोजकमित्यर्थः। तथा च श्लिष्टाश्लिष्टौ शब्दौ निबन्धने प्रयोजको यस्य तत्। एवञ्च श्लिष्टशब्दनिबन्धनम् अश्लिष्टशब्दनिबन्धनञ्चेति प्रथमं द्विविधम्। तयोश्च प्रत्येकम् एकैकमेव केवलमेकमात्रभूतं मालारूपमनेकभूतञ्चेति मिलित्वा समुदायेन परम्परितरूपकं चतुर्विधमित्यर्थः।

---

(१) परिणामप्रस्तावे इति क्वचित् पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"आहवे जगदुद्दण्ड ! राजमण्डलराहवे ।
श्रीनृसिंहमहीपाल ! स्वस्त्यस्तु तव बाहवे ॥" (ढ)

अत्र राजमण्डलं नृपसमूह एव चन्द्रबिम्बमित्यारोपो राजबाहो राहुत्वारोपे निमित्तम् (ण) ।

मालारूपं (त) यथा—

"पद्मोदयदिनाधीशः सदागतिसमीरणः ।
भूभृदावलिदम्भोलिरेक एव भवान् भुवि ॥" (थ)

---

(ढ) आहव इति । राजस्तुतिरियम् । जगति उत्कृष्टं दण्डं सैन्यं यस्य स जगदुद्दण्डः । हे जगदुद्दण्ड ! श्रीनृसिंहमहीपाल ! आहवे समरे, राजमण्डलं विपक्षनृपसमूह एव राजमण्डलं चन्द्रबिम्बं तस्य राहवे विमर्द्दनात् राहुस्वरूपाय, तव बाहवे भुजाय स्वस्ति कुशलमस्तु । "दण्डो यमे मानभेदे लगुड़े दमसैन्ययोः ।" इत्यादिविश्वः । अत्र "हवे हवे" इति यमकस्य पादत्रयगतत्वात् "सहसाखिजनैः स्निग्धैः" इत्यादिवदप्रयुक्ततादोषोऽपि ज्ञेयः ।

(ण) लक्ष्ये लक्षणं सङ्गमयितुमाह अत्रेति । "राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रेऽपि पुंसि स्यात्" इति मेदिनी । अत्र नृपसमूहे चन्द्रबिम्बत्वारोपं विना राजबाहौ राहुत्वारोपः सादृश्याभावान्न सम्भवतीति पूर्वारोपः परारोपं प्रति निमित्तम्, राजमण्डलेति श्लिष्टशब्दप्रयोज्यश्च पूर्वारोपः, कार्य्यकारणभावश्चैकमात्र इत्यतः श्लिष्टशब्दनिबन्धनं केवलपरम्परितमित्याशयः ।

एवमत्र केवलपरारोपे उभयारोपे च श्लिष्टशब्दनिबन्धनत्वं सम्भवति । यथा मम—

"रणदुर्द्दिनसम्प्राप्तौ प्रच्छन्नं राजमण्डलम् । इने तवोदयं प्राप्ते जाता च कमलोन्नतिः ॥"

अत्र दुर्द्दिनं मेघान्धकारः । इनो राजा सूर्य्यश्च । कमला सम्पत् कमलञ्च पद्मम् । तेन युद्धे दुर्द्दिनत्वारोपो नृपतिसमूहे चन्द्रमण्डलत्वारोपे निमित्तम्, राजमण्डलेति श्लिष्टशब्दश्च परारोपप्रयोजकः । तथा राजनि सूर्य्यत्वारोपः सम्पदि पद्मत्वारोपं प्रति निमित्तम्, इनेति कमलेति श्लिष्टशब्दद्वयञ्च उभयारोपप्रयोजकम् । एवमुत्तरत्रापि ज्ञेयम् ।

(त) मालेति । अत्रापि श्लिष्टशब्दनिबन्धनमिति परम्परितमिति च सम्बध्यते ।

(थ) पद्मेति । इयमपि राजस्तुतिः । हे राजन् ! भुवि भवानेक एव, पद्मायाः सम्पदः उदय उन्नतिरेव पद्मानामुदयो विकासस्तत्र दिनाधीशः सूर्य्यः । यथा एकः सूर्य्य एव पद्मविकासं विधत्ते, तथा एको भवानेव पृथिव्यामसाधारणसम्पत्तिवृद्धिं करोतीति भावः । सतां सज्जनानाम् आगतिरागमनमेव सदा सर्वदा गतिर्गमनं तत्र समीरणो वायुः । "श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः" इत्यमरप्रामाण्यात् यथा वायुः सर्वदा गमनं करोति, तथा भवानपि दानमानाभ्यां साधूनामागमनं सम्पादयतीत्याशयः । तथा भूभृतो विपक्षा राजान एव भूभृतः पर्वतास्तेषाम् आवली समूहे दम्भोलिर्वज्रः । इन्द्रस्य वज्रो यथा पर्वतानुपमर्द्दितवान्, भवानपि तथा विपक्षान् राज्ञ उपमर्द्दितवानित्यभिप्रायः । "लक्ष्मीः पद्मालया पद्मा" "वा पुंसि पद्मम्" इति चामरः । "भूभृन्नृपे गिरौ च" इति विश्वः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र पद्मापा उदय एव पद्मानामुदयः, सतामागतिरेव सदागमनम्, भूभृतो राजान एव पर्वता इत्याद्यारोपो राज्ञः सूर्यत्वाद्यारोपे (१) निमित्तम् (द)।

अश्लिष्टशब्दनिबन्धनं केवलं यथा—

"पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः।
त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः॥" (ध)

अत्र त्रैलोक्यस्य मण्डपत्वारोपो हरिबाहूनां स्तम्भत्वारोपे निमित्तम् (न)।

मालारूपं (प) यथा—

"मनोजराजस्य सितातपत्रं श्रीखण्डचित्रं हरिदङ्गनायाः।
विराजति (२) व्योमसरःसरोजं कर्पूरपूरप्रभमिन्दुबिम्बम्॥" (फ)

अत्र मनोजादे राजत्वाद्यारोपश्चन्द्रबिम्बस्य सितातपत्रत्वाद्यारोपे

(द) अत्रेति। अत्र प्रथमादिशब्दः प्रकारार्थे। "सामीप्येऽथ व्यवस्थायां प्रकारेऽवयवे तथा। चतुर्ष्वर्थेषु मेधावी आदिशब्दन्तु लक्षयेत्॥" इति कातन्त्रपञ्जीप्रामाण्यात्। द्वितीयादिशब्दस्तु गणावयवार्थे। तेन च समीरणत्वदम्भोलित्वयोर्ग्रहणम्। अत्र पूर्वपूर्वारोपः परपरारोपं प्रति निमित्तमिति परम्परितत्वम्, पद्मोदय-सदागतिभूभृच्छब्दाः श्लिष्टा इति श्लिष्टशब्दनिबन्धनत्वम्, कार्य्यकारणभावाश्च त्रय इति मालारूपत्वञ्च ज्ञेयम्।

(ध) पान्त्विति। जलदश्यामा मेघवत् श्यामवर्णाः, शार्ङ्गज्यायाः शृङ्गनिर्मितधनुषो गुणस्य आघातेन कर्कशाः कठिनीभूताः, तथा त्रैलोक्यं त्रिभुवनमेव मण्डपं गृहविशेषस्तस्य स्तम्भाः सततमेव धारणात् स्तम्भस्वरूपाः, चत्वारो हरेर्बाहवो भुजाः, वो युष्मान् पान्तु पालयन्तु।

(न) अत्रेति। निमित्तमिति। अतएवात्र्यरूपकस्य परम्परितत्वम्, न कोऽपि शब्दः श्लिष्ट इत्यश्लिष्टशब्दनिबन्धनत्वम्, तथा कार्य्यकारणभाव एकमात्र इति केवलत्वञ्चेति भावः।

(प) मालेति। अश्लिष्टशब्दनिबन्धनं परम्परितमित्यनुषज्यते।

(फ) मनोजेति। मनोजः कन्दर्प एव राजा सर्वत्राप्रतिहतप्रभावात् नृपतिस्तस्य, सितातपत्रं प्रायेण सहचारित्वात् श्वेतच्छत्रस्वरूपम्; हरित् स्वाश्रिता दिगेव अङ्गना लिङ्गसाम्यात् स्त्री तस्याः, श्रीखण्डचित्रं श्वेतवर्त्तुलत्वात् श्वेतचन्दनतिलकस्वरूपम्; तथा व्योम आकाशमेव सरः स्वच्छत्वात् जलाशयस्तस्य सरोजम् आह्लादकसुन्दरवर्त्तुलत्वात् पद्मम्; कर्पूरस्य पूरप्रभं स्तूपतुल्यम्, इन्दुबिम्बं चन्द्रमण्डलं विराजते।

(१) सूर्य्यत्वारोपे निमित्तम्, सूर्य्यत्वारोपनिमित्तम् इति पाठभेदौ।

(२) विराजति इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निमित्तम् (ब)। तत्र च "राजभुजादीनां राहुत्वाद्यारोपो राजमण्डलादीनां चन्द्रमण्डलत्वाद्यारोपे निमित्तम्" इति केचित् (भ)।

४३। अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत्।
समस्तवस्तुविषयमेकदेशविवर्त्ति च॥ (म)

तत्र—

४४। आरोप्याणामशेषाणां शाब्दत्वे प्रथमं मतम्। (य)

प्रथमं समस्तवस्तुविषयम्। यथा—

"रावणावग्रहक्लान्तमिति वागमृतेन सः।
अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे॥" (र)

(ब) अत्रेति। प्रथमादिपदेन हरिद्रोर्म्णोः, द्वितीयादिपदेन अङ्गनात्वसरस्वत्योः, तृतीयादिपदेन च श्रीखण्डचित्रत्व-सरोजत्वयोर्ग्रहणम्। निमित्तमिति। अतएव अस्यरूपकस्यापि परम्परितत्वम्, सर्व्वं एवाश्लिष्टाः शब्दा इत्यश्लिष्टशब्दनिबन्धनत्वम्, त्रयश्च कार्य्यकारणभावा इति मालारूपत्वञ्चावधेयमित्याशयः।

(भ) अत्र परम्परितप्रकरणे मतान्तरे आरोपेषु स्वप्रदर्शितकार्य्यकारणभाववैपरीत्यमाह तत्र चेति। "तेषु आहवे जगदुद्दण्ड!". इत्याद्युदाहृतेषु सकलपद्येषु चेत्यर्थः। अत्रापि प्रथमादिपदेन "पद्मोदय-दिनाधीशः" इत्यादिषु राजादीनाम्, द्वितीयादिपदेन दिनाधीशत्वादीनाम्, तृतीयादिपदेन पद्माया उदया-दीनाम्, चतुर्थादिपदेन च पद्मानामुदयत्वादीनां ग्रहणम्। एतन्मते अस्वरसतावीजानि तु कारणीभूता-रोपाणां कारणतयैव प्राक् प्रतीत्यौचित्येऽपि पाठक्रमेण परप्रतीतिविषयीकरणम्, परप्रतीतियोग्यानाञ्च कार्य्य-भूतारोपाणां प्राक् प्रतीतिविषयीकरणम्, राजमण्डलादिषु च एकानुपूर्वीकशब्दवाच्यत्वरूपसादृश्यसत्त्वात् सुघट एव नृपसमूहादौ चन्द्रविम्बत्वाद्यारोपः सादृश्याभावाद्दुर्घटं राजभुजादौ राहुत्वाद्यारोपं घटयितुमर्हति, न त्वेतद्वैपरीत्यमपि, कार्य्यकारणयोः कारणस्यैव सुघटतया सिद्धत्वावश्यकत्वादिति।

(म) सविभागं साङ्गरूपकलक्षणमाह अङ्गिन इति। साङ्गस्य आकाङ्क्षिताङ्गसमेतस्य अङ्गिनः प्रधानस्य उपमानस्य यदि रूपणं तथैव साङ्गे उपमेये अभेदारोपणं स्यात्, तदा तदेव साङ्गं नाम रूपकम्, साङ्गे उपमेये साङ्गस्यैवोपमानस्य अभेदारोपः साङ्गं रूपकमित्यर्थः। अङ्गिन आरोपवदाकाङ्क्षितानां तदङ्गानामप्यारोपसत्त्वादस्य साङ्गमिति संज्ञा। तच्च द्विविधम्—एकं समस्तवस्तुविषयम्, अपरञ्च एकदेश-विवर्त्तीति। तत्र समस्तान्येव वस्तूनि अङ्गाङ्गिसमुदाय एव विषयाः शाब्दत्वादाश्रया तस्य तत् समस्तवस्तु-विषयम्। एकदेशे विवर्त्तते शाब्दत्वांशे विशेषेणावतिष्ठत इति एकदेशविवर्त्ति।

(य) समस्तवस्तुविषयं लक्षयति आरोप्याणामिति। अशेषाणां सर्वेषामेव आरोप्याणामारोपविषयी-भूतानाम् उपमेयानामुपमानानाञ्च शाब्दत्वे शब्दोपस्थाप्यत्वे न पुनः कस्यचिदप्यार्थत्वे इत्याशयः, प्रथमं समस्तवस्तुविषयं नाम रूपकं मतम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र कृष्णस्य मेघत्वारोपे वागादीनाममृतत्वादिकमारोपितम् (ल) ।

४५ । यत्र कस्यचिदार्थत्वमेकदेशविवर्त्ति तत् ॥ (व)

कस्यचिदारोप्यमाणस्य । यथा—

"लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरम् ।
लोकलोचन-रोलम्ब-कदम्बैः कैर्न पीयते ? ॥" (श)

अत्र लावण्यादौ मधुत्वाद्यारोपः (१) शाब्दः, मुखे पद्मत्वारोप आर्थः (ष) । न चेयमेकदेशविवर्त्त्युपमा, विकस्वरत्वधर्मस्य आरोप्यमाणे पद्मे मुख्यतया वर्त्तनात्, मुखे चोपचरितत्वात् (स) ।

---

(र) रावणेति । रघुवंशदशमसर्गस्थमिदं पद्यम् । सः कृष्णो नारायण एव मेघः श्यामत्वाद्दृष्टिवर्षित्वाच्च घनः, इति पूर्वोक्तप्रकारा वाग्वाक्यमेव अमृतम् आर्द्रकारित्वाज्जलं तेन, रावणो लङ्काधिपतिरेव अवग्रहो रुधत्वात् वृष्टिप्रतिबन्धस्तेन क्लान्तं शुष्कप्रायम्, मरुत् देवगण एव शस्यं खसेवकोपकारित्वात् धान्यादिकं तत्, अभिवृष्य संसिच्य, तिरोदधे अन्तर्दधौ । "वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ" इत्यमरः ।

(ल) अत्रेति । मेघत्वारोपे कर्त्तव्ये सत्येव, वागादीनां तदङ्गानामित्यर्थः । अत्रेदमवधेयम्—वर्षणक्रियायां यावन्त एवाङ्गाङ्गिपदार्था आकाङ्क्ष्यन्ते, अत्र तावन्त एव यथायथं विद्यन्ते ; यथा कर्त्ता करणं कर्म्म चेति । तत्र च उपमेयभूतः कृष्ण उपमानभूतो मेघश्च कर्त्तृतया स्वतन्त्रत्वादङ्गी, वागमृतादीनि तु तत्प्रयोज्यत्वात् तत्सम्पाद्यवर्षणसम्पादकत्वाच्च अङ्गानि, तेषाञ्चात्र सर्वेषामेव शब्दोपात्तत्वमिति ।

किञ्च, कारिकायां सूत्ररूपत्वात् "सूत्रे लिङ्गं संख्या कालश्चातन्त्राणि" इति न्यायेनात्र "आरोप्याणाम्" इत्यादिबहुवचनमविवक्षितम् । तेन अङ्गाङ्गिद्वितयमात्ररूपणेऽपि साङ्गरूपकमेव यथा—"सुन्दरि ! मुखचन्द्रस्ते वर्षतीदं स्मितामृतम् ।"

(व) यत्रेति । यत्र रूपणे कस्यचिदारोप्यमाणस्य उपमानभेदस्य आर्थत्वमर्थवशाल्लभ्यत्वम् । एतेनान्येषां शाब्दत्वमेवावश्यकमिति सूचितम् । तद् रूपणम् एकदेशविवर्त्ति नाम साङ्गं रूपकं मतमित्यनुषज्यते ।

(श) लावण्येति । कैः, लोकानां जनानां लोचनानि नयनान्येव रोलम्बा भ्रमरास्तेषां कदम्बैः समूहैः, लावण्यान्येव मधूनि मकरन्दास्तैः पूर्णं विकस्वरं हास्येन समयप्रभावेण च प्रकाशशीलम्, अस्याः कामिन्याः आस्यं वदनं न पीयते सादरं न दृश्यते ? अपि तु सर्वैरेव पीयत इत्यर्थः ; परमरमणीयत्वादिति भावः ।

(ष) अत्रेति । प्रथमादिपदेन लोचनस्य द्वितीयादिपदेन च रोलम्बत्वस्य ग्रहणम् । आर्थो विकस्वरपदप्रयोगतात्पर्य्यलभ्यः । अत्रापि पूर्ववदेव साङ्गत्वमूहनीयम् ।

(स) नन्वत्र लावण्यानि मधूनीव लोकलोचनानि रोलम्बा इव इत्युपमितसमासाश्रयणेन तत्र तत्र साम्यस्य वाच्यत्वात् मुखे पद्मसाम्यस्य च गम्यत्वादेकदेशविवर्त्तिन्युपमैवास्तामित्याह न चेति । आरोप्यमाणे

---

(१) मधुत्वारोपः, मध्वाद्यारोपः, इति पाठभेदौ ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

४६ । निरङ्गं केवलस्यैव रूपणं तदपि द्विधा ।
मालाकेवलरूपत्वात्—(छ)

तत्र मालारूपं निरङ्गं यथा—

"निर्म्माणकौशलं धातुश्चन्द्रिका लोकचक्षुषाम् ।
क्रीड़ागृहमनङ्गस्य सेयमिन्दीवरेक्षणा ॥" (च)

केवलं यथा—"दासे कृतागसि भवत्युचितः प्रभूणां
पादप्रहार इति सुन्दरि ! नात्र (१) दूये ।
उद्यत् कठोर-पुलकाङ्कुर-कण्टकाग्रै-
र्यत्खिद्यते मृदुपदं ननु सा व्यथा मे ॥" (छ)

---

रूपमानत्वेनारोपविषयीभूते । मुख्यतया अभिधाप्रतिपाद्यतया । उपचरितत्वात् लक्षणया आरोपितत्वात् । अत्रायमाशयः—विकस्वरत्वं नाम प्रस्फुटितत्वम्; तच्च प्रकाशसङ्कोचशीले पद्म एव मुख्यतया सम्भवति, न पुनः सर्वदैव एकरूपे मुखे । एवञ्च सम्भवति मुख्यार्थत्वे लक्षणाया अयोगात् "मुखचन्द्रः प्रकाशते" इत्यादिवदेवात्र विकस्वरमिति पदमेव रूपकस्य साधकमुपमायाश्च बाधकमिति एकदेशविवर्त्ति रूपकमेवेति । एतेन उक्तोदाहरणे "विकस्वरम्" इत्यत्र "मनोहरम्" इति पाठे साधकबाधकप्रमाणाभावात् "मुखचन्द्रं पश्यति" इत्यादिवदेव एकदेशविवर्त्युपमारूपकयोः सन्देहसङ्कर एवेति सूचितम् । "नेत्रैरिवोत्पलैः पद्मैः" इत्यादौ तु इवादिवाचकसत्त्वेनारोपस्यैवाभावान्न एकदेशविवर्त्ति रूपकमिति बोध्यम् ।

किञ्च, साम्यस्य अंशयो वाच्यत्वे अंशतश्च व्यङ्ग्यत्वे एकदेशविवर्त्तिन्युपमा, साम्यस्य सर्वत्रैव व्यङ्ग्यत्वे तु एकदेशविवर्त्ति रूपकमिति भेदः । अतएव उपमालक्षणवृत्तौ "रूपकादिषु साम्यस्य व्यङ्ग्यत्वम्" इत्युक्तम् ।

(छ) सविभागं निरङ्गं रूपकं लक्षयति निरङ्गमिति । केवलस्यैव अङ्गरहितस्यैव उपमानस्य रूपणं निरङ्गे उपमेये अभेदारोपणं निरङ्गम् । तथा च निरङ्गे उपमेये निरङ्गस्यैवोपमानस्य अभेदारोपो निरङ्गं नाम रूपकमित्यर्थः । अतएव निरङ्गमिति संज्ञाप्युपपद्यते । तन्निरङ्गं रूपकमपि मालारूपत्वादने-कारोपयुक्तत्वात् केवलरूपत्वादेकमात्रारोपयुक्तत्वाच्च द्विधा ।

(च) निर्म्माणेति । सा पूर्वदृष्टा इयमिन्दीवरेक्षणा नीलोत्पलनयना, धातुर्विधातुः निर्म्माणकौशलं वराङ्गनासृष्टेः परमनैपुण्यरूपा ? लोकचक्षुषां जननयनानां चन्द्रिका ज्योत्स्नारूपा, तद्वदेवानन्दजननीति भावः; तथा अनङ्गस्य कन्दर्पस्य क्रीड़ागृहं विहारभवनरूपा, दर्शनमात्रेणातीवकामोद्दीपिकेत्याशयः ।

अत्र इन्दीवरेक्षणारूपे निरङ्गे एवोपमेये निर्म्माणकौशलादीनां निरङ्गाणामेव त्रयाणामुपमानानामभेदा-रोपत्रयात् मालारूपं निरङ्गं रूपकम् । निर्म्माणकौशलस्योपमानत्वानङ्गीकारे तु आरोपद्वयस्याप्यनेकत्वान्माला-रूपत्वमक्षतमेव ।

(छ) दास इति । मानिन्या प्रियाया मानभङ्गाय तत्पादपतितस्य तयैव च पादेन प्रहृतस्य नायकस्य

---

(१) नास्ति इत्यपि पाठः क्वचित् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

४७ । तेनाष्टौ रूपके भिदाः ॥ (ख)

चिरन्तनैरुक्ता इति शेषः ।

क्वचित् परम्परितस्याप्येकदेशविवर्त्ति (ग) । यथा—

"खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य (१) ॥" (घ)

---

तौ प्रत्येव पुनः सप्रेमोक्तिरियम् । हे सुन्दरि ! कृतागसि विहितापराधे दासे प्रभूणां पादप्रहार उचितो न्याय्य एव भवति, इति हेतोः, अत्र तव पादप्रहारे अहं न दूये न सन्तप्तो न व्यथितो भवामि । किन्तु उद्यन्तस्तव पादस्पर्शमात्रेणैवोत्पद्यमानाः कठोराः कठिनाः पुलकाङ्कुरा अङ्कुरवत् क्षुद्रक्षुद्रा रोमाञ्चा एव कण्टकानि तेषामग्रैरग्रभागैः, तव मृदु कोमलं पदं चरणतलं यच्छिद्यते विदार्य्यते नन्वित्यवधारणे, सा सैव मे मम व्यथा वेदना ।

अत्र पुलकाङ्कुररूपे निरङ्ग एव कश्चिन्नुपमेये कण्टकरूपस्य निरङ्गस्यैवैकस्य उपमानस्य एकमात्राभेदारोपात् केवलरूपं निरङ्गं रूपकम् ।

इदमत्रावधेयम्—एकस्य आरोपस्य कार्य्यकारणभावेन आरोपान्तरसापेक्षत्वे परम्परितम्, अङ्गाङ्गिभावेन आरोपान्तरसापेक्षत्वे साङ्गम्, सर्वथैवारोपान्तरनिरपेक्षत्वे च निरङ्गं रूपकमिति ।

(ख) इदानीं शुद्धरूपकभेदनिरूपणमुपसंहरन् समुदायेन तत् सङ्कलनमाह तेनेति । उक्तविधभेदसमूहसम्भवेनेत्यर्थः, रूपके शुद्धरूपकालङ्कारे अष्टौ भिदा भेदाः । तथा च—

| | | | |
|---|---|---|---|
| परम्परितम् ४ | श्लिष्टशब्दनिबन्धनम् | केवलम् | १…"आहवे जगदुद्दण्ड !" इत्यादि । |
| | | मालारूपम् | १…"पद्मोदयदिनाधीशः" इत्यादि । |
| | अश्लिष्टशब्दनिबन्धनम् | केवलम् | १…"पान्तु वो जलदश्यामाः" इत्यादि । |
| | | मालारूपम् | १…"मनोजराजस्य" इत्यादि । |
| साङ्गम् २ | समस्तवस्तुविषयम् | | १…"रावणावग्रहक्लान्तम्" इत्यादि । |
| | एकदेशविवर्त्ति | | १…"लावण्यमधुभिः पूर्णम्" इत्यादि । |
| निरङ्गम् २ | मालारूपम् | | १…"निर्म्माणकौशलं धातुः" इत्यादि । |
| | केवलरूपम् | | १…"दासे कृतागसि" इत्यादि । |

(ग) क्वचिदिति । न केवलं साङ्गं रूपकमेकदेशविवर्त्ति, किन्तु परम्परितमप्येकदेशविवर्त्ति सम्भवतीत्यर्थः ; तत्रापि कस्यचिदारोपस्यार्थत्वसम्भवादिति भावः । तथापि तु परम्परितस्य चतुरधिको भेदो नाशङ्कनीयः, अस्य तेष्वेवान्तर्भावात् प्राचीनैः परम्परितस्य उक्तभेदचतुष्टयमात्राङ्गीकारादिति बोध्यम् ।

(घ) खड्ग इति । अस्य पूर्वपादत्रयं यथा—"पर्य्यङ्को राजलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरङ्गः, भग्नप्रत्यर्थिवंशोल्वणविजयकरिस्त्यानदानाम्बुपट्टः । संग्रामत्रासताम्यन्मुरलपतियशोहंसनीलाम्बुवाहः;" इति ।

मालवाखण्डलस्य मालवेन्द्रस्य मालवदेशाधिपतेः, क्ष्माया महिषीरूपायाः पृथिव्याः सौविदल्लः कञ्चुकिस्वरूपः, अन्तःपुरनियुक्तकञ्चुकिनामकरक्षकाश्रयेण महिष्या इव खड्गेन पृथिव्या रक्षणादिति भावः । खड्ग-

---

(१) क्वचित् मालवाखण्डलस्येति पाठः, क्वचित् सम्पूर्णपद्यस्यैव च पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्रार्थः छायां महिषीत्वारोपः खड्गे सौविदल्लत्वारोपे निमित्तम् (१) (ङ)। अस्य भेदस्य पूर्ववन्मालारूपत्वेऽप्युदाहरणं मृग्यम् (च)।

४८। दृश्यन्ते क्वचिदारोप्याः श्लिष्टाः साङ्गेऽपि रूपके। (छ)

तत्रैकदेशविवर्त्ति श्लिष्टं यथा मम—

"करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य।
विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः॥" (ज)

---

करवालिः, समिति युद्धे विजयते सर्वोत्कर्षेण वर्तते। "सौविदल्लाः कञ्चुकिनः" "समित्याजिसमिद्युधः" इति चामरः।

(ङ) उदाहृते एकदेशविवर्त्ति परम्परितरूपकं समर्थयितुमाह अत्रेति। अत्रार्थस्तात्पर्यवशाल्लभ्यः। निमित्तमिति। छायां महिषीत्वारोपं विना खड्गे सौविदल्लत्वारोपस्य तयोः सादृश्याभावेनासम्भवादित्याशयः। अत्र तु—

"खड्गः क्ष्मासौविदल्लो जयति परिचरन्नुत्करी मालवस्य।"

इति पाठे—मालवस्य मालवदेशाधिपतेः। उत्क्षिप्तः करः किरण एव करो हस्तो येन सः। तथा परिचरन् सर्वतः सञ्चरन्नेव परिचरन् परिचर्यां कुर्वन् इत्येवमर्थे च परम्परितश्लिष्टसाङ्गैकदेशविवर्त्ति-रूपकयोरेकाश्रयानुप्रवेशरूपः सङ्कर एवेति द्रष्टव्यम्।

(च) अस्येति। एकदेशविवर्त्तिपरम्परितरूपकप्रकारस्येत्यर्थः। मृग्यमन्वेष्यम्। यथा—

"कन्दर्पदेवस्य सितातपत्रं श्रीखण्डचित्रं हरितो मनोज्ञम्।
विराजते व्योमसरोजमेतत् कर्पूरपूरप्रभमिन्दुबिम्बम्॥"

अत्र कन्दर्पदेवे राजत्वारोपः, हरिति (दिशि) अङ्गनात्वारोपः, व्योम्नि सरोवरत्वारोपश्चार्थः चन्द्रबिम्बे शाब्दं सितातपत्रत्वारोपं श्रीखण्डचित्रत्वारोपं सरोजत्वारोपञ्च प्रति निमित्तमिति एकदेशविवर्त्ति मालारूपं परम्परितरूपकम्।

(छ) उक्तवृत्तिसन्दर्भेण परम्परितरूपके एकदेशविवर्त्तितारूपां साङ्गरूपकच्छायां प्रदर्श्य इदानीं साङ्ग-रूपकेऽपि श्लिष्टशब्दनिबन्धनत्वरूपां परम्परितरूपकच्छायां प्रदर्शयितुमाह दृश्यन्त इति। न केवलं परम्परिते रूपके, किन्तु साङ्गे रूपकेऽपि क्वचित् आरोप्या आरोपणीयोपमानवाचकाः शब्दाः, श्लिष्टा अनेकार्थाः, दृश्यन्ते। अतो लक्षणादीनां लक्ष्यानुसारित्वादिदमप्यङ्गीकरणीयमेवेति भावः।

(ज) करमिति। अयं सुधांशुश्चन्द्रः, अमरेशदिश इन्द्राधिपतिकायाः पूर्वस्या दिशः गलितं स्वोदया-देवापसृतं तमःपटलमन्धकारसमूह एव अंशुकं वसनं यस्मात्तादृशे उदयमहीधरे उदयपर्वत एवोन्नत-पीवरत्वात् स्तनस्तस्य अग्रे उपरिभागे, करं मयूखमेव करं हस्तम्, निवेश्य विन्यस्य, विकसितं स्वोदयेनानन्देन च प्रकाशितं कुमुदमेव ईक्षणं चक्षुर्यत्र तत्तादृशम्, मुखमाद्यभागमेव मुखं वदनम्, विचुम्बति स्पृशति निजवदनेन संयोजयति च।

---

(१) हेतुरिति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

समस्तवस्तुविषयं यथा अत्रैव—"विचुम्बति" इत्यादौ चुचुम्बे, "हरिदबलामुखमिन्दुनायकेन" इति पाठे (झ)।

न चात्र श्लिष्टपरम्परितम्, तत्र हि "भूभृदावलीदम्भोलिः" इत्यादौ राजादौ पर्वतत्वादिरूपणं (१) विना वर्णनीयस्य राजादेर्दम्भोलितादिरूपणं (२) सर्वथैव सादृश्यासम्भवादसङ्गतम् (ञ)। तर्हि कथं "पद्मोदयदिनाधीशः" इत्यादौ परम्परितम्, राजादेः सूर्यादिना सादृश्यस्य तेजस्वितादिहेतुकस्य सम्भवादिति न वाच्यम्; तथाहि, राजादेस्तेजस्वितादिहेतुकं सुव्यक्तं

अत्र नायकरूपं सुधांशुरङ्गी तमःपटलांशुकगलनादीनि च तदङ्गतया विवक्षितानीति साङ्गरूपकत्वम्; तथा तमःपटले चांशुकत्वाद्यारोपाः शाब्दाः, अमरेशदिशि नायिकात्वारोपः सुधांशौ नायकत्वारोपश्च आर्थं इत्येकदेशविवर्त्तिता; कर-सुखशब्दौ च श्लिष्टाविति श्लिष्टशब्दनिबन्धनत्वम्; इत्यतः श्लिष्टशब्दनिबन्धनमेकदेशविवर्त्तिरूपं साङ्गरूपकमलङ्कार इत्याशयः।

(झ) कारिकायां "साङ्गेऽपि रूपके" इति साङ्गरूपकसामान्याभिधानात् तदन्तर्गतावुभावपि भेदौ श्लिष्टशब्दनिबन्धनयोग्यत्वे विषयीकरोतीत्याशयेनाह समस्तेति। अत्रैव "करमुदय—" इत्यादिश्लोक एव। इत्यादौ अंशे इत्यर्थः। तथा च—

"विकसितकुमुदेक्षणं चुचुम्बे, हरिदबलामुखमिन्दुनायकेन।"

इत्येवं द्वितीयार्द्धपाठकल्पने इत्यर्थः। ईदृशपाठे तु प्रागुक्तहेतुतः सर्वेषामेवारोपाणां शाब्दत्वाच्छ्लिष्टशब्दनिबन्धनं समस्तवस्तुविषयं साङ्गरूपकं स्यादित्यभिप्रायः।

(ञ) आशङ्काविशेषमुत्थाप्य तन्निरस्यति न चेति। अत्र "करमुदय—" इत्यादिश्लोके, किरणादौ हस्तत्वाद्यारोपस्य महीधरादौ स्तनत्वाद्यारोपं प्रति कथमपि कारणत्वात् श्लिष्टपरम्परितं रूपकमिति वाच्यं न चेत्यर्थः। हि यस्मात्। तत्र श्लिष्टपरम्परितविषये राजादौ विपक्षनृपादौ। दम्भोलितादिरूपणं वज्रत्वाद्यारोपः सादृश्यासम्भवात् वज्रादिना सह वर्णनीयस्य राजादेरित्यर्थः।

(ट) उक्तयुक्तौ पूर्वापरयोरसामञ्जस्यसन्देहस्य निरासाभिप्रायेण "तत्र हि—सादृश्यासम्भवादसङ्गतम्। इह तु महीधरादेः" इत्याद्युक्तग्रन्थस्य मध्य एव आशङ्कान्तरमवतार्य्य तदपि निरस्यति तर्हीति। तेजस्वितेत्यादिपदेन सर्वाभिभावितादेर्ग्रहणम्। सम्भवादिति। तथा च तेजस्वितादिहेतुकसादृश्येनैव राजादौ सूर्यत्वाद्यारोपस्य, घटिततया कारणान्तरानपेक्षत्वादुभयारोपणं परस्परकार्य्यकारणभावाभावेन कथं "पद्मोदयदिनाधीशः" इत्यादौ परम्परितरूपकमिति भावः। न तु नहि। प्रकृते "पद्मोदयदिनाधीशः" इत्यादौ। विवक्षितमिति। तथात्वे तु परस्परसंस्रवाभावेन पद्मोदयपदप्रयोगस्य उन्मत्तप्रलापत्वप्रसङ्ग इति भावः। द्वयो राजसूर्ययोः। विवक्षितत्वादिति। अत्रायमाशयः—सूर्य्यो यथा प्रकाशकरणेन पद्मानामभ्युदयं करोति, वर्णनीयो राजापि तथैव विपक्षान् विजित्य धनार्जनेन पद्मायाः अभ्युदयं करोति; इत्येव हि कविना

(१) पद्मतत्वाद्यारोपमिति पाठान्तरम्। (२) दम्भोलित्वादिरूपणामित्यसङ्गतः पाठः क्वचित्।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सादृश्यं न तु प्रकृते विवक्षितम्, पद्मोदयादेरेव द्वयोः साधारणधर्म्मतया विवक्षितत्वात् (ट)। इह तु महीधरादेः स्तनादिना सादृश्यं पीनोत्तुङ्गत्वादिना सुव्यक्तमेवेति न श्लिष्टपरम्परितम् (ठ)।

क्वचित् समासाभावेऽपि रूपकं दृश्यते (ड)। यथा—

"मुखं तव कुरङ्गाक्षि! सरोजमिति नान्यथा।" (ढ)

क्वचिद्वैयधिकरण्येऽपि (ण)। यथा—

"विदधे मधुपश्रेणीमिह भ्रूलतया विधिः॥" (त)

क्वचिद्वैधर्म्म्येऽपि। यथा—

---

विवक्षितोऽर्थः। तेन च पद्मोदय एव द्वयो राजसूर्ययोः साधारणधर्म्मः। एवम्, इन्द्रस्य वज्रो यथा पर्वतान् विमर्द्दितवान्, वर्णनीयो राजापि तथैव विपक्षराजान् विमर्द्दयति; इत्येव च कविना विवक्षितोऽर्थः। तेन च भूभृद्विमर्द्दनमेव द्वयो राजवज्रयोः साधारणधर्म्मः। एवञ्च पूर्वारोपान् विना परारोपा न सम्भवन्तीत्युभयारोपाणामेव परस्परकार्य्यकारणभावसद्भावात् "भूभृदावलिदम्भोलिः" "पद्मोदयदिनाधीशः" इत्युभयत्रापि श्लिष्टपरम्परितत्वे न किञ्चिदसामञ्जस्यमिति।

(ठ) प्रबन्धशेषमाह इह त्विति। "करमुदय—" इत्यादौ श्लोके त्वित्यर्थः। सुव्यक्तमेवेतीति। तथा च तादृशं सादृश्यमेव महीधरादौ स्तनत्वाद्यारोपं घटयतीति।। किरणादौ हस्तत्वाद्यारोपस्य तत्कारणतया नापेक्षेति न श्लिष्टपरम्परितं रूपकमित्यर्थः। एतेन यत्र आरोपं स्वोत्पत्तौ सादृश्यमात्रमपेक्षते तत्र साङ्गं रूपकम्, यत्र तु विवक्षितसादृश्यासम्भवेन आरोपान्तरमपेक्षते तत्र परम्परितमिति सूचितम्।

(ड) इदानीं रूपकस्य विषयविशेषेषु कादाचित्कं सद्भावं क्रमादाह क्वचिदिति। प्रायेण सर्वत्रैव समाससद्भावे, क्वचित् समासाभावेऽपीत्यर्थः। एतेन "समस्तं व्यस्तमुभयं सविशेषणमित्यपि" इति सरस्वतीकण्ठाभरणादौ व्यस्तसमस्तयोः सामान्यतोऽभिधानं कदाचितमिति बोध्यम। एवमुत्तरत्रापि।

(ढ) मुखमिति। "अधरः पल्लवदलं मृणालञ्च भुजद्वयम्॥" इति मत्पूरितपरार्द्धम्। अत्र समासाभावेऽपि मुखे सरोजत्वारोपात् निरङ्गं केवलं रूपकम्।

(ण) क्वचिदिति। वैयधिकरण्यमत्र भिन्नविभक्तिकत्वम्। अतश्च "भ्रूलतयेत्यभेदे तृतीया अन्यथा तादात्म्यारोपो न स्यात्।" इति सुष्ठु [illegible] तर्कवागीशेन।

(त) विदध इति। "नवं सरसिजं फुल्लं चकार वदनेन यत्।" इति मत्पूरितपूर्वार्द्धम्। विधिर्विधाता इह वदनसरसिजे भ्रूलतया मधुपश्रेणीं भ्रमरपङ्क्तिं विदधे निर्म्ममौ। अत्रापि भिन्नविभक्तिकपदोपस्थाप्यायां भ्रूलतायां मधुपश्रेणीत्वारोपात् निरङ्गं केवलं रूपकम्।

अवच्छेदभेदेन कस्यानेकधा रूपणेऽपि रूपकमेव। यथा मम विराजसरोजिनीनाटिकायाम्—

"शशिकला सकला तनुमध्यगा नयनयोरनयोरसितोत्पले।
विकसितञ्च सितं कमलं मुखे समुदये च सुवर्णलता मता॥"

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुण-
ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा।
यैरेषापि दुराशया कलियुगे राजावली सेविता
तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत् कौशलम्॥" (थ)

इदं मम। अत्र च केषाञ्चिद्रूपकाणां शब्दश्लेषमूलत्वेऽपि रूपक-विशेषत्वादर्थालङ्कारमध्ये गणनम् (द)।

एवं वक्ष्यमाणालङ्कारेषु बोद्धव्यम् (ध)।

---

(थ) सौजन्येति। सौजन्यं सज्जनतैव अम्बु जलं तत्र मरुस्थली मरुभूमिः, मरुभूमिर्यथा जलशून्या राजावल्यपि तथैव सौजन्यशून्येति भावः। सुचरितं सच्चरित्रमेव आलेख्यं चित्रं तत्र द्युभित्तिराकाशभित्तिः, आकाशे यथा चित्रं कर्तुं न शक्यते राजावल्यामपि तथैव सुचरितमुदाहर्त्तुं न शक्यते इत्याशयः। गुणो दयादाक्षिण्यादिरेव ज्योत्स्ना तत्र कृष्णा कृष्णपक्षीया चतुर्दशी; कृष्णचतुर्दश्यां ज्योत्स्ना यथा उदितमात्रैव विलुप्यते न तु लोकैर्दृश्यते, राजावल्यामपि दयादाक्षिण्यादिगुणास्तथैव उदितमात्र एव विलुप्यते, न पुनर्लोकैरनुभूयत इत्यभिप्रायः। गुणः खलु राजावल्यां मानुषस्वभावात् कदाचित् किञ्चिदुत्पद्यत एव न तु तिष्ठतीति सूचनाय अमावस्येत्यनुक्त्वा चतुर्दशीत्युक्तम्। सरलतायोगे ऋजुतासम्पर्के सरलव्यवहार इत्यर्थः। श्वपुच्छच्छटा कुक्कुरलाङ्गूलस्वरूपा, कुक्कुरलाङ्गूल इव राजावल्यां सरलताया लेशोऽपि नास्तीति भावः। एषा एवम्भूतापि कलियुगे राजावली कलियुगीयनृपतिश्रेणी, दुराशया दुष्टधनलाभलोभेन यैः सेविता, तेषां जनानां भक्तिमात्रेणैव सुलभे शूलिनि महादेवे महादेवस्येत्यर्थः सेवा आराधनं कियत् कौशलं कीदृक्-कौशलसाध्या? अपि तु कौशलसाध्यैव न अतीवानायाससाध्यैवेत्यर्थः। अतस्तादृशराजावलीसेवामपहाय शूलिसेवैव विधेयेति भावः।

अत्र मरुस्थल्याम्बुनः, द्युभित्तावालेख्यस्य, कृष्णचतुर्दश्यां ज्योत्स्नायाः, श्वपुच्छे च सरलतायाः, असम्भवान्मरुस्थल्यादिषु अम्बुप्रभृतीनां विधर्मत्वमुन्नेयम्। तेन प्रथमविशेषणत्रये अश्लिष्टशब्दनिबन्धनं मालारूपं परम्परितरूपकम्; चतुर्थविशेषणे च निरङ्गं केवलं रूपकम्।

(द) ननु "राजमरुलराहवे" इत्यादीनां श्लिष्टपरम्परितरूपकाणां "करमुदयमहीधरस्तनाग्रे" इत्यादीनाञ्च श्लिष्टशब्दनिबन्धनानां साङ्गरूपकाणां शब्दश्लेषघटितत्वात् शब्दालङ्कारमध्य एव गणनमुचितमित्याह अत्र चेति। रूपकविशेषत्वादर्थालङ्कारतया प्रसिद्धस्य रूपकस्य प्रकारविशेषत्वात्। तथा च अवयविनोऽर्थालङ्कारतया प्रसिद्धौ तदवयवविशेषस्यापि अर्थालङ्कारतयैव प्रसिद्धेरौचित्यात् सुधीसमाजे कस्यचिन्मूर्खस्यापि सुधीत्वमेवेति भावः। एतेन श्लिष्टपरम्परितरूपकादौ शब्दार्थोभयालङ्कारत्वमेव वास्तविकमिति सूचितम्। सरस्वतीकण्ठाभरणे त्वमीषामुभयालङ्कारत्वेनैव गणनं दृश्यते। यथा—

"शब्देभ्यो यः पदार्थेभ्य उपमादिः प्रतीयते। विशिष्टोऽर्थः कवीनां स उभयालङ्क्रिया मता॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उपमा रूपकं साम्यं संशयोक्तिरपह्नुतिः।" इत्यादि।

४९ । अधिकारूढवैशिष्ट्यं रूपकं यत्तदेव तत् । (न)

तदेव अधिकारूढवैशिष्ट्यसंज्ञकरूपकम् (१) । यथा मम—

"इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः
सुधाधाराधारश्चिरपरिणतं विम्बमधरः ।
इमे नेत्रे रात्रिन्दिवमधिकशोभे कुवलये
तनुर्लावण्यानां जलधिरवगाहे सुखतरः ॥" (प)

अत्र कलङ्कराहित्यादिना अधिकं वैशिष्ट्यम् (फ) ।

---

(ध) एवमिति । वक्ष्यमाणेषु श्लेषमूलकेषु अपह्नुतिव्यतिरेकादिषु । इदमुपलक्षणम् । उक्तायां शब्दश्लेषमूलायां पूर्णोपमायामप्येवं बोद्धव्यम् । तेन सरस्वतीकण्ठाभरणे उपमापदं पूर्णोपमापरम् ।

(न) निरुक्तभेदसमुदायविलक्षणम् अधिकारूढवैशिष्ट्यं नाम रूपकं तदेव लक्षयति अधिकेति । यद्रूपकं अधिकमत्यन्तम् आरूढं स्वस्मिन्नधिरूढं वैशिष्ट्यं चमत्कारिता यस्मिन्, तत्तादृशं भवति ; तद्रूपकं तदेव अधिकारूढवैशिष्ट्यसंज्ञकमेव भवतीत्यर्थः । उपमाने उपमेये वा सन्तमपि यं कञ्चिद्धर्ममवरोप्य असन्तमपि च यं कञ्चिद्धर्ममारोप्य वा रूपणे एवेदं वैशिष्ट्यमधिकमारूढं भवतीति द्रष्टव्यम् ।

(प) इदमिति । इदमवलोक्यमानं नायिकाया वक्त्रं मुखम्, विरहितकलङ्कः साक्षात् सन्निधानप्रत्यक्षगोचरः शशधरश्चन्द्रः । सुधाधाराया अमृतप्रवाहस्य आधार आश्रयः अधर ओष्ठः, चिरपरिणतं चिरमेव परिपक्वं विम्बं विम्बफलम् । इमे दृश्यमाने नेत्रे, रात्रिन्दिवमहोरात्रमेव अधिका शोभा ययोस्तादृशे कुवलये नीलोत्पलद्वयम् । तथा तनुर्देहः, अवगाहे अवगाहने सुखतरः सातिशयसुखजनकः, लावण्यानां जलधिः समुद्रः ।

(फ) अत्रेति । आदिपदेन सुधाधाराधारत्वादेर्ग्रहणम् । तथा च उपमाने शशधरे सन्तमपि कलङ्कमवरोप्य मुखे तस्य रूपणम् । अधरे उपमेये असन्तमपि सुधाधाराधारत्वधर्ममारोप्य, तथा जन्मनश्चिरात् परमेव परिणतिर्वोध्ये विम्बे उपमाने असन्तमपि चिरपरिणतत्वधर्ममारोप्य तत्र तस्य रूपणम् । तथा रात्रावेवाधिकशोभे कुवलये उपमाने असन्तमपि रात्रिन्दिवमधिकशोभत्वधर्ममारोप्य नेत्रे तस्य रूपणम् । एवमुपमाने जलधौ असन्तमपि लावण्यसर्वस्वमारोप्य तनौ तस्य रूपणम् । कण्ठाभरणकारस्तु "परम्पराऽथ रशना माला रूपकरूपकम्" इत्याचक्षाणो रशनारूपकं नाम रूपकान्तरमङ्गीकुर्वन्निदमुदाजहार—

"किसलयकरैर्लतानां करकमलैः कामिनीजनानां जगज्जयति ।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥"

काव्यप्रकाशकारस्तु—"इत्यादि रशनारूपकं न वैचित्र्यवदिति न लक्षितम्" इत्यभिदधानस्तदिदं न मन्यते । दर्पणकारस्याप्यत्र तूष्णीम्भावादिदमनभिमतमेवेति मन्तव्यम् ।

---

(१) वैशिष्ट्यम्—संज्ञकम्, इति पाठभेदः ।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**५० । विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि ।**
**परिणामो भवेत् तुल्यातुल्याधिकरणो द्विधा ॥ (व)**

आरोप्यमाणस्यारोपविषयात्मतया परिणमनात् परिणामः (भ) । यथा—

"स्मितेनोपायनं दूरादागतस्य कृतं मम ।
स्तनोपपीड़माश्लेषः कृतो द्यूते (१) पणस्तया ॥" (म)

अन्यत्रोपायनपणौ वसनाभरणादिभावेनोपयुज्येते, अत्र तु नायक-सम्भावन-द्यूतयोः स्मिताश्लेषरूपतया (य) । प्रथमार्द्धे वैयधिकरण्येन प्रयोगः, द्वितीये सामानाधिकरण्येन (र) ।

---

(व) रूपकनिरूपणानन्तरं तत्सजातीयतया परिणामालङ्कारं निरूपयति विषयेति । आरोप्ये आरोपणीये पदार्थे उपमाने इति यावत्, विषयात्मतया आरोपविषयतादात्म्येन उपमेयाभिन्नत्वेन हेतुना, प्रकृतार्थस्य प्रस्तुतविषयस्य उपयोगिनि साधनोपयोगिनि सति, परिणामो नामालङ्कारो भवेत् ।

तथा च प्रस्तुतविषयसाधनोपयोगितया उपमेये उपमानाभेदारोपः परिणाम इत्यर्थः । स च द्विधा—तुल्याधिकरणः, अतुल्याधिकरणश्चेति । तत्र उपमानोपमेययोः समानविभक्तिकत्वं तुल्याधिकरणत्वम्, असमानविभक्तिकत्वञ्च अतुल्याधिकरणत्वम् । रूपकेण सहास्य भेदस्तु प्रागेव दर्शितः, द्वतौ चात्र दर्श्येते ।

(भ) परिणामशब्दस्य व्युत्पत्तिमाह आरोप्येति । आरोप्यमाणस्य उपमानस्य, आरोपविषयात्मतया उपमेयरूपत्वेन परिणमनात् पर्य्यवसितत्वात् । एवञ्च परिपूर्वकनमधातोर्भावे घञिति दर्शितम् ।

(म) स्मितेनेति । सख्युरन्तिके निजप्रियतमाया व्यवहारवर्णनेयम् । तया प्रियतमया स्मितेन ईषद्धास्येन, दूरादागतस्य मम उपायनमुपहारः कृतम् । तथा द्यूते पाशक्रीड़ायाम्, स्तनाभ्यामुपपीड्येति स्तनोपपीड़म्, "उपपीड़रुधकर्षश्च" इति णम् । आश्लेष आलिङ्गनम्, पणः कृतः । दूरादागताय जनाय बन्धुजनेन यः कश्चिदुपहारो दीयत इति, पाशक्रीड़ायाञ्च यः कश्चित् पणो रच्यत इति च लौकिकी रीतिः । एवञ्च दूरादागते मयि प्रियतमया मे ईषद्धास्यरूप एव स उपहारो दत्तः, तथा "पाशक्रीड़ायां मया हारिते स्तनोपपीड़मालिङ्गनं दातव्यम्" इत्युक्त्वा पाशक्रीड़ायां स्तनोपपीड़ालिङ्गनरूप एव पणो रचित इति सरलार्थः ।

तेनात्र उपमेयभूते स्मिते उपमानभूतोपायनाभेदारोपस्य प्रकृतनायकाभ्यर्थनासाधनोपयोगित्वात् उपमेय-भूते तादृशालिङ्गने च उपमानभूतपणाभेदारोपस्य प्रकृतद्यूतक्रीड़ासाधनोपयोगित्वाच्च परिणामालङ्कारः ।

तथा "कृतम्" "कृतः" इति कृतशब्दस्यैव द्विःपाठात् कथितपदतादोषः । अस्मादेव च कथितपदता-दोषभयात् "कृतः" इत्यत्र "ततः" इति पाठं कल्पयतो रामचरणस्य नूपुरपूरणाय खञ्जचरणे चरणान्तरयोजन-चेष्टा किमभीष्टासीत् ? । इदानीन्तननिखिलपुस्तकेष्वेव कृत इति पाठदर्शनात् तत इति कल्पनैव प्रतीयते ।

(य) उपलक्ष्ये लक्षणं सङ्गमयितुमाह अन्यत्रेति । उदाहृतेतरस्थल इत्यर्थः । वसनाभरणादि-

---

(१) ततो द्यूते इति तर्कवागीशकल्पितः पाठः ।



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रूपके "मुखचन्द्रं पश्यामि" इत्यादौ आरोप्यमाणचन्द्रादेरुपरञ्जकतामात्रम्, न तु प्रकृते दर्शनादावुपयोगः। इह तु उपायनादेर्विषयेण तादात्म्यम्, प्रकृते च नायकसम्भावनादावुपयोगः। अतएव रूपके आरोप्यस्यावच्छेदकत्वमात्रेणान्वयः, अत्र तु तादात्म्येन (ल)।

"दासे कृतागसि" इत्यादौ रूपकमेव, न तु परिणामः, आरोप्यमाणकण्टकस्य पादभेदनकार्य्यस्याप्रस्तुतत्वात् (व)। न खलु तत् कस्यचिदपि प्रस्तुतकार्य्यस्य घटनार्थमनुसन्धीयते (श)।

---

भावेन वस्त्रालङ्कारादिरूपत्वेन, उपयुज्येते लोकसम्भावन-द्यूतक्रीड़योः साधनोपयोगिनौ भवतः। अत्र तु "स्मितेनोपायनं दूरात्" इत्यादौ तु, नायकसम्भावनद्यूतयोः नायकाभ्यर्थन-पाशक्रीड़योः, स्मिताश्लेषरूपतया उपयुज्येते इति पूर्वेणान्वयः। अत्र उपायनपणौ यथाक्रमं स्मिताश्लेषरूपतया प्रकृतयोर्नायकसम्भावन-द्यूतयोः साधनोपयोगिनौ भूताविति समुदायार्थः। अतएवोक्तलक्षणसङ्गतिरित्याशयः।

(र) ननु परिणामोऽयं कुत्र तुल्याधिकरणः कुत्र वा अतुल्याधिकरण इत्याह प्रथमेति। वैयधिकरण्येनेति। "स्मितेनोपायनम्" इत्युपमेयोपमानयोः परस्परं भिन्नविभक्तिकत्वादिति भावः। द्वितीये अर्द्धे। वैयधिकरण्येनेति। "आश्लेषः पणः" इत्युपमेयोपमानयोः समानविभक्तिकत्वादित्याशयः।

(ल) इदानीं रूपक-परिणामयोर्भेदमाह रूपक इति। आरोप्यमाणस्य मुखेन सह अभेदारोपे उपमानीक्रियमाणस्य चन्द्रादेः, उपरञ्जकतामात्रम् अभेदारोपात् मुखादौ केवलसौन्दर्य्यप्रतिपादकत्वम्। दर्शनादावुपयोगी दर्शनादिसाधनोपयोगित्वम्, मुखादौ चन्द्राद्यभेदारोपं विनापि दर्शनसम्भवादिति भावः। इह तु स्मितेनेत्यादौ परिणामस्थले तु। विषयेण उपमेयेन स्मितेन आश्लेषेण च सहेत्यर्थः, तादात्म्यम् अभिन्नत्वम्, प्रकृते प्रस्तुते, नायकसम्भावनादौ नायकसंवर्द्धन-द्यूतपणयोः, उपयोगः साधनोपयोगित्वम्। अतएव रूपक इत्याद्युक्तयुक्तेरेव, आरोप्यस्य आरोपणीयस्य चन्द्रादेरुपमानपदार्थस्य, अवच्छेदकमात्रेण इतरव्यावर्त्तकत्वमात्रेण, अन्वय उपमेयभूतमुखादावभेदसम्बन्धः, अत्र तु परिणामे तु, तादात्म्येन प्रकृतविषय-साधनोपयोगितया अभेदेन, अन्वय इति सम्बध्यते।

अत्रायमाशयः—"मुखचन्द्रं पश्यामि" इत्यादौ रूपके उपमेयभूतमुखादौ सादृश्यवशादभेदेनारोप्य-माणोऽपि चन्द्रादिरुपमानपदार्थो वस्तुत एवाभिन्नो न प्रतीयते किन्तु कुत्सितमुखादिभ्यव्यावर्त्तकतया सुन्दरादि-विशेषणवदेवावगम्यते; "स्मितेनोपायनम्" इत्यादौ परिणामे तु स्मितोपायनादिरुभयपदार्थ एव अभेदे-नारोपवशात् नायकसंवर्द्धनादिरूपैककार्य्यकारित्वाच्च वस्तुत एवाभिन्न इव प्रतीयत इति।

अलङ्कारशेखरकारस्तु मन्यते—यत्रोपमानप्रतियोगिकाभेदप्रतीतिस्तत्र रूपकम्, यत्र तूपमेयप्रतियोगिका-भेदप्रतीतिस्तत्र परिणाम इति।

(व) अथ तर्हि "दासे कृतागसि" इत्यादौ पुलकाङ्कुरे आरोप्यमाणस्य कण्टकस्य प्रस्तुतपादभेदनकार्य्य-साधकत्वात् परिणामस्यैव सम्भवे कथमस्य रूपके उदाहरणमित्याह दास इति। आरोप्यमाणकण्टकस्य यत् पादभेदनकार्य्यं तस्याप्रस्तुतत्वादित्यर्थः। मानिन्या मानभङ्गाय नायकानुनयनस्यैव तत्र प्रस्तुतत्वादित्याशयः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अयमपि रूपकवदधिकारूढवैशिष्ट्ये दृश्यते (थ)। यथा—

"वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः॥" (द)

अत्र प्रदीपानामोषध्यात्मतया प्रकृते सुरतोपयोगिन्यन्धकारनाशे उपयोगः, अतैलपूरत्वेनाधिकारूढवैशिष्ट्यम् (ध)।

५१। सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः।
शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा॥ (न)

---

(त) ननु प्रस्तुतघटकस्यापि प्रस्तुतत्वमेवेत्याह न खल्विति। तत् पादभेदनकार्य्यम्। अपि-शब्दस्य घटनार्थमिति परेणान्वयः। तथा च घटनार्थमपि सम्पादनार्थमपि जातमिति न खल्वनुसन्धीयते अनुसन्धायापि नैवावगम्यते। तथा हि, अत्रानुनय एव प्रस्तुतः, तद्घटकन्तु पादपतनमेतादृग्वाक्यञ्च; पादभेदनन्तु प्रत्युतदुःखजनकत्वादनुनयप्रतिबन्धकमेवेति पादभेदनस्य प्रस्तुतघटकतयापि न प्रस्तुतत्वमिति भावः।

(थ) अयमिति। परिणामोऽपीत्यर्थः। अस्यापि पूर्ववदेवाधिकारूढवैशिष्ट्यलक्षणमूह्यम्।

(द) वने इति। कुमारसम्भवप्रथमसर्गे हिमालयवर्णनमिदम्। यत्र हिमालये, रजन्यां दरीगृहोत्सङ्गेषु गुहागृहाभ्यन्तरेषु निषक्ताः संलग्ना भासो दीप्तयो यासां तास्तथाविधा ओषधयो लताविशेषाः, वनितासखानां सस्त्रीकाणां वनेचराणां किरातानाम्, अतैलपूरास्तैलपूरणशून्याः सुरतप्रदीपा रमणसाधकदीपा भवन्ति।

(ध) अत्रेति। प्रदीपानाम् ओषधिष्वभेदेनारोप्यमाणानामित्यर्थः, ओषध्यात्मतया ओषधिस्वरूपतया हेतुना। सुरतोपयोगिनि रतावावश्यके। उपयोगस्तत्साधनोपयोगित्वम्। अतएवात्र परिणामोऽलङ्कार इत्याशयः। ननु तथाप्यधिकारूढवैशिष्ट्यं कुत इत्याह अतैलेति। उपमाने प्रदीपे सन्तमपि तैलपूरत्वधर्म्ममवरोप्य तस्य रूपणादिति भावः।

(न) अस्य खलूपमानोपमेयघटितालङ्कारप्रकरणत्वादिदानीमुपमेये उपमानसंशयघटितं सन्देहालङ्कारं लक्षयति सन्देह इति। प्रकृते उपमेये, प्रतिभोत्थितः कविप्रौढोक्तिमात्रनिष्पन्नः, न पुनः पदार्थस्वभावसिद्ध इत्यर्थः, अन्यस्य उपमानस्य संशयः सन्देहो नामालङ्कारो भवेदित्यनुषज्यते। तुल्यरूपेणोभयपक्षज्ञानं संशयः, एकपक्षाधिकोन उभयपक्षज्ञानं सम्भावना। तेन सम्भावनारूपायामुत्प्रेक्षायां नातिव्याप्तिः। "ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः" इति काव्यप्रकाशे "अनन्वयससन्देहौ उपमास्वेव दर्शितौ" इति काव्यादर्शे च ससन्देह इति नामदर्शनेऽपि "उपमानोपमेयसंशयः सन्देहः" इति प्राचीनतमवामनसूत्रे सन्देह इति नामदर्शनात् ससन्देह इति नामापेक्षया लाघवाच्च सन्देह इति नामनिर्द्देशः। असौ च सन्देहस्त्रिधा—शुद्धः, निश्चयगर्भः, निश्चयान्तश्चेति।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यत्र संशय एव पर्य्यवसानं स शुद्धः (क)। यथा—

"किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी ?
वेलाप्रोच्छलितस्य किं लहरिका लावण्यवारां निधेः ?।
उद्गाढ़ोत्कलिकावतां स्वसमयोपन्यासविस्रम्भिणः
किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः ?॥" (ख)

यत्रादावन्ते च संशय एव मध्ये च निश्चयः, स निश्चयमध्यः (ग)। यथा—

"अयं मार्त्तण्डः किम् ? स खलु तुरगैः सप्तभिरितः,
कृशानुः किम् ? सर्वाः प्रसरति दिशो नैष नियतम्।
कृतान्तः किं साक्षात् ? महिषवहनोऽसाविति चिरं (१)
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः॥" (घ)

(क) यत्रेति। संशये सत्येव, पर्य्यवसानं वाक्यसमाप्तिः। शुद्धः केवल इत्यभिन्नोऽर्थः।

(ख) किमिति। काञ्चित् सुन्दरीमवलोक्य कस्यचिदुक्तिरूपः श्लोकोऽयं सन्धुकविकृतः। इयं दृश्यमाना तरुणी, तारुण्यं यौवनमेव तरुस्तस्य, रसभरेण चौरातिशयेन शृङ्गारातिशयेन च उद्गता नवा नूतना वल्लरी मञ्जरी किम् ?। युवतिरियं यौवनोच्चसीमारूढ़ेत्यर्थः। वेलायां तीरे प्रोच्छलितस्य पूरातिरेकादुत्थितस्य, लावण्यवारां निधेर्लावण्यसमुद्रस्य लहरिका तरङ्गः किम् ?। अतीवलावण्यवतीयमिति तात्पर्य्यम्। अथवा उद्गाढ़ा सातिशया उत्कलिका, प्रियतमासङ्गमार्थोत्कण्ठा एषामस्तीति तेषां जनानां सम्बन्धे स्वसमयस्य निजप्रवर्त्तितव्यवहारस्य उपन्यासे प्रचारे विस्रम्भिणः प्रणयिनः अभिलाषिण इत्यर्थः. शृङ्गारिणो देवस्य कामदेवस्य, साक्षात् उपदेशयष्टिः शिक्षादण्डः किम् ?। यथा पाठशालायां शिक्षकमहाशयः शिक्षादण्डप्रदर्शनेन स्वप्रवर्त्तितव्यवहारे शिशुच्छात्रान् प्रवर्त्तयति. तथा कामदेवोऽपि अस्याः प्रदर्शनेन स्वप्रवर्त्तितव्यवहारे कामिजनान् प्रवर्त्तयतीति भावः।

अत्र उपमेयभूतायां सुन्दर्य्याम् उपमानभूतानां तारुण्य-वल्लरी-लहरिकोपदेशयष्टीनां संशयात् तस्मिन् सत्येव च वाक्यसमाप्तेः शुद्धसन्देहोऽलङ्कारः।

(ग) यत्रेति। यस्मिन् पद्ये गद्ये वेत्यर्थः। दक्षिणेन चक्षुषा पश्यतीत्युक्ते वामेन न पश्यतीति प्रतीतिवत् निश्चयगर्भ इत्युक्ते आदावन्ते च संशय इति प्रतीतेः स्वाभाविकत्वादाह आदावित्यादि। गर्भशब्दस्य मध्यार्थकत्वादाह निश्चयमध्य इति।

(घ) अयमिति। कस्यचिद्राज्ञः प्रशंसेयम्। अयं दृश्यमानः पदार्थः किं मार्त्तण्डः सूर्य्यः ? इति संशयः। स खलु मार्त्तण्डः सप्तभिस्तुरगैरश्वैः इतो गतो भवति, अयन्तु एकेनैव तुरगेण गत इति नायं मार्त्तण्ड इति पुनर्निश्चयः। तर्हि किं कृशानुर्वह्निः ? इति संशयः। एष कृशानुः नियतं

(१) पुनरिति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र मध्ये मार्त्तण्डाद्यभावनिश्चयः, राजनिश्चये द्वितीयसंशयोत्थाना-सम्भवात् (ङ)।

यत्रादौ संशयः अन्ते च निश्चयः, स निश्चयान्तः। यथा—

"किं तावत् सरसि सरोजमेतदारात् ?
आहोस्विन्मुखमवभासते तरुण्याः ?।
संशय्य क्षणमिति निश्चिकाय कश्चित्
बिब्बोकैर्वकसहवासिनां परोक्षैः॥" (च)

अप्रतिभोत्थापिते तु "स्थाणुर्वा पुरुषो वा" इत्यादिसंशये नाय-मलङ्कारः (छ)।

---

निश्चितमेव सर्वा दिशो न प्रसरति न गच्छति; अयन्तु सर्वा एव दिशः प्रसरतीति न कृशानुरपीति पुनर्निश्चयः। तर्हि किं साक्षात् कृतान्तो यमः? इति संशयः। असौ कृतान्तः, महिषो वहनं वाहनं यस्य स तादृशः, अयन्तु अश्ववाहन इति न कृतान्तोऽपि; तर्हि कः पुनरयमिति भावः। हे राजन्! आजौ युद्धे त्वां समालोक्य प्रतिभटा विपक्षयोद्धारः, चिरं यावत् इति इत्थं विकल्पान् विविधसंशयान् विदधति कुर्वन्ति।

अत्र उपमेयभूते राजनि उपमानभूतानां मार्त्तण्ड-कृशानु-कृतान्तानां संशयात् आदावन्ते च तस्याव-स्थानात् मध्ये चोक्तविधनिश्चयात् निश्चयगर्भः सन्देहोऽलङ्कारः।

(ङ) अत्रेति। मार्त्तण्डादीनामभावस्य अन्योन्याभावस्य भेदस्येति यावत् निश्चयः अनुमानेनाव-धारणम्। अथ राजनिश्चयः किं न स्यादित्याह राजेति। राज्ञः त्वामिति युष्मत्पदोपस्थाप्यस्य नृपतेः, निश्चये अनुमानेनावधारणे द्वितीयसंशयोत्थानासम्भवात् "कृशानुः किम्" इति द्वितीयसंशयोत्पत्त्यसम्भवात् सामग्र्यभावादिति भावः। एतदुपलक्षणम्। द्वितीयेऽपि राजनिश्चये तृतीयसंशयोत्थानासम्भवात्, तृतीये च राजनिश्चये विकल्पानिति प्रयोगानुपपत्तेरित्यपि बोध्यम्। एतेनान्तेऽपि च संशयस्थितिरक्षतैवेति लक्षण-सङ्गतिर्द्रष्टव्या।

(च) किमिति। शिशुपालवधाष्टमसर्गस्थमिदं पद्यम्। सरसि सरोवरे आरात् दूरे "आराद्दूर-समीपयोः" इत्यमरः, एतत् दृश्यमानम्, तावत् किं सरोजं पद्मम्?। आहोस्वित् अथवा तरुण्याः कस्याश्चिद् युवत्याः, मुखम् अवभासते राजते? इति क्षणं संशय्य संशयं कृत्वा कश्चित् कृष्णसहचरः, वकसहवासिनां वकपक्षिभिः सहावस्थायिनां वकसहवासित्वेन सर्वथैव विलासानभिज्ञानामित्यर्थः पद्मानाम्, परोक्षैरतीन्द्रियै-रविदितैरिति यावत् बिब्बोकैः "बिब्बोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः" इति प्रागुक्तलक्षणबिब्बोक-व्यञ्जकैस्तद्गतैर्भावविशेषैरित्यर्थः, निश्चिकाय "तरुण्या मुखमेवेदम्" इति निश्चितवान्।

अत्र उपमेये तरुण्या मुखे आदावुपमानस्य पद्मस्य संशयादन्ते च तन्मुखत्वेन निश्चयान्निश्चयान्तः सन्देहोऽलङ्कारः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"मध्यं तव सरोजाक्षि ! पयोधरभरार्दितम् ।
अस्ति नास्तीति सन्देहः कस्य चित्ते न भासते ? ॥ (ज)

अत्रातिशयोक्तिरेव, उपमेये उपमानसंशयस्यैवैतदलङ्कारविषयत्वात् (झ) ।

५२ । साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थिता । (ञ)

यथा—"मुग्धा दुग्धधिया गवां विदधते कुम्भानधो वल्लवाः
कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि ।

---

(छ) अथ प्रतिभोत्थित इति विशेषणं किमर्थमित्याह अप्रतीति । अप्रतिभया कविप्रौढ़ोक्तिभिन्नेन केवलवस्तुस्वभावेनेत्यर्थः उत्थापिते उत्पादिते । नन्वत्र यथा संशयो न प्रतिभोत्थितः तथा उपमानोपमेयभावोऽपि नास्तीति ह्यङ्गविकलत्वात् कथमिदमुदाहरणं सङ्गच्छत इति चेन्न, स्थाणुपुरुषयोः समानाकृतिमत्तया उपमानोपमेयभावस्य सत्त्वात् तेनैव च संशयस्योत्थापनात् अन्यथा च संशयाभावात् । अथ तथापि "स्थाणुर्वा पुरुषो वा" एवम्भूतविषये वैचित्र्याभावादलङ्कारसामान्यलक्षणस्यैवासङ्गतेः कथं सन्देहालङ्कार इति चेत्, "तैर्धनूंषि विनम्यन्ते शिरांसि वेति संशयः" इत्यादौ अप्रतिभोत्थापिते स्वाभाविकसंशये नमनक्रियामादायचोपमानोपमेयभावविवक्षायामतिव्याप्तिवारणाय प्रतिभोत्थापित इति विशेषणम् । अथवा तद्वैचित्र्यसत्तासूचनार्थमेवैतद्विशेषणम् ।

(ज) ननु तथापि "प्रकृतेऽन्यस्य" इति कथमभिहितमित्याह मध्यमिति । हे सरोजाक्षि ! पयोधरभरेण स्तनभारेण अर्दितं पीड़ितं तव मध्यमुदरभागः, अस्ति वर्त्तते, नास्ति न वर्त्तते वा इति सन्देहः, कस्य जनस्य चित्ते न भासते प्रकाशते ? अपि तु सर्वस्यैव चित्ते भासत इत्यर्थः ; निरतिशयक्षीणत्वादिति भावः ।

(झ) अत्रेति । चित्ते तादृशसन्देहभासनासम्बन्धेऽपि तत्सम्बन्धोक्तेरसम्बन्धे सम्बन्धरूपा अतिशयोक्तिरेवेत्यर्थः । न पुनर्निरुक्तसन्देहालङ्कार इत्येवशब्दार्थः । तत्र हेतुमाह उपमेय इति । एतदलङ्कारः सन्देहालङ्कारः । तथा च प्रकृतपदेन उपमेयस्य अन्यपदेन चोपमानस्य ग्रहणमित्याशयः ।

(ञ) ननु निरुक्तसन्देहवदलङ्कारान्तरमप्रमास्वरूपमस्ति न वेत्यपेक्षायां भ्रमस्वरूपं भ्रान्तिमन्तं नामालङ्कारं निरूपयति साम्यादिति । साम्यात् सादृश्यवशात् अतस्मिन् तद्भिन्नवस्तुनि, प्रतिभोत्थिता कविप्रौढ़ोक्तिमात्रनिष्पन्ना, तद्बुद्धिस्तद्वस्तुत्वप्रकारकं ज्ञानम्, भ्रान्तिमान् नाम अलङ्कारो भवेत् । नन्वेवं लक्षणे सति सन्देह इति सञ्ज्ञावत् भ्रमो भ्रान्तिर्वे[ति] सञ्ज्ञासम्भवे कथं भ्रान्तिमानिति संज्ञा कल्प्यत इति चेन्न, ईदृशसंज्ञाया एवास्य प्राचीनपरम्पराप्राप्तत्वात् । अतएव तादात्म्येन भ्रान्तिरस्यास्तीति भ्रान्तिमानिति व्युत्पत्तिः । तथा चोक्तम्—

"प्रमातुरधीर्भ्रान्तिरूपा यस्मिन्ननूद्यते । स भ्रान्तिमानिति ख्यातोऽलङ्कारे त्वौपचारिकः ॥"

एकस्मिन्नन्यस्य आरोपस्थले रूपकम्, एकस्मिन्नन्यस्य अध्यवसायस्थले अतिशयोक्तिः, एकस्मिन्नन्यस्य भ्रमस्थले तु भ्रान्तिमानिति भेदः । आरोपाध्यवसायभ्रमाणां भेदस्तु प्राप्त एवेति सरलः संक्षेपः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षया
सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका ॥" (ट)

अस्वरसोत्थापिता (१) भ्रान्तिर्नायमलङ्कारः । यथा—"शुक्तिकायां रजतम्" इति (ठ)। न चासादृश्यमूला (ड)। यथा—

"सङ्गमविरहविकल्पे वरमिह विरहो न सङ्गमस्तस्याः ।
सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे ॥" (ढ)

**५३ । क्वचिद्भेदाद्ग्रहीतॄणां विषयाणां तथा क्वचित् ।**
**एकस्यानेकधोल्लेखो यः स उल्लेख इष्यते ॥ (ण)**

---

(ट) मुग्धा इति। मुग्धाः सरलबुद्धयः, वल्लवा गोपाः, दुग्धधिया तत्र पतितायां चन्द्रिकायां दुग्धभ्रमेण गवामधः धेनूनां स्तनतले कुम्भान् दोहनकलसान् विदधते विन्यस्यन्ति। कान्ताः स्त्रियोऽपि, कैरवशङ्कया चन्द्रिकापातात् श्वेतोत्पलभ्रमेण कर्णे कुवलयं नीलोत्पलं कुर्वन्ति अर्पयन्ति। तथा शबरी किरातस्त्री, मुक्ताफलाकाङ्क्षया मुक्तालाभाशया, कर्कन्धूफलं वदरीफलम्, उच्चिनोति संगृह्णाति। अतएव सान्द्रा निविड़ा, चन्द्रमसश्चन्द्रिका चन्द्रस्य ज्योत्स्ना, कस्य जनस्य चित्तभ्रमं न कुरुते? अपि तु सर्वस्यैव कुरुत इत्यर्थः।

अत्र चन्द्रिकायां दुग्धस्य, कुवलये कैरवस्य, वदरीफले च मुक्ताफलस्य ज्ञानात् भ्रान्तिमानलङ्कारः।

(ठ) प्रतिभोत्थिता इत्यस्य व्यावृत्तिमाह अस्वरसेति। अस्वरसेन अस्वेच्छया कवेरनिच्छयेति यावत् उत्थापिता वस्तुस्वभावेनैवोत्पादितेत्यर्थः। अयं भ्रान्तिमान्। इति वाक्ये। अत्रापि शुक्तिकारजतयोः समानोज्ज्वलतया साम्यसत्त्वान्न सादृश्यविकलत्वमिति, तथा पूर्ववदेव वैचित्र्यविशेषसत्तावश्यकताद्योतनार्थमेव प्रतिभोत्थितेति विशेषणमिति चावधेयम्।

(ड) ननु तथापि साम्यादिति किमर्थमभिहितमित्याह न चेति। असादृश्यमूला भ्रान्तिश्च नायमलङ्कार इति पूर्वानुषङ्गेणात्र सम्पूर्णवाक्यनिष्पत्तिरून्नेया।

(ढ) सङ्गमेति। सख्युरन्तिके कस्यचिद्विरहिणः सानुतापोक्तिरियम्। तस्याः प्रियतमायाः सङ्गमविरहयोः संयोगवियोगयोः, विकल्पे अन्यतरस्य वरत्वविवेचने कर्त्तव्ये सति, विरह एव वरम्, न पुनः सङ्गमः, इत्येव विवेचनीयमिति भावः। कुतो विरहस्य वरत्वमित्याह सङ्गे इति। सङ्गे सङ्गमे, सा प्रियतमा, तथा प्रत्यक्षगोचरीभूता एकैव; किन्तु विरहे त्रिभुवनमपि तन्मयं प्रियतमामयं भवति। अतो विरहस्यैव वरत्वमिति भावः।

अत्र विरहदशायामुत्कटभावनावशात् त्रिभुवनस्थेषु सर्वेष्वेव वस्तुषु कविप्रौढोक्तिमात्रनिष्पन्ने प्रियतमाभ्रमे सत्यपि तस्य सादृश्यमूलकत्वाभावान्न भ्रान्तिमानलङ्कार इत्याशयः।

---

(१) स्वरसोत्थापिता इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्रमेणोदाहरणम्—

"प्रिय इति गोपवधूभिः शिशुरिति वृद्धैरधीश इति देवैः ।
नारायण इति भक्तैर्ब्रह्मेत्यग्राहि योगिभिर्देवः ॥" (त)

अत्रैकस्यापि भगवतस्तत्तद्गुणयोगादनेकधोल्लेखे गोपवधूप्रभृतीनां रुच्यादयो यथायोगं प्रयोजकाः (थ)। यदाहुः—

"यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते ।
आभासोऽप्यर्थ एकस्मिन्ननुसन्धानसाधितः ॥" (द)

अत्र भगवतः प्रियत्वादीनां वास्तवत्वाद्ग्रहीतृभेदाच्च न मालारूपकम्, न च भ्रान्तिमान् (ध)। न चायमभेदे भेद इत्येवं रूपातिशयोक्तिः। तत्र

---

(ण) भ्रान्तिमदलङ्कारनिरूपणानन्तरं प्रायेण तच्छायाग्राहितया उल्लेखालङ्कारं निरूपयति क्वचिदिति। क्वचित् स्थले ग्रहीतॄणां ज्ञातॄणां भेदात् पार्थक्यात्, क्वचिद्वा विषयाणां व्यावर्त्तकधर्म्मादीनाम्, ज्ञातव्यपदार्थानां तथा भेदात् पार्थक्यादित्यर्थः एकस्य पदार्थस्य यः अनेकधा अनेकप्रकारेण उल्लेख उपादानं स उल्लेखो नामालङ्कार इष्यते। अत्र व्युत्पत्तिः स्पष्टा।

(त) तत्र ग्रहीतृभेदेनोदाहरणं दर्शयति प्रिय इति। गोपवधूभिर्गोपीभिः प्रियो वल्लभ इति, वृद्धैः प्राचीनैर्नन्दादिभिः शिशुर्बालक इति, देवैरिन्द्रादिभिः अधीशोऽधिपतिरिति, भक्तैरनुरक्तैर्नारदादिभिर्नारायण इति, तथा योगिभिः कपिलादिभिर्ब्रह्मपरमात्मेति कृत्वा देवः अग्राहि अज्ञायि।

अत्र गोपवधूप्रभृतिग्रहीतृभेदादेकस्य कृष्णस्य प्रियत्वादिना अनेकेन प्रकारेण उल्लेखादुल्लेखोऽलङ्कारः।

(थ) नन्वेकस्यैव कृष्णस्य इत्थमनेकधा प्रतीतौ किं नाम प्रयोजकमित्याह अत्रेति। भगवतः कृष्णस्य, तत्तद्गुणयोगात् प्रियत्वशिशुत्वादिधर्म्माणां सत्त्वात्। रुचिर्मनोवृत्तिः आदिशब्देन यथार्थित्वं यथाव्युत्पत्ति च गृह्यते। यथायोगं यथासम्भवम्। तथा च कृष्णे गोपवधूनां वल्लभत्वसत्त्वात् तत्प्रकारकरुचिप्रयुक्तं तासां प्रिय इति ज्ञानम्। एवमन्यत्राप्यूहनीयम्।

(द) तथेति। रुचिं मनोवृत्तिमनतिक्रम्येति यथारुचि, अर्थित्वं प्रयोजनमनतिक्रम्येति यथार्थित्वम्, व्युत्पत्तिमवधारणमनतिक्रम्येति यथाव्युत्पत्ति। तथा च एकस्मिन्नपि अर्थे वस्तुनि, यथारुचि रुच्यनुसारेण, यथार्थित्वं प्रयोजनानुसारेण, यथाव्युत्पत्ति अवधारणानुसारेण च अनुसन्धानेन भावनया साधित उत्पादितः, आभासो ज्ञानं भिद्यते भिन्नभिन्नो भवति। तथा च यथा एकस्मिन्नेव पुरुषे तत्पत्न्या रुच्यनुसारेण भावनया प्रिय इति ज्ञानम्, स्वामिनः प्रयोजनानुसारेण भावनया दास इति ज्ञानम्, प्रतिवेशिनस्तु अवधारणानुसारेण भावनया चौर इति ज्ञानम्; तथा एकस्मिन्नेव कृष्णे गोपवधूनां नन्दादीनाञ्च रुच्यनुसारेण भावनया प्रिय इति शिशुरिति च ज्ञानम्, देवानां भक्तानाञ्च प्रयोजनानुसारेण भावनया अधीश इति नारायण इति च ज्ञानम्, योगिनान्तु अवधारणानुसारेण भावनया ब्रह्मेति ज्ञानमित्याशयः।

(ध) ननु मुखपद्ममित्यत्र मुखे पद्मत्वारोपवत् प्रिय इत्यादौ निर्विकारादिरूपे कृष्णे प्रियत्वा-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हि "अन्यदेवाङ्गलावण्यम्" इत्यादौ लावण्यादेर्विषयस्य पृथक्त्वेनाध्यवसानम्; न चेह भगवति गोपवधूप्रभृतिभिः प्रियत्वाद्यध्यवसीयते, प्रियत्वादेर्भगवति तत्काले तात्त्विकत्वात् (न)।

केचिदाहुः—"अयमलङ्कारो नियमेन (१) अलङ्कारान्तरविच्छित्तिमूलः; उक्तोदाहरणे च शिशुत्वादीनां नियमाभिप्रायात् प्रियत्वादेर्भिन्नत्वाध्यवसाय इत्यतिशयोक्तिरस्ति; तत्सद्भावेऽपि च ग्रहीतृभेदेन (२) नानात्वप्रतीतिरूपो विच्छित्तिविशेष उल्लेखाख्यभिन्नालङ्कारप्रयोजकः (प)।

ध्वनेकारोपान्मालारूपकम्, अथवा सर्वथा क्रियागुणविहीने ब्रह्मरूपे कृष्णे प्रीणातीति व्युत्पत्त्या गोपवधूनां प्रीतिजनकत्वस्य, जगद्वन्द्ये नन्दादीनां शिशुत्वस्य, नन्दाद्यधीने देवानामधीशत्वस्य, वसुदेवनन्दने भक्तानां नारायणत्वस्य, मानवाकारे योगिनां ब्रह्मत्वस्य च भ्रमाद्भ्रान्तिमानलङ्कार एवास्ताम्, किमसर्ववादिसिद्धमुल्लेखाख्यमलङ्कारान्तरमङ्गीक्रियत इत्याह अत्रेति। वास्तवत्वादयथार्थत्वात्, ग्रहीतृभेदात् ज्ञातॄणां भिन्नत्वात्। एतयोभयमुभयं प्रत्येव हेतुरिति बोध्यम्। तथा च भूमेर्भारावतारणाय जन्मविकारावलम्बिनि कृष्णे गोपवधूप्रभृत्यपेक्षया प्रियत्वादीनां सर्वेषामेव धर्माणां सर्वथा वास्तविकत्वेन आरोपाभावात् सादृश्यमूलकभ्रमाभावाच्च ग्रहीतृभेदाच्च न मालारूपकं न वा भ्रान्तिमान् सम्भवति। नहि केनापि वस्तुत एव पद्मे पद्मत्वारोपः पद्मत्वभ्रमो वा क्रियते। न वा "मुखपद्मम्" इत्यादौ मुखे पद्मत्वारोपज्ञाने "शुक्तिकायां रजतम्" इत्यादौ च शुक्तिकायां रजतत्वप्रकारकभ्रमज्ञाने वा ज्ञातृभेदः सम्भवतीति भावः।

(न) अथ तर्हि अभिन्ने कृष्णे प्रियत्व-शिशुत्वादिरूपभेदाध्यवसायादतिशयोक्तिरेवास्तामित्याह न चेति। एवंरूपातिशयोक्तिरिति वाच्यं न चेत्यर्थः। हि यस्मात्। तत्र अभेदे भेदाध्यवसायरूपायामतिशयोक्तौ पृथक्त्वेनाध्यवसानं सामान्यलावण्यादिभ्यो भिन्नत्वेनाध्यवसायः। तत्काले कृष्णगोपवधूप्रभृतीनां सत्तासमये, तात्त्विकत्वात् यथार्थत्वात्। तत्र नियतसत्ताकस्य वस्तुन आरोपवदध्यवसायस्याप्यसम्भवादित्याशयः।

(प) केचिदिति। अयमुल्लेखो नाम, नियमेन आवश्यकभावेन, अलङ्कारान्तरविच्छित्तिरन्यालङ्कारकृतं वैचित्र्यमेव मूलं कारणं यस्य सः, अन्येन येन केनचिदलङ्कारेण जनिताद्वैचित्र्यविशेषादेवायमलङ्कारो जायते, न पुनः स्वत इति भावः। नियमाभिप्रायात् कृष्णो गोपवधूनामन्तिके प्रिय एव, नन्दादिवृद्धानामन्तिके च शिशुरेव इत्यादिनियमाभिप्रायेणाभिधानात्, प्रियत्वादेः सकाशात् शिशुत्वादीनां भिन्नत्वस्य भेदस्य अध्यवसाय इति हेतोः, अभेदे भेदाध्यवसायमूला अतिशयोक्तिरस्तीत्यर्थः। अथ तर्हि तयैव व्यपदेशोऽस्तामित्याह तत्सद्भावेऽपि चेति। तादृशातिशयोक्तिसत्त्वे चेत्यर्थः। ग्रहीतृभेदेन ज्ञातृपार्थक्येन। विच्छित्तिविशेषः अन्यविधं वैचित्र्यम्। अत्र "न चेह भगवति" इत्याद्युक्तायुक्तिरेव अस्वरसबीजमित्यनुसन्धेयम्।

(१) अवश्यम्भावेन इत्यधिकः पाठः क्वचित्। (२) प्रत्येतृभेदेन इत्यपि पाठः।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रीकण्ठजनपदवर्णने—"वज्रपञ्जरमिति शरणागतैः, अम्बरविवरमिति वातिकैः" इत्यादिश्वातिशयोक्तेर्विविक्तो विषयः। इह च रूपकालङ्कारयोगः।" (फ)।

वस्तुतस्तु "अम्बरविवरम्" इत्यादौ भ्रान्तिमन्तमेवेच्छन्ति (१) न रूपकम्, भेदप्रतीतिपुरःसरस्यैवारोपस्य गौणीमूलरूपकादिप्रयोजकत्वात् (ब)। यदाहुः शारीरकमीमांसाभाष्यव्याख्याने श्रीमद्वाचस्पतिमिश्राः—"अपि च परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्त्तत इति। यत्र प्रयोक्तृ-सम्प्रतिपत्तोः

(फ) श्रीकण्ठेति। बाणभट्टकृतहर्षचरिते श्रीकण्ठो नाम यो जनपदो देशस्तस्य वर्णने। शरणागतैः शत्रुभयेनागत्य रक्षकत्वेनाश्रितैः वज्रपञ्जरमिति महावीररक्षिततया शत्रूणां प्रवेशासम्भवादिति भावः। वातिकैः सङ्कीर्णस्थानस्थिततया वातव्याधिविशिष्टैर्जनैः, अम्बरविवरम् आकाशात्मकमहाशून्यस्थानस्वरूपम्, इच्छानुसारेण यत्र तत्रापि विचरणसम्भवादिति भावः। अनन्यतेत्थं परक्रियया अन्वयः। "वातिको वातजो व्याधिः" इति राजनिर्घण्टः। वातिक एषामस्तीति अर्श आदित्वादतिवातिकैरिति रूपम्। विविक्तो भिन्नः, कस्यचिदप्यध्यवसायाभावादिति भावः। ननु तर्हि "नियमेनालङ्कारान्तरविच्छित्तिमूलः" इति पूर्वोक्त-व्यभिचार इत्याह इह चेति। वज्रपञ्जरमित्यादावुभयत्र चेत्यर्थः, रूपकालङ्कारयोगः देशे वज्रपञ्जरत्वाम्बर-विवरत्वयोरारोपादित्याशयः। तथा च वज्रपञ्जरमित्यादौ रूपककृतविच्छित्तिमूल एवोल्लेखालङ्कार इति तेषां मतम्।

(ब) उदाहृते रूपकयोगमसहमान आह वस्तुतस्त्विति। आदिपदेन वज्रपञ्जरमित्यस्य ग्रहणम्। एतेन तदभिधायिना तदानीन्तनहर्षचरितपुस्तके "अम्बरविवरमिति वातिकैः, वज्रपञ्जरमिति शरणागतैः" इत्यमेवोक्तविपरीतः पाठक्रमो दृष्ट इति प्रतीयते। भ्रान्तिमन्तं भ्रान्तिमदलङ्कारम्, इच्छन्ति अलङ्कारतत्त्वज्ञा इति शेषः। गौणी सादृश्यसम्बन्धघटिता सारोपा लक्षणैव मूलं यस्य तादृशस्य रूपकादेः। आदिशब्देन परिणामग्रहणम्। प्रयोजकत्वात् तादात्म्येन घटकत्वात्। तथा च "मुखपद्मम्" इत्यादौ प्रथममुभयोरेव मुखपद्मयोः शब्दोपात्ततया परस्परं भेदप्रतीतिः, परञ्च मुखमेव पद्ममित्यारोपस्तादात्म्येन रूपकं घटयति; तस्य मूलन्तु मुखरूपविषयस्य अनिगीर्णतया सादृश्यसत्तया सारोपाख्या गौणी लक्षणैव। अत्र तु देशरूप-विषयस्य सन्निधाने शब्दानुपात्ततस्तु न परस्परं भेदप्रतीतिः, तथैव च तस्य निगीर्णरूपतया न मूलीभूता सारोपाख्या-गौणी लक्षणापीति कथमपि न रूपकं सम्भवति; किन्तु "मुग्धा दुग्धधिया" इत्यादिवत् देशे अम्बरविवरादिभ्रमाद्भ्रान्तिमानेवेति भावः।

(भ) रूपकालङ्कारमूलीभूतसारोपाख्यगौणीरूपलक्षणाया एव भेदप्रतीतिपुरःसरत्वं प्रमाणयितुमात्मनश्च बहुदर्शितां प्रकटयितुं भामतीकारोक्तिं प्रमाणयति यदाहुरिति। आहुः—आरम्भात् कियदनन्तरमेव

(१) इच्छति इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सम्प्रतिपत्तिः स गौणः, स च भेदप्रत्ययपुरःसरः" इति (भ)। इह तु वातिकानां श्रीकण्ठजनपदवर्णने भ्रान्तिकृत एव अम्बरविवरत्वाद्यारोपः (१) इति (म)। अत्रैव च "तपोवनमिति मुनिभिः, कामायतनमिति वेश्याभिः" (२) इत्यादौ च परिणामालङ्कारयोगः (य)।

"गाम्भीर्य्येण समुद्रोऽसि गौरवेणासि पर्वतः।" (र)

इत्यादौ चानेकधोल्लेखे गाम्भीर्य्यादिविषयभेदः प्रयोजकः। अत्र च रूपकयोगः (ल)।

"गुरुर्वचसि, पृथुरुरसि, अर्जुनो यशसि" इत्यादि च (३) अस्य

---

पध्यासभाष्यव्याख्याने भामत्याम्। परशब्दः अन्यवाचकः शब्दः, परत्र अन्यस्मिन्नर्थे, लक्ष्यमाण उभयोः सामान्यधर्मतया ज्ञायमानो यो गुणो धर्मस्तस्य योगेन सम्बन्धेन, वर्त्तते उपस्थापकतासम्बन्धेनेति शेषः। यत्र यस्मिन् शब्दव्यापारे सति, प्रयोक्तृसम्प्रतिपत्त्रोर्वक्तृश्रोत्रोः, सम्प्रतिपत्तिः सामान्यधर्मस्य समानमेव सम्यग्ज्ञानं जायते, स गौणी नाम शब्दव्यापार इत्यर्थः। तथा च "गौर्वाहीकः" इत्यादौ प्रथमतो गोवाहीकयोः परस्परं भेदप्रतीतिः, परञ्च गोशब्दो जाड्यमान्द्यादिसामान्यधर्मयोगेन वाहीकार्थे वर्त्तते; तत्र च वक्तृश्रोत्रोस्तादृश-सामान्यधर्मज्ञानं समानमेव जायत इति। दायभागटीकायां श्रीकृष्णतर्कालङ्कारोऽप्याह स्म—"शक्यस्य सादृश्यात्मकः सम्बन्धो गुणस्तदधीना या लक्षणा सा गौणी तद्योगाद्गौणः।"

(म) इदानीं विवादास्पदे अम्बरविवरमित्यादौ भ्रान्तिमन्तमेवालङ्कारं समर्थयितुमाह इह त्विति। भ्रान्तिकृत एव यथेच्छसञ्चारसाम्याद्भ्रमजनित एव।

(य) क्वचिदुदाहृतवैषम्यं दर्शयितुमाह अत्रैव चेति। हर्षचरितस्थश्रीकण्ठजनपदवर्णन एव चेत्यर्थः। परिणामालङ्कारयोग इति। आरोप्यमाणयोस्तपोवनत्वकामायतनत्वयोः प्रकृततपस्याकामोपभोग-साधनोपयोगित्वादित्याशयः।

(र) विषयभेदादुल्लेखालङ्कारं दर्शयति गाम्भीर्य्येणेति। तर्कवागीशधृतमस्योत्तरार्द्धं यथा—

"कामदत्वाच्च लोकानामसि त्वं कल्पपादपः॥" इति।

(ल) इत्यादाविति। अनेकधा उल्लेखे एकस्यैव राज्ञः समुद्राद्यनेकप्रकारेणोपादाने गाम्भीर्य्यादि-विषयाणां समुद्रत्वाद्यारोपप्रयोजकधर्म्माणां भेदः, प्रयोजक उल्लेखालङ्कारस्येति शेषः। रूपकयोग इति। राजनि समुद्रत्वाद्यारोपस्य भेदप्रतीतिपुरःसरत्वात् सारोपाख्यगौणीरूपलक्षणामूलत्वाच्चेति भावः। अत्र असीत्यनेनोपस्थापितस्य राज्ञः अनिगीर्णरूपतया लक्षणायाः सारोपात्वं गाम्भीर्य्यादिसादृश्यसम्बन्धाच्च गौणी-रूपत्वमित्यवधेयम्।

---

(१) अम्बरविवराद्यारोप इति पाठान्तरम्। (२) सङ्गीतशालेति लासकैः इत्यधिकः पाठः क्वचित्। (३) इत्यादिषु च इत्यपि पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रूपकादिविविक्तो विषय इति (व)। अत्र हि श्लेषमूलातिशयोक्ति-योगः (श)।

५४। प्रकृतं प्रतिषिध्यान्य-स्थापनं स्यादपह्नुतिः। (ष)

इयं द्विधा, क्वचिदपह्नवपूर्वक आरोपः, क्वचिदारोपपूर्वकोऽपह्नव इति (स)। क्रमेणोदाहरणम्—

"नेदं नभोमण्डलमम्बुराशिर्नैताश्च तारा नवफेनभङ्गाः।
नायं शशी कुण्डलितः फणीन्द्रो नासौ कलङ्कः शयितो मुरारिः॥" (ह)

---

(व) प्रकारान्तरेण विषयभेद एवोदाहरणान्तरमाह गुरुरिति। वचसि वाक्ये गुरुर्महानेव गुरुर्बृहस्पतिः, उरसि वक्षसि पृथुर्विशाल एव पृथुस्तदाख्यो राजा, यशसि अर्जुनो धवल एवार्जुनस्तृतीयपाण्डवः कार्त्तवीर्यो वा। इत्यादि वाक्यस्येत्यर्थः, अस्य उल्लेखालङ्कारस्य, रूपकात् रूपकालङ्कारविषयात्, विविक्तो विभिन्नः, विषयः स्थलम्। गुरुप्रभृतीनां विषयाणां निगीर्णरूपतया रूपकमूलीभूतस्यारोपाख्यलक्षणाया एवासम्भवादिति भावः।

(श) तर्हि किमत्र न कश्चिदपरालङ्कार इत्याह अत्रेति। हि तथाहि, अत्र गुरुरित्यादौ। श्लेषेति। महद्बृहस्पत्यादीनां भेदेऽपि श्लेषेणाभेदाध्यवसायादित्याशयः। एतेन विषयभेदेनोल्लेखालङ्कारस्थले नियमेनालङ्कारान्तरयोग इत्यात्मनोऽपि मतमिति सूचितम्।

(ष) उपमानोपमेयघटितालङ्कारनिरूपणस्य प्रक्रान्तत्वात् प्रकारान्तरेण तद्घटितमेवापह्नुत्यलङ्कारं निरूपयति प्रकृतमिति। प्रकृतं वर्णनायां प्रस्तुतम् उपमेयमित्यर्थः, प्रतिषिध्य शब्दतस्तात्पर्यतो वा अपोह्य, अन्यस्य प्रकृतभिन्नस्य उपमानस्येत्यर्थः, स्थापनं विन्यासः, अपह्नुतिर्नाम अलङ्कारः स्यात्। वास्तविकस्योपमेयस्यापह्नवादस्य अपह्नुतिरिति संज्ञा।

(स) कारिकायां प्रतिषिध्येति क्त्वाप्रत्ययार्थस्य आनन्तर्यस्य लौकिकत्वादविवक्षितत्वमभिप्रेत्याह इयं द्विधेति। अपह्नवपूर्वक आरोप उपमेयप्रतिषेधकपूर्वकमुपमानस्थापनम्। आरोपपूर्वकोऽपह्नव उपमान-स्थापनपूर्वक उपमेयप्रतिषेधः। तथा मालारूपत्वात् केवलरूपत्वाच्च पुनर्द्विधेति समुदायेन चतुर्विधा अपह्नुतिर्लक्ष्यानुसारात्।

(ह) तत्रापह्नवपूर्वकारोपे मालारूपामुदाहरति नेदमिति। इदं दृश्यमानं नभोमण्डलमाकाश-मण्डलं न, किन्तु अम्बुराशिः समुद्र एव समानादेव विशालत्वान्निर्मलत्वाच्चेति भावः। एता दृश्यमानाश्च तारा नक्षत्राणि न, अपि तु नवफेनभङ्गा नूतनाः समुद्रफेनखण्डाः, तुल्यादेव शुभ्रत्वक्षुद्रत्वादित्याशयः। अयमव-लोक्यमानः पदार्थः शशी चन्द्रो न, किन्तु कुण्डलितः सञ्जातकुण्डलीभावो मण्डलीकृतदेह इत्यर्थः, फणीन्द्रो मुरारेरेव शय्याभूतः अनन्तनागः, समानादेव शुक्लत्वाद्गोलाकारत्वाच्चेत्यभिप्रायः। असौ तन्मध्ये दृश्यमानः कृष्णवर्णः पदार्थः, कलङ्कश्चन्द्रगतं हरिणचिह्नं न, अपि तु शयितः शयानो मुरारिः कृष्णः, समानकृष्णवर्णत्वात् सम्भवपरत्वाच्चेति भावः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"एतद्विभाति चरमाचलचूड़चुम्बि
हिण्डीर-पिण्ड-रुचि-शीतमरीचि-विम्बम् ।
प्रज्वालितस्य (१) रजनीं मदनानलस्य
धूमं दधत् प्रकटलाञ्छनकैतवेन ॥" (च)

इदं पद्यं मम (२)। एवम्—(क)

"विराजति व्योमवपुः पयोधिस्तारामयास्तत्र च फेनभङ्गाः (३) ।" (ख)

इत्याद्याकारेण च प्रकृतनिषेधः बोध्यः (४) (ग) ।

---

अत्र नभोमण्डलाद्युपमेयप्रतिषेधेन अम्बुराश्याद्युपमानस्थापनात् तस्य चानेकत्वान्मालारूपापह्नुतिरलङ्कारः । तथा नञ्चतुष्टयोपादानात् शब्दत एव प्रकृतप्रतिषेध इति द्रष्टव्यम् ।

अपह्नवपूर्वकारोपे केवलरूपा यथा काव्यप्रकाशे—

"अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये ! कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि ।

अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥"

(च) आरोपपूर्वकापह्नवे केवलरूपामुदाहरति एतदिति । चरमाचलचूडचुम्बि अस्ताचलशिखरावलम्बि, हिण्डीरपिण्डस्य फेनस्तूपस्य रुचिरिव रुचिर्दीप्तिर्यस्य तत्तादृशम्, एतद्दृश्यमानम्, शीतमरीचिविम्बं चन्द्रमण्डलम्, प्रकटलाञ्छनकैतवेन सुस्पष्टहरिणचिह्नच्छलेन रजनीं रात्रिं व्याप्य विधिना प्रज्वालितस्य मदनानलस्य धूमं दधत् धारयत् सत्, विभाति प्रकाशते । "डिण्डीरोऽब्धिकफः फेनः" इत्यमरः ।

अत्र प्रथमं धूमरूपमुपमानमारोप्य पश्चात् कलङ्करूपोपमेयापह्नवादपह्नुतिः ; सा चारोपस्यैकमात्रत्वात् केवलरूपा । तथा कैतवेनेत्यभिधानात् नञशब्दानुपादानात् तात्पर्यत एव प्रकृतप्रतिषेध इत्युन्नेयम् ।

आरोपपूर्वकापह्नवे तात्पर्यतः प्रकृतप्रतिषेधे मालारूपा यथा मम—

"सरोजमेतन्मुखकैतवाश्रितं मधुव्रतौ लोचनरूपधारिणौ ।
तिलप्रसूनं किल नासिकात्मना स्थितं मृणालद्वयं भुजच्छलादिदम् ॥"

(क) प्रकारान्तरेण तात्पर्यत एव प्रकृतप्रतिषेधे उदाहर्तुमाह एवमिति ।

(ख) विराजतीति । "फणीश्वरीऽयं द्विजराजमूर्त्तिर्नवाम्बुदश्रीर्नु तस्य लक्ष्म ॥" इत्युत्तरार्द्धम् । व्योम आकाशमेव वपुः शरीरलाकारी यस्य स तादृशः पयोधिः समुद्रो विराजति प्रकाशते ; तत्र तादृशे च पयोधौ, तारामया नक्षत्राकाराः फेनभङ्गाः फेनखण्डा विद्यन्त इति शेषः ।

(ग) इतीति । इत्याद्याकारेण एवमादिप्रकारेण । तथा च उदाहृते वपुःशब्दप्रयोगेण मयट्प्रत्ययविधानेन च प्रकृतयोर्व्योमतारयोरपह्नवे वस्तुतात्पर्य्यात् पयोधिफेनभङ्गयोरुपमानयोः स्थापनाच्च अपह्नुतिरेव ; न तु रूपकम्, तत्र "विषये निरपह्नवे" इत्यभिधानादित्याशयः ।

---

(१) उज्ज्वालितस्य इति पाठान्तरम् । (२) इदं मम, इमे पद्ये मम इति पाठभेदौ ।
(३) टीकाविलिखितमुत्तरार्द्धं क्वचिन्मूल एव दृश्यते । (४) बोद्धव्य इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**५५ । गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन ।**

**यदि श्लेषेणान्यथा वान्यथयेत् साप्यपह्नुतिः ॥ (घ)**

**श्लेषेण यथा—**

"काले वारिधराणामपतितया नैव शक्यते स्थातुम् ।

उत्कण्ठितासि तरले ! नहि नहि सखि ! पिच्छिलः पन्थाः ॥" (ङ)

अत्र "अपतितया" इत्यत्र "पतिं विना" इत्युक्त्वा पश्चात् "पतनाभावेन" इत्यन्यथा कृतम् (१) (च) ।

**अश्लेषेण यथा—**

"इह पुरोऽनिलकम्पितविग्रहा

मिलति का न वनस्पतिना लता ।

---

(घ) उपमेयनिषेधोपमानस्थापनयोरभावेऽपि अपह्नुतिप्रकरणादेव निरुक्तविलक्षणां काञ्चिदपह्नुतिं लक्षयति गोपनीयमिति । यः कोऽपि वक्ता गोपनीयं लज्जादिना गोपनयोग्यम्, कमपि अर्थं विषयम्, कथञ्चन केनापि प्रकारेण व्यञ्जनयेत्यर्थः द्योतयित्वा सूचयित्वा, यदि श्लेषेण, अन्यथा अश्लेषेण वा अन्यथयेत् अन्यथा कुर्य्यात् द्योतितभिन्नरूपं विदध्यादित्यर्थः, तदा सापि अपह्नुतिर्नामालङ्कारो भवेत् ; आत्मनैव द्योतितविषयस्य आत्मनैव पुनरपह्नवात् ।

(ङ) कालं इति । वर्षाकाले सख्या सह पथि गच्छन्त्याः कस्याश्चिद्विरहिण्या उक्तिरियम् । वारिधराणां मेघानां काले अस्मिन् वर्षासमये, अपतितया पतिरहिततया हेतुना, मया स्थातुं नैव शक्यते, दारुणमदनवेदनावशादिति भावः ; अन्यत्र तु अपतितया अस्मिन् पथि गमनसमये अस्खलितया मया स्थातुं नैव शक्यते, पथः पिच्छिलत्वादिति भावः । इदमाकर्ण्य सहचारिण्याह उत्कण्ठितेति । हे तरले ! चपले ! त्वं किं पतिनिमित्तमुत्कण्ठितासि । इत्युक्ता विरहिणी पुनराह नहीति । हे सखि ! नहि न पतिनिमित्तं न खलु उत्कण्ठितास्मीत्यर्थः । तर्हि कथमिदमुक्तमित्याह पिच्छिल इति । पन्था आवयोरयं गमनपथः पिच्छिलो जलपातेन स्निग्धः । अतएवावश्यपतनसम्भवादपतितयेत्याद्युक्तमिति भावः ।

(च) उदाहृते लक्षणं सङ्गमयति अत्रेति । इत्युक्त्वा उक्तिवत् स्पष्टं द्योतयित्वेत्यर्थः । तथा च न सन्निधौ विद्यते पतिर्यस्याः सा अपतिः । "बहुव्रीहौ" इत्यत्र "सपूर्वस्य वा" इत्यतो वाधिकारात् "पत्युर्नो यज्ञसंयोगे"... 

(छ) इहेति । वर्षाकाले सख्या सह विरहिण्या उक्तिप्रत्युक्तिरूपमिदं पद्यम् । इह वर्षासमये,

---

(१) पतनाभावेनान्यथाकृतमिति पाठभेदः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्मरसि किं सखि ! कान्तरतोत्सवम् ?
नहि घनागमरीतिरुदाहृता ॥" (छ)

वक्रोक्तौ परोक्तेरन्यथाकारः, इह तु स्वोक्तेरेवेति भेदः (ज)। गोपनकृता गोपनीयस्यापि प्रथममभिहितत्वाच्च व्याजोक्तेः (झ)।

५६। अन्यन्निषिध्य प्रकृतस्थापनं निश्चयः पुनः। (ञ)

---

अनिलेन वायुना कम्पितो देहो यस्याः सा तादृशी का नाम लता, वनस्पतिना वृक्षेण सह, पुरोऽग्रतः सम्मुखत इत्यर्थः, न मिलति न संयुज्यते ? अपि तु सर्वैव मिलतीत्यर्थः। "वनस्पतिर्द्रुमात्रे" इति विश्वः। कामाविर्भावात् कम्पाख्यसात्त्विकभाववती का नाम कामिनी कान्तेन सह न मिलतीति च द्योत्यते। इदमाकर्ण्य सखी पृच्छति स्मरसीति। हे सखि! किं कान्तस्य पत्युः रतोत्सवं सुरतामोदम्, स्मरसि लतावनस्पत्योरिदं मिलनं दृष्ट्वेति भावः। इति पृष्टा विरहिणी पुनराह नहीति। कान्तरतोत्सवं नहि स्मरामीत्यर्थः। तर्हि किमिदमुक्तमित्याह घनेति। घनागमस्य वर्षासमयस्य रीतिरवस्था उदाहृता अभिहिता।

अत्र प्रथमार्द्धेन स्वयमेव द्योतितस्य कान्तरतोत्सवस्मरणस्य अश्लिष्टेन घनागमेत्यादिना पुनः स्वयमेवान्यथाकरणादपह्नुतिः।

(ज) ननूदाहृतप्रथमलक्ष्ये अन्यार्थकवाक्यस्य श्लेषेणान्यथा योजनात् प्रागुक्तया वक्रोक्त्या सह, नियतसाङ्कर्यापत्तिरित्याह वक्रोक्ताविति। अन्यथाकारः परकर्त्तृकमन्यथाकरणम्। इह द्वितीयापह्नुतौ भेद इति। अतएव वक्रोक्तिलक्षणे "अन्यस्य" इति "अन्यः" इति चान्यपदद्वयं प्रयुक्तम्, इह च ैककर्त्तृकत्वलाभाय "द्योतयित्वा" इति क्त्वाच् प्रत्ययः कृत इति भावः।

(झ) अथ तर्हि उद्भिन्नस्य पतिरहिततयेत्यर्थस्य कान्तरतोत्सवस्मरणस्य च "नहि नहि सखि!" इत्यादिना "नहि घनागम—" इत्यादिना च व्याजेन गोपनात् "व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः" इति वक्ष्यमाणलक्षणया व्याजोक्त्या सह उभयत्रापि नियतसाङ्कर्यमापद्यत एवेत्याह गोपनेति। गोपनकृता गोपनकारिणा वक्त्रा जनेन, गोपनीयस्यापि पतिरहिततयेत्यर्थस्य कान्तरतोत्सवस्मरणस्य च। अभिहितत्वात् अभिहितवत् स्पष्टं द्योतितत्वात्, व्याजोक्तेर्भेद इत्यनुषज्यते। तथा च व्याजोक्तौ गोपनकारिणा गोपनीयविषयः प्रथमं नाभिधीयते, इह त्वसावभिधीयत एवेति भेदादनयोर्न नियतसाङ्कर्यापत्तिरित्याशयः।

(ञ) अथ प्रकृतं निषिध्यान्यस्थापनेनापह्नुतिवत् अन्यन्निषिध्य प्रकृतस्थापनेन किञ्चिदलङ्कारान्तरं भवति न वेत्याकाङ्क्षायामप्राचीनसम्मतमपि युक्तिसिद्धत्वात् प्रसिद्धालङ्कारान्तरभिन्नत्वाच्च निश्चयाख्यं नूतनं कञ्चिदलङ्कारमाह अन्यदिति। अतएव चात्रापह्नुतिवं परीत्यद्योतनार्थः पुनःशब्दप्रयोग इत्यवधेयम्। अन्यत् वर्णनीयादितरद्वस्तु उपमानमिति तात्पर्य्यम्, निषिध्य अपोह्य, प्रकृतस्य वर्णनायां प्रस्तुतस्य उपमेयस्येत्यर्थः। स्थापनं विन्यासो निश्चयो नामालङ्कारः स्यात्। प्रकृतस्यैव निश्चयादस्य निश्चय इत्येव संज्ञा। अत्रापि क्त्वाच् प्रत्ययार्थाविवक्षणात् पूर्ववदयमपि द्विविध एव प्रकृतस्थापनपूर्वकोऽन्यनिषेधः अन्यनिषेधपूर्वकं प्रकृतस्थापनञ्चेति।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निश्चयाख्योऽयमलङ्कारः । अन्यदित्यारोप्यमाणम् (ट) । यथा मम—

"वदनमिदं न सरोजं, नयने नेन्दीवरे एते ।
इह सविधे मुग्धदृशो भ्रमर ! मुधा किं परिभ्रमसि ? (१) ॥" (ठ)

यथा वा—(ड)

"हृदि विसलताहारो नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः ।
मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्याऽनङ्ग ! क्रुधा किमु धावसि ॥" (ढ)

---

(ट) ननु प्राचीनालङ्कारग्रन्थेषु निश्चयनामकालङ्कारादर्शनात् भवदुक्तलक्षणे निश्चयो नाम किमित्याह निश्चयाख्योऽयमलङ्कार इति । नूतन इति शेषः । अलङ्कारप्रकरणेऽभिधानादिति भावः । आरोप्यमाणं सौसादृश्यमहिम्ना आरोपयोग्यतां नीयमानमुपमानमित्यर्थः ।

(ठ) तत्र प्रकृतस्थापनपूर्वकान्यनिषेधे उदाहरति वदनमिति । सुन्दरीवदनसमीपे भ्रमन्तं कञ्चिद्-भ्रमरमवलोक्य कस्यचित् रसिकस्योक्तिरियम् । हे भ्रमर ! इदं दृश्यमानं वस्तु वदनम्, किन्तु सरोजं तव पानयोग्यमधुविशिष्टं पद्मं न । तथा एते दृश्यमाने वस्तुनी नयने किन्तु इन्दीवरे तथैव नीलोत्पल-युगलं न । अतएव मुग्धदृशः सुन्दरनयनाया अस्या नायिकायाः, इह वदननयनसम्बन्धिनि सविधे समीपे किं कथं मुधा व्यर्थं परिभ्रमसि ? अनयोः पद्मत्वेन्दीवरत्वाभावेन तव पानयोग्यमध्वभावादिति भावः ।

अत्रोपमेयभूत-वदन-नयन-पूर्वकादुपमानभूत-सरोजेन्दीवरनिषेधान्निश्चयोऽलङ्कारः ।

(ड) ननु नूतनं कञ्चिदलङ्कारं प्रचारयितुं भूयसा प्रयासेन स्वकल्पितं लक्ष्यं न खलु प्राचीन-लक्षणविलक्षणं किमपि लक्षणं प्रयोजयति, अप्रमाणत्वात् ; सति तु प्रसिद्धे लक्ष्ये तत्सदृशतया स्वकल्पित-मपि लक्ष्यं तादृशं लक्षणं प्रयोजयत्येव तत्प्रामाण्येन तस्यापि प्रामाण्यादित्यतः प्रसिद्धं लक्ष्यं दर्शयितुमाह यथा वेति ।

(ढ) हृदीति । कामार्त्तस्य कस्यचिद्वियोगिनः खेदेनोक्तिरियम् । हे अनङ्ग ! मन्मथ ! अयं मम हृदि वक्षसि विसलताहारो मृणालवल्लीनिर्म्मितो हारः, किन्तु भुजङ्गमनायकः सर्पस्तत्तुल्यशुभ्रवर्णोऽनन्त-नागो न ; कण्ठे गलदेशे कुवलयश्रेणी नीलोत्पलपत्रमाला, किन्तु सा प्रसिद्धा गरलद्युतिः काल-कूटविषस्य कृष्णवर्णा दीप्तिर्न ; तथा इदं गात्रे दृश्यमानं मलयजरजः श्वेतचन्दनरेणुः, किन्तु भस्म न । अतएव प्रियया रहिते वियुक्ते मयि हरभ्रान्त्या शिवधिया स प्रहर न स्मरशरैर्ताडय । तथा हरत्वाभावान्मां प्रति क्रुधा कोपेन किमु कथं प्रहर्त्तुं धावसि ।

---

(१) मधुकर ! न मुधा परिभ्रम इति चतुर्थचरणे पाठभेदः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न ह्ययं निश्चयान्तः सन्देहः, तत्र संशय-निश्चययोरेकाश्रयत्वेनावस्थानात् । अत्र तु भ्रमरादेः संशयो नायकादेर्निश्चयः (ण) । किञ्च, न भ्रमरादेरपि संशयः, एककोट्यधिके (१) ज्ञाने, तथा समीपागमनासम्भवात् (त) । तर्हि भ्रान्तिमानस्तु । अस्तु नाम भ्रमरादेर्भ्रान्तिः, न चेह तस्याश्चमत्कारविधायित्वम्, अपि तु तथाविधनायकाद्युक्तेरेवेति सहृदयसंवेद्यम् (थ) । किञ्च, अविवक्षितेऽपि भ्रमरादेः पतनादौ भ्रान्तौ वा नायिका-

---

अत्रापि बिसलतादीनामुपमेयानां स्थापनपूर्वकात् भुजङ्गमनायकादीनामुपमानानां निषेधान्निश्चयोऽलङ्कारः ।

अन्यनिषेधपूर्वकप्रकृतस्थापने यथा मम—

"न मृणाले, भुजावेतौ ; तिलपुष्पं न, नासिका ।
नेदं पल्लवमोष्ठोऽयम् ; न बिल्वे च, कुचाविमौ ॥"

(ण) इदानीमस्य प्रसिद्धालङ्कारान्तरभिन्नत्वं दर्शयितुं सम्भाव्यमानेष्वलङ्कारान्तरेषु सन्देहालङ्कारस्यैवाद्यत्वादादौ तद्भिन्नत्वमेव दर्शयति न हीति । अयं नवनिरुक्तो निश्चयो नामालङ्कारः । "वदनमिदं न सरोजम्" इत्यादौ निश्चयसत्त्वात् मध्ये निश्चयाभावाच्च शुद्ध-निश्चयगर्भरूपयोः सन्देहालङ्कारभेदयोरसम्भवादाह निश्चयान्तः सन्देह इति । वदने भ्रमरस्य सरोजसंशयं नायकस्य च वदननिश्चयमादाय निश्चयान्तसन्देहालङ्कारो नहीत्यर्थः । अत्र सन्देहालङ्कारे । एकाश्रयत्वेनावस्थानात् एकस्मिन्नधिकरण एवावस्थाननियमात् । अत्र तु "वदनमिदं न सरोजम्" इत्यादौ तु । तथा चात्र संशयनिश्चययोर्भिन्नाधिकरणावस्थानान्न निश्चयान्तः सन्देह इत्याशयः ।

(त) ननु निश्चयान्तसन्देहालङ्कारे संशयनिश्चययोरेकाधिकरणावस्थाननियमे प्रमाणाभावाद्वदनमित्यादौ निश्चयान्तसन्देहालङ्कारो निर्बाध एवेत्याह किञ्चेति । नायकादेः संशयः कथमपि न, किन्तु भ्रमरादेरपि न संशय इत्यर्थः । आदिपदेन अनङ्गादेर्ग्रहणम् । एककोट्यधिके द्विकोटिके वदनसरोजभयविषयके ज्ञाने भ्रमरस्य संशय इत्यर्थः । तथा समीपागमनासम्भवात् वदननयनयोरत्यन्तनिकटे तस्य भ्रमरस्य गमनासम्भवात् । तथा च न खलु "इदं वदनं सरोजं वा" इति संशयानो मधुपिपासुर्भ्रमरस्तस्यात्यन्तमन्तिकमुपैति ; नहि "तृषातुरः कश्चित् जलं मरीचिका वा" इति सन्दिहानस्तदन्तिकं याति ; पाथि तत्प्राप्तिनिश्चयाभावेन गमनप्रयासस्वीकारासम्भवात् किन्तु सरोजमेवेदमित्यादिभ्रमवानेव तदन्तिके तस्य गमनसम्भवादिति भावः । अत्र रामचरणव्याख्यानं सुधीभिरेव सदसत्तया विवेचनीयम् ।

(थ) "सरोजमेवेदम्" इत्यादिभ्रमरादिभ्रमाङ्गीकारमाश्रित्याशङ्कते तर्हीति । वदनादौ भ्रमरादीनां सरोजादिभ्रमस्यैवाङ्गीकार इत्यर्थः । भ्रान्तिमानस्तु, तल्लक्षणव्याप्तेर्भ्रमस्य निश्चयरूपतया भ्रमरादेस्तत्समीपगमनादिसम्भवाच्चेति भावः । तथाविधा वदनमिदमित्यादिरूपा या नायकाद्युक्तिस्तस्या एव चमत्कार-

---

(१) एककोट्यनधिके इति रामचरणसम्मतः पाठः ।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चाट्वादिरूपेणैव सम्भवति तथाविधोक्तिः (द)। न च रूपकध्वनिरियम्, मुखस्य कमलत्वेनानिर्द्धारणात् (ध)। न चापह्नुतिः, प्रस्तुतस्यानिषेधादिति पृथगेवायमलङ्कारश्चिरन्तनोक्तालङ्कारेभ्यः (न)।

शुक्तिकायां रजतधिया पतति पुरुषे "शुक्तिकेयम्, न रजतम्" इति कस्यचिदुक्तिर्नायमलङ्कारो वैचित्र्याभावात् (प)।

## ५७। भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना ॥ (फ)

विधायित्वमिति पूर्वेणान्वयः। नायिकासन्तोषकत्वात् कौतुकव्यञ्जकत्वाच्चेति भावः। तेन तादृशभ्रान्तिमादाय भ्रान्तिमानलङ्कारो न सम्भवति चमत्कारविधायिन एवालङ्कारत्वौचित्यादिति चाशयः।

(द) अथ न खल्विदं दृष्टं श्रुतं वा, यद्भ्रमरादयः सरोजादिसंशयेन नायिकावदनाद्युपरि पतन्ति, तत्र सरोजादित्वेन भ्रमं वा कुर्वन्तीति। ततश्च वक्तृनायकेन भ्रमरादीनां पतनादिकं तद्भ्रान्तिर्वा न विवक्षितैवेति तन्मूला तथाविधोक्तिरेव न सम्भवति, कुतस्तत्र चमत्कारविधायित्वं कुतो वा तच्चमत्कारमूलको निश्चयाख्यो नवीनालङ्कार इत्याह किञ्चेति। अविवक्षितेऽपि नायकेनेति शेषः। प्रथमादिपदेन द्वितीयश्लोकोक्तानङ्गादेर्ग्रहणम्। द्वितीयादिपदेन च तदनङ्गकृतप्रहारादेः परिग्रहः। भ्रान्ती वा अविवक्षितायामित्यन्वयः। चाटु: प्रियभाषणम्। तृतीयादिपदेन स्ववेदनाधिक्यप्रकाशादीनां ग्रहणम्। तथाविधा "वदनमिदम्" इत्यादिरूपा "हृदि बिसलताहारः" इत्यादिरूपा च। तथा च नायिकाया वदनादेः सरोजादितुल्यत्वव्यञ्जकतया नितान्तसन्तोषकरत्वात् "वदनमिदम्" इत्यादिरूपा स्वकीयमदनवेदनातिशयव्यञ्जकत्वाच्च "हृदि बिसलताहारः" इत्यादिरूपा चोक्तिः सम्भवतीति तदीयचमत्कारितामूलको निश्चयालङ्कारोऽपि सम्भवत्येवेति भावः।

(ध) ननु तर्हि वदनादौ सरोजत्वाद्यारोपायां व्यञ्जनागम्यत्वादयं रूपकालङ्कारध्वनिरेवास्तामित्याह न चेति। अनिर्द्धारणादनिश्चयात्। इदमुपलक्षणम्, नयनादीनामिन्दीवरादित्वेनानिर्द्धारणादित्यपि बोध्यम्। तथा च "मुखकमलम्" इत्यादौ श्रोतारो मुखादीन् कमलादिरूपत्वेन निर्द्धारयन्ति, अत्र तु तन्निर्द्धारणं दूर एवास्ताम्, प्रत्युत न सरोजमित्याद्यभिधानात् सरोजादिभिन्नत्वेनैव वदनादीन् निर्द्धारयन्तीति न रूपकमप्यपीत्याशयः।

(न) अथ तदा सरोजादिनिषेधेन वदनादिस्थापनादपह्नुतिरेवेयं भवत्वित्याह पुनर्न चेति। प्रस्तुतस्य प्रकृतस्य उपमेयस्येत्यर्थः। तथा चापह्नुतौ उपमेयस्यैव निषेधनियमादत्र तु उपमानस्यैव निषेधादुपमेयस्य चानिषेधादपह्नुतेरपि प्रसक्तो नास्तीति भावः। पृथक् अतिरिक्तः, अयं निश्चयनाम्ना नवनिरूक्तः। चिरन्तनाः प्राचीनाः।

(प) क्वचिदतिव्याप्तिमाशङ्क्य निरस्यति शुक्तिकायामिति। रजतधिया रौप्यभ्रमेण, पतति तद्ग्रहणाय गच्छति। अयमलङ्कार एतदलङ्कारविषयः वैचित्र्याभावात्, वैचित्र्यस्यैव चालङ्कारत्वादित्याशयः।

(फ) प्रकृतस्थापनात्मकनिश्चयालङ्कारनिरूपणादनन्तरं निश्चयात्मकालङ्कारान्तरे जिज्ञासोदयात्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता ।**
**वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः ॥**
**जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्यं द्वयोरपि ।**
**तदष्टधापि प्रत्येकं भावाभावाभिमानतः ॥**
**गुणक्रियास्वरूपत्वान्निमित्तस्य पुनश्च ताः ।**
**द्वात्रिंशद्विधतां यान्ति—(ब)**

---

कथञ्चिन्निश्चयात्मकमुत्प्रेक्षालङ्कारं निरूपयति भवेदिति। अत्र सम्भावना नाम द्वयोरंशयोरेकतरांशे कथमपि दृढं ज्ञानम्। यथा—"सम्भावयामि स्थाणुरेवायम्" इति। अत्र हि केनापि कारणेन ज्ञानस्य स्थाण्वंशे दृढता पुरुषांशे तु दुर्बलता। अतएव सम्भावना अंशविशेषे किञ्चिन्निश्चयरूपः समुदाये तु संशयविशेष एव। शुद्धसंशयस्तु द्वयोरेवांशयोः समानबलमेव ज्ञानम्। यथा—"स्थाणुर्वा पुरुषो वा" इति। अत्र हि ज्ञानस्य स्थाण्वंशे पुरुषांशे च समानबलतैव। तेन सम्भावनम्, मनसि करणम्, मननम्, धारणम्, धारणा इत्यादयः सम्भावनायाः पर्य्यायाः। तथा च प्रकृतस्य वर्णनायां प्रस्तुतस्य उपमेयस्येति तात्पर्य्यम्, परात्मना तद्भिन्नभावेन उपमानरूपेणेत्यर्थः सम्भावना मनसि करणम् उत्प्रेक्षा नामालङ्कारो भवेत्। उत् ऊर्द्ध्वदिग्गामिनी प्रेक्षा दृष्टिर्यस्यां सा उत्प्रेक्षा। यं कञ्चिदपि पदार्थं सम्भावयतो जनस्य हि दृष्टिः प्रायेणोर्द्ध्वगमनदर्शनादीदृशी नाम व्युत्पत्तिरित्यवधेयम्।

एतेन उपमेयस्योपमानरूपेण सम्भावना उत्प्रेक्षेति लक्षणनिष्कर्षः।

उपमायामुपमानपदार्थस्य वास्तविकतया निरुक्तसम्भावनाया अभाव एव, इह तूपमानपदार्थस्य अवास्तविकतया तादृशसम्भावनायाः सद्भाव एवेति भेदः।. अतएवास्या अभूतोपमेति ग्रन्थान्तरे नामान्तरम्, "चन्द्र इव मुखम्" इत्यादौ च नातिव्याप्तिः। रूपके आरोपस्य, भ्रान्तिमति भ्रमस्य, अतिशयोक्तावध्यवसायस्य च निश्चयरूपता, इह तु सम्भावनायाः संशयरूपता। किञ्च, रूपकं सारोपालक्षणामूलम्, अतिशयोक्तिश्च साध्यवसानालक्षणामूला, इयन्तु न लक्षणामूला। सन्देहः केवलसंशयरूपः इदन्तु सम्भावनात्मकसंशयरूप इत्येते भेदाः समुन्नेयाः। ग्रन्थकारस्तु अन्यथैव भेदान् दर्शयिष्यति। अतएव रूपकादिष्वपि नातिव्याप्तिः।

(ब) एवं लक्षयित्वोत्प्रेक्षां विभजते वाच्येति। वाच्या शाब्दी प्रतीयमाना चार्थी इत्येवं सा उत्प्रेक्षा प्रथमं द्विविधा मता। तत्र इवादीनां वक्ष्यमाणानां वाचकानां शब्दानां प्रयोगे वाच्या स्यात्, इवादीनामप्रयोगे पुनः परा प्रतीयमाना स्यात्। यद्यस्मात् द्वयोरपि वाच्यप्रतीयमानयोरुत्प्रेक्षाभेदयोर्विषये जातिर्जातिविशिष्टो यः कश्चिदर्थः गुणः, क्रिया, द्रव्यञ्च, एतत् सर्वमेव उत्प्रेक्ष्यमुत्प्रेक्षणीयं सम्भावनीयं सम्भवति; तस्मात् एतावता समुदायेनोत्प्रेक्षा अष्टधा अष्टप्रकारा स्यात्। चतुर्णां द्वैगुण्येन अष्टानां सम्भवात्। अपि च तेषामष्टानामेव प्रकाराणां प्रत्येकमेव प्रकारः भावाभावयोरभिमानतः आत्या-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र वाच्योत्प्रेक्षायामुदाहरणं दिङ्मात्रम् (भ)। यथा—

"ऊरुः कुरङ्गकदृशश्चञ्चलचेलाञ्चलो भाति ।
सपताकः कनकमयो विजयस्तम्भः स्मरस्येव ॥" (म)

अत्र विजयस्तम्भस्य बहुवाचकत्वाज्जात्युत्प्रेक्षा (य)।

"ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥" (र)

अत्र सप्रसवत्वं गुणः (ल)।

---

दीनां चतुर्णां प्रत्येकमेव भावरूपाणां सम्भावनया तेषाञ्च प्रत्येकमेवाभावसम्भावनया च द्विधा द्विधा भवतीति समुदायेन तावता षोड़शप्रकारा उत्प्रेक्षाः। ताश्च पुनः षोड़शप्रकारा उत्प्रेक्षाः, निमित्तस्य उत्प्रेक्षण-कारणस्य गुण-क्रियास्वरूपत्वात् गुणस्वरूपत्वात् क्रियास्वरूपत्वाच्च प्रत्येकप्रकारस्यैव द्वैविध्येन समुदायेन द्वात्रिंशद्विधतां यान्ति प्राप्नुवन्ति।

(भ) तत्रेति। तासु द्वात्रिंशद्विधासु उत्प्रेक्षासु मध्ये इत्यर्थः। दिङ्मात्रमेकं कमात्रम्।

(म) ऊरुरिति। चञ्चल वायुवेगेन चलाचलीभूतं चेलाञ्चलं वसनप्रान्तो यस्य स तादृशः, कुरङ्गकदृशो बालहरिणनयनायाः, ऊरुः, पताकया सहेति सपताकः, कनकमयः स्वर्णनिर्मितः स्मरस्य कामस्य विजयस्तम्भ इव भाति शोभते; कामोद्दीपकत्वादिति भावः। विजयिना वीरेण विजितदेशे विजयचिह्नस्वरूपो यः स्तम्भः समारोप्यते, स विजयस्तम्भः। कुरङ्गक इत्यस्यार्थे कप्रत्ययः।

(य) अत्रेति। विजयस्तम्भस्य विजयस्तम्भशब्दस्य, बहुवाचकत्वाद्विजयस्तम्भसामान्यबोधकत्वात्, जात्युत्प्रेक्षा जातिविषयकोत्प्रेक्षालङ्कारः; विजयस्तम्भत्वजातिविशिष्ट स्मर-सम्बन्धि-विजयस्तम्भोत्प्रेक्षणादिति भावः। अत्रेदमवधेयम्—ऊरुरुपमेयं विजयस्तम्भश्चोपमानम्, तथा कामस्यैव सुरताभिलाषमात्र-रूपत्वाच्छरीरत्वे अलीकत्वेन तद्विजयस्तम्भस्याप्यलीकत्वमेवेति उपमानपदार्थस्य अवास्तविकत्वम्; इव-शब्दप्रयोगादुत्प्रेक्षाया वाच्यरूपता, विजयस्तम्भरूपभावपदार्थोत्प्रेक्षणाद्भावाभिमानिता, नायिकाया ऊरुदेशस्य रूपस्वरूपो गुणश्च निमित्तमिति। एवमन्यत्राप्यूह्यम्।

(र) ज्ञान इति। रघुवंशप्रथमसर्गे दिलीपवर्णनमिदम्। तस्य दिलीपस्य ज्ञाने सर्वविषयक-बोधशक्तौ सत्यपि मौनम् अनावश्यके विषये मौनावलम्बनम्, न पुनर्वाचालवत्तत्रापि बहुभाषितेति भावः। शक्तौ सामर्थ्ये सत्यपि क्षमा सहिष्णुता, तथा त्यागे दाने सत्यपि श्लाघाविपर्ययः आत्मप्रशंसाराहित्यम्, आसी-दिति शेषः। अतएव तस्य ते ज्ञानादयो गुणाः, गुणानुबन्धित्वात् लोकप्रियत्वादिगुणान्तरप्रयोजकत्वात् समान एकस्मादेवोदराज्जाततया तुल्यः प्रसवो येषां ते सप्रसवाः सहोदरा इव आसन्निति शेषः। तथैवोपकारित्वा-दिति भावः।

(ल) अत्रेति। मत्वर्थीयप्रत्ययादिव बहुव्रीहेरनन्तरमपि भावविहितप्रत्ययस्य सम्बन्धिसम्बन्धान्यतर-बोधकतायाः व्युत्पत्तिसिद्धत्वे नात्रापि सप्रसवत्वशब्दस्य प्रसवरूपसम्बन्धिबोधकत्वात् प्रसवस्य च भूणादरयो-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"गङ्गाम्भसि सुरत्राण ! तव निर्याणनिस्वनः (१) ।
स्नातीवारिबधूवर्ग-गर्भपातनपातकी ॥" (ब)

अत्र स्नातीति क्रिया (श) ।

"मुखमेणीदृशो भाति पूर्णचन्द्र इवापरः ।" (ष)

अत्र चन्द्र इत्येकव्यक्तिवाचित्वाद्द्रव्यशब्दः (स) ।

एते भावाभिमाने (ह) । अभावाभिमाने (च) । यथा—

"कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ ।
अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ ॥" (क)

---

विभागरूपत्वात् विभागस्य च "संयोगश्च विभागश्च" इत्यनेन गुणतया गणनादित्याशयः । सप्रसवत्वं गुण इति तस्य चोत्प्रेक्षणादेव गुणोत्प्रेक्षेति तात्पर्य्यम् । एवमुत्तरत्रापि बोध्यम् । इदन्तु शक्यतावच्छेदकमादाय गुणोत्प्रेक्षायामुदाहरणम् । शक्यार्थमादायोदाहरणन्तु—"विश्लेषदुःखादिव बद्धमौनम्" इति । अत्र दुःखमेव गुणः ।

(ब) गङ्गेति । कृपाणस्य प्रतापप्रशंसेयम् । हे सुरत्राण ! दैत्यानां वधेन देवानां रक्षक ! अरिवधूवर्गस्य शत्रुस्त्रीसमूहस्य गर्भपातनेन भयजननद्वारा गर्भपतकरणेन पातकमस्यास्तीति स तादृशः, तव निर्याणनिस्वनः शत्रुनगराक्रमणाय निर्गमनकालीनदुन्दुभिप्रभृतिशब्दः, गङ्गाया अम्भसि जले स्नातीव, तत्-पातकक्षालनार्थेति भावः ।

(श) अत्रेति । निर्याणनिस्वनस्य गङ्गापर्य्यन्तगमनक्रिया स्नानक्रियारूपेणोत्प्रेक्षितेति क्रियोत्प्रेक्षेत्यर्थः । अतएव काव्यप्रकाशेऽपि—"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।" इत्यादौ व्यापनादि लेपनादिरूपतया सम्भावितम्" इत्युक्तम् ।

(ष) मुखमिति । "संसक्तमिव नीलाब्जं नेत्रभाव विराजते ॥" इति सत्पूरितपरार्द्धम् । एणीदृशो हरिणीनयनसदृशनयनायाः ।

(स) अत्रेति । एकव्यक्तिवाचित्वादेकमात्रव्यक्तिवाचित्वे नानेकव्यक्तिनियतजातिवाचित्वाभावादित्यर्थः । द्रव्यशब्द इति । अतएव तदुपस्थाप्यद्रव्योत्प्रेक्षा इत्याशयः ।

(ह) एत इति । उदाहृता विजयस्तम्भादयः प्रयोगा इत्यर्थः, भावाभिमाने भावपदार्थसम्भावनायाम्, अवगन्तव्या इति शेषः ; तेषां भावरूपत्वादिति भावः ।

(च) अभावेति । अभावाभिमाने जाति-गुण-क्रिया-द्रव्याणामभावसम्भावनायाम् ।

(क) कपोलेति । पत्युः समीपे तद्विरहिण्याः प्रियाया अवस्थावर्णनेयं कस्यचित् । अस्याः आलोच्यमानायाः रमण्याः, कपोलफलकौ गण्डयुगलम्, तथाविधौ परमसुन्दरौ भूत्वापि अन्योन्यं परस्परम् अपश्यन्ताविव उन्नतनासिकया व्यवधानादनवलोकयन्ताविव सन्तौ, ईदृक्षामीदृशीं क्षामतां क्षीणतां गतौ प्राप्तौ, अन्योन्यदर्शने वस्त्वन्तरस्य क्षीणताया अवश्यम्भावादिति भावः । इत्येतदेव कष्टमित्यर्थः ।

---

(१) निःस्वाननिस्वन इति [illegible] पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्रापश्यन्ताविति क्रियाया अभावः (ख)। एवमन्यत् (ग)।

निमित्तस्य गुणक्रियारूपत्वे यथा—"गङ्गाम्भसि" इत्यादौ "स्नातेव" इत्युत्प्रेक्षानिमित्तं पातकित्वं गुणः। "अपश्यन्ताविव" इत्यादौ श्यामता-गमनरूपं निमित्तं क्रिया (घ)। एवमन्यत् (ङ)।

---

(ख) अत्रेति। क्रियाया दर्शनक्रियायाः, अभावः सम्भावित इति शेषः। अतएवात्र अभावाभि-मानिनी क्रियोत्प्रेक्षा इत्याशयः।

(ग) एवमिति। अन्यत्—जाति-गुण-द्रव्याणां प्रत्येकमभावाभिमाने उदाहरणम्, एवमनुसन्धेयमित्यर्थः। तत्र जातेरभावाभिमाने यथा मम—

"अभावादिव पद्मिन्या हेमन्तेऽस्मिन् हिमच्छलात्।
नितान्तकातराकारो विवस्वानस्तु मुञ्चति॥"

अत्र पद्मिनीति बहुव्यक्तिवाचित्वाज्जातिशब्दः।

गुणस्याभावाभिमानेऽपि यथा ममैव—

"इन्दोरयोगादिव लुण्ठिताङ्गी दिने द्विरेफी मधु पातुमिच्छन्।
कुमुद्वतीं मुद्रितुतासुपैति प्रायो वियुक्तां हि विटः प्रयाति॥"

अत्र इन्दोः संयोगरूपगुणस्याभाव उत्प्रेक्षितः।

द्रव्यस्याभावाभिमानेऽपि यथा मम वियोगवैभवखण्डकाव्ये—

"समुचितनवसन्ध्यारक्तवासो वसाना मलिनमुखसरोजा लम्बताराक्षमाला।
विगलिततमिस्राश्रुः सा दिनश्रीरभावात् सवितुरिव विपन्ना मर्त्यधाम व्यमुञ्चत्॥"

अत्रैकव्यक्तिमात्रवाचकसवितृशब्दवाच्यस्य सूर्यरूपद्रव्यस्याभाव उत्प्रेक्षितः।

(घ) एवं जात्यादीनां चतुर्णां भावाभिमाने भेदचतुष्टयमभावाभिमाने च भेदचतुष्टयमित्यष्टौ वाच्योत्प्रेक्षाया भेदान् दर्शयित्वा इदानीं तेषामेव प्रत्येकतो गुणनिमित्तकत्वेन क्रियानिमित्तकत्वेन च प्रत्येकत एव पुनर्द्वौ द्वौ भेदौ दर्शयितुमाह निमित्तस्येति। गुणरूपत्वे क्रियारूपत्वे च क्रमाद्यथेत्यर्थः। पातकित्वं नाम पातकं तच्च पतनजनकत्वात् पापमेव, पापञ्च गुणविशेष एव "अदृष्टं शब्द एव च" इत्यनेन गुणत्वेन गणनात् "धर्माधर्मावदृष्टं स्यात्" इति तद्विभागाच्च। तस्य च पापस्य स्नानसम्बन्धेन गङ्गास्नानक्रियाया हेतुत्वादित्याशयः। श्यामतेति। श्यामताप्राप्तिहेतुकादेव "अपश्यन्ताविव" इत्युत्प्रेक्षणा-दित्यभिप्रायः।

"निष्पन्दमरविन्दाक्षि! नेत्रद्वन्द्वमिदं तव।
चिरविच्छिन्नमेकान्तं कान्तमाध्यायति ध्रुवम्॥"

इत्यत्रापि विशालात्मकचिरविच्छेदरूपो गुण एव ध्यानक्रियोत्प्रेक्षाया निमित्तं निर्वाच्यमेव। अतो राम-चरणस्य गुणक्रियेतरपदार्थस्यापि उत्प्रेक्षानिमित्तत्वकल्पनमनावश्यकतया हेयमेव।

(ङ) एवमिति। अन्यत्—वाच्योत्प्रेक्षाया गुणनिमित्तकं क्रियानिमित्तकञ्च अपरमुदाहरणम्,

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रतीयमानोत्प्रेक्षा यथा—

"तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम्।
हाराय गुणिने स्थानं न दत्तमिति लज्जया॥" (च)

अत्र लज्जयेवेति इवाद्यभावात् प्रतीयमानोत्प्रेक्षा (छ)। एवमन्यत् (ज)।

ननु ध्वनिनिरूपणप्रस्तावे अलङ्काराणां सर्वेषामपि व्यङ्ग्यत्वं भवतीत्युक्तम्, सम्प्रति पुनर्विशिष्य कथमुत्प्रेक्षायाः प्रतीयमानत्वम्?। उच्यते—व्यङ्ग्योत्प्रेक्षायाम् (झ)।

---

एवमूह्यमित्यर्थः। तथा च "ऊरुः कुरङ्गकदृशः" इत्यादौ ऊरौ रूपं गुणः, "ज्ञाने मौनम्" इत्यादौ गुणान्तरजननरूपा क्रिया। "मुखमेणीदृशः" इत्यादौ सौन्दर्यात्यतिशयरूपी गुणः, स चानुक्तः। एवमन्यदप्यूह्यम्।

(च) तन्वङ्ग्या इति। तन्वङ्ग्याः स्वभावत एव कृशदेहायां अस्या रमण्याः स्तनयुग्मेन गुणिने गुणवते सूत्रग्रथितायेत्यर्थः विद्या-गौरवादिगुणविशिष्टाय जनायेति च व्यज्यते, स्थानं न दत्तं नितान्तघनसन्निवेशादवस्थितिप्रदेशो न दत्त इति हेतोर्लज्जयेव, मुखं वदनम् अग्रदेशद्वयस्य न प्रकटीकृतं न प्रकाशितं लोकसमाजे न दर्शितमित्यर्थः, एकत्र उक्तया लज्जया अन्यत्र तु वसनावृततयेति भावः। अन्योऽपि विद्यादिगुणवते जनाय कुतोऽपि कारणात् स्थानमदत्त्वा लज्जया लोकसमाजे मुखं न प्रकाशयति।

(छ) अत्रेति। आदिशब्देन मन्ये प्रभृत्युत्प्रेक्षावाचकान्तराणां ग्रहणम्। प्रतीयमानोत्प्रेक्षेति। सा च लज्जाया गुणविशेषत्वाद्भावरूपत्वात् हेतुरूपत्वाच्च हेतुभूतगुणोत्प्रेक्षणरूपा भावाभिमानिनी।

(ज) एवमिति। अत्र प्रतीयमानायां जातिरूपहेतूत्प्रेक्षायां यथा मम—

"सार्द्धं युवीरणा युद्धे कठिनात्मा जयार्जितात्। वीरत्वाल्लभतेऽत्यन्तं तुङ्गत्वं तवचीसनः॥"

अत्र इवाद्यभावात् वीरत्वादिवेति हेतुभूतवीरत्वजातेरुत्प्रेक्षणाच्च प्रतीयमाना जात्युत्प्रेक्षा।

प्रतीयमानगुणोत्प्रेक्षायान्तु "तन्वङ्ग्याः" इत्याद्युदाहृतमेव। "रावणस्यापि" इत्यादौ "इव" इत्यत्र "क्षिप्त" इति पाठे प्रतीयमाना आख्यातुमिति फलभूतक्रियोत्प्रेक्षा। प्रतीयमा .। द्रव्योत्प्रेक्षा यथा मम—

"यामिन्याः प्रथमे यामे द्रुतं प्रवसता सता। एकान्तस्मरसन्तप्ता त्वया सा भुवि शायिता॥"

अत्रापि इवाद्यभावात् त्वयेत्यर्थव्यक्तिवाचित्वात् हेतुभूतत्वाच्च त्वयेवेति प्रतीयमाना हेतुभूतद्रव्योत्प्रेक्षा। प्रतीयमाना स्वरूपोत्प्रेक्षा तु न सम्भवतीति परस्ताद्वक्ष्यति। एवमभावाभिमानेऽपि प्रतीयमानोत्प्रेक्षा समुन्नेया।

(झ) ननु "तन्वङ्ग्याः स्तनयुग्मेन" इत्यादावुत्प्रेक्षालङ्कारध्वनेरङ्गीकारेणैवोपपत्तौ किमर्थमुत्प्रेक्षायाः प्रतीयमानाख्यभेदसामान्यमेवाङ्गीक्रियत इत्याशङ्कते नन्विति। उक्तमिति। "वस्तु वालङ्कृतिर्वाऽपि" इत्यने-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"महिलासहस्सभरिए तुह हिअए सुहअ ! सा अमाअन्ती।
अणुदिणमणण्णकम्मा अङ्गं तणुअं पि तणुएइ॥" (ञ)

इत्यादावुत्प्रेक्षणं विनापि वाक्यविश्रान्तिः, इह तु स्तनयोर्ल्ज्जाया असम्भवात् लज्जयेवेत्युत्प्रेक्षयैवेति व्यङ्ग्य-प्रतीयमानोत्प्रेक्षयोर्भेदः (ट)।

अत्र वाच्योत्प्रेक्षायाः षोड़शसु भेदेषु विशेषमाह—

५८। तत्र वाच्याभिदाः पुनः।
विना द्रव्यं त्रिधा सर्वाः स्वरूप-फल-हेतुगाः॥ (ठ)

तत्रोक्तेषु वाच्यप्रतीयमानोत्प्रेक्षयोर्भेदेषु मध्ये ये वाच्योत्प्रेक्षायाः षोड़शभेदास्तेषु च जात्यादीनां त्रयाणां ये द्वादशभेदास्तेषां प्रत्येकं स्वरूप-फल-हेतु-गतत्वेन द्वादशभेदतया षट्त्रिंशद्भेदाः, द्रव्यस्य स्वरूपात्प्रेक्षणमेव सम्भवतीति चत्वार इति मिलित्वा चत्वारिंशद्भेदाः (ड)।

---

नेति शेषः। उच्यते सिद्धान्त इत्यर्थः। व्यङ्ग्योत्प्रेक्षायामुत्प्रेक्षालङ्कारध्वनौ "इत्यादावुत्प्रेक्षणं विनापि वाक्यविश्रान्तिः" इति परेणान्वयः।

(ञ) महिलेति। चतुर्थपरिच्छेद एवैतदनूदितं व्याख्यातञ्च द्रष्टव्यम् (२३७ पृष्ठे)। अत्र अमान्तीवेति अभावाभिमानि-प्रतीयमान-क्रियोत्प्रेक्षाध्वनिरवगन्तव्यः। किञ्चात्र, विशेषोक्तिध्वनिरपि तत्-प्रस्तावे दर्शितः।

(ट) इत्यादाविति। उत्प्रेक्षणम् "अमान्तीव" इति सम्भावनाम्। वाक्यस्य विश्रान्तिः समाप्तिः, सम्भवतीति शेषः। अनुपपत्तिलेशस्याप्यभावादिति भावः। इह तु "तन्वङ्ग्याः स्तनयुग्मेन" इत्यादौ तु। असम्भवादिति। स्तनयोरचेतनत्वादिति भावः। उत्प्रेक्षयैवेति। उत्प्रेक्षावाचकस्य इवशब्दस्य अध्याहार-कल्पनयैवेत्यर्थः, वाक्यविश्रान्तिरिति पूर्वेणान्वयः। व्यङ्ग्य-प्रतीयमानोत्प्रेक्षयोरुत्प्रेक्षाध्वनि-प्रतीयमानोत्-प्रेक्षयोः। तथा च तत्रोत्प्रेक्षणं विना अन्वयानुपपत्तिस्तत्र प्रतीयमानोत्प्रेक्षा, यत्र तु अन्वयोपपत्तिस्तत्र उत्प्रेक्षाध्वनिरिति भेदात् प्रतीयमानोत्प्रेक्षासामान्यमङ्गीकर्त्तव्यमेवेति भावः।

(ठ) वाच्योत्प्रेक्षाः पुनर्विभजते तत्रेति। तत्र तेषु वाच्योत्प्रेक्षा-प्रतीयमानोत्प्रेक्षयोर्भेदेषु मध्ये, द्रव्यं वाच्यां द्रव्योत्प्रेक्षां विना, अन्याः सर्वा वाच्या उत्प्रेक्षाया भिदा भेदाः स्वरूप फल-हेतुगाः सत्यः, पुन-स्त्रिधा त्रिविधा भवन्ति। स्वरूपञ्च फलञ्च हेतुञ्च गच्छन्तीति तास्तथोक्ताः। "तादर्थ्यचतुर्थ्यन्तेन तुमुनन्तेन वा पदेन यत्रोत्प्रेक्षा सा फलोत्प्रेक्षा। हेतुविभक्त्यन्तपदेनोत्प्रेक्षा हेतूत्प्रेक्षा। ताभ्यामितरा स्वरूपोत्-प्रेक्षा" इति तर्कवागीशः।

(ड) स्फुटमेव कारिकार्थं विवृणोति तत्रेति। त्रयाणां जाति-गुण-क्रियारूप पदार्थानाम्। "विना द्रव्यम्" इत्यस्य हेतुगर्भं निष्कर्षमाह द्रव्यस्येति। स्वरूपोत्प्रेक्षणमेव, न तु फलतया हेतुतया वा उत्प्रेक्षणम्

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र स्वरूपोत्प्रेक्षा यथा पूर्वोदाहरणेषु "स्मरस्य विजयस्तम्भः" इति, "सप्रसवा इव" इत्यादयो जातिगुणस्वरूपगाः (१) (ढ)। फलोत्प्रेक्षा यथा—

"रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः।
विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम्॥" (ण)

अत्र "आख्यातुम्" इति भूप्रवेशस्य फलं क्रियारूपमुत्प्रेक्षितम् (त)। हेतूत्प्रेक्षा यथा—

"सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम्।
अदृश्यत त्वच्चरणारविन्द-विश्लेषदुःखादिव बद्धमौनम्॥" (थ)

अत्र दुःखरूपो गुणो हेतुत्वेनोत्प्रेक्षितः (द)। एवमन्यत् (ध)।

---

इत्येवशब्दार्थः, तथात्वे वैचित्र्यासम्भवादित्याशयः। इदन्तु वाच्योत्प्रेक्षामात्रनियतम्, प्रतीयमानोत्प्रेक्षायान्तु स्वरूपोत्प्रेक्षणमेव न सम्भवति, किन्तु फलोत्प्रेक्षणं हेतूत्प्रेक्षणञ्च सम्भवत्येव; वैचित्र्यसम्भवात् "प्रतीयमानाभिदाश्च प्रत्येकं फलहेतुगाः" इति वक्ष्यमाणात् "स्वरूपोत्प्रेक्षाप्यत्र न भवति" इत्यभिधास्यमानाच्च।

(ढ) अत्रेति। पूर्वोदाहरणेषु "ऊरुः कुरङ्गकदृशः" इत्यादिषु। आदिशब्देन "ज्ञातीव" "पूर्णचन्द्र इवापरः" इत्यनयोर्ग्रहणम्। तेन "जाति-गुण" इत्यनन्तरमप्यादिशब्दान्तरमध्याहर्त्तव्यम्।

(ण) रावणस्येति। रघुवंशद्वादशसर्गे श्लोकोऽयम्। रामेण अस्तो विक्षिप्तः, आशुगो बाणः, रावणस्य हृदयं भित्त्वापि, उरगेभ्यः पातालवासिभ्यः सर्पेभ्यः, प्रियं रावणवधरूपं प्रीतिजनकवृत्तान्तम्, रावणस्य पातालवासिष्वपि कृतात्याचारत्वादिति भावः, आख्यातुं वक्तुमिव भुवं विवेश।

(त) अत्रेति। उत्प्रेक्षितमिति। केवल एव भूप्रवेश आख्यानफलकत्वेन सम्भावित इत्यर्थः।

(थ) सैषेति। रघुवंशत्रयोदशसर्गे श्लोकोऽयम्। एषा दृश्यमाना सा स्थली स्थानम्, यत्र स्थल्याम्, त्वां सीतां विचिन्वता अन्विष्यता मया, उर्व्यां भूतले भ्रष्टं तव चरणारविन्दादेव विच्युतम्, एकं नूपुरम्, तव चरणारविन्दाद्यो विश्लेषो विच्छेदस्तेन यत् दुःखं तस्मादिव हेतोः, बद्धमौनं मौनावलम्बि निःशब्दमिति यावत्, अदृश्यत दृष्टम्।

(द) अत्रेति। हेतुत्वेन बद्धमौनत्वस्येत्यर्थः। उत्प्रेक्षितः सीताचरणविश्लेष एव तज्जन्यदुःखत्वेन सम्भावितः।

(ध) एवमिति। तत्र गुणरूपफलोत्प्रेक्षा यथा काव्यप्रकाशे—

"उन्मेषं यो मम न सहते जातिवैरी निशायामिन्दोरिन्दीवरदलदृशां तस्य सौन्दर्यदर्पः।
नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षात् लग्ना मन्ये ललिततनु! ते पादयोः पद्मलक्ष्मीः॥"

अत्र हर्षं फलं पादसंयोगात्मकगुणरूपमुत्प्रेक्षितम्।

---

(१) जातिगुणरूपाः, जातिगुणरूपगा इति पाठभेदौ।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ५९ । उक्त्यनुक्त्योर्निमित्तस्य द्विधा तत्र स्वरूपगाः । (न)

तेषु चत्वारिंशत्संख्यकेषु भेदेषु मध्ये ये स्वरूपगाः षोड़शभेदाः, ते उत्प्रेक्षानिमित्तस्योपादानानुपादानाभ्यां द्वात्रिंशद्भेदा इति मिलित्वा षट्पञ्चाशद्भेदा वाच्योत्प्रेक्षायाः (प) ।

तत्र निमित्तस्योपादानं यथा पूर्वोदाहृते "स्नातीव" इत्युत्प्रेक्षायां निमित्तं पातकित्वमुपात्तम् । अनुपादाने यथा—"चन्द्र इवापरः" इत्यत्र तथाविधसौन्दर्याद्यतिशयो नोपात्तः (फ) । हेतुफलयोस्तु नियमेन निमित्तस्योपादानमेव । तथाहि "विश्लेषदुःखादिव" इत्यत्र यन्निमित्तं बद्धमौनत्वम् "आख्यातुमिव" इत्यत्र च भूप्रवेशस्तयोरनुपादाने असङ्गतमेव वाक्यं स्यात् (ब) ।

प्रतीयमानायाः षोड़शसु भेदेषु विशेषमाह—(भ)

---

हेतुभूतजात्युत्प्रेक्षा यथा—"साङ्गं युवोरस्या युद्धे कठिनात्मा जयार्जितात् ।
वीरत्वादिव सम्प्राप्ते स्तुङ्गत्वं तरुणीस्तनः ॥"

अत्र तुङ्गत्वप्राप्तिहेतुर्वीरत्वजातिरुत्प्रेक्षिता । एवमन्यदप्यनुसन्धेयम् ।

(न) तत्रापि स्वरूपोत्प्रेक्षाः पुनर्विभजते उक्तीति । तत्र प्रागुक्तेषु प्रकारेषु मध्ये स्वरूपगा उत्प्रेक्षाप्रकाराः, निमित्तस्य स्वस्वकारणस्य उक्तौ अनुक्तौ च द्विधा पुनर्द्विप्रकारा भवन्ति ।

(प) तेष्विति । षोड़शभेदा इति । जातेर्भावाभिमाने एकः अभावाभिमाने चैकः, तयोश्च प्रत्येकं गुणनिमित्तकत्वात् क्रियानिमित्तकत्वाच्च पुनर्द्वैविध्येन चत्वारः, एवं गुणस्य चत्वारः, क्रियायाश्चत्वारः, द्रव्यस्य च चत्वार इति मिलित्वा स्वरूपोत्प्रेक्षाः षोड़शभेदाः । प्राक्प्रदर्शितचत्वारिंशद्भेदेभ्यश्च तेषां षोड़शभेदानां पृथक्करणे चतुर्विंशतिभेदाः अवशिष्यन्त इत्यवधेयम् । ततश्च पुनस्तेषां षोड़शानां स्वरूपोत्प्रेक्षाणां निमित्तस्योपादानेन अनुपादानेन च प्रत्येकं द्वैविध्यात् द्वात्रिंशद्भेदतया तेषाञ्च द्वात्रिंशद्भेदानां तैश्चतुर्विंशतिभेदैः सह मेलने षट्पञ्चाशद्भेदा भवन्तीति ।

(फ) तत्रेति । तथाविधो मुखचन्द्रोभयगतः । आदिपदेनाह्लादकत्वादेर्ग्रहणम् ।

(ब) हेत्विति । हेतुफलयोस्तु उत्प्रेक्षणे इति शेषः । नियमेन अवश्यम्भावेन । तत्र हेतूत्प्रेक्षायां फलमेव निमित्तम्, फलोत्प्रेक्षायाञ्च हेतुरेवेति बोद्धव्यम् । "येन विना यन्न भवति तत्तस्य निमित्तम्" इति लक्षणात् फलं विना हेतूत्प्रेक्षणस्य हेतुं विना च फलोत्प्रेक्षणस्य सर्वथैवासम्भवात् । निमित्तमुत्प्रेक्षणकारणीभूतं यद्बद्धमौनत्वमित्यर्थः । भूप्रवेश इत्यत्रापि यच्छब्दस्य लिङ्गव्यत्ययेन यन्निमित्तमित्यनुषज्यते । तथा च आख्यातुमिवेत्युत्प्रेक्षणनिमित्तीभूतो यश्च भूप्रवेश इत्यर्थः । तयोर्बद्धमौनत्वभूप्रवेशयोः । असङ्गतमेवेति । तथा च "त्वच्चरणारविन्दविश्लेषदुःखादिव अदृश्यत" इति मात्रस्य "आशुग उरगेभ्यः प्रियमाख्यातुमिव" इति मात्रस्य चोक्तौ आकाङ्क्षितपदाभावेन वाक्यमभिप्रेतार्थबोधनासमर्थमेव स्यादिति भावः ।

(भ) प्रतीयेति । चतुर्णां जाति-गुण-क्रिया-द्रव्याणां भावाभिमाने चत्वारः अभावाभिमाने च

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

६०। प्रतीयमानाभेदाश्च प्रत्येकं फलहेतुगाः॥ (म)

यथोदाहृते "तन्वङ्ग्याः स्तनयुग्मेन" इत्यत्र "लज्जयेव" इति हेतुरुत्प्रेक्षितः (य)।

अस्यामपि निमित्तस्यानुपादानं न सम्भवति, इवाद्यनुपादाने निमित्तस्य चाकीर्त्तने उत्प्रेक्षणस्य प्रमातुर्निश्चेतुमशक्यत्वात् (र)। स्वरूपोत्प्रेक्षाप्यत्र न भवति, धर्म्मान्तर-(१) तादात्म्यनिबन्धनायामस्यामिवाद्यप्रयोगे विशेषणयोगे सत्यतिशयोक्तेरभ्युपगमात् (ल)। यथा—"अयं राजा

चत्वार इत्यष्टौ भेदाः, तेषाञ्च पुनर्गुणनिमित्तकत्वात् क्रियानिमित्तकत्वाच्च प्रत्येकमेव द्वैविध्येन प्रतीयमानोत्प्रेक्षाया अपि मौलिकाः षोड़शभेदा इत्यवधेयम्।

(म) तानपि भेदान् पुनर्विभजते प्रतीयमानेति। प्रतीयमानाया उत्प्रेक्षाया उक्ताः षोड़शभेदाश्च प्रत्येकमेव, फलं हेतुञ्च गच्छन्तीति फलहेतुगाः फलगता हेतुगताश्चेति द्विविधाः सन्तः समुदायेन द्वात्रिंशद्भेदा भवन्तीत्यर्थः।

(य) यथेति। तत्र प्रतीयमानोत्प्रेक्षा फलगता यथा—"रावणस्यापि" इत्यादौ "उरगेभ्यः किल प्रियम्" इति पाठे। तथा चात्र इवाद्यभावात् प्रतीयमानता आख्यातुमिवेति फलोत्प्रेक्षणाच्च फलगतेति द्रष्टव्यम्।

(र) अस्यामिति। न केवलं वाच्यायां हेतुफलयोरुत्प्रेक्षायाम्, अस्यां प्रतीयमानायामपि हेतुफलयोरुत्प्रेक्षायामित्यर्थः। उत्प्रेक्षणस्य सम्भावनायाः, प्रमातुर्बोद्धुः श्रोतुरिति यावत्। तथा च—"तन्वङ्ग्या स्तनयुग्मेन मुखं न प्रकटीकृतम्। हाराय गुणिने स्थानं पीवरेण न चार्पितम्॥" इति पाठे काचिदपि सम्भावनास्तीति केनापि निश्चेतुं न शक्यत एवेति भावः।

(ल) ननु पूर्ववदत्र कारिकायामपि स्वरूपेति कथं नोक्तमित्याह स्वरूपोत्प्रेक्षापीति। अत्र प्रतीयमानोत्प्रेक्षायाम्। धर्म्मान्तरस्य उपमानभूतस्य अपरस्य विशेष्यपदार्थस्य यत्तादात्म्यम् उपमेयभूतविशेष्येण सहाभेदस्तदेव निबन्धनं प्रयोजकं यस्यास्तस्याम्। इदन्तु अतिशयोक्तेरभ्युपगमं प्रति हेतुभूतं विशेषणम्। अस्यामुत्प्रेक्षायाम्। विशेषणयोगे असम्भवार्थकविशेषणपदसमभिव्याहारे। अभ्युपगमादङ्गीकारात्। तथा च उपमानोपमेययोरभेदप्रतिपत्तिनिबन्धना रूपकोत्प्रेक्षातिशयोक्तयस्तिस्र एव; तत्र इवाद्यभावे असम्भवविशेषणाभावे च आरोपमात्रप्रतीतौ रूपकमेव, संशयविशेषरूपायाः सम्भावनाया वाचकानामिवादीनां योगे असम्भवविशेषणयोगे च सम्भावनाया एव प्रतीतेरुत्प्रेक्षैव, तादृशसम्भावनावाचकानामिवादीनामयोगे असम्भवविशेषणयोगे च सिद्धरूपतया निश्चयरूपस्याध्यवसायस्यैव प्रतीतेरतिशयोक्तिरेव, स्वस्वलक्षणव्याप्तेरितरस्य चाव्याप्तेरित्याशयः।

(व) तादृशस्थले अतिशयोक्तिमुदाहर्त्तुमाह यथेति। अत्र राजेत्युपमेयम्, पाकशासन इत्युप-

(१) धर्म्मान्तर इति रामचरणसम्मतः पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अपरः पाकशासनः" इति (व)। विशेषणाभावे च रूपकस्य ; यथा—"राजा पाकशासनः" इति (श)। तदेवं द्वात्रिंशत्प्रकाराः प्रतीयमानोत्प्रेक्षाः ।

६१ । उक्त्यनुक्त्योः प्रस्तुतस्य प्रत्येकं ता अपि द्विधा । (ष)

ता उत्प्रेक्षाः । उक्तौ यथा—"ऊरुः कुरङ्गकदृशः" इति (स)। अनुक्तौ यथा मम प्रभावत्याम्—"प्रद्युम्नः । इह हि सम्प्रति प्रतिदिगन्तमाच्छादयता तिमिरपटलेन—(ह)

घटितमिवाञ्जनपुञ्जैः पूरितमिव मृगमदक्षोदैः ।
ततमिव तमालतरुभिर्वृतमिव नीलांशुकैर्भुवनम् ॥" (च)

अत्र अञ्जनेन घटितत्वादेरुत्प्रेक्षणीयस्य विषयव्याप्तत्वं नोपात्तम् (क)। यथा वा—(ख)

---

मानम्, द्वितीयस्य पाकशासनस्याभावादपर इति चासम्भवं विशेषणम्। एवञ्चात्र सम्भावनावाचकानामिवादीनामभावात् असम्भवविशेषणयोगाच्च अध्यवसायस्यैव प्रतीतेरतिशयोक्तिरेवेति भावः।

(श) विशेषणेति। विशेषणाभावे असम्भवविशेषणाभावे चकारादिवाद्यभावे च; रूपकस्य अभ्युपगमादिति पूर्वेणान्वयः। तत्र तूक्तादेव हेतोरारोपमात्रप्रतीते रूपकमेवेत्यभिप्रायः। एवञ्च इवाद्ययोगे सम्भवपरविशेषणयोगेऽपि च रूपकमेव। यथा—"अयं राजा पाकशासनः" "राजा महाप्रभावः पाकशासनः" इति। पाकशासनस्तु इन्द्रः।

(ष) वाच्य-प्रतीयमानयोरुभयोरपि सर्वानेव भेदान् पुनरपि द्वैविध्येन विभजते उक्तीति। ताः पूर्वोक्तभेदभिन्नाः सर्वा अपि उत्प्रेक्षाः प्रत्येकमेव, प्रस्तुतस्य प्रकृतस्य उपमेयस्येत्यर्थः, उक्त्यनुक्त्योः उपादानानुपादानयोः सम्भवन्तीति द्विधा पुनर्द्विविधा भवन्तीत्यर्थः। तेन षट्पञ्चाशत्प्रकारा वाच्योत्प्रेक्षाः, द्वात्रिंशत्प्रकाराश्च प्रतीयमानोत्प्रेक्षा इति मिलित्वा अष्टाशीतिप्रकारा उत्प्रेक्षाः, पुनश्च प्रस्तुतस्य उपादानानुपादानाभ्यां प्रत्येकमेव द्वैविध्येन समुदाये एकशतषट्सप्ततिप्रकाराः सम्पन्नाः। एतेन काव्यप्रकाशकृतः "सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्" इत्येकप्रकारमात्राभिधानं कटाक्षितम्। न च ता इत्यनेन सन्निहिताः प्रतीयमानोत्प्रेक्षा एव ग्राह्या इति वाच्यं "ता उत्प्रेक्षाः" इति वृत्तौ सामान्योत्प्रेक्षाया एवाभिधानात् "ऊरुः कुरङ्गकदृशः" इति वाच्योत्प्रेक्षाया उदाहरणाच्च।

(स) उक्ताविति। प्रस्तुतस्येति शेषः। अत्र नायिकाया ऊरुः प्रस्तुत उपमेय उक्तः।

(ह) अनुक्ताविति। अत्रापि प्रस्तुतस्येति शेषः। प्रतिदिगन्तं सर्वा दिश इत्यर्थः। तिमिरपटलेन अन्धकारसमूहेन हेतुनेत्यर्थः।

(च) घटितमिति। भुवनं जगन्मण्डलम्, अञ्जनपुञ्जैः कज्जलस्तूपैः, घटितं विहितमिव; मृगमदक्षोदैः कस्तूरीरेणुभिः पूरितं सम्भृतमिव; तमालतरुभिस्ततं व्याप्तमिव; तथा नीलांशुकैर्नीलवर्णवसनैः, वृतमावृतमिव।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।" (ग)

अत्र तमसो लेपनस्य व्यापनरूपो विषयो नोपात्तः, अञ्जनवर्षणस्य तमःसम्पातः (घ)। अनयोरुत्प्रेक्षानिमित्तञ्च तमसोऽतिबहुलत्वं धारारूपेणाधःसंयोगश्च यथासंख्यम् (ङ)।

केचित्तु "अलेपनकर्त्तृभूतमपि तमोलेपनकर्त्तृत्वेनोत्प्रेक्षितं व्यापनञ्च निमित्तम्; एवं नभोऽपि वर्षणक्रियाकर्त्तृत्वेन" इत्याहुः (च)।

---

(क) अत्रेति। उत्प्रेक्षणीयस्य अञ्जनघटितत्वादेरित्यन्वयः, उपमानभूतस्येत्यर्थः। विषयः प्रकृतमुपमेयमिति यावत् यद्व्याप्तत्वं तन्न उपात्तमुक्तम्। तथा च उक्तपद्ये तिमिरपटलेन भुवनव्यापनरूपमुपमेयं नोक्तमिति सरलार्थः।

(ख) ननु शिष्टैरपरिगृहीतमर्वाचीनं भवत्कृतपद्यमप्रमाणमित्याह यथा वेति।

(ग) लिम्पतीति। "असत्पुरुषसेवेव दृष्टिर्विफलतां गता॥" इति मृच्छकटिकप्रकरणे परार्द्धम्। तमोऽन्धकारः, अङ्गानि लिम्पतीव; तथा नभ आकाशः, अञ्जनं कज्जलं वर्षतीव।

(घ) अत्रेति। लेपनस्य उपमानस्य, व्यापनरूपः सर्वेष्वङ्गेषु निविड़सम्बन्धरूपः, प्रस्तुतमुपमेयम्। अञ्जनवर्षणस्य च उपमानस्य, तमःसम्पातः अन्धकारपतनरूपो विषयः प्रस्तुतमुपमेयमिति यावत्, नोपात्त इति पूर्वेणानुषज्यते।

(ङ) ननु किं तावदनयोरुत्प्रेक्षणनिमित्तमित्याह अनयोरिति। "लिम्पतीव" इत्यस्य "वर्षतीव" इत्यस्य चेत्यर्थः। यथासंख्यमिति। "लिम्पतीव तमोऽङ्गानि" इत्यत्र उत्प्रेक्षानिमित्तं तमसोऽतिबहुलत्वम् अतिबहुलत्वाद्घनभावेन अङ्गसंयोगः; "वर्षतीवाञ्जनं नभः" इत्यत्र च तमसो धारारूपेण अविच्छिन्नभावेन अधःसंयोग इत्यर्थः। इदन्तु अन्धकारस्य द्रव्यत्ववादिमतमाश्रित्याभिहितमिति बोध्यम्; अन्धकारस्य आलोकसामान्याभावरूपत्ववादिमते तु तस्य संयोगासम्भवात्, "गुणादिर्निर्गुणक्रियः" इत्यभिधानात्। तथा चोक्तम्—

"तमस्तमालवर्णाभं चलतीति प्रतीयते। रूपवत्त्वात् क्रियावत्त्वात् द्रव्यन्तु दशमं तमः॥" इति।

(च) केचिदिति। अलेपनकर्त्तृभूतमपीति। तैलादिवत्तमसस्तरलत्वाभावेन तत्कर्त्तृकलेपनासम्भवादिति भावः। व्यापनं तमसः सर्वाङ्गसम्बन्धः। नभोऽपीति निष्क्रियत्वादसम्भवाच्च अनञ्जनवर्षणकर्त्तृभूतमपि नभ इत्यर्थः। अञ्जनस्य वर्षणक्रियाकर्त्तृत्वेन उत्प्रेक्षितमिति पूर्वेणान्वयः। अत्र तेषामयमाशयः—लिम्पतीत्यत्र वर्षतीत्यत्र च धातूपस्थापिता लेपनक्रिया वर्षणक्रिया च, तिङुपस्थापितश्च तयोः कर्त्ता, कर्त्तुश्च प्रयोजकत्वात् प्राधान्यम्। तेन क्रियाकर्त्रोर्द्वयोरेवोत्प्रेक्षणसम्भवे "अव्यक्तं प्रधानगामि" इति पूर्वमीमांसासूत्रन्यायेन उभयत्रापि कर्त्तुरेवोत्प्रेक्षणमिति जात्युत्प्रेक्षैवेति। ग्रन्थकारस्तु मन्यते कर्त्तुः कारकान्तरप्रयोजकत्वात् तेभ्य एव प्राधान्यम्, न तु क्रियातः। किञ्च, क्रियायाः प्रतीतिपर्य्यवसानस्थानत्वात्तस्या एव विशेष्यत्वेन शाब्दबोधे प्राधान्यमिति लेपनवर्षणयोरुत्प्रेक्षणस्यैव न्याय्यत्वात् क्रियोत्-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

६२ । अलङ्कारान्तरोत्था सा वैचित्र्यमधिकं वहेत् (१) ॥ (छ)

तत्र सापह्नवोत्प्रेक्षा (ज) यथा मम—

"अश्रुच्छलेन सुदृशो हुतपावक-धूम-कलुषाक्ष्याः ।
अप्राप्य मानमङ्गे विगलति लावण्यवारिपूर इव ॥" (झ)

श्लेषहेतुगा (ञ) यथा—

"मुक्तोत्करः सङ्कटशुक्तिमध्याद्विनिर्गतः सारसलोचनायाः ।
जानीमहेऽस्याः कमनीयकम्बु-ग्रीवाधिवासाद्गुणवत्त्वमाप ॥" (ट)

अत्र गुणवत्त्वे श्लेषः, कम्बुग्रीवाधिवासादिवेति हेतूत्प्रेक्षाया हेतुः (ठ)। अत्र "जानीमहे" इत्युत्प्रेक्षावाचकम् (ड)। एवम्—(ढ)

---

प्रेक्षैवेति। तदयमेवास्वरसः केचिदित्यनेन सूचितः। काव्यप्रकाशकृतापि "व्यापनादि लेपनादिरूपतया सम्भावितम्" इत्युक्त्वा क्रियोत्प्रेक्षैव स्वाभिमतेति द्योतितम्। रामचरणतर्कवागीशस्तु—"नभसोऽञ्जनवर्षणकर्तृत्वेन सम्भावनायां प्रकृतस्योपमेयस्य तमसो बोधो दुर्घट इत्यस्वरसः केचिदित्यनेन सूचितः" इत्याह स्म।

(छ) इदानीं कश्चित् फलितार्थमाह अलङ्कारेति। सा उत्प्रेक्षा, अलङ्कारान्तरात् उत्थमुत्थानमुत्पत्तिर्यस्याः सा तादृशी सती, अधिकं वैचित्र्यं वहेत् बिभृयात्।

(ज) तत्रेति। अपह्नवेन अपह्नुत्या सहेति सापह्नवा अपह्नुत्यलङ्कारमूलेत्यर्थः।

(झ) अश्र्विति। यत्र प्रवसतः सपत्नीकस्य कस्यचित् पत्न्या अश्रुपातमवलोक्योक्तिरियम्। हुतपावकस्य प्राप्तघृताहुतेर्वह्नेर्यज्ञीयवह्नेः धूमेन कलुषे आविले अक्षिणी चक्षुषी यस्यास्तस्यास्तथोक्तायाः सुदृशः सुलोचनाया अस्याः, अश्रुच्छलेन नयनजलव्याजेन लावण्यवारिणः पूरः प्रवाहः, अङ्गे मानम् अवस्थितिस्थानम्, अप्राप्येव विगलति।

अत्र प्रकृतमश्रु प्रतिषिध्य उपमानभूतलावण्यवारिपूरस्थापनादपह्नुतिः, तन्मूला चेयं क्रियोत्प्रेक्षा अधिकवैचित्र्यावहेत्यनुभाव्यम्।

(ञ) श्लेषेति। श्लेष एव हेतुरुत्थापकस्तं गच्छतीति श्लेषहेतुगा श्लेषमूलेत्यर्थः। उत्प्रेक्षेत्यनुषज्यते।

(ट) मुक्तोत्कर इति। सङ्कटं स्ववर्गपरिपूर्णत्वादवकाशशून्यं यत् शुक्तेर्मध्यमभ्यन्तरदेशस्तस्मात्, विनिर्गतो मुक्तानामुत्करः पुञ्जः, सारसे पद्मे इव लोचने यस्यास्तस्याः अस्या दृश्यमानायाः कामिन्याः, कमनीया मनोज्ञा या कम्बुग्रीवा शङ्खसदृशी गलदेशस्तस्याम् अधिवासादवस्थानात्, गुणवत्त्वं सूत्रवत्त्वम् उत्कृष्टस्थाने निवासादुत्कर्षधर्मवत्त्वञ्च आप लब्धवान् इति जानीमहे वयं सम्भावयामः।

(ठ) अत्रेति। गुणवत्त्वे गुणवत्त्वशब्दे श्लेषः सूत्रवत्त्वोत्कर्षवत्त्वरूपार्थद्वययोगः। हेतुरिति। तादृशहेतूत्प्रेक्षाया उत्थापकत्वादिति भावः।

---

(१) भवेदिति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

६३ । मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः (१) । (ण)

क्वचिदुपमोपक्रमोत्प्रेक्षा (त) यथा—

"पारेजलं नीरनिधेरपश्यन्मुरारिरानीलपलाशराशीः ।

वनावलीरुत्कलिकासहस्र-प्रतिक्षणोत्कूलितशैवलाभाः ॥" (थ)

इत्यत्र आभाशब्दस्य उपमावाचकत्वादुपक्रमे उपमा, पर्य्यवसाने तु जलधितीरे शैवालस्थितेः सम्भावनानुपपत्तेः सम्भावनोत्थानम् (२) इत्युत्प्रेक्षा (द)। एवं विरहवर्णने—"केयूरायितमङ्गदैः" इत्यत्र "विकासिनीलोत्पलति स्म कर्णे मृगायताक्ष्याः कुटिलः कटाक्षः" इत्यादौ च ज्ञेयम् (ध)।

---

(ड) अत्रेति। अतएवात्र वाच्योत्प्रेक्षा इत्याशयः।

(ढ) एवमिति। "जानीमहे" इतिवत् उत्प्रेक्षावाचकाः शब्दा इत्यर्थः।

(ण) मन्य इति। अत्रादिशब्दात् इव, किम्, न खलु इत्यादीनां ग्रहणम्।

(त) क्वचिदिति। उपमा उपक्रमे प्रारम्भे यस्याः सा तथोक्ता उत्प्रेक्षा।

(थ) पारे इति। पद्यमिदं शिशुपालवधद्वतीयसर्गे। मुरारिर्हरिः नीरनिधेः सागरस्य पारेजलं जलस्य पारे तीरे इत्यर्थः, आनीलां गाढ़नीलवर्णाः पलाशराशिः पत्रपुञ्जो यासां ताः, तथा उत्कलिकासहस्रेण तरङ्गसमूहेन, प्रतिक्षणं क्षणं क्षणं उत्कूलितानां कूलमुन्नीतानां शैवलानाम् आभेव आभा यासां तास्तथोक्ताः वनानामावलीः श्रेणीः अपश्यत्।

(द) इतीति। सम्भावनाया मनसि करणस्य अनुपपत्तेरसम्भवात्, शैवालानां जल एवावस्थानादिति भावः। सम्भावनाया उत्प्रेक्षाघटिकाया इत्यर्थः, उत्थानमाविर्भावः। तथा च जलस्थितानां शैवालानां तीरस्थिततया सम्भावनेति भावः।

(ध) एवमिति। अङ्गदैर्वलयैः केयूरायितं भुजमध्यभागधारणीयकेयूरवदाचरितम्। अत्र आयिप्रत्ययस्य उपमावाचकतया उपक्रमे उपमा, पर्य्यवसाने तु अङ्गदानां भुजमध्यभागे धारणासम्भवेन सम्भावनाया उत्थानादुत्प्रेक्षेत्याशयः।

विकासीति। मृगस्येव आयते दीर्घे लोचने यस्यास्तस्याः, कुटिलो वक्रः कटाक्षो दृष्टिपातः, कर्णे, विकासि प्रस्फुटितं यत् नीलोत्पलं तद्वदाचरति स्म।

---

(१) अत्र "उत्प्रेक्षावाचकाः शब्दाः" इत्येवमनभिधानात् "इत्युत्प्रेक्षावाचकम्।" एवम्, "मन्ये शङ्के" इति वृत्तिपाठेन समन्वयाच्च "मन्ये" इत्यादिको वृत्तिपाठ एवेति प्रतीयते। तथापि तु सर्वेष्वेव पुस्तकेषु कारिकाभावेन विन्यासदर्शनादस्माभिरपि तथैव विन्यस्तम्।

(२) सम्भावनोत्थानमिति पाठोऽत्र।

CC-0. Mahamahopadhyaya Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भ्रान्तिमदलङ्कारे "मुग्धा दुग्धधिया—" इत्यादौ भ्रान्तानां वल्लवादीनां विषयस्य चन्द्रिकादेर्ज्ञानमेव नास्ति, तदुपनिबन्धनस्य कविनैव कृतत्वात्। इह तु सम्भावनाकर्त्तृर्विषयस्यापि ज्ञानमिति द्वयोर्भेदः (न)। सन्देहे तु समकक्षतया कोटिद्वयस्य प्रतीतिः, इह तु उत्कटा सम्भाव्यभूतैका कोटिः (प)। अतिशयोक्तौ विषयिणः प्रतीतस्य पर्य्यवसाने असत्यता प्रतीयते, इह तु प्रतीतिकाल एवेति भेदः (फ)।

---

अत्रापि क्विप्प्रत्ययस्य आयिलोपस्य च उपमावाचकतया उपक्रमे उपमा, परन्तु कर्णे कटाद्यवस्थितेरसम्भवात् सम्भावनाया उत्थानेन उत्प्रेक्षेति भावः।

(न) ननु "ऊरुः कुरङ्गकदृशः" इत्यादौ नायिकोरुप्रभृतौ स्मरविजयस्तम्भप्रभृतिभ्रमाद्भ्रान्तिमानलङ्कारः किं न स्यादित्याह भ्रान्तिमदिति। भ्रान्तानां भ्रमविशिष्टानाम्। विषयस्य उपमेयस्य। नास्तीति। शुक्तिकादौ रजतादिभ्रान्तिमतः शुक्तिकादिज्ञानवदिति भावः। अथ तर्हि कुतोऽस्माभिश्चन्द्रिकादिर्ज्ञायत इत्याह तदुपनिबन्धनस्येति। विषयभूतचन्द्रिकादेरुल्लेखस्येत्यर्थः। इह तु उत्प्रेक्षायान्तु। विषयस्यापि न केवलं विषयिण उपमानस्य स्मरविजयस्तम्भप्रभृतेः, किन्तु ऊरुप्रभृतेरुपमेयस्यापीत्यर्थः। तथा च शुक्तिकामवलोक्य 'रजतमिदम्' इति ज्ञानरूपे भ्रमे केवलं रजतमेवावभासते, न तु शुक्तिका; भ्रमस्य निश्चयरूपतया एकमात्रविषयकत्वात्। स्थाणुपुरुषोभयरूपतया सन्दिह्यमानं पदार्थं दूरतो विलोक्य कुतश्चित् कारणात् "मन्ये स्थाणुरेवायम्" इति ज्ञानरूपायां सम्भावनायान्तु स्थाणुः कथमपि निश्चितरूपत्वेनावभासते पुरुषस्तु अनिश्चितरूपत्वेन, सम्भावनायाः संशयविशेषरूपतया अनेकविषयकत्वात्। तेन च भ्रमसम्भावनयोर्भेदेन यत्र वाक्योपात्तस्य प्राणिनो भ्रमस्तत्र भ्रान्तिमान्, यत्र तु सम्भावना तत्रोत्प्रेक्षेत्याशयः।

(प) ननु सम्भावनायाः संशयरूपत्वे "ऊरुः कुरङ्गकदृशः" इत्यादौ सन्देहालङ्कार एवास्तामित्याह सन्देहे त्विति। समकक्षतया समानभावेन, कोटिद्वयस्य विषयद्वयस्य। इह तु उत्प्रेक्षायान्तु, उत्कटा कथञ्चिन्निश्चितरूपा। एतदेव परिष्कर्त्तुमाह सम्भाव्यभूतेति। सम्भवपरत्वेन ज्ञायमानेत्यर्थः। एका कोटिरेको विषयः। अतः सन्देहोत्प्रेक्षयोर्भेदात् "ऊरुः कुरङ्गकदृशः" इत्यादौ स्मरविजयस्तम्भादिरूपे एकस्मिन्नेव विषये उत्कटप्रतीतेश्च उत्प्रेक्षैवेति भावः।

(फ) अथ तर्हि अध्यवसायस्यापि सम्भावनारूपतया ऊरुरित्यादावतिशयोक्तिरस्त्वित्याह अतिशयोक्ताविति। विषयिण उपमानस्य, प्रतीयस्य अन्वयबोधकाले सत्यतया ज्ञातस्य सतः पर्य्यवसाने सम्पूर्णान्वयबोधादनन्तरमित्यर्थः, असत्यता प्रतीयते; साक्षादसत्यताप्रतिपादकानामिवादिशब्दानामन्वयानुपपत्तेश्चाभावात् परन्तु पर्य्यालोचनया असम्भवबोधादिति भावः। इह तु उत्प्रेक्षायान्तु, प्रतीतकाल एव विषयिणः असत्यता प्रतीयत इति पूर्वेणान्वयः; वाच्योत्प्रेक्षायां साक्षादसत्यताप्रतिपादकानामिवादिशब्दानां प्रतीयमानोत्प्रेक्षायान्तु अन्वयानुपपत्तेः सत्त्वादित्याशयः। अतश्च भेदात् "ऊरुः कुरङ्गकदृशः" इत्यादौ शाब्दबोधसमानकाल एव स्मरविजयस्तम्भादेरसत्यताप्रतीतेरुत्प्रेक्षैवेति बोध्यम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु ।
पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण ॥" (ब)

इत्यत्र यत्तर्वादौ तिमिराक्रान्तता रञ्जनादिरूपेण सन्दिह्यत इति सन्देहालङ्कार इति केचिदाहुः ; तन्न, एकविषये समानबलतया अनेककोटिस्फुरणस्यैव सन्देहत्वात् । इह तु तर्वादिव्याप्तेः प्रतिसम्बन्धिभेदो व्यापनादेर्निगरणेन रञ्जनादेः स्फुरणाच्च (भ) । अन्ये तु "अनेकत्वनिर्द्धारणरूपविच्छित्त्याश्रयत्वेनैककोट्यधिकोऽपि (१) भिन्नोऽयं सन्देहप्रकारः" इति वदन्ति स्म (म) । तदप्ययुक्तम् ; निगीर्णस्वरूपस्यान्यतादात्म्य-

(ब) अलङ्कारसर्वस्वकारमतं निरसितुमुदाहरति रञ्जितेति । किरातार्जुनीयनवमसर्गस्थमिदं पद्यम् । तिमिरेण अन्धकारेण, विविधास्तरुशैला उच्चनीचादिनानाप्रकारा वृक्षपर्वताः, रञ्जिता नु लिप्ताः किम् ? । गगनमाकाशं नामितं नु भूतलपर्यन्तं पातितं किम् ? । अथवा स्थगितं नु संवृतं किम् ? । धरित्री भूमण्डलं विषमेषु उच्चनीचदेशेषु पूरिता नु पूरणेन समीकृता किम् ? । ककुभो दिशश्च संहृता नु सङ्कोचिताः किम् ? ।

(भ) इत्यत्रेति । यत् आहुरिति परेणान्वयः । रञ्जनादिरूपेणेति । "अयं मार्त्तण्डः किम् ?" इत्यादौ राजा मार्त्तण्डादिरूपेणेवेति भावः । केचिदलङ्कारसर्वस्वकारादयः । एकस्मिन् विषये स्थले । अनेककोटिस्फुरणस्यैव अनेकपक्षकज्ञानस्यैव । तर्वादिव्याप्तेस्तिमिरकर्त्तृकतरुप्रभृतिव्यापनस्य, प्रतिसम्बन्धिषु तरु-शैलप्रभृतिप्रत्येकसम्बन्धिपदार्थेषु भेदो रञ्जनाद्येकैकरूपेणैव भिन्नत्वम्, न पुनर्ज्ञानस्य कुत्राप्यनेककोटिकत्वमित्यतो नायं सन्देह एवेति भावः । ननु "व्याप्ता नु रञ्जिता नु" "व्याप्तं नु नामितं नु" इत्याद्यनेककोटिकज्ञानरूपा बहव एवामी सन्देहा इति मालोपमादिवत् मालासन्देहालङ्कार एवास्तामित्याह व्यापनादेरिति । निगरणेन अनुक्तिवशादपलापेन । स्फुरणं प्रकाशो ज्ञानमिति यावत् । मुख्यसन्देहे तु एकस्याः कोटेर्निगरणम् अपरस्याश्च स्फुरणमित्येवं वैषम्यमेव न भवति, तत्र हि कोटिद्वयस्य समानभावेनैव प्रतीतिनियमात् । अतश्चात्र न सन्देहः, किन्तु सम्भावनैवेत्याशयः ।

(म) अन्ये त्विति । अनेकत्वेन रञ्जन-नामनादिबहुतरप्रकारेण निर्द्धारणरूपा ज्ञानरूपा या विच्छित्तिश्चमत्कारिता तस्या आश्रयत्वेन हेतुना । अयन्तु अलङ्कारावश्यकतां प्रति हेतुरिति बोध्यम् । एकस्यां कोटौ रञ्जनादिपक्षे अधिकोऽपि प्रबलोऽपि, भिन्नः साधारणसन्देहाद्विजातीयः । अत्रायं सरलार्थः—समानभावेन द्विकोटिकं ज्ञानमेव संशय इति वयमप्यङ्गीकुर्म्म एव, "रञ्जिता नु" इत्यादौ तु ज्ञानस्य व्यापनादिपक्षे दुर्बलत्वात् रञ्जनादिपक्षे च प्रबलत्वात् तादृशसंशयरूपः सन्देहालङ्कारो न भवत्येव इत्यपि स्वीकुर्म्म एव, किन्तु तथापि नानाप्रकारं विकल्प्यापि अनिश्चितत्वेन चमत्कारिताविशेषावगमात् कस्यचिदलङ्कारस्यावश्यकत्वात् अन्यस्य चासम्भवात् एकस्यां कोटौ प्रबलीभूतसंशयरूपः कश्चिद्विजातीय एवात्र सन्देहालङ्कार इति ब्रूम इति ।

(१) एककोट्यधिकोऽप इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रतीतिर्हि सम्भावना, तस्याश्चात्र स्फुटतया सद्भावात् नुशब्देन च इवशब्दवत् तस्या द्योतनादुत्प्रेक्षैवेयं भवितुं युक्ता, अलमदृष्टसन्देहप्रकारकल्पनया (य)।

"यदेतच्चन्द्रान्तर्जलद-लव-लीलां वितनुते
तदाचष्टे लोकः शशक इति नो मां प्रति तथा।
अहन्त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी
कटाक्षोल्कापात-व्रण-किण-कलङ्काङ्कित-तनुम् ॥" (र)

इत्यत्र 'मन्ये'-शब्दप्रयोगेऽपि उक्तरूपायाः सम्भावनाया अप्रतीतेर्वितर्कमात्रम्, नासावपह्नवोत्प्रेक्षा (ल)।

---

(य) एतन्मतमपि दूषयति तदपीति। निगीर्णस्वरूपस्य येन केनापि प्रकारेण तिरस्कृतस्य अप्रधानीकृतस्य उपमेयस्येत्यर्थः, अन्यतादात्म्यप्रतीतिरुपमानेन सहाभेदज्ञानम्। अयन्तु उत्प्रेक्षाघटिकाया एव सम्भावनायाः परिचयः, सामान्यसम्भावनाया लक्षणन्तु प्रागेवाभिहितमिति द्रष्टव्यम्। स्फुटतया सद्भावात् स्पष्टरूपेण विद्यमानत्वात्। तथा च "रञ्जिता नु" इत्यादौ उपमेयभूतं तिमिरकर्तृकव्यापनम् उपादानाभावान्निगीर्णस्वरूपम्, उपमानभूतं रञ्जनादिकन्तु शब्देनोपादानात् प्रधानम्, तयोश्चाभेदप्रतीतिरूपा सम्भावना स्पष्टमेवानुभवगम्येति भावः। द्योतनादिति। एतेनातिशयोक्तिनिरासः सूचितः। न दृष्टः कुत्रापि नावलोकितो यः सन्देहप्रकार एककोटिप्रबलरूपो विजातीयः सन्देहस्तस्य कल्पनया अलम्। क्लृप्तेनैवोपपत्तौ नूतनकल्पनाया अनावश्यकत्वाद्गौरवाच्चेति भावः।

(र) सरस्वतीकण्ठाभरणकारमतं दूषयितुं तदुद्धृतमेवोदाहरति यदेतदिति। चन्द्रस्य अन्तर्मध्ये यदेतद्दृश्यमानं मलिनं वस्तु, जलदलवलीलां क्षुद्रमेघखण्डविभ्रमम्, वितनुते प्रसारयति; लोको जनः तद्वस्तु शशक इति आचष्टे ब्रवीति; मां प्रति तु तथा आख्यानं नो मम तु तथा न प्रतीतिरित्यर्थः। अहन्तु इन्दुं चन्द्रम्, तव अरीणां वैरिणां विरहेण वियोगवेदनया आक्रान्ता अभिभूता यास्तरुण्यस्तासां कटाक्षा एव उल्का रेखाकारास्तेजःपदार्थविशेषास्तासां पातेन पतनेन यो व्रणः क्षतं तस्य यः किणश्चिह्नं स एव च कलङ्को लाञ्छनं तेन अङ्किता चिह्निता तनुर्देहो यस्य तं तादृशं मन्ये मनसि करोमि। इति राज्ञः स्तुतिः।

"अयं मताभिधाने उत्प्रेक्षाया एव प्रकारः" इति सरस्वतीकण्ठाभरणम्।

(ल) इत्यत्रेति। उक्तरूपाया "निगीर्णस्वरूपस्य अन्यतादात्म्यप्रतीतिर्हि सम्भावना" इति प्रागुक्तायाः। अप्रतीतेरिति। उदाहृते शशक-तादृशकिणकलङ्कयोरुपमेयोपमानभावाभावात् निगीर्णस्वरूपस्योपमेयस्य उपमानेन सह तादात्म्यप्रतीतेरेव सम्भावनापदार्थत्वादिति भावः। वितर्कमात्रं केवलो वितर्काख्यव्यभिचारी भावः। नासावपह्नवोत्प्रेक्षेति। तथा च शशक-तादृशकिरणकलङ्कयोरुपमेयोपमानभावाभावात् शशकप्रतिषेधेन तादृशकलङ्कस्थापनेऽपि नापह्नुतेः प्रसक्तिः सम्भावनाया अभावाच्च नोत्प्रेक्षाया इत्याशयः। किन्तु वितर्काख्यव्यभिचारिभावो राजविषयरतिभावस्याङ्गमिति रसवदलङ्कारः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथोत्प्रेक्षाभेदसङ्कलनम् ।

प्रथमं वाच्या प्रतीयमाना चेति द्वौ भेदौ । तत्र—

स्वरूपगताः—३२

जातेः—भावाभिमाने एकः, अभावाभिमाने चैक इति द्वौ ; तयोश्च प्रत्येकमेव गुणनिमित्तकत्वात् क्रियानिमित्तकत्वाच्च द्वैविध्येन चत्वारः । ... ४

गुणस्य—उक्तरूपेण ... ... ४

क्रियायाः " ... ... ४

द्रव्यस्य " ... ... ४

१६

तेषाञ्च षोडशानां निमित्तस्य उपादानेन अनुपादानेन च द्वैविध्यात् द्वात्रिंशत्-प्रकाराः—३२ ।

वाच्याः—११२

फलगताः—१२

जातेः—भावाभिमानादिनोक्तक्रमेण ... ४

गुणस्य " ... ... ४

क्रियायाः " ... ... ४

( द्रव्यस्य तु फलोत्प्रेक्षा नास्ति ) १२

हेतुगताः—१२

५६

जातेः—भावाभिमानादिनोक्तक्रमेण ... ४

गुणस्य " ... ... ४

क्रियायाः " ... ... ४

( द्रव्यस्य हेतूत्प्रेक्षापि नास्ति ) १२

तेषाञ्च षट्पञ्चाशद्भेदानां प्रत्येकमेव प्रस्तुतस्य उक्त्या अनुक्त्या च पुनर्द्वैविध्येन द्वादशाधिकशतभेदाः सम्पद्यन्ते—११२ ।

फलगताः—१६

जातेः—भावाभिमानादिनोक्तक्रमेण ... ४

गुणस्य " ... ... ४

क्रियायाः " ... ... ४

द्रव्यस्य " ... ... ४

( प्रतीयमानायां स्वरूपोत्प्रेक्षा नास्ति ) १६

प्रतीयमानाः—६४

हेतुगताः—१६

३२

जातेः—भावाभिमानादिनोक्तक्रमेण ... ४

गुणस्य " ... ... ४

क्रियायाः " ... ... ४

द्रव्यस्य " ... ... ४

१६

तेषाञ्च द्वात्रिंशद्भेदानां प्रत्येकमेव पूर्ववत् प्रस्तुतस्य उक्त्या अनुक्त्या च पुनर्द्वैविध्येन चतुःषष्टिभेदाः सम्पद्यन्ते—६४ ।

समुदायेन—१७६

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ६४ । सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते ॥ (व)

विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः (श)। अस्य चोत्प्रेक्षायां विषयिणोऽनिश्चितत्वेन निर्देशात् साध्यत्वम्; इह तु निश्चितत्वेनैव प्रतीतिरिति सिद्धत्वम् (ष)। विषयनिगरणञ्चोत्प्रेक्षायां विषयस्याधःकरणमात्रेण, इहापि "मुखं द्वितीयश्चन्द्रः" इत्यादौ (स)।

---

(व) निरुक्तसम्भावनारूपामुत्प्रेक्षां निरूप्येदानीं किञ्चिद्विभिन्नतत्सम्भावनारूपामेवातिशयोक्तिं निरूपयति सिद्धत्व इति। अध्यवसायस्य यथार्थे वस्तुनि अयथार्थवस्तुरूपेण निरुक्तसम्भावनाया एव सिद्धत्वे निश्चयरूपतया निष्पन्नत्वे कविप्रौढोक्तिवशात् संशयभागे विलीन इव केवलनिश्चयरूपतया परिणतत्वे सतीत्यर्थः, अतिशयोक्तिर्नाम अलङ्कारो निगद्यते। अतएव च अतिशयेन सम्भवातिरेकेण योग्यतातिक्रमेण वा उक्तिरतिशयोक्तिरिति व्युत्पत्तिः। तथा चोक्तं काव्यादर्शे—

"विवक्षा या विशेषस्य लोकसीमातिवर्त्तिनी। असावतिशयोक्तिः स्यादलङ्कारोत्तमा यथा॥"

अग्निपुराणे च—"लोकसीमातिवृत्तस्य वस्तुधर्मस्य कीर्त्तनम्।

भवेदतिशयो नाम सम्भवोऽसम्भवो द्विधा॥"

एतेन यथार्थस्य अयथार्थरूपेण निश्चयरूपा सम्भावना अतिशयोक्तिरिति लक्षणं फलितम्। यथार्थस्य निगीर्णस्वरूपस्य। सम्भावनाया निश्चयरूपत्वञ्च प्रतीतिकाल एवेति शाब्दबोधादनन्तरं मिथ्यात्वप्रतीतावपि न दोषः। सा चात्र सम्भावना साध्यवसानाख्यलक्षणयैव सम्पद्यत इति चावधेयम्। तेन सारोपाख्यलक्षणामूलके रूपके नातिव्याप्तिः। उत्प्रेक्षायां वाच्यायामिवादिशब्दसद्भावात् प्रतीयमानायाञ्च अन्वयानुपपत्तेः सम्भावना संशयरूपा, इह तु इवादिशब्दाभावादन्वयोपपत्तेश्च सम्भावना निश्चयरूपेत्युत्प्रेक्षायां नातिप्रसङ्गः। निश्चयान्तसन्देहे प्रथमं संशयसद्भावः, इह तु कविप्रौढोक्तिवशेन सर्वदैव संशयाभाव इति तादृशसन्देहालङ्कारेऽपि नातिव्याप्तिः। "मुग्धा दुग्धधिया" इत्यादौ भ्रमस्य एककोटिकतया भ्रान्तानां वल्लवादीनां चन्द्रिकादेर्यथार्थपदार्थस्य ज्ञानं नास्त्येव, इह तु सम्भावनाया द्विकोटितया सम्भावनाकर्त्तुर्यथार्थायथार्थयोरुभयोरेव पदार्थयोर्ज्ञानमस्तीति भ्रान्तिमदलङ्कारेऽपि नातिप्रसङ्ग इत्यवधेयम्।

(श) अध्यवसायं निरूपयति विषयेति। यस्मिन्नध्यवसीयते स विषयो यथार्थं वस्त्वित्यर्थः, तस्य निगरणेन अधःकरणेन यथा कथञ्चिदप्रधानीकरणेनेति यावत्, यः खल्वध्यवसीयते स विषयी अयथार्थं वस्त्वित्यर्थः, तस्य अभेदप्रतिपत्तिरभेदसम्भावना अध्यवसायः, निगीर्णरूपेण यथार्थवस्तुना सह अयथार्थस्य वस्तुनः अभेदज्ञानमध्यवसाय इत्यर्थः।

(ष) सिद्धत्वे इत्यस्य व्यावृत्तिप्रदर्शनमुखेन उत्प्रेक्षातः अस्या भेदान्तरं प्रदर्शयति अस्येति। अध्यवसायस्य चेत्यर्थः। विषयिणः अयथार्थवस्तुनः अनिश्चितत्वेन, संशयविशेषरूपसम्भावनाप्रतिपादकानामिवादिशब्दानां सत्त्वात् संशयितत्वेन निर्देशात् व्यवस्थापनात्, साध्यत्वं युक्त्यादिना निष्पाद्यत्वम्; इह तु अतिशयोक्तौ तु, निश्चितत्वेनैव प्रतीतिर्विषयिण इति सम्बन्धः, इति हेतोः, सिद्धत्वं स्वयमेव निष्पन्नत्वम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यदाहुः—(छ) "विषयस्यानुपादानेऽप्युपादानेऽपि सूरयः ।
अधःकरणमात्रेण निगीर्णत्वं प्रचक्षते ॥" (च)

९५ । भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्य्ययौ ।
पौर्वापर्य्यात्ययः कार्य्यहेत्वोः सा पञ्चधा ततः ॥ (क)

यथा च लोके दूरतः पुरुषवद्दृश्यमाने वस्तुनि "अयं पुरुषो न वा" इति सन्देहे क्रमिक-करचरणादिदर्शनेन "अयं पुरुष एव" इत्यभेदप्रतिपत्तिः प्रागसिद्धा साध्यते, किन्तु शुक्तिकामवलोक्य "इदं रजतम्" इति निश्चये तु अभेदप्रतिपत्तिः सिद्धैवेति न तस्याः साधनापेक्षा, तद्वदिहापीति भावः। एतेन अभेदप्रतिपत्तेः साध्यत्व-सिद्धत्वाभ्यामुत्प्रेक्षातिशयोक्त्योरुक्तातिरिक्तः कश्चिद्भेदोऽपि दर्शितः ।

(ख) ननु उत्प्रेक्षायां विषयनिगरणाभावादेव विषयनिगरणघटितस्य अस्य लक्षणस्यातिव्याप्तिर्न भविष्यति किं पुनः सिद्धत्व इति विशेषणेनेत्याह विषयेति। विषयस्य यथार्थपदार्थस्य, अधःकरणमात्रेण केवलेनाप्रधानीकरणेन। इयमभेदे तृतीया। तथा च विषयस्याधःकरणरूपं विषयनिगरणम् उत्प्रेक्षायां "मुखं द्वितीयश्चन्द्रः" इत्यादौ इह अतिशयोक्तावपि च विद्यत एवेत्यर्थः। एवञ्च समानविषयतया उत्-प्रेक्षायामतिव्याप्तिसम्भवात् तद्वारणाय सिद्धत्व इति विशेषणं देयमेवेति भावः। अत्रेदमवधेयम्—यथा घटे पल्लवारोपणे घटस्याधःकरणं सम्पद्यते, तथा यथार्थे वस्तुनि अयथार्थवस्तुनः सम्भावनायाम् अध्यवसाये च सति यथार्थवस्तुनः अधःकरणमुपजायते। तत्र "ऊरुः कुरङ्गकदृशः" इत्यादौ नायिकाया ऊरुरूपे यथार्थे वस्तुनि "सम्भावयामि यदयं स्मरस्य विजयस्तम्भः" इत्येवंरूपम्, "मुखं द्वितीयश्चन्द्रः" इत्यादौ च नायिकाया मुखरूपे यथार्थे वस्तुनि "मन्ये यदयं द्वितीयश्चन्द्र एव" इत्येवंरूपञ्च ।

(छ) विषयस्याधःकरणमेव विषयनिगरणमित्यर्थे प्राचीनसंवादं दर्शयितुमाह यदाहुरिति ।

(च) विषयस्येति। सूरयः पण्डिताः, विषयस्य यथार्थपदार्थस्य अनुपादाने अनुल्लेखेऽपि उपादाने उल्लेखेऽपि वा सति, अधःकरणमात्रेण केवलेन विषयस्य अप्रधानीकरणेनैव, इयमपि पूर्ववदभेद एव तृतीया, निगीर्णत्वं विषयस्य निगरणं प्रचक्षते ब्रुवन्ति ।

(क) इदानीमतिशयोक्तिं विभजते भेद इति। भेदेऽपि अभेदः यथार्थादयथार्थस्य भिन्नत्वेऽपि तद-भिन्नत्वेन सम्भावना, यथार्थस्य सम्बन्धेऽपि असम्बन्धः असम्बन्धसम्भावना, तयोर्विपर्य्ययौ वैपरीत्यद्वयम्, तथा च यथार्थायथार्थयोरभेदेऽपि भेदसम्भावना, यथार्थस्य असम्बन्धेऽपि सम्बन्धसम्भावनेत्यर्थः, तथा कार्य्यहेत्वोः कार्य्यकारणयोः पौर्वापर्य्यात्ययः पूर्ववर्त्तित्व-परवर्त्तित्वयोर्वैपरीत्यम्, अत्र आसत्तिक्रमेणैवान्वयो न तु यथा-संख्येनेति बोध्यम्। तथा च कारणस्य पूर्ववर्त्तित्वं कार्य्यस्य च परवर्त्तित्वं नियतमेव तत्र यदि कारणात् कार्य्यस्य पूर्ववर्त्तित्वसम्भावना समकालवर्त्तित्वसम्भावना वा स्यात् तदेत्यर्थः; ततः कारणात् सा अतिशयोक्तिः पञ्चधा पञ्चप्रकारा स्यात्। तथा च भेदे अभेदः, अभेदे भेदः, सम्बन्धे असम्बन्धः, असम्बन्धे सम्बन्धः, कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययश्चेति ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तद्विपर्य्ययौ अभेदे भेदः, असम्बन्धे सम्बन्धः । सा अतिशयोक्तिः ।

अत्र (ख) भेदे अभेदो यथा मम—

"कथमुपरि कलापिनः कलापो विलसति तस्य तलेऽष्टमीन्दुखण्डम् ।
कुवलययुगलं ततो विलोलं तिलकुसुमं तदधः प्रवालमस्मात् ॥" (ग)

अत्र कान्ताकेशपाशादेर्मयूरकलापादिभिरभेदेनाध्यवसायः (घ) । यथा वा—(ङ) "विश्लेषदुःखादिव बद्धमौनम् ।" अत्र चेतनगतं मौनित्वमन्यत्, अचेतनगतञ्चान्यदिति द्वयोर्भेदेऽप्यभेदः (च) ।

एवम्—(छ) "सह्याधरदलेनास्या यौवने रागभाक् प्रियः ।" (ज)

---

(ख) अत्रेति । एषु पञ्चसु भेदेषु मध्ये इत्यर्थः ।

(ग) कथमिति । कस्याश्चिन्नायिकायाः केशादिवर्णनमिदम् । उपरि भागे मस्तक इत्यर्थः, कलापिनो मयूरस्य कलापः पुच्छं कथम्, केशपाशं मयूरपुच्छमेव सम्भावयामीत्यर्थः । कथमिति सम्भावनार्थकमव्ययम् । तथा च मेदिनी—"कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे । प्रश्ने सम्भावनायाञ्च ।" तस्य कलापस्य तले अधोभागे अष्टम्यास्तिथेः इन्दुखण्डं चन्द्रस्यार्द्धभागः, विलसति शोभते कथम्, ललाटदेशम् अर्द्धचन्द्रमेव सम्भावयामीत्यर्थः । ततस्तस्मादधोदेशे च विलोलं चञ्चलम्, कुवलययुगलम् इन्दीवरद्वयं विलसति कथम्, नयनयुगलं कुवलययुगलमेव सम्भावयामीत्यर्थः । तस्य च कुवलययुगलस्य अधः, तिलकुसुमं कथम्, नासिकायां तिलकुसुममेव सम्भावयामीति तात्पर्य्यम् । अस्मात् तिलकुसुमादधश्च प्रवालं विद्रुमः कथम्, ओष्ठञ्च प्रवालमेव सम्भावयामीत्यर्थः ।

(घ) अत्र ति । उदाहृते नायिकायाः केशपाशादिरूपेणैव प्रत्यक्षगोचरतया केशपाशादय एव यथार्थाः कलापादिरूपेण तु अप्रत्यक्षया ते पुनरयथार्था इति केशपाशादीनां कलापादिरूपेणाध्यवसायान्मूललक्षणसङ्गतिः । तथा केशपाशादिभ्यः कलापादीनां भेदेऽपि अभेदाध्यवसायात् भेदे अभेदाध्यवसायरूपातिशयोक्तिरिति च बोध्यम् ।

(ङ) स्वरचितस्याप्रामाण्याशङ्कया प्राचीनमुदाहर्त्तुमाह यथा वेति ।

(च) अत्रेति । अत्र परस्परात्यन्तभेदद्योतनाय अन्यशब्दोद्वयोपादानम् । तथा च मुनेर्भावो मौनं तदस्यास्तीति मौनी तस्य भावो मौनित्वं तदपि च मौनमेव, "तद्धितस्य त्व-तल्भ्यां क्वचित् सम्बन्धाभिधानं क्वचित् सम्बन्धिनश्च" इत्यभिधानात् । अतो बद्धमौनमित्यनेन सह नोक्तिवैषम्यम् । एवञ्च मनुष्यात्मकचेतनगतं मौनित्वं नाम वाक्यशून्यत्वं तच्च अभिधयैव प्रतिपाद्यम्, नूपुराद्यचेतनगतं मौनित्वञ्च शब्दमात्रशून्यत्वं तच्च लक्षणया बोध्यम्; ततश्चोभयोर्भेदेऽपि श्लेषादिस्थले युगपद्वृत्तिद्वयाङ्गीकारेण शब्दबोध्यस्यैव यथार्थस्य शब्दशून्यत्वरूपमौनित्वस्य शब्दबोध्येनैव अयथार्थेन वाक्यशून्यत्वलक्षणमौनित्वरूपेण सम्भावनया अभेदाध्यवसायादतिशयोक्तिरिति भावः ।

(छ) इत्यत्र शक्तिलक्षणोभयनिष्पादितश्लेषेणोदाहृत्य केवलशक्तिनिष्पादितश्लेषेणाप्युदाहर्त्तुमाह एवमिति ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र अधरस्य रागो लौहित्यम्, प्रियस्य रागः प्रेम, द्वयोरभेदः (झ) ।

अभेदे भेदो यथा—

"अन्यदेवाङ्गलावण्यमन्याः सौरभसम्पदः ।
तस्याः पद्मपलाशाक्ष्याः सरसत्वमलौकिकम् ॥" (ञ)

सम्बन्धे असम्बन्धो यथा—

"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजड़ः कथं नु विषयव्यावृत्तकौतूहलो
निर्म्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥" (ट)

---

(ज) सह्येति । "सुस्मितेन सम प्रायो मानसे शुचिमानपि ॥" इति मत्पूरितपरार्द्धम् ।

प्रियो वल्लभः, यौवने अस्या नायिकायाः, अधरदलेन ओष्ठपल्लवेन सह रागं लौहित्य प्रेम च भजत इति रागभाक्, ओष्ठदलं यथा रक्तं प्रियोऽपि तथैव रक्त इत्यर्थः ।

(झ) अत्रेति । लौहित्यप्रेमणाभेदेऽपि शक्तिप्रतिपाद्यरागशब्दस्य श्लेषेण प्रिये यथार्थस्य प्रेमरूपरागस्य प्रिये अयथार्थेन लौहित्यलक्षणरागरूपेण सम्भावनया अभेदाध्यवसायादतिशयोक्तिरित्याशयः ।

(ञ) अन्यदेवेति । तस्याः पद्मस्य पलाशे दले इव अक्षिणी चक्षुषी यस्यास्तस्याः नायिकायाः, अङ्गानां लावण्यम् अन्यत् साधारणनायिकालावण्यतो भिन्नम् ; सौरभसम्पदः अङ्गानां सौगन्ध्यसमृद्धयः, अन्याः साधारणविलक्षणाः, सरसत्वं रसिकता च अलौकिकं मर्त्त्यलोकातीतम् ।

अत्र अन्यासु नायिकासु यज्जातीयं लावण्यादिकं तस्यां नायिकायामपि तज्जातीयमेव लावण्यादिकमिति लावण्यादेरभेदेऽपि यथार्थस्य साधारणलावण्यादेरयथार्थेन असाधारणलावण्यादिरूपेण सम्भावनया भेदाध्यवसायादतिशयोक्तिरिति भावः ।

(ट) अस्या इति । विक्रमोर्वशीनाटके उर्वशीमवलोक्य पुरूरवसो वितर्कोऽयम् । अस्या उर्वश्याः, सर्गविधौ सृष्टिकार्य्ये, कान्तिप्रदः सौन्दर्य्याधायकः, चन्द्रो नु किं प्रजापतिः सृष्टिकर्त्ता अभूत् ? कथमन्यथा ईदृशमस्याः सौन्दर्य्यं भवेदिति भावः । अथवा शृङ्गार एव एको रसो यस्मात्तादृशः स्वयं मदनः कामदेवो नु किं प्रजापतिरभूत् ? इतरथा तु कथमियमीदृशी शृङ्गारोद्दीपिनी स्यादित्याशयः । अथवा पुष्पाकरो मासश्चैत्रो नु किं प्रजापतिरभूत् ? अन्यथा तु कथमस्या अङ्गानामीदृशी पुष्पवल्लोभनीयता सम्भवेदित्यभिप्रायः । ननु भगवान् नारायण ऋषिरेवैनां निजादूरुदेशादुत्पादितवानिति पुराणप्रसिद्धिसत्त्वे कथमीदृक् वितर्कं त इत्याह वेदेति । वेदानामभ्यासेन सर्वदा तत्तात्पर्य्यपर्य्यालोचनेनेत्यर्थः जड़ो विषयान्तरेषु मूर्खः, अतएव च विषयेभ्यो भोग्यपदार्थेभ्यो व्यावृत्तं निवृत्तं कौतूहलं कौतुकं यस्य स तादृशः, पुराणो वृद्धतमः, एतेन चिरविलुप्तरसानुभवशक्तिरिति सूचितम्, मुनिर्नारायण ऋषिः इदं मनोहरं रूपं निर्म्मातुं कथं प्रभवेत् शक्नुयात् अपि तु कथमपि [illegible] । नहि [illegible] इति भावः ।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र पुराणप्रजापतिनिर्म्माणसम्बन्धेऽप्यसम्बन्धः (ठ) ।

असम्बन्धे सम्बन्धो यथा—

"यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयम् ।
तदोपमीयते तस्या वदनं चारुलोचनम् ॥" (ड)

अत्र यद्यर्थबलादाहृतेन सम्बन्धेन सम्भावनया सम्बन्धः (ढ) ।

कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययश्च द्विधा भवति, कारणात् प्रथमं कार्य्यस्य भावे, द्वयोः समकालत्वेन च (ण) । क्रमेण यथा—

"प्रागेव हरिणाक्षीणां चित्तमुत्कलिकाकुलम् ।
पश्चादुद्भिन्नवकुल-रसालमुकुलश्रियः ॥" (त)

---

(ठ) अत्रेति । यथार्थस्य पुराणप्रजापतिनिर्म्माणसम्बन्धस्य अयथार्थेन तन्निर्म्माणासम्बन्धरूपेण सम्भावनया मूललक्षणसङ्गतिरपि द्रष्टव्या । अत्र अन्यस्य निर्म्माणकर्त्तृत्वे दृढ़निश्चयाभावादेव परार्द्धेन प्रजापतेर्निर्म्माणकर्त्तृत्वव्यावृत्तिरपि सन्दिग्धैवेति काव्यप्रकाशकृता शुद्धसन्देहालङ्कारे इदमुदाहृतमपि युक्तमेव । तेन शुद्धसन्देहातिशयोक्त्योरेकाश्रयानुप्रवेशरूपः सङ्कर एवेति तत्त्वम् ।

(ड) यदीति । यदि इन्दोश्चन्द्रस्य मण्डले, इन्दीवरद्वयं कुवलययुगलं सक्तं कुतोऽपि कारणात् लग्नं स्यात्, तदा चारुणी सुन्दरे लोचने चक्षुषी यत्र तत्तादृशं तस्या नायिकाया वदनम्, उपमीयते तेन इन्दुमण्डलेन उपमाविषयीक्रियते, इतरथा तु नेत्याशयः ।

(ढ) नन्विन्दुमण्डले इन्दीवरद्वयस्य सक्तत्वाभावप्रतीतिः सर्वदैव स्वाभाविकीति कुतस्तत्र सम्बन्धः, येनासम्बन्धे सम्बन्धस्येदमुदाहरणमुपपद्यत इत्याह अत्रेति । यद्यर्थबलात् यदिशब्दार्थसामर्थ्यात्, आहृतेन आनीतेन कल्पितेनेत्यर्थः, सम्बन्धेन सक्तत्वसम्बन्धेन सम्भावनया अध्यवसायेन सम्बन्धः प्रतीयत इति शेषः । तथा च इन्दुमण्डले यथार्थस्य इन्दीवरासक्तत्वस्य अयथार्थेन सक्तत्वरूपेणाध्यवसायान्मूललक्षणसङ्गतिः ।

(ण) कार्य्येति । कारणात् कारणोत्पत्तेः, प्रथमं पूर्वम् । भावे उत्पत्तौ । द्वयोः कार्य्यकारणयोः, समकालत्वेन एककालीनत्वेन च भावे इति पूर्वेणान्वयः । नन्वित्थं कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययस्य द्वैविध्याङ्गीकारे समुदायेनातिशयोक्तेः षड्विधत्वसम्भवेऽपि "सा पञ्चधा" इति पञ्चविधत्वोक्तिः कथं सङ्गच्छत इति चेन्न, प्राचीनमतानुरोधेन तयोः पौर्वापर्य्यविपर्य्ययत्वरूपेण एकविधत्वस्यैव ग्रहणात् ।

(त) कारणात् पूर्वं कार्य्यस्योत्पत्तावुदाहरति प्रागेवेति । हरिणाक्षीणां तरुणीनां चित्तम्, प्रागेव उत्कलिकया सुरतोत्कण्ठया आकुलं विह्वलं भवति, पश्चात्तु उद्भिन्नानां प्रस्फुटितानाम्, वकुलरसालयोर्वकुलाम्रयोः, मुकुलानां कुड्मलानां श्रियः शोभाः प्रसरन्तीति शेषः ।

वकुलाम्रयोः प्रस्फुटितमुकुलदर्शनेनैव कामिनीनां चित्ते सुरतोत्कण्ठा उत्पद्यत इति तादृशमुकुलश्रीणां कारणतया पूर्वं भावित्वं तदुत्कण्ठाया [illegible] यथार्थम्, तत्तु यथार्थतः परभाविन्या-

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

"सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यं मण्डलञ्च महीक्षिताम् ॥" (थ)

इह केचिदाहुः—"केशपाशादिगतो लौकिकोऽतिशयोऽलौकिकत्वेनाध्यवसीयते, केशपाशादीनां कलापादिभिरध्यवसाये "अन्यदेवाङ्गलावण्यम्" इत्यादिप्रकारेष्वव्याप्तिर्लक्षणस्ये"ति (द)। तन्न, तत्रापि ह्यन्यदङ्गलावण्यमन्यत्वेनाध्यवसीयते (ध)। तथाहि "अन्यदेव" इति स्थाने "अन्य-

---

स्तदुत्कण्ठाया: कवेः प्रौढोक्तिवशादेव अयथार्थेन पूर्वभावित्वेनाध्यवसायादत्र कार्य्यकारणयोः पौर्वापर्य्य-विपर्य्ययरूपा अतिशयोक्तिः। अत्र कारणस्य परभावित्वेनाध्यवसायोऽपि एवमेवोहनीयः।

(थ) कार्य्यकारणयोः समकालोत्पत्तावुदाहरति सममिति। रघुवंशचतुर्थसर्गस्थमिदं पद्यम्। द्विरदगामिना हस्तिवत् सलीलमन्दगमनशीलेन, तेन रघुणा, पित्र्यं पितृत आगतं सिंहासनम्, महीक्षितां राज्ञां मण्डलं चक्रञ्च, एतत् द्वयं समं युगपदेव समाक्रान्तं गृहीतमायत्तीकृतञ्च।

राजानो हि पैतृकं सिंहासनं गृहीत्वैव क्रमशस्तद्बलेन परराजमण्डलमायत्तीकुर्वन्तीति पैतृकसिंहासन-ग्रहणस्य कारणतया पूर्वभावित्वं परराजमण्डलायत्तीकरणस्य च कार्य्यतया परभावित्वमेव यथार्थम्। ततस्तु तयोः पूर्वापरभावित्वेनैव यथार्थयोः कवेः प्रौढोक्तिवशादयथार्थेन समकालभावित्वेनाध्यवसायादत्रापि कार्य्य-कारणयोः पौर्वापर्य्यविपर्य्ययरूपा अतिशयोक्तिः।

"धुनोति चासिं तनुते च कीर्त्तिम्" इत्यादावपि ईदृशीवातिशयोक्तिरनन्मूलश्च समुच्चय इति समुच्चया-लङ्कारप्रकरणे स्वयमेव वृत्तौ वक्ष्यते।· तेन "केचित्तु" इत्यादिरामचरणोक्तिस्तद्दूषितोक्तिश्च तद्वृत्तिग्रन्थापर्य्या-लोचनयैव सञ्जातेति तद्द्वयमपि हेयम्।

(द) इहेति। "कथमुपरि कलापिनः कलापः" इत्यादिश्लोके केशपाशादिगत इत्यर्थः, लौकिक-स्तत्तन्नायिकालोकयोग्यः, अतिशयो लम्बितत्वमसृणत्वाद्यतिरेकः, अलौकिकत्वेन कलापादिसौसादृश्यवशात् तत्तन्नायिकालोकायोग्यत्वेन स्वर्गीयत्वेनेत्यर्थः। अतएवात्रापि अभेदे भेदाध्यवसायरूपैवातिशयोक्तिः, न पुनर्भवदुक्ता भेदे अभेदाध्यवसायरूपेति तेषामाशयः। ग्रन्थकृता तु भेदे अभेदाध्यवसायरूपायामेव "कथ-मुपरि कलापिनः कलापः" इत्यादिकमुदाहृतमिति पूर्वत्र द्रष्टव्यम्। ननु तत्र भेदे अभेदाध्यवसाये को दोष इत्याह केशेति। कलापादिभिः सह अभेदाध्यवसाये अभिमते इत्यर्थः। आदिशब्देन "अन्यल्लावण्य-मन्येव च कापि वर्त्तनच्छाया" इति काव्यप्रकाशोदाहृतादेरभेदे भेदाध्यवसायस्थलमात्रस्यैव ग्रहणम्। लक्षणस्य अभेदे भेदाध्यवसायस्थले अतिशयोक्तिलक्षणस्य। अत्र तेषामयमाशयः—"अन्यदेवाङ्गलावण्यम्" इत्यादौ तन्नायिकालावण्यादिषु नायिकान्तरलावण्यादीनां भेदस्यैव सत्त्वेन अभेदाभावात् अभेद एव भेदाध्य-वसायो न स्यादित्यव्याप्तिर्दुर्वारैव; किन्तु लौकिकत्वेनाभिन्ने तन्नायिकालावण्यादौ अलौकिकत्वेन भिन्नानां लावण्यादीनामध्यवसाये तु लक्षणसङ्गतिः स्यादेव। अतो भेदे अभेदाध्यवसायस्थले च लौकिकत्वा-लौकिकत्वाभ्यामेव भेदाभेदयोर्ग्रहणस्यौचित्यात् "कथमुपरि—" इत्यादावपि तथैव अभेदे भेदाध्यवसाय-रूपाया एवातिशयोक्तेरौचित्यमिति।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दिव" इति पाठे अध्यवसायस्य साध्यत्वमेवेत्युत्प्रेक्षाङ्गीक्रियते। "प्रागेव हरिणाक्षीणाम्" इत्यत्र वकुलादिस्त्रीणां प्रथमभावितापि पश्चाद्भावित्वेनाध्यवसिता; अतएवात्रापि इवशब्दप्रयोगे उत्प्रेक्षा (न)। एवमन्यत्र (प)।

६६। पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्।
एकधर्म्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता ॥ (फ)

---

(घ) उक्तमतं दूषयति तन्नेति। तत्रापि "अन्यदेवाङ्गलावण्यम्" इत्यादावपि। अन्यत् नायिकान्तरसाधारणम्। अन्यत्वेन नायिकान्तरासाधारणत्वेन केवलतन्नायिकानिष्ठत्वेनेत्यर्थः। एवञ्च, उक्तस्थले अभेदे भेदाध्यवसायरूपातिशयोक्तेर्लक्षणसङ्गतेर्नाव्याप्तिरिति भावः।

(न) नन्वस्तु, तथापि मदुक्तरीत्यङ्गीकारे का क्षतिरित्याह तथाहीति। साध्यत्वमेव इवशब्दोपादानात् संशयद्योतनेन प्रागुक्तरीत्या निष्पाद्यत्वमेव। पश्चाद्भावित्वेनेति। एवं चित्तोत्कलिकायाः परभावितापि पूर्वभावित्वेनाध्यवसितेत्यपि बोध्यम्। 'प्रागिव' 'पश्चादिव' इत्थमिवशब्दप्रयोग इत्यर्थः। अत्र ग्रन्थकर्त्तुरयमभिप्रायः—उत्प्रेक्षातिशयोक्त्योः समान एव विषयः सर्वसम्मतः; अतएवोक्तरीत्या तत्र तत्र इवशब्दप्रयोगे उत्प्रेक्षापि सर्वसम्मतैव। तेन "अन्यदेव" इत्यादौ "अन्यदिव" इति पाठे मन्मते 'असाधारणमिव' इत्याद्यर्थकतयैव भवन्मतेऽपि 'अलौकिकमिव' इत्याद्यर्थकतया उत्प्रेक्षा सम्भवत्येव; किन्तु "उपरि कलापिनः कलाप इव" इति पाठे 'अलौकिक इव' इत्यर्थस्यानुपस्थित्या उत्प्रेक्षातिशयोक्त्योर्विषयभेदापत्तिर्दुर्वारैवेति भवदुक्तरीत्यङ्गीकारे महत्येव क्षतिरिति।

(प) एवमिति। अन्यत्राप्येवमुत्प्रेक्षा ऊह्येति शेषः। तथा च "सममेव समाक्रान्तम्" इत्यादावपि "सममिव" इति पाठे उत्प्रेक्षैवेति भावः।

(फ) अथ सादृश्यमूलकालङ्काराभिधानस्य प्रक्रान्तत्वात् विशेषातिदिष्टया चातिशयोक्त्या तद्बाधाया असम्भवात् सादृश्यवत्त्वयैवानुभवात् "यो दीपकतुल्ययोगितादिषु उपमाद्यलङ्कारो व्यङ्ग्यः" इति चतुर्थपरिच्छेदे ग्रन्थकृदुक्तत्वाच्च सादृश्यमूलकावेव तुल्ययोगितादीपकालङ्कारावभिधातुं तयोः प्रसिद्धत्वात् प्रथमे तुल्ययोगितामभिधत्ते पदार्थानामिति। यदा प्रस्तुतानां पदार्थानामेकधर्म्माभिसम्बन्धो भवेत्, वा अथवा अप्रस्तुतानां पदार्थानामेकधर्म्माभिसम्बन्धो भवेत्, इति लक्षणद्वयम्, तदा तुल्ययोगिता स्यात्। तथा च यदि प्रस्तुतैरेव पदार्थैः सह प्रस्तुतानामेव पदार्थानाम् एकेन धर्म्मेण गुणरूपेण क्रियारूपेण वा अभिसम्बन्धः कर्त्तृतया कर्म्मतया करणतादिरूपेण वा सम्पर्को भवेत्, अथवा यदि अप्रस्तुतैरेव पदार्थैः सह अप्रस्तुतानामेव पदार्थानां तथैव एकधर्म्माभिसम्बन्धो भवेत्, तदा तुल्ययोगिता नाम अलङ्कारः स्यादित्यर्थः।

अतएव अप्रस्तुतेन सह प्रस्तुतस्य प्रस्तुतेन सह अप्रस्तुतस्य वा एकधर्म्माभिसम्बन्धरूपाद्दीपकादस्य भेदः। तुल्यो योग उक्तरूप एकधर्म्माभिसम्बन्धः अस्यास्तीति तुल्ययोगी अर्थस्तस्य भावस्तुल्ययोगितेति व्युत्पत्तिः। कारिकायाः सूत्ररूपत्वात् "सूत्रे लिङ्गं संख्या कालश्चातन्त्राणि" इति न्यायेन पदार्थानामिति बहुवचनमविवक्षितम्। तेन द्वयोरपि तादृशयोः पदार्थयोरेकधर्म्माभिसम्बन्धे तुल्ययोगिता ज्ञेया।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अन्येषामप्रस्तुतानाम् । धर्म्मो गुणक्रियारूपः । उदाहरणम्—

"अनुलेपनानि कुसुमान्यबलाः कृतमन्यवः पतिषु दीपदशाः (१) ।
समयेन तेन सुचिरं शयितप्रतिबोधितस्मरमबोधिषत (२) ॥" (ब)

अत्र सन्ध्यावर्णनस्य प्रस्तुतत्वात् प्रस्तुतानामनुलेपनादीनामेकबोधन-क्रियाभिसम्बन्धः (भ) ।

"त्वदङ्गमार्दवं द्रष्टुः कस्य चित्ते न भासते ।
मालती-शशभृल्लेखा-कदलीनां कठोरता ॥" (म)

इत्यत्र मालत्यादीनामप्रस्तुतानां कठोरतारूपैकगुणसम्बन्धः (य) ।

एवम्—(र) "दानं वित्तादृतं वाचः कीर्त्तिधर्म्मौ तथायुषः ।
परोपकरणं कायादसारात् सारमाहरेत् ॥" (ल)

---

(ब) प्रस्तुतैः सह प्रस्तुतानामेकक्रियासम्बन्धे उदाहरति अनुलेपनानीति । शिशुपालवधनवमसर्गे सन्ध्यावर्णनेयम् । तेन समयेन सन्ध्याकालेन अनुलेपनानि कुङ्कुमचन्दनादीनि, कुसुमानि पुष्पाणि, पतिषु कृतमन्यवो विहितप्रणयकोपाः अबलाः स्त्रियः, तथा दीपानां दशा वर्त्तिकाश्च, सुचिरं शयितः पूर्वं सुप्तो निवृत्त-व्यापारः परश्च प्रतिबोधितो जागरितः प्रवृत्तव्यापारः स्मरः कामो यस्मिन् कर्म्मणि तद्यथा तथा, अबोधिषत बोधिताः । अबोधिषतेत्यस्य यथासङ्गतमर्था अनुसन्धेयाः ।

(भ) अत्रेति । प्रस्तुतानामिति । भोगिजनस्य अनुलेपनादीनां सन्ध्याकालीनोपकरणत्वादिति भावः । अभिसम्बन्धः कर्म्मतासम्बन्धेन सम्बन्ध इत्यर्थः ।

(म) अप्रस्तुतानामेकगुणाभिसम्बन्धे उदाहरति त्वदङ्गेति । तव अङ्गानां मार्दवं कोमलतां द्रष्टुः साधुदर्शनकारिणः कस्य जनस्य चित्ते, मालती-शशभृल्लेखाकदलीनां जातीकुसुम-चन्द्रलेखा-रम्भास्तम्भानां कठोरता कठिनत्वं न भासते न प्रकाशते अपि तु सर्वस्यैव भासत इत्यर्थः । तवाङ्गानां कोमलता मालत्या-दिभ्योऽप्यधिकेति भावः । द्रष्टुरिति साधुकारिण्यर्थे तृन्प्रत्ययात् त्वदङ्गमार्दवमित्यत्र "न निष्ठादिषु" इति षष्ठीनिषेधात् द्वितीयैव ।

(य) इत्यत्रेति । अप्रस्तुतानामिति । नायिकावर्णनस्यैव प्रस्तुतत्वादिति भावः । कठोरतारूपेण एकेन गुणेन सम्बन्धः अधिकरणतासम्बन्धेनाभिसम्बन्ध इत्यर्थः ।

(र) एतौ च गुणक्रिययोरेकैकाभिसम्बन्धे उदाहृत्य इदानीं ताभ्यां द्वाभ्यामेव युगपदभिसम्बन्धे उदा-हर्त्तुमाह एवमिति ।

(ल) दानमिति । असारादिति ईषदर्थे नञ्, अभावार्थकत्वे तु सारमाहरेदिति नोपपद्यते सर्वथा साररहितपदार्थतः साराहरणासम्भवात् । तथा च असारात् दानोपयोगितारूपकिञ्चिदुत्कृष्टांश-

---

(१) दीपशिखाः इतीदानीन्तनमूलपुस्तकेषु पाठः ।

(२) समयेन तेन चिरसुप्तमनोभवबोधनं सममबोधिषत इतीदानीन्तनपुस्तकेषु पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र दानादीनां कर्म्मभूतानां सारतारूपैकगुणसम्बन्ध एकाहरणक्रिया-सम्बन्धः (व) ।

६७ । अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते ।

अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥ (श)

---

विशिष्टात् वित्तात् धनात् सारं तदुत्कृष्टांशप्रयोज्यं दानम्, आहरेदुद्धरेत् । एवमन्यत्राप्युन्नेयम् । असाराया वाचो वाक्यात्, सारम् ऋतं सत्यम्, आहरेत् । असारादायुषः सारौ कीर्त्तिधर्म्मौ आहरेत् । तथा असारात कायात् शरीरात् सारं परोपकरणं परोपकारम् आहरेत् । सर्वत्र बुद्धिमान् जन इति शेषः ।

(व) अत्रेति । दानादीनां प्रस्तुतानामप्रस्तुतानां वा । सारतारूपेण एकेन गुणेन सम्बन्धे अधि-करणतासम्बन्धेन सम्बन्धे सतीत्यर्थः, एकया आहरणक्रियया सम्बन्धः कर्म्मतासम्बन्धेन सम्बन्धः । असारादिति ईषदर्थे नञोऽङ्गीकारेण असारतारूपैकगुणसम्बन्धश्च बोध्यः । एतेन युगपदेकधर्म्मसम्बन्धेऽपि तुल्ययोगिता स्यादेव बाधकाभावादिति सूचितम् । द्वयोः प्रस्तुतयोः पदार्थयोरेकधर्म्माभिसम्बन्धे यथा नैषधे—

"जितस्त्वयास्येन विधुः स्मरः श्रिया कृतप्रतिज्ञौ मम तौ वधे कुतः ।
तवेति कृत्वा यदि तज्जितं मया न मोघसङ्कल्पधराः किलामराः ॥"

अत्र "प्रसूनबाणोपनिषन्निशम्यताम्" इति पूर्वमभिहितत्वात् स्मरस्य तदुपकरणत्वाद्विधोश्च प्रस्तुतत्वमिति प्रस्तुतयोर्विधुस्मरयोर्जित इत्येकक्रियया कर्म्मतासम्बन्धेन सम्बन्धात् तुल्ययोगिता । एवमप्रस्तुतयोरप्यूह्यम् । "चैत्रो मैत्रश्च गच्छतः" इत्यादौ तु चैत्रमैत्रयोरेकगमनक्रियासम्बन्धेऽपि वैचित्र्याभावान्न तुल्ययोगिता ।

(श) उक्तयुक्तेरवशिष्टं दीपकालङ्कारं लक्षयति अप्रस्तुतेति । अप्रस्तुतप्रस्तुतयोस्तु पदार्थयोरेक-धर्म्माभिसम्बन्ध इत्यनुक्कृष्यते दीपकं नामालङ्कारो निगद्यते । अत्र "तु" इत्यव्ययनिपातस्य नानार्थतया साम्य-वाचक-वैधर्म्मयोरभावे सतीति विशेषणञ्च लभ्यते । एवञ्च ।

अप्रस्तुतेन सह प्रस्तुतस्य प्रस्तुतेन वा सहाप्रस्तुतस्य पदार्थस्य साम्यवाचकवैधर्म्मयोरभावे सत्येकधर्म्माभि-सम्बन्धो दीपकमिति लक्षणं पर्य्यवसितम् ।

तेन प्रस्तुतैः सह प्रस्तुतानामप्रस्तुतैः सह चाप्रस्तुतानामेकधर्म्माभिसम्बन्धरूपायां तुल्ययोगितायां नाति-व्याप्तिः । तथा "कमलमिव मुखं मनोज्ञम्" इत्यादौ अप्रस्तुतप्रस्तुतयोः कमलमुखयोर्मनोज्ञत्वरूपैकगुण-सम्बन्धेऽपि साम्यवाचकस्य इवशब्दस्य सत्त्वान्नातिप्रसङ्गः । "पौरं जनं सुतीयसि" इत्यादौ "या यत्र प्रत्ययो जातः समासो यत्र वा भवेत् । स एनं वक्ति" इति न्यायेन साम्यवाचकस्य क्यच्प्रत्ययस्य "विराजते चन्द्र-मुखी किलेयम्" इत्यादौ च साम्यवाचकस्य उपमितसमासस्य सत्त्वान्नातिप्रसक्तिः । एवं "तृष्णापहारी विमलो द्विजावासो जनप्रियः । ह्रदः पद्माकरः किन्तु बुधस्त्वं स जलाशयः ॥" इत्यादौ वैधर्म्मस्यापि सत्त्वान्नातिव्याप्तिः ।

विशिष्टं लक्षणान्तरमाह अथेति । अथशब्द एव तद्वैशिष्ट्यं सूचयति । चेद्यदि अनेकासु क्रियासु एकं यत् किञ्चित् कारकं स्यात्, तदा तदपि दीपकमेव निगद्यत इत्यर्थः ।

तथा च दीपयति अप्रस्तुतमपि पदार्थं बुद्धाववभासयतीति दीपकम् । अस्मादेव च प्रमाणादस्मार्थे दीपकशब्द एष कारकशब्द इव नित्यक्लीवलिङ्ग इति बोध्यम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्रमेणोदाहरणम्—"बलावलेपादधुनापि पूर्ववत्
प्रबाध्यते तेन जगज्जिगीषुणा ।
सती च योषित् प्रकृतिश्च निश्चला (१)
पुमांसमभ्येति भवान्तरेष्वपि ॥" (ष)

अत्र प्रस्तुताया निश्चलायाः प्रकृतेरप्रस्तुतायाश्च सत्या योषित एकानुगमनक्रियासम्बन्धः (स) ।

"दूरं समागतवति त्वयि जीवनाथे
भिन्ना मनोभवशरेण तपस्विनी सा ।
उत्तिष्ठति स्वपिति वासगृहं त्वदीय-
मायाति याति हसति श्वसिति क्षणेन ॥" (ह)

इदं मम । अत्रैकस्या नायिकाया उत्थानाद्यनेकक्रियासम्बन्धः ।

अत्र च गुणक्रिययोरादिमध्यावसानसद्भावेन त्रैविध्यं न लक्षितम्, तथाविधवैचित्र्यस्य सर्वत्रापि सहस्रधा सम्भवात् (क्ष) ।

---

(ष) आद्यमुदाहरति बलेति । शिशुपालवधप्रथमसर्गस्थमिदं पद्यम् । जिगीषुणा जेतुमिच्छुना तेन शिशुपालेन, बलस्य स्वसामर्थ्यस्य अवलेपाद्दर्पात्, अधुनापि अस्मिन् जन्मन्यपि पूर्ववत् पूर्वपूर्वजन्मनीव, जगत् प्रबाध्यते अतीव पीड्यते । कथमेतदित्याह सतीति । सती योषित् स्त्री च, निश्चला सुस्थिरा प्रकृतिः स्वभावश्च, भवान्तरेष्वपि जन्मान्तरेष्वपि पुमांसं पुरुषम् अभ्येति प्राप्नोति ।

(स) अत्रेति । प्रस्तुताया इति । शिशुपालवधस्य प्रस्तुतत्वेनैव तत्प्रकृतेरपि प्रस्तुतत्वमिति भावः ।

(ह) द्वितीयमुदाहरति दूरमिति । पत्युरन्तिके नायिकादूत्या उक्तिरियम् । जीवनाथे प्राणेश्वरे त्वयि, दूरं समागतवति सति, सा तपस्विनी शोच्या तव कान्तेत्यर्थः, मनोभवशरेण मदनबाणेन भिन्ना विदीर्णा सती, क्षणेन उत्तिष्ठति दण्डायमाना भवति, क्षणेन स्वपिति शेते, क्षणेन त्वदीयं वासगृहम् आयाति, पुनः क्षणेनैव याति ततो वासगृहाद्गच्छति, क्षणेन हसति, क्षणेन च श्वसिति श्वासान् मुञ्चति ।

अत्रापि प्रागुक्तयुक्तेरप्रस्तुतयोरिति प्रत्येकगतैकत्वेन द्वित्वमविवक्षितम् । तेन तयोः प्रत्येकगतानेकत्वेऽपि दीपकमेव । यथा मम रुक्मिणीहरणमहाकाव्ये—

"विदधदपि जपं यत्तव कश्चिद्विपश्चिद्युवतिजनमपश्यन्नात्पशः सोऽस्य दोषः ।
हरति हि नवनारी कौमुदी पद्मिनी वा नयनमवहितानामप्यकस्मात् स्वभावात् ॥"

अत्र नवनारी प्रस्तुता कौमुदीपद्मिन्यो तु अप्रस्तुते, तासाञ्च सर्वासां हरतीत्येकक्रियासम्बन्धाद्दीपकम् । किञ्चात्र कौमुदीपद्मिन्योरप्रस्तुतयोर्हरतीत्येकक्रियासम्बन्धात्तुल्ययोगिता चेत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः ।

---

(१) सतीव योषित् प्रकृतिः सुनिश्चला इतीदानीन्तनशिशुपालवधपुस्तकेषु पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

६८ । प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः ।
एकोऽपि धर्म्मः सामान्यो यत्र निर्द्दिश्यते पृथक् ॥ (क)

यथा—"धन्यासि वैदर्भि ! गुणैरुदारै-
र्यया समाकृष्यत नैषधोऽपि ।
इतः स्तुतिः का खलु चन्द्रिकाया
यदब्धिमप्युत्तरलीकरोति ॥" (ख)

अत्र समाकर्षणमुत्तरलीकरणञ्च क्रिया एकैव, पौनरुक्त्यनिरासाय भिन्नवाचकतया निर्द्दिष्टा (ग)। इयञ्च मालयापि दृश्यते (घ)। यथा—

---

(ख) अत्र चेति। सर्वत्रापि सर्वेष्वेवालङ्कारेष्वपि।

(क) अथ सादृश्यमूलकालङ्कारनिरूपणस्य प्रक्रान्तत्वात् प्रकारान्तरसादृश्यमूलकं प्रतिवस्तूपमालङ्कारं निरूपयति प्रतीति। यत्रेति यदित्यर्थकमव्ययम्। तथा च गम्यं तात्पर्य्यपर्य्यालोचनयैव बोध्यं न पुनर्वाच्यमित्यर्थः साम्यं सादृश्यं ययोस्तयोस्तादृशयोः, वाक्ययोर्वाक्यार्थद्वयस्य, एकोऽपि अभिन्नोऽपि सामान्यः साधारण उपमानोपमेयोभयवृत्तिरित्यर्थः। धर्म्मो गुणः क्रिया वा, यत्र यत् पृथक् निर्द्दिश्यते एकार्थकभिन्नानुपूर्वीकशब्देन प्रत्याय्यते, सा प्रतिवस्तूपमा नाम अलङ्कारः स्यात्।

प्रतिवस्तु प्रतिपदार्थम् उपमा सादृश्यमिति प्रतिवस्तूपमा। तथाहि उदाहरणे चन्द्रिकया सह दमयन्त्याः अब्धिना सह च नैषधस्य सादृश्यादुत्ताव्युत्पत्तिसिद्धिः।

अत्र गम्यसाम्ययोरित्यभिधानात् "अम्बुजं मृदु, मुखञ्च कोमलम्" इत्यादौ साम्यप्रतीत्यभावान्नातिप्रसङ्गः। गम्येत्यभिधानात् "मुखं तव तथा भाति यथा राजति चन्द्रमाः" इत्यादौ वाच्यसाम्ये नातिव्याप्तिः। एकोऽपीत्यभिधानात् अनेकधर्म्मे दृष्टान्ते न प्रसक्तिः। पृथगित्यभिधानाच्च न कथितपदतादोषः।

(ख) धन्येति। नैषधचरिततृतीयसर्गस्थमिदं पद्यम्। हे वैदर्भि ! दमयन्ति ! त्वं धन्यासि, यया त्वया, उदारैर्महद्भिर्गुणैः सौन्दर्य्यादिभिः, नैषधो नलोऽपि समाकृष्यत सम्यगाकृष्टः। तथा च चन्द्रिकाया ज्योत्स्नायाः, इतः अस्या उच्यमानाया अधिकेत्यर्थः का खलु स्तुतिः स्तुतियोग्यो महिमा सम्भवतीति शेषः, यत् अब्धिं समुद्रमपि उत्तरलीकरोति चञ्चलं करोति।

(ग) अत्रेति। एकैवेति। नैषधस्य समाकर्षणमपि कामोत्पादनेन अस्थिरीकरणम्, समुद्रस्य उत्तरलीकरणमपि च पूरोत्पादनेन तदस्थिरीकरणमेवेति भावः। पौनरुक्त्यनिरासाय कथितपदतादोषाप्रसङ्गाय, भिन्नवाचकतया भिन्नानुपूर्वीकशब्देन। तथा दमयन्तीचन्द्रिकयोर्नलसमुद्रयोश्च साम्यं तात्पर्य्यपर्य्यालोचनया प्राप्तमित्यपि बोध्यम्।

(घ) इयञ्चेति। प्रतिवस्तूपमा चेत्यर्थः। मालयापि एकत्वानेकत्वेनापीति तात्पर्य्यम्। एतेन कारिकायां "वाक्ययोः" इति द्विवचनमनेकोपलक्षणमिति सूचितम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"विमल एव रविर्विशदः शशी प्रकृतिशोभन एव हि दर्पणः।
शिवगिरिः शिवहाससहोदरः सहजसुन्दर एव हि सज्जनः॥" (ङ)

अत्र विमलविशदादिरर्थत एक एव (च)। वैधर्म्ये यथा—

"चकोर्य्य एव चतुराश्चन्द्रिकापानकर्म्मणि (१)।
विनावन्तीर्न निपुणाः सुदृशो रतनर्म्मणि (२)॥" (छ)

६९। दृष्टान्तस्तु सधर्म्मस्य वस्तुनः प्रतिविम्बनम्॥ (ज)

---

(ङ) विमल इति। रविः सूर्य्यो विमल एव तेजोमयतया निर्म्मल एव; शशी चन्द्रो विशद एव तेजोमयतयैव निर्म्मल एव; दर्पण आदर्शोऽपि प्रकृत्या स्वभावेन शोभन एव हि अत्यन्तोज्ज्वलतया अत्यन्त-निर्म्मल एव; शिवगिरिः कैलासपर्वतः शिवस्य महादेवस्य यो हासो हास्यं तस्य सहोदरः सदृश एव, तत्-सदृशतया निर्म्मल एवेत्यर्थः; तथा सज्जनोऽपि सहजसुन्दर एव स्वभावतो निर्म्मल एव। अत्र "यः कौमार-हरः स एव हि वरः" इत्यादिवत् एवहीति-शब्दद्वयमत्यन्तमेव नियमं द्योतयति। किन्तु शिवशब्दस्य द्विःपाठात् कथितपदतादोषः।

(च) अथोदाहृते प्रत्येकवाक्य एव भिन्नभिन्नो धर्म्म इति कथं लक्षणसङ्गतिरित्याह अत्रेति। विमल-विशदादिर्विमलविशदादिशब्दप्रतिपाद्यो धर्म्म इत्यर्थः, अर्थतस्तात्पर्य्यतः, एक एव अभिन्न एव, सर्वेषामेव निर्म्मलतारूपत्वादिति भावः। किन्तु केवलकथितपदतादोषनिरासाय भिन्नभिन्नशब्देन निर्द्दिष्ट इति वाक्यशेषः। अत्रापि रविप्रभृतीनां साम्यं तात्पर्य्यपर्य्यालोचनयैव प्राप्तमित्यवधेयम्।

(छ) चकोर्य्य इति। चन्द्रिकाया ज्योत्स्नायास्तज्जतजलविन्दूनामित्यर्थः। पानकर्म्मणि चकोर्य्यस्तदाख्याः, पक्षिणीविशेषा एव चतुरा दक्षाः। तथा च आवन्तीः अवन्तिदेशोद्भवा रमणीर्विना अन्याः सुदृशो रमण्यः, रतनर्म्मणि रतिलीलायां न निपुणा न दक्षाः, केवलमावन्त्य एव दक्षा इत्यर्थः।

अत्र चातुर्य्यरूपो नैपुण्यरूपश्च धर्म्म एक एव, किन्तु कथितपदतादोषनिरासाय केवलं शब्दभेदेन निर्द्दिष्टः; तत्र च नञ उपादानात् नैपुण्ये चातुर्य्यवैपरीत्यं सञ्जातमिति वैधर्म्म्यम्। अथवा "विना-वन्तीर्न निपुणाः" इत्युक्तिभङ्ग्या आवन्त्य एव निपुणा इत्येव प्रतीयते तन्नैपुण्यं चातुर्य्यञ्च एक एव धर्म्मः शब्दभेदेन निर्द्दिष्टः, तत्र च "न निपुणाः" इत्यनैपुण्यं नाम वैधर्म्म्यम्; तात्पर्य्यपर्य्यालोचनया च चकोरीणामावन्तीनाञ्च साम्यमुपलब्धमिति प्रतिवस्तूपमेत्याशयः।

(ज) दृष्टान्तस्यापि प्रस्तुतसमर्थकतया प्रतिवस्तूपमाजातीयत्वात् प्रतिवस्तूपमानिरूपणानन्तरं दृष्टान्तं निरूपयति दृष्टान्त इति। तुशब्दः प्रतिवस्तूपमाभेदद्योतनार्थः। समानः सदृश एव न पुनः प्रतिवस्तूपमा-वदभिन्न इत्यर्थः धर्म्मो गुणः क्रिया वा यस्य स सधर्म्मस्तस्य सधर्म्मस्य सदृशस्येत्यर्थः वस्तुनः पदार्थस्य, प्रतिविम्बनं प्रतिविम्बभावेन स्थापनं प्रस्तुतसमर्थनाय तात्पर्य्यलभ्यसाम्यकतया वाक्यान्तरेणोपादानमित्यर्थः, दृष्टान्तो नामालङ्कारः स्यात्। एतेन—

---

(१) चन्द्रिकापानकर्म्मणि इति पाठान्तरम्। (२) रतकर्म्मणि इति पाठभेदः।

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सधर्मस्येति प्रतिवस्तूपमाव्यवच्छेदः (झ) ।

अयमपि साधर्म्यवैधर्म्याभ्यां द्विधा । क्रमेणोदाहरणम्—

"अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलापि हि हरति दृशं मालतीमाला ॥" (ञ)

---

समानधर्म्मिणः प्रणिधानगम्यसाम्यकतया वाक्यान्तरेणोपादानं दृष्टान्त इति लक्षणं फलितम् ।

अत्र समानत्वं नाम समर्थनीयसमर्थकयोरुभयोरेव सामान्यत्वेन विशेषत्वेन वा सजातीयत्वं बोध्यम् । इत्यश्च, प्रतिवस्तूपमायामभिन्नो धर्म्मः, इह तु भिन्नो धर्म्मः सम्भवद्वस्तुसम्बन्धरूपायां निदर्शनायामर्थान्तरन्यासे च कदाचित् समर्थनीयस्य सामान्यत्वं समर्थकस्य तु विशेषत्वम्, कदाचिद्वा समर्थनीयस्य विशेषत्वं समर्थकस्य तु सामान्यत्वम् ; इह तु समर्थनीयसमर्थकयोरुभयोरेव कदाचिदेकं सामान्यत्वमेव कदाचिदेकं विशेषत्वमेव वा । तेन च समानधर्म्मिण इत्युपादानादुक्तेषु प्रतिवस्तूपमादिषु नातिव्याप्तिः । प्रणिधानगम्यसाम्यकतयेत्यभिधानात् "मुखं तव तथा भाति यथा राजति चन्द्रमाः" इत्यादौ वाच्यसाम्यायामुपमायां नातिप्रसक्तिः । वाक्यान्तरेणेत्युक्तेश्च "मुखं धाम्नि विधुर्व्योम्नि भाति भाग्येन साम्प्रतम्" इत्यादावेकवाक्ये प्रणिधानगम्यसाम्ये दीपके नातिप्रसङ्गः । न च "अत्रापि वाक्ययोरित्यनुवर्त्तते । तेन भल्लापवर्जितैरित्यत्र नातिव्याप्तिरेकवाक्यत्वात्" इति रामचरणोक्तमपि युक्तमिति वाच्यम्, "भल्लापवर्जितैस्तेषाम्" इत्यादौ इवशब्दोपादानेन साम्यस्य वाच्यतया प्रणिधानगम्यत्वाभावादेवातिव्याप्तेर्वारणात् ।

दृष्टोऽवगतः अन्तः समर्थनीये समर्थकस्य स्वरूपं सादृश्यं यस्मिन् स दृष्टान्त इति व्युत्पत्तिः । तथा च मेदिनी—"अन्तःस्वरूपे नाशे ना न स्त्री शेषेऽन्तिके त्रिषु ।"

प्रतिबिम्बस्य करणमिति प्रतिबिम्बनं करोत्यर्थे णन्तात् प्रतिबिम्बशब्दाद्भावे ल्युट् ।

(झ) ननु प्रतिबिम्बनमित्यनेनैवोपपत्तौ किमर्थं सधर्मस्येत्युपादानमित्याह सधर्मस्येति । इति अनेन विशेषणेनेत्यर्थः, प्रतिवस्तूपमाया व्यवच्छेदो व्यावृत्तिः । तथा च प्रतिवस्तूपमायां समर्थ्यसमर्थकयोर्निर्दिष्टरूपेण अभिन्न एव धर्म्मः ; इह तु समानत्वेन भिन्न एव धर्म्मः, तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वस्य समानपदार्थत्वादिति भावः ।

(ञ) साधर्म्ये उदाहरति अविदितेति । वासवदत्तास्थमिदं पद्यम् । सतां श्रेष्ठानां कवीनां भणितिरुक्तिः, अविदितगुणापि अज्ञातरसभावादिरपि श्रुतमात्रापीत्यर्थः, कर्णेषु मधुनो धारां वमति उद्गिरति । तथाहि मालतीमाला मालतीकुसुमस्रक्, अनधिगतपरिमलापि अलब्धसौरभापि दृशं नयनं हरति आकर्षति ।

अत्र दृग्हरणरूपधर्म्मेण समानधर्म्मिरूपया मालतीमालया द्वितीयार्द्धे वाक्येनोपादानात् तया च मालतीमालया सह प्रथमवाक्यगतसत्कविभणितेः साम्यस्य वाचकाभावात् प्रणिधानेनैव गम्यत्वाच्च दृष्टान्तः । तथा वमनहरणयोरुभयोरेव भावपदार्थतया साधर्म्यम् । एवं समर्थनीयं पूर्वार्द्धं समर्थकमुत्तरार्द्धञ्चेत्युभयमपि विशेषरूपमेवेति बोध्यम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"त्वयि दृष्टे कुरङ्गाक्ष्याः स्रंसते मदनव्यथा ।
दृष्टानुदयभाजीन्दौ ग्लानिः कुमुदसंहतेः ॥" (ट)

"वसन्तलेखैकनिबद्धभावं परासु कान्तासु मनः कुतो नः ? ।
प्रफुल्लमल्लीमधुलम्पटः किं मधुव्रतः काङ्क्षति वल्लिमन्याम् ? ॥" (ठ)

इदं पद्यं मम। अत्र "मनः कुतो नः" इत्यस्य "काङ्क्षति वल्लिमन्याम् ?" इत्यस्य चैकरूपतयैव पर्य्यवसानात् प्रतिवस्तूपमैव (ड)। इह तु कर्णे मधुधारावमनस्य नेत्रहरणस्य च साम्यमेव, न त्वैकरूप्यम् (ढ)।

---

(ट) वैधर्म्ये उदाहरति त्वयीति। नायकं प्रति नायिकादूत्या उक्तिरियम्। त्वयि नायके दृष्टे सति, कुरङ्गाक्ष्या हरिणनयनायास्तव कान्ताया इत्यर्थः, मदनव्यथा कामवेदना, स्रंसते अपैति। तथा च इन्दौ चन्द्रे अनुदयभाजि उदयमलब्धवति सति, कुमुदसंहतेः कैरवगणस्य ग्लानिः प्रफुल्लताहानिः दृष्टा।

अत्रापि नायकदर्शनेन प्रफुल्लतया समानधर्म्मिरूपायाः कुमुदसंहतेर्द्वितीयार्द्धवाक्ये नोपादानात् तथा च कुमुदसंहत्या सह कुरङ्गाक्ष्याः साम्यस्य वाचकाभावात् प्रणिधानेनैव गम्यत्वाच्च दृष्टान्तः। पूर्वार्द्धे मदनव्यथाया भ्रंशः, परार्द्धे तु ग्लानिरित्यभावभावाभ्यामुभयोर्वैधर्म्यम्। तथा पूर्ववदुभयमपि विशेषमेव। तेन चेदमुभयमेवोदाहरणं समर्थ्यसमर्थकयोर्विशेषरूपत्व एव ज्ञेयम्।

उभयोरेव सामान्यरूपत्वे यथा मम रुक्मिणीहरणमहाकाव्ये—

"अपरप्रथितं निजं यशो न यशस्वी स्वयमेव भाषते ।
स्वविशेषकप्रत्ययोदये प्रविपर्य्येति विभक्तिरर्थभाक् ॥"

इदं साधर्म्ये। वैधर्म्ये तूह्यम्।

(ठ) स्थलविशेषे दृष्टान्तप्रतिवस्तूपमयोः सन्देहनिरासायोदाहरति वसन्तेति। वसन्तलेखायां तदाख्ये नायिकाविशेषे एकं केवलं निबद्धो भावोऽनुरागो येन तत्तादृशं नः अस्माकं मनः, परासु वसन्तलेखाभिन्नासु कान्तासु सुन्दरीषु, कुतः कथं गच्छति ? अपि तु कथमपि नेत्यर्थः। तथाहि प्रफुल्लायाः प्रस्फुटितायाः मल्ल्या मल्लिकाकुसुमस्य, मधुलम्पटो मधुपानलोभी, मधुव्रतो भ्रमरः, किम् अन्यां वल्लिं लतां काङ्क्षति ? अपि तु कथमपि नेत्यर्थः।

(ड) नन्वत्र प्रदर्शितेनार्थापत्तिद्वयेन एकस्मिन्नभाव एव वाक्यार्थपर्य्यवसानात् किं प्रतिवस्तूपमा ? किंवा मनोगमन-मधुव्रताकाङ्क्षयोर्धर्म्मिणोः साम्याद्भेदाच्च दृष्टान्त इत्याशङ्कायामाह अत्रेति। एकरूपतयैवेति। तथा च तादृशपरकान्ताविषयकमनोगमनाकाङ्क्षयोः प्रतियोगिनोर्भेदात्तदभावयोरप्यभेद एवाङ्गीक्रियते लाघवादित्याशयः। एतेन प्रतिवस्तूपमालक्षणे धर्म्मपदं वृत्तिमत्पदार्थमात्रोपलक्षणमिति सूचितम्।

(ढ) दृष्टान्ते धर्म्मस्य साम्यमेव न त्वभेद इति दर्शयति इह त्विति। "अविदितगुणापि" इत्यादौ



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र समर्थ्यसमर्थकवाक्ययोः सामान्यविशेषभावोऽर्थान्तरन्यासे (१), प्रतिवस्तूपमा-दृष्टान्तयोस्तु न तथेति भेदः (ण) ।

७० । सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् ।
यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना ॥ (त)

---

त्वित्यर्थः । साम्यमेवेति । कर्णावच्छेदेन नेत्रावच्छेदेन चात्मनि प्रीतिजनकत्वस्यात्र साधारणधर्मत्वादिति भावः । न त्वेकरूप्यं न त्वभिन्नधर्मत्वं वस्तुत एव कारकक्रिययोर्भेदादित्याशयः ।

(ण) ननु प्रतिवस्तूपमायां दृष्टान्ते अर्थान्तरन्यासे च सर्वत्रैव प्रथमवाक्यं प्रति द्वितीयवाक्यस्य समर्थकत्वदर्शनादर्थान्तरन्यासेन सह प्रतिवस्तूपमादृष्टान्तयोः को भेद इत्याह अत्रेति । युक्तिप्रदर्शनद्वारा वाक्यान्तरेण यद्वाक्यं दृढीक्रियते तत् समर्थ्यं वाक्यम् ; यच्च वाक्यं युक्तिप्रदर्शनद्वारा वाक्यान्तरं दृढीकरोति तत् समर्थकं वाक्यम् । सामान्यविशेषभावो व्यापकव्याप्यभावः । तथा चार्थान्तरन्यासे समर्थ्यवाक्यस्य सामान्यत्वम् इतरस्य विशेषत्वम्, किंवा समर्थकवाक्यस्य सामान्यत्वमितरस्य तु विशेषत्वम् आवश्यकमित्यर्थः । किन्तु प्रतिवस्तूपमादृष्टान्तयोः समर्थ्यसमर्थकवाक्ययोः, न तथा न सामान्यविशेषभावः । तथा च प्रतिवस्तूपमादृष्टान्तयोरपि अर्थान्तरन्यासवदेव वाक्यद्वयस्य परस्परं समर्थ्यसमर्थकभावो विद्यत एव ; किन्तु अर्थान्तरन्यासवत् तयोर्वाक्ययोराद्यस्य सामान्यत्वं द्वितीयस्य विशेषत्वम्, किंवा आद्यस्य विशेषत्वं द्वितीयस्य सामान्यत्वम् इति न विद्यते ; अपि तु द्वयोरेव वाक्ययोः सामान्यत्वं किंवा विशेषत्वमित्येव विद्यत इति सरलार्थः । एतेन "न तथा न सामान्यविशेषभावो न वा समर्थ्यसमर्थकभावः" इति रामचरणोक्तमपास्तम् । प्रतिवस्तूपमादृष्टान्तयोरपि वाक्यद्वये समर्थ्यसमर्थकभावस्य स्पष्टमेव प्रतीयमानत्वात्, अन्यथा चोपमानवाक्यस्य वैयर्थ्यापत्तेर्दुर्निवारत्वात्, अस्याश्च वृत्तिपङ्क्तौ "न तथा" इत्यनेन प्रथमान्ततया "सामान्यविशेषभावः" इत्यस्यैव सम्बन्धयोग्यत्वेन ग्रन्थकारस्यापि तथैवाभिप्रायावधारणाच्चेति सुधीभिर्विभावनीयम् ।

(त) प्राकरणिकसादृश्यप्रयुक्तमेव निदर्शनालङ्कारं लक्षयति सम्भवन्निति । अत्रापि यत्रेति यदित्यर्थकमव्ययम् । तथा च वस्तुसम्बन्धः पदार्थानामन्वयः कुत्रचित् सम्भवन् कस्या अपि बाधाया अभावादुपपद्यमानः सन्, कुत्रचिद्वापि असम्भवन् कयाचिद्बाधया अनुपपद्यमानः सन्, यत्र तत् बिम्बानुबिम्बत्वं बिम्बप्रतिबिम्बभावम् उपमानोपमेयभावमिति यावत्, बोधयेद्व्यञ्जनया प्रतिपादयेत् सा निदर्शना नाम अलङ्कारः स्यात् ।

एतेन सादृश्यकल्पनायां पर्यवसितो वाक्यार्थो निदर्शनेति संक्षिप्तसरलार्थः ।

तथा च सम्भवद्वस्तुसम्बन्धा असम्भवद्वस्तुसम्बन्धा चेति द्विविधा निदर्शना । तत्र दृष्टान्ते वाक्ययोर्न सामान्यविशेषभावः सम्भवद्वस्तुसम्बन्धरूपनिदर्शनायामर्थान्तरन्यासे च वाक्ययोः सामान्यविशेषभावः । अर्थान्तरन्यासे द्वितीयवाक्यं पूर्ववाक्यसमर्थकम्, सम्भवद्वस्तुसम्बन्धायान्तु न तथा । असम्भवद्वस्तुसम्बन्ध-

---

(१) अर्थान्तरन्यास इति प्रथमान्तः पाठोऽपि दृश्यते ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र सम्भवद्वस्तुसम्बन्धनिदर्शना यथा—

"कोऽत्रभूमिवलये जनान् मुधा तापयन् सुचिरमेति सम्पदम्? ।
वेदयन्निति दिनेन भानुमान् आससाद चरमाचलं ततः ॥" (थ)

अत्र रवेरीदृशार्थवेदनक्रियायां कर्त्तृत्वेनान्वयः सम्भवत्येव, ईदृशार्थज्ञापनसमर्थचरमाचलप्राप्तिरूपधर्म्मवत्त्वात् (१)। स च रवेरस्ताचलगमनस्य परतापिनां विपत्प्राप्तेश्च विम्बप्रतिविम्बभावं बोधयति (द)।

असम्भवद्वस्तुसम्बन्धनिदर्शना त्वेकवाक्यानेकवाक्यगतत्वेन द्विविधा। तत्रैकवाक्यगा यथा—

"कलयति कुवलयमाला-ललितं कुटिलः कटाक्षविक्षेपः।
अधरः किसलयलीलामाननमस्याः कलानिधेर्विलासम् ॥" (ध)

---

निदर्शनायान्तु वाक्यार्थानुपपत्तिः, दृष्टान्ते अर्थान्तरन्यासे च न तथेति भेदः। ग्रन्थकृता त्वन्यथा भेदोऽपि दर्शयिष्यते।

निदर्शयति निश्चयेनोपमानोपमेयभावं बोधयतीति निदर्शना। निपूर्वकदृशधातोः "ईषिश्रन्थ्यासो"-त्यादिना स्त्र्यधिकारे युप्रत्ययः।

(थ) क इति। अत्र भूमिवलये पृथिवीमण्डले को जनः, मुधा अनर्थकं जनान् तापयन् सन्, सुचिरं बहुकालं सम्पदं समृद्धिम् एति प्राप्नोति, अपि तु कोऽपि नेत्यर्थः। भानुमान् सूर्य्यः, दिनेन इति वेदयन् बोधयन् सन्, ततो दिनावसाने चरमाचलम् अस्तम्, आससाद जगाम।

(द) उदाहृते लक्षणं सङ्गमयितुमाह अत्रेति। ईदृशार्थस्य कोऽपि जनो निरर्थकं जनान् तापयन् दीर्घकालं सम्पदं न प्राप्नोति इति प्रथमार्द्धोक्तस्य अर्थस्य, वेदनक्रियायां बोधनक्रियायाम्। ननु रवेरचेतनत्वात् कथं वेदनक्रियायां कर्त्तृत्वेनान्वयः सम्भवतीत्याह ईदृशार्थेति। ईदृशार्थस्य उक्तपूर्वार्द्धार्थस्य ज्ञापनसमर्थौ बोधनयोग्यो यश्चरमाचलप्राप्तिरूपो धर्म्मस्तद्वत्त्वात् रवेरित्यर्थः। स च वेदनक्रियायां सम्भवन् कर्त्तृत्वेनान्वयश्च। विम्बप्रतिविम्बभावम् उपमानोपमेयभावम्। तथा च "यथा रविरनर्थकं परान् तापयन्नस्तं प्राप्नोति, तथा परेऽपि पराननर्थकं तापयन्तो विपदं प्राप्नुवन्ति" इत्युपमानोपमेयभावं सोऽन्वयः सूचयतीत्यर्थः।

(ध) कलयतीति। अस्या नायिकायाः, कुटिलो वक्रः, कटाक्षविक्षेपो नयनप्रान्तेन दृष्टिपातः कुवलयमालाया नीलोत्पलश्रेण्याः ललितं सौन्दर्य्यम्, अधर ओष्ठः किसलयस्य पल्लवस्य लीलां विलासम्, तथा आननं मुखम्, कलानिधेश्चन्द्रस्य विलासं शोभां कलयति दधाति।

---

(१)·· कर्म्मवत्त्वादिति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र अन्यस्य धर्म्मं कथमन्यो वहत्विति कटाक्षविक्षेपादीनां कुवलयमालादिगतललितादीनां कलनमसम्भवत् तल्ललितादिसदृशं ललितादिकमवगमयत् कटाक्षविक्षेपादेः कुवलयमालादेश्च विम्बप्रतिविम्बभावं बोधयति (न)। यथा वा—(प)

"प्रयाणे तव राजेन्द्र ! मुक्ता वैरिमृगीदृशाम् ।
राजहंसगतिः पद्भ्यामाननेन शशिद्युतिः ॥" (फ)

अत्र पादाभ्यामसम्बद्धराजहंसगतेस्त्यागोऽनुपपन्न इति तयोस्तत्सम्बन्धः कल्प्यते, स चासम्भवन् राजहंसगतिमिव गतिं बोधयति (ब)।
अनेकवाक्यगा यथा—

"इदं किलाव्याजमनोहरं वपुस्तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति ॥" (भ)

अत्र यत्तच्छब्दनिर्दिष्टवाक्यार्थयोरभेदेनान्वयोऽनुपपद्यमानस्तादृशवपुषस्तपःक्षमत्वसाधनेच्छा नीलोत्पलपत्रधारया शमीलताच्छेदनेच्छेवेति विम्बप्रतिविम्बभावे पर्य्यवस्यति (म)। यथा वा—(य)

---

(न) अत्रेति। "अन्यस्य धर्म्मं कथमन्यो वहतु" इति कलनं प्रति बाधायाः प्रदर्शनम्। कटाक्षविक्षेपादीनामिति कर्त्तरि षष्ठी। ललितादीनामिति च कर्मणि षष्ठी, कलनं धारणम्, असम्भवत् अनुपपद्यमानं सत्। अवगमयत् बोधयत् सत्। विम्बप्रतिविम्बभावं सादृश्यम्। बोधयति सूचयति।

(प) भाव उदाहृत्य इदानीमभावेऽप्युदाहर्त्तुमाह यथा वेति।

(फ) प्रयाण इति। हे राजेन्द्र ! तव प्रयाणे आक्रमणाय यात्रायां सत्याम्, वैरिमृगीदृशां शत्रुस्त्रीणाम्, पद्भ्यां पदाभ्यां राजहंसगतिः तथा आननेन मुखेन शशिद्युतिश्चन्द्रकान्तिः, मुक्ता परित्यक्ता। भयेन शत्रुस्त्रीणां सलीलं मन्दमन्दगमनं मुखोज्ज्वलत्वञ्च नष्टमित्यर्थः।

(ब) अत्रेति। असम्बद्धा पादयोरस्थिता या राजहंसगतिस्तस्याः। अनुपपन्नः असम्भवः, त्यागस्य स्वत्वमूलकत्वेन स्वकीयस्यैव तत्सम्भवात् अत्र तु राजहंसगतेः राजहंसीयत्वेन परकीयत्वादिति भावः। तयोः पादयोः, तत्सम्बन्धी राजहंसगतिसम्बन्धः, कल्प्यते कल्पयितुं युज्यते, स च पादयो राजहंसगतिसम्बन्धश्च, असम्भवन्, अन्यत्र अन्यदीयगतेः स्थित्ययोगादित्याशयः। एवं शशिद्युतिरित्यत्राप्यूह्यम्।

(भ) इदमिति। शकुन्तलाप्रथमाङ्कस्थमिदं पद्यं प्रागेव व्याख्यातम् (३७२ पृष्ठे)।

(म) अत्रेति। यत्तच्छब्दनिर्दिष्टवाक्यार्थयोः पूर्वार्द्धपरार्द्धगतवाक्यद्वयान्तर्गतयोः "यः सः" इत्यनयोः, अभेदेन ऐक्येन, अन्वयः सम्बन्धः, अनुपपद्यमानः असम्भवन्, नीलोत्पलपत्रधारया शमीलताच्छेदनव्यवसायस्याकरणात् कण्वमुनेरनुन्मत्तत्वादिति भावः। तादृशवपुषः शकुन्तलाया नितान्तसुकुमारदेहस्य। तपः-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"जन्मेदं वन्ध्यतां नीतं भवभोगोपलिप्सया।
काचमूल्येन विक्रीतो हन्त! चिन्तामणिर्मया॥" (र)

अत्र भवभोगलोभेन जन्मनो व्यर्थतानयनं काचमूल्येन चिन्तामणिविक्रय इवेति पर्य्यवसानम् (ल)। एवम्—(व)

"क्व सूर्य्यप्रभवो वंशः क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥" (श)

अत्र मन्मत्या सूर्य्यवंशवर्णनमुडुपेन सागरतरणमिवेति पर्य्यवसानम् (ष)।

इयञ्च क्वचिदुपमेयवृत्तस्योपमाने असम्भवेऽपि भवति (स)। यथा—

"योऽनुभूतः कुरङ्गाक्ष्यास्तस्या मधुरिमाधरे।
समास्वादि स मृद्वीका-रसे रसविशारदैः॥" (ह)

---

क्षमत्वमिति स्वार्थे त्वप्रत्ययः। शमीलताच्छेदनेच्छेव अनुचितेति शेषः। बिम्बप्रतिबिम्बभावे उपमानोपमेयभावे।

(य) प्रकारान्तरेण वस्तुसम्बन्धस्यासम्भवतां दर्शयितुमाह यथा वेति।

(र) जन्मेति। शान्तिशतकस्यायं श्लोकः। मया भवभोगोपलिप्सया तुच्छसांसारिकसुखभोगलोभेन, इदं जन्म वन्ध्यतां निष्फलत्वं नीतं प्रापितम्। हन्त खेदे। काचमूल्येन चिन्तामणिस्तदाख्यो दुर्लभमहामूल्यरत्नविशेषो विक्रीतः।

(ल) अत्रेति। व्यर्थतानयनं निष्फलताप्रापणम्। अत्र वस्तुः काचमूल्येन चिन्तामणिविक्रयस्याकरणात् विक्रीत इति विक्रयसम्बन्धोऽसम्भव इति द्रष्टव्यम्।

(व) उक्तस्यापि वैधर्म्येणासम्भवद्वस्तुसम्बन्धतां दर्शयितुमाह एवमिति।

(श) क्वेति। रघुवंशप्रथमसर्गस्थमिदं पद्यम्। सूर्य्यात् प्रभव उत्पत्तिर्यस्य वंशः कुलं क्व कुत्र, अल्पविषया स्तोकमात्रविषयावगाहिनी मतिर्मम बुद्धिश्च क्व कुत्र। तथा च मोहाच्चित्तवैकल्यात् उडुपेन प्लवेन क्षुद्रतरण्या, दुस्तरं सागरं तितीर्षुस्तर्त्तुमिच्छुरस्मि।

(ष) अत्रेति। उडुपमादाय कालिदासो न खलु सागरं तितीर्षुरासीदिति अस्मीत्यनेन तितीर्षुरित्यस्य कर्त्तृत्वसम्बन्धोऽसम्भवन्नीदृशं सादृश्यं बोधयतीति बोध्यम्।

(स) इयञ्चेति। असम्भवद्वस्तुसम्बन्धा निदर्शना चेत्यर्थः। उपमेये वृत्तस्य स्थितस्य।

(ह) य इति। तस्याः कुरङ्गाक्ष्या हरिणनयनायाः, अधरे ओष्ठे यो मधुरिमा माधुर्य्यम्, अनुभूतः, रसविशारदै रसास्वादाभिज्ञैः, स मधुरिमा, मृद्वीकारसे द्राक्षारसे, समास्वादि सम्यगनुभूतः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र प्रकृतस्याधरस्य मधुरिमधर्म्मस्य द्राक्षारसे असम्भवात् पूर्ववत् साम्ये पर्य्यवसानम् (च)। मालारूपापि (क) यथा मम—

"क्षिपसि शुकं वृषदंशकवदने मृगमर्पयसि मृगादनरदने ।
वितरसि तुरगं महिषविषाणे निदधच्चेतो भोगवितानें ॥" (ख)

इह बिम्बप्रतिबिम्बताक्षेपं विना वाक्यार्थापर्य्यवसानम्, दृष्टान्ते तु पर्य्यवसितेन वाक्यार्थेन सामर्थ्याद्बिम्बप्रतिबिम्बताप्रत्यायनम् (ग)। नापीयमर्थापत्तिः, तत्र "हारोऽयं हरिणाक्षीणाम्" इत्यादौ सादृश्यपर्य्यवसानाभावात् (घ)।

(च) अत्रेति। प्रकृतस्य प्रकृतत्वेन उपमेयस्येत्यर्थः, अधरस्य यो मधुरिमधर्म्मस्तस्य द्राक्षारसे उपमाने, असम्भवात् स्थित्ययोगात्, अन्यधर्म्मस्यान्यत्र वृत्तित्वासम्भवादिति भावः। साम्ये पर्य्यवसानमिति। तथा च मृद्वीकारसे सः अधरमधुरिमेति अभेदसम्बन्धः असम्भवन् अधरमधुरिमेव मधुरिमेति सादृश्यं बोधयतीति भावः।

(क) मालेति। मालारूपापि एकत्वानेकापि असम्भवद्वस्तुसम्बन्धा निदर्शनेत्यर्थः।

(ख) क्षिपसीति। कस्यचिज्ज्ञानिनः संसारासक्तजनं प्रति तत्त्वकथेयम्। भोगविताने सांसारिकसुखभोगबाहुल्ये, चेतश्चित्तं निदधत् स्थापयन् त्वम्, वृषदंशकस्य मार्जारस्य वदने मुखे शुकं पक्षिणं क्षिपसि अर्पयसि; मृगादनस्य व्याघ्रविशेषस्य रदने दन्ते मृगं हरिणम् अर्पयसि ददासि; तथा महिषस्य विषाणे शृङ्गे, तुरगं घोटकं वितरसि अर्पयसि।

अत्र भोगविताने चित्तं निदधानो जनो न खलु वृषदंशकवदनादौ शुकादिकमर्पयतीति कर्तृणामभेदसम्बन्धोऽसम्भवन् भोगविताने चित्तनिधानं वृषदंशकवदनादौ शुकक्षेपादिकमिव अनर्थमूलमिति बिम्बप्रतिबिम्बभावं बोधयतीत्यसम्भवद्वस्तुसम्बन्धा निदर्शना। तस्य च बिम्बप्रतिबिम्बभावबोधनस्यानेकत्वात् सा निदर्शनात्र मालारूपा।

(ग) ननु दृष्टान्तवदस्यां निदर्शनायामपि एकविधैव साम्यस्य प्रणिधानगम्यतेत्यनयोः को भेद इत्याह इहेति। असम्भवद्वस्तुसम्बन्धरूपायां निदर्शनायामित्यर्थः। बिम्बप्रतिबिम्बताक्षेपम् उपमानोपमेयभावकल्पनां विना, वाक्यार्थस्य अपर्य्यवसानमनुपपद्यमानत्वादपरिसमाप्तिः। पर्य्यवसितेन उपपद्यमानत्वात् स्वयमेव परिसमाप्तेन। सामर्थ्याद्योग्यत्वात्, बिम्बप्रतिबिम्बताप्रत्यायनम् उपमानोपमेयभावबोधनम्। तथा चासम्भवद्वस्तुसम्बन्धरूपायां स्वतः स्थितानुपपत्तिवशादुपमानोपमेयभावकल्पनयैव वाक्यार्थोपपत्तिः, दृष्टान्ते तु अनुपपत्त्यभावात् स्वयमुपपद्यमानेनैव वाक्यार्थेन योग्यतया उपमानोपमेयभावकल्पनेति उपमानोपमेयभावकल्पनायाः पौर्वापर्य्येणैवानयोर्भेद इत्याशयः। दृष्टान्तेन सह सम्भवद्वस्तुसम्बन्धरूपाया निदर्शनाया भेदस्तु प्रागेव दर्शितः।

(घ) अथ तदा वाक्यार्थानुपपत्तिवशेनैव बिम्बप्रतिबिम्बभावरूपस्यार्थस्य आपतनादियमर्थापत्तिरेवास्ता-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

७१। आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा।
व्यतिरेकः (१) एक उक्ते हेतौ नोक्ते स च त्रिधा (२) ॥
चतुर्विधोऽपि साम्यस्य बोधनाच्छब्दतोऽर्थतः।
आक्षेपाच्च द्वादशधा श्लेषेऽपीति त्रिरष्टधा।
प्रत्येकं स्यान्मिलित्वाष्टचत्वारिंशद्विधः पुनः ॥ (ङ)

मित्याह नापीति। इयं निदर्शना। तत्र अर्थापत्तौ। सादृश्यपर्य्यवसानाभावात् अत्र तु सादृश्यपर्य्यवसानादिति वाक्यशेषः। तथा च सादृश्यरूपार्थस्य आपतने निदर्शना, तदितरार्थस्य आपतने तु अर्थापत्तिः सामान्यविशेषन्यायादित्याशयः।

(ङ) प्रकृतसादृश्यमूलकत्वादेव व्यतिरेकालङ्कारं लक्षयति आधिक्यमिति। उपमानादुपमेयस्य आधिक्यं येन केनापि प्रकारेणोत्कर्षः, अथवा उपमानादुपमेयस्य न्यूनता येन केनापि प्रकारेण निकर्षो निकृष्टता व्यतिरेकी नामालङ्कारः स्यात्। एतेन—

उपमानोपमेययोर्यत्किञ्चिद्वैधर्म्यं व्यतिरेक इति लक्षणं फलितम्।

वैधर्म्यञ्च उपमानापेक्षया उपमेयस्य उत्कर्षेण अपकर्षेण वा भवतीति बोध्यम्। अतएवोपमायामवैधर्म्यम्, इह तु वैधर्म्यमेवेति भेदः। तथा व्यतिरिच्यते उपमानादुपमेयं किञ्चिद्वैधर्म्येणावगम्यते येन स व्यतिरेक इति व्युत्पत्तिसिद्धिश्च। स च प्रथमं द्विविधः—उपमानापेक्षया उपमेयस्याधिक्ये एकः, उपमानापेक्षया उपमेयस्य न्यूनतायाञ्चापर इति।

तयोः प्रत्येकमेव पुनर्विभजते एक इति। तत्र उपमानादुपमेयस्याधिक्यप्रकारे स व्यतिरेकश्च हेतौ उपमेयोत्कर्षकारणे च उक्ते एकः तयोरुभयोरेवोक्तत्वरूपेणैकविधः; तथा हेतौ नोक्ते त्रिधा हेतोरनुक्तत्वरूपेण त्रिविधः—तथा च केवले उपमेयोत्कर्षकारणे अनुक्ते एकविधः, केवले उपमानापकर्षकारणे अनुक्ते एकविधः, तयोरुभयोरेव उत्कर्षापकर्षकारणयोरनुक्तयोर्य्येकविध इति त्रिविध इत्यर्थः। एवञ्च हेतौरुक्तत्वसम्पन्नेन एकविधेन सह हेतोरनुक्तत्वसम्पन्नस्य त्रिविधस्य मेलने एतावता चतुर्विधः सम्पद्यत इति सरलार्थः। तेन च त्रिभिः शब्दार्थाक्षेपैः प्रतिपाद्यानां हेतूनां सम्भवात् "प्रत्येकं व्यतिरेकस्यापि वैविध्यमिति वर्णनमज्ञानविजृम्भितमेव, तादृशवैविध्यावैविध्यात् तदनुक्तौ समुदायेन वानुक्तौ त्रिविधः" इति वृत्तिविरोधाच्च। उक्तरीत्या चतुर्विधोऽपि स व्यतिरेकः, साम्यस्य सादृश्यस्य शब्दतः शब्दात्, अर्थतः समानसदृशादिशब्दानामर्थवशात् आक्षेपाद्व्यञ्जनावशाच्च बोधनात् प्रतीतेः, द्वादशधा द्वादशविधः, चतुर्णां त्रिभिर्गुणने द्वादशसम्भवात्।

(१) व्यतिरेक इत्यनन्तरम् "स च" इति वृत्तिपाठः क्वचित्। (२) एक उक्तेऽनुक्ते हेतौ पुनस्त्रिधा इति पाठभेदः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उपमेयस्योपमानादाधिक्ये हेतुरुपमेयगतमुत्कर्षकारणम्, उपमानगतं निकर्षकारणञ्च (च)। तयोर्द्वयोरप्युक्तावेकः, प्रत्येकं समुदायेन वानुक्तौ त्रिविध इति चतुर्विधोऽपि (१) अस्मिन्नुपमानोपमेयस्य निवेदनं शब्देनार्थेनाक्षेपेण चेति द्वादशप्रकारोऽपि श्लेषे अपिशब्दादश्लेषेऽपि चतुर्विंशतिप्रकारः (छ)। उपमानान्न्यूनतायामप्यनयैव भङ्ग्या चतुर्विंशतिप्रकारतेति मिलित्वा अष्टचत्वारिंशत्प्रकारो व्यतिरेकः (ज)। उदाहरणम्—

"अकलङ्कं मुखं तस्या न कलङ्की विधुर्यथा।" (झ)

अत्रोपमेयगतमकलङ्कत्वमुपमानगतञ्च कलङ्कित्वं हेतुद्वयमप्युक्तम्। यथाशब्दप्रतिपादनाच्च शाब्दमौपम्यम् (ञ)।

अत्रैव "न कलङ्कि विधूपमम्" इति पाठे आर्थम् (ट)। "जयतीन्दुं कलङ्किनम्" इति पाठे तु इवादिवत्तुल्यादि (२) पदविरहादाक्षिप्तम् (ठ)।

---

स च द्वादशविधः, श्लेषे अपिशब्दादश्लेषे च सम्भवतीति पुनर्द्वैविध्येन त्रिरष्टधा चतुर्विंशतिविधः। उक्तरीत्या उपमानादुपमेयस्य न्यूनताप्रकारेऽपि व्यतिरेकश्चतुर्विंशतिविधः समुन्नेयः। तेन च प्रत्येकमुभयं प्रथमोक्तौ द्विविध इत्यर्थः: व्यतिरेकः पुनर्मिलित्वा समुदायेन अष्टचत्वारिंशद्विधः स्यात्, चतुर्विंशतेर्द्विगुणे अष्टचत्वारिंशत्सम्भवात्।

(च) उपमेयस्येति। निकर्षो निकृष्टता तत्कारणञ्च।

(छ) तयोरिति। प्रत्येकमिति। केवलोपमेयगतोत्कर्षकारणस्य केवलोपमानगतनिकर्षकारणस्य वेत्यर्थः। समुदायेन तयोरुभयोरेव वा इति तात्पर्य्यम्। अस्मिन् व्यतिरेकसामान्ये। निवेदनं बोधनम्। अर्थेन समानसदृशादिशब्दानामर्थेन, आक्षेपेण व्यञ्जनया।

(ज) उपमानादिति। उपमेयस्येति शेषः। भङ्ग्या रीत्या।

(झ) अकलङ्कमिति। "अशीतञ्च भुजद्वन्द्वं न शीतन्तु मृणालवत्॥" इति मत्पूरितपरार्द्धम्।

(ञ) अत्रेति। हेतुद्वयं मुखोत्कर्षस्य विधुनिकर्षस्य च यथासंख्यं कारणद्वयम्। यथाशब्देन प्रतिपादनादभिधानात्, शाब्दं शब्दप्रतिपाद्यम्। अस्य युक्तिस्तु उपमाप्रकरणे दर्शिता।

(ट) संक्षेपार्थमुदाहृतमेव पाठपरिवर्त्तनेनोदाहरति अत्रैवेति। अकलङ्कं मुखमित्यादावेवेत्यर्थः। आर्थमर्थवशादुपलभ्यम्, औपम्यमिति पूर्वेणान्वयः। अस्या युक्तिरप्युपमाप्रकरणे दर्शिता।

(ठ) जयतीति। इवादिवत् शाब्दौपम्यप्रतिपादकस्य इवप्रभृतिशब्दस्येव, तुल्यादिपदस्य आर्थौपम्यप्रतिपादकतुल्यादिशब्दस्य विरहादभावात् आक्षिप्तमाकृष्टं व्यञ्जनयोपलभ्यमित्यर्थः, अत्रापि औपम्यमिति पूर्वेणा-

---

(१) चतुर्विधोऽपि इति पाठान्तरम्। (२) इववत्तुल्यादि इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र वाकलङ्कपदत्यागे उपमेयगतोत्कर्षकारणानुक्तिः, कलङ्किपदत्यागे चोपमानगतनिकर्षकारणानुक्तिः, द्वयोरनुक्तौ द्वयोरनुक्तिः (ड)।

श्लेषे यथा—"अतिगाढ़गुणायाश्च नाब्जवद्भङ्गुरा गुणाः ॥" (ढ)

अत्र वार्थे वतिरिति शाब्दमौपम्यम् । उत्कर्षनिकर्षकारणयोर्द्वयो-रप्युक्तिः । गुणशब्दः श्लिष्टः (ण) । अन्ये भेदाः पूर्ववदूह्याः (त) । एतानि चोपमेयस्योपमानादाधिक्ये उदाहरणानि ।

न्यूनत्वे दिङ्मात्रं यथा—(थ)

"क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्द्धते नित्यम् ।
विरम प्रसीद सुन्दरि ! यौवनमनिवर्त्ति यातन्तु ॥" (द)

---

न्वयः । तथा च जयो नामायत्तीकरणम् ; तेन मुखकर्तृकचन्द्रायत्तीकरणस्यासम्भवात् जयत्यर्थं वैशिष्ट्येन व्यञ्जनया औपम्यमाक्षिप्यते इति भावः ।

(ड) हेतोरुक्तावेतावदुदाहृत्य इदानीं संक्षेपेणैव हेतोरनुक्तावप्युदाहर्त्तुमाह अत्रैवेति । अकलङ्क-पदत्यागे "एतद्भाति मुखं तस्या न कलङ्की विधुर्यथा" इति पाठ इत्यर्थः । उपमेयगतोत्कर्षकारणस्य अकलङ्कत्वस्य अनुक्तिरित्येकविधः । कलङ्किपदत्यागे "अकलङ्कं मुखं तस्या भाति नैष विधुर्यथा" इत्येवं पाठ इत्यर्थः । उपमानगतनिकर्षकारणस्य कलङ्कित्वस्य अनुक्तिरिति द्वितीयविधः । द्वयोरकलङ्कपद-कलङ्किपदयोः, अनुक्तौ त्यागे "एतद्भाति मुखं तस्या न लाकाशे विधुर्यथा" इत्येवं पाठ इत्यर्थः, द्वयोरुपमेय-गतोत्कर्षकारणोपमानगतनिकर्षकारणयोरनुक्तिरिति तृतीयविधः । तथा चोक्तरूपपाठेऽपि उपमानभूत-चन्द्रसादृश्यप्रतिषेधादेव उपमेयभूतमुखस्य आधिक्यमवगम्यत एवेति ध्येयम् ।

(ढ) अतीति । "स्थिरा भूतिर्महादेव्या नास्थिरा हरमूर्त्तिवत् ।" इति मत्पूरितपूर्वार्द्धम् ।

अतिगाढ़ा अतीवदृढ़ाश्चिरस्थायिन इत्यर्थः, गुणाः सौन्दर्य्यविनयादयः सूत्राणि च यस्यास्तस्या नायिकायाः, गुणास्त एव सौन्दर्य्यविनयादयः सूत्राणि च, अब्जवत् पद्मस्येव न भङ्गुरा न च्छिदुराः ।

(ण) अत्रेति । उत्कर्षनिकर्षकारणयोः उपमेयभूतनायिकागतोत्कर्षकारणस्य अतिगाढ़गुणत्वस्य, उपमानभूतपद्मगतनिकर्षकारणस्य भङ्गुरत्वस्य चेत्यर्थः ।

(त) अन्य इति । ऊह्याः स्वयमुन्नेयाः । तथा च अब्जवदिति तुल्यार्थे वतिप्रत्यये आर्थमौपम्यम् । "जयत्येषा गाढ़गुणा विनश्वद्गुणमम्बुजम्" इति पाठे इवादितुल्यादिपदाभावादौपम्यमाक्षिप्तम् । "अस्या नृपतिकान्ताया नाब्जवद्भङ्गुरा गुणाः" इति पाठे उपमेयगतोत्कर्षकारणानुक्तिः । "अतिगाढ़गुणायाश्च दृश्यन्ते नाब्जवद्गुणाः" इति पाठे उपमानगतनिकर्षकारणानुक्तिः । "अस्या नृपतिकान्ताया दृश्यन्ते नाब्जवद्गुणाः" इति पाठे च उपमेयोपमानगतयोरुत्कर्षनिकर्षकारणयोर्द्वयोरप्यनुक्तिरित्यनुसन्धेयम् ।

(थ) न्यूनत्व इति । उपमेयस्योपमानादपकर्षे इत्यर्थः । दिङ्मात्रमेकप्रकारमात्रमिति तात्पर्य्यं प्रकारान्तरोदाहरणानि तूह्यानीत्यभिप्रायः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"अत्रोपमेयभूतयौवनास्थैर्य्यस्याधिक्यम् । तेनात्र "उपमानादुपमेयस्याधिक्ये विपर्य्यये वा व्यतिरेकः" इति केषाञ्चिल्लक्षणे विपर्य्यये वेति पदमनर्थकम्" इति यत् केचिदाहुः (ध)। तन्न विचारसहम् । तथाहि, अत्राधिकन्यूनत्वे सत्त्वासत्त्वे एव विवक्षिते । अत्र च चन्द्रापेक्षया यौवनस्यासत्त्वं स्फुटमेव (न)। अस्तु वा अत्रोदाहरणे यथाकथञ्चिद्गतिः (प)।

"हनूमदाद्यैर्यशसा मया पुन-
र्द्विषां हसैर्दूतपथः सितीकृतः ॥" (फ)

---

(द) क्षीण इति। काव्यालङ्कारग्रन्थे रुद्रटकृतं पद्यमेतत् । मानेन विमुखीं प्रियां प्रति पत्युरुक्तिरियम् । हे सुन्दरि ! शशी चन्द्रः, कृष्णपक्षे नित्यं प्रतिदिनमेव क्षीणः क्षीणः सन्नपि, पुनः, शुक्लपक्षे भूयो भूयः पुनः पुनरभिवर्द्धते । किन्तु यौवनं यातं गतं गच्छत्येवेत्यर्थः, किन्तु अनिवर्त्ति अपुनःप्रत्यावर्त्ति, अतएव विरम प्रणयकोपाद्विरता भव, प्रसीद मां प्रति प्रसन्ना च भव ।

अत्र उपमानभूतस्य चन्द्रस्य पुनः पुनर्वृद्धिराधिक्यहेतुः, उपमेयभूतस्य यौवनस्य च अपुनर्वृद्धिर्न्यूनत्वहेतुरिति द्वितीयप्रकारो व्यतिरेक इति ग्रन्थकारस्याशयः। अत्र द्वयोरप्युत्कर्षनिकर्षकारणयोरुक्तिः। तदनुक्तौ तु वैविध्यम् अपरभेदादिकञ्चोहनीयम् ।

(ध) उक्तस्वकीयव्यतिरेकलक्षणस्य अलङ्कारसर्वस्वकृत्कृतव्यतिरेकलक्षणानुरूपतया तन्नालङ्कारकौस्तुभकृद्दत्तदूषणं स्वकीयलक्षणेऽपि प्रसजतीति तामलङ्कारकौस्तुभकृदुक्तिं दूषयितुमुत्थापयति अत्रोपमेयेति । अत्र "क्षीणः क्षीणः" इत्यादिश्लोके। आधिक्यम् उपमानभूतचन्द्रास्थैर्य्यापेक्षयेति शेषः, यौवनास्थैर्य्यस्य दीर्घकालवर्त्तित्वात् चन्द्रास्थैर्य्यस्य तु कतिपयदिनमात्रस्थायित्वादिति भावः। तेन उपमानादुपमेयस्याधिक्यमात्रोक्तावेव सर्वत्र सामञ्जस्येन, अत्र व्यतिरेकप्रसङ्गे । विपर्य्यये तदाधिक्यवैपरीत्ये न्यूनत्वे इत्यर्थः। केषाञ्चिदलङ्कारसर्वस्वकृताम् । केचिदलङ्कारकौस्तुभकाराः ।

(न) दूषयति तन्नेति। विचारसहं वितर्कभारवहनक्षमम्, अयुक्तत्वेन दुर्बलत्वादिति भावः। अत्र व्यतिरेकलक्षणे, अधिकन्यूनत्वे आधिक्यं न्यूनत्वञ्च, सत्त्वासत्त्वे एव उत्कर्षापकर्षावेव, विवक्षिते अलङ्कारसर्वस्वकृता मया चेति शेषः। अथ तथाप्युदाहृते सत्त्वासत्त्वयोः किमस्तीत्याह अत्र चेति। "क्षीणः क्षीणः" इत्यादौ चेत्यर्थः। असत्त्वमपकर्षः। स्फुटमेवेति। अपुनर्वृद्धिक्षयशालित्वादिति भावः।

(प) ननु विवक्षाया अनियतत्वात् युष्माकमुत्कर्षरूपेणाधिक्यविवक्षावत् अस्माकमस्थैर्य्यादिधर्मान्तरेणाप्याधिक्यविवक्षा सम्भवति। तथा च "क्षीणः क्षीणः—" इत्यादौ यौवनस्थैर्य्यस्यैव प्रकृतमानभङ्गोपयोगितया आधिक्यरूपेण विवक्षाया औचित्यमित्याह अस्तु वेति। अत्रोदाहरणे "क्षीणः क्षीणः—" इत्यादौ, यथाकथञ्चित् यौवनस्यास्थैर्य्यरूपेणाधिक्यविवक्षया, गतिर्लक्षणसङ्गमनोपायः ।

(फ) हनूमदिति। नैषधचरितनवमसर्गे दमयन्तीसन्निधावात्मानं प्रकाशयतो नलस्य सनिर्वेदोक्तिरियम्। "स्वनाम यन्नाम मुधाभ्यधामहं महेन्द्रकार्य्यं महदेतदुज्झितम् ।" इति प्रथमार्द्धम्। हनूमदाद्यै-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्यादिषु का गतिः ? इति सुष्ठूक्तं "न्यूनताथवा" इति (ब)।

---

दूतैः, दूतपथो दौत्यविषयः, यशसा सितीकृतो धवलीकृतः। मया पुनर्दूतेन, द्विषां हंसैः शत्रूणां हास्यैः स दूतपथः सितीकृतः।

(ब) इत्यादिष्विति। का गतिर्व्यतिरेकप्रवेशस्य क उपायः ? तथा चात्र उपमानभूतहनूमदाद्यपेक्षया उपमेयभूतस्य नलस्यापकर्षप्रतीतेरेव व्यतिरेको वक्तव्यः, स च "विपर्यये वा" इत्युक्तिं विना न सम्भवतीति भावः। इति हेतोः "न्यूनताथवा" इति सुष्ठूक्तं युक्तिसङ्गततया साधूक्तम्, "विपर्यये वा" इत्यनुसारादित्याशयः।

## तदेवं व्यतिरेकभेदसङ्कलनम्।

| | | | | |
|---|---|---|---|---|
| उपमानादुपमेयस्याधिक्ये—२४ | श्लेषे—१२ | शाब्दौपम्ये | उपमेयगतमुत्कर्षकारणम् उपमानगतमपकर्षकारणञ्च एतयोरुभयोरेवोक्तौ | १ |
| | | | केवलोपमेयगतोत्कर्षकारणानुक्तौ | १ |
| | | | केवलोपमानगतापकर्षकारणानुक्तौ | १ |
| | | | तयोरुभयोरेवानुक्तौ ... | १ |
| | | आर्थौपम्ये ...उक्तक्रमेण | ... ... | ४ |
| | | आक्षिप्तौपम्ये ...उक्तक्रमेण | ... ... | ४ |
| | अश्लेषे—१२ | शाब्दौपम्ये ...उक्तक्रमेण | ... ... | ४ |
| | | आर्थौपम्ये ...उक्तक्रमेण | ... ... | ४ |
| | | आक्षिप्तौपम्ये ...उक्तक्रमेण | ... ... | ४ |
| उपमानादुपमेयस्य न्यूनत्वे—२४ | श्लेषे—१२ | शाब्दौपम्ये | उपमानगतमुत्कर्षकारणम् उपमेयगतमपकर्षकारणञ्च एतयोरुभयोरेवोक्तौ | १ |
| | | | केवलोपमानगतोत्कर्षकारणानुक्तौ | १ |
| | | | केवलोपमेयगतापकर्षकारणानुक्तौ | १ |
| | | | तयोरुभयोरेवानुक्तौ | १ |
| | | आर्थौपम्ये ...उक्तक्रमेण | ... ... | ४ |
| | | आक्षिप्तौपम्ये ...उक्तक्रमेण | ... ... | ४ |
| ४८ | | शाब्दौपम्ये ..उक्तक्रमेण | ... ... | ४ |
| | अश्लेषे—१२ | आर्थौपम्ये ...उक्तक्रमेण | ... ... | ४ |
| | | आक्षिप्तौपम्ये ...उक्तक्रमेण | ... ... | ४ |
| | | | | ४८ |

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

७२ । सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः ।
सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत् ॥ (भ)

अतिशयोक्तिरप्यत्राभेदाध्यवसायमूला कार्य्यकारणपौर्वापर्य्यविपर्य्ययरूपा च । अभेदाध्यवसायमूलापि श्लेषभित्तिका अन्यथा च (म) । क्रमेणोदाहरणम्—

"सहाधरदलेनास्या यौवने रागभाक् प्रियः ।" (य)

अत्र रागपदे श्लेषः ।

"सह कुमुदकदम्बैः काममुल्लासयन्तः
सह घनतिमिरौघैर्धैर्य्यमुत्सारयन्तः ।

---

(भ) यथाकथञ्चित् सादृश्यमूलामेव सहोक्तिं लक्षयति सहार्थस्येति । अत्रापि यत्रेति यदर्थकमव्ययम् । तथा च यदा अतिशयोक्तिः भेदे अभेदाध्यवसायमूला कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययरूपा चातिशयोक्तिः, मूलभूता प्रयोजिका भवेत्, तदा सहार्थस्य सह-साकं-प्रभृति-सहार्थवाचकशब्दस्य बलात् सामर्थ्यात्, एकं वस्तु पदार्थः, द्वयोः पदार्थयोः यत्र यत् वाचकमन्वयि भवेत्, सा सहोक्तिर्नाम अलङ्कारो भवेत् ।

तथा च अतिशयोक्तिमूलकत्वे सति सहार्थकशब्दप्रयोज्य एकपदार्थस्यानेकपदार्थेऽन्वयः सहोक्तिरिति फलितम् ।

सत्यन्तदलात् "लक्ष्मणेन समं रामः काननं गहनं ययौ" इत्यादौ नातिव्याप्तिः । एतच्च वृत्तावपि वक्ष्यते । एतेन "सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्" इति काव्यप्रकाशलक्षणं कटाक्षितम् । वस्तुतस्तु "लक्ष्मणेन समम्" इत्यादौ वैचित्र्याभावादलङ्कारसामान्यलक्षणागमनेनैव विशेषलक्षणस्यापि गमनासम्भवादतिव्याप्त्यसम्भव एवेति "मूलभूतातिशयोक्तिर्यदा भवेत्" इति मूलवत् सत्यन्तदलस्य स्वरूपमात्रकथनम् । सहार्थकशब्दप्रयोज्य इत्यभिधानात् "कमलमिव मुखं मनोज्ञम्" इत्यादौ एकमनोज्ञत्वपदार्थस्य कमलमुखयोरन्वयेऽपि नातिव्याप्तिः ।

सह सहार्थकशब्दस्योक्तिः सहोक्तिरिति व्युत्पत्तिः ।

(म) लक्षणे अतिशयोक्तिपदं नातिशयोक्तिसामान्यपरम् असम्भवात् किन्त्वतिशयोक्तिविशेषपरं तथैव सम्भवादित्याह अतिशयोक्तिरिति । अभेदाध्यवसायमूला भेदे अभेदाध्यवसायघटिता । श्लेषभित्तिका श्लेषप्रयुक्तभेदमूला, अन्यथा अश्लेषप्रयुक्तभेदमूला च ।

(य) तत्र श्लेषप्रयुक्तभेदे अभेदाध्यवसायरूपातिशयोक्तिमूलां सहोक्तिमुदाहरति सहाधरेति । अस्य पूरणं व्याख्यानञ्च प्रागेवाभिहितम (६७० पृष्ठे) । अत्राधरदलस्य रागो लौहित्यं प्रियस्य रागश्च प्रेम इति रागपदे श्लेषः । तेन च लौहित्यप्रेम्णोर्भेदेऽपि अभेदाध्यवसायादतिशयोक्तिः, तद्वशात् सहशब्दार्थवशाच्च एकरागभाक् पदार्थः अधरदलेन प्रियेण च सह अन्वीयत इति श्लेषप्रयुक्ताभेदाध्यवसायरूपातिशयोक्तिमूला सहोक्तिः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सह सरसिजषण्डैः स्वान्तमामीलयन्तः
प्रतिदिशमसृतांशोरंशवः सञ्चरन्ति (१) ॥" (र) इदं मम ।

अत्रोल्लासादीनां सम्बन्धिभेदादेव भेदः, न तु श्लिष्टतया (ल) ।

"सममेव नराधिपेन सा गुरुसम्मोहविलुप्तचेतना ।
अगमत् सह तैलविन्दुना तनुदीपार्च्चिरिव (२) क्षितेस्तलम् ॥" (व)

इयञ्च मालयापि सम्भवति । यथोदाहृते "सह कुमुदकदम्बैः—" इत्यादौ (श) ।

"लक्ष्मणेन समं रामः काननं गहनं ययौ" इत्यादौ चातिशयोक्ति-मूलत्वाभावान्नायमलङ्कारः (ष) ।

(र) असम्बन्धप्रयुक्तभेदे अभेदाध्यवसायरूपातिशयोक्तिमूलां सहोक्तिमाह सहेति । कुमुदकदम्बैः कैरवसमूहैः सह कामं कन्दर्पम् उल्लासयन्तः प्रकाशयन्तः, घना निविड़ा ये तिमिरौघा अन्धकारसमूहास्तैः सह धैर्यं चित्तस्थिरताम् उत्सारयन्तो दूरीकुर्वन्तः, तथा सरसिजषण्डैः पद्मसमूहैः सह स्वान्तं चित्तम् आमीलयन्तः कामवेगेन सङ्कोचयन्तः, अमृतांशोरंशवश्चन्द्रस्य किरणाः प्रतिदिशं सर्वासु दिक्षु सञ्चरन्ति प्रसरन्ति ।

(ल) नन्वत्र उल्लासादीनां भेदः कुतः, येन मूलभूता अभेदाध्यवसायरूपातिशयोक्तिः स्यादित्याह अत्रेति । आदिपदेन उत्सारणामीलनयोः संग्रहः । सम्बन्धिनां कुमुदकदम्ब-कामादीनाम् । श्लिष्टतया रागपदवत् श्लेषेण । तथा च कुमुदकदम्बानामुल्लासः प्रकाशः, कामस्योल्लासस्तु आविर्भाव इति सम्बन्धि-भेदेन उल्लासयोर्भेदेऽपि एकशब्दोपस्थाप्यत्वरूपसादृश्येन अभेदाध्यवसायादतिशयोक्तिः, तद्वशात् सहशब्दार्थ-वशाच्च एक एवोल्लासपदस्यार्थ-कुमुदकदम्बैः कामेन च सह अन्वीयत इति असम्बन्धप्रयुक्ताभेदाध्यवसायरूपाति-शयोक्तिमूला सहोक्तिः । एवं तिमिरौघानामुत्सारणं ततस्ततोऽपसारणम्, धैर्यस्योत्सारणन्तु विध्वंसः । सरसिजषण्डानामामीलनं सङ्कोचनम्, स्वान्तस्यामीलनन्तु एकमात्रकामप्रवृत्तिमत्करणम् । अपरन्तु पूर्ववदूह्यम् ।

(व) कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययरूपातिशयोक्तिमूलां सहोक्तिं प्रदर्शयति सममिति । रघु-वंशाष्टमसर्गस्थमिदं पद्यम् । सा इन्दुमती, गुरुणा अत्यन्तेन सम्मोहेन मूर्च्छया विलुप्ता चेतना चैतन्यं यस्याः सा तादृशी सती, तैलविन्दुना सह तनुदीपार्च्चिः सूक्ष्मदीपशिखेव, नराधिपेन राज्ञा अजेन सह सम-मेव समकालमेव युगपदेव क्षितेस्तलं भूतलम् अगमत् पतितवतीत्यर्थः ।

अत्र इन्दुमत्याः पतनं दृष्ट्वैव अजः पतित इति इन्दुमत्याः पतनं कारणम् अजस्य पतनन्तु तत्कार्य्य-मिति तयोः पौर्वापर्य्यमावश्यकम् ; किन्तु अजपतनस्य शीघ्रताद्योतनार्थं सममेवेत्यभिहितम् ; तेन कार्य्य-कारणयोः पौर्वापर्य्यविपर्य्ययरूपातिशयोक्तिः, तद्वशात् सहशब्दार्थवशाच्च एक एवागमदिति पदस्यार्थं इन्दु-मत्या नराधिपेन च सह अन्वीयत इति सहोक्तिः ।

(श) सम्भवयोग्यमाह इयञ्चेति । सहोक्तिरित्यर्थः, मालयापि एकत्वानेकत्वेनापि ।

(१) भान्ति यन्तः इति क्वचित् पाठः । (२) ननु दीपार्च्चिरिव इति पाठान्तरम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

७३ । विनोक्तिर्यद्विनाऽन्येन नासाध्वन्यदसाधु वा (१) ॥ (ख)

न असाधु अशोभनं न भवति । एवञ्च यद्यपि शोभनत्व एव पर्य्यवसानम्, तथापि अशोभनत्वाभावमुखेन शोभनवचनस्यायमभिप्रायो यत् कस्यचिद्वर्णनीयस्याशोभनत्वं तत् परसन्निधेरेव दोषः, तस्य पुनः स्वभावतः शोभनत्वमेवेति (छ) । यथा—

"विना जलदकालेन चन्द्रो निस्तन्द्रतां गतः ।
विना ग्रीष्मोष्मणा मञ्जुर्वनराजिरजायत ॥" (ज)

(घ) "मूलभूतातिशयोक्तिर्यदा भवेत्" इत्यस्य व्यावृत्तिमाह लक्षणेनेति । एतद्विस्तरस्तु प्रागेवाभिहितः ।

(ङ) प्रायेण स्वाश्रयवाक्ये यथाकथञ्चित् सादृश्यदर्शनात् उक्तिशब्दान्ततासाम्याच्च सहोक्तेः परं विनोक्तिं लक्षयति विनोक्तिरिति । अन्यदस्तु अन्येन विना यत् असाधु अशोभनं न भवति, वा अथवा अन्यदस्तु अन्येन विना यत् असाधु अशोभनं भवति, सा विनोक्तिः । तथा च—

एकस्याभावे अपरस्य अशोभनत्वाभावः शोभनत्वाभावो वा विनोक्तिरित्यर्थः । अतएवेयं द्विविधा । अत्र एकस्याभावप्रतिपादनञ्च विनार्थकशब्दमात्रेण । तेन अन्तरेण ऋते निर्-निस्-रहित-वर्जित-शून्य-नञ्-प्रभृतिना येन केनापि विनार्थकशब्देन तदभावप्रतिपादनेऽपि विनोक्तिः स्यादेवेति बोध्यम् ।

विना विनार्थकशब्दस्य उक्तिर्विनोक्तिरिति व्युत्पत्तिः ।

(छ) विवृणोति नेति । पर्य्यवसानं चरमप्रतीतिः, कारिकायां "नासाधु" इत्यस्येति शेषः । "द्वौ नञौ प्रकृतार्थं गमयतः" इति न्यायात् "अभावविरहात्मत्वं वस्तुनः प्रतियोगिता" इति न्यायाच्च । तेन "नासाधु" इत्यत्र 'साधु' इत्येव वक्तुमुचितमित्याशयः । अशोभनत्वाभावमुखेन असुन्दरत्वाभावबोधनद्वारा, शोभनवचनस्य सुन्दरत्वोक्तेः । तत्परस्य वर्णनीयेतरपदार्थस्य सन्निधेः सम्बन्धादेव, दोषो दोषमध्ये गण्यम् । पुनः किन्तु, तस्य वर्णनीयपदार्थस्य ।

(ज) तत्र अशोभनत्वाभावे उदाहरति विनेति । जलदकालेन वर्षाकालेन विना चन्द्रो निस्तन्द्रतां निर्म्मलत्वं शोभनत्वं गतः प्राप्तः । ग्रीष्मोष्मणा ग्रीष्मकालीनसन्तापेन विना वनानां राजिः श्रेणिः, मञ्जुः शोभना अजायत । स्वभावत एव शोभनस्य चन्द्रस्य जलदकालेन यदशोभनत्वं विहितम्, तज्जलदकालस्यापगमेनापगतमिति चन्द्रस्य तत् शोभनत्वं पुनरप्यायातम् । तथा स्वभावत एव शोभनाया वनराजेर्ग्रीष्मोष्मणा यदशोभनत्वं कृतम्, तद्ग्रीष्मोष्मणोऽपगमेनापगतमिति वनराजेरपि तत्स्वाभाविकं शोभनत्वं प्रत्यावृत्तमिति भावः ।

अतएवात्र जलदकालस्य ग्रीष्मोष्मणश्चाभावे चन्द्रस्य वनराजेश्च अशोभनत्वाभावाद्विनोक्तिः । उभयोरुपमानोपमेयभावस्तु व्यज्यते ।

(१) न साध्वन्यदसाधु वा इति क्वचित् पाठः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

असाधु अशोभनम् (क)। यथा—

"अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम्।
का दिनश्रीर्विनाऽर्केण का निशा शशिना विना॥" (ख)

"निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम्।
उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा विनिद्रा नलिनी न येन॥" (ग)

अत्र परस्परविनोक्तिभङ्ग्या चमत्कारातिशयः (घ)। विनाशब्द-प्रयोगाभावेऽपि विनार्थविवक्षया विनोक्तिरेवेयम् (ङ)। एवं सहोक्तिरपि सहशब्दप्रयोगाभावेऽपि सहार्थविवक्षया भवतीति बोध्यम् (च)।

---

(क) असाधुपदं व्याचष्टे असाध्विति। अशोभनं भवतीति शेषः।

(ख) शोभनत्वाभावे उदाहरति अन्विति। वनवासकाले सीतां प्रति मुनिपत्नीनामुक्तिरियम्। हे सीते! जनातीतं सर्वलोकोत्तरचरित्रम्, कान्तं भर्त्तारं रामम्, अनुयान्त्या अन्वागच्छन्त्या त्वया, साधु उचितमेव कृतम्। तथा च अर्केण सूर्येण विना दिनस्य श्रीः शोभा का कीदृशी अशोभनैवेत्यर्थः, तथा शशिना चन्द्रेण विना निशा रात्रिः का अशोभनैवेति तात्पर्य्यम्।

अत्र सूर्येण विना दिनश्रियः चन्द्रेण विना निशायाश्च शोभनत्वाभावाद्विनोक्तिः। तथा दिनश्रिया निशया च सह सीताया व्यतिरेकेणोपमानोपमेयभावो ध्वन्यते।

(ग) विनार्थकनञ्प्रयोगे शोभनत्वाभावे उदाहरति निरर्थकमिति। अत्र पूर्वार्द्धं विद्युषराजेन उत्तरार्द्धञ्च राजकुमार्य्या उक्तम्। नलिन्याः पद्मिन्या जन्म निरर्थकं गतम्, यया नलिन्या तुहिनांशुबिम्बं चन्द्रमण्डलं न दृष्टम्, चन्द्रोदयकाले रात्रावात्मनः सङ्कोचात् आत्मप्रकाशकाले दिवसे च चन्द्रोदयाभावादिति भावः। इन्दोश्चन्द्रस्यापि उत्पत्तिर्जन्म निष्फलैव, येन इन्दुना विनिद्रा प्रस्फुटिता नलिनी सा पद्मिनी न दृष्टा; पद्मिनीप्रकाशकाले दिवसे आत्मन उदयाभावात् आत्मन उदयकाले रात्रौ च पद्मिन्याः प्रकाशाभावादित्याशयः।

अत्र चन्द्रबिम्बदर्शनं विना पद्मिन्याः शोभनत्वाभावात् प्रस्फुटितपद्मिनीदर्शनं विना चन्द्रस्यापि शोभनत्वाभावाच्च विनोक्तिः। नलिनीचन्द्रयोर्जन्मनिष्फलसादृश्यन्तु व्यङ्ग्यम्।

(घ) अत्रेति। परस्परं नलिनीचन्द्रयोरन्योन्यं विनोक्तिभङ्ग्या विनाशब्दप्रयोगाभावेऽपि नञ्प्रयोगादेव तत्प्रयोगप्रकारेण।

(ङ) नन्वास्तां चमत्कारातिशयस्तथापि विनाशब्दप्रयोगाभावे विनोक्तिर्न भवितुमर्हति तदन्वर्थायोगादित्याह विनेति। एतेन विनार्थकशब्दमात्रस्यैव प्रयोगे विनोक्तिरिति ग्रन्थकारस्याप्याशयः सूचितः।

(च) इममेव न्यायं सहोक्तावप्यतिदिशति एवमिति। अतएव—

"आशयोत्तोलयामास तरसा हरकार्म्मुकम्। बभञ्ज च सनिर्घोषं संशयेन मम प्रियः॥"

इत्यादौ सहार्थकशब्दप्रयोगाभावेऽपि सहोक्तिरेव।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ७४ । समासोक्तिः समैर्यत्र कार्य्य-लिङ्ग-विशेषणैः ।
## व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ॥ (छ)

अत्र समेन कार्य्येण प्रस्तुते अप्रस्तुतव्यवहारसमारोपो यथा—

"व्याधूय यद्वसनमम्बुजलोचनाया
वक्षोजयोः कनककुम्भविलासभाजोः ।
आलिङ्गसि प्रसभमङ्गमशेषमस्या
धन्यस्त्वमेव मलयाचलगन्धवाह ! ॥" (ज)

अत्र गन्धवाहे हठकामुकव्यवहारसमारोपः (झ) ।

लिङ्गसाम्येन यथा—

"असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः ।
अनाक्रम्य जगत् कृत्स्नं नो सन्ध्यां भजते रविः ॥" (ञ)

---

(छ) सादृश्यमूलकत्वादुक्तिशब्दान्ततासाम्याच्च विनोक्तिं निरूप्येदानीं समासोक्तिं निरूपयति समासोक्तिरिति । अत्रापि य इत्यर्थे यत्रेत्यव्ययम् । तेन समैः प्रस्तुताप्रस्तुतयोः समानैः, कार्य्यं कर्म्म, लिङ्गं स्त्री-पुं-नपुंसकात्मकम्, विशेषणं भेदकधर्म्मश्च तैः, प्रस्तुते प्रकृते वस्तुनि, अप्रस्तुतस्य अप्रकृतस्य वस्तुनः पदार्थस्य, यत्र यः, व्यवहारसमारोप आचरणारोपः सा समासोक्तिः ।

तथा च समान-कार्य्य-लिङ्ग-विशेषणान्यतमद्वारा प्रस्तुतपदार्थे अप्रस्तुतपदार्थस्य व्यवहारारोपः समासोक्तिरिति संक्षिप्तः सरलार्थः ।

अनया सहान्येषां भेदस्तु वृत्तावेव वक्ष्यते । समासेन एकोच्चारणरूपसंक्षेपेण उक्तिः प्रस्तुताप्रस्तुतयोरभिधानं सूचनं समासोक्तिरिति व्युत्पत्तिः ।

(ज) व्याधूयेति । हे मलयाचलगन्धवाह ! दक्षिणवायो ! अस्या दृश्यमानायाः, अम्बुजलोचनायाः पद्मनयनाया रमण्याः, कनककुम्भयोः स्वर्णकलसयोः विलासं शोभां भजेते इति तयोस्तथोक्तयोः, वक्षोजयोः वक्षसि जातयोः कुचयोरित्यर्थः, वसनं वस्त्रं प्रसभं बलेन व्याधूय अपसार्य्य, यत् अशेषं सर्वम् अङ्गम्, आलिङ्गसि ; अतस्त्वमेव धन्यः पुण्यवान् । ईदृश्या ईदृशालिङ्गनलाभः पुण्येनैव भवतीति भावः ।

(झ) अत्रेति । गन्धवाहे प्रस्तुते वायौ, हठकामुकस्य अप्रस्तुतस्य बलपूर्वकरमणीसङ्गमशीलस्य पुरुषस्य, व्यवहारसमारोप आचरणारोपः ; तस्यापीदृशादेव व्यवहारात्, अतएवात्र समासोक्तिरिति भावः । अत्र "यदि पुनः" इत्यादिना वायोः प्रकृतत्वाप्रकृतत्वसंशयोत्थानमेव रामचरणस्यानुपपन्नम्, "अत्र समेन कार्य्येण प्रस्तुते" इत्यादिना ग्रन्थकर्त्रैव वायोः प्रकृतत्वस्य निश्चयेन निर्द्देशात् ।

(ञ) असमाप्तेति । राजतरङ्गिणीस्थमिदं पद्यम् । न समाप्ता जिगीषा जेतुमिच्छा यस्य तस्य तादृशस्य मनस्विनो बुद्धिमतो जनस्य का नाम स्त्रीचिन्ता, अपि तु कापि नेत्यर्थः । तथा च रविः सूर्य्यः कृत्स्नं समस्तं जगत् अनाक्रम्य अनतिक्रम्य, सन्ध्यां नो न भजते ।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र पुंस्त्रीलिङ्गमात्रेण (१) रविसन्ध्ययोर्नायकनायिकाव्यवहारः (ट)। विशेषणसाम्यन्तु श्लिष्टतया, साधारण्येन, औपम्यगर्भत्वेन च त्रिधा (ठ)। तत्र श्लिष्टतया यथा मम—

"विकसितमुखीं रागासङ्गाद्गलत्तिमिरावृतिं
दिनकर-कर-स्पृष्टामैन्द्रीं निरीक्ष्य दिशं पुरः।
जरठलवलीपाण्डुच्छायो भृशं कलुषान्तरः
श्रयति हरितं हन्त! प्राचेतसीं तुहिनद्युतिः॥" (ड)

(ट) अत्रेति। पुंस्त्रीलिङ्गमात्रेण केवलाभ्यां पुंलिङ्ग-स्त्रीलिङ्गाभ्यां न पुनर्वस्तुत एव पुंस्त्रीभ्याम्, रवेस्तथाभावेऽपि सन्ध्यायाः कालविशेषत्वादिति मात्रपदप्रयोगाशयः। रविसन्ध्ययोः प्रस्तुतपूर्वार्थसमर्थकत्वेन प्रस्तुतयोरित्यर्थः, नायकनायिकयोरप्रस्तुतयोः पुरुषविशेष-स्त्रीविशेषयोः, व्यवहारो यथासंख्येन व्यवहारसमारोप इति समासोक्तिरिति भावः। तथा तत्समासोक्तिमूलकां विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यास एव न पुनः "अत्र दृष्टान्तत्वेनाप्रकृतयोः" इत्यादिना रामचरणेनोक्तो दृष्टान्तः; "सामान्यविशेषभावोऽर्थान्तरन्यासे प्रतिवस्तूपमादृष्टान्तयोस्तु न तथा" इति दृष्टान्तप्रकरणे ग्रन्थकर्त्रैव समर्थ्यसमर्थकयोः सामान्यविशेषभावे सत्यर्थान्तरन्यासस्यैवाङ्गीकारात् समर्थनीयवाक्ये स्त्रीमनस्विनीः सामान्यत्वे निर्विवादात् समर्थकवाक्ये च रविसन्ध्ययोः समासोक्तिघटकेनारोपेणापि पुंविशेषस्त्रीविशेषप्रतीतेरेव स्वाभाविकत्वात् आरोपविषयारोप्यमाणयोः सर्वत्रैव समानतादर्शनात्।

यदि पुनः प्रस्तुतसमर्थकत्वेन रविसन्ध्ययोः प्रस्तुतत्वं नाङ्गीक्रियते, तदेदमुदाहरणं मम वियोगवैभवखण्डकाव्ये—

"अथ कृततिलका वा सान्द्रसिन्दूरतेजैर्दिनपतिरुपयातो यत्र सन्ध्यां क्रमेण।
नयनमिव धुवन्ती भ्रान्तभृङ्गच्छलेन सह खलु दिनकान्त्या पद्मिनी मुद्रिताऽभूत्॥"

अत्र सन्ध्यावर्णनस्य प्रस्तुततया तदङ्गत्वेन प्रस्तुते दिनमणौ प्रस्तुतयोश्च सन्ध्यापद्मिन्योः केवलपुंस्त्रीलिङ्गाभ्याम् अप्रस्तुतस्य पत्युः अप्रस्तुतयोश्च तत्पत्न्योर्व्यवहारसमारोपात् समासोक्तिः।

(ठ) विशेषणेति। श्लिष्टतया विशेषणपदस्य श्लेषवशादुभयार्थबोधकतया, साधारण्येन विशेषणपदस्याश्लेषेऽपि तदर्थस्य प्रस्तुताप्रस्तुतोभयवृत्तित्वेन, औपम्यगर्भत्वेन विशेषणसाम्ये निर्दिष्टसादृश्यकत्वेन। अत्र औपम्यगर्भत्वेनेति परमतमादायैव त्रिधेत्यभिहितम्। स्वमते तु श्लिष्टतया साधारण्येन चेति द्विधैव। एतच्च परस्ताद्व्यक्तीभविष्यति।

(ड) विकसितेति। प्रभातवर्णनेयम्। तुहिनद्युतिश्चन्द्रः, पुरः अग्रतः, रागस्य रक्तिम्नः अनुरागस्य च आसङ्गादुपस्थितेर्हेतोः, विकसितमुखीं प्रकाशितप्रथमभागां प्रफुल्लवदनाञ्च, तथा गलन्ती नश्यन्ती च तिमिराकृतिरन्धकारावरणं तिमिरवत् कृष्णवर्णा आवृतिर्वस्त्रञ्च यस्यास्ताम्, ऐन्द्रीं पूर्वां दिशम्, दिनकरस्य सूर्यस्य

(१) पुंस्त्रीलिङ्गत्वमात्रेण इति क्वचित् पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र मुखरागादिशब्दानां श्लिष्टता (ढ)।

अतएव हि "तिमिरावृतिम्" इत्यत्र "तिमिरांशुकाम्" इति पाठे एकदेशस्य रूपणेऽपि समासोक्तिरेव, न तु एकदेशविवर्त्ति रूपकम्। तत्र हि तिमिरांशुकयो रूप्यरूपकभावो द्वयोरावरकत्वेन स्फुटसादृश्यतया परसाचिव्यमनपेक्ष्यापि स्वमात्रविश्रान्त इति न समासोक्तिबुद्धिं व्याहन्तुमीशः (ण)। यत्र तु रूप्यरूपकयोः सादृश्यमस्फुटम्, तत्रैकदेशान्तररूपणं विना तदसङ्गतं स्यादित्यशाब्दमप्येकदेशान्तररूपणमर्थमपेक्षत एवेति तत्रैकदेशविवर्त्ति रूपकमेव (त)। यथा—

"जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअं।
रससंमुही वि सहसा परंमुही होइ रिउसेणा॥" (थ)

---

पुरुषान्तरस्य च करेण किरणेन हस्तेन च स्पृष्टां संयुक्तां धृताञ्च निरीक्ष्य दृष्ट्वा, भृशमत्यन्तं कलुषान्तरः अश्मचिह्नेन मलिनमध्यदेशः ईर्ष्यया अप्रसन्नमनाश्च, तथा जरठा परिणता या लवली फलविशेषः तद्वत् पाण्डुः छाया दीप्तिर्यस्य स तादृशः सन् एकत्र प्रभातवशादन्यत्र विरहादिति भावः, हन्त खेदेन, प्राचेतसीं पश्चिमां हरितं दिशं श्रयति भजते।

(ढ) अत्रेति। तथा च प्रभातवर्णनायाः प्रस्तुततया तदङ्गत्वेन प्रस्तुतायां पूर्वस्यां दिशि मुखरागादिश्लिष्टविशेषणसाम्यादप्रस्तुताया व्यभिचारिण्या नायिकाया व्यवहारसमारोपः, तथैव प्रस्तुतयोर्दिनकरचन्द्रयो श्लिष्टविशेषणसाम्यादप्रस्तुतयोर्द्वयोरुपपत्योर्व्यवहारसमारोपश्चेति समासोक्तिरित्याशयः।

(ण) एकदेशविवर्त्तिरूपकसमासोक्त्योर्विषयभेदं दर्शयितुमाह अतएवेति। विकसितेत्यादिश्लोक एवेत्यर्थः। रूपणेऽपि तिमिररूपे उपमेये अंशुकरूपस्योपमानस्यारोपेऽपि। हि यस्मात्। तत्र तिमिरांशुकामिति स्थाने. रूप्यरूपकभाव आरोपस्थलीय उपमेयोपमानभावः, द्वयोस्तिमिरस्य अंशुकस्य चेत्यर्थः, आवरकत्वेन आच्छादकत्वरूपसामान्यधर्मेण। परसाचिव्यं प्राच्यां नायिकात्वारोपानुसन्धानसाहाय्यम् स्वमात्रविश्रान्तः केवलं स्वस्मिन्नवस्थितः स्वत एव सिद्ध इत्यर्थः, इति हेतोः, समासोक्तिबुद्धिं समासोक्त्यलङ्कारप्रतीतिम्, व्याहन्तं बाधितुम्, न ईशो न समर्थः। शाब्दबोधेन रूपकघटकस्यारोपस्य अनपेक्षितत्वादिति भावः।

(त) यत्रेति। रूप्यरूपकयोरारोपस्थलीययोरुपमेयोपमानयोः। एकदेशान्तररूपणं कस्मिंश्चिदेकदेशे आरोपम्। तत् वाक्यम्, असङ्गतम् अनुपपन्नार्थकम् अशाब्दमपि शब्देनाप्रतिपादितमपि आर्थम् अर्थवशात् प्राप्यम्, एकदेशान्तररूपणं कस्मिंश्चिदेकदेशे आरोपम्। रूपकमेवेति। तादृशस्थले शाब्दबोधेन रूपकघटकस्यारोपस्य अवश्यमेवापेक्षितत्वादित्याशयः।

(थ) जस्स इति। "यस्य रणान्तःपुरके करे कुर्वाणस्य मण्डलाग्रलताम्। रससम्मुखी अपि सहसा पराङ्मुखी भवति रिपुसेना॥" इति संस्कृतानुवादः। राजस्तुतिरियम्। रणे युद्धस्थलमेव अन्तःपुरकं तस्मिन्, [illegible] मण्डलाग्रलतां तरवारिवल्लीं [illegible] करे कुर्वाणस्य हस्ते

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र रणान्तःपुरयोः सादृश्यमस्फुटमेव (द)। क्वचिच्च तत्र स्फुटसादृश्यानामपि बहूनां रूपणं शाब्दम्, एकदेशस्य च आर्थम्, तत्रैकदेशविवर्त्ति रूपकमेव। रूपकप्रतीतेर्व्यापितया समासोक्तिप्रतीतितिरोधायकत्वात् (ध)। नन्वस्ति रणान्तःपुरयोरपि सुखसञ्चारतया स्फुटसादृश्यमिति चेत्, सत्यमुक्तम्; अस्त्येव; किन्तु वाक्यार्थपर्य्यालोचनसापेक्षम्, न खलु निरपेक्षम्, सुखचन्द्रादेर्मनोहरत्वादिवत् रणान्तःपुरयोः स्वतः सुखसञ्चारत्वाभावात् (न)।

---

धारयतः; यस्य राज्ञः, रसेन युद्धानुरागेण सुरतानुरागेण च सम्मुखी अभिमुखी अपि रिपुसेना शत्रुसैन्यम् अन्या कामिनी च, सहसा तत्क्षणात् पराङ्मुखी विमुखी भवति, भयात् ईर्ष्यातश्चेति भावः। "कौक्षेयको मण्डलाग्रः करपालः कृपाणवत्" इत्यमरः।

(द) अत्रेति। अस्फुटमेवेति। रणस्य भयङ्करस्थानत्वेन अन्तःपुरस्य च सुखविहारदेशत्वेन नितान्तवैलक्षण्यादिति भावः। अत्रेदमवधेयम्—प्रस्तुते राजनि अप्रस्तुतस्य नायकस्य व्यवहारसमारोपः, तथा प्रस्तुतायां मण्डलाग्रलतायामप्रस्तुताया एकस्या रिपुसेनायाश्चापरस्य नायिकाया लिङ्गसाम्याद्व्यवहारसमारोपश्चेति किं समासोक्तिः, अथवा रणे अन्तःपुरत्वारोपः शाब्दः, राजनि नायकत्वारोपः मण्डलाग्रलतारिपुसेनयोर्नायिकाद्वयत्वारोपश्च आर्थ इत्येकदेशविवर्त्ति रूपकम्, इति सन्देहे रणान्तःपुरयोरस्फुटसादृश्यतया विभाव्य सादृश्यकल्पनया रणे अन्तःपुरत्वारोपमन्तरेण वाक्यार्थासङ्गतिरिति तदारोपस्यावश्यमपेक्षणीयतया एकदेशविवर्त्ति रूपकमेवेति।

(ध) क्वचिदिति। बहूनामधिकस्येत्यर्थः, व्यापितयेति हेतोरविशेषात्। रूपणमारोपः, शाब्द शब्दप्रतिपाद्यम्, आर्थम् अर्थतात्पर्य्यागम्यम्। तत्र "लावण्यमधुभिः पूर्णम्" इत्यादौ। व्यापितया बहुस्थानवर्त्तितया।

(न) "विकसितमुखीम्" इत्यादौ "तिमिरांशुकाम्" इति पाठेऽपि स्फुटसादृश्यतया समासोक्तिवत् "जस्स रणन्तेउरए" इत्यादावपि स्फुटसादृश्यतां प्रदर्श्य समासोक्तिमाशङ्कते नन्विति। सुखेन सञ्चारो यस्मिन् तत्तया सुखविचरणस्थानत्वरूपसामान्यधर्म्मस्य स्पष्टतयेत्यर्थः, एकत्रात्मनो महावीरत्वेन शत्रुभिर्वारयितुमशक्यत्वात् अन्यत्र तु स्वकीयविलासालयत्वादिति भावः। स्फुटसादृश्यमस्ति "रणन्तेउरए" इत्यत्रेति शेषः। अत एवात्रापि समासोक्तिरेवास्तामित्याशङ्कार्थः। अस्त्येव स्फुटसादृश्यमित्यन्वयः। वाक्यार्थपर्य्यालोचनसापेक्षं "जस्स रणन्तेउरए" इत्यादिसम्पूर्णवाक्यार्थानुसन्धानानन्तरमेव बोध्यम्, न खलु निरपेक्षं तिमिरांशुकामितिवत् तादृशसम्पूर्णवाक्यार्थानुसन्धानात् पूर्वमेव न खलु बोध्यं तत् स्फुटसादृश्यमित्यर्थः रिपुसेनायाः पराङ्मुखीभवनपर्य्यन्तज्ञानाभावे रणे सुखसञ्चारज्ञानासम्भवादिति भावः। मुखचन्द्रादेर्मनोहरत्वादिवत् "मुखचन्द्रः" इत्यादौ मनोहरत्वादिरूपसादृश्यवत्। स्वतः स्वभावतः सुखसञ्चारत्वाभावात् रणे यस्य कस्यचित् सुखसञ्चारत्वाभावेन रणान्तःपुरयोरुभयोरेव तदभावादित्यर्थः, एकत्राभावे उभयत्रैवाभावस्य तार्किकैरङ्गीकृतत्वादिति भावः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

साधारण्येन (प) यथा—

"निसर्गसौरभोद्भ्रान्त-भृङ्गसङ्गीतशालिनी ।
उदिते वासराधीशे स्मेराजनि सरोजिनी ॥" (फ)

अत्र निसर्गेत्यादिविशेषणसाम्यात् सरोजिन्यां (१) नायिकाव्यवहार-प्रतीतौ स्त्रीमात्रगामिनः स्मेरत्वधर्म्मस्य समारोपः कारणम् । तेन विना विशेषणसाम्यमात्रेण नायिकाव्यवहारप्रतीतेरसम्भवात् (ब) ।

औपम्यगर्भत्वं पुनस्त्रिधा सम्भवति—उपमा-रूपक-सङ्करगर्भत्वात् (भ) । तत्र (२) उपमागर्भत्वे यथा—

"दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी ।
केशपाशालिवृन्देन सुवेशा हरिणेक्षणा ॥" (म)

---

एतेन यत्र रूप्यरूपकयोः सादृश्यमस्फुटम्, यत्र वा बहूनां रूपणं शाब्दम् एकदेशस्य रूपणञ्च आर्थम्, तत्रैकदेशविवर्त्तिरूपकम् ; यत्र तु सादृश्यं स्फुटम्, यत्र वा बहूनां न रूपणम्, तत्र समासोक्तिरिति सिद्धान्तितम् ।

(प) साधारण्येनेति । विशेषणसाम्ये तस्य प्रस्तुताप्रस्तुतोभयवृत्तित्वेनेत्यर्थः ।

(फ) निसर्गेति । निसर्गसौरभेण स्वभावसिद्धसौगन्ध्येन उद्भ्रान्ता मुग्धीभूता ये भृङ्गा भ्रमरास्तेषां सङ्गीतशालिनी सरोजिनी पद्मिनी तल्लक्षणा नायिका च, वासराधीशे सूर्य्ये स्वनायके च, उदिते उदयाचलं प्राप्ते उपस्थिते च, स्मेरा विकसिता आनन्देन सहास्यवदना च, अजनि जाता । प्रभातवर्णनेयम् ।

(ब) उदाहृते स्मेरेति विशेषणस्य साधारण्यं प्रतिपादयति अत्रेति । निसर्गेत्यादेः पूर्वार्द्धरूपस्य विशेषणस्य साम्यात् प्रस्तुताप्रस्तुतयोरुभयोरेव सरोजिनीनायिकयोः सत्त्वेन सादृश्यादित्यर्थः एतत् साम्यन्तु सरोजिन्यां नायिकाव्यवहारप्रतीतिं प्रति मुख्यं कारणमिति बोध्यम् । अतएवात्र हेत्वर्थे पञ्चमी । अथ तथापि अश्लिष्टस्य स्मेरेतिविशेषणस्य कथं सरोजिन्यां प्रतीतिः, तस्या हास्यासम्भवादित्याह स्त्रीमात्रेति । स्त्रीमात्रगामिनः सरोजिन्यामसम्भवात् केवलस्त्रीवर्त्तिनः । समारोपः सरोजिन्यामिति सम्बध्यते । कारणं सरोजिन्यां नायिकाव्यवहारप्रतीतिं प्रति सहकारि कारणम् । तेन सरोजिन्यां स्मेरत्वधर्म्मसमारोपेण, विना "स्मेराजनि" इत्यत्र "स्फुटाजनि" इति पाठे इत्यर्थः, विशेषणमात्रसाम्येन केवलपूर्वार्द्धरूपविशेषणेन असम्भवादिति । "स्फुटाजनि" इति पाठे सरोजिनीमात्रवर्त्तिना स्फुटत्वधर्म्मेण साधारणस्यापि पूर्वार्द्धरूपविशेषणस्य सरोजिनीमात्रवर्त्तितया प्रतिपादनीयत्वादित्याशयः । तेन "विकसितमुखीम्" इत्यादौ विशेषणानां द्व्यर्थकतयैव साधारण्येन साम्यम्, इह तु निसर्गेत्यादीनामेकार्थकतयैव साधारण्येन साम्यमिति भेदः ।

(भ) परमतीयमौपम्यगर्भत्वमयुक्तमिति दर्शयितुं तदपि पुनर्विभजते औपम्येति । उपमागर्भत्वात्, रूपकगर्भत्वात्, उपमारूपकयोः सन्देहसङ्करगर्भत्वाच्चेत्यर्थः ।

---

(१) सरोजिन्या इति पाठान्तरम् । (२) अत्रेति क्वचित् पाठः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र सुवेशत्ववशात् प्रथमं दन्तप्रभाः पुष्पाणीव इत्युपमागर्भत्वेन समासः। अनन्तरञ्च दन्तप्रभासदृशैः पुष्पैश्चिता इत्यादिसमासान्तराश्रयेण समानविशेषणमाहात्म्याद्धरिणीक्षणायां लताव्यवहारप्रतीतिः (य)।

रूपकगर्भत्वे यथा—"लावण्यमधुभिः पूर्णम्" इत्यादि (र)।

---

(अ) दन्तेति। दन्तप्रभाः पुष्पाणीव अन्यत्र तु दन्तप्रभा इव पुष्पाणि तैश्चिता व्याप्ता, पाणिः करतलं पल्लवमिव अन्यत्र तु पाणिरिव पल्लवं तेन शोभत इति सा, तथा केशपाशः अलिवृन्दं भ्रमरसमूह इव अन्यत्र केशपाश इव अलिवृन्दं तेन विशिष्टेत्यर्थः, शोभनो वेशः परिच्छदो यस्याः सा सुवेशा हरिणीक्षणा मृगनयना राजत इति शेषः।

(य) अत्रेति। सुवेशत्ववशात् सुवेशेतिपदस्य उपमासाधकत्वादित्यर्थः। तथा च हरिणीक्षणायाः कामिन्याः पुष्पेण पल्लवेन च सुवेशत्वसम्भवेऽपि अलिवृन्देन सुवेशत्वासम्भवात् "केशपाशालिवृन्देन" इत्यत्र उपमितसमासः कर्त्तव्य एव, तत्साहचर्य्यात् पूर्वपदद्वयेऽप्युपमितसमास इत्याशयः। दन्तप्रभासदृशैरिति तु अर्थ-प्रदर्शनमात्रम्, "दन्तप्रभा इव पुष्पाणि" इत्थमेव विग्रहवाक्यानि, तानि तु दर्शितान्येव। समासान्तराश्रयेण लताव्यवहारारोपपत्तौ प्रकारान्तरोपमितसमासकरणेन। इति केषाञ्चिन्मतम्।

(र) रूपकेति। रूपकगर्भत्वे रूपकसमासगर्भत्वे। तथा च लावण्यान्येव मधूनि तैः, लोक-लोचनान्येव रोलम्बास्तेषां कदम्बैरिति मयूरव्यंसकादित्वाद्रूपकसमासः। एवञ्च लावण्यमधुभिरिति लोक-लोचनरोलम्बकदम्बैरिति च विशेषणसाम्यात् समासोक्तिरिति च केषाञ्चिन्मतम्। ग्रन्थकृन्मते तु मुखे पद्म-स्वरूपस्यैवारोपेण व्यवहारसमारोपाभावदत्र न समासोक्तिः। किञ्च ग्रन्थकृन्मते औपम्यगर्भविशेषणोत्थापित-सामान्यमेव न समासोक्तिर्विषयः। तथा चैतत्प्रकरण एव वक्ष्यति—"औपम्यगर्भविशेषणोत्थापितत्त्वं नास्या विषय इति विशेषणसाम्ये श्लिष्टविशेषणोत्थापिता साधारणविशेषणोत्थापिता चेति द्विधा" इति। तेन "लावण्यमधुभिः" इत्यादौ मुखे पद्मस्य स्वरूपारोपात् लावण्यमधुनोस्तरलत्वादिना लोचनरोलम्बयोश्च श्यामलत्वा-दिना सादृश्यस्य स्फुटत्वेऽपि अनेकयो रूपणाच्च एकदेशविवर्त्तिरूपकमेवेति ग्रन्थकारस्य स्थिरसिद्धान्तः। अत-एवानुपदमेव ग्रन्थकृत् स्वमतमाह—"द्वितीयस्तु प्रकार एकदेशविवर्त्तिरूपकविषय एव" इति। अतएव चैकदेशविवर्त्तिरूपकलक्षणस्य लक्ष्यतया "लावण्यमधुभिः" इत्यादिकमेवोदाहृतम्। एतेन "लावण्यमधुनोः" इत्यारभ्य "एकदेशविवर्त्तिरूपकस्य यदेतदुदाहरणं दत्तं तन्मतभेदेन" इत्यन्तं रामचरणेन यत् सम्पूर्णं विपरीत-मुक्तं तत् "द्वितीयस्तु" इत्याद्युत्तरग्रन्थस्य "औपम्यगर्भविशेषणोत्थापितत्वं नास्या विषयः" इत्याद्युत्तरग्रन्थस्य चापर्य्यालोचनेनेति सर्वथैव हेयम्। न खल्वसाधारणधीरवृत्तिना सुधीरधुरीणेन विश्वनाथेन सिद्धिभक्षणादिना नितान्तधीविकारमापन्नेनेदं प्रकरणद्वयं निरमायि, येन आत्मीयत्वेनैव निर्विवादं परमतमुदाहृत्य किञ्चिद्दूर एव पुनस्तद्विपरीतमुदाक्रियेत।

किञ्च "लावण्यमधुभिः" इत्यादौ एकदेशविवर्त्तिरूपकसमासोक्त्योरन्यतरत्वेन सम्पूर्णत्वे चिन्त्यमाने उभयोः सङ्कराङ्गीकारोऽपि न सम्भवतीति द्रष्टव्यम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सङ्करगर्भत्वे यथा—"दन्तप्रभापुष्पचिता" इत्यादौ (१) "सुवेशा" इत्यत्र 'परीता' इति पाठे हि उपमारूपकसाधकाभावात् सङ्करसमाश्रयणम् । समासान्तरं पूर्ववत् । समासान्तरमहिम्ना लताप्रतीतिः (ल) ।

एषु च येषां मते उपमासङ्करयोरेकदेशविवर्त्तिता नास्ति, तन्मते आद्य-तृतीययोः समासोक्तिः (व) । द्वितीयस्तु प्रकार एकदेशविवर्त्तिरूपकविषय एव (श) । पर्यालोचने तु आद्ये प्रकारे एकदेशविवर्त्तिन्युपमैवाङ्गीकर्त्तु-मुचिता (ष) । अन्यथा—

"ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् ।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरप्यधिकं चकार ॥" (स)

---

(ल) सङ्करेति । परीता व्याप्तेत्यर्थः । उपमारूपकसाधकाभावात् उपमारूपकयोरेकतरस्य साधकाभावादित्यर्थः । अत्रायमाशयः—परीतेति पाठे पूर्वार्द्धे उपमितसमासो रूपकसमासश्चेत्युभयमेव सम्भवति साधकाभावात् । "केशपाशालिवृन्देन" इत्यत्र च अलिवृन्दसदृशकेशपाशेन नायिकाया व्याप्तत्वसम्भवात् "केशपाशः अलिवृन्दमिव" इत्युपमितसमासः, केशपाशरूपेणालिवृन्देन लताया व्याप्तत्वसम्भवाच्च 'केशपाश एवालिवृन्दम्' इति रूपकसमासस्य सम्भवतीत्युपमारूपकयोरेकतरस्य साधकाभाव एवेति । सङ्करसमाश्रयणम् उपमारूपकयोः सन्देहसङ्करस्वीकारः । समासान्तरं परपदप्रधानः समासः 'दन्तप्रभा इव पुष्पाणि' इत्यादिरूपः समास इत्यर्थः, पूर्ववत् "दन्तप्रभा" इत्यादौ सुवेशा इति पाठवत् । लताप्रतीतिरिति । तथा च प्रथमचरणद्वये उपमितसमासेन साम्यस्य वाच्यत्वात् हरिणेक्षणायां लतासाम्यस्य च गम्यत्वात् किमेकदेशविवर्त्तिन्युपमा, किं वा दन्तप्रभादौ पुष्पत्वाद्यारोपस्य शाब्दत्वात् हरिणेक्षणायां लतात्वारोपस्य च आर्थत्वादेकदेशविवर्त्तिरूपकम् ? इत्येवमुपमा-रूपकयोः सन्देहसङ्करः ; तद्गर्भकदन्तप्रभापुष्पचितेत्यादिविशेषणसाम्यात् समासोक्तिरित्यपि च केषाञ्चिन्मतम् ।

(व) भङ्गीविशेषेण तन्मतस्य अयुक्ततां प्रतिपादयितुमाह एषु चेति । "दन्तप्रभा" इत्यादिषु च त्रिषूदा-हरणेष्वित्यर्थः । उपमासङ्करयोः उपमाया उपमारूपकयोः सन्देहसङ्करस्य चेत्यर्थः । आद्यतृतीययोः सुवेशेतिपाठान्विते "दन्तप्रभा" इत्यादौ प्रथमोदाहरणे, परीतेतिपाठान्विते "दन्तप्रभा" इत्यादावेव तृतीयोदा-हरणे चेत्यर्थः । एतेन उपमासङ्करयोरेकदेशविवर्त्तितासत्त्वे तु तयोरेवाङ्गीकरणमुचितमिति सूचितम्, एतच्चानुपदं ग्रन्थकृता मुखत एव व्यक्तीक्रियते ।

(श) इदानीं क्रमशः स्वमतमाह द्वितीयस्त्विति । "लावण्यमधुभिः पूर्णम्" इत्यादिविध इत्यर्थः । एकदेशविवर्त्तिरूपकविषय एवेति । मुखे पद्मस्वरूपस्यैवारोपात् पद्मव्यवहारारोपाभावेन समासोक्तेरसम्भवा-दिति प्रागुक्तयुक्तेः स्वमते एकदेशविवर्त्तिरूपकसत्त्वाच्चेति भावः ।

(ष) आद्यतृतीययोरपि तदुक्तां समासोक्तिं क्रमान्निरसितुमाह पर्यालोचने त्विति । सर्वतः सूक्ष्मानु-सन्धाने त्वित्यर्थः । आद्ये प्रकारे सुवेशेतिपाठान्विते "दन्तप्रभा—" इत्यादौ ।

---

(१) इत्यादि इति प्रथमान्तः पाठः क्वचित् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्यत्र कथं शरदि नायिकाव्यवहारप्रतीतिः ? नायिकापयोधरेणार्द्र-नखक्षताभ-शक्रचापधारणासम्भवात् (ङ)। ननु "आर्द्रनखक्षताभम्" इत्यत्र स्थितमप्युपमानत्वं वस्तुपर्य्यालोचनया ऐन्द्रे धनुषि सञ्चारणीयम् (च)। यथा—"दध्ना जुहोति" इत्यादौ हवनस्यान्यथासिद्धेर्दध्नि सञ्चार्य्यते विधिः (क)। एवञ्च इन्द्रचापाभमार्द्रनखक्षतं दधानेति प्रतीतिर्भविष्यति (ख)।

---

(ङ) ऐन्द्रमिति। शरत्कालवर्णनेयम्। पाण्डुपयोधरेण सकलजलवर्षणात् शुभ्रमेघेन शुभ्रस्तनेन च, आर्द्रनखक्षताभं नूतननखक्षततुल्यम्, ऐन्द्रं धनुरिन्द्रधनुः, दधाना धारयन्ती, शरत् शरत्कालः काचित् कुलटा च, सकलङ्कं शशचिह्नसमन्वितं परस्त्रीसंसर्गात् सापवादञ्च, इन्दुं चन्द्रम् उपपतिञ्च, प्रमोदयन्ती निर्म्मलीकुर्वती स्वसङ्गमेन आनन्दयन्ती च सती, रवेः सूर्य्यस्य पत्युश्चापि, अधिकं तापं प्रखरतां मनस्तापञ्च चकार।

अत्र ऐन्द्रे धनुषि नखक्षतसाम्यं मेघे स्तनसाम्यञ्च वाच्यम्, शरदि नायिकासाम्यम्, इन्दावुपपतिसाम्यम्, रवौ पतिसाम्यञ्च गम्यमित्येकदेशविवर्त्तिन्युपमेति ग्रन्थकर्त्तुराशयः। पाण्डुपयोधरेण आर्द्रनखक्षताभ-मैन्द्रं धनुर्दधानेत्याद्युपमागर्भविशेषणसाम्येन शरदि नायिकाव्यवहारसमारोपात् समासोक्तिरिति च परेषा-मभिप्राय इत्युन्नेयम्।

(ङ) तत्र परमतं दूषयितुमाह इत्यत्रेति। नायिकाया भूतलस्थिताया इति भावः, पयोधरेण स्तनेन। अत्र ग्रन्थकर्त्तुरयमाशयः—यस्य व्यवहारः समारोपणीयस्तत्रापि विशेषणस्य सम्भवपरत्वमत्यावश्यकमेव ; अन्यथा जलेऽपि वह्निव्यवहारसमारोपो भवितुमर्हति। तेन भूतलस्थिताया नायिकायाः स्तनेन दूराकाशस्थितस्य आर्द्र-नखक्षताभशक्रचापस्य धारणासम्भवेन "पाण्डुपयोधरेण आर्द्रनखक्षताभमैन्द्रं धनुर्दधाना" इति विशेषणस्य नायिकापक्षे अत्यन्तमेवासम्भवात् शरदि तद्व्यवहारसमारोपस्यैवासम्भवेन कथं समासोक्तिरिति।

(च) विरोधिनामभिप्रायमाशङ्कते नन्विति। वस्तुपर्य्यालोचनया वक्तुरभिप्रायस्य सर्वतः समालोचनये-त्यर्थः। सञ्चारणीयं प्रेरणीयम्।

(क) उक्तार्थे पर एव मीमांसकसिद्धान्तसिद्धं दृष्टान्तमाहुर्यथेति। हवनस्य होमस्य, अन्यथासिद्धेः "अग्निहोत्रं जुहोति" इत्युत्पत्तिविधिनैव सिद्धेः। विधिर्विधेयता। अत्रायं विस्तरः—अग्निहोत्रप्रकरणे "अग्निहोत्रं जुहोति" "दध्ना जुहोति" इत्यादयो नाना विधयः श्रूयन्ते। तत्र अग्निहोत्रनामकहोमस्य "अग्नि-होत्रं जुहोति" इत्युत्पत्तिविधिनैव प्राप्ततया "दध्ना जुहोति" इत्यनेन पुनस्तदंशे विधानं नोपपद्यते, अप्राप्त-प्रापकस्यैव विधिरूपत्वात्। तेन "दध्ना जुहोति" इति विधौ जुहोतीत्यत्र स्थितं विधित्वं दध्नि सञ्चार्य्यते। तथा चोक्तं पूर्वमीमांसार्थसंग्रहे लौगाक्षिणा—"दध्ना जुहोतीत्यत्र होमस्याग्निहोत्रं जुहुयादित्यनेन प्राप्तत्वात् होमोद्देशेन दधिमात्रविधानम्।" एवञ्च "दध्ना जुहोति" इत्यत्र जुहोतीत्यस्य होमानुवादमात्रे पर्य्यवसानम्। तदुक्तं भट्टपादैः—

"सर्वत्राख्यातसम्बन्धे श्रूयमाणे पदान्तरे। विधिशक्त्युपसंक्रान्तेः स्याद्धातोरनुवादता॥"

तत्रश्च दध्नो होमरूपपरार्थतया शेषत्वेन तदङ्गत्वात् "दध्ना अग्निहोत्रं जुहोति" इति विधिः पर्य्यवस्यति। तथा च पूर्वमीमांसायां तृतीयाध्यायप्रथमपादे सूत्रम्—"शेषः परार्थत्वात्।"

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति चेन्न ; एवंविधनिर्वाहे कष्टसृष्टिकल्पनादेकदेशविवर्त्त्युपमाङ्गीकार-स्यैव न्याय्यत्वात् (ग)। अस्तु वा अत्र यथाकथञ्चित् समासोक्तिः। "नेत्रै-रिवोत्पलैः पद्मैः—" इत्यादौ च (६१२ पृष्ठे) अन्यगत्यसम्भवात् (घ)। किञ्च, उपमायां व्यवहारप्रतीतेरभावात् कथं तदुपजीविकायाः समासोक्तेः प्रवेशः ? (ङ)। यदाहुः—(च)

"व्यवहारोऽथवा तत्त्वमौपम्ये यत् प्रतीयते ।
तन्नौपम्यं समासोक्तिरेकदेशोपमा स्फुटा ॥" (छ)

---

(ख) एवञ्चेति। आर्द्रनखक्षताभमित्यत्र स्थितस्याप्युपमानत्वस्य ऐन्द्रे धनुषि सञ्चारणीयत्वे चेत्यर्थः। दधाना नायिकेति शेषः। तथा च इन्द्रचापाभमार्द्रनखक्षतं दधाना इत्येवंरूपेण पर्यवसितस्य विशेषणस्य नायिकापक्षेऽपि सम्भवात् समासोक्तिर्निष्प्रत्यूहैवेति तेषामाशयः।

(ग) एतदपि दूषयति इति चेन्नेति। एवंविधेन वेदवाक्यवत् काव्ये असम्भवेन अन्यत्र स्थितस्यार्थस्य अन्यत्र सञ्चारणव्यापारेण, निर्वाहे समासोक्तिनिष्पादने, कष्टसृष्टिकल्पनात् कष्टजनकत्वस्वीकारात् तदपेक्षये-त्यर्थः। न्याय्यत्वात् श्रेयस्त्वात्।

(घ) ननु तर्हि "एतस्मिन्नधिकपयः श्रियं वहन्त्यः संक्षोभं पवनभुवा जवेन नीताः। वाल्मीकेररहित-रामलक्ष्मणानां साधर्म्यं दधति गिरां महासरस्यः ॥" इत्यादौ काव्य एव शिशुपालवधादिपद्ये प्रथमान्ततया महासरसीषु स्थितं श्रीवहनादिधर्म्मं गीषु, षष्ठ्यन्ततया गीषु स्थितम् अरहितरामलक्ष्मणधर्म्मञ्च महासरसीषु सञ्चार्य्य कथं श्लेषः स्वीक्रियत इत्याह अस्तु वेति। अत्र "ऐन्द्रं धनुः—" इत्यादौ। यथाकथञ्चित् "एतस्मिन्" इत्यादिवदेव कष्टेन धर्म्मसञ्चारकल्पनया। अन्यस्याः गतेरुपायस्यासम्भवात् एकदेशविवर्त्त्युपमामन्तरेण तादृश-वैचित्र्यस्य संज्ञान्तरासम्भवादित्यर्थः।

(ङ) अथ तत्रापि नेत्राद्युपमानत्वमुत्पलादिषु सञ्चार्य्य सरःश्रीषु नायिकाव्यवहारसमारोपेण "दन्त-प्रभापुष्पचिता" इत्यादिवदेव समासोक्तिर्भविष्यतीत्याह किञ्चेति। उपमायाम् इवादिशब्दैः साक्षादेव प्रति-पादितायामित्यर्थः। तदुपजीविकाया व्यवहारप्रतीतिमात्राश्रितायाः। तथा च "नेत्रैरिवोत्पलैः पद्मैः—" इत्यादौ पूर्वापरयोरिवशब्दैः सादृश्यस्यैव बोधिततया सन्दंशपातन्यायेन साहचर्य्येण च मध्यपातिसरःश्रीषु अध्याहृतव्यनायिकासादृश्यप्रतीतेरेव स्वाभाविकत्वम्, न तु गौरवबलेन भवदुच्यमानाया नायिकाव्यवहार-प्रतीतेः। सादृश्यव्यवहारयोश्चात्यन्तमेव वैलक्षण्यम्। अतः "नेत्रैरिवोत्पलैः पद्मैः—" इत्यादौ तादृश-वैचित्र्यस्य "एकदेशविवर्त्तिन्युपमा" इति संज्ञाकल्पनमकामेनापि भवता कर्त्तव्यमेवेति "ऐन्द्रं धनुः पाण्डुपयो-धरेण—" इत्यादावपि तत्कल्पनमेव न्याय्यमिति भावः।

(च) उक्तार्थे प्राचीनसंवादमप्याह यदाहुरिति।

(छ) व्यवहार इति। औपम्ये औपम्यगर्भविशेषणस्थले, यो व्यवहारो व्यवहारारोपात्मकमौपम्यम्, अथवा तत्, तत्त्वं तत्स्वरूपं तत्स्वरूपारोपात्मकमौपम्यम्, प्रतीयते ; तदौपम्यं न समासोक्तिः ; किन्तु एकदेशविवर्त्ति-

CC-0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

एवञ्चोपमारूपकयोरेकदेशविवर्त्तिताङ्गीकारे तन्मूलसङ्करेऽपि समासोक्ते-रप्रवेशो न्यायसिद्ध एव (ज)। तेन औपम्यगर्भविशेषणोत्थापितत्वं नास्या विषय इति विशेषणसाम्ये श्लिष्टविशेषणोत्थापिता साधारणविशेषणोत्थापिता चेति द्विधा कार्य्यलिङ्गयोस्तुल्यत्वे च द्विविधेति चतुःप्रकारा समासोक्तिः (झ)। सर्वत्रैवात्र व्यवहारसमारोपः कारणम् । स च क्वचिल्लौकिके वस्तुनि लौकिक-वस्तुव्यवहारसमारोपः, शास्त्रीये वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपः, लौकिके वा शास्त्रीयवस्तुव्यवहारसमारोपः, शास्त्रीये वा लौकिकवस्तुव्यवहार-समारोप इति चतुर्द्धा (ञ)।

तत्र लौकिकवस्त्वपि रसादिभेदादनेकविधम्। शास्त्रीयमपि तर्कायुर्वेदज्योतिःशास्त्रादिप्रसिद्धतयेति बहुप्रकारा समासोक्तिः। दिङ्मात्रं यथा— "व्याधूय यद्वसनम्" इत्यादौ लौकिके वस्तुनि लौकिकस्य हठकामुकव्यवहारादेः (१) समारोपः (ट)।

---

न्युपमा स्फुटा उक्तयुक्तेः स्पष्टा। अत्र एकदेशोपमापदमेकदेशरूपकोपलक्षणम्, तत्त्वमित्यभिधानात् समानन्यायाच्च। तेन तन्मतेऽपि "लावण्यमधुभिः पूर्णम्" इत्यादौ एकदेशविवर्त्ति रूपकमेवेति बोध्यम्।

(ज) अङ्गीत उक्तप्रायमप्यर्थं स्पष्टतः पुनराह एवञ्चेति। प्रदर्शितस्वमतस्य प्राचीनमतानुसारित्वेऽपि चेत्यर्थः। तन्मूलसङ्करे उपमारूपकसन्देहसङ्करे एकदेशविवर्त्ति रूपे इति शेषः। अप्रवेशः असम्भवः, न्यायसिद्ध एव उपमायां रूपके तदुभयसङ्करे च व्यवहारप्रतीतिर्नास्तीत्येवं युक्तिसिद्ध एव।

(झ) स्वमतमुपसंहरन्नाह तेनेति। उक्तयुक्त्या दन्तप्रभेत्यादावुदाहरणत्रये समासोक्तेरप्रवेशेनेत्यर्थः। अस्याः समासोक्तेः। इति हेतोः। एतेन "औपम्यगर्भत्वेन" इति पूर्वोक्तिः, "औपम्यगर्भत्वं पुनस्त्रिधा" इति विभागः, "दन्तप्रभा" इत्याद्युदाहरणत्रयञ्च परमत एवेति सूचितम्।

(ञ) सर्वत्रेति। अत्र समासोक्तौ, व्यवहारसमारोप एव कारणम्, न तु स्वरूपसमारोपः सादृश्य-प्रतीतिर्वेति भावः। स च व्यवहारसमारोपश्च। लौकिके इहलोक एव प्रत्यक्षादियोग्ये। शास्त्रीये शास्त्रमात्रगम्ये न तु साधारणप्रत्यक्षादियोग्य इत्यर्थः। एवमन्यत्रापि। चतुर्द्धेति। तथा च प्रागुक्तानां चतुर्णां प्रकाराणां प्रत्येक एव लौकिक इत्याद्युक्तविधया चतुर्विधत्वात् समुदायेन प्रधानतः षोड़शविधा समासोक्तिरिति बोध्यम्।

(ट) तत्रेति। रसाः शृङ्गारादयः आदिपदाद्घटपटादीनि वस्तूनि च तेषां भेदात्। हठेति। आदिशब्देन मतान्तरसिद्धस्य स्वरूपस्य संग्रहः।

---

(१) हठकामुकस्य व्यवहारादेरित्यसमस्तः पाठः क्वचित्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"यैरेकरूपमखिलास्वपि वृत्तिषु त्वां
पश्यद्भिरव्ययमसंख्यतया प्रवृत्तम् ।
लोपः कृतः किल परत्वजुषो विभक्ते-
स्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये ॥" (ठ)

अत्र आगमशास्त्रप्रसिद्धे वस्तुनि व्याकरणप्रसिद्धवस्तुव्यवहारसमारोपः (ड)। एवमन्यत्र (ढ)।

---

(ठ) यैरिति। हे परमात्मन्! अखिलास्वपि वृत्तिषु सृष्टिस्थितिप्रलयादिषु जगतः सर्वास्ववस्थासु, एकरूपम् अपरिणामित्वात् रूपान्तररहितम्, अन्यत्र तु अखिलास्वपि वृत्तिषु प्रत्यययोगसमासादिषु, एकरूपम् अनन्यथाकारम्। अव्ययं क्षयरहितम्, अन्यत्र तु अव्ययसंज्ञकम्। असंख्यतया इयत्तारहिततया प्रवृत्तं विद्यमानम्, त्वां भवन्तम्, पश्यद्भिर्जानद्भिः, यैर्जनैः परत्वजुषो भिन्नत्वाश्रितायाः त्वद्भिन्नाः पदार्थाः सन्तीति बुद्धिप्रयुक्ताया इत्यर्थः, विभक्तेर्विभागस्य विभागकरणस्येति तात्पर्य्यम्, अन्यत्र तु परवर्त्तिन्याः स्यादिविभक्तेः, लोप उच्छेदः कृतः; तैर्जनैः ध्रुवं निश्चितमेव तव लक्षणं स्वरूपावधारणम्, कृतमित्यहं मन्ये। एतदुभयपक्ष एव समानम्। "वृत्तिर्विवरणावस्थासमासाजीवनेषु च। कैशिक्यादौ प्रवृत्तौ च" इति गोपालः। "पदानां प्रत्ययैर्योगः समासाश्चेह वृत्तयः" इति कातन्त्रपरिशिष्टे श्रीपतिश्च।

(ड) अत्रेति। आगमशास्त्रप्रसिद्धे केवलाध्यात्मशास्त्रप्रथिते वस्तुनि परमात्मनि। तथा च गीतायाम्—"अव्यक्तोऽयमचिन्त्योऽयम् अविकार्य्योऽयमुच्यते।"

वेदान्तशाङ्करभाष्यधृता कठोपनिषत्—

"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥"

"असङ्ख्यतया प्रवृत्तम्" इति तु सांख्यमते। तथा च सांख्यकारिका—

"जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्य्ययाच्चैव ॥" सांख्यसूत्रमप्येवम्।

अथवा कार्य्यरूपेणासंख्यत्वम्। तथा च वेदान्तभामत्याम्—

"कार्य्यरूपेण नानात्वमभेदः कारणात्मना। हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥"

व्याकरणप्रसिद्धेति। तथा च सूत्रम्—"स्वरादिनिपातमव्ययम्।" कातन्त्रपञ्जीधृता कारिका च—

"सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥"

(ढ) एवमिति। अन्यत्राप्येवमूह्यमित्यर्थः। यथा मम रुक्मिणीहरणमहाकाव्ये—

"प्रसाधिका भूरिपदस्य साधु स्वकर्म्मसूत्रेण जगज्जनानाम्।
इयं यथार्था प्रकृतिः किलेति तस्याः परः प्रत्यय एव जातः ॥"

अत्र लौकिके विश्वासे व्याकरणशास्त्रप्रसिद्धतादिप्रत्ययव्यवहारसमारोपः। यथा वा मम वङ्गीयप्रतापनाटके—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रूपके अप्रकृतमात्मस्वरूपसन्निवेशेन प्रकृतस्य रूपमवच्छादयति, इह तु स्वावस्थासमारोपेणावच्छादितस्वरूपमेव (१) तं पूर्वावस्थातो विशेषयति (ण)। अतएव "अत्र व्यवहारसमारोपो न तु स्वरूपसमारोपः" इति वदन्ति (२) (त)। उपमाध्वनौ श्लेषे च विशेष्यस्यापि साम्यम्, इह तु विशेषणसात्मस्य (थ)। अप्रस्तुतप्रशंसायां प्रस्तुतस्य गम्यत्वम्, इह तु अप्रस्तुतस्येति भेदः (द)।

## ७५। उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः। (ध)

---

"येन सत्यपि योग्यत्वे विशेषये न लभ्यते। सति हेतौ फलाभावे विशेषोक्तिर्हि युज्यते॥"

अत्र लौकिके वाक्ये अलङ्कारशास्त्रप्रसिद्धविशेषोक्त्यलङ्कारव्यवहारसमारोपः।

"प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।
या दृष्टाऽस्मीति न पुनर्दर्शनमुपैति पुरुषस्य॥"

इति सांख्यकारिकायां सांख्यशास्त्रप्रसिद्धे प्रकृतिरूपे वस्तुनि लौकिकलज्जाशीलस्त्रीरूपवस्तुनो व्यवहार-समारोपः।

(ण) इदानीं सम्भाव्यमानेभ्योऽलङ्कारान्तरादिभ्यः समासोक्तेर्भेदं दर्शयितुमाह रूपक इति। अप्रकृत-मप्रस्तुतम् उपमानीभूतं वस्त्वित्यर्थः, आत्मरूपसन्निवेशेन उपमेये स्वकीयरूपारोपेण, प्रकृतस्य प्रस्तुतस्य उप-मेयस्येति यावत्, रूपं स्वभावम्, अवच्छादयति तिरोदधाति अप्रधानीकरोति उपमेयमप्रधानीकृत्य स्वयमेव क्रियादौ प्रधानत्वेनान्वेतीत्यर्थः। इह समासोक्तौ तु तदप्रकृतं वस्तु, स्वावस्थासमारोपेण निजव्यवहारा-रोपेण, अवच्छादितं रूपकवदेव तिरोहितं स्वरूपं यस्य तत् तादृशमेव, तं प्रकृतं पदार्थम्, पूर्वावस्थातः पूर्वावस्थापेक्षया विशेषयति उत्कर्षयतीति स्वमतम्।

(त) तृतीयमतमाह अतएवेति। अत्र समासोक्तौ। स्वरूपस्याविवरणादेतदुक्तेरस्पष्टतया वदन्तीत्यने-नास्वरसः सूचितः।

(थ) उपमेति। "हिममुक्तचन्द्ररुचिरः" इत्यादावुक्ते (२३८ पृष्ठे) उपमाध्वनौ। श्लेषे—"प्रवर्त्तयन् क्रियाः साध्वीः" इत्यादौ वक्ष्यमाणे च। न केवलं विशेषणस्य विशेष्यस्यापीत्यर्थः। विशेषणसाम्यस्य केवलस्य विशेषणस्य।

(द) अप्रस्तुतेति। गम्यत्वं व्यञ्जनया प्रतीयमानत्वम्। अप्रस्तुतस्य गम्यत्वमित्यन्वयः।

(ध) समासोक्तिप्रयोजकगणशेषे विशेषणस्योपस्थितत्वात्तत्प्रयोजितमेव परिकरं नामालङ्कारं लक्षयति उक्तिरिति। साभिप्रायैर्विशेषाभिप्रायेण प्रयुक्तैरित्यर्थः, विशेषणैः, उक्तिर्विषयविशेषकथनं परिकरो नामालङ्कारो मतः। "यद्यप्यपुष्टार्थस्य दोषताभिधानात् तन्निराकरणेन पुष्टार्थस्वीकारः कृतः, तथाप्येक-निष्ठत्वेन बहूनां विशेषणानामेवमुपन्यासे वैचित्र्यमित्यलङ्कारमध्ये गणितः" इति काव्यप्रकाशकारः। अत-एवात्र विशेषणैरिति बहुलं विवक्षितम्। तेन—

भिन्नभिन्नाभिप्रायेण बहुविशेषणप्रयोगः परिकर इति लक्षणं फलितम्।

---

(१) अनवच्छादितं स्वरूपमेव इति क्वचित् पाठः। (२) इत्याहुः इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"अङ्गराज ! सेनापते ! द्रोणोपहासिन् ! कर्ण ! रक्षैनं भीमाद्दुःशासनम्।" (न)

७६। शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम् ॥ (प)

"स्वभावादेकार्थैः" इति शब्दश्लेषाद्व्यवच्छेदः (फ)। "वाचनम्" इति च ध्वनेः (ब)। उदाहरणम्—

---

तत्र विशेषणानां हेतुरूपत्वे काव्यलिङ्गं तदितररूपत्वे तु परिकरः सामान्यविशेषन्यायादित्यनयोर्भेदः। परिकीर्य्यते सर्वतः साभिप्रायविशेषणं प्रक्षिप्यते उपन्यस्यते अभिमतार्थं इति परिकरः। परिपूर्वात् किरतेरधिकरणे अल्। कुवलयानन्दकारस्तु—

"साभिप्राये विशेष्ये तु भवेत् परिकराङ्कुरः। चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः॥"

इति सोदाहरणं लक्षणमभिधाय परिकराङ्कुरं नामालङ्कारान्तरमङ्गीकरोति। काव्यप्रकाश-दर्पणकाराभ्यान्तु विशेषवैचित्र्याभावादेव तन्न गणितम्। केचित्तु "दृष्टान्तदङ्कुर इवायं (परिकराङ्कुरः) परिकरान्नातिरिच्यते" इति वदन्ति ; तत्तुच्छम्, बहुविशेषणघटितलक्षणेन एकविशेष्यविशिष्टलक्ष्यस्य सर्वथैवास्पर्शात्।

(न) अङ्गेति। वेणीसंहारनाटके भीमेन निहन्तुमाक्रम्यमाणं दुःशासनमवलोक्य कर्णं प्रति अश्वत्थाम्नः सरोषोपहासोक्तिरियम्। हे अङ्गराज!, एतेन न खलु भवान् यः कश्चित् साधारणो लोकः, किन्तु अङ्गदेशस्यैव राजेति महाशक्तिशालिनस्ते दुर्बलरक्षणमेकान्तमेवोचितमित्यभिप्रायो व्यज्यते। ननु तथापि उदासीनस्य पररक्षणे किं प्रयोजनमित्याह सेनापते इति। मामपहाय दुर्य्योधनेन सेनापतीकृतस्य भवतः सेनान्तर्गतस्यैव विशेषतस्य तस्यैव भ्रातुर्दुःशासनस्य रक्षणं सर्वथैवोचितमित्यभिप्रायः। नन्वहमत्र न समर्थोऽस्मीत्याह द्रोणोपहासिन्निति। तर्हि कथमर्जुनेन वध्यमानं जयद्रथं रक्षितुमशक्नुवन्तं मत्पितरं द्रोणमुपहसितवानसीत्यभिप्रायः।

अतएवात्र अङ्गराजेत्यादीनां त्रयाणां विशेषणानां भिन्नभिन्नाभिप्रायेण प्रयोगात् परिकरः।

(प) समासोक्तिप्रयोजकविशेषणमध्ये श्लेषस्यापि प्रस्तावात् शब्दश्लेषस्य च प्रागेव लक्षितत्वादवशिष्टमर्थश्लेषं लक्षयति शब्दैरिति। स्वभावं स्वत एव प्रवृत्तं व्यापारं स्वाभाविकीमभिधाशक्तिमाश्रित्येति स्वभावात्, एकः अर्थो येषां तैः अभिधया एकमात्रार्थप्रतिपादकैरित्यर्थः, शब्दैः, अनेकार्थस्य वाचनं यथासम्भवं रूढ्या एकार्थस्य परिभाषादिना चापरार्थस्य प्रतिपादनम्, श्लेषः अर्थालङ्कारप्रकरणादर्थश्लेषो नामालङ्कारो मतः। एतेन "वाचनमभिधालक्षणाभ्यां प्रतिपादनम्" इति रामचरणव्याख्यानमपास्तम्, श्लेषस्थले अभिधयैव युगपदनेकार्थाभिधानस्याङ्गीकारेणानुपपत्तिलेशाभावात् प्रदर्शितलक्ष्ये मुख्यार्थबाधाभावेन लक्षणाया एवासम्भवात्, "द्वावपि राजसूर्य्यौ वाच्यौ" इति वृत्तिपङ्क्तौ "द्वावप्यर्कभूपौ वाच्यौ" इति काव्यप्रकाशोक्तौ च वाच्यावित्यनेन दुर्निवारविरोधाच्च। अत्र शब्दैरिति बहुत्वमविवक्षितम्, ईदृशैकशब्दप्रयोगस्थलेऽपि ईदृशवैचित्र्यसम्भवात्। तेन—

अभिधया एकमात्रार्थबोधकशब्देन अनेकार्थबोधनमर्थश्लेष इति लक्षणं पर्य्यवसितम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"प्रवर्त्तयन् क्रियाः साध्वीर्मालिन्यं हरितां हरन्।
महसा भूयसा दीप्तो विराजति विभाकरः॥" (भ)

अत्र प्रकरणादिनियमाभावात् द्वावपि राजसूर्य्यौ वाच्यौ (म)।

७७। क्वचिद्विशेषः सामान्यात् सामान्यं वा विशेषतः।
कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समम्॥

---

(फ) "स्वभावादेकार्थैः" इत्यस्य व्यावृत्तिमुखेन शब्दश्लेषादस्य भेदमाह स्वभावादिति। व्यवच्छेदः अस्य व्यावृत्तिः। तथा च अनेकार्थैः शब्दैरनेकार्थाभिधाने शब्दश्लेषः, एकार्थैः शब्दैः शक्तिवैचित्र्यादनेकार्थाभिधाने अर्थश्लेष इत्यनयोर्भेद इति तूक्तमेव।

(ब) अथ तथापि बोधनमित्यनभिधाय कथं विशिष्य वाचनमित्यभिहितमित्याह वाचनमिति। ध्वनेर्व्यवच्छेद इति पूर्वेणान्वयः। तथा च द्वितीयार्थस्याप्यभिधयैव प्रतिपादने अर्थश्लेषः, व्यञ्जनया प्रतिपादने तु ध्वनिरिति भावः।

(भ) प्रवर्त्तयन्निति। उक्तविधया केनचिन्निर्म्मितमिदं पद्यम्। विभाकरो नाम कश्चन राजा, साध्वीः साधारणहितकरत्वेन पवित्राः, क्रियाः सेतुकूपनिर्म्माणादीनि कार्य्याणि, प्रवर्त्तयन् राज्यमध्ये निष्पादयन्, हरितां दिशां सर्वदिग्वर्त्तिनीनां प्रजानामित्यर्थः, मालिन्यं दैन्यादिना मुखकालिमानम्, हरन् अन्नवस्त्रदानादिना विनाशयन्, तथा भूयसा महसा प्रभूतेन प्रभावेण दीप्तः सर्वत्र प्रकाशमानः सन् विराजति वर्त्तते।

अन्यत्र तु विभाकरः सूर्य्यः, साध्वीः क्रिया यज्ञादीनि सत्कर्म्माणि, प्रवर्त्तयन् आत्मन उदयेन आरम्भयन्, हरितां दिशां मालिन्यमन्धकारकृतमलिनताम्, हरन् अन्धकारनाशेन नाशयन्, तथा भूयसा महसा प्रचुरतरेण तेजसा, दीप्तो ज्वलितः सन्, विराजति आकाशे प्रकाशते।

अत्र प्रमाणं यथा प्रायश्चित्ततत्त्वधृतं विष्णुपुराणम्—

"सत्कर्म्मयोग्यो न जनो नैवापः शुद्धिकारणम्। यस्मिन्ननुदिते तस्मै नमो देवाय भास्वते॥
स्पृष्टो यदंशुभिर्लोकः क्रियायोग्योऽभिजायते। पवित्रताकारणाय तस्मै शुद्धात्मने नमः॥"

(म) उदाहृते लक्षणं प्रवर्त्तयितुमाह अत्रेति। प्रकरणादिनियमाभावात् "संयोगो विप्रयोगश्च—" इत्यादिप्रागुक्ताभिधानियामकसामान्यस्यैवाभावादित्यर्थः। वाच्यौ अभिधया प्रतिपाद्यौ। अत्रायमाशयः— "भास्कराहस्करब्रध्न-प्रभाकरविभाकराः" इत्यमरकोषप्रामाण्यात् विभाकरशब्दस्य सूर्य्ये आजानिकः सङ्केत इत्यभिधयैव विभाकरशब्दः सूर्य्यस्य वाचकः; "ततश्च नाम कुर्वीत पितैव दशमेऽहनि" इति श्रुत्या विभाकर इति राज्ञः पित्रादिकृतं नामेति विभाकरशब्दस्य राजनि चाधुनिकः सङ्केतः, तेन च विभाकरशब्दो राज्ञोऽपि वाचक एवेति। न चैवं शब्दश्लेष एवेति वाच्यम्, उभयस्यैवार्थस्य समानप्रसिद्धिसत्त्व एव शब्दश्लेषाङ्गीकारात् अत्र तु राजरूपार्थस्य पित्रादिमात्रसङ्केतितत्वेन सूर्य्यार्थवत् प्रसिद्धिविरहात्। अत्रापि चेदसन्तोषस्तदा "लोकैर्नोन्नतिमायाति लोकैनायात्यधोगतिम्" इत्यादिकं शब्दश्लेषप्रकरणीयग्रन्थकारेङ्गितानुसारेण तर्कवागीशदत्तमेवोदाहरणं द्रष्टव्यम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**अप्रस्तुतात् प्रस्तुतञ्चेद्गम्यते पञ्चधा ततः ।**
**अप्रस्तुतप्रशंसा स्यात्—(य)**

क्रमेणोदाहरणम्—

"पादाहतं यदुत्थाय मूर्द्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥" (र)

अत्र अस्मदपेक्षया रजोऽपि वरमिति विशेषे प्रस्तुते सामान्यमभिहितम् (ल) ।

"स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥" (व)

---

(य) ननु प्रस्तुताभिधानेनाप्रस्तुतप्रतीतौ समासोक्तिरिव वैपरीत्येन अप्रस्तुताभिधानेन प्रस्तुतप्रतीतौ कश्चिदलङ्कारो भवति न वेत्याकाङ्क्षायामप्रस्तुतप्रशंसालङ्कारं लक्षयति क्वचिदिति । अत्र अप्रस्तुतादिति विशेषणं सामान्यादित्यादिपञ्चम्यन्तसकलविशेष्येषु प्रस्तुतमिति । विशेषणञ्च यथासम्भवं लिङ्गव्यत्ययेन विशेष इत्यादिसमस्तप्रथमान्तविशेष्येषु अन्वेति । तथा अप्रस्तुतादप्रस्तुताभिधानादित्यर्थः । ततश्च—

अप्रस्तुताभिधानात् प्रस्तुतावगतिरप्रस्तुतप्रशंसेति सामान्यलक्षणं फलितम् ।

अस्या अप्यलङ्कारान्तरादिभ्यो भेदो वृत्तावेव वक्ष्यते । तथा च क्वचिदप्रस्तुतात् सामान्यात् प्रस्तुतो विशेषश्चेद्गम्यते, क्वचिद्वा अप्रस्तुताद्विशेषतो विशेषात् प्रस्तुतं सामान्यञ्चेद्गम्यते, क्वचिच्च अप्रस्तुतात् कार्य्यात् प्रस्तुतं निमित्तं कारणञ्चेद्गम्यते, क्वचिच्च अप्रस्तुताद्धेतोः कारणात् प्रस्तुतं कार्य्यञ्चेद्गम्यते, अथवा क्वचिदप्रस्तुतात् समात् तुल्यरूपाद्वस्तुनः प्रस्तुतं समं तुल्यरूपं वस्तु चेद्गम्यते प्रतीयते, ततस्तदा पञ्चधा पञ्चप्रकारा अप्रस्तुतप्रशंसा नामालङ्कारः स्यात् ।

अप्रस्तुतस्य वस्तुनः प्रशंसा प्रशंसनवत् प्रकृष्टकथनवत् व्यञ्जनया अष्टा सूचना अप्रस्तुतप्रशंसेति व्युत्पत्तिः ।

(र) अप्रस्तुतसामान्याभिधानात् प्रस्तुतविशेषप्रतीतावुदाहरति पादेति । शिशुपालवधद्वितीयसर्गे बलरामोक्तिरियम् । यत् रजो भूतलधूलिः, पादेन चरणेन आहतं सत्, उत्थाय उत्पत्य मूर्द्धानम् आहन्तुरेव मस्तकम्, अधिरोहति ; तत् रजो धूलिः, अचेतनमपीति भावः । अपमाने सञ्जातेऽपि स्वस्थादेव अविचलितादेव देहिनश्चेतनपदार्थात् वरं श्रेष्ठम् ।

(ल) अत्रेति । शिशुपालेनावमानितस्यापि यादवगणस्य निरुद्यमतामुपक्रम्य "पादाहतम्" इत्यादेरभिधानात् देहिविशेषभूतस्य यादवगणस्य प्रस्तुतत्वम्, देहिसामान्यस्य चाप्रस्तुतत्वमवगन्तव्यम् । तथा चाप्रस्तुतदेहिसामान्यात् प्रस्तुतस्य देहिविशेषभूत-यादवगणस्य प्रतीतेरप्रस्तुतप्रशंसा । एवमन्यत्राप्यूह्यम् । उपमेयं देहिनमपेक्ष्य उपमानस्य रजस आधिक्यप्रतिपादनात् मल्लिनाथेन तु व्यतिरेक उक्तः । तेनोभयोः सङ्करः ।

(व) अप्रस्तुतविशेषाभिधानात् प्रस्तुतसामान्यप्रतीतौ प्रदर्शयति स्रगियमिति । रघुवंशाष्टमसर्गस्थ-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र ईश्वरेच्छया क्वचिदहितकारिणोऽपि हितकारित्वं हितकारिणोऽप्यहितकारित्वमिति सामान्ये प्रस्तुते विशेषोऽभिहितः (श)। एवञ्चात्र अप्रस्तुतप्रशंसामूलोऽर्थान्तरन्यासः (ष)। दृष्टान्ते प्रख्यातमेव वस्तु प्रतिबिम्बत्वेनोपादीयते, इह तु विषामृतयोरमृतविषीभावस्याप्रसिद्धेर्न तस्य सद्भावः (स)।

"इन्दुर्लिप्त इवाञ्जनेन जड़िता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा।
कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त ! शिखिनां बर्हाः सगर्हा इव ॥" (ह)

---

मिदं पद्यम्। इयं स्रक् पुष्पमाला, यदि जीवितापहा इन्दुमत्या जीवनविनाशिनी भवेत्, तदा ममापि हृदये वक्षसि निहिता स्थापिता सती, किं कथं मां न हन्ति। ज्ञातमित्याह विषमिति। ईश्वरस्येच्छया विषमपि क्वचिदमृतं भवेत्, क्वचिद्वा अमृतमपि विषं भवेत्। ईश्वरेच्छावशादेव पुष्पमालाताड़नेनापि इन्दुमती निहता, न पुनः पुष्पमालाया एव निहननशक्तिः स्वाभाविकीति भावः।

(श) अत्रेति। अहितकारिणोऽपि पदार्थस्य, हितकारित्वं भवतीति शेषः। एवमुत्तरत्रापि। सामान्ये अहितकारि-हितकारि-साधारणे, प्रस्तुते प्रयोगायाभिमतत्वेन प्रक्रान्ते। औचित्यादेवात्र सामान्यस्यैव प्रस्तुतत्वावधारणमिति ध्येयम्।

(ष) एवञ्चेति। अप्रस्तुताद्विशेषात् प्रस्तुतसामान्यस्य प्रतीतेरप्रस्तुतप्रशंसया सामान्यस्य बुद्धावुपस्थितत्वे चेत्यर्थः। अर्थान्तरन्यासः सामान्येन विशेषसमर्थनरूप इत्याशयः। एवञ्चानयोरङ्गाङ्गिभावेन सङ्कर इति बोध्यम्।

(स) नन्वभिधासापेक्षया व्यञ्जनया सामान्यप्रत्यायनात् पूर्वमेव तन्निरपेक्षया प्रबलया अभिधया विशेषस्यैव प्रत्यायितत्वात् सामान्यविशेषभावाभावे चार्थान्तरन्यासस्यानङ्गीकारादत्र दृष्टान्त एव भवितुमर्हति, तत्कथमर्थान्तरन्यास इत्याह दृष्टान्त इति। प्रख्यातं प्रसिद्धम्। प्रतिबिम्बत्वेन उपमानत्वेन। इह तु "स्रगियम्" इत्यादौ तु। तस्य दृष्टान्तस्य, सद्भावः प्रसङ्गः। एवञ्च पारिशेष्यात् व्यञ्जनया सामान्यस्य प्रतीतौ सत्यां सामान्यविशेषभावोपस्थितेरर्थान्तरन्यास एवेति भावः।

(ह) अप्रस्तुतकार्य्याभिधानात् प्रस्तुतकारणप्रतीतावुदाहरति इन्दुरिति। सीतायाः सौन्दर्य्यमुपक्रम्य कस्यचिदुक्तिरियम्। सीतायाः पुरतः अग्रतः समीपे इत्यर्थः, इन्दुश्चन्द्रः अञ्जनेन कज्जलेन लिप्त इव विभातीति शेषः। एवमन्यत्रापि। इति मुखसौन्दर्य्यवर्णनम्। मृगीणां हरिणीनां दृष्टिः, जड़िता सज्जासङ्कुचिता इव। नयनशोभावर्णनेयम्। विद्रुमदलं प्रवालखण्डम्, प्रम्लानो मलिनीभूतः अरुणिमा लौहित्यं यस्य तत्तथोक्तमिव। अधरलौहित्यप्रशंसेयम्। हेमप्रभा स्वर्णकान्तिः, श्यामा श्यामलवर्णेव। गात्रवर्णस्य वर्णनेयम्। कोकिलवधूनां कोकिलपक्षिणीनां कण्ठेषु स्वरेषु च, कलया लेशेन कार्कश्यं कर्कशतेव प्रस्तुतं विधिना

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र सम्भाव्यमानेभ्य इन्द्रादिगताञ्जनलिप्तत्वादिभ्यः कार्य्येभ्यो वदनादिगतसौन्दर्य्यविशेषरूपं प्रस्तुतं कारणं प्रतीयते (च)।

"गच्छामीति मयोक्तया मृगदृशा निश्वासमुद्रेकिणं
त्यक्त्वा तिर्य्यगवेक्ष्य वाष्पकलुषेणैकेन मां चक्षुषा।
अद्य प्रेम मदर्पितं प्रियसखीवृन्दे त्वया वध्यता-
मित्थं स्नेहविवर्द्धितो मृगशिशुः सोत्प्रासमाभाषितः॥" (क)

अत्र कस्यचिदगमनरूपे कार्य्ये कारणमभिहितम् (ख)।

तुल्ये प्रस्तुते तुल्याभिधाने च द्विधा श्लेषमूला सादृश्यमात्रमूला च। श्लेषमूलापि समासोक्तिवद्विशेषणमात्रश्लेषे श्लेषवद्विशेष्यस्यापि श्लेषे भवतीति द्विधा (ग)। क्रमेण यथा—

---

निर्म्मितम्। इयन्तु कण्ठस्वरप्रशंसा। तथा शिखिनां मयूराणां बर्हाः पुच्छानि सगर्हाः कुत्सिता इव। केशपाशप्रशंसेयम्। हन्तेति हर्षे।

(च) अत्रेति। सम्भाव्यमानेभ्य उत्प्रेक्षाविषयीक्रियमाणेभ्यः। कार्य्येभ्यः अप्रस्तुतेभ्य इति शेषः। अत्रायमभिप्रायः—सीतायाः सौन्दर्य्यातिशयमुपक्रम्यैव केनचिदेतत्पद्यस्याभिहितत्वात् तदीयवदनादिगतः सौन्दर्य्यातिशय एवात्र प्रस्तुतः; तत्सौन्दर्य्यातिशयवशादेव च चन्द्रादिष्वञ्जनलिप्तत्वादिसम्भावनाः सञ्जाता इति तासां कार्य्यत्वमप्रस्तुतत्वञ्च, तत्सौन्दर्य्यातिशयस्य च कारणत्वं प्रस्तुतत्वञ्चेति। एवञ्चात्रोत्प्रेक्षामूला अप्रस्तुतप्रशंसेति बोध्यम्।

(क) अप्रस्तुतकारणाभिधानात् प्रस्तुतकार्य्यप्रतीतौ दर्शयति गच्छामीति। विदेशं गन्तुमुद्यतोऽपि कथं न गत इति पृच्छन्तं सुहृदं प्रति केनचिदुक्तमिदम्। 'अहं गच्छामि' इति मया उक्तया विदेशगमनायानुमतिं प्रार्थितया मृगदृशा हरिणनयनया मत्प्रियया, उद्रेकिणमत्यन्तविषादोद्रेकसूचकम्, निश्वासं त्यक्त्वा, वाष्पकलुषेण सहसैवोत्पन्नाश्रुजलाविलेन, एकेन चक्षुषा मां तिर्य्यक् वक्रम्, अवेक्ष्य अवलोक्य हे मृगशिशो! त्वया मयि अर्पितम् इयन्तं कालं यावत् दत्तम्, प्रेम स्नेहः, अद्य प्रियसखीवृन्दे वध्यतां स्थाप्यताम्, इत्थमनेन प्रकारेण स्नेहेन विवर्द्धितः परिपोषितो मृगशिशुः, सोत्प्रासं सेषद्धासम्, आभाषित उक्तः। इतः परं प्रियविच्छेदेनाहं मरिष्याम्येवेत्याशयः।

(ख) अत्रेति। अगमनरूपे गृह एवावस्थितिरूपे कार्य्ये प्रस्तुते इति शेषः। कारणमप्रस्तुतम् "अद्य प्रेम" इत्यादिरूपं मरणाभिप्रायव्यञ्जकवाक्यमित्यर्थः। तथा च गन्तुमुद्यतस्याप्यगमनं प्रति प्रियाया मरणाभिप्रायप्रकाशकवाक्यमेव हेतुरिति प्रस्तुतस्यागमनस्य कार्य्यत्वम्, अप्रस्तुतस्य तादृशवाक्यस्य च कारणत्वमित्याशयः। एवञ्च तादृशवाक्याभिधानादेव अगमनं जातमिति प्रतीतेरप्रस्तुतप्रशंसेति बोध्यम्।

(ग) इदानीमप्रस्तुतात् समात् प्रस्तुतस्य समस्य प्रतीतावुदाहर्त्तुं तद्विभजते तुल्य इति। तुल्ये वस्तुनि। तुल्यस्य अप्रस्तुतस्य वस्तुनः अभिधाने इत्यर्थः। विशेष्यस्यापीत्यपिशब्दात् विशेषणस्यापीत्यर्थः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"सहकारः सदामोदो वसन्तश्रीसमन्वितः ।
समुज्ज्वलरुचिः श्रीमान् प्रभूतोत्कलिकाकुलः ॥" (घ)

अत्र विशेषणमात्रश्लेषवशादप्रस्तुतात् सहकारात् कस्यचित् प्रस्तुतस्य नायकस्य प्रतीतिः (ङ) ।

"पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि
यायात् यदि प्रणयने न महानपि स्यात् ।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक् प्रकटिता पुरुषोत्तमेन ॥" (च)

अत्र पुरुषोत्तमपदेन विशेष्येणापि श्लिष्टेन प्रचुरप्रसिद्ध्या प्रथमं विष्णुरेव बोध्यते । तेन वर्णनीयः कश्चित् पुरुषः प्रतीयते (छ) ।

---

एतेन तुल्यात्तुल्यप्रतीतौ सादृश्यमात्रमूलत्वे एकविधा श्लेषमूलत्वे च द्विविधेति समुदायेन त्रिविधेति बोध्यम् ।

(घ) केवलविशेषणश्लेषे उदाहरति सहकार इति । भाविनो वरस्यावस्थां पृच्छन्तीं नायिकां प्रति चूततरुवर्णनच्छलेन तत्सख्या वरवर्णनेयम् । सदा सर्वदैव आमोदः कुसुमविकासात् सौरभं दैन्याभावात् प्रमोदश्च यस्य स सदामोदः ; वसन्तश्रिया वसन्तकालस्वभावादुत्पन्ननूतनपल्लवादिशोभया समन्वितः, अन्यत्र तु वसन्त इव श्रिया स्वाभाविकसौन्दर्य्येण समन्वितः ; अतएव समुज्ज्वला रुचिः सर्वप्रकारा कान्तिर्यस्य सः, अन्यत्र तु समुज्ज्वले सम्यक् शृङ्गारे रुचिः स्पृहा यस्य सः ; "शृङ्गारः शुचिरुज्ज्वलः" इत्यमरः, श्रीमान् कुसुमसम्पत्तिमान् धनसम्पत्तिमांश्च ; तथा प्रभूताभिर्बहुलाभिः उत्कलिकाभिः उत्पन्नकोरकैः सुरतोत्कण्ठाभिश्च आकुलो व्याप्तः अधीरश्च ; सहकार आम्रवृक्षः ।

(ङ) अत्रेति । मात्रपदेन सहकार इति विशेष्यस्य तु न श्लेष इति दर्शितम् ।

(च) विशेष्यस्यापि श्लेषे प्रदर्शयति पुंस्त्वादिति । भल्लटशतके राजवर्णनामुपक्रम्य पठितोऽयं श्लोकः । यदि पुंस्त्वात् पुरुषभावादपि प्रविचलेत् स्खलितो भवेत् स्त्री अपि स्यादित्यर्थः, अन्यत्र तु पुरुषत्वहीनोऽपि यदि स्यात् ; यदि अधः पातालमपि नरकमपि च यायात् गच्छेत् ; यदि च प्रणयने परान्तिके प्रार्थनायां महानपि न स्यात् क्षुद्रोऽपि स्यात् ; तदपि तथापि विश्वं पृथिवीं निजराज्यञ्च अभ्युद्धरेत् असुराधिकारात् प्रलयजलधिजलाच्च, अन्यत्र तु शत्रुहस्तादिति भावः । अतएव इतीदृशी एवम्प्रकारा इयं दिक् दृढ़प्रतिज्ञतारूपा रीतिः, केनापि अनिर्वचनीयेन, पुरुषोत्तमेन विष्णुना, पुरुषश्रेष्ठेन केनचित् राज्ञा च प्रकटिता प्रकाशिता ।

(छ) अत्रेति । न केवलं पुंस्त्वादित्यादिविशेषणेन, किन्तु पुरुषोत्तमेनेति विशेष्येणापीत्यर्थः । प्रचुरप्रसिद्ध्या भूरिप्रयोगादिति भावः । विष्णुरेव अप्रस्तुत इति शेषः । वर्णनीयो वर्णनोपक्रमेण प्रस्तुतः । अत्र प्रस्तुतस्यैव राज्ञो व्यङ्ग्यत्वादुपमानत्वाविवक्षणाच्च नोपमाध्वनिः । उभयोः प्रस्तुतत्वाभावाच्च न श्लेष इति शेषम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सादृश्यमात्रमूला यथा—

"एकः कपोतपोतः शतशः श्येनाः क्षुधाभिधावन्ति ।
अम्बरमावृतिशून्यं हर ! हर ! (१) शरणं विधेः करुणा ॥" (ज)

अत्र कपोतादप्रस्तुतात् कश्चित् प्रस्तुतः प्रतीयते (झ) ।

इयञ्च कचिद्वैधर्म्येणापि भवति । यथा—

"धन्याः खलु वने वाताः कह्लारस्पर्शशीतलाः ।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः ॥" (ञ)

अत्र वाता धन्याः, अहमधन्य इति वैधर्म्येण प्रस्तुतः प्रतीयते (ट) । वाच्यस्य सम्भवासम्भवोभयरूपतया त्रिप्रकारेयम् (ठ) । तत्र सम्भवे उक्तोदाहरणान्येव (ड) । असम्भवे (ढ) यथा—

(ज) एक इति । बहुभिः शत्रुभिराक्रान्तमसहायमेकं राजकुमारमुपक्रम्य हताशहृदयस्य कस्यचिदुक्तिरियम् । एको निःसहायः, कपोतपोतः पारावतशिशुः ; इतस्य शतशो बहुशतसंख्यकाः, श्येनास्तदाख्याः पक्षिणः, क्षुधा क्षुधया अभिधावन्ति त भक्षयितुमिति शेषः । तर्हि आकाशस्य कस्मिंश्चिदंशे पलायतामित्याह अम्बरमिति । अम्बरमाकाशम्, आवृतिशून्यम् आवरणरहितम् ; अतः पलायनसम्भावनापि नास्तीति भावः । हर ! हर ! शिव ! शिव ! विधेः करुणा विधातुर्दयैव शरणं रक्षित्री ।

(झ) अत्रेति । कश्चिन्निःसहायी बालक इत्यर्थः ।

(ञ) धन्या इति । कह्लाराणां स्वभावशीतलानां रक्तोत्पलानां स्पर्शेन शीतलाः, वने वाता वन्यवायवः खलु धन्याः । ये वाताः अनिवारिताः केनाप्यप्रतिरुद्धा सन्तः, इन्दीवरश्यामं नीलोत्पलवत् श्यामलं रामं स्पृशन्ति ।

(ट) अत्रेति । वैधर्म्येण धन्यत्वापेक्षया अधन्यत्वरूपविपरीतधर्मविशिष्टत्वेनेत्यर्थः । प्रस्तुत इति । रामविच्छेदेनाधन्यमात्मानमुपक्रम्य दशरथेनास्योक्तत्वादिति भावः । एवञ्च अप्रस्तुतात् समात् प्रस्तुतस्य समस्य प्रतीतिरूपेयमप्रस्तुतप्रशंसेति बोध्यम् ।

(ठ) सर्वप्रकारामेवाप्रस्तुतप्रशंसां पुनरपि त्रिविधत्वेन विभजते वाच्यस्येति । वाच्यस्य वाच्यार्थस्य उक्तिसम्भवरूपत्वेन एकप्रकारा, उक्त्यसम्भवरूपत्वेन अन्यप्रकारा, उक्तेः सम्भवासम्भवोभयरूपत्वेन चापरप्रकारा, इति त्रिप्रकारा ।

(ड) तत्रेति । तासु त्रिप्रकारासु मध्ये इत्यर्थः । सम्भवे मनुष्यवक्तृकत्वादेव वाक्यार्थस्योक्तिसम्भवस्थले इत्यर्थः, उक्तोदाहरणानि "पादाहतम्" इत्यादीनि ।

(ढ) असम्भव इति । वाक्यार्थोक्तेरिति शेषः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(१) हरि हरि इति क्वचित् पाठः ।

"कोकिलोऽहं भवान् काकः समानः कालिमावयोः।
अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः॥" (ण)

अत्र काककोकिलयोर्वाक्योपवाक्यं (१) प्रस्तुताध्यारोपणं विना असम्भवि (त)। उभयरूपत्वे (थ) यथा—

"अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः।
कथं कमलनालस्य मा भूवन् भङ्गुरा गुणाः॥" (द)

अत्र प्रस्तुतस्य कस्यचिदध्यारोपणं विना कमलनालान्तश्छिद्राणां गुणभङ्गुरीकरणे हेतुत्वमसम्भवि, अन्येषान्तु सम्भवीत्युभयरूपत्वम् (ध)।

अस्याश्च समासोक्तिवत् व्यवहारसमारोपप्राणत्वाच्छ्लेषशक्तिमूलावस्तु-

(ण) कोकिल इति। आत्मसमानतया स्पर्द्धमानं कञ्चिदुद्दिश्य केनचिदुक्तमिदम्। अहं कोकिलः भवांश्च काकः, आवयोः कालिमा कालवर्णत्वं समान एव; पुनः किन्तु काकलीकोविदा मम मधुरास्फुटस्वराभिज्ञा जनाः, अन्तरं नितान्तकर्कशराविणा त्वया सार्द्धं मम वैषम्यम्, कथयिष्यन्ति। अतीवमधुरराविणा मया सह नितान्तकर्कशराविणस्तव महदेव वैषम्यमिति कुतो मत्समानत्वे तव स्पर्द्धेति भावः।

(त) अत्र अप्रस्तुतात् कोकिलकाकरूपखगद्वयात् प्रस्तुतस्य उत्कृष्टापकृष्टजनरूपासमद्वयस्य प्रतीतेरप्रस्तुतप्रशंसा स्पष्टैवेति केवलमेतदुक्तेरसम्भवत्वं दर्शयितुमाह अत्रेति। वाक्योपवाक्यं वादप्रतिवादः। प्रस्तुतस्य एतदुक्तिसमर्थस्य जनस्य, अध्यारोपणं अप्रस्तुते वक्तरि कोकिले आरोपम्। असम्भवि असम्भवम्, पक्षिमात्रस्य कोकिलस्य ईदृशोक्तिसामर्थ्याभावादिति भावः।

(थ) उभयेति। उभयरूपत्वे वाक्यार्थस्य सम्भवासम्भवोभयप्रकारत्वे।

(द) अन्तरिति। आत्मदोषेण शत्रुव्यवहारेण च विनष्टयशसं कञ्चिदुद्दिश्य कस्यचिदुक्तिरियम्। अन्तः अभ्यन्तरे, भूयांसि बहुतराणि, छिद्राणि रन्ध्राणि कामक्रोधदुरभिसन्धिप्रभृतयो दोषाश्च वर्त्तन्ते; बहिर्देशे च बहवः कण्टकास्तीक्ष्णाग्रा अवयवाः शुद्रशत्रवश्च वर्त्तन्ते; अतएव कमलनालस्य पद्मनिम्नस्थदण्डस्य गुणाः अन्तर्गतसूत्राणि दयाधर्म्मादिगुणजनितयशांसि च, कथं भङ्गुराश्छेदनशीला विलुप्तस्वभावाश्च मा भूवन् न भवेयुः; अपि तु भवेयुरेवेत्यर्थः।

(ध) अत्रापि अप्रस्तुतात् समात् कमलनालात् प्रस्तुतस्य कस्यचित् समस्य प्रतीतेरप्रस्तुतप्रशंसा स्फुटैवेति केवलं वाक्यार्थस्य सम्भवासम्भवोभयरूपत्वं दर्शयितुमाह अत्रेति। कस्यचित् कामक्रोधादिदोषवती जनस्य, अध्यारोपणं कमलनाले आरोपम्। गुणभङ्गुरीकरणे अन्तर्गतसूत्रच्छेदने, हेतुत्वं तात्पर्य्यादेव लब्धं कारणत्वम्, असम्भवि असम्भवम्; छिद्राणां शून्यमात्ररूपतया निष्क्रियत्वेन गुणच्छेदने योग्यताभावादिति भावः। अन्येषां कण्टकानान्तु, सम्भवि गुणभङ्गुरीकरणे हेतुत्वं सम्भवपरम्, प्रस्तुताध्यारोपणं विनापीति शेषः; मानुषादिचेष्टया अन्तर्गतसूत्राणां बहिष्करणादिना योग्यत्वादिति भावः।

(१) वाकी वाक्यमिति पाठान्तरम्।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ध्वनेर्भेदः (न)। उपमाध्वनावप्रस्तुतस्य व्यङ्ग्यत्वम् (प)। एवं समासोक्तौ (फ)। श्लेषेऽपि द्वयोरपि वाच्यत्वम् (ब)।

(न) इदानीं ध्वनेरलङ्कारान्तराच्चास्या भेदं दर्शयितुमाह ध्वस्यावेति। श्लेषेण समादप्रस्तुतात् प्रस्तुतस्य समस्य प्रतीतिरूपाया अप्रस्तुतप्रशंसायास्त्वित्यर्थः। व्यवहारसमारोप एव प्राणो जीवनं स्वरूपं यस्यास्तस्या भावस्तस्मात् व्यवहारसमारोपघटितत्वादित्यर्थः। तथा च "पन्थिष ! ण एत्थसत्थरमत्थि" इत्यादिगतशब्दशक्तिमूलवस्तुध्वनौ व्यवहारसमारोपप्रतीतिर्नास्ति "सहकारः सदामोदः" इत्यादौ तु सा अस्तीत्युभयोर्भेद इति भावः।

(प) ननु तर्हि उपमाध्वनौ व्यवहारसमारोपप्रतीतेस्तेन सह अस्याः को भेद इत्याह उपमेति। अप्रस्तुतस्य "हिममुक्तचन्द्ररुचिरः" इत्यादौ वसन्तादेर्व्यङ्ग्यत्वम्, इह तु "सहकारः सदामोदः" इत्यादौ प्रस्तुतस्यैव नायकादेर्व्यङ्ग्यत्वमित्युभयोर्भेद इत्याशयः।

(फ) अथ समासोक्तेरपि व्यवहारसमारोपप्राणत्वात्तया सहास्याः को भेद इत्याह एवमिति। समासोक्तावप्येवम् उपमाध्वनिवदेव अप्रस्तुतस्य व्यङ्ग्यत्वमित्यर्थः। तथा च समासोक्तावपि प्रस्तुतस्यैव व्यङ्ग्यत्वम्, इह तु प्रस्तुतस्य व्यङ्ग्यत्वमित्युभयोर्भेद इति भावः। यथा समासोक्तिप्रकरणशेषे वृत्तावेवोक्तम्— "अप्रस्तुतप्रशंसायां प्रस्तुतस्य गम्यत्वम्, इह तु अप्रस्तुतस्य" इति।

(ब) अथ तदा श्लेषेऽपि व्यवहारारोपप्रतीतेस्तेन समस्या अभेदापत्तिरित्याह श्लेषेऽपीति। अपि-शब्दस्यार्थं। द्वयोरपि पक्षयोः, वाच्यत्वम्, "श्लिष्टैः पदैरनेकार्थाभिधाने" इत्युक्तेः "श्लेषोऽनेकार्थवाचनम्" इत्युक्तेश्च अभिधयैव बोध्यत्वं नियतमिति शेषः; इह तु प्रस्तुतपक्षस्य व्यङ्ग्यत्वमेव नियतमिति श्लेषादप्यस्या भेद इत्याशयः। किञ्च श्लेषे न व्यवहारारोपप्रतीतिरपि स्पष्टा।

## अथ अप्रस्तुतप्रशंसाभेदसङ्कलनम्।

| | | |
|---|---|---|
| उक्तेः सम्भवरूपत्वे | अप्रस्तुतात् सामान्यात् प्रस्तुतविशेषप्रतीतौ ... | १ |
| | अप्रस्तुताद्विशेषात् प्रस्तुतसामान्यप्रतीतौ ... | १ |
| | अप्रस्तुतात् कार्य्यात् प्रस्तुतकारणप्रतीतौ ... | १ |
| | अप्रस्तुतात् कारणात् प्रस्तुतकार्य्यप्रतीतौ ... | १ |
| | सादृश्यमात्रमूलत्वे अप्रस्तुतात् समात् प्रस्तुतसमप्रतीतौ | १ |
| | विशेषणमात्रश्लेषे अप्रस्तुतात् समात् प्रस्तुतसमप्रतीतौ | १ |
| | विशेष्यविशेषणोभयश्लेषे अप्रस्तुतात् समात् प्रस्तुतसमप्रतीतौ | १ |
| | | ७ |
| उक्तेरसम्भवरूपत्वे—उक्तविधा एव सप्त ... ... | | ७ |
| उक्तेः सम्भवासम्भवोभयरूपत्वे—उक्तविधा एव सप्त ... | | ७ |
| | | २१ |

वैधर्म्ये भेदस्तु क्वचिदेव सम्भवतीति साधर्म्यवैधर्म्याभ्यां सर्वं द्वैविध्यं न गणितम्। एवञ्च कारिकायां "पञ्चधा" इति पञ्चविधत्वोक्तिः प्रधानाभिप्रायेणेति बोध्यम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उक्ता व्याजस्तुतिः पुनः ॥

७८।
निन्दास्तुतिभ्यां वाच्याभ्यां गम्यत्वे स्तुतिनिन्दयोः। (भ)

निन्दया स्तुतेर्गम्यत्वे व्याजेन स्तुतिरिति व्युत्पत्त्या व्याजस्तुतिः, स्तुत्या निन्दाया गम्यत्वे व्याजरूपा स्तुतिः (म)। क्रमेण यथा—

"स्तनयुगमुक्ताभरणाः कण्टककलिताङ्गयष्टयो देव!।
त्वयि कुपितेऽपि प्रागिव विश्वस्ता रिपुस्त्रियो जाताः॥" (य)

इदं मम।

"व्याजस्तुतिस्तव पयोद! मयोदितेयं
यज्जीवनाय जगतस्तव जीवनानि।
स्तोत्रन्तु ते महदिदं घन! धर्म्मराज-
साहाय्यमर्जयसि यत् पथिकान् निहत्य॥" (र)

(भ) ननु अप्रस्तुताभिधानात् प्रस्तुतस्य गम्यत्वे अप्रस्तुतप्रशंसैव अन्याभिधानादन्यस्य गम्यत्वे अपरोऽपि कश्चिदलङ्कारो भवति न वेत्यपेक्षायां व्याजस्तुत्यलङ्कारं लक्षयति उक्तेति। वाच्याभ्यां वाच्यार्थवत् श्रवणमात्रमेव बोध्याभ्यां निन्दास्तुतिभ्यां निन्दाप्रशंसाभ्यां स्तुतिनिन्दयोर्यथासंख्येन प्रशंसानिन्दयोः गम्यत्वे प्रतीयमानत्वे पुनः, व्याजस्तुतिर्नाम अलङ्कृतिरुक्ता। तथा च—स्पष्टया निन्दया प्रशंसाया गम्यत्वे, स्पष्टया प्रशंसया निन्दाया गम्यत्वे वा व्याजस्तुतिरिति फलितार्थः। अतएवेयं द्विविधा।

(म) उभयपक्षेऽपि व्याजस्तुतिशब्दस्य क्रमेण व्युत्पत्तिमाह निन्दयेति। व्याजेन निन्दाच्छलेन, स्तुतिर्वास्तविकी प्रशंसा। व्याजरूपा छलरूपा अवास्तविकीत्यर्थः।

(य) निन्दया प्रशंसाया गम्यत्वे दर्शयति स्तनेति। छलेन राज्ञः प्रशंसेयम्। अव्ययानां नानार्थत्वात् कुपितेऽपीत्यपिशब्द एवार्थे। तथा च हे देव! राजन्! त्वयि कुपितेऽपि क्रुद्ध एव सति, तव रिपुस्त्रियः, स्तनयुगान्मुक्तं भयेन परित्यक्तम् आभरणमलङ्कारो याभिस्ताः, तथा कण्टकैर्भयेनैव सञ्जातै रोमाञ्चैः कलिता व्याप्ता अङ्गयष्ट्यो देहलता यासां तास्तथोक्ताश्च सत्यः, प्राक् पतिमरणात् पूर्वमेव विश्वस्ता इव आभरणमोचनाद्विधवा इव जाताः। "विश्वस्ताविधवे समे" इत्यमरः। अत्रानपकारिणीनामबलानामनर्थकदुःखोत्पादनात् श्रवणमात्रमेव राज्ञो निन्दा प्रतीयते, तयैव च पुनस्तस्य महावीरत्वसूचनेन प्रशंसावगम्यत इति व्याजेन स्तवनाद्व्याजस्तुतिः। तर्कवागीशसम्मतः श्लेषव्याख्यानपक्षस्तु न मनोरमः, तादृशपक्षद्वयस्य परस्परासम्बद्धतया निन्दाकारणकप्रशंसाप्रतीत्यभावादिति सुधीभिर्भाव्यम्।

(र) प्रशंसया निन्दाया गम्यत्वे उदाहरति व्याजेति। हे पयोद! मेघ! जगतो जगज्जनस्य

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

७९। पर्य्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते ॥ (ल)

उदाहरणम्—"स्पृष्टास्ता नन्दने शच्याः केशसम्भोगलालिताः।
सावज्ञं पारिजातस्य मञ्जर्य्यो यस्य सैनिकैः॥" (व)

अत्र हयग्रीवेण स्वर्गो विजित इति प्रस्तुतमेव गम्यं कारणं वैचित्र्यविशेषप्रतिपत्तये सैन्यस्य पारिजातमञ्जरीसावज्ञस्पर्शनरूपकार्य्यद्वारेणाभिहितम् (श)।

न चेदं कार्य्यात् कारणप्रतीतिरूपा अप्रस्तुतप्रशंसा, तत्र कार्य्यस्याप्रस्तुतत्वात्। इह तु वर्णनीयस्य प्रभावातिशयबोधकत्वेन कार्य्यमपि कारणवत् प्रस्तुतम् (ष)। एवञ्च—(स)

---

जीवनाय जीवनरक्षणाय तव जीवनानि जलानि यत् सम्भवन्तीति शेषः; इयं सा, मया तव व्याजस्तुतिरूपा स्तुतिर्मिथ्या प्रशंसा उदिता उक्ता, जगज्जनजीवनरक्षणस्य नद्यादिजलेनापि सम्भवादिति भावः। तु किन्तु, हे घन! मेघ! इदं महत् ते तव स्तोत्रं प्रशंसा; यत्, पथिकान् विरहिणो जनान् निहत्य विरहयातनायाः शतधोत्पादनेन विनाश्य, धर्मराजस्य धर्मानुसारेण प्राणिनां शासितुर्यमस्य साहाय्यं तेषां निहननेनैव सहायताम्, भजंयसि करोषि।

अत्र धर्मराजसाहाय्यकरणेन अवचमात्रमेव प्रतीयमानया प्रशंसयैव निरपराधविरहिहत्याजनितनिन्दाया गम्यतया व्याजरूपस्तवनाद्व्याजस्तुतिः।

(ल) व्याजस्तुतौ गम्यार्थस्य प्रकृतत्वाद्गम्यार्थविशेषमादायैव पर्य्यायोक्तं नामालङ्कारं निरूपयति पर्य्यायोक्तमिति। यदा भङ्ग्या भङ्गीविशेषेण उक्तैः प्रकारविशेषेण गम्यमेव प्रतीयमानमेव वस्तु, अभिधीयते अभिधेयवत् स्पष्टं प्रत्याय्यते; तदा तत् पर्य्यायोक्तं नामालङ्कार उक्त इति लिङ्गव्यत्ययेन पूर्वतोऽनुकृष्यते। तथा च—विशेषानुसन्धानेन प्रतीयमानस्यार्थस्य उक्तिवैचित्र्येण स्पष्टसूचनं पर्य्यायोक्तमिति सरलार्थः। विशेषरूपत्वेनापवादरूपा व्याजस्तुतिरस्य बाधिकेति बोध्यम्।

पर्य्यायेण प्रकारविशेषेणोक्तमुक्तिरिति पर्य्यायोक्तमिति व्युत्पत्तिः। तथा च विश्वः—"पर्य्यायस्तु प्रकारे स्यान्निर्माणेऽवसरे क्रमे।"

(व) स्पृष्टा इति। यस्य हयग्रीवस्य सैनिकैः, शच्या इन्द्राण्याः केशसम्भोगाय केशपाशे परिधानाय लालिता उद्यानपालकैः पोषिताः, पारिजातस्य वृक्षस्य ताः प्रसिद्धा मञ्जर्य्यः, नन्दने कानने, सावज्ञम् अवज्ञया सहितं स्पृष्टाः; स हयग्रीवः प्रस्तूयते इति पूर्वेणान्वयः।

(श) अत्रेति। गम्यं पूर्वप्रस्तावानुसन्धानेनैव बोध्यम्। कारणमिति। स्वर्गजयाभावे सावज्ञपारिजातमञ्जरीस्पर्शासम्भवात् तज्जये च तत्सम्भवात् सावज्ञपारिजातमञ्जरीस्पर्शं प्रति स्वर्गजयस्यैव कारणत्वमिति भावः। अभिहितं स्पष्टं सूचितम्।

(ष) अप्रस्तुतप्रशंसापर्य्यायोक्तयोर्भेदप्रदर्शनाभिप्रायेण "स्पृष्टास्ता नन्दने शच्याः" इत्यादावप्रस्तुतप्रशंसा-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"अनेन पर्य्यासयताश्रुबिन्दून् मुक्ताफलस्थूलतमान् स्तनेषु ।
प्रत्यर्पिताः शत्रुविलासिनीनामाक्षेपसूत्रेण विनैव हाराः ॥" (छ)

अत्र वर्णनीयस्य राज्ञो गम्यभूतशत्रुमारणरूपकारणवत् कार्य्यभूतं तथाविधशत्रुस्त्रीक्रन्दनजलमपि प्रभावातिशयबोधकत्वेन वर्णनार्हमिति पर्य्यायोक्तमेव (ज) ।

"राजन् ! राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे ! भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते ।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवडभावेकैकमाभाषते ॥" (क)

---

माशङ्क्य समाधत्ते न चेति । इदं "स्पृष्टास्ताः—" इत्यादावनुभूयमानं वैचित्र्यम् । अप्रस्तुतप्रशंसेति न च वाच्यमित्यर्थः । तत्र कार्य्यात् कारणप्रतीतिरूपायामप्रस्तुतप्रशंसायाम् । अप्रस्तुतत्वादप्रस्तुतत्वनियमात्, तथैव तल्लक्षणादिति भावः । इह तु "स्पृष्टास्ताः—" इत्यादौ तु, वर्णनीयस्य हयग्रीवस्य । कार्य्यमपि सावज्ञपारिजातमञ्जरीस्पर्शनमपि, कारणवत् स्वर्गविजयवत्, प्रस्तुतम्, स्वर्गविजयावगमेनैव ताहशस्पर्शादिरूपात्याचारस्याप्यवगम्यमानत्वादिति भावः । इत्थञ्च "स्पृष्टास्ताः—" इत्यादौ प्रस्तुतादेव प्रस्तुतान्तरप्रतीतेर्नाप्रस्तुतप्रशंसा, किन्तु पर्य्यायोक्तमेवेत्याशयः ।

(छ) एवञ्चेति । उक्तरीत्या "स्पृष्टास्ता नन्दने शच्याः" इत्यादौ पर्य्यायोक्तं चेत्यर्थः ।

(छ) अनेनेति । रघुवंशषष्ठसर्गस्थमिदं पद्यम् । अनेन अङ्गदेशाधिपतिना, शत्रुविलासिनीनां स्तनेषु, मुक्ताफलस्थूलतमान् मौक्तिकवत् पीवरान्, अश्रुबिन्दून्, पर्य्यासयता पातयता सता, आक्षेपसूत्रेण विनैव हाराः प्रत्यर्पिता दत्ताः ।

(ज) अत्रेति । राज्ञः अङ्गनाथस्य, गम्यभूतं व्यञ्जनया बोध्यरूपं यत् शत्रुमारणरूपं कारणं तद्वत् । कार्य्यभूतमिति । शत्रुमारणादेव तत्स्त्रीणां क्रन्दनजलमुत्पन्नमिति शत्रुमारणस्य कारणत्वम्, तत्क्रन्दनजलस्य च तत्कार्य्यत्वमिति बोध्यम् । प्रभावातिशयबोधकत्वेन राज्ञ इति पूर्वेण सम्बन्धः । वर्णनार्हं वर्णनार्हत्वेन प्रस्तुतम्, इति हेतोः, पर्य्यायोक्तमेव, न पुनरप्रस्तुतप्रशंसेति भावः । एतेन प्रस्तुतादेव प्रस्तुतावगतौ पर्य्यायोक्तम्, अप्रस्तुतादेव च प्रस्तुतावगतौ अप्रस्तुतप्रशंसेत्यनयोर्भेदो यत्यक्तापि सूचितः ।

(क) सन्दिग्धं लक्ष्यं काव्यप्रकाशादुदाहरति राजन्निति । आक्रमणीयो राजा स्वराजधान्यां कीदृशभावेन वर्त्तते इत्यवगन्तुं प्रेरितेन गुप्तचरेण तदवगत्यागत्य प्रेरयितुर्नृपतेरन्तिके उक्तमिदम् । हे देव ! तव अरिभवने शत्रुवाट्याम्, अध्वगैः पथिकैः पञ्जरात् पिञ्जरात् मुक्तः प्रच्यावितः, राजशुको राजकीयशुकपक्षी, शून्यवडभौ जनहीनचन्द्रशालायां स्थित इति शेषः, चित्रस्थान् पटे भित्तौ वा चित्रितान् राजादीनिति शेषः, अवलोक्य इत्थमेकैकं राजादीनामेकमेकम्, आभाषते आलपति । किन्तदित्याह—हे राजन् ! राजसुता मां न पाठयति कथाकथादिकमिति शेषः, देव्यो महिष्योऽपि तूष्णीं स्थिताः न मां पाठयन्तीत्यर्थः, हे कुब्जे !

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र "प्रस्थानोद्यतं भवन्तं श्रुत्वा सहसैवारयः पलायिता इति कारणं प्रस्तुतम्, कार्य्यमपि वर्णनार्हत्वेन प्रस्तुतम्" इति केचित् (ख)।

अन्ये तु "राजशुकवृत्तान्तेन न कोऽपि प्रस्तुतस्य प्रभावो (१) बोध्यत इत्यप्रस्तुतप्रशंसैव" इत्याहुः (ग)।

८०। सामान्यं वा विशेषेण विशेषस्तेन वा यदि ।
कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते ।
साधर्म्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ॥ (घ)

---

मत्परिपालिके ! कुजनारि ! मां भोजय, अद्यापि इदानीमपि, कुमारा राजपुत्रा एव सचिवाः स्वसहचरास्तैः, किं न भुज्यते ।

(ख) अत्रेति । प्रस्थानोद्यतम् आत्मनामाक्रमणायेति शेषः । कारणं तत्पलायनरूपम्, तेनैव तादृशशुकाभाषणस्य जनितत्वादिति भावः । कार्य्यमपि तादृशशुकाभाषणमपि । केचिन्नव्याः । एवञ्चैषां मते प्रस्तुतादेव तादृशशुकाभाषणकार्य्यात् प्रस्तुतस्यैव शत्रुपलायनरूपकारणस्य प्रतीतेः पर्य्यायोक्तमेवेति बोध्यम् ।

(ग) काव्यप्रकाशकारमतमाह अन्ये त्विति । राजशुकवृत्तान्तेन राजन्नित्याद्याभाषणरूपेण । प्रस्तुतस्य विपक्षराजस्य कोऽपि प्रभावो न नास्तीति बोध्यते कविनेति शेषः, सहसैव पलायनादिति भावः । तथा च अप्रस्तुतात् राजशुकवृत्तान्तरूपकार्य्यात् प्रस्तुतस्य विपक्षराजपलायनरूपस्य कारणस्य प्रतीतेरप्रस्तुतप्रशंसेति काव्यप्रकाशकृतामाशयः । यथा काव्यप्रकाशे—"प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गता इति कारणे प्रस्तुते कार्य्यमुक्तम् ।" ग्रन्थकृन्मते तु निश्चित्यैकतरानभिधानात् उक्तोभययुक्तैरेव सम्भवाच्च अप्रस्तुतप्रशंसापर्य्यायोक्तयोः सन्देहसङ्कर एवेति ध्येयम् ।

(घ) ननु कार्य्यकारणभावप्रतीतिस्थले पर्य्यायोक्तवत् अलङ्कारान्तरं भवति न वेत्याकाङ्क्षायां कार्य्यकारणभावे अर्थान्तरन्यासं निरूपयन् सामान्यत एव तं निरूपयति सामान्यमिति । उक्तार्थसमर्थनमर्थान्तरन्यास इति सामान्यलक्षणम् । उक्तार्थसमर्थनञ्च सम्भवपरैणार्थेन प्रस्तुतस्यार्थस्य असम्भवतादिनिरासद्वारा दृढ़ीकरणम् । तच्च विभजते सामान्यमिति । तत्र समर्थ्यसमर्थकोभयवृत्तिधर्म्मवत्त्वं सामान्यत्वम्, समर्थ्यसमर्थकयोरेकतरवृत्तिधर्म्मवत्त्वं विशेषत्वम् । यद्वा व्यापकत्वं सामान्यत्वम्, व्याप्यत्वञ्च विशेषत्वम् । समर्थ्यसमर्थकयोर्विवक्षितसमानधर्म्मकत्वं साधर्म्म्यं तादृशविपरीतधर्म्मकत्वञ्च वैधर्म्म्यम् । कार्य्यकारणयोश्च उत्पत्त्युत्पादनयोग्यत्वं साधर्म्म्यं तद्विपरीतञ्च वैधर्म्म्यम् । एतदुभयञ्च समर्थ्यत इत्यनेन प्रत्येकवारमेवान्वीयते । एवञ्च—

साधर्म्म्येण वैधर्म्म्येण वा यदि विशेषेण सामान्यं समर्थ्यते, तथैव तेन सामान्येन वा विशेषः समर्थ्यते, तथैव कारणेन च कार्य्यं समर्थ्यते, तथैव कार्य्येण च इदं कारणं समर्थ्यते ; ततस्तदा तेषां चतुर्णामेव समर्थनानां साधर्म्म्येण, तदितरेण वैधर्म्म्येण च सम्भवात् पुनर्द्वैविध्येन समुदाये अष्टधा अष्टविधः

---

(१) राजशुकवृत्तान्तेन कोऽपि प्रस्तुतस्य प्रभावः [illegible] प्रस्तुतप्रभावः इति पाठभेदः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्रमेणोदाहरणम्—

"बृहत्सहायः कार्य्यान्तं क्षोदीयानपि गच्छति।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा॥" (ङ)

अत्र द्वितीयार्द्धगतेन विशेषरूपेणार्थेन प्रथमार्द्धगतः सामान्योऽर्थः सोपपत्तिकः क्रियते (च)।

"यावदर्थपदां वाचमेवमादाय माधवः।
विरराम महीयांसः प्रकृत्या मितभाषिणः॥" (छ)

"पृथ्वि! स्थिरा भव, भुजङ्गम! धारयैनां
कूर्म्मराज! त्वं तदिदं द्वितयं दधीथाः।

---

अर्थान्तरन्यास उक्तः। अस्य दृष्टान्तादिभिः सह भेदस्तत्र तत्रैवोक्तः, काव्यलिङ्गादिभिर्भेदस्तु वक्ष्यते। काव्यप्रकाशकृता तु काव्यलिङ्गेनैव गतार्थत्वात् कार्य्यकारणभावे अर्थान्तरन्यासो नाङ्गीक्रियते। दर्पणकृता तु तत् काव्यलिङ्गप्रकरणे दूषयिष्यते। अर्थान्तरस्य प्रस्तुतेतरार्थस्य न्यासः स्थापनमिति व्युत्पत्तिः।

(ङ) विशेषेण सामान्यसमर्थने उदाहरति बृहदिति। शिशुपालवधद्वितीयसर्गस्थमिदं पद्यम्। क्षोदीयान् नितान्तक्षुद्रोऽपि जनः, बृहन् महान् सहायो यस्य स तादृशः सन्, कार्य्यान्तं कार्य्यशेषं गच्छति दुष्करमपि कार्य्यं साधयितुमर्हतीत्यर्थः। तथा च नगापगा पार्वत्यनदी महानद्या गङ्गादिकया सम्भूय मिलित्वा अम्भोधिं सागरम् अभ्येति गच्छति।

(च) उक्तलक्ष्यं लक्षणं सङ्गमयितुमाह अत्रेति। विशेषरूपेण नगापगादिरूपेण, क्षोदीयःप्रभृतिव्याप्यत्वादिति भावः। सामान्यः क्षोदीयःप्रभृतिः, नगापगादिव्यापकत्वादित्याशयः। सोपपत्तिकः सयुक्तिकः। तथा च "क्षोदीयानपि बृहत्सहायः सन् कार्य्यान्तं गच्छति" इति कुत्र दृष्टमित्याकाङ्क्षायां "नगापगा महानद्या सम्भूय अम्भोधिमभ्येति" इति सम्भवदुदाहरणप्रदर्शनद्वारा एकत्र दृष्टः, अन्यत्रापि सम्भवतीति न्यायेन पूर्वार्द्धसामान्यस्य असम्भवतादिनिराकरणादित्यभिप्रायः। तथा समर्थगतकार्य्यान्तप्राप्तेः समर्थकगतसागरप्राप्तेश्च समानत्वादत्र साधर्म्यमित्यपि द्रष्टव्यम्।

(छ) सामान्येन विशेषसमर्थने दर्शयति यावदिति। इदमपि शिशुपालवधद्वितीयसर्गगतं पद्यम्। माधवः कृष्णः, एवमित्थम्, यावानर्थ इति यावदर्थम् अर्थपरिमितानीत्यर्थः पदानि यस्यां तां स्वल्पार्थानुरूपामेव स्वल्पामित्यर्थः, वाचं वाक्यम्, आदाय गृहीत्वा उक्त्वेत्यर्थः, विरराम विरतो बभूव। यतश्च, महीयांसः अतिमहान्तो जनाः, प्रकृत्या स्वभावेनैव मितभाषिणः परिमितवादिनो भवन्ति।

अत्र प्रथमवाक्यगतो माधवादिरर्थो विशेषः महीयःप्रभृत्यर्थव्याप्यत्वात्, द्वितीयवाक्यगतो महीयःप्रभृतिरर्थस्तु सामान्यः, माधवाद्यर्थव्यापकत्वात्। तथा प्रयोजनीयमात्रमुक्त्वा विरामो मितभाषित्वञ्च वस्तुतः समान एव धर्म्म इति साधर्म्यम्। तेन साधर्म्ये सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। तथा पूर्वार्द्धवाक्यघटकस्य विररामेत्येकमात्रपदस्य परार्द्धे पातादर्द्धान्तरैकपदतादोषः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दिक्कुञ्जराः ! कुरुत तन्नितये दिधीर्षा-
मार्य्यः (१) करोति हरकार्म्मुकमाततज्यम् ॥" (ज)

अत्र कारणभूतं हरकार्म्मुकाततज्योकरणं पृथ्वीस्थैर्य्यादेः कार्य्यस्य समर्थकम् (झ)।

"सहसा विदधीत न क्रियाम्—" इत्यादौ (४८६ पृष्ठे) सम्पद्वरणं कार्य्यं सहसाविधानाभावस्य विमृश्यकारित्वरूपस्य कारणस्य समर्थकम् (ञ)।

एतानि साधर्म्म्ये उदाहरणानि। वैधर्म्म्ये यथा—

"इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जनः ॥" (ट)

---

(ज) कारणेन कार्य्यसमर्थने उदाहरणमाह पृथ्वीति। बालरामायणमहानाटके लक्ष्मणस्योक्तिरियम्। हे पृथ्वि ! पृथिवि ! त्वं स्थिरा दृढ़निश्चला भव, यथा न अनन्तमस्तकात् पतेरिति भावः, हे भुजङ्गम ! अनन्तनाग ! त्वमेनां पृथ्वीं धारय दृढ़मवलम्बस्व, यथेयं तव मस्तकान्न पततीति भावः। हे कूर्म्मराज ! त्वं तदिदं द्वितयं पृथ्वीभुजङ्गमावित्यर्थः, दधीथा दृढ़ं धारयेथाः, अन्यथैतौ पतिष्यत इत्याशयः। हे दिक्-कुञ्जराः ! ऐरावतादयो दिग्दन्तिनः ! यूयमपि तन्नितये पृथ्वी-भुजङ्गम-कूर्म्मराजेति त्रये दिधीर्षां धर्त्तुमिच्छां दृढ़धारणचेष्टामित्यर्थः कुरुत, अन्यथा सर्व एवैते स्वस्थानात् प्रच्यवेरन्नित्यभिप्रायः। ननु कथमीदृशी साव-धानता उपदिश्यत इत्याह—आर्य्यः पूज्यो रामचन्द्रः, हरस्य कार्म्मुकं धनुः, आतता कोटौ सीमायां विस्तृता ज्या गुणो यस्य तत्तादृशं करोति। अत्र विधेयस्य आततत्वस्य समासे गुणीभावाद्विधेयाविमर्शं दोषोऽपि।

(झ) अत्रेति। पृथ्वीस्थैर्य्यादेरिति। उपदिश्यमानदृढ़तरस्थैर्य्यादेरित्यर्थः। तादृशस्य स्थैर्य्यादेश्च अनुत्पन्नपूर्वत्वात् हरकार्म्मुकाततज्योकरणेनैवोत्पत्तेः परस्परकार्य्यकारणभावः सम्भवत्येवेति नानुप-पत्तिः। तथैव चानयोरुत्पत्त्युत्पादनयोग्यत्वरूपं साधर्म्म्यमित्यपि द्रष्टव्यम्। समर्थकं सयुक्तिकताप्रति-पादकम्, वस्तुचतुष्टयस्य चरणोक्त्यभावे पृथ्वीप्रभृतीनामसावधानतया पतनादिसम्भावनादिति भावः।

(ञ) कार्य्येण कारणसमर्थने उदाहरति सहसेति। सम्पद्वरणं सम्पत्प्राप्तिरूपम्। विमृश्यकारित्व-रूपस्य विवेचनपूर्वककार्य्यकरणस्य। समर्थकमुपपादकम्। अत्रायमाशयः—विमृश्यकारित्वं खलु सम्पदं जनयतीति लोके दृश्यते ; ततश्च विमृश्यकारित्वं कारणम्, सम्पत्प्राप्तिश्च कार्य्यम्। एवञ्च "वृणते हि" इत्यादिद्वितीयार्द्धवाक्यार्थभूतं विमृश्यकारित्वरूपं कारणं सयुक्तिकं करोति, प्रवृत्तिमतः पुरुषस्य सम्पत्प्राप्ते-रिष्टत्वादिति। अत्रापि सम्पत्प्राप्ति-विमृश्यकारित्वरूपयोः कार्य्यकारणयोरुत्पत्त्युत्पादनयोग्यत्वरूपं साधर्म्म्य-मस्तीति द्रष्टव्यम्।

(ट) इत्थमिति। कुमारसम्भवद्वितीयसर्गस्थमिदं पद्यम्। इत्थमनेन प्रकारेण आराध्यमानोऽपि उपास्यमानोऽपि तारकासुरः, भुवनत्रयं क्लिश्नाति उत्पीड़यति। तथाहि, दुर्जनः प्रत्यपकारेणैव शाम्येत् शान्तो भवेत् परोत्पीड़नाद्विरतो भवेत्, न पुनरुपकारेण।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(१) देव इति पाठान्तरम्।

अत्र सामान्यं विशेषस्य समर्थकम् (ठ)। "सहसा विदधीत—" इत्यत्र सहसाविधानाभावस्य आपत्प्रदत्वं (१) विरुद्धं कार्य्यं समर्थकम् (ड)। एवमन्यत् (ढ)।

८१। हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते। (ण)

तत्र वाक्यार्थता (२) यथा—(त)

---

(ठ) अत्रेति। सामान्यं दुर्जनादिद्वितीयवाक्यार्थरूपमित्यर्थः, तारकादिप्रथमवाक्यार्थव्यापकत्वादिति भावः। विशेषस्य तारकादिप्रथमवाक्यार्थस्य, परार्द्धवाक्यार्थव्याप्यत्वादित्याशयः। समर्थकमुपपादकम्, उपकारस्यैव भूयोदर्शनादित्यभिप्रायः। आराधनं नाम उपकारविशेषः, तेनोपकारापकारयोः परस्परविपरीतत्वादत्र वैधर्म्यम्।

(ड) वैधर्म्ये कार्य्यं कारणसमर्थने दर्शयति पुनः सहसेति। सहसाविधानाभावस्य विमृश्यकारित्वरूपस्य, आपत्प्रदत्वमापज्जनकत्वम्, विरुद्धं विमृश्यकारित्वरूपकारणादुत्पत्त्ययोग्यम्। अत्रायमाशयः— "अधर्म्मो दुःखकारणम्" इत्युक्तिः सुखकारणीभूतधर्मस्य समर्थनमिव, अविमृश्यकारित्वजन्यविपत्प्राप्त्युक्तिः सम्पज्जनकीभूतविमृश्यकारित्वस्य समर्थनमेव करोतीति।

(ढ) एवमिति। वैधर्म्ये विशेषेण सामान्यसमर्थने यथा मम चन्द्रीयप्रतापनाटके—

"सहायशून्योऽपि गुणान्वितो जनो नैवानुगत्यं भजते प्रभोरपि।
दृढस्फुरीचन्द्रनरश्मिसंयुतो महाप्रवाहे स्थिर एव लक्ष्यते॥"

अत्र द्वितीयार्द्धगतो विशेषार्थः प्रथमार्द्धगतसामान्यार्थस्य समर्थकः। तथा आनुगत्यभजनाभावो नाम स्थिरत्वम्, स्थिर एवेत्यस्य "न पुनरस्थिरः" इत्यर्थे पर्य्यवसानादस्थिरत्वञ्चैतयोः परस्परं विरुद्धधर्म्मत्वम्।

वैधर्म्ये कारणेन कार्य्यसमर्थने यथा मम रुक्मिणीहरणमहाकाव्ये—

"नृपते! गृहिणां गृहक्रिया यदनन्तेति निगद्यते न तत्।
भुवने परमेशशेषयोर्न तृतीये क्वचिदस्त्यनन्तता॥"

अत्र द्वितीयार्द्धगतः कारणीभूतार्थः प्रथमार्द्धगतस्य कार्य्यभूतार्थस्य समर्थकः। तथा अनन्तताया अभावस्य न खलु निगदनाभावोत्पादनयोग्यत्वमस्तीति वैधर्म्यमुन्नेयम्।

(ण) अर्थान्तरन्यासे कारणप्रस्तावात् कारणघटितमेव काव्यलिङ्गालङ्कारं लक्षयति हेतोरिति। हेतोः कञ्चिदर्थं प्रति कारणस्य, वाक्यपदार्थत्वे व्यञ्जनया सम्पूर्णवाक्यबोध्यत्वे पदबोध्यत्वे वा काव्यलिङ्गं नामालङ्कारो निगद्यते। तथा च—

अर्थविशेषं प्रति वाक्यस्यार्थः पदस्यार्थो वा यदि हेतुर्भवति, तदा काव्यलिङ्गं नामालङ्कारो निगद्यत इति सरलार्थः। अतएवायं द्विविधः। वाक्यं पदञ्च प्रागेव लक्षितम्। काव्यस्य लिङ्गं वैचित्र्यविशेषभूतं चिह्नमिति व्युत्पत्तिः।

---

(१) आपत्पदत्वमिति क्वचित् पाठः। (२) वाक्यार्थगता इति क्वचित् पाठः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"यत् त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये ! तव मुखच्छायानुकारि शशी।
येऽपि त्वद्गमनानुकारिगतयस्ते (१) राजहंसा गताः
त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते॥" (थ)

अत्र चतुर्थपादे पादत्रयवाक्यानि हेतवः (द)। पदार्थता (२) यथा मम—(ध)

"त्वद्वाजिराजिनिर्धूत-धूलीपटलपङ्किलाम्।
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः॥" (न)

अत्र द्वितीयार्द्धे प्रथमार्द्धमेकपदं हेतुः (प)। अनेकपदं (फ) यथा मम—

(त) तत्रेति। तयोर्हि विषयोर्मध्ये, वाक्यार्थता हेतोर्वाक्यबोध्यता यथेत्यर्थः।

(थ) यदिति। हनूमन्नाटके सीताहरणानन्तरं तामुद्दिश्य वर्षाकाले रामस्योक्तिरियम्। हे प्रिये! यत् इन्दीवरं नीलोत्पलं त्वन्नेत्रसमानकान्ति, तत् सलिले जले मग्नम्; अतएव इन्दीवरदर्शनेनापि तव नयनदर्शनतृप्तिर्न जायत इति भावः। तव मुखस्य छायां कान्तिमनुकरोतीति स तादृशः, शशी चन्द्रोऽपि मेघैरन्तरित आवृतः। अतश्चन्द्रं दृष्ट्वापि तव मुखदर्शनसुखं न लभ्यत इत्याशयः। तथा येऽपि तव गमनानुकारिणी गतिर्येषां ते तथोक्ता आसन्, तेऽपि राजहंसा गता वर्षास्वभावात् मानससरोवरमिति शेषः। अतो राजहंसगतिदर्शनेनापि तव गतिदर्शनानन्दो नानुभूयत इत्यभिप्रायः। अतएव दैवेन विधिना, मे मम, तव सादृश्येन अङ्गप्रत्यङ्गसदृशवस्तुदर्शनेनेत्यर्थः यो विनोदो विरहदुःखनिवृत्तिस्तन्मात्रमपि न क्षम्यते न सह्यते।

(द) अत्रेति। चतुर्थपादे चतुर्थपादात्मकवाक्यार्थं प्रति, पादत्रयवाक्यानि प्रथमपादत्रयात्मकवाक्यत्रयार्थाः, हेतवः कारणानि। प्रथमवाक्यत्रयार्थान् विना चतुर्थवाक्यार्थानुत्पत्तेरित्याशयः।

(ध) पदेति। पदार्थता हेतोः पदबोध्यता।

(न) त्वदिति। राज्ञः स्तुतिरियम्। हे राजन्! हरो महादेवः, भूरिभारभिया अत्यन्तभारभयेन शिरसा तव वाजिराजिभिर्घोटकश्रेणिभिः, निर्धूतेन उत्तोलितेन धूलीनां पटलेन राशिना, पङ्किलां कर्दमितां गङ्गाम्, न धत्ते न धारयति।

(प) अत्रेति। द्वितीयार्द्धे द्वितीयार्द्धगतभूरिभारं प्रति, प्रथमार्द्धमेकपदं प्रथमार्द्धरूपैकपदस्यार्थः, हेतुः कारणम्, तथा पङ्किलत्वं विना अजातपूर्वभूरिभारासम्भवादिति भावः। अत्र सम्पूर्णमेव प्रथमार्द्धं समस्ततया एकमात्रमेव पदमिति बोध्यम्।

(फ) अनेकेति। अनेकपदम् अनेकपदस्यार्थो हेतुर्यथेत्यर्थः।

(१) त्वद्गमनानुसारिगतय इति पाठान्तरम्। (२) पदार्थगता इत्यपि क्वचित् पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"पश्यन्त्यसंख्यपथगां त्वद्दानजलवाहिनीम् ।
देव ! त्रिपथगात्मानं गोपयत्युग्रमूर्द्धनि ॥" (ब)

इह केचित् वाक्यार्थगतेन काव्यलिङ्गेनैव गतार्थतया कार्य्यकारणभावे अर्थान्तरन्यासं नाद्रियन्ते, तदयुक्तम् । तथाहि, अत्र हेतुस्त्रिधा भवति—ज्ञापकः, निष्पादकः, समर्थकश्चेति (भ) । तत्र ज्ञापकोऽनुमानस्य विषयः, निष्पादकः काव्यलिङ्गस्य, समर्थकोऽर्थान्तरन्यासस्य इति पृथगेव कार्य्यकारणभावे अर्थान्तरन्यासः काव्यलिङ्गात् (म) । तथाहि, "यत् त्वन्नेत्र—" इत्यादौ चतुर्थपादवाक्यम् अन्यथा साकाङ्क्षतया असमञ्जसमेव स्यादिति पादत्रयगतवाक्यं निष्पादकत्वेनापेक्षते (य) ।

"सहसा विदधीत—" इत्यादौ तु—(४८६ पृष्ठे) (र)

---

(ब) पश्यन्तीति । इयमपि राजस्तुतिः । हे देव ! राजन् ! स्वर्गमर्त्यपातालात्मकान् त्रीनेव पथो गच्छतीति त्रिपथगा गङ्गा, तव दानजलस्य धनवितरणकालीनोत्सर्गजलस्य वाहिनीं नदीम्, असंख्यपथगां पश्यन्ती सती, उग्रमूर्द्धनि महादेवमस्तके, आत्मानं गोपयति गुप्तं करोति, लज्जावशादिति भावः ।

अत्र आत्मगोपनं प्रति असंख्यपथगामिति त्रिपथगेति च पदद्वयरूपानेकपदस्यार्थौ हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् ।

(भ) केवलसामान्यविशेषभावे द्विविधमात्रार्थान्तरन्यासवादिनां मम्मटभट्टादीनां मतं प्रसङ्गाद्दूषयितुमाह इहेति । अर्थालङ्कारप्रकरण इत्यर्थः । केचित् मम्मटादयः, वाक्यार्थगतेन सम्पूर्णार्थप्रकाशासमर्थपदार्थहेतुकेनासम्भवात् केवलवाक्यार्थहेतुकेन, काव्यलिङ्गेनैव । अतएवात्र अर्थान्तरन्यासविषयकपर्य्यालोचनं नासङ्गतमिति द्रष्टव्यम् । गतार्थतया निष्पन्नप्रयोजनकतया "पृथ्वि ! स्थिरा भव" इत्यादौ "सहसा विदधीत" इत्यादौ च कार्य्यकारणभावे अर्थान्तरन्यासप्रयोजनस्य तादृशकाव्यलिङ्गेनैव सिद्धतयेत्यर्थः । अत्र अनुमानकाव्यलिङ्गार्थान्तरन्यासात्मकालङ्कारत्रये । ज्ञापकः अनुमितिरूपज्ञानजनकः, निष्पादको नियतस्वसापेक्षस्य सम्पादकः, समर्थकः सर्वथैव स्वनिरपेक्षस्य असम्भवतादिनिरासेन नियतसम्भवतामात्रबोधकः ।

(म) अथैतेषु कः कस्य विषय इत्याह तत्रेति । ज्ञापकोऽनुमानस्य विषयः, अनुमितिरूपज्ञानजनकत्वात् ; निष्पादकः काव्यलिङ्गस्य विषय इत्यनुषङ्गः, नियतस्वसापेक्षस्य सम्पादकत्वात् ; समर्थकोऽर्थान्तरन्यासस्य विषय इति सम्बन्धः, सर्वथैव स्वनिरपेक्षस्य असम्भवतादिनिरासेन नियतसम्भवतामात्रबोधकत्वात् ।

(य) नन्वेवं विषयविभागे किं प्रमाणमित्याह तथाहीति । चतुर्थपादवाक्यं चतुर्थपादवाक्यार्थः, अन्यथा प्रथमपादत्रयगतवाक्यार्थत्रयानुक्तौ, साकाङ्क्षतया हेत्वपेक्षतया, असमञ्जसम् अपर्य्यवसितान्वयत्वेन असंलग्नम् । पादत्रयवाक्यं प्रथमपादत्रयवाक्यार्थम्, निष्पादकत्वेन स्वसम्पादकत्वेन । अतएव "यत् त्वन्नेत्रे"त्यादौ काव्यलिङ्गमिति भावः ।

(र) अथ "सहसा विदधीत न क्रियाम्" इत्यादावप्येवमेव काव्यलिङ्गमेवास्तामित्याह सहसेति । इत्यादौ तु "उपदेशमात्रे ऽपि" इति परेणान्वयः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"परापकारनिरतैर्दुर्जनैः सह सङ्गतिः ।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥" (ल)

इत्यादिवदुपदेशमात्रेणापि निराकाङ्क्षतया स्वतोऽपि गतार्थं सहसा-विधानाभावं सम्पदवरणं सोपपत्तिकमेव करोतीति पृथगेव कार्य्यकारणभावे अर्थान्तरन्यासः काव्यलिङ्गात् (व) ।

"न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ।
त्वद्वाजिराजिनिर्धूत-धूलिभिः पङ्किला हि सा ॥" (श)

इत्यत्र हिशब्दोपादानेन "पङ्किलत्वात्" इतिवत् हेतुत्वस्य स्फुटतया नायमलङ्कारः, वैचित्र्यस्यैवालङ्कारत्वात् (ष) ।

## ८२ । अनुमानन्तु विच्छित्त्या ज्ञानं साध्यस्य साधनात् ॥ (स)

(ल) परेति । परापकारनिरतैर्दुर्जनैः सह कदाचनापि सङ्गतिः सम्मेलनं न विधेया न कर्त्तव्या इति भवतः समीपे तत्त्वं यथार्थकथां वदामि । अत्र परापकारेत्यादिवाक्याभ्यन्तरे वदामीत्यादिवाक्यस्यानु-प्रवेशाद्गर्भितताहोषः समुन्नेयः ।

(व) इत्यादिवदिति । स्वतोऽपि स्वभावत एव गतार्थं चरितार्थमन्यनिरपेक्षमित्यर्थः, सहसाविधाना-भावं "सहसा विदधीत न क्रियाम्" इति वाक्यार्थभूतमित्यर्थः, सम्पदवरणं कर्त्तृ, "वृणते हि—" इत्यादि-वाक्यार्थभूता सम्पत्प्राप्तिरित्यर्थः, सोपपत्तिकमेव सयुक्तिकमेव निश्चितमेवेति यावत् करोति, न पुनः "यत् त्वमेव—" इत्यादिवत् सहसाविधानाभावं निष्पादयतीत्यर्थः । पृथगेव हेतुभेदाद्भिन्न एव । तथा च "सहसा विदधीत न क्रियाम्" इत्यादौ समर्थकहेतुस्थलेऽपि काव्यलिङ्गाङ्गीकारे "बृहत्सहायः कार्य्यान्तम्" इत्यादौ "यावदर्थपदां वाचम्" इत्यादौ च सामान्यविशेषभावेनार्थान्तरन्यासस्थलेऽपि काव्यलिङ्गाङ्गीकारौचित्येन अर्थान्तरन्यासालङ्कारसामान्यस्यैव विलोपापत्तिः । अथ सामान्यविशेषभावस्थले हेतोः समर्थकरूपतया पार्थक्यादस्त्येवार्थान्तरन्यास इति चेत् कार्य्यकारणभावस्थलेऽपि तथैव हेतोः पार्थक्यात् पृथगेवार्थान्तरन्यासः स्वीकर्त्तव्य एवेति चतुर्विध एवार्थान्तरन्यास इत्याशयः । एतेन हेतोः समर्थकरूपत्वे अर्थान्तरन्यासः निष्पादक-रूपत्वे तु काव्यलिङ्गमिति भेदोऽपि दर्शितः ।

(श) व्यावृत्तिप्रदर्शनार्थं प्रदर्शितमेव पद्यं किञ्चिद्विकलीकृत्य पुनः प्रदर्शयति न धत्त इति । हरः शम्भुः, भूरिभारभिया अत्यन्तभारभयेन शिरसा गङ्गां न धत्ते । कुतो नाम गङ्गाया भूरिभार इत्याह—हि यस्मात्, सा गङ्गा, तव वाजिराजिभिरश्वश्रेणिभिः निर्धूता उत्तोलिता या धूलयस्ताभिः पङ्किला कर्द्दमिता ।

(ष) इत्यत्रेति । स्फुटतयेति । पञ्चमीविभक्तेरिव हिशब्दस्य हेत्वर्थत्वात् "हि हेताववधारणे" इत्यमरादिवचनादिति भावः ।

(स) हेतुप्रकरणात् हेतुप्रयुक्तमेवानुमानालङ्कारं लक्षयति अन्विति । तुशब्दः काव्यलिङ्गभेदद्योतनार्थः । काव्यलिङ्गे निरुक्तदिशा निष्पादकरूपो हेतुः, इह तु ज्ञापकरूप इति भेदः । विच्छित्त्या वैचित्र्यविशेषेण

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"जानीमहेऽस्या हृदि सारसाक्ष्या विराजतेऽन्तः प्रियवक्त्रचन्द्रः ।
तत्कान्तिजालैः प्रसृतैस्तदङ्गेष्वापाण्डुता कुड्मलताक्षिपद्मे ॥" (ङ)

अत्र रूपकवशाद्विच्छित्तिः (च)। यथा वा—(क)

"यत्र पतत्यबलानां दृष्टिर्निशिताः पतन्ति तत्र शराः ।
तच्चापरोपितशरो धावत्यासां पुरः स्मरो मन्ये ॥" (ख)

---

विशिष्टमित्यर्थः, साधनात् व्याप्तिविशिष्टहेतुज्ञानात्, साध्यस्य अनुमितिविधेयस्य व्यापकस्य, ज्ञानं पक्षवृत्तित्वबोधः, अनुमानं नामालङ्कारो निगद्यत इत्यनुषङ्गः । तथा च—

वैचित्र्यविशेषवत्त्वे सति हेतुज्ञानजन्यं साध्यज्ञानमनुमानमिति सरलार्थः ।

वैचित्र्यविशेषवत्त्वे सतीत्यभिधानात् "पर्वतो वह्निमान् धूमात्" इत्यादौ वैचित्र्याभावस्थले नातिव्याप्तिः । वस्तुतस्तु वैचित्र्याभावे अलङ्कारसामान्यलक्षणस्यैवासङ्गतेः "पर्वतो वह्निमान् धूमात्" इत्यादौ विशेषानुमानलक्षणस्याप्यसङ्गतिः सुतरां सिद्धा । तथापि तत्सामान्यलक्षणस्मरणार्थमेव मूले विच्छित्त्येत्यभिधानादत्रापि वैचित्र्यविशेषवत्त्वे सतीत्यभिहितम् । अनु व्याप्तिज्ञानात् पश्चात् मानं ज्ञानमित्यनुमानमिति व्युत्पत्तिः ।

(ङ) जानीमह इति । काञ्चिद्विरहिणीमवलोक्य सख्युरन्तिके कस्यचिदुक्तिरियम् । अस्या दृश्यमानायाः सारसाक्ष्याः पद्मनयनायास्तरुण्याः, हृदि अन्तः हृदयाभ्यन्तरे प्रियस्य कान्तस्य वक्त्रं मुखमेव चन्द्रः, विराजते प्रद्योतते इयं प्रियस्य मुखचन्द्रं चिन्तयतीत्यर्थः, इति जानीमहे बुध्यामहे । तत्तस्मात् विराजनात् प्रसृतैः सर्वत्र पतितैः, तस्य प्रियवक्त्रचन्द्रस्य कान्तिजालैर्द्युतिसमूहैः, अङ्गेषु अस्या नायिकाया गात्रेषु, आपाण्डुता सम्यक् श्वेतता, तथा अक्षिपद्मे कुड्मलता मुकुलितता जातेत्यपि जानीमह इत्यन्वयः । चन्द्रप्रकाशे पद्मस्य कुड्मलता स्यादिति द्रष्टव्यम् ।

(च) अत्रेति । रूपकवशात् "प्रियवक्त्रचन्द्रः" इति निरङ्गकेवलरूपकालङ्कारप्रयोगात् । न च प्रियवक्त्रं चन्द्र इवेत्युपमितसमासात् लुप्तोपमेति वाच्यम्, विराजत इति प्रभाविस्तारार्थकक्रियाया रूपकस्यैव साधकत्वात् । अत्र रूपकेत्युपलक्षणम् । तथा च विरहजनितपाण्डुतायां चन्द्रप्रकाशजनितपाण्डुतायाः, चिन्ताजनितनेत्रपद्मसङ्कोचे च चन्द्रप्रकाशजनितसङ्कोचस्य सम्भावनात् जानीमहे इति वाचकस्थितेश्च वाच्योत्प्रेक्षापि । तयाश्च विच्छित्तिवैचित्र्यम् । ततश्च "अस्या नायिकाया हृदयाभ्यन्तरं प्रियवक्त्रचन्द्रवत् अङ्गेषु तत्कृतपाण्डुत्वात् अक्षिपद्मे तत्कृतसङ्कोचाच्च" इति ज्ञानादनुमानालङ्कारः । प्रस्तरान्तरे वह्निसत्त्वे प्रस्तरान्तरे च धूमदर्शने "पर्वतो वह्निमान् धूमात्" इत्यादाविव अत्रापि हृदयाङ्गाक्षिपद्मानामेकावयविगततया साध्यसाधनयोर्न व्यभिचार इति ध्येयम् ।

(क) विच्छित्तिसामान्यग्रहणादलङ्कारेतरकृतविच्छित्तावप्युदाहर्तुमाह यथा वेति ।

(ख) यत्रेति । यत्र अबलानां दृष्टिः पतति, तत्रैव निशिताः शराः कामस्य बाणाः पतन्ति । तत्तस्मात् स्मरः कामदेवः, चापे धनुषि रोपितः स्थापितः शरो येन स तादृशः सन्, आसामबलानां पुरः अग्रतो धावतीति मन्ये ।

CC-0 Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र कविप्रौढ़ोक्तिवशाद्विच्छित्तिः (ग)।

उत्प्रेक्षायामनिश्चिततया प्रतीतिः, इह तु निश्चिततयेत्युभयोर्भेदः (घ)।

८३। अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह। (ङ)

यथा मम—"तारुण्यस्य विलासः—" इत्यत्र (१३४ पृष्ठे) वशीकरणहेतुर्नायिकावशीकरणत्वेनोक्ता (च)। विलासहासयोस्तु अध्यवसायमूलोऽयमलङ्कारः (छ)।

८४। अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत्॥ (ज)

---

(ग) अत्रेति। कवेः प्रौढ़ोक्तिवशात् बलपूर्वकासम्भवोक्तिवशात्, विच्छित्तिर्वैचित्र्यम्। तथा च अबलानामग्रे अग्रे शरो धावति तद्दृष्टिपतनदेशे तच्छरपतनादिति ज्ञानादनुमानालङ्कारः। अत्राग्रदेशसामान्यमेव पक्ष इति न साध्यसाधनयोर्व्यभिचारः। "अबलादृष्टिपातसहचरितशरपातोऽबलापुरोवर्त्तिचापरोपितशरजन्योऽबलादृष्टिपातसहचरितशरपातत्वात्" इति तर्कवागीशकृतमनुमानन्तु श्लोकार्थपर्य्यालोचनायामनुभवविरुद्धम्।

(घ) नन्वेषमुत्प्रेक्षया सहास्य को भेद इत्याह उत्प्रेक्षायामिति। अनिश्चिततयेति। सम्भावनायाः संशयविशेषरूपत्वादिति भावः। निश्चिततयेति। अनुमितेस्तु निश्चयरूपत्वादित्याशयः।

(ङ) हेतुप्रस्तावादेव हेत्वलङ्कारं लक्षयति अभेदेनेति। हेतुमता कार्य्येण सह हेतोः कारणस्य अभेदेन अभिन्नत्वरूपेण अभिधा उक्तिः, हेतुर्नामालङ्कारो निगद्यत इत्यनुपज्यते। कार्य्यकारणयोरभेदाभिधानमेव हेतुर्नामालङ्कार इति सरलार्थः। केचित्तु हेतुमता कार्य्येण सह हेतोरभेदेनाभिधा अभिधाहेतुर्नाम अलङ्कार इत्यभिधाशब्दस्य द्विधा अन्वयमङ्गीकृत्य व्याचक्षाणा लक्ष्यमाणालङ्कारस्य अभिधाहेतुरित्येव नाम निर्द्दिशन्ति। सरस्वतीकण्ठाभरणे तु हेतुरित्येव नाम निर्द्दिष्टम्। तथा च हेतुहेतुमतोरभेदेनाभिधानेऽपि तत्र हेतोरेव प्राधान्यात् हेतुरिति नाम।

(च) तारुण्यस्येति। प्रागेव विवृतमेतत्। वशीकरणस्य हेतुः कारणीभूता, नायिका प्रकरणवशात् लब्धा सुन्दरी, वशीकरणत्वेन वशीकरणक्रियाया अभिन्नत्वेन, उक्ता कविनेति शेषः, प्रकरणलब्धनायिकाशब्दोत्तरवर्त्तिप्रथमाविभक्तेः "वशीकरणम्" इति प्रथमाविभक्तेश्च अभेदार्थकत्वादिति भावः।

(छ) ननु वशीकरणक्रियां प्रति नायिकाया एव कारणत्वात् तयोश्चाभेदाभिधानादस्तु हेत्वलङ्कारः, किन्तु पूर्व्वार्द्धे विलासहासयोर्विधात्वविहिततया तत्र नायिकायाः कारणत्वाभावात्तयोरभेदाभिधानेऽपि कथं हेत्वलङ्कार इत्याह विलासेति। विलासः पूर्णाविर्भावः हासः प्रकाशस्तयोः, अध्यवसायमूलः कार्य्यत्वारोपमूलकः। तथा च तादृशविलासहासयोर्विधात्वविहितत्वेऽपि नायिकाश्रितत्वेन विहितत्वात् तज्जन्यत्वमारोप्य तयोरभेदाभिधानात् हेत्वलङ्कार इति भावः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(ज) प्राकरणिकहेतुघटितमेवानुकूलं नामालङ्कारं निरूपयति अनुकूलमिति। प्रातिकूल्यं प्रति-

यथा—"कुपितासि यदा तन्वि ! निधाय करजक्षतम् ।
वधान भुजपाशाभ्यां कण्ठमस्य दृढ़ं तदा ॥" (झ)

अस्य च विच्छित्तिविशेषस्य सर्वालङ्कारविलक्षणत्वेन स्फुरणात् पृथगलङ्कारत्वमेव न्याय्यम् (ञ) ।

८५ । वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये ।
निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा ॥ (ट)

अत्र वक्ष्यमाणविषये क्वचित् सर्वस्यापि सामान्यतः सूचितस्य निषेधः, क्वचिदंशोक्तावंशान्तरे निषेध इति द्वौ भेदौ । उक्तविषये च क्वचि-

---

कूलताचरणं चेद्यदि अनुकूलानुबन्धि व्यञ्जनागम्यानुकूल्यजनकं स्यात्, तदा अनुकूलं नामालङ्कारो निगद्यते इति पूर्वं क्रियान्वयः । एतेन—

अहिताचरणात् हितोत्पत्तिप्रतीतिरनुकूलमिति लक्षणनिष्कर्षः ।

तत्प्रतीतिस्तु व्यञ्जनयैव । तेन "जीवनहेतोर्विमुञ्चति प्राणान्" इत्यादौ वक्ष्यमाणविषमालङ्कारस्थले जीवनादीनां वाच्यतया व्यञ्जनाजन्यप्रतीत्यभावान्नातिव्याप्तिः । अनुकूलमिति अलङ्कारशब्दसामानाधिकरण्येऽपि नपुंसकलिङ्गमेव दीपकमितिवदलङ्कारार्थे तथैव रूढेः । अनुकूलं हितमिति च नार्थान्तरम् ।

(झ) कुपितेति । मानिनीं प्रति तत्सख्याः सकौतुकोक्तिरियम् । हे तन्वि ! क्षीणाङ्गि ! यदा यदि त्वं कुपितासि प्रियं प्रति क्रुद्धासि, तदा करजक्षतं तद्वक्षोदेशादौ नखक्षतं निधाय अर्पयित्वा, भुजपाशाभ्याम् अस्य प्रियस्य कण्ठं दृढ़ं वधान बद्धं कुरु ।

अत्र करजक्षतस्य भुजपाशकरणकदृढ़कण्ठबन्धनस्य च स्वरूपतो दुःखकरत्वात् प्रतिकूलताचरणत्वमेव, किन्तु नायकपक्षे मदनोद्दीपकतया आलिङ्गनरूपेण पर्यवसितत्वया च ताभ्यां सुखोत्पत्तेरानुकूल्यजननमेवेत्यनुकूलालङ्कारः ।

(ञ) ननु भवदादर्शकाव्यप्रकाशादावनुकूलालङ्कारस्य यथासम्भवं विषमादावन्तःपातेन पृथगगणनात् भवता कथं गण्यत इत्याह अस्य चेति । स्फुरणात् प्रतीतेः ।

(ट) नन्वनुकूलालङ्कारे यथा उक्तातिरिक्तविशेषप्रतिपत्तिस्तथा अलङ्कारान्तरे अस्ति न वेत्याकाङ्क्षायामाक्षेपालङ्कारं लक्षयति वस्तुन इति । वक्तुमिष्टस्य वस्तुनो विषयस्य विशेषप्रतिपत्तये यत्किञ्चिदतिरिक्तत्वबोधाय, निषेधाभासो वस्तुत एव न निषेधः किन्तु उक्तवस्तुस्वरूपस्य वा निषेधवत् प्रकाशः, आक्षेपो नामालङ्कारो निगद्यत इति पूर्वेण सह सम्बन्धः । तथा च विवक्षितविषये यत्किञ्चिदतिरिक्तं बोधयितुं विवक्षितविषयस्य वस्तुस्वरूपस्य वा निषेधवदङ्गीकरणमाक्षेप इत्यर्थः । स च प्रथमतो द्विधा—वक्ष्यमाणगो वक्ष्यमाणविषयगतः, उक्तग उक्तविषयगतश्चेति ।

आक्षेपो वक्तुमारब्धस्याकर्षणमसमाप्तावेव विरतीकरणमिति व्युत्पत्तिः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वस्तुस्वरूपस्य निषेधः, क्वचिद्वस्तुकथनस्येति द्वौ, इत्याक्षेपस्य चत्वारो भेदाः (ठ) । क्रमेण यथा—

"स्मरशरशतविधुराया भणामि सख्याः कृते किमपि ।
क्षणमिह विश्राम्य सखे ! निर्दयहृदयस्य किं वदाम्यथवा ॥" (ड)

अत्र सख्या विरहस्य सामान्यतः सूचितस्य वक्ष्यमाणविशेषे निषेधः (ढ) ।

"तव विरहे हरिणाक्षी निरीक्ष्य नवमालिकां दलिताम् ।
हन्त ! नितान्तमिदानीम् आः ! किं हतजल्पितैरथवा ॥" (ण)

अत्र मरिष्यतीत्यंशो नोक्तः (त) ।

"वालअ ! णाहं दूदी तस्स (१) पिओसि त्ति ण मह वावारो ।
सा मरइ तुज्झ अअसो एअं धम्मक्खरं भणिमो ॥" (थ)

---

(ठ) उक्तयोरपि भेदयोः प्रत्येकमेवावान्तरभेदद्वयसम्भवात् समुदायेन चतुर्विधत्वं दर्शयितुमाह अत्रेति । सर्वस्य सकलांशस्य सामान्यतः साधारणभावेन न तु स्पष्टत इत्यर्थः । अंशान्तरे वक्ष्यमाणे एकस्मिन्नंशे । वस्तुस्वरूपस्य वक्तृत्वादेः ।

(ड) सर्वस्यापि सामान्यतः सूचितस्य निषेधे उदाहरति स्मरेति । नायिकाप्रेषितायाः सख्या नायकं प्रति उक्तिरियम् । हे सखे ! स्मरस्य मदनस्य शरशतेन शरशतप्रहारेण विधुराया विह्वलायाः सख्याः कृते निमित्ते किमपि भणामि ब्रवीमि ; तस्मात्, इह स्थाने क्षणं यावत् विश्राम्य विश्रामं कुरु ; अथवा निर्दयहृदयस्य तव समीपे किं वदामि अपि तु किमपि नेत्यर्थः ।

(ढ) अत्रेति । सामान्यतः सूचितस्य "स्मरशरशतविधुरायाः" इति विशेषणमात्रेण द्योतितस्य, न तु "विरहिण्याः" इति स्पष्टत उक्तस्येत्यर्थः सम्बन्धिनि वक्ष्यमाणे विशेषे विवक्षितनितान्तदूरवस्थायां निषेधो मरणपर्यन्तरूपविशेषबोधाय "किं वदामि" इति वचनेन निषेधाभास इत्याक्षेपः ।

(ण) अंशोक्तावंशान्तरनिषेधे दर्शयति तवेति । नायिकान्तिके नायिकादूत्या उक्तिरियम् । हरिणाक्षी मृगलोचना तव प्रियेत्यर्थः, तव विरहे, नवमालिकां तदाख्यं कुसुमम्, दलितां प्रस्फुटिताम्, निरीक्ष्य, हन्त खेदे, इदानीं नितान्तमेव मदनवेदनामनुभवतीति शेषः । "आः" इति पीडासूचकम् । अथवा हतजल्पितैः अनर्थकोक्तिभिः किम्, अपि तु किमपि नेत्यर्थः ।

(त) अत्रेति । तथा च विरह इत्याद्यंशः स्पष्टमेवोक्तः, किन्तु अशक्यवक्तव्यत्वादिरूपविशेषप्रतिपत्तये विवक्षितो मरिष्यतीत्यंशो नोक्तः । एवञ्च "किं हतजल्पितैः—" इत्यनेन निषेधाभासादाक्षेपः ।

(थ) वस्तुस्वरूपस्य निषेधे उदाहरणमाह वालअ इति । नायकं प्रति दूतीरूपेणागत्य नायिकासख्या उक्तिरियम् । "बालक ! नाहं दूती ; तस्याः प्रियोऽसि इति न मम व्यापारः । सा म्रियते तव अयश एतत् धर्माक्षरं भणामः ॥" इति संस्कृतानुवादः । हे बालक ! बालकवत् प्रेमावस्थानभिज्ञ ! अहं न

---

(१) तुज्झ इति क्वचित् पाठः ।

CC-0. Prabhakar Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र दूतीत्वस्य वस्तुनो निषेधः (द) ।

"विरहे तव तन्वङ्गी कथं क्षपयतु क्षपाम् ।
दारुणव्यवसायस्य पुरस्ते भणितेन किम् ॥" (ध)

अत्र कथनस्यैव निषेधः (ग) ।

प्रथमोदाहरणे सख्या अवश्यम्भावि मरणमिति विशेषः प्रतीयते । द्वितीये अशक्यवक्तव्यत्वादि । तृतीये अदूतीत्वे (१) यथार्थवादित्वम् । चतुर्थे दुःखस्यातिशयः (प) ।

न चायं विहितनिषेधः, अत्र निषेधस्याभासत्वात् (फ) ।

८६ । अनिष्टस्य तथार्थस्य विध्याभासः परो मतः । (ब)

---

दूती ; अतः अप्रगल्भाया मम वचनं सर्वथा विश्वसनीयमिति भावः । तस्या नायिकायास्त्वं प्रियोऽसि इति हेतोर्न मम व्यापारस्तवानुनयकरणम् । तर्हि कथमेवं ब्रवीषि इत्याह सा नायिका म्रियते मदनवेदनयेति भावः, तव अयशस्तन्मरणे सति निन्दा भवेत्, एतत् धर्माचरं न्यायसङ्गतवाक्यम्, भणामी वदामः ।

(द) अत्रेति । विवक्षितविषये सख्या आत्मनो यथार्थवादित्वरूपविशेषप्रतिपत्तये दूतीत्वस्य दूतीत्वरूपस्य वस्तुनो निषेध इत्यर्थः । तेनाक्षेपोऽलङ्कार इति भावः ।

(ध) कथनस्य निषेधे लक्ष्यमाह विरहे इति । नायकं प्रति विरहिणीसख्या उक्तिरियम् । तन्वङ्गी कृशाङ्गी, तव विरहे, कथं केन प्रकारेण क्षपां रात्रिं क्षपयतु अतिवाहयतु । दारुणव्यवसायस्य निर्दयत्वेन प्रवासात्मकभयङ्करकर्म्मणः, ते तव पुरः अग्रतः भणितेन तदवस्थाकथनेन किं फलम्, अपि तु किमपि नेत्यर्थः ।

(न) अत्रेति । विवक्षिते नायिकाविरहविषये दुःखातिशयरूपविशेषप्रतिपत्तये कथनस्यैव तद्विषयकोक्तेरेव निषेधः, "भणितेन किम्" इत्यनेनेति शेषः । अतएवाक्षेपोऽलङ्कार इति भावः ।

(प) नन्वेषूदाहरणेषु कुत्र कीदृशविशेषप्रतीतिरित्याह प्रथमेति । प्रथमोदाहरणे "अरमरशत" इत्यादौ । द्वितीये "तव विरहे" इत्यादौ, अशक्यवक्तव्यत्वादि वस्तु अशक्यवक्तव्यत्वादिरूपो विशेषः प्रतीयत इति पूर्वेणान्वयः। एवमुत्तरयोरपि । तृतीये "बालक ! नाहं" इत्यादौ, अदूतीत्वे वक्तृनायिकाया दूतीभिन्नत्वे, यथार्थवादित्वं विशेषः । चतुर्थे "विरहे तव तन्वङ्गी" इत्यादौ विरहिण्या नायिकाया दुःखस्यातिशयो विशेषः ।

(फ) ननु यथार्थ एवायं निषेधः किं न स्यात्, तथा च लक्षणे निषेधाभास इत्युक्तिरनुपपन्नेत्याह न चेति । अयं "अरमरशतविधुरायाः—" इत्यादौ प्रतीयमानः विहितः "अप्राधान्यं विधेयेत्र" इत्यादिना लक्षितो वास्तविक एवेत्यर्थः निषेध इति "वाच्यम्" न चेत्यर्थः । अत्र एषूदाहरणेषु निषेधस्य "किं वदामि" इत्यादिना प्रतीयमानस्येति तात्पर्य्यम्, आभासत्वात् भङ्गीमात्ररूपत्वात्, तथैव प्रतीतेरित्याशयः ।

(ब) अन्यविधमाक्षेपालङ्कारमेव लक्षयति अनिष्टस्येति । अनिष्टस्य अर्थस्य विषयस्य, तथा पूर्ववत्

---

(१) दूतीत्वे इति पाठोऽपि दृश्यते ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तथेति पूर्ववद्विशेषप्रतिपत्तये। यथा—

"गच्छ गच्छसि चेत् कान्त! पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्॥" (भ)

अत्र अनिष्टत्वाद्गमनस्य विधिः प्रस्खलद्रूपो निषेधे पर्य्यवस्यति (म)। विशेषश्च गमनस्यात्यन्तपरिहार्य्यत्वरूपः प्रतीयते (य)।

८७। **विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते।**
**उक्तानुक्तनिमित्तत्वात् द्विधा सा परिकीर्त्तिता॥** (र)

---

विशेषप्रतिपत्तये, विध्याभासः वस्तुतो न विधिः किन्तु विधिवत् प्रकाशो विधिवदङ्गीकरणम्, परः उक्तादन्यः अन्यविध आक्षेपो मतः। एतत्पक्षे तु आक्षेपोऽभिप्रेतनिषेधादाकर्षणम्, अथवा आक्षेपो निषेध्येऽपि विषये विधेः समर्पणमिति व्युत्पत्तिः।

(भ) गच्छेति। विदेशगमनायानुमतिं प्रार्थयन्तं कान्तं प्रति कान्ताया उक्तिरियम्। हे कान्त! तच्चेद्विदेशं गच्छसि, गच्छ, ते तव पन्थानः शिवा मङ्गलमयाः सन्तु। किन्तु भवान् यत्र गतो भविष्यति, ममापि तत्रैव जन्म भूयात्। तथा च तव गमने विरहयातनया मम मरणस्यावश्यम्भावित्वात् मरणान्तरस्थाज्ञानिनो जनस्य पुनर्जन्मनोऽप्यवश्यम्भावात् तच्च पुनर्जन्म पुनर्विरहयातनाया असम्भवार्थं भवदन्तिक एव भूयादित्यात्मानं प्रत्याशीर्वादः।

(म) नन्वत्र कथं विधिराभास इत्याह अत्रेति। विधिर्गच्छेति गमनविधिः, प्रस्खलद्रूपो भ्रश्यत्-प्रवर्त्तनाशक्तिः। तथा च बलवदनिष्टाननुबन्धीष्टसाधनं नाम विधिः, तस्य शक्तिश्चेष्टविषये नियोज्यस्य प्रवर्त्तना नाम। एवञ्चोक्तोदाहरणे कान्तगमनस्य निजमरणसाधनतया अत्यन्तानिष्टत्वात् गच्छेत्यस्य विधित्वमेव नास्तीति तस्य प्रवर्त्तनाशक्तिरपि स्खलितैव। तेन गच्छेत्ययं विधिवेशो निषेध एवेत्याशयः।

(य) अथ तथाप्यत्र कीदृशस्य विशेषस्य प्रतिपत्तिरित्याह विशेषश्चेति। गमनस्य विदेशे कान्तगमनस्य, अत्यन्तपरिहार्य्यत्वरूपः सर्वथैव परित्याज्यत्वरूपः, प्रतीयते आत्मजीवनस्य सर्वथैवेष्टत्वात् गमनपरिहारे च तत्स्थितिसम्भवादिति भावः।

(र) हेतुघटितालङ्कारस्यैवात्र प्रकृतत्वात्, विशेषातिदिष्टेन च आक्षेपालङ्कारेण तद्बाधाया असम्भवा-दभावसम्बन्धेन हेतुघटितमेव विभावनालङ्कारं निरूपयति विभावनेति। हेतुं प्रसिद्धकारणं विना, यत् कार्य्यस्योत्पत्तिरुच्यते, स विभावना नाम अलङ्कार उच्यत इत्येवान्वयः। तथा च—

प्रसिद्धकारणाभावे कार्य्योत्पत्तिप्रतीतिर्विभावनेति सरलार्थः।

सा च विभावना उक्तनिमित्तत्वात् उक्तप्रसिद्धकारणत्वात्, अनुक्तनिमित्तत्वात् अनुक्तप्रसिद्धकारणत्वाच्च द्विधा द्विप्रकारा परिकीर्त्तिता। यत्र कारणान्वयी नञादिस्तत्र विभावना, यत्र तु कार्य्यान्वयी नञादिस्तत्र विशेषोक्तिरित्यनयोर्भेदः। यद्वा विभावनाविशेषोक्तिविरोधानां परस्परभेदो विरोधप्रकरणे वृत्तावेव वक्ष्यते।

विभाव्यते प्रसिद्धकारणाभावात् विशेषेण चिन्त्यते कारणं यस्यामिति ण्यन्तभूधातोः "ण्यासश्रन्थो युच्—" इत्यादिना अधिकरणे बाहुलकाद्युः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विना कारणमुपनिबध्यमानोऽपि कार्य्योदयः किञ्चिदन्यत् कारणमपेक्ष्यैव भवितुं युक्तः ; तच्च कारणान्तरं क्वचिदुक्तं क्वचिदनुक्तमिति द्विधा (ल)। यथा—

"अनायासकृशं मध्यमशङ्कतरले दृशौ ।
अभूषणमनोहारि वपुर्वयसि सुभ्रुवः ॥" (व)

अत्र वयोरूपनिमित्तमुक्तम् (श)। अत्रैव "वपुर्भाति मृगीदृशः" इति पाठे अनुक्तम् (ष)।

## ८८। सति हेतौ फलाभावः (१) विशेषोक्तिस्तथा द्विधा। (स)

(ल) ननु कारणाभावे कथं कार्य्योत्पत्तिरुपपद्यत इत्याह विनेति। उपनिबध्यमानः अभिधीयमानः, कार्य्यस्य उदय उत्पत्तिः। अन्यदप्रसिद्धम्। युक्त इति। कार्य्योत्पत्त्या यस्य कस्यचित् कारणस्य अवश्यमेवापेक्षणीयत्वात् अन्यथा कार्य्यत्वमेव न स्यादिति भावः। कारणान्तरमप्रसिद्धकारणम्।

(व) तत्र उक्तकारणे उदाहरति अनायासेति। कस्याश्चिद्युवत्या वर्णनमिदम्। वयसि यौवनकाले, शोभने भ्रुवौ यस्यास्तस्याः सुभ्रुवो रमण्याः, मध्यं कटिदेशः अनायासम् आयासेन परिश्रमेण रहितमपि कृशं क्षीणम्, दृशौ चक्षुषी, अशङ्के शङ्काहीने तथापि तरले चपले, तथा वपुर्देहः, अभूषणमलङ्काररहितं तथापि मनोहारि मनोहरं जातमिति शेषः। "वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्" इति मेदिनी।

अत्र अङ्गस्य कृशत्वं प्रति आयासः, दृशोस्तरलत्वं प्रति शङ्का, वपुषो मनोहारित्वं प्रति च भूषणं प्रसिद्धं कारणम्। तेषाञ्च आयासादीनामभावेऽपि कृशत्वादीनां कार्य्याणामुत्पत्तेर्विभावना। सा चात्र मालारूपा बयाणामुपनिबन्धनात्।

केवलरूपा यथा रघुवंशे—"स प्राप हृदयन्यस्त-मणिस्पर्शनिमीलितः।
अपयोधरसंसर्गां प्रियालिङ्गननिर्वृतिम् ॥"

अत्र पयोधरसंसर्गरूपकारणाभावेऽपि आलिङ्गननिर्वृतिरूपकार्य्योत्पत्तिर्विभावना।

(श) अत्रेति। वयोरूपं यौवनरूपं निमित्तं कृशत्वादीनामप्रसिद्धं कारणं यौवनेनैव कटिकृशत्वादीनां जननादिति भावः।

(ष) अनुक्तकारणे उदाहर्त्तुमाह अत्रैवेति। उक्तोदाहरण एवेत्यर्थः। पाठे चतुर्थचरणस्येति शेषः, अनुक्तं निमित्तमिति पूर्वेणान्वयः। तथापि योग्यत्वादेव कृशत्वादिकं प्रति तादृशं वयोरूपमेव कारणमुपलभ्यते इति बोध्यम्।

(स) हेतुप्रकरणाद्विभावनाविपरीतत्वाच्च विभावनानिरूपणानन्तरं हेतुघटितमेव विशेषोक्त्यलङ्कारं निरूपयति सतीति। हेतौ प्रसिद्धकारणे, सति विद्यमाने, फलाभावः कार्य्यानुत्पत्तिर्विशेषोक्तिर्नाम अलङ्कार उच्यत इत्यनुषङ्गः। तथा च—

प्रसिद्धकारणसत्त्वेऽपि कार्य्यानुत्पत्तिप्रतीतिर्विशेषोक्तिरित्यर्थः।

---

(१) फलाभावे इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तथेत्युक्तानुक्तनिमित्तत्वात् । तत्रोक्तनिमित्ता यथा—

"धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः ।
प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः ॥" (ङ)

अत्र महामहिमशालित्वं निमित्तमुक्तम् (च)। अत्रैव चतुर्थपादे "कियन्तः सन्ति भूतले" इति पाठे त्वनुक्तम् (क)। अचिन्त्यनिमित्तत्वञ्च अनुक्तनिमित्तस्यैव भेद इति पृथङ् नोक्तम् (ख)। यथा—

"स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शम्भुना न हृतं बलम् ॥" (ग)

अत्र तनुहरणेऽपि बलाहरणे निमित्तमचिन्त्यम् (घ)।

---

सापि च तथा पूर्ववदुक्तनिमित्तत्वात् अनुक्तनिमित्तत्वाच्चेत्यर्थः द्विधा द्विप्रकारा परिकीर्त्तिता। विशेषेण कारणविशेषेण अप्रसिद्धकारणग्रहणेनेत्यर्थः उक्तिः कार्य्योत्पत्तिकथनमिति विशेषोक्तिः। अनया सह अतद्गुणालङ्कारभेदस्तु तत्प्रकरणे वृत्तावेव वक्ष्यते ।

(ङ) उक्तनिमित्ते उदाहरति धनिन इति। महामहिमशालिनस्ते पुरुषा धनिनः सन्तोऽपि निरुन्मादा मत्तताविहीनाः, युवानः सन्तोऽपि न चञ्चला न चपलस्वभावाः, तथा प्रभवः प्रभुत्वसम्पन्नाः सन्तोऽपि अप्रमत्ताः प्रमादशून्या अनवधानतारहिता इति यावत् ।

अत्र उन्माद-चाञ्चल्य-प्रमादान् प्रति यथाक्रमं धन-यौवन-प्रभुत्वानि प्रसिद्धकारणानि। तथा च धनादिषु सत्स्वपि उन्मादादीनां कार्य्याणामनुत्पत्तेर्विशेषोक्तिः। तथा इयमपि मालारूपा पूर्ववदेव वयाणामुपनिबन्धनात् ।

केवलरूपा यथा—"रघोरुदारे क्षितिमूर्खमग्निशुद्धौ त्वनिश्चयः ।"

अत्र अग्निशुद्धिरूपे हेतौ सत्यपि निश्चयरूपतत्कार्य्याभावाद्विशेषोक्तिः ।

(च) अत्रेति। तथा च धीरत्वरूपमहामहिमवशादेव उन्मादादयो न जाता इति भावः।

(क) अनुक्तनिमित्ते उदाहर्त्तुमाह अत्रैवेति। धनिन इत्यादावेवेत्यर्थः। अनुक्तं निमित्तमिति पूर्वेणान्वयः। अत्रापि योग्यत्वादेव तादृशमहामहिमशालित्वरूपं कारणमुपलभ्यते ।

(ख) ननु काव्यप्रकाशे अलङ्कारकौस्तुभे च "अनुक्तनिमित्ता उक्तनिमित्ता अचिन्त्यनिमित्ता च" इत्युक्त्वा त्रिविधा विशेषोक्तिरुक्ता, त्वया तु अचिन्त्यनिमित्ता कथं नोक्तेत्याह अचिन्त्येति ।

(ग) तत्राचिन्त्यनिमित्ते काव्यप्रकाशादाहृत्य उदाहरति स इति। स एक एव कुसुमायुधः कामः, त्रीणि जगन्ति स्वर्गमर्त्त्यपातालरूपाणि भुवनानि जयति। यस्य कुसुमायुधस्य तनुं देहं हरतापि नाशयतापि शम्भुना शिवेन बलं सामर्थ्यं न हृतं न नाशितम् ।

(घ) अत्रेति। तनुहरणेऽपि बलविनाशं प्रति शरीरविनाशरूपे कारणे सत्यपीत्यर्थः, बलस्य अहरणे अविनाशविषये, निमित्तं कारणम् अचिन्त्यं चिन्तयित्वापि लब्धुं न शक्यम्। एतस्य अस्य भेदस्य अनुक्त-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इह च कार्य्याभावः कार्य्यविरुद्धसद्भावमुखेनापि निबध्यते ; विभावनायामपि कारणाभावः कारणविरुद्धसद्भावमुखेनापि (ङ) ।

एवञ्च "यः कौमारहरः स एव हि वरः" (१४ पृष्ठे) इत्यादेरुत्कण्ठाकारणविरुद्धस्य निबन्धनाद्विभावना । "यः कौमारहरः—" इत्यादेः कारणस्य च कार्य्यविरुद्धाया उत्कण्ठाया निबन्धनाद्विशेषोक्तिः । एवञ्चात्र विभावनाविशेषोक्त्योः सङ्करः (च) । शुद्धोदाहरणन्तु मृग्यम् (छ) ।

---

निमित्त एवान्तर्भावात् विशेषोक्तेस्त्रिविधत्वकल्पनमसमञ्जसमेवेति काव्यप्रकाशालङ्कारकौस्तुभकारयोर्मतं कटाचितमिति द्रष्टव्यम् ।

(ङ) नन्वेवं विभावनाविशेषोक्त्योर्यथाक्रमं कारणाभाव-कार्य्याभावघटितलक्षणद्वये सति "यः कौमारहरः स एव हि वरः" इत्यादौ कारणाभावस्य कार्य्याभावस्य चादर्शनात् विभावनाविशेषोक्त्योर्गन्धोऽपि नास्ति । एवञ्च प्रथमपरिच्छेदे "अत्र हि विभावनाविशेषोक्तिमूलस्य सन्देहसङ्करालङ्कारस्य स्फुटत्वम्" इत्यभिधाय कथं काव्यप्रकाशकृता दत्तं तदुदाहरणमपि दूषितमित्याह इह चेति । विशेषोक्तौ चेत्यर्थः । कार्य्याभावः फलाभाव इत्यनेनोच्यमान इति तात्पर्य्यम्, कार्य्यस्य विरुद्धो विपरीतो यः पदार्थस्तस्य सद्भावमुखेनापि सत्तायाः प्रतिपादनद्वारापि । न केवलं "धनिनोऽपि निरुन्मादाः" इत्याद्युदाहृतवत् साक्षात् निःशब्दनञ्-शब्दादिना, किन्तु कार्य्यविरुद्धसद्भावमुखेनापि इत्यपेरर्थः । निबध्यते कविभिरिति शेषः ।

तथा च—"ज्ञाने मौनम्, क्षमा शक्तौ, त्यागे श्लाघाविपर्य्ययः ।"

इत्यत्र ज्ञानादिकार्य्यं बहुभाषित्वादिकम्, मौनादिकञ्च तद्विरुद्धम्, तस्य तस्य चोक्तिद्वारा बहुभाषित्वादिरूपकार्य्यस्याभावः कालिदासेन निबद्ध इति विशेषोक्तिरेव ।

तथा विभावनायामपि कारणाभावः "विभावना विना हेतुम्" इत्यनेनाभिहित इत्यर्थः, कारणस्य विरुद्धो विपरीतो यः पदार्थस्तस्य सद्भावमुखेनापि सत्तायाः प्रतिपादनद्वारापि । न केवलम् "अनायासकृशं मध्यम्" इत्यादिवत् साक्षात् नञादिना किन्तु कारणविरुद्धसद्भावमुखेनापि इत्यपेरर्थः, निबद्धते कविभिरिति पूर्वेणान्वयः ।

तथा च—"देव्यामपि हि वैदेह्यां सापवादो यतो जनः ।"

इत्यत्र अपवादं प्रति दोषित्वमेव कारणम्, तद्विरुद्धञ्च गुणवत्त्वम् । इत्यच अपिशब्देन वैदेहीगतपरमपातिव्रात्यलक्षणगुणवत्त्वस्य प्रतिपादनद्वारा दोषित्वरूपकारणस्याभावो भवभूतिना निबद्ध इति विभावनैव । एतद्विपरीतप्रकारानुसन्धाने तु उभयत्राप्युक्तोभयालङ्कारस्य सम्भवेन सन्देहसङ्कर एवेति ध्येयम् ।

(च) नन्वेतावता किमायातमित्याह एवञ्चेति । उक्तोभयविधनिबन्धनस्य महाकवीनां स्वभावत्वे चेत्यर्थः । इत्यादेः इत्याद्युक्तस्य, उत्कण्ठायाः कारणं तत्तद्वरादीनामभावस्तद्विरुद्धस्य तत्तद्वरादीनां सद्भावस्य, निबन्धनात् कविनोक्तत्वात् विभावना भवितुमर्हतीत्यर्थः । इत्यादेः इत्याद्युक्तस्य, कारणस्य तत्तद्वरादिसद्भावरूपस्य, कार्य्यम् उत्कण्ठाया अभावरूपम्, तद्विरुद्धाया उत्कण्ठायां उत्कण्ठासद्भावस्य, निबन्धनात् "चेतः समुत्कण्ठते" इत्यनेन कविनोक्तत्वात् विशेषोक्तिश्च भवितुमर्हतीति तात्पर्य्यम् । एवञ्च उक्तरीत्या विभावनाविशेषोक्त्योरुभयोरेव सम्भवे च, अत्र "यः कौमारहरः—" इत्यादिश्लोके । सङ्करः सन्देहसङ्करः । अतः प्रथमपरिच्छेदे उक्तोदाहरणे

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ईदृशसङ्करालङ्कारस्य सर्वथा सद्भावेन अनलङ्कृतिवादिमते यद्दूषणमभिहितं तद्धुनि वारमेवेति भावः ।

८९ । जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः ॥
क्रिया क्रियाद्रव्याभ्यां यद्द्रव्यं द्रव्येण वा मिथः ।
विरुद्धमिव (१) भासेत विरोधोऽसौ दशाकृतिः ॥ (ज)

---

न च विभावनाविशेषोक्त्योर्लक्षणद्वये तत्तदभावबोधकपदनिवेशात् यत्र यत्र कारणकार्य्ययोः साक्षादभावबोधकनञादिसद्भावस्तत्र तत्रैव विभावनाविशेषोक्तिश्च वक्तव्या, न पुनर्लक्षणानन्तर्गतेन भवदुक्तमार्गेण कारणविरुद्ध-कार्य्यविरुद्धयोः सद्भावेनापीति वाच्यम्; उक्तविधवैचित्र्यस्य असङ्गकत्वापत्तेः नञादिसद्भावेनेव तत्तद्विरुद्धसद्भावेनापि समानवैचित्र्यावगतेर्युक्तिसाम्याच्चेति जितं विश्वनाथेन ।

(छ) अथ तर्हि भवतैवोदाहृते "अनायासकृशं मध्यम्" इत्यादौ प्रागुक्तरीत्या विभावनास्थले अनायासं नाम परिश्रमाभावः, तत्कार्य्यञ्च स्थूलत्वम्, तद्विरुद्धञ्च कृशत्वमिति स्थूलत्वविरुद्धकृशत्वसद्भावमुखेन स्थूलत्वरूपकार्य्याभावस्य निबन्धनाद्विशेषोक्तेरपि सम्भवेन "यः कौमारहरः—" इत्यादिवदेव तयोः सङ्करापत्तिः । तथा "धनिनोऽपि निरुन्मादाः—" इत्यादौ पूर्वोक्तप्रकारेण विशेषोक्तिस्थलेऽपि निरुन्मादत्वं प्रति कारणम् अधनित्वम्, तद्विरुद्धञ्च धनित्वमिति अधनित्वविरुद्धधनित्वसद्भावमुखेन अधनित्वरूपकारणाभावस्य निबन्धनाद्विभावनाया अपि प्रसङ्गेन "यः कौमारहरः—" इत्यादिवदेव तयोः सङ्करापत्तिश्च स्यादित्यतस्तदभ्युपेत्याह शुद्धोदाहरणन्त्विति । उभयोरेवासङ्कीर्णोदाहरणन्त्वित्यर्थः, रम्यमन्यत्रैवेयम् । तथा च मम—

"नलिनी मलिनीभूता पयोदपिहितेऽम्बरे । चन्द्रे चाप्युदिते सान्द्रे स्वस्थैवेयं कुमुद्वती ॥"

अत्र पूर्वार्द्धे कारणाभावेऽपि नलिन्या मालिन्यरूपकार्य्योत्पत्तेः शुद्धा विभावनैव; सा च सूर्य्यास्तगमनप्रत्यायकमेघकर्त्तृकाकाशाच्छादनरूपनिमित्तस्योक्तत्वादुक्तनिमित्ता । किन्तु तन्मालिन्याभावं प्रति प्रसिद्धकारणस्य तद्विरुद्धस्य वा अनुपादानाद्विशेषोक्तिगन्धोऽपि नास्ति । तथा परार्द्धे चन्द्रोदयरूपप्रसिद्धकारणे सत्यपि कुमुद्वत्याः प्रकाशरूपकार्य्याभावात् शुद्धा विशेषोक्तिरेव; सा चापि चन्द्रोदयप्रतीतिप्रतिबन्धकमेघकर्त्तृकाकाशावरणरूपनिमित्तस्योक्तत्वादुक्तनिमित्ता । किन्तु कुमुद्वत्याः प्रकाशं प्रति चन्द्रोदयस्य. सङ्कोचं प्रति च चन्द्रोदयाभावस्य कारणत्वेन स्वस्थत्वं प्रति कस्यापि कारणत्वाभावात् स्वस्थत्वं न कार्य्यमेव; तेन कारणाभावस्य कारणविरुद्धस्य वा सद्भावाभावाद्विभावनाया अपि सम्भावनैव नास्तीति ।

अत्र विशेषोक्तिविभावनयोः क्रमिकशुद्धोदाहरणत्वेन "धनिनोऽपि स्थिरस्वान्ता यौवने धर्म्मतत्पराः" इति रामचरणस्योदाहरणमत्यन्तभ्रमविजृम्भितमेव । तथाहि प्रथमपादे धनित्वरूपकारणे सत्यपि तत्कार्य्योन्मादविरुद्धस्थिरस्वान्तत्वसद्भावमुखेन तदुन्मादरूपकार्य्याभावस्य निबन्धनात् यथा विशेषोक्तिः; तथैव स्थिरस्वान्तत्वं प्रति अधनित्वमेव कारणमिति तद्विरुद्धधनित्वसद्भावमुखेन अधनित्वरूपकारणाभावस्य निबन्धनात् विभावनापि प्रसजतीति "यः कौमारहरः" इत्यादिवदेव सङ्करापत्तिर्दुर्निवारैव । एवमेव "यौवने धर्म्मतत्पराः" इत्यत्रापि सङ्करापत्तिरूहनीया ।

(ज) ननु यथा कार्य्ये बाध्यत्वप्रतीतौ विभावना कारणे बाध्यत्वप्रतीतौ च विशेषोक्तिस्तथा द्वयोरपि पदार्थयोः परस्परबाध्यत्वप्रतीतौ कश्चिदलङ्कारो भवति न वेत्याकाङ्क्षायां विरोधाभासालङ्कारं लक्षयति जाति-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha.

---

(१) विरुद्धमेवेति क्वचित् पाठः ।

क्रमेण यथा—

"तव विरहे मलयमरुद्दवानलः शशिरुचोऽपि सोष्माणः ।
हृदयमलिरुतमपि भिन्ते नलिनीदलमपि निदाघरविरस्याः ॥" (झ)

"सन्ततमुषलासङ्गाद्बहुतरगृहकर्म्मघटनया नृपते ! ।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥" (ञ)

---

दिति। अस्य "आपाततो विरुद्धवत् प्रतीतिर्विरोधाभासः" इति सामान्यलक्षणं "विरुद्धमिव भासेत" इति कारिकानिर्द्देशानुसारादेवावगन्तव्यम् । विरुद्धत्वञ्च अतस्मिन् तद्धर्म्मनिर्द्देशः । यथा "तव विरहे मलयमरुद्दवानलः" इत्यादौ दवानलभिन्ने मलयमरुति दवानलत्वनिर्द्देशः । आपातत इत्यभिधानादवसाने तादृशविरोधसमाधानमावश्यकमेवेति बोध्यम् ।

अत्र विरुद्धमित्यस्य यथासम्भवं लिङ्गविपरिणामेन सर्वत्रान्वयः । तथा च चतुर्भिर्जात्याद्यैः जाति-गुण-क्रिया-द्रव्यैः सह मिथः परस्परं यत् जातिर्विरुद्धेव भासेत प्रकाशेत इमे चत्वारः प्रकाराः । त्रिभि-र्गुणादिभिः गुण-क्रिया-द्रव्यैः सह मिथो यत् गुणो विरुद्ध इव भासेत । इमे त्रयः प्रकाराः । क्रियाद्रव्याभ्यां सह मिथो यत् क्रिया विरुद्धेव भासेत । इमौ द्वौ प्रकारौ । तथा द्रव्येण वा सह मिथो यत् द्रव्यं विरुद्धमिव भासेत । अयमेकः प्रकारः । असौ, दश आकृतय आकाराः प्रकारा यस्य स दशाकृतिर्दशविधः, विरोधो विरोधाभासो नाम अलङ्कार उच्यते इत्यनुषज्यते । जात्या सह गुणस्य क्रियाया द्रव्यस्य वा यो विरोधः स तु तैः सह जातेर्विरोध एव, तस्य परस्परवृत्तिकत्वात् । अतएव दशाधिकप्रकारत्वं नाशङ्कनीयम् । अलङ्कारान्तरैः सह अस्य भेदस्तु वृत्तावेव वक्ष्यते ।

विरोधस्य आभास आपाततः प्रतीतिरिति विरोधाभासपदव्युत्पत्तिः । अयन्तु निरुक्तकारिकायामिव क्वचित् विरोधपदेनापि प्रत्याय्यते, भीमपदेन भीमसेनवत्, "एकदेशेन समुदायो गम्यते" इति न्यायात् ।

(झ) जात्यादिभिश्चतुर्भिः जातेर्विरोधे उदाहरति तवेति । पतिं प्रति विरहिणीदूत्या उक्तिरियम् । हे नायक ! तव विरहे अस्या उल्लिखिताया नायिकायाः सम्बन्धे मलयमरुत् सुशीतलो मलयाचलवायुरपि, दवानलो दावाग्निः, तद्वद्दाहजनकत्वात् । शशिरुचोऽपि स्वभावशीतलाश्चन्द्रकिरणा अपि सोष्माण उष्णाः, तापकरत्वात् । अलिरुतमपि सुमधुरो भ्रमररवोऽपि हृदयं भिन्ते विदारयति, अतीवोद्दीपकत्वात् । तथा नलिनीदलमपि सुशीतलं पद्मिनीपत्रमपि निदाघरविर्ग्रीष्मकालीनसूर्य्यः, तथैव दाहकत्वात् । अत्र विरोधं तत्समाधानञ्च वृत्तावेवानुपदमाह स्म । न च "मलयमरुद्दवानलः" इत्यत्र रूपकमेवेति वाच्यं श्रवणमात्रमेव जायमानया विरोधप्रतीत्या वाक्यार्थबोधानन्तरभाविन्याः सन्तापकत्वरूपसादृश्यप्रतीतेर्व्याहतत्वात् । न च "शशिरुचोऽपि सोष्माणः" इत्यादावतिशयोक्तिः, विरहिजनस्य शशिरुक्प्रभृतिषु सोष्मत्वादिप्रतीतेर्यथार्थत्वात् ।

(ञ) गुणेन सह गुणस्य विरोधं दर्शयति सन्ततेति । राजस्तुतिरियम् । हे नृपते ! सततं सर्वदा यो मुषलासङ्गः तण्डुलादिनिर्म्माणार्थं मुत्तोलननिपातनसमये मुषलस्य घर्षणं तस्माद्धेतोः, तथा बहुतराणां लेपना-दीनां गृहकर्म्मणां घटनया करणेन हेतुना, कठिनाः काठिन्यप्राप्ताः, द्विजपत्नीनां ब्राह्मणस्त्रीणां करा हस्ता-



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥" (ट)

"वल्लभोत्सङ्गसङ्गेन विना हरिणचक्षुषः ।
राकाविभावरीजानिर्विषज्वालाकुलोऽभवत् ॥" (ठ)

"नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् ।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे ॥" (ड)

"त्वद्वाजि—" इत्यादि (ढ)। "वल्लभोत्सङ्ग—" इत्यादिश्लोके चतुर्थपादे "मध्यन्दिनदिनाधिपः" इति पाठे द्रव्ययोर्विरोधः (ण)।

---

तद्वाजि, भवति सति त्वयि राजनि जाते सति, सरोजसुकुमाराः पद्मवत् सुकोमलाः, जाता इति शेषः, भवद्दत्त-धनेनैव रचितदासीदासादिभिस्तत्तत्कर्मानुष्ठापनात् स्वयं स्वयञ्च तदकरणादिति भावः ।

अत्र कठिनत्वसुकुमारत्वयोर्गुणयोर्विरोधः, कालभेदाच्च तत्समाधानम् ।

(ट) क्रियया सह गुणस्य विरोधे उदाहरणमाह अजस्येति । रघुवंशदशमसर्गस्थमिदं पद्यम् । हे भगवन् ! अजस्य नित्यत्वात् जन्मरहितस्यापि मत्स्यकूर्मादिरूपेण जन्म गृह्णतः, निरीहस्य क्रियारहितत्वात् निश्चेष्टस्यापि हतद्विषो विनाशितशत्रोः, तथा जागरूकस्य चैतन्यरूपतया सर्वदा प्रबुद्धस्यापि स्वपतः प्रलयकाले निद्रां गच्छतः, तव को जनो याथार्थ्यं तत्त्वं स्वरूपं वेद जानाति, अपि तु कोऽपि नेत्यर्थः ।

अत्रापि विरोधं तत्समाधानञ्च वृत्तावेव दर्शितवान् ।

(ठ) द्रव्येण सह गुणस्य विरोधे उदाहरति वल्लभेति । वल्लभोत्सङ्गसङ्गेन प्रियतमक्रोडोपवेशनेन विना प्रियविच्छेदेनेत्यर्थः, हरिणचक्षुषो मृगलोचनाया नायिकायाः, राकाविभावरी पूर्णिमारात्रिर्जाया यस्य स पूर्णचन्द्र इति तात्पर्यम्, विषज्वालया आकुलः पूर्णः अभवत् ।

अत्र कव्यक्तित्वात् पूर्णचन्द्रो द्रव्यम् आकुलत्वञ्च गुणः अनयोर्विरोधः, विरहकाले अवस्थावैचित्र्यात् समाधानम् ।

(ड) क्रियया सह क्रियाया विरोधे लक्ष्यमाह नयनेति । काञ्चित् सुन्दरीमवलोक्य कस्यचित् कामिन उक्तिरियम् । नयनयुगस्य आसेचनकम् असीमतृप्तिकरम्, "तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्" इत्यमरः । मानसवृत्त्यापि चित्तवृत्त्यापि दुष्प्रापं दुर्लभम्, निरतिशयपुण्येनैव प्राप्यत्वान्मम च तदभावादिति भावः, मदिराक्ष्याः खञ्जननयनाया इदं रूपं कर्तृ, मे मम हृदयं मदयति आमोदयति, दुनोति च सन्तापयति च ।

अत्र मदयति दुनोतीति सुखोत्पादन-दुःखोत्पादनरूपयोः क्रिययोर्विरोधः, दृष्टिलाभेन मदयति भोगालाभेन च दुनोतीति हेतुभेदात् समाधानम् ।

(ढ) द्रव्येण सह क्रियाया विरोधे दर्शयति त्वद्वाजीति । इत्यादि उदाहरणमिति शेषः । अत्रापि विरोधस्तत्परिहारश्च वृत्तावेव दर्शितः ।

(ण) द्रव्येण सह द्रव्यस्य विरोधे उदाहर्तुमाह वल्लभेति । मध्यन्दिनदिनाधिपो मध्याह्नकालीन-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र "तव विरहे" इत्यादौ पवनादीनां बहुव्यक्तिवाचकत्वाज्जातिशब्दानां दवानलोष्म-हृदयभेदन-सूर्यैर्जाति-गुण-क्रिया-द्रव्यरूपैरन्योन्यं विरोधो मुखत आभासते, विरहहेतुकत्वात् समाधानम् (१) (त)। "अजस्य—" इत्यादौ अजत्वादिगुणस्य जन्मग्रहणादिक्रियया विरोधः, भगवतः प्रभावस्यातिशयित्वात्तु (२) समाधानम् (थ)। "वल्लाजि—" इत्यादौ "हरोऽपि शिरसा गङ्गां न धत्ते" इति विरोधः, "वल्लाजि—" इत्यादि-कविप्रौढ़ोक्त्या तु समाधानम् (द)। स्पष्टमन्यत् (ध)।

विभावनायां कारणाभावेनोपनिबध्यमानत्वात् कार्य्यमेव बाध्यत्वेन

---

सूर्य्यः, तद्वत् सन्तापकरत्वादिति भावः। अत्र चन्द्रः सूर्य्यश्च एकैकमात्रव्यक्तित्वात् द्रव्यरूपः, भिन्नयोश्च तयोरभेदाभिधानाद्विरोधः, विरहकालीनत्वाच्च तत्समाधानम्।

(त) इदानीमुदाहृतेषु यथासम्भवं विरोधं तत्समाधानञ्च क्रमाद्दर्शयितुमाह अत्रेति। एतेषु उदाहृतेषु मध्ये इत्यर्थः। पवनादीनां पवनादिवाचकानाम्, बहुव्यक्तिवाचकत्वात् बहुव्यक्तिवाचकत्वेन तदीयशक्यतावच्छेदकानां समवायेन तत्र तत्र वृत्तित्वसम्भवेन च "नित्यानेकसमवेता जातिः" इति लक्षणव्यापनादित्यर्थः, जातिशब्दानां जातिविशिष्टबोधकशब्दानाम्। दवानलत्व जातिः, उष्णत्वं गुणः, हृदयभेदनं क्रिया, सूर्य्यश्च द्रव्यमिति तद्रूपैरिति यथासंख्येनान्वयः। मुखतः प्रथमतः, आभासते प्रकाशते। विरहो हेतुर्यस्य विरोधस्य स तथोक्तस्तस्य भावस्तस्मात् तादृशतादृशविरोधस्य विरहेणैव जनितत्वादित्यर्थः, समाधानं तत्तद्विरोधस्य भञ्जनम्। प्रियतमविच्छेददशायां हि प्रेमिकजनानां कामोद्दीपकः समस्तपदार्थ एव कामसन्तापं जनयतीति एकादृशपदार्थानामन्यादृशप्रतीतेः सम्भवपरत्वान्न कश्चिद्विरोध इत्याशयः। एवमन्यत्राप्यवधेयम्।

(थ) अजस्येति। कारिकायां जातिक्रिययोः पृथगुपादानात् गुणपदेन जातिक्रियाभिन्नस्य द्रव्यवृत्तिपदार्थमात्रस्यैव ग्रहणात् अभावरूपयोरपि अजत्वनिरीहत्वयोर्गुणत्वेन ग्रहणमित्याशयेनाह अजत्वादिगुणस्येति। प्रथमादिपदेन निरीहत्वजागरूकत्वयोः द्वितीयादिपदेन च शत्रुहनन-स्वपनयोर्ग्रहणम्। अतिशयित्वात् सातिशयत्वेन अज्ञेयत्वात्। तथा च यदस्माभिरसम्भवं मन्यते, तत्तत्र प्रभावातिशयात् सर्वथैव सम्भवतीति नारायणे तादृशविरुद्धधर्म्मसमावेशोऽपि सम्भवत्येवेति भावः। एवमन्यत्राप्यूह्यम्।

(द) वल्लाजीति। एकमात्रव्यक्तित्वेन हरो द्रव्यं तस्य च शिरसा गङ्गाया धारणं नियतम्, अत्र च तदभावाभिधानेन गङ्गाधारणकर्त्तरि तदधारणकर्त्तृधर्म्मनिर्द्देशस्यावगतेर्द्रव्येण सह क्रियाया विरोध इत्यर्थः। कवेः प्रौढ़ोक्त्या यत्नपूर्वकाभिधानेन। तथा च कवयः खलु वाग्वैचित्र्यसम्पादनार्थं यत्नेनालीकमप्यभिदधतीति तत्र दृश्यमानो विरोधोऽलीकत्वाद्वस्तुतोऽविरोध एवेत्याशयः। इत्थमन्यत्राप्यनुसन्धेयम्।

(ध) स्पष्टमिति। अन्यत् "सन्ततमुषलासङ्गात्" इत्यादौ "वल्लभोत्सङ्गसङ्गेन" इत्यादौ "नयनयुग" इत्यादौ च विरुद्धत्वं समाधानञ्च स्पष्टम्, अतो न दर्शित इत्याशयः।

---

(१) अत्र इत्यधिकः क्वचित् पाठः। (२) अतिशयितत्वात्तु इति पाठान्तरम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रतीयते, विशेषोक्तौ च कार्य्याभावेन कारणमेव, इह तु अन्योन्यं द्वयोरपि बाध्यत्वमिति भेदः (न)।

९०। कार्य्यकारणयोर्भिन्न-देशतायामसङ्गतिः। (प)

यथा—"सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम्।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैः अपटवो जाताः स्म इत्यद्भुतम्॥" (फ)

---

(न) ननु विभावनायां विशेषोक्तौ च तथा तथा विरोधप्रतीतेस्ताभ्यां सह अस्य को भेद इत्याह विभावनायामिति। उपनिबध्यमानत्वादभिधीयमानत्वात्। कार्य्यमेव, न तु कारणमित्येवशब्दार्थः, तस्य चानुपनिबध्यमानत्वात् तत्प्रतीतेरेवाभावादित्याशयः। एवमुत्तरत्रापि बाध्यत्वेन उत्पत्त्ययोग्यत्वेन। कार्य्याभावेन उपनिबध्यमानत्वादिति पूर्वेणान्वयः। कारणमेव, न तु कार्य्यमित्येवशब्दार्थः, बाध्यत्वेन प्रतीयत इत्यनुवर्त्यते। बाध्यत्वेन कुतोऽपि कारणादुत्पादनयोग्यत्वेन। इह तु विरोधाभासे तु, अन्योन्यं परस्परम्, द्वयोरपि कार्य्यकारणयोस्तद्भिन्नयोर्वा पदार्थयोः, बाध्यत्वं विरोधवशादेवासम्भवत्वं प्रतीयत इति पूर्वेणान्वयः।

## तदिदं विरोधाभासभेदसङ्कलनम्।

| प्रकारः। | | उदाहरणम्। |
|---|---|---|
| १। जात्या सह जातेर्विरोधः | ... | "मलयमरुद्दवानलः।" |
| २। जात्या सह गुणस्य विरोधः | ... | "शशिरुचोऽपि सोष्णाः।" |
| ३। जात्या सह क्रियाया विरोधः | ... | "हृदयमलिकतमपि भिन्ते।" |
| ४। जात्या सह द्रव्यस्य विरोधः | ... | "नलिनीदलमपि निदाघरविः।" |
| ५। गुणेन सह गुणस्य विरोधः | ... | "कठिनकराः सुकुमाराः।" |
| ६। गुणेन सह क्रियाया विरोधः | ... | "अजस्य गृह्णतो जन्म।" |
| ७। गुणेन सह द्रव्यस्य विरोधः | ... | "राकाविभावरीजानिर्विषज्वालाकुलः।" |
| ८। क्रियया सह क्रियाया विरोधः | ... | "रूपमिदं हृदयं मदयति दुनोति च।" |
| ९। क्रियया सह द्रव्यस्य विरोधः | ... | "हरोऽपि शिरसा गङ्गां न धत्ते।" |
| १०। द्रव्येण सह द्रव्यस्य विरोधः | ... | "राकाविभावरीजानिर्मध्यन्दिनदिनाधिपः।" |

(प) विरोधप्रस्तावाद्विरोधविशेषघटितमेव असङ्गत्यलङ्कारं निरूपयति कार्य्येति। कार्य्यकारणयोर्भिन्नदेशतायां भिन्नाधिकरणत्वे सति, असङ्गतिर्नाम अलङ्कार उच्यते, कार्य्यकारणयोर्वैयधिकरण्यमेव असङ्गतिरित्यर्थः। विरोधेन सह अस्या भेदस्तु वक्ष्यते(?)

कार्य्यकारणयोः सामानाधिकरण्यनियमेन वैयधिकरण्ये कार्य्योत्पत्त्यैवासङ्गत्या अस्य असङ्गतिरिति नाम। "धनेऽस्ति [illegible]" इत्यादौ कार्य्यकारणयोर्वैयधिकरण्येऽपि वैचित्र्याभावान्नायमलङ्कारः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अस्यास्यापवादत्वादेकदेशस्थयोर्विरोधे विरोधालङ्कारः (ब)।

९१। गुणौ क्रिये वा यत् (१) स्यातां विरुद्धे हेतुकार्य्ययोः॥
यद्वारब्धस्य वैफल्यम् (२) अनर्थस्य च सम्भवः।
विरूपयोः सङ्घटना या च तद्विषमं मतम्॥ (भ)

---

(फ) सेति। अमरुशतके काञ्चित् सुन्दरीमवलोक्य गत्वा सखायं प्रति कस्यचित् कामिन उक्तिरियम्। सा अवलोकितपूर्वा सुन्दरी, बाला बालिका, किन्तु वयं "वयमदश्च" इति बहुवचनादहमित्यर्थः, परमप्यर्थम्। अप्रगल्भमनसः अधृष्टचित्ताः, तदानीं किमपि वक्तुमक्षमत्वादिति भावः। सा स्त्री, वयन्तु कातरा दुर्बलाः, तदन्तिके अनुनयादिप्रवणत्वादित्याशयः। सा बाला, पीनं स्थूलञ्च तत् उन्नतिमत् तुङ्गतामुपाश्चेति तत् तादृशं पयोधरयुगं स्तनद्वयं धत्ते धारयति, किन्तु वयं सखेदाः क्लान्तियुक्ताः, कामभाराक्रान्तत्वादित्यभिप्रायः। तथा सा नायिका, गुरुणा विशालेन जघनस्थलेन आक्रान्ता, किन्तु वयं न गन्तुं शक्ताः, तां परित्यक्तुं मनसः सर्वथैवानिच्छुत्वादिति भावः। अतएव अन्यजनाश्रितैर्दोषैर्वयम् अपटवः कर्त्तव्यकर्म्मासमर्था जाताः स्म इत्यद्भुतमाश्चर्य्यम्।

अत्र कारणीभूतानां बालत्वादीनां नायिकानिष्ठत्वात् तत्कार्य्यभूतानामप्रगल्भमनस्त्वादीनाञ्च वक्तृनिष्ठत्वादसङ्गतिरलङ्कारः। इयं मालारूपा।

केवलरूपा यथा नैषधे—"अजस्रमारोहसि दूरदीर्घां सङ्कल्पसोपानततिं तदीयाम्।
श्वासान् स वर्षत्यधिकं पुनर्यत् ध्यानात्तव त्वन्मयतामवाप्य॥"

अत्र सोपानारोहणं दमयन्त्याम् अधिकश्वासास्तु नले इति कारणकार्य्ययोर्वैयधिकरण्यादसङ्गतिः।

(ब) ननूदाहृते यथासम्भवं विरुद्धवर्णनाद्विरोधालङ्कार एवास्तामित्याह अस्याश्चेति। असङ्गतेश्चेत्यर्थः। अपवादत्वात् केवलकार्य्यकारणवैयधिकरण्यविषयकतया विशेषरूपत्वेन बाधकत्वात्, एकदेशस्थयोः समानाधिकरणयोः कार्य्यकारणयोरिति शेषः। सामान्यविशेषन्यायादिति भावः।

(भ) प्राकरणिकं विरोधमादायैव विषमालङ्कारं लक्षयति गुणाविति। हेतुकार्य्ययोर्गुणौ यत् विरुद्धौ स्यातां क्रिये वा यद्विरुद्धे स्यातामित्यन्वयः। तथा च कार्य्यगुणो यत् कारणगुणाद्विरुद्धः स्यात्। अयमेकः प्रकारः। अथवा कार्य्यगतक्रिया यत् कारणगतक्रियातो विरुद्धा स्यादित्यर्थः, अयं द्वितीयः प्रकारः। वा अथवा आरब्धस्य कर्म्मणो वैफल्यं निष्फलत्वम् अनर्थस्य अनिष्टस्य च सम्भव उत्पत्तिः स्यात्। इति तृतीयः प्रकारः। या च विरूपयोर्विपरीतयोः पदार्थयोः सङ्घटना संयोजना एकत्र सम्मेलनम्। इति चतुर्थः प्रकारः। तत् विषमं नामालङ्करणं मतम्। एष च विषमशब्दो वाच्यलिङ्गः, तेन अलङ्कारशब्दविशेषणत्वे विषम इति पुंलिङ्गोऽपि। अतएव काव्यप्रकाशे अलङ्कारकौस्तुभे च विषम इति पुंस्त्वेव निर्द्देशः।

एकदेशस्थयोर्विरोधे विरोधाभासः, कार्य्यवृत्तित्वेन कारणवृत्तित्वेन च भिन्नदेशस्थयोर्विरोधे तु विषम इत्यनयोर्भेदः। गुणयोः क्रिययोर्वा विरुद्धत्वेन विरूपयोः सङ्घटनयैव गतार्थत्वेऽपि वैचित्र्यापार्थक्यादेव पृथगुपन्यासः। व्याख्यातरूपेण गुणादीनां वैषम्यादेवास्य विषम इति संज्ञा।

---

(१) चेत् इत्यपि पाठः। (२) वैकल्यमिति पाठान्तरम्।

CC-0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

क्रमेण यथा—

"सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं (१) प्रसूते ॥" (म)

अत्र कारणरूपासिलतायाः "कारणगुणा हि कार्य्यगुणमारभन्ते" इति स्थितेर्विरुद्धा शुक्लयशस उत्पत्तिः (य) ।

"आनन्दममन्दमिमं कुवलयदललोचने ! ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥" (र)

अत्र आनन्दजनकस्त्रीरूपकारणात् तापजनकविरहोत्पत्तिः (ल) ।

"अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया ।
धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः ॥" (व)

---

(म) कार्य्यकारणगतयोर्गुणयोर्विरोधे उदाहरति सद्य इति । राजविशेषस्य वर्णनमिदम् । रणे रणे सर्वेष्वेव युद्धेष्वित्यर्थः, तमालनीला तमालपल्लववत् नीलवर्णा कृपाणलेखा असिलता, यस्य राज्ञः करस्पर्शं हस्तसम्बन्धम् अवाप्य प्राप्य शरदिन्दुवत् शरच्चन्द्रवत् पाण्डु शुभ्रवर्णम्, त्रिलोकाभरणं त्रिभुवनालङ्काररूपं यशः, सद्य एव प्रसूते शत्रुविजयादुत्पादयति, एतदेव चित्रमाश्चर्य्यम् ।

(य) उदाहृते कार्य्यकारणगतगुणयोर्विरोधं दर्शयितुमाह अत्रेति । आरभन्ते उत्पादयन्ति । स्थितेर्नियमस्य । अत्रायं सरलार्थः—कृपाणलेखयैव यशोजननात् कृपाणलेखा कारणं यशश्च कार्य्यम्, तत्र च कृपाणलेखायां नीलो गुण इति कार्य्येऽपि यशसि "कारणगुणा हि" इत्यादिनियमात् नीलगुणस्यैव सम्भवे तद्विरुद्धस्य शुक्लगुणस्य उत्पत्तिरिति विषमालङ्कार इति ।

(र) कार्य्यगतकारणगतक्रिययोर्विरोधे उदाहरणमाह आनन्दमिति । हे कुवलयदललोचने ! नीलोत्पलपत्रतुल्यनेत्रे ! त्वमिमम् अमन्दमनल्पं बहुलमित्यर्थः आनन्दं ददासि आलिङ्गनादिना जनयसि ; किन्तु त्वयैव पित्रालयगमनादिना जनितो विरहः, मे मम शरीरं तापयतितरामत्यन्तं सन्तापं जनयति । एतदाश्चर्य्यमेवेति भावः ।

(ल) अत्रेति । एष च सरलार्थः—"विरहस्त्वयैव जनितः" इत्युक्तेः स्त्री कारणम्, विरहस्तत्-कार्य्यम् ; तेन स्त्रियां सुखजननक्रियेति "कारणगुणा हि" इत्यादिनियमेन विरहेऽपि सुखजननक्रियाया एव सम्भवे दुःखजननक्रियोत्पत्तेर्विरुद्धत्वाद्विषमालङ्कारः ।

(व) आरब्धस्य फलस्य अनर्थसम्भवे च लक्ष्यं दर्शयति अयमिति । कस्यचिद्व्यर्थमनोरथस्योक्तिरियम् । अयम् अम्भोधिः सागरः, रत्नानामाकरः उत्पत्तिस्थानम्, इति मत्वा धनाशया धनलाभेच्छया असेवि उपकूले विचरणादिना सेवितः । किन्तु धनं धनलाभो दूरे अस्तु तिष्ठतु, प्रत्युत क्षारवारिभिर्लवणाक्तजलैर्वदनं मुखम् अपूरि पूरितम् । अहो ! महद्दुःखमेवैतदिति भावः ।

---

(१) त्रिलोकाभरणमिति क्वचित् पाठः ।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र केवलं काङ्क्षितधनलाभो नाभूत्, प्रत्युत चारवारिभिर्वदनपूरणम् (अ)।

"क्व वनं तरुवल्कभूषणं नृपलक्ष्मीः क्व महेन्द्रवन्दिता ।
नियतं प्रतिकूलवर्त्तिनो बत धातुश्चरितं सुदुःसहम् ॥" (ब)

अत्र वन-राजश्रियोः (१) विरूपयोः सङ्घटना (स)। इदं मम।

यथा वा—(ह)

"विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥" (च)

---

(अ) अत्रेति। केवलमित्येवार्थे। तथा च काङ्क्षितधनलाभो नाभवदेवेत्यर्थः। तथाहि धनलाभाभावादारब्धस्य समुद्रसेवनस्य वैफल्यम्, अनिष्टस्य च चारवारिकरणकवदनपूरणस्य सम्भव इति विषमालङ्कारः।

(ब) विरूपयोः सङ्घटनायामुदाहरति क्वेति। श्रीरामे वनं गते दशरथस्य विलापोऽयम्। तरुवल्कानि वृक्षवल्कलान्येव भूषणानि यस्मिन् तत्तादृशं वनं क्व कुत्र। तथा महेन्द्रवन्दिता देवराजेनापि पूजिता, नृपलक्ष्मी राजलक्ष्मीः क्व कुत्र। अनयोरत्यन्तमेव वैषम्यमिति भावः। तथा च प्रतिकूलवर्त्तिनो धातुर्विधातुः, चरितं व्यवहारः, नियतं निश्चितमेव सुदुःसहम्। राजलक्ष्मीसम्भोगोद्यतस्य श्रीरामस्य सहसैव तादृशवनवासाश्रयादिति भावः। बत खेदे।

(स) अत्रेति। सङ्घटना एकस्मिन्नेव पद्ये संयोजनम्; अतोऽत्र विषमालङ्कार इति भावः। अत्र "अत्र कस्मिन् वस्तुनि श्रीरामे अत्यन्तमसम्भवतोर्वनवासराजश्रीलाभयोर्मेलनम्। वस्तुतस्तु तदानीं श्रीरामस्य राजश्रीलाभ एव नास्ति इति न विरुद्धयोः सङ्घटनम्" इत्याद्यभिधाय चतुर्थप्रकारविषमासम्भवं दर्शयित्वा उदाहृते रामचरणस्य तृतीयप्रकारविषमसिद्धान्तश्चिन्त्यः। न खलु एकस्मिन् वस्तुनि विरूपयोः सङ्घटनात्र विवक्षिता, अपि तु एकस्मिन् पद्यादावेव। अन्यथा "क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः" इत्यादावपि एकस्मिन् वस्तुनि तादृशवंशमत्योरसत्त्वात् विषमालङ्कारो न स्यात्। किञ्च, अनुपदमुदाह्रियमाणे विपुलेनेत्यादौ अतिविशालत्वं नारायणे अतिक्षुद्रत्वञ्च पुरस्त्रिया दृशि इति भिन्नभिन्नवस्तुनि स्थितयोर्विरूपयोः सङ्घटनायां ग्रन्थकृता स्वयञ्च प्रदर्श्यमानो विषमालङ्कारः कथमुपपद्यते। किञ्च, प्रबन्धार्थमादाय लक्ष्यमाणो विरूपसङ्घटनाघटितो विषमालङ्कार आसत्तियुक्तकप्रबन्धमात्र एव विरूपयोः सङ्घटनायां भवितुं युक्त इत्युदाहृते चतुर्थप्रकार एव ग्रन्थकारसम्मतो विषमालङ्कारः सर्वथा सङ्गच्छत इति ध्येयम्।

(ह) प्रकारान्तरेण विरूपयोः सङ्घटनायामेवोदाहर्तुमाह यथा वेति।

(च) विपुलेनेति। शिशुपालवधत्रयोदशसर्गस्थमिदं पद्यम्। युगक्षये प्रलयकाले, सागरशयस्य समुद्रशयितस्य यस्य श्रीकृष्णस्य, विपुलेन विशालेन, कुक्षिणा उदरेण, भुवनानि त्रीणि जगन्ति पपिरे पीतानि; स श्रीकृष्णः, एकतमया पुरस्त्रिया, मदविभ्रमेण मदनमदजनितविकारेण असकलया असमग्रया एककोणमात्रव्यापारया दृशा चक्षुषा पुनः पपे पीतः, एकनयन कटाक्षेण सर्वाङ्गेषु दृष्ट इत्यर्थः।

---

(१) वनराज्यश्रियोः इति क्वचित् पाठः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

९२ । समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुनः । (क)

यथा—"शशिनमुपगतेयं कौमुदी मेघमुक्तं

जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।

इति समगुणयोगप्रीतयस्तत्र पौराः

श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥" (ख)

९३ । विचित्रं यद्विरुद्धस्य कृतिरिष्टफलाय चेत् ॥ (ग)

---

अत्र भगवानतिविशालः एकनयनं काकीयम् अतिक्षुद्र इत्यनयोर्विरूपयोः सङ्घटनया विषमालङ्कार इति ग्रन्थकारस्याशयः । इममेव श्लोकमुदाहृत्य काव्यप्रकाशकृता "इत्यादावपि विषमत्वं यथायोगमवगन्तव्यम्" इत्युक्तम् । तत्र च तदीयटीकाकृता महेश्वरेण कार्य्यकारणगतक्रियाविरोधेन विषमालङ्कारो दर्शितः । तत्र च तर्कवागीशेन युक्तमेव दूषणमुपन्यस्तमित्यनुसन्धेयम् । मल्लिनाथस्तु उदाहृते अधिकालङ्कारमाह स्म, तन्न मनोरमम्, स्पष्टत आश्रयाश्रयिभावप्रतीत्यभावात् तथा प्रतीतावेव च तदलङ्काराङ्गीकारात् ।

(क) ननु विरूपयोः सङ्घटनया विषमालङ्कार इव अनुरूपयोः सङ्घटनया कश्चित्तद्विपरीतोऽलङ्कारो भवति न वेत्याकाङ्क्षायां समालङ्कारं निरूपयति सममिति । आनुरूप्येण परस्परसदृशरूपत्वेन हेतुना, योग्यस्य वस्तुनः अनुरूपपदार्थेन सह अनुरूपपदार्थान्तरयोगस्येत्यर्थः श्लाघा साधुवादः, समं नाम अलङ्करणं स्यात् ।

अतएव समाना मा मानं ज्ञानं यस्मिन् तत् सममिति व्युत्पत्तिः । अयं समशब्दोऽपि पूर्ववद्वाच्यलिङ्गः ।

(ख) इदञ्च सद्योगे असद्योगे च सम्भवतीति द्विधा । तत्र सद्योगे उदाहरति शशिनमिति । रघुवंशषष्ठसर्गे अजे इन्दुमत्या स्वयं वृते पौराणामुक्तिगर्भा कवेरुक्तिरियम् । तत्र स्वयंवरे, समगुणयोः समानसौन्दर्य्यादिगुणकयोः इन्दुमत्यजयोः योगेन सम्मेलनेन प्रीतिरानन्दो येषां ते तथोक्ताः पौरा जनाः, इयमिन्दुमती, मेघमुक्तं वर्षाकालातीतं शशिनं शरच्चन्द्रम्, उपगता प्राप्ता, कौमुदी ज्योत्स्ना तद्रूपेत्यर्थः; तथा अनुरूपं स्वसदृशं जलनिधिं समुद्रम्, अवतीर्णा प्रविष्टा जह्नुकन्या गङ्गा तत्स्वरूपेति तात्पर्य्यम्, इति इत्थं नृपाणाम् इन्दुमतीलिप्सया उपस्थितानामपरेषां राज्ञाम्, श्रवणकटु श्रुतिदुःखावहम्, एकवाक्यम् अभिन्नवचनं विवव्रुः प्रकाश्य कथयामासुः ।

अत्र अनुरूपवरेण अजेन सह इन्दुमत्याः सम्मेलनस्य साधुवादात् समालङ्कारः ।

असद्योगे यथा काव्यप्रकाशधृतम्—

"चित्रं चित्रं वत वत महच्चित्रमेतद्विचित्रं जातो दैवादुचितरचनासंविधाता विधाता ।

यन्निम्बानां परिणतफलस्फीतिरास्वादनीया यच्चैतस्याः कवलन-कला-कोविदः काकलोकः ॥"

अत्र काकानुरूपे निम्बफले काकस्यैव योग इति योग्यस्य साधुवादात् समालङ्कारः ।

(ग) विरोधस्य प्रक्रान्तत्वात् विशेषानिर्दिष्टेन च समालङ्कारेण तद्बाधाया असम्भवाद्विरोधघटितमेव विचित्रालङ्कारं लक्षयति विचित्रमिति । चेद्यदि विरुद्धस्य इष्टविपरीतस्य कृतिः करणम्, इष्टफलाय अभिलषितफलसिद्धये सम्पद्यत इति शेषः, तदा तत् विचित्रं नाम अलङ्कारः स्यात् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥" (घ)

९४ । आश्रयाश्रयिणोरेकस्याधिक्येऽधिकमुच्यते । (ङ)

आश्रयाधिक्ये यथा—

"किमधिकमस्य ब्रूमो महिमानं वारिधेर्हरिर्यत्र ।
अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि ॥" (च)

आश्रिताधिक्ये यथा—

"युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत ।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ॥" (छ)

---

विरोधाभासे विषमे च विरोधः स्वतः सम्भवी, इह तु विरुद्धार्थं विरुद्धस्य करणमिति विशेषः । अनुकूलालङ्कारेण सह अस्य भेदस्तु तत्प्रकरण एव दर्शितः ।

विपरीतफलाय विपरीतस्य करणादेवास्य विचित्रमिति संज्ञा । विचित्रत्वमाश्चर्य्यम् । अतएवैतदलङ्कारार्थे विचित्रशब्दो नित्यनपुंसकलिङ्गः ।

(घ) प्रणमतीति । उन्नतिहेतोरभ्युदयनिमित्तं प्रणमति स्वामिसन्निधाने प्रणतो भवति, सेवक इति शेषः । एवमन्यत्रापि । जीवितहेतोर्वेतनलाभादिना प्राणरक्षानिमित्तम्, प्राणान् विमुञ्चति युद्धादौ परित्यजति । तथा सुखहेतोः सुखसम्पादननिमित्तम्, दुःखीयति परिश्रमाय प्रवर्त्तमानो दुःखमिच्छति । अतएव सेवकादन्यः को जनो मूढः, अपि तु कोऽपि नेत्यर्थः ।

अत्र उन्नत्यादीष्टफललाभाय तद्विरुद्धप्रणत्यादिकरणात् विचित्रालङ्कारः । इयन्तु मालारूपा ।

केवलरूपा यथा महिम्नःस्तवे—"न कस्या उन्नत्यै भवति शिरसस्त्वय्यवनतिः ।"

(ङ) अथ सम्पूर्णवैरूप्ये विचित्रालङ्कार इव किञ्चिद्वैरूप्ये किञ्चिदलङ्कारान्तरं स्यान्न वेति जिज्ञासायामधिकालङ्कारमाह आश्रयेति । आश्रयाश्रयिणोराधाराधेययोर्मध्ये एकस्य एकतरस्य आधिक्ये विशालत्वे सति अधिकं नाम अलङ्कार उच्यते ।

आधाराधेययोर्न्यूनत्वाधिकत्वाभ्यां वैरूप्ये अधिकम्, तदितरवैरूप्ये तु विषममित्यनयोर्भेदः, सामान्यविशेषन्यायात् । अत्र व्युत्पत्तिः स्पष्टा । एतदलङ्कारार्थे अधिकशब्दोऽपि नित्यनपुंसकः । "विशालशय्यायां शिशुः शेते" इत्यादौ तु वैचित्र्याभावान्नायमलङ्कारः ।

(च) किमिति । अस्य वारिधेः क्षीरोदसागरस्य अधिकं महिमानं विशालत्वं किं ब्रूमः ; यत्र क्षीरोदवारिधौ, हरिर्नारायणः, कुक्षौ उदरे भुवनानि त्रीणि जगन्ति, निक्षिप्य संस्थाप्य, अज्ञात एव "कुत्र स्थितः" इति जलचरैरप्यविदित एव शेते, प्रलयकाले इति शेषः ।

अत्राधेयभूतनारायणापेक्षया आधारभूतवारिधेराधिक्यादधिकालङ्कारः ।

(छ) युगान्तेति । शिशुपालवधप्रथमसर्गस्थमिदं पद्यम् । युगान्तकाले प्रलयसमये प्रतिसंहृता आत्मनि

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

९५। अन्योन्यमुभयोरेकक्रियायाः करणं मिथः॥ (ञ)

यथा—"त्वया सा शोभते तन्वी तया त्वमपि शोभसे।
रजन्या शोभते चन्द्रश्चन्द्रेणापि निशीथिनी॥" (झ)

९६। यदाधेयमनाधारमेकञ्चानेकगोचरम्।
किञ्चित् प्रकुर्वतः कार्य्यमशक्यस्येतरस्य वा।
कार्य्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः॥ (ञ)

---

उपसंहृता आत्मनो गोवा येन तस्य तथोक्तस्य, कैटभद्विषः शौरेः तस्य, यस्यां तनौ देहे, जगन्ति त्रीणि भुवनानि, सविकाशं सावकाशमसम्बाधमिति यावत् यथा तथा आसत स्थितानि; तत्र तस्यां तनौ, तपोधनस्य नारदस्य, अभ्यागमसम्भवाः आगमनोत्पन्नाः, मुदः आनन्दाः, न ममुर्न धृता अतिरिक्ता बभूवुरित्यर्थः।

अत्राधारभूतनारायणशरीरापेक्षया आधेयभूतानामानन्दानामाधिक्यादधिकालङ्कारः; मल्लिनाथेन तु सम्बन्धे असम्बन्धरूपा अतिशयोक्तिरभिहिता। सापि सम्भवत्येवेति तदतिशयोक्त्युत्थापितोऽयमधिकालङ्कार इत्यनयोरङ्गाङ्गिभावेन सङ्कर इति तत्त्वम्।

(ञ) अधिकालङ्कारे उभयोः प्रस्तावोत्थानादुभयघटितमन्योन्यालङ्कारं लक्षयति अन्योन्यमिति। उभयोः कर्त्तृभूतयोर्द्वयोः पदार्थयोः एकस्याः क्रियायाः, मिथः परस्परं करणं विधानम्, अन्योन्यं नाम अलङ्कार उच्यते इत्यनुषङ्गः। अत्र उभयोर्मिथः करणमित्यभिधानात् "दुदोह गां स यज्ञाय शस्याय मघवा दिवम्" इत्यादौ मिथः करणाभावान्नातिव्याप्तिः। "निशया रुचिरश्चन्द्रश्चन्द्रेण रुचिरा निशा" इत्यादौ च "नहि क्रियारहितं वाक्यमस्ति" इति न्यायेन भवतीति क्रिया अध्याहरणीयैव। तेन रुचिरभवनक्रियायाः परस्परकरणान्नाव्याप्तिः। अतः "क्रियापदं गुणस्याप्युपलक्षणम्" इति रामचरणोक्तमपास्तम्, उपलक्षणाङ्गीकारेऽपि भवतीति क्रियाया अवश्यमध्याहरणीयत्वात् तथैव चोपपत्तेरुपलक्षणाङ्गीकारस्यान्याय्यत्वात्। अतएव काव्यप्रकाशेऽपि "क्रियया" इत्येवोक्तम्। अत्रापि व्युत्पत्तिः स्पष्टा। अन्योन्यशब्दश्च नित्यनपुंसक एव।

(झ) त्वयेति। नायकनायिकयोर्गुणवर्णनमिदम्। हे नायक! सा तन्वी कृशाङ्गी त्वया द्वारा शोभते, त्वमपि तया तन्व्या द्वारा शोभसे। तथा च चन्द्रो रजन्या द्वारा शोभते, निशीथिनी सा रजन्यपि चन्द्रेण द्वारा शोभते।

अत्र नायकनायिकयोश्चन्द्ररजन्योश्च एकस्याः शोभनक्रियायाः परस्परकरणादन्योन्यालङ्कारः।

(ञ) अधिकालङ्कारे आधाराधेययोः प्रक्रान्तत्वात् विशेषातिदिष्टेन चान्योन्येन तद्बाधाया अयोगादाधाराधेयघटितं विशेषालङ्कारं लक्षयन् सर्वमेव विशेषालङ्कारं लक्षयति यदिति। अनाधारम् आधाररहितम् आधेयं यदवतिष्ठत इति शेषः। अयमेकविधः। एकञ्च वस्तु अनेकगोचरं युगपदनेकस्थानस्थितम्। अयं द्वितीयविधः। तथा किञ्चित् किमपि कार्य्यं प्रकुर्वतो जनस्य सम्बन्धे, अशक्यस्य कर्त्तुमशक्यस्य इतरस्य कर्त्तुं शक्यस्य वा कार्य्यस्य दैवात् करणं सम्पादनम्। अयं तृतीयविधः। [illegible] लक्षणात् विशेषो नामालङ्कारस्त्रिविध उच्यत इति पूर्वानुकर्षः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्रमेण यथा—

"दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ? ॥" (ट)

"कानने सरिदुद्देशे गिरीणामपि कन्दरे ।
पश्यन्त्यन्तकसङ्काशं त्वामेकं रिपवः पुरः ॥" (ठ)

"गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥" (ड)

पर्य्यायालङ्कारे एकस्य अनेकस्थानवर्त्तिता क्रमात् तत्र क्रमादित्यभिधानात्, अत्र तु युगपदिति द्वितीयविधविशेषेण सह तस्य भेदः ।

विशेषः अलङ्कारान्तरेभ्यो विलक्षण इति व्युत्पत्तिः ।

(ट) तत्र अनाधाराधेये उदाहरति दिवमिति । दिवमुपयातानामपि स्वर्गं गतानामपि येषां कवीनाम्, अनल्पा बहुलाः गुणगणा वैचित्र्यमाधुर्य्यादिगुणसमूहा यासु तास्तथाविधा गिरः काव्यात्मकवाक्यानि, आकल्पं प्रलयकालपर्य्यन्तं जगन्ति भुवनानि रमयन्ति आनन्दयन्ति, ते कवयः कथमिव न वन्द्या न पूजनीयाः ? अपि तु वन्द्या एवेत्यर्थः ।

अत्र रचयितृत्वेन आधारभूतानां कवीनामभावेऽपि आधेयभूतानां तद्गिरामवस्थितेर्विशेषालङ्कारः ।

(ठ) एकस्यानेकगोचरत्वे उदाहरणमाह कानन इति । कस्यचित् राज्ञः प्रशंसेयम् । रिपवो वैरिणः, कानने वने, सरिदुद्देशे नदीतटे, गिरीणां कन्दरेऽपि पर्वतगुहायाञ्च पुरः अग्रतः, अन्तकसङ्काशं यमतुल्यम्, एकमेव त्वाम्, पश्यन्ति । भवतः शत्रव ईदृशा भयविह्वलाः सञ्जाताः, यथा तत्र तत्र पलायिताः सन्तोऽपि सभयभावनया स्वस्वान्तिक एव युगपदेव च यमतुल्यं भवन्तं पश्यन्तीति भावः ।

अत्र एकस्य राज्ञो युगपत् काननाद्यनेकस्थानवर्त्तित्वाद्विशेषालङ्कारः ।

(ड) तृतीयप्रकारमुदाहरति गृहिणीति । रघुवंशाष्टमसर्गस्थमिदं पद्यम् । हे इन्दुमति ! त्वं गृहिणी गृहस्य कर्त्री, त्वमेव सचिवी मन्त्री, त्वमेव मिथो रहसि सखी नर्म्मसहचरी, तथा त्वमेव ललिते कोमले कलाविधौ नृत्यगीतादिकलानुष्ठाने प्रियशिष्या ; अतस्त्वामेतत्समष्टिरूपां भवतीं हरता, अतएव च करुणाविमुखेन दयाविहीनेन मृत्युना यमेन, मे मम किं वस्तु न हृतम्, इति त्वं वद, अपि तु सर्वमेव हृतमिति भावः ।

अत्र इन्दुमतीहरणात्मकमेकं कार्य्यं कुर्वतो मृत्योरशक्यरूपस्य गृहिण्यादिहरणरूपस्य कार्य्यस्य दैवतः करणात् विशेषालङ्कारः । तथाहि मृत्युर्नियतिबलादिन्दुमतीमात्रमेव हर्त्तुं शक्नोति न पुनर्गृहिण्यादिकमिति तेषां हरणं तस्याशक्यमेव असर्वशक्तिमत्त्वात् ; किन्तु दैवादेव तस्य तेषां हरणरूपं कार्य्यं जातमिति बोध्यम् । तृतीयप्रकारे शक्यस्योदाहरणं यथा—

"स्फुरदद्भुतरूपमुत्प्रताप-ज्वलनं त्वां सृजतानवद्यविद्यम् ।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥"

अत्र युष्मच्छब्दवाच्यराजपुत्रसृष्टिरूपं कार्य्यं कुर्वतो विधेः सर्वशक्तिमत्त्वादिच्छामात्रेण मनोभूप्रभृतिसृष्टिकार्य्यमपि शक्यमेवेति स्वेच्छाप्रयुक्तदैवात्तादृशकार्य्यकरणं जातमिति विशेषालङ्कारः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

९७। व्याघातः स तु केनापि वस्तु येन यथा कृतम् ।
तेनैव चेदुपायेन कुरुतेऽन्यस्तदन्यथा ॥ (ढ)

यथा—"दृशा दग्धं मनसिजम्—" इत्यादि (५६४ पृष्ठे) (ण) ।

९८। सौकर्य्येण च कार्य्यस्य विरुद्धं क्रियते यदि । (त)

व्याघात इत्येव (थ) ।

"इहैव त्वं तिष्ठ द्रुतमहमहोभिः कतिपयैः
समागन्ता कान्ते ! मृदुरसि न चायाससहना ।
मृदुत्वं मे हेतुः सुभग ! भवता गन्तुमधिकं
न मृद्वी सोढ़ा यद्विरहकृतमायासमसमम् ॥" (द)

---

(ढ) तृतीयप्रकारविशेषालङ्कारे अन्यकरणप्रस्तावोत्थानादन्यथाकरणघटितं व्याघातालङ्कारं निर्वक्ति व्याघात इति । केनापि जनेन कर्त्रा, येन उपायेन द्वारा, यत् वस्तु यथा कृतं यत्प्रकारं विहितम् ; अन्यो जनः चेद्यदि तेनैव उपायेन तत् वस्तु अन्यथा अन्यप्रकारं कुरुते ; तदा तु स व्याघातो नाम अलङ्कार उच्यते इत्यनुषङ्गः ।

परकरणेन पूर्वकरणस्य व्याघातादस्य व्याघात इति संज्ञा ।

(ण) दृशेति । पूर्वमेव विवृतमेतत् । अत्र महादेवेन चक्षुषा दग्धः कन्दर्पो वामलोचनाभिश्चक्षुषैव पुनरुज्जीवित इति व्याघातालङ्कारः ।

(त) व्याघातमेवान्यप्रकारेण लक्षयति सौकर्य्येणेति । कार्य्यस्य प्रतिवक्तृसम्मतविषयस्य, सौकर्य्येण वक्तृसम्मतविषयापेक्षया प्रतिवक्तृपक्षे सुकरत्वेन हेतुना, यदि विरुद्धं वक्तृसम्मतविपरीतं क्रियते व्यक्तं क्रियते प्रतिवक्त्रा अभिधीयत इत्यर्थः, तदापि व्याघात उच्यते इत्यन्वयः । एकमेव हेतुमवलम्ब्य निजसौकर्य्येण हेतुना प्रतिवक्ता यदि वक्तृमताद्विपरीतमतं प्रकाशयति, तदा सोऽपि व्याघात इति सरलार्थः । एतल्लक्षणे तु वक्तृमतस्य व्याघाताद्व्याघात इति संज्ञा ।

(थ) कारिकायामाकाङ्क्षया अपूरणादध्याहारेण तत्पूरणं दर्शयति व्याघात इत्येवेति ।

(द) इहैवेति । विदेशं यियासोर्नायकस्य तेन सार्द्धं गन्तुमिच्छोर्नायिकायाश्च उक्तिप्रत्युक्तिरूपमिदं पद्यम् । हे कान्ते ! त्वम् इहैव अस्मिन् भवन एव तिष्ठ, अहं कतिपयैरेव अहोभिर्दिवसैः समागन्ता पुनरागमिष्यामि । अथ त्वया सार्द्धं गमने का हानिरित्याह—त्वं मृदुः सुकुमाराङ्गी असि, अतएव आयाससहना विदेशगमनकष्टसहिष्णुर्न च नहीत्यर्थः । इति नायकेनोक्ते नायिका आह । हे सुभग ! पतिप्रिय ! मे मम मृदुत्वं भवता सह गन्तुमेव अधिकं हेतुर्भवति । अत्राध्याहृतस्य भवतीतिक्रियाविशेषणत्वादधिकमित्यस्य क्लीवत्वम्, यद्यस्मात् मृद्वी सुकुमाराङ्गी अहं विरहकृतं भवद्विच्छेदविहितम् असमं अनुपमं निरतिशयमित्यर्थः, आयासं कष्टं न सोढ़ा न सोढुं शक्ष्यामि ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र नायकेन नायिकाया मृदुत्वं सहगमनाभावहेतुत्वेनोक्तम्, नायिकया च प्रत्युत सहगमने ततोऽपि सौकर्य्येण हेतुतयोपन्यस्तम् (ध)।

९९। परं परं प्रति यद्वा पूर्वपूर्वस्य हेतुता ॥

तदा कारणमाला स्यात्—(न)

यथा—"श्रुतं कृतधियां सङ्गाज्जायते विनयः श्रुतात्।
लोकानुरागो विनयान्न किं लोकानुरागतः ॥" (प)

१००। तन्मालादीपकं पुनः।

धर्म्मिणामेकधर्म्मेण सम्बन्धो यद्यथोत्तरम् ॥ (फ)

---

(ध) उदाहृते निरुक्तलक्षणं सङ्गमयितुमाह अत्रेति। प्रत्युत वैपरीत्येन। ततोऽपि सहगमनाभावादपि गृहे अवस्थानादपि, सौकर्य्येण विरहकष्टसहनापेक्षया सहगमनकष्टसहनस्य सुकरत्वेनेत्यर्थः हेतुना, सहगमने हेतुतया सहगमनं प्रति हेतुत्वेन उपन्यस्तमुक्तं तन्मृदुत्वमित्यन्वयः। अतएवात्र द्वितीयप्रकारो व्याघात इति भावः।

(न) पूर्वं व्याघातलक्षणे उपायपर्य्यायहेतोरुत्थानात् हेतुघटितं कारणमालालङ्कारं निरूपयति परमिति। यद्वा इदानीं क्रमिकपदार्थघटितालङ्कारप्रकरणमारभमाणः क्रमिककारणघटितं कारणमालालङ्कारं निरूपयति परमिति। यदा परं परं पदार्थं प्रति पूर्वपूर्वस्य पदार्थस्य हेतुता कारणता वर्त्तते; तदा कारणमाला नाम अलङ्कारः स्यात्।

कारणानां माला श्रेणिरिति व्युत्पत्तिः। अत्र सत्यामपि कार्य्यमालायां तदपेक्षया कारणमालाया एवाधिकतरवैचित्र्याधायकत्वात् प्राचीनपरम्पराप्रसिद्धेश्च कारणमाला इत्येव संज्ञा निर्द्दिष्टा।

(प) श्रुतमिति। कृतधियाम् अध्ययनविहितसंस्कृतबुद्धीनां विदुषामित्यर्थः, सङ्गात् संसर्गात् हेतोः, श्रुतं शास्त्रज्ञानं जायते, लोकस्येति शेषः। एवं सर्वत्र। श्रुतात् शास्त्रज्ञानाच्च विनयः शिष्टव्यवहारो जायते, विनयात् लोकानामनुराग आत्मनि प्रेम जायते; तस्माच्च लोकानुरागात् किं न जायते? अपि तु सर्वमेव धनादिकं जायत इत्यर्थः।

अत्र विनयादिकं परं परं प्रति श्रुतादेः पूर्वपूर्वस्य हेतुतया कारणमालालङ्कारः। किञ्च, जायत इत्येकक्रियया उत्तरोत्तरसम्बन्धाद्वक्ष्यमाणलक्षणं मालादीपकमपीत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

(फ) क्रमिकप्रकरणे पूर्वत्र मालाप्रस्तावोत्थानान्मालादीपकालङ्कारं लक्षयति तदिति। बहूनां धर्म्मिणाम् एकधर्म्मेण गुणरूपेण क्रियारूपेण वा सह, यत् यथोत्तरम् उत्तरोत्तरं सम्बन्धः, तत् पुनर्मालादीपकं नाम अलङ्कारः स्यात्।

अप्रस्तुतप्रस्तुतयोरेकधर्म्माभिसम्बन्धो दीपकम्, तस्य चात्र श्रेणिरूपत्वेन मालारूपत्वान्मालादीपकमिति संज्ञा। "स्रौकं पाकः" इत्यादिवत् सम्बन्ध इति गौणक्रियाया एव विशेषणत्वेन यदिति नपुंसकलिङ्गम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"त्वयि सङ्गरसम्प्राप्ते धनुषासादिताः शराः ।
शरैररिशिरस्तेन भूस्तया त्वं त्वया यशः ॥" (ब)

अत्रासादनक्रिया धर्म्मः (भ) ।

१०१ । पूर्वं पूर्वं प्रति विशेषणत्वेन परं परम् ।
स्थाप्यतेऽपोह्यते वा चेत् स्यात्तदेकावली द्विधा ॥ (न)

क्रमेणोदाहरणम्—

"सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतम् ।
भृङ्गा यत्र ससङ्गीताः सङ्गीतं सस्मरोदयम् ॥" (य)

"न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः ॥" (र)

---

(ब) बहूनां धर्म्मिणां क्रियारूपैकधर्म्मसम्बन्धे उदाहरति त्वयीति । राज्ञः प्रशंसेयम् । हे राजन् ! त्वयि सङ्गरं युद्धं समाप्तं गते सति, तव धनुषा शरा आसादिताः प्राप्ताः । एवमन्यत्रापि आसादिता इत्यस्य लिङ्गविभक्त्योर्विपरिणामेन अन्वयो बोध्यः । तथा च शरैस्तवैव बाणैः, अरीणां शिर आसादितम्, तेन अरिशिरसा भूर्भूमिरासादिता, तया भुवा त्वमासादितः, त्वया च यश आसादितम् ।

(भ) अत्रेति । आसादनक्रिया धर्म्मः ; तस्य चात्र शरादिभिरुत्तरोत्तरं कर्म्मतया सम्बन्धान्मालादीपकमित्याशयः ।

उत्तरोत्तरमेकगुणसम्बन्धे मालादीपकं यथा मम—

"पापो नरेषु चाण्डालो व्याधश्चाण्डालमण्डले । व्याधेषु च पुनर्दस्युर्दस्युष्वपि च घातुकः ॥"

(न) क्रमिकप्रकरणात् क्रमिकविशेषणघटितामेकावलीं नामालङ्कारं निर्वक्ति पूर्वमिति । चेद्यदि पूर्वं पूर्वं विशेष्यं प्रति, विशेषणत्वेन रूपेण परं परं विशेष्यं स्थाप्यते उपन्यस्यते अपोह्यते निषिध्यते वा, तदा द्विधा स्थापनापोहनभेदेन द्विप्रकारा एकावली नाम अलङ्कारः स्यात् । विशेषणञ्चात्र समानाधिकरणं व्यधिकरणञ्च ग्राह्यम् ।

एकस्य विशेषणस्य क्रमिकावलीघटितत्वादस्या एकावलीति संज्ञा ।

(य) स्थापने उदाहरणमाह सर इति । शरद्वर्णनेयम् । यत्र शरत्काले, सरो दीर्घिका विकसितानि अम्भोजानि पद्मानि यत्र तत्तादृशं भवतीति सर्वत्र शेषः । अम्भोजं तत् पद्मञ्च, भृङ्गसङ्गतं भ्रमरसमन्वितम् । ते भृङ्गाश्च ससङ्गीताः सम्यग्गीतशालिनः । तत् सङ्गीतञ्च पुनः, स्मरोदयेन कामाविर्भावेन सहेति सस्मरोदयं कामाविर्भावजनकमित्यर्थः ।

अत्र सरःप्रभृतिकं पूर्वं पूर्वं विशेष्यं प्रति विशेषणत्वेन अम्भोजादिपरविशेष्यस्य स्थापनादेकावल्यलङ्कारः ।

(र) अपोहने उदाहरति नेति । भट्टिकाव्यद्वितीयसर्गस्थमिदं पद्यम् । तत् तादृशं जलं नासीत्, यत् सुचारूणि पङ्कजानि यस्मिन् तत्तथोक्तं नाभवत् । तत् तादृशं पङ्कजं नासीत्, यत्र न लीनाः मधुपानाय

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्वचिद्विशेष्यमपि यथोत्तरं विशेषणतया स्थापितमपोहितञ्च दृश्यते (ल)। यथा—

"वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु।
कमलेषु पतन्त्यलयः करोति सङ्गीतमलिषु पदम्॥" (व)

एवमपोहनेऽपि (श)।

## १०२। उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते। (ष)

---

स्थिरं नोपविष्टाः षट्पदा भ्रमरा यस्मिन् तत्तादृशमभवत्। असौ तथाविधः षट्पदो नासीत्, यः कलं मधुरास्फुटं न जुगुञ्ज न गुञ्जितवान्। तथा, तत्तादृशं गुञ्जितं नासीत्, यत् मनो न जहार हृतवत्।

अत्र जलादिकं पूर्वं पूर्वं विशेष्यं प्रति विशेषणत्वेन पङ्कजादिपरपरविशेष्यस्य निषेधनादेकावल्यलङ्कारः।

(ल) लक्ष्यदर्शनात् कारिकोक्तविपरीतमप्येकावल्यलङ्कारं संग्रहीतुमाह क्वचिदिति। एतेन एतादृगेकावल्यलङ्कारो नितान्तविरल इति कारिकायां न लक्षित इति सूचितम्। विशेष्यमपि पूर्वं पूर्वमित्यर्थः, यथोत्तरमुत्तरोत्तरम्। अपोहितं निषिद्धम्। कारिकालक्षितायामेकावल्यां परं परं विशेष्यम्, पूर्वं पूर्वं विशेष्यं प्रति विशेषणीभूतम्; अत्र तु पूर्वं पूर्वं विशेष्यम्, परं परं विशेष्यं प्रति विशेषणीभूतमित्युभयोः सम्पूर्णं वैपरीत्यं द्रष्टव्यम्।

(व) तत्र स्थापने उदाहरति वाप्य इति। इयमपि शरद्वर्णना। वाप्यो दीर्घिकाः, विमला भवन्ति, अस्यां शरदीति शेषः। एवमन्यत्रापि। तासु वापीषु च कमलानि पद्मानि स्फुटन्ति। तेषु कमलेषु च अलयो भ्रमराः पतन्ति। तेष्वलिषु च सङ्गीतं कर्तृ, पदं प्रतिष्ठां करोति अलयो गायन्तीत्यर्थः।

अत्र वाप्यादिकं पूर्वं पूर्वं विशेष्यम्, कमलादिपरपरविशेष्यं प्रति विशेषणतया स्थापितमित्येकावल्यलङ्कारः।

(श) एवमिति। अपोहनेऽप्येवमूह्यमित्यर्थः। यथा मम—

"जले जलेऽस्ति नो पद्मं पद्मे पद्मे न चाप्यली। अलिन्यलिनि नो गीतं गीते गीते न माधुरी॥"

अत्र पद्मादिकं पूर्वं पूर्वं विशेष्यम्, अलिप्रभृतिपरपरविशेष्यं प्रति विशेषणतया अपोहितमित्येकावल्यलङ्कारः।

(ष) अस्य च क्रमिकप्रकरणत्वात् क्रमिकोत्कर्षघटितं सारं नामालङ्कारं निरूपयति उत्तरोत्तरमिति। उत्तरोत्तरं क्रमशः, वस्तुनो विशेष्यपदार्थस्य, उत्कर्षं उत्तमत्वम्, सारो नाम अलङ्कार उच्यते। सारः श्रेष्ठ इति नार्थान्तरम्। तेन सारत्वघटितत्वादस्य सार इति सञ्ज्ञा। अलङ्कारसर्वस्वे तु अयमुदारनाम्ना व्यपदिष्टः।

मालादीपके यस्य कस्यचिद्गुणरूपस्य क्रियारूपस्य वा धर्मस्योत्तरोत्तरसम्बन्धः, इह तु केवलोत्कर्षरूपगुणस्येति विशेषरूपोऽयं सामान्यरूपं तं बाधते।

अत्र उत्कर्षः श्लाघ्यगुणानामश्लाघ्यगुणानाञ्च सम्भवति। तत्राद्यं यथा—"राज्ये सारम्" इत्यादि। अन्त्यं यथा—"तृणादपि लघुस्तूलस्तूलादपि च याचकः। वायुना किं न नीतोऽसौ मामयं प्रार्थयिष्यते॥" इत्युद्योतकारः। दर्पणकारेण तु अश्लाघ्यगुणोत्कर्षो न विवक्षितः, अविवरणात् प्रकारान्तरानभिधानादनुदाहरणाच्च। तेन तन्मते "तृणादपि" इत्यादौ "क्वचिद्विशेष्यमपि" इत्याद्युक्तद्वितीयप्रकार एकावल्येव। तथा

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम् ॥" (स)

१०३ । यथासंख्यमनूद्देश उद्दिष्टानां क्रमेण यत् ॥ (ह)

यथा—"उन्मीलन्ति नखैर्लुनीहि वहति क्षौमाञ्चलेनावृणु
क्रीडाकाननमाविशन्ति वलयक्वाणैः समुत्त्रासय ।
इत्थं वञ्जुल-दक्षिणानिल-कुहूकण्ठेषु साङ्केतिक-
व्याहाराः सुभग ! त्वदयोविरहे तस्याः सखीनां क्रमात् ॥" (च)

---

पदार्थस्य उत्तरोत्तरमुत्कर्षसम्बन्धमात्र एवायमलङ्कारो भवत्येव, न पुनस्तत्र श्लोकसमाप्तिपर्य्यन्तत्वापेक्षा इत्येव मन्यकन्मतमित्यवधार्य्यते, लक्षणे वृत्तौ च विशेषानभिधानात् । तेन—

"लोकस्त्रजि द्यौर्दिवि चादितेया अप्यादितेयेषु महान् महेन्द्रः ।
किं कर्त्तुमर्थो यदि सोऽपि रागात् जागर्त्ति कथा किमतः परापि ॥"

इति नैषधश्लोकस्य पूर्वार्द्धमात्रेऽपि सारालङ्कारः प्राप्त एवेत्यवधेयम् ।

(स) राज्ये इति । "सारो बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिषु" इत्यमरकोषात् वरार्थकसार-शब्दस्य त्रिलिङ्गत्वेन वाच्यलिङ्गत्वेऽपि "नपुंसकानपुंसकयोर्नपुंसकमेकवच्च" इत्यनेन सारमित्यत्र नपुंसकत्व-मेकत्वञ्च । तेन, राज्ये नलस्थलात्मकसमग्रराज्यमध्ये, वसुधा स्थलात्मकप्रदेशः, सारं सारा श्रेष्ठत्वयं:, स्वेच्छयैव विचरणसम्भवात् । वसुधायां स्थलात्मकप्रदेशमध्येऽपि पुरं नगरं सारं श्रेष्ठम्, सुन्दरत्वाद्विचरणादौ नितान्तसुविधावशाच्च । पुरेऽपि च सौधमट्टालिका सारम्, परमसुदृढस्थलात् सुखावासस्थानत्वाच्च । सौधेऽपि तल्पं शय्या सारम्, तत्रापि सुखव्यवहार्य्यत्वात् । तल्पेऽपि अनङ्गसर्वस्वं कामदेवस्य समस्तसम्पत्तिस्वरूपा, वराङ्गना उत्तमस्त्री सारा, भोगसुखसम्पादकानां मध्ये चरमसीमारूपत्वादिति भावः ।

अत्र वसुधादीनां वस्तूनामुत्तरोत्तरमुत्कर्षात् सारोऽलङ्कारः ।

"जम्बीरश्रियमतिलङ्घ्य लीलयैव व्यानम्रीकृतकमनीयहेमकुम्भौ ।
नीलाम्भोरुहनयनेऽधुनाकुचौ ते स्पर्द्धेते खलु कनकाचलेन सार्द्धम् ॥"

इत्यादावपि कामिनीकुचयोरुत्तरोत्तरोत्कर्षप्रतीतेः सारोऽलङ्कार एवेति बोध्यम् ।

(ह) क्रमिकपदार्थघटितालङ्कारनिर्वचनस्य प्रक्रान्तत्वात् क्रमिकाभिधानघटितमेव यथासंख्यालङ्कारं निर्वक्ति यथेति । "भाम्ने ह्यवद्व्यवहारः" इति प्रज्ञितस्वष्टतन्यायात् उद्दं दिष्टा इत्युद्दिष्टाः प्रथममभिहितास्तेषां प्रथम-मुक्तानामर्थानामित्यर्थः, क्रमेण पौर्वापर्य्येण, यत्, अनूद्देशः पश्चादुक्तिः, तद्यथासंख्यं नाम अलङ्कार उच्यते । येन क्रमेणार्थाः प्रथममुक्ताः तेनैव क्रमेण तत्सम्बन्धिनामर्थानामपि पश्चादुक्तिर्यथासंख्यमित्यर्थः । अत्रापि अनूद्देश इति गौणक्रियाया विशेषणत्वात् यदिति क्लीवलिङ्गम् । संख्यामनतिक्रम्य स्थितमिति यथासंख्यम् । नित्यनपुंसकोऽयं शब्दः ।

(च) उन्मीलन्तीति । प्रवासिनं नायकं प्रति नायिकादूत्या उक्तिरियम् । हे सुभग ! पत्नीप्रिय !

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१०४ । क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात् ।
भवति क्रियते वा चेत्तदा पर्य्याय इष्यते ॥ (क)

क्रमेण यथा—

"स्थिताः क्षणं पक्ष्मसु ताड़िताधराः पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण (१) नाभिं प्रथमोदविन्दवः ॥" (ख)

---

त्वदीयविरहे तस्यास्तव प्रियतमायाः सखीनां मिथः परस्परम् इत्थम् एवम्भूताः, वञ्जुला अशोकमुकुलाः, दक्षिणानिलो मलयपवनः, कुहूकण्ठाः कोकिलाश्च तेषु, साङ्केतिकव्याहाराः साङ्केतिकवाक्यानि प्रचलन्तीति शेषः । तथा च उन्मीलन्ति प्रस्फुटन्ति । अशोकमुकुला इति सङ्केतबोध्यम् । इत्थमेकया उक्ते, अपरा आह—नखैर्लुनीहि छिन्धि, यथा नेयं पश्येदिति भावः । तानशोकमुकुलानिति सङ्केतबोध्यम् । वहति प्रचरति । दक्षिणानिल इति सङ्केतबोध्यम् । इति चैकया भाषिते अन्या आह—क्षौमाञ्चलेन पट्टवसनैक-देशेन आवृणु । तं दक्षिणानिलमिति सङ्केतबोध्यम् । यथा नेमां संस्पृशेदित्याशयः । क्रीड़ाकाननं केलिवनम्, आविशन्ति प्रविशन्ति । कोकिला इति सङ्केतगम्यम् । इत्यथैकया कथिते इतरा ब्रवीति—वलयानां हस्ताभरणानां क्वाणैः शब्दैः, समुत्त्रास्य भीषयित्वा अपसारय । तान् कोकिलानिति सङ्केतबोध्यम् । यथा न रुवन्तीति भावः । वञ्जुलादीनां नामोच्चारणेऽपि तस्या नायिकाया मदनवेदना प्रवर्धेत इति ते सङ्केतगम्याः प्रतिपादिताः । "वञ्जुलः पुंसि तिनिशे वेतसाशोकयोरपि" इति मेदिनी ।

अत्र उन्मीलन्तीत्यादीनामुद्दिष्टानां क्रमेणैव लुनीहीत्यादीनामनूद्देशादयथासंख्यम् ।

(क) क्रमिकस्य प्रक्रान्तत्वात् क्रमप्रयुक्तमेव पर्य्यायालङ्कारं लक्षयति क्वचिदिति । क्वचित् एकं वस्तु, क्रमादनेकस्मिन् स्थाने चेद्यदि भवति स्वयमेवावस्थितं भवति, वा अथवा अन्येन अवस्थितं क्रियते ; क्वचिच्च अनेकं वस्तु, क्रमादेकगम् एकस्थानस्थितं चेद्भवति, किंवा अन्येन क्रियते ; तदा पर्य्यायो नाम अलङ्कार इष्यते । अतएवायं चतुर्विधः ।

द्वितीयप्रकारविशेषालङ्कारेण सह अस्य भेदस्तु तत्रैव टीकायामुक्तः, अत्र च वृत्तौ वक्ष्यते । पर्य्यायः क्रम एव, तद्घटितत्वादस्य पर्य्याय इत्येव संज्ञा ।

(ख) एकस्य वस्तुनः अनेकस्मिन् स्थाने स्वयमवस्थितभवने उदाहरति स्थिता इति । कुमारसम्भव-पञ्चमसर्गस्थमिदं पद्यम् । प्रथमा उदविन्दवो वृष्टिजलविन्दवः, तस्याः पार्वत्याः, पक्ष्मसु नयनलोमसु क्षणं स्थिताः सन्तः । एतेन पक्ष्मणामतिघनत्वं व्यज्यते । परञ्च ताड़िताः पतनेन पीड़िताः अधरो यैस्तादृशाः सन्तः अधरे पतन्त इत्यर्थः । एतेनाधरस्य कोमलत्वं व्यज्यते, अनन्तरञ्च पयोधरयोः स्तनयोः उत्सेधे उपरिभागे निपातेन पतनेन चूर्णिता जर्जरीभूताः सन्तः । एतेन पयोधरयोरत्यन्तकाठिन्यं द्योत्यते । ततश्च वलीषु उदर-पार्श्वस्थनिम्नगभंरेखासु स्खलिताः प्रच्युताः सन्तः । अनेन तासां निम्नोन्नतत्वं सूच्यते । तदनु च चिरेण बहुकालेन अनेकप्रतिबन्धकत्वादिति भावः । नाभिं प्रपेदिरे प्रविष्टाः । एतेन च नाभिगंभीरत्वं व्यज्यते ।

---

(१) क्रमेण इति पाठान्तरम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः ।
वृक-काक-शिवास्तत्र धावन्त्यरिपुरे तव ॥" (ग)

"विसृष्टरागादधरान्निवर्त्तितः स्तनाङ्गरागादरुणाच्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः ॥" (घ)

"ययोरारोपितस्तारो हारस्तेऽरिवधूजनैः ।
निधीयन्ते तयोः स्थूलाः स्तनयोरश्रुबिन्दवः ॥" (ङ)

एषु च क्वचिदाधारः संहतरूपः असंहतरूपश्च । क्वचिदाधेयमपि (च) ।

---

अत्र जलबिन्दुरूपैकवस्तुनः क्रमात् पक्ष्मादावनेकस्मिन् स्थाने स्वयमेवावस्थितभवनात् पर्य्यायालङ्कारः । मल्लिनाथेन तु "अत्र प्रतिपदमर्थबलात् परिकरालङ्कारः" इत्युक्तम् । तदपि युक्तमेव ताडिताधरा इत्यादि-विशेषाभिप्रायेण प्रयुक्तत्वात् । तेन तयोरुभयोरेकाश्रयानुप्रवेशरूपः सङ्कर एव पर्य्यवसित इत्यवधेयम् ।

(ग) अनेकस्य वस्तुनः स्वयमेकस्थानस्थभवने उदाहरणमाह विचरन्तीति । कस्यचित् राज्ञः स्तुतिरियम् । हे राजन् ! यत्र तव अरिपुरे, श्रोणिभरालसा नितम्बभारेण मन्दगमनाः, विलासिन्यः शत्रुरमण्यो विचरन्ति, अतीतसामीप्ये वर्त्तमाना, तेन विचरितवत्य इत्यर्थः । तत्र अरिपुरे इदानीं वृक-काक-शिवा व्याघ्र-काक-शृगालाः, धावन्ति वेगेन सञ्चरन्ति । भवतो भयेन पलायितेषु शत्रुषु तदीयं पुरमिदानीं महारण्यतया परिणतमित्याशयः ।

अत्रानेकरूपाणां शत्रुविलासिनीनां वृककाकशिवानाञ्च एकस्मिन्नरिपुरे क्रमेण भवनात् पर्य्यायालङ्कारः ।

(घ) एकस्य अनेकस्मिन् करणे लक्ष्यं दर्शयति विसृष्टेति । इदमपि कुमारसम्भवीयपञ्चमसर्गस्थं पद्यम् । तया पार्वत्या, विसृष्टस्तपोविरुद्धत्वात् परित्यक्तः रागोऽलक्तकादिना रञ्जनं यस्य तस्मात्ताहृशात्, अधरादधरोष्ठात्, निवर्त्तितः प्रत्यावर्त्तितः, स्तनयोरङ्गरागात् कुङ्कुमाद्यङ्गरागद्रव्यलेपनात् निवर्त्तितः, तथा अरुणात् स्वभावतो रक्तवर्णात् कन्दुकात् खेलोपकरणगुटिकाविशेषाच्च निवर्त्तितः, करः स्वकीयो हस्तः, अधुना कुशाङ्कुराणां क्षुद्रक्षुद्रदर्भाणाम् आदानेन यज्ञादिसाधनार्थं सञ्चयनेन परिक्षता अङ्गुलयो यस्य तथाभूत एवम् अक्षसूत्रप्रणयी जपमालायामासक्तः कृतः ।

अत्र एकस्य हस्तस्य अधरे, स्तनयोः, कन्दुके, कुशाङ्कुरे, अक्षसूत्रे च क्रमेण करणात् पर्य्यायालङ्कारः ।

(ङ) अनेकस्य एकत्र करणे उदाहरणं दर्शयति ययोरिति । इयमपि राजस्तुतिः । हे राजन् ! ते तव अरिवधूजनैः शत्रुस्त्रीलोकैः, ययोः स्तनयोः तारो लम्बमानः, हारो मुक्तामाला, आरोपितः परिहितः, इदानीं तयोः स्तनयोः स्थूला अश्रुबिन्दवः निधीयन्ते स्थाप्यन्ते, त्वयैव तासां पत्यादीनां निहतत्वादिति भावः ।

अत्र अनेकभूतस्य मुक्तावलीनिर्म्मितहारस्य अश्रुबिन्दुसमूहस्य च क्रमेणैकस्मिन् स्तनयुगले करणात् पर्य्यायालङ्कारः ।

(च) ननु "स्थिताः क्षणम्" इत्यादौ उदबिन्दूनामनेकत्वात् "एकमनेकस्मिन्" इति लक्षणम्, "विचरन्ति" इत्यादौ उद्यानमलाश्रयादिभेदेन अरिपुरस्य अनेकत्वात् "अनेकमेकगम्" इति लक्षणम्, "ययोः" इत्यादौ च स्तनयोर्द्वित्वेनानेकत्वात् "अनेकमेकगम्" इति [illegible] इत्यादि एषु चेति । उदाहरणेषु

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

यथा—"स्थिताः क्षणम्—" इत्यत्र उदविन्दवः पक्ष्मादावसंहतरूपे आधारे क्रमेणाभवन् । "विचरन्ति" इत्यत्राधेयभूता वृकादयः संहतरूपारिपुरे क्रमेणाभवन् (छ) । एवमन्यत् (ज) ।

अत्र च एकस्यानेकत्र क्रमेणैव वृत्तेर्विशेषालङ्काराद्भेदः (झ) । विनिमयाभावात् परिवृत्तेः (ञ) ।

## १०५ । परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत् । (ट)

मध्य इत्यर्थः । संहतरूपः संयुक्तस्वरूपः अनेकोऽपि संयुक्तत्वेनैकरूप इत्यर्थः, असंहतरूपः विश्लिष्टरूपः एकावयविगतत्वेऽपि विश्लिष्टरूपत्वेन अनेकरूप इत्यर्थः । आधेयमपि पूर्ववत् संहतरूपमसंहतरूपञ्चेत्यर्थः ।

(छ) दृष्टान्तविवक्षयैव सर्वत्र लक्षणानां सङ्गतिरित्याह यथेति । असंहतरूपे परस्परविश्लिष्टरूपे । एतेन पक्ष्माद्याधाराणामनेकत्वम्, आधेयभूतानामुदविन्दूनाञ्च संहतरूपत्वेनैकत्वमिति सूचितम् । अतः "स्थिताः क्षणम्" इत्यादौ "एकमनेकस्मिन्" इति लक्षणसङ्गतिरिति भावः । वृकादयः असंहतरूपा अतएव ते अनेके इत्याशयः । संहतरूपारिपुरे उद्यानजलाशयादिना भेदेऽपि रथ्यादिना संयुक्तरूपत्वेनाभिन्नतया एकरूपे अरिपुरे इत्यर्थः । अतः "विचरन्ति" इत्यादावपि "अनेकञ्चैकगम्" इति लक्षणसङ्गतिरिति भावः ।

(ज) एवमिति । "ययोः" इत्यादौ आधेयभूता अश्रुविन्दवः असंहतरूपा इति ते अनेके, आधारभूतं स्तनयुगञ्च परस्परसंहतरूपमित्येकरूपमेव तत् । तेन तत्रापि "अनेकञ्चैकगम्" इति लक्षणसमन्वय इत्याशयः । विसृष्टेत्यादौ तु "एकमनेकस्मिन्" इति लक्षणसङ्गतिर्निर्बाधैव ।

(झ) ननु "एकस्यानेकगोचरम्" इत्युक्तलक्षणेन द्वितीयप्रकारविशेषालङ्कारेण सह "एकमनेकस्मिन्" इति प्रथमप्रकारस्य पर्य्यायस्य को भेद इत्याह अत्र चेति । प्रथमप्रकारपर्य्याये चेत्यर्थः । वृत्तेर्वैसमानत्वात् । विशेषालङ्कारात् एकस्य अनेकत्र युगपद्वृत्तिघटितादिति भावः ।

(ञ) अथ तथापि घटपटयोः स्थानपरिवर्त्तनमिव "एकमनेकस्मिन्, अनेकञ्चैकस्मिन्" इत्येकानेकयोर्वृत्तितायाः परिवर्त्तनमिति तद्घटितस्यास्य पर्य्यायसामान्यस्य परिवृत्त्या सह को भेद इत्याह विनिमयाभावादिति । तथा च किञ्चिद्दत्त्वा कस्यचिदादानं नाम विनिमयः, तस्य चात्राभावात् परिवृत्तेरलङ्कारादस्य भेद इति पूर्वेणान्वयः ।

(ट) उक्तरीत्या परिवृत्तिप्रस्तावोत्थानात् परिवृत्तिं नामालङ्कारं निर्वक्ति परीति । किञ्चिद्दत्त्वा कस्यचिदादानं नाम विनिमय इत्युक्तमेव । समं समानम्, न्यूनं हीनम्, अधिकञ्चोत्तमम् । तथा च समं दत्त्वा समग्रहणरूपः, अधिकं दत्त्वा न्यूनग्रहणरूपः, न्यूनं दत्त्वा अधिकग्रहणरूपश्च विनिमयः परिवृत्तिर्नाम अलङ्कारो भवेत् । अतएवायं त्रिविध इत्युन्नेयम् ।

तेन "व्यत्ययो वस्तुनोर्यस्तु यो वा विनिमयो मिथः । परिवृत्तिरिहोक्ता सा काव्यालङ्कारलक्षणे ॥

इति सरस्वतीकण्ठाभरणे वैपरीत्यात्मकव्यत्ययेऽपि परिवृत्तेर्विध्यवर्णनं कटाक्षितम्, न चैवं दर्पणकृन्मते "कुमुदवनमपश्रि श्रीमदम्भोजषण्डम्" इत्यादिशिशुपालवधपद्यगतवैचित्र्यस्यासंग्रहापत्तिरिति वाच्यम्, विरूपद्वयसङ्घटनाघटितविषमालङ्कारेणैव तत्संग्रहात् । परिवर्त्तनं परिवृत्तिरिति व्युत्पत्तिः स्पष्टा ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्रमेणोदाहरणम्—

"दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम ।
मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः ॥" (ठ)

अत्र प्रथमेऽर्द्धे समेन, द्वितीयेऽर्द्धे न्यूनेन (ड) ।

"तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना ।
येन जर्जरकलेवरव्ययात् क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥" (ढ)

अत्राधिक्येन (ण) ।

१०६ । प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत् ।
ताहगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ॥
परिसंख्या—(त)

---

(ठ) समेन न्यूनेन च विनिमयं उदाहरति दत्त्वेति । काचित् सुन्दरीमवलोक्यागत्य सख्युरन्तिके कस्यचिदुक्तिरियम् । एणाक्षी हरिणलोचना सा नायिका, कटाक्षं वक्रदृष्टिं दत्त्वा, मम हृदयं हृदयवृत्तिं जग्राह । मया तु हृदयं दत्त्वा मदनज्वरः कामसन्तापो गृहीतः ।

(ड) ननु उदाहृते कुत्र कीदृशेन विनिमय इत्याह अत्रेति । समेन समानवस्तुग्रहणेन विनिमय इति शेषः, वक्रदृष्टि-हृदयवृत्त्योरिन्द्रियवृत्तित्वेन समानत्वादिति भावः । न्यूनेन न्यूनवस्तुग्रहणेन विनिमय इति शेषः, हृदयवृत्त्यपेक्षया मदनज्वरस्य दुःखकरत्वेन हीनत्वादिति भावः ।

(ढ) अधिकेन विनिमयं उदाहरणमाह तस्येति । प्रकृष्टमधिकं वयो यस्य तस्य प्रवयसः अतिवृद्धस्य, स्वर्गिणः सीतारक्षणार्थं मरणजनितपुण्येन स्वर्गं गतस्य, तस्य जटायुषो निमित्ते किमिव अधुना अस्माभिः शोच्यते शोकः क्रियते । कोऽपि नाव शोकविषय इत्याशयः । तथा च येन जटायुषा जर्जरकलेवरस्य जराजीर्णशरीरस्य, व्ययात् परित्यागात् इन्दोश्चन्द्रस्य किरणवदुज्ज्वलं यशः क्रीतं गृहीतम् ।

(ण) अत्रेति । आधिक्येन अधिकवस्तुग्रहणेनेत्यर्थः । विनिमय इति शेषः, जर्जरकलेवरापेक्षया यशस उत्तमत्वादित्याशयः ।

(त) इदानीमेकोक्त्यावच्छप्रतीतेः प्रकरणमारभमाणस्तत्र प्राधान्यात् प्रथमं परिसंख्यालङ्कारं लक्षयति प्रश्नादिति । प्रश्नात् कस्यचिज्जिज्ञासामाश्रित्य, अप्रश्नतो वापि कस्यचिज्जिज्ञासामनाश्रित्यापि वा, कथितात् केनचिद्विधिनाभिहितात् वस्तुनः पदार्थात्, चेद्यदि, शाब्दः शब्देनैव बोध्यः, अथवा आर्थः अर्थपर्यालोचनया गम्यः, तादृशः कथितसदृशस्य, अन्यस्य वस्तुनः, व्यपोहः प्रतिषेधो भवेत्, तदा परिसंख्या नाम अलङ्कारो भवेत् । तेन प्रश्नपूर्वककथनादप्रश्नपूर्वककथनाच्चेयं द्विविधा, तयोश्च प्रत्येकमेव शाब्दत्वार्थत्वभेदेन पुनर्द्विविधेति समुदाये चतुर्विधा परिसंख्या । "पञ्च पञ्चनखा भक्ष्याः" इत्यादौ पञ्चनखेतरभक्षणप्रतिषेधप्रतीतावपि वैचित्र्याभावान्नायमलङ्कारः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्रमेणोदाहरणम्—"किं भूषणं सुदृढ़मत्र ? यशो न रत्नम्,
किं कार्य्यमार्य्यचरितम् ? सुकृतं न दोषः।
किं चक्षुरप्रतिहतम् ? धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम् ॥" (थ)

अत्र व्यवच्छेद्यं रत्नादि शाब्दम् (द)।

"किमाराध्यं सदा पुण्यं कश्च सेव्यः सदागमः।
को ध्येयो भगवान् विष्णुः किं काम्यं परमं पदम् ॥" (ध)

अत्र व्यवच्छेद्यं पापादि आर्थम् (न)। अनयोः प्रश्नपूर्वकत्वम्।
अप्रश्नपूर्वकत्वे यथा—

"भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥" (प)

---

परिसंख्या इतरवर्जनबुद्धिरिति व्युत्पत्तिः, परिशब्दस्य वर्जनार्थत्वात् संख्याशब्दस्य च ज्ञानार्थत्वात् "परेर्वर्जने" इति पाणिनिसूत्रे "यत् सांख्यैः प्राप्यते स्थानम्" इति गीतायाञ्च तथादर्शनात्।

(थ) प्रश्नपूर्वककथने शाब्दीं परिसंख्यामुदाहरति किमिति। अत्र जगति किं नाम सुदृढ़ं चिरस्थायि भूषणम् ? इति कस्यचित् प्रश्ने—"यश एव सुदृढं भूषणं किन्तु रत्नं न" तस्य चयित्वादिति कस्यचित् कथनम्। आर्य्यचरितं मन्वादिमान्यजनव्यवहृतं किं नाम कार्य्यम् ? इति कस्यचित् प्रश्ने—"सुकृतं पुण्यम्, न तु दोषः पापम्" इति कस्यचित् कथनम्। अप्रतिहतं सर्वगामि किं नाम चक्षुः ? इति कस्यचित् प्रश्ने—"धिषणा बुद्धिः, किन्तु नेत्रं न" तस्य भित्त्यादिना प्रतिहतत्वादिति भावः; इति कस्यचित् कथनम्। इति सदुत्तरं श्रुत्वा प्रश्नकर्त्ता कथयितारं प्रशंसति जानातीति। त्वदपरस्त्वद्भिन्नः को जनः, सदसतोर्विवेकं पार्थक्यं जानाति, अपि तु कोऽपि नेत्यर्थः।

(द) अत्रेति। व्यवच्छेद्यं व्यपोह्यं प्रतिषेध्यमित्यर्थः। शाब्दं नेतिशब्दैर्बोध्यम्। तेनात्र प्रश्नपूर्वककथने शाब्दी परिसंख्यालङ्कार इति भावः।

(ध) प्रश्नपूर्वककथने आर्थीं परिसंख्यां दर्शयति किमाराध्यमिति। सदा किं नाम कार्य्यम् आराध्यं सम्यक् साधनीयम् ? इति कस्यचित् प्रश्ने—"पुण्यं धर्म्मः कार्य्यमेव आराध्यम्। न पुनः पापम्" इत्यर्थतो गम्यते। कश्च सेव्यः ? इति कस्यचित् प्रश्ने—सदागमः साधुशास्त्रं वेदादिकमेव सेव्यः। "न पुनर्वात्स्यायनसूत्रादिरसदागमः" इत्यर्थवशाद्बुध्यते। को ध्येयः ? इति कस्यचित् प्रश्ने—भगवान् विष्णुरेव ध्येयः। "न तु धनम्" इत्यर्थाद्गम्यते किं काम्यमभिलषणीयम् ? इति कस्यचित् प्रश्ने—परमं पद उत्कृष्टं निर्वाणपदमेव काम्यम। "न पुनः राजत्वादिकम्" इत्यर्थतो लभ्यते। भावार्थास्तु सुगमाः।

(न) अत्रेति। आर्थमर्थवशाद्बोध्यम्। अतएवात्र प्रश्नपूर्वककथने आर्थी परिसंख्येति भावः।

(प) भक्तिरिति। प्रायो बाहुल्येनैव महतां जनानाम्, भवे महादेवे भक्तिरनुरक्तिः परिदृश्यते, न

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"बलमार्त्तभयोपशान्तये विदुषां सम्मतये (१) बहु श्रुतम्।
वसु तस्य न केवलं विभोर्गुणवत्तापि परप्रयोजनम् (२)॥" (फ)

श्लेषमूलत्वे चास्य वैचित्र्यविशेषो यथा—"यस्मिंश्च राजनि जितजगति पालयति महीं चित्रकर्मसु वर्णसङ्कराः, चापेषु गुणच्छेदाः—" इत्यादि (ब)।

१०७। उत्तरं प्रश्नस्योत्तरादुन्नयो यदि।
यच्चासकृदसम्भाव्यं सत्यपि प्रश्न उत्तरम्॥ (भ)

---

पुनर्विभवे धनसम्पदि। शास्त्रे व्यसनमासक्तिः परिदृश्यते, न तु युवतिरिव कामास्त्रं तस्मिन्। तथा यशस्येव चिन्ता प्राप्त्युपायचिन्तनं परिदृश्यते, न पुनर्वपुषि देहे।

अत्र अप्रश्नपूर्वककथने नञ्द्वयोपादानात् विभवाद्यन्यार्थव्यपोहः शाब्द इति शाब्दी परिसंख्यालङ्कारः।

(फ) बलमिति। रघुवंशाष्टमसर्गस्थमिदं पद्यम्। तस्य विभोः प्रभोरजस्य बलम्, आर्त्तानां पीड़ितानां भयस्य उपशान्तये निवृत्तये, आसीदिति सर्वत्र शेषः, न पुनर्दुर्बलानां निपीड़नाय। बहु प्रचुरं श्रुतं शास्त्रज्ञानम्, विदुषां सम्मतये बहुमतये अत्यादरायेति यावत्, न तु विवादायेति भावः। तथा केवलं वसु, धनमेव परप्रयोजनम् इति न, अपि तु गुणवत्तापि परप्रयोजनैव, न तु स्वनिमित्तेति भावः।

अत्र अप्रश्नपूर्वकादेव "आर्त्तभयोपशान्तये बलम्" इत्यादिकथनात् 'न तु दुर्बलपीड़नाय बलम्' इत्यादिरूपोऽन्यार्थव्यपोहः अर्थतो गम्यत इत्यार्थी परिसंख्यालङ्कारः।

(ब) श्लेषेति। अस्य परिसंख्यालङ्कारस्य। कादम्बरीपूर्वार्द्धे शूद्रकनृपतिवर्णनपरं यस्मिन्नित्यादि गद्यम्। जितजगति यस्मिंश्च राजनि शूद्रके, महीं पालयति सति, चित्रकर्मसु आलेख्यनिर्माणव्यापारेष्वेव वर्णसङ्करा नीलपीतादिवर्णानां सम्मिश्रणानि, न पुनर्मानवेषु अन्यवर्णेभ्यः अन्यवर्णोत्पत्तिरूपा वर्णसङ्कराः, आसन्निति शेषान्वयः। चापेषु धनुष्षेव गुणच्छेदा युद्धादौ मौर्वीकर्त्तनानि, न तु लोकेषु गुणच्छेदा दयादाक्षिण्यादिगुणविलोपा आसन्। तदत्र परस्परव्यवहितं वाक्यद्वयमिदम्।

अत्र उक्तप्रकारान्यार्थव्यपोहः अर्थवशाद्गम्यते इत्यार्थी परिसंख्या।

(भ) एकस्योन्नयनस्य प्रतीतेः प्रकृतत्वात् तद्रूपमुत्तरं नामालङ्कारं निरूपयन् सर्वविधमेव तं निरूपयति उत्तरमिति। उत्तरार्द्धे प्रश्ने सत्यपीत्यभिधानात् पूर्वार्द्धे प्रश्ने असत्यपि इत्यवगन्तव्यम्। तथा उत्तरार्द्धे एकस्मिन् प्रश्ने तादृशवैचित्र्यासम्भवात् बहुतरप्रश्ने सतीति बोध्यम्। तथा च प्रश्ने असत्यपि, उत्तरात् प्रतिवचनात् यदि प्रश्नस्य उन्नयः अनुमानेन ज्ञानं स्यात्, तदा उत्तरं नाम अलङ्कारो भवेदित्येकविधमुत्तरम्। तथा बहुतरप्रश्ने सत्यपि असम्भाव्यमसम्भावनीयं लोकातीतत्वादचिन्तनीयमित्यर्थः, यच्च असकृद्बारंवारम् उत्तरं प्रतिवचनम्, तदपि उत्तरं नामालङ्कारो भवेदित्यपरविधमुत्तरम्। तेन तद्द्विविध एवोत्तरालङ्कारः। काव्यप्रकाशेऽप्येवम्। "को भवान्? चैत्रः" इत्यादौ तु प्रश्नस्य उत्तरस्य च बहुलाभावेन वैचित्र्याभावान्नायमलङ्कारः। उत्तरघटितत्वादेवास्य उत्तरमिति संज्ञा। अवाच्ये नित्यनपुंसकलिङ्गोऽयं शब्दः।

---

(१) सत्कृतये इतीदानीन्तनपुस्तके पाठः। (२) परप्रयोजना इत्यपीदानीन्तनपुस्तके पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा मम—"वीक्षितुं न क्षमा श्वश्रूः स्वामी दूरतरं गतः ।
अहमेकाकिनी बाला तवेह वसतिः कुतः ? ॥" (म)

अनेन पथिकस्य वसतियाचनं प्रतीयते (य) ।

"का विसमा ? देव्वगई, किं लद्धव्वं ? जणो गुणग्गाही ।
किं सोक्खं ? सुकलत्तं, किं दुग्गेज्झं ? खलो लोओ ॥" (र)

अत्रान्यव्यपोहे तात्पर्याभावात् परिसंख्यातो भेदः (ल) । न चेदमनुमानम्, साध्यसाधनयोर्द्वयोर्निर्देश एव तस्याङ्गीकारात् (व) । न च काव्यलिङ्गम्, उत्तरस्य प्रश्नं प्रत्यजनकत्वात् (श) ।

---

(म) तत्र प्रथमप्रकारमुदाहरति वीक्षितुमिति । रिरंसमाणायाः कस्याश्चित्तरुण्याः उक्तिरियम् । श्वश्रूर्भर्तुर्माता वीक्षितुं द्रष्टुं न क्षमा न शक्ता अन्धेत्यर्थः । अतो न तस्याः कापि शङ्कास्तीति भावः । स्वामी मद्भर्त्ता दूरतरमतिदूरदेशं गतः । अतस्तदागमनसम्भावनापि नास्तीत्याशयः । अहञ्च एकाकिनी बाला नवयौवनेति शेषः । अतएव इह अस्मद्गृहे कुतः कथं तव वसतिरवस्थानं स्यात् ? अपि तु कुतोऽपि नेत्यर्थः । अत्रावस्थाय यथेष्टं रमस्वेति च व्यज्यते ।

(य) अनेनेति । वीक्षितुमित्यादिना प्रतिवचनेनेत्यर्थः । वसतियाचनं "अहमत्रावस्थातुमर्हामि" इति वासस्थानप्राप्तिप्रश्न इत्यर्थः, प्रतीयते अनुमानेन ज्ञायते । अतएवात्र उत्तरालङ्कार इति भावः ।

(र) द्वितीयप्रकारं दर्शयति का इति । "का विषमा ? दैवगतिः, किं लब्धव्यम् ? जनो गुणग्राही । किं सौख्यम् ? सुकलत्रम्, किं दुर्ग्राह्यम् ? खलो लोकः ॥" इति संस्कृतानुवादः । का विषमा पूर्वापरासमाना अप्रतिकार्यत्वेन दारुणा वा ? दैवगतिर्विधेर्व्यवहारः । किं नाम वस्तु लब्धव्यम् ? गुणग्राही जनः । किं सौख्यं सुखजनकम् ? सुकलत्रम् उत्तमभार्या । किं नाम दुर्ग्राह्यं वशीकर्त्तुमशक्यम् ? खलो लोकः । अत्र बहुतरेषु प्रश्नेषु साधारणस्याचिन्तनीयबहुतरोत्तरदानादुत्तरालङ्कारः ।

(ल) ननु "किमाराध्यम्" इत्यादिवदेव "का विषमा" इत्यादावपि प्रश्नपूर्वकात् "दैवगतिः" इत्यादिकथनात् "न मानवचरित्रादिगतिः" इत्याद्यन्यव्यपोहसम्भवेन अर्थपरिसंख्याप्रसक्तिरिति ततः अस्य द्वितीयप्रकारोत्तरालङ्कारस्य को भेद इत्याह अत्रेति । अन्यव्यपोहे इतरार्थव्यवच्छेदे तात्पर्याभावादुत्तरकर्त्तुरिच्छाया अभावात् । तथा च यदा "किमाराध्यम्" इति प्रश्ने "पुण्यम्" इत्युत्तरकर्त्तुः "न तु पापम्" इत्यन्यव्यपोह इष्ट एव ; "का विषमा" इति प्रश्ने "दैवगतिः" इत्युत्तरकर्त्तुस्तु तावन्मात्रमेवेष्टम्, न तु "न मानवचरितादिगतिः" इत्यन्यव्यपोहः, ईदृग्वैषम्यानुमानस्य सर्वेषामात्मनिदर्शनेनैव सर्वथा सम्भवपरत्वादिति भावः ।

(व) अथ तथापि "वीक्षितुं न क्षमा श्वश्रूः" इत्यादौ तादृशेनोत्तरेण पथिकवसतिप्रश्नस्यानुमानात्, तादृशव्यङ्ग्यार्थसत्त्वेन विच्छित्तिवशाच्च अनुमानालङ्कार एवास्तु किं प्रथमप्रकारोत्तरालङ्काराङ्गीकारेणेत्याह न चेति । निर्देश एव उक्ताविव, तस्य अनुमानस्य । तथा चोक्तोदाहरणे तादृशपथिकप्रश्नस्यानुक्तत्वान्नानुमानमित्याशयः ।

(श) ननु तर्हि तथाविधपथिकप्रश्नप्रतीतिं प्रति "वीक्षितुं न क्षमा श्वश्रूः" इत्यादिवाक्यार्थानां हेतुत्वात् अत्र वाक्यार्थहेतुकं काव्यलिङ्गमेवास्ताम्, किमतिरिक्तोत्तरालङ्कारस्वीकारेणेत्याह पुनश्च नेति । तथाहि

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१०८ । दण्डापूपिकयाऽन्यार्थागमोऽर्थापत्तिरिष्यते । (घ)

"मूषिकेण दण्डो भक्षितः" इत्यनेन तत्सहचरितमपूपभक्षणमर्थादायातं भवतीति नियतसमानन्यायादर्थान्तरमापततीत्येष न्यायो दण्डापूपिका (ङ)।

अत्र च क्वचित् प्राकरणिकादर्थादप्राकरणिकस्यार्थस्य आपतनम्, क्वचिदप्राकरणिकार्थात् प्राकरणिकार्थस्येति द्वौ भेदौ (छ)। क्रमेणोदाहरणम्—

"हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले ।
मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः ? ॥" (ज)

---

तादृशप्रश्नप्रतीतिं प्रत्येव "वीचितुम्" इत्यादिवाक्यार्थानां हेतुत्वम्, न तु तादृशप्रश्नं प्रति ; अतो न काव्यलिङ्गमपीत्याशयः। इदमुपलक्षणम्। निष्पाद्य-निष्पादकयोरुभयोर्निर्द्देशस्थल एव काव्यलिङ्गस्याप्यङ्गीकारात् अत्र तु निष्पाद्यस्य निर्द्देशाभावादपि न काव्यलिङ्गप्रसक्तिरित्यपि द्रष्टव्यम्।

(घ) एकोक्तावन्यप्रतीतेः प्राकरणिकत्वात् तत्स्वरूपामेवार्थापत्तिं नामालङ्कारं लक्षयति दण्डेति। दण्डापूपिकया दण्डापूपिकाख्यन्यायेन, अन्यस्य अर्थस्य आगमः प्रतीतिरर्थापत्तिर्नाम अलङ्कार इष्यते। वृत्तिविवरणेनैव एतद्विवरणं स्पष्टीभविष्यति। अर्थस्य अन्यार्थस्य चापत्तिरापतनमुपस्थितिरिति व्युत्पत्तिः।

(ङ) ननु का नाम दण्डापूपिका इत्याह मूषिकेणेति। इत्यनेन एवम्प्रकारेण वाक्येन तत्सहचरितं दण्डभक्षणसहसम्पन्नम्, अपूपभक्षणं मूषिककर्तृकमेव पिष्टकभोजनम्, अर्थात् समानयुक्तिवशात्, आयातं ज्ञातुरवगतम्, इति नियतसमानन्यायात् इत्थं निश्चिततुल्ययुक्तेः। आपतति उपस्थितं भवति। न्यायो नीतिः। अत्रायं विस्तृतः सरलार्थः—कस्मिंश्चिद्गृहे गृहिणी रात्रौ भोजनावशिष्टानि पिष्टकानि पत्युरन्तिक एव दण्डोपरि भाजने निधाय निद्रिता, पतिश्च निद्रितः। प्रभाते तु पिष्टकहीनं भक्षितैकदेशं दण्डं पश्यता पत्या पृष्टा गृहिणी ब्रूते स्म—"मूषिकेण दण्डो भक्षितः" इति। तच्छ्रुत्वा च पत्या एवमवगम्यते यत्, "येन मूषिकेण दण्डो भक्षितस्तेनैव पिष्टकमपि भक्षितम्" तयोः सहचरत्वात् दण्डभक्षणापेक्षया पिष्टकभक्षणस्य सुकरत्वादिष्टत्वाच्चेति। तेन एकस्य सिद्धिबुद्धौ तत्सदृशस्यान्यस्य सिद्धिबुद्धिर्दण्डापूपिका। एवञ्च दण्डापूपौ अस्याम् इति दण्डापूपिका "इन्विषये इकी वाच्यः" इत्यस्यार्थे दण्डापूपशब्दादिकप्रत्ययः।

(छ) अत्रेति। प्राकरणिकात् प्रस्तुतात्, अर्थाद्विषयात्। एवमुत्तरत्रापि। आपतनमुपस्थितिः। प्राकरणिकार्थस्य आपतनमिति पूर्वेणान्वयः।

(ज) तत्र प्रथममुदाहरति हारोऽयमिति। कामिनीकुचकुम्भसम्भोगसमासक्तस्य कस्यचित् सुहृदं प्रति निजनिर्दोषत्वख्यापनायोक्तिरियम्। अयं हारो मुक्तामाला, हरिणाक्षीणां मृगलोचनानां तरुणीनां स्तनमण्डले लुठति सततमनवस्थमवतिष्ठते मुक्तानां मौक्तिकफलानां मोक्षपदप्राप्तानां पुरुषाणाञ्च, इयमवस्था दशा ; तत्र वयं स्मरकिङ्कराः कामदेवाधीना इत्यर्थः, के ? न गण्या इति यावत्, अतो मे दोषलेशोऽपि नैवेह।

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

"विललाप स वाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु (१) ॥" (क)

अत्र च समानन्यायस्य श्लेषमूलत्वे वैचित्र्यविशेषो यथोदाहृते "हारोऽयम्" इत्यादौ (ख)।

न चेदमनुमानम्, समानन्यायस्य सम्बन्धरूपत्वाभावात् (ग)।

१०९। विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः (२) ॥ (घ)

अत्र मुक्ता वर्णनीयत्वेन प्राकरणिकाः, अस्मत्पदवाच्या अमुक्ताश्च अवर्णनीयत्वेन अप्राकरणिकाः। तथा च मोक्षपदं प्राप्तानां नितान्तनीरागतया कामिनीकुचमण्डले अवलुण्ठनमत्यन्तासम्भवमेव, तत्रापि सम्भवे जायमाने, अमुक्तानां कामदेवाज्ञाधीनानां रागसागरमग्नानामस्माकं तत्रावलुण्ठनम् अतएव सम्भवपरमिति प्राकरणिकादर्थादप्राकरणिकस्यार्थस्य आपतनादर्थापत्तिरलङ्कारः। अत्र पुरुषत्वरूपसामान्यधर्म्मेण मुक्तामुक्तयोः सादृश्यमवधेयम्।

(क) द्वितीयप्रकारं दर्शयति विललापेति। रघुवंशाष्टमसर्गे श्लोकोऽयम्। सः अजः, सहजामपि स्वाभाविकीमपि धीरतां धैर्य्यम् अपहाय, वाष्पेण अश्रूद्गमेन गद्गदमस्पष्टं यथा स्यात्तथा विललाप। तथा च अभितप्तं सर्वतः सन्तप्तम् अयो लौहमपि मार्दवं कोमलतां भजते, शरीरिषु स्वभावत एव कोमलेषु देहिषु मार्दवभजने, कैव कथा ? अपि तु क्वापि प्रतिवादकथा नास्तीत्यर्थः।

अत्र शरीरिषु मार्दवभजनं वर्णनीयतया प्राकरणिकम्, अयसो मार्दवभजनन्तु अवर्णनीयतया अप्राकरणिकम्। एवञ्च अप्राकरणिकादयसो मार्दवभजनरूपार्थात् प्राकरणिकस्य शरीरिमार्दवभजनरूपस्यार्थस्य आपतनादर्थापत्तिः। अत्र तु सन्तप्तत्वरूपसामान्यधर्म्मेण अयःशरीरिणोः सादृश्यं बोध्यम्।

(ख) अनुभवसिद्धं कञ्चित् फलितार्थमाह अत्र चेति। अर्थापत्तिस्थले चेत्यर्थः। समानन्यायस्य उक्तविधदण्डापूपिकाख्यनीतेः। उदाहृते तु मुक्तानामित्यत्र श्लेषः।

(ग) ननु स्तनमण्डले मुक्तानामवलुण्ठनदर्शनेन, अमुक्तानामपि तत्रावलुण्ठनज्ञानसम्भवात् तप्ते अयस्यपि मार्दवदर्शनेन तप्तेषु शरीरिषु मार्दवस्य अतएव ज्ञानसम्भवाच्च सर्वत्रानुमानालङ्कार एवास्ताम्, किमर्थापत्तिस्वीकारेणेत्याह न चेति। इदमर्थान्तरोपस्थितिरूपम् अनुमानमनुमानसाध्यं ज्ञानं न चेत्यर्थः। सम्बन्धरूपत्वाभावात् व्याप्तिरूपत्वाभावात्। तथा च एकसिद्धौ तत्सदृशापरसिद्धिबुद्धिः समानन्यायः, व्याप्तिस्तु साध्यसाधनयोः सामानाधिकरण्यविशेषः। यथा—"नियतधर्म्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः" इति साङ्ख्यप्रवचनपञ्चमाध्याये सूत्रम्। "प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः" इति सिद्धान्तलक्षणे गङ्गेशोपाध्यायाश्च। तेन व्याप्तिप्रयुक्तादनुमानात् समानन्यायप्रयुक्ताया अर्थापत्तेर्भेद इत्याशयः।

(घ) निरुक्तप्रकरणवशादेव विकल्पं नामालङ्कारं निर्वक्ति विकल्प इति। चातुरीयुतः कवेर्निपुणता-

(१) शरीरिणामिति पाठान्तरम्। (२) विरोधश्चान्तरा यतः, विरोधश्चातुरी यतः इति पाठभेदौ।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"नम्यन्तां (१) शिरांसि धनूंषि वा, कर्णपूरीक्रियन्तामाज्ञा मौर्व्यो वा।" (ङ)

अत्र शिरसां धनुषाञ्च नमनयोः सन्धिविग्रहोपलक्षणत्वात् सन्धिविग्रहयो-श्चैकदा कर्त्तुमशक्यत्वाद्विरोधः (च)। स च एकपक्षाश्रयणपर्य्यवसानः (छ)। तुल्यबलत्वञ्चात्र धनुःशिरोनमनयोर्द्वयोरपि सर्वथा सम्भाव्यमानत्वात् (ज)। चातुर्य्यञ्चात्र औपम्यगर्भत्वेन (झ)। एवं "कर्णपूरीक्रियन्ताम्" इत्यत्रापि (ञ)। एवम्—

"युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा हरेः॥" (ट)

---

युक्तः कवेर्निपुणताजनितवैचित्र्यविशिष्ट इत्यर्थः, तुल्यबलयोः समकक्षयोः पदार्थयोः, विरोधो विप्रतिपत्तिरसम्भवतेति यावत् विकल्पो नाम अलङ्कार इष्यत इत्यनुषङ्गः।

विरोधाभासे विरोधस्य अवास्तवतया आपातत एव प्रतीतेः येन केनचित् समाधानञ्च, अतएव तस्य विरोधाभास इति संज्ञा। अत्र तु विरोधस्य वास्तवतया सर्वदैव प्रतीतिः एकपक्षावलम्बनेनैव समाधानञ्च; अतएव चास्यापि विकल्प इति संज्ञा इत्यनयोर्भेदः। तेनैव च विरुद्धौ कल्पौ पक्षौ यस्मिन्निति व्युत्पत्तिः।

(ङ) नम्यन्तामिति। आक्रान्तं प्रति दृप्तस्य आक्रमितुरुक्तिरियम्। शिरांसि नम्यन्तां युद्धे पराजय-निश्चयेन मत्समीपे अवनतीक्रियन्ताम्, वा किंवा, धनूंषि नम्यन्तां शक्तिश्चेदाकृष्यन्तां युद्धार्थमित्याशयः। आज्ञा ममादेशवाक्यानि, कर्णपूरीक्रियन्तां नियतावलम्बनेन कर्णभूषणीक्रियन्तां पराजयस्वीकारेण श्रूयन्ता-मित्यर्थः, वा अथवा शक्तिश्चेत् मौर्व्यो धनुर्गुणाः, कर्णपूरीक्रियन्तां युद्धार्थं कर्णपर्य्यन्तगामीक्रियन्ताम्।

(च) नन्वत्र शिरोधनुर्नमनयोरुभयोरेव सम्भवपरत्वाद्विरोधः कुत इत्याह अत्रेति। सन्धिविग्रहोप-लक्षणत्वादिति। अन्यथा तयोर्निष्प्रयोजनतापत्तिरित्याशयः।

(छ) अथ तर्हि कथं तस्य समाधानमित्याह स चेति। एकपक्षस्य सन्धेर्विग्रहस्य वा आश्रयणेन पर्य्यवसानं निवृत्तिर्यस्य सः तथोक्तः, एकपक्षाश्रयणस्य वक्तुरभिप्रेतत्वात् तत्समाधानमित्याशयः।

(ज) ननु तथाप्यनयोस्तुल्यबलत्वं कुत इत्याह तुल्येति। सर्वथा गर्वेण, सम्भाव्यमानत्वात् आक्रमता वक्त्रा इति शेषः। तथा च आत्मदुर्बलत्वज्ञानेन शत्रूणां शिरोनमनं समानाधिकबलत्वज्ञानेन धनुर्नमनं वा एतदुभयमपि गर्विणा वक्त्रा सम्भाव्यते; तेनात्र उभयोः सम्भवपरत्वमेव तुल्यबलत्वं विवक्षितमित्याशयः।

(झ) अथ तथापि चातुरी कुत इत्याह चातुर्य्यमिति। कविरचनाचातुरीनिबन्धनवैचित्र्यमित्यर्थः। तथा च शिरोनमनस्यैव सर्वथा प्रस्तूयमानत्वेन उपमेयत्वम्, धनुर्नमनस्य तूपमानत्वम्। तेन बलवद्भिर्यथा धनूंषि नम्यन्ते, तथैव दुर्बलैर्युष्माभिः शिरांसि नम्यन्तामिति सादृश्यगर्भाभिप्रायवशेन वैचित्र्यमिति भावः।

(ञ) एवमिति। इत्यत्रापि ऊह्यमिति शेषः, तत्तु सर्वमेव पूर्ववदिति सुगमम्।

(ट) श्लेषघटितवैचित्र्यं उदाहरति युष्माकमिति। अस्य पूर्वपादत्रयं यथा ग्रन्थान्तरे—

---

(१) नमयन्तु इति पाठान्तरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र श्लेषावष्टम्भेन चारुत्वम् (ठ)।

"दीयतामर्जितं वित्तं देवाय ब्राह्मणाय वा।" (ड) इत्यत्र चातुर्य्याभावान्नायमलङ्कारः (ढ)।

११०। समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके।
खलेकपोतिकान्यायात् तत्करः स्यात् परोऽपि चेत्॥
गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये। (ण)

---

"भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्द्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती

हरेर्विष्णोः, नेत्रे नयनयुगलं तनुः शरीरं वा, युष्माकं भक्तानां भवार्त्तिशमनं सांसारिकदुःखनिवृत्तिं कुरुताम्। नेत्रे इत्यनेनान्वये कुरुतामित्यत्र लोटः परस्मैपदप्रथमपुरुषद्विवचनम्, तनुरित्यनेनान्वये तु तस्या एवात्मनेपदप्रथमपुरुषैकवचनमिति बोध्यम्।

(ठ) अत्रेति। श्लेषस्य अवष्टम्भेन आश्रयेण, चारुत्वं वैचित्र्यम्, तथा एकेन भवार्त्तिशमनस्य कृतत्वे अन्यस्य करणासम्भवाद्विरोधः, एकतरावलम्बनेन तत्समाधानम्, उभयोरपि भवार्त्तिशमने सामर्थ्याच्च तुल्यबलत्वमित्यूह्नेयम्।

(ड) चातुरीयुत इत्यस्य व्यावृत्तिप्रदर्शनायाह दीयतामिति। अस्य मत्पूरितपूर्वार्द्धं यथा—

"प्राणानपि पणीकृत्य समुत्तीर्य्य च सागरान्।"

(ढ) इत्यत्रेति। चातुर्य्याभावात् चातुर्य्यनिबन्धनवैचित्र्याभावात्। किन्तु एकस्मै दत्ते अन्यस्मै दानासम्भवाद्विरोधः, एकस्मा एव दानमभिप्रेतमिति तत्समाधानम्, देवब्राह्मणयोरुभयोरेव उत्तमपात्रत्वेन तुल्यबलत्वञ्चास्तीति द्रष्टव्यम्। "न रत्नानि न वा भस्म रुचिमादधते मुनेः" इत्यत्र आदधत इति धाधातुदधधात्वोर्बहुवचनैकवचनरूपतया श्लिष्टत्वेन चातुरीयुतत्वेऽपि रत्नभस्मनोस्तुल्यबलत्वाभावान्नातिव्याप्तिरित्यतस्तुल्यबलयोरिति विशेषणञ्चोहनीयम्।

(ण) ननु विरुद्धयोर्यौगपद्येनाभिधाने विकल्प इव अविरुद्धानां यौगपद्येनाभिधाने किञ्चिदलङ्कारान्तरं भवति न वेत्याकाङ्क्षायां कारणयौगपद्ये समुच्चयं निरूपयन् सर्वविधमेव तं निरूपयति समुच्चय इति। धान्यानां मर्द्दनस्थानं खलम् ( खोला, खामार इति भाषा )। खले कपोताः पारावता अस्यां सन्तीति खलेकपोतिका नीतिः युक्तार्थत्वेऽपि "आमुष्यायणः" इत्यादौ षष्ठ्या इव खले इति सप्तम्या लोपाभावः, दण्डापूपिकेतिवत् "अन्विषये इको वाच्यः" इति इकप्रत्ययस्ततश्च स्त्रियामादा। सा चासौ न्यायो नीतिश्चेति खलेकपोतिकान्यायः। स चोक्तो यथा सामान्यलक्षणायां जगदीशैः—

"वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत् पतन्ति।
तथैव सर्वे युगपत् पदार्थाः परस्परेणान्वयिनो भवन्ति॥"

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा मम—"हंहो धीरसमीर ! हन्त जननं ते चन्दनक्ष्माभृतो
दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः ।
प्रत्यङ्गं दहसीह मे त्वमपि चेदुद्दामदावाग्निव-
न्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः ॥" (त)

अत्र दाहे एकस्मिंश्चन्दनक्ष्माभृज्जन्मरूपे कारणे सत्यपि दाक्षिण्यादीनां हेत्वन्तराणामुपादानम् (थ) । अत्र सर्वेषामपि हेतूनां शोभनत्वात् सद्योगः । अत्रैव चतुर्थपादे मत्तादीनामशोभनानां योगादसद्योगः (द) । सदसद्योगो यथा—(ध)

"शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गनगतः खलो मनसि सप्त शल्यानि मे ॥" (न)

---

तथा च कार्य्यस्य एकस्मिन् साधके निष्पादके सति, चेद्यदि खलेकपोतिकान्यायात् परोऽपि पदार्थः, तत्कारकस्य कार्य्यस्य साधकः स्यात् ; तदा अयं समुच्चयो नाम अलङ्कारः स्यात् । अयमेकप्रकारः । यद्वा अथवा युगपदेकदा गुणौ यत् किञ्चिद्गुणद्वयम्, क्रिये यत्किञ्चित् क्रियाद्वयम्, वा अथवा गुण एकः क्रिया चैका इति गुणक्रिये चेत् स्याताम्, तदा सोऽपि समुच्चयः स्यादित्यर्थः । इमे च त्रिप्रकारा इति समुदाये चतुष्प्रकारः समुच्चयः । दीपकेन सह अस्य भेदो वृत्तावेवोक्तः । समुच्चय उक्तानां कारणादीनां परस्परान्वये परस्परानुकर्ष इति व्युत्पत्तिः ।

(त) प्रथमप्रकारमुदाहरति हंहो इति । प्रियाविच्छिन्नस्योक्तिरियम् । हंहो इति सम्बोधनार्थकमव्ययम् । हन्तेति खेदे । धीरो मन्दसञ्चारी सुधीश्च स चासौ समीरो वायुश्चेति तत्सम्बोधनम् । हे धीरसमीर ! ते तव चन्दनक्ष्माभृतो मलयपर्वतात् जननं जन्म, दाक्षिण्यं दक्षिणदिग्भवत्वमौदार्य्यञ्च जगति उत्तरं प्रधानम्, गोदावर्य्या नद्या वारिभिर्जलैः सह परिचयः सर्व्वतः संसर्गः ; ईदृशोऽपि त्वञ्चेत् उद्दामदावाग्निवत् भयङ्करदावानलवत् मे मम प्रत्यङ्गं सर्वाण्यङ्गानि दहसि ; तदा मत्तः मदेनाधीरः, मलिनात्मको दुष्टमना मलिनवर्णश्च, वनचरः सर्वदा वनचारी असभ्यश्च कोकिलः, किं वक्ष्यते पञ्चमस्वरेणोत्पीड़ने किं निन्दिष्यते । उत्तमश्चेत् परान् पीड़यति, तदा अधमस्य परपीड़ने का निन्देति भावः ।

(थ) उक्तलक्ष्ये प्रथमलक्षणं सङ्गमयति अत्रेति । दाहे मलयवायुतो दाहासम्भवेऽपि विरहित्वादेव दहनरूपे कार्य्ये । हेत्वन्तराणाम् अन्येषां दाहकारणानाम् । अत्र तु विषमादयोऽन्येऽप्यलङ्काराः सन्तीत्यूह्यम् ।

(द) अयन्तु केवलसद्योगी केवलासद्योगी सदसदुभययोगी च पुनस्त्रिविध इति केचिदाचक्षते, तदपि भङ्ग्या अङ्गीकुरुते अत्रेति । प्रथमार्द्धे इत्यर्थः, सर्वेषां धीरत्वादीनाम् । अशोभनानां हेतूनामिति पूर्वेण सम्बन्धः ।

(ध) सदिति । सदसद्योगः एकत्र सदसदुभययोगः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इह केचिदाहुः—"शशिप्रभृतीनां शोभनत्वं खलस्याशोभनत्वमिति (१) सदसद्योगः" इति (प)। अन्ये तु "शशिप्रभृतीनां स्वतः शोभनत्वं धूसरत्वादीनां त्वशोभनत्वमिति सदसद्योगः" (फ)। अत्र हि शशिप्रभृतिषु धूसरत्वादेरत्यन्तमनुचितत्वमिति विच्छित्तिविशेषस्यैव चमत्कारविधायित्वम् (२) (ब)। "मनसि सप्त शल्यानि" इति समानामपि शल्यत्वेनोपसंहारस्य, (३) "नृपाङ्गनगतः खलः" इति प्रस्तुतक्रमभेदाद्दुष्टत्वमावहति, सर्वत्र विशेष्यस्यैव शोभनत्वेन प्रक्रमात्" इति (भ)।

(न) शशीति। नीतिशतके श्लोकोऽयम्। दिवसेन दिनारम्भेण धूसरो धूम्रवर्णीभूतः शशी चन्द्रः। गलितं विगतं यौवनं यस्याः सा तादृशी कामिनी भार्या। विगतानि लुप्तानि वारिजानि पद्मानि यस्मात् तत्तथोक्तम्, सरो दीर्घिका। शोभना आकृतिर्यस्य तस्य सुन्दरपुरुषस्य अनक्षरं वर्णोच्चारणरहितं मुखम्, मूकत्वमित्यर्थः। धनपरायणो धनलोभविमुग्धः प्रभुः राजा। सततदुर्गतश्चिरदरिद्रीभूतः सज्जनः। एवम्, नृपाङ्गनगतो राजसभास्थः खलः—एतानि सप्त मे मम मनसि शल्यानि शल्यवद्दुःखदायकानि।

अत्र मनोदुःखोत्पादनकार्यं प्रति दिवसधूसरशशिरूपे एकस्मिन् कारणे सत्यपि गलितयौवनकामिनीप्रभृतीनामन्येषां कारणानामुपादानात् समुच्चयः।

(प) उदाहृते सदसद्योगं दर्शयितुमाह इहेति। शशिप्रभृतीनां शशि-कामिनी-सरः-स्वाकृति-प्रभु-सज्जनानाम्। एवमुत्तरत्रापि।

(फ) अलङ्कारसर्वस्वकारमतमाह अन्ये त्विति। स्वतः स्वभावतः धूसरत्वाद्यभावे इत्यर्थः। धूसरत्वादीनामित्यादिशब्देन गलितयौवनत्व-विगतवारिजत्वानक्षरत्वधनपरायणत्वसततदुर्गतत्वरूपाणां विशेषणानां ग्रहणम्।

(ब) उक्तस्वमतसमर्थनाय अलङ्कारसर्वस्वकार एवाह अत्रेति। हि यस्मात्। धूसरत्वादेरित्यादिशब्देन गलितयौवनत्वादिविशेषणधर्माणां ग्रहणम्। अनुचितत्वमयोग्यत्वम्। परमसुन्दरे शशिकामिन्यादौ परमसुन्दरस्य उज्ज्वलत्वनवयौवनत्वादिधर्मस्यैव सर्वथा योग्यत्वादित्याशयः। इति इत्थं यो वैचित्र्यातिरेक इत्यर्थः, तस्यैव चमत्कारविधायित्वम्, न पुनः केचिदित्याद्युक्तरूपस्य सदसद्योगस्य चमत्कारविधायित्वम् इति एवशब्दस्यार्थः, शशिकामिनीप्रभृतीनां सद्रूपाणां विशेष्याणाम् असद्रूपेण विशेष्यात्मकेन खलेन सह योगरूपो यः सदसद्योगस्तस्य एकपद्यान्तर्गतत्वमात्ररूपतया अवास्तविकत्वे नाकिञ्चित्करत्वादिति भावः।

(भ) ननु यथाकथञ्चित् सदसद्योग एव विवक्षणीयः; तेन एकपद्यान्तर्गतत्वरूपेणापि सदसद्योगे का हानिरित्याह मनसीति। किञ्चेति चार्थः, उपसंहारः समापनम्, इदञ्च आवहतीति परक्रियायां कर्तृत्वेनान्वेति। दुष्टत्वं भग्नप्रक्रमतादोषम्, आवहति भवन्मते जनयति, सर्वत्र "शशी दिवसधूसरः" इत्यादौ, विशेष्यस्यैव, न पुनर्धूसरत्वादिविशेषणस्येत्यर्थः। अत्र अलङ्कारसर्वस्वकारस्यायमभिप्रायः—भवता शशिप्रभृति-

(१) अपि इति पाठोऽपि दृश्यते। (२) अपि इति पाठोऽपि दृश्यते। (३) उपसंहाराय इति क्वचित् पाठः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इह च खले कपोतवत् सर्वेषां कारणानां साहित्येनावतारः, समाध्यलङ्कारे त्वेककार्य्यं प्रति साधके समग्रेऽप्यन्यस्य काकतालीयन्यायेनापतनमिति भेदः (म) ।

"अरुणे च तरुणि ! नयने तव मलिनञ्च प्रियस्य मुखम् ।
मुखमानतञ्च सखि ! ते ज्वलितश्चास्यान्तरे स्मरज्वलनः ॥" (य)

अत्र आद्ये अर्द्धे गुणयोर्यौगपद्यम्, द्वितीये क्रिययोः (र) । उभयोर्यौगपद्ये यथा—(ल)

---

खलपर्य्यन्तं केवलं विशेष्यमादायैव सदसद्योग आख्यायते, विशेषणानां का गतिरिति तु कथञ्चिदपि न विविच्यते । एवञ्च शशिकामिन्यादीनां विशेष्याणामेव शोधनत्वप्रक्रमे नृपाङ्गनगत इति विशेषणस्य शोभनत्वाभिधानात् भवन्मते भग्नप्रक्रमतादोषो दुर्निवार एव । अस्मन्मते तु विशेष्यविशेषणयोरेव सदसतोर्योगत्वेन सदसद्योग इत्यभिधानात् धूसरत्वादिविशेषणानामपि सम्पूर्णविवेचनाधीनत्वात् शशिप्रभृतौ धूसरत्वादीनामसङ्गतविशेषणानामेव प्रक्रमे खले "नृपाङ्गनगत." इत्यसङ्गतविशेषणेनैवोपसंहारात् न भग्नप्रक्रमतादोषस्य कथमपि प्रसक्तिरिति । किञ्च शशिकामिनीप्रभृतिशोभनविशेष्याणां सहचरत्वेन अशोभनस्य खलस्याभिधानात् सहचरभिन्नतादोषः, पुनस्तथैव सदसद्योगेन समुच्चयालङ्काराङ्गीकारे "सज्जनो दुर्गतौ मग्नः" इत्यादावपि (४८९ पृष्ठे) एवमेव सदसद्योगेन समुच्चयालङ्कारप्राप्त्या सहचरभिन्नतादोषस्य प्रायेण विलोपापत्तिः, दोषालङ्कारयोः साङ्कर्य्यापत्तिश्च । अस्मन्मते तु ईदृशसदसद्योगो न समुच्चयभेदक इति पृथगेवावतिष्ठत इति । दर्पणकारमते तु परमतस्यैवाङ्गीकार इति प्रतीयते पूर्वमतदूषणाय तस्याभिधानात् तत्र च दोषानभिधानादिति ध्येयम् ।

(म) ननूक्तप्रकारे कारणसमुच्चये यथा एककार्य्यं प्रति अनेककारणोपन्यासः वक्ष्यमाणसमाध्यलङ्कारेऽपि तथैवेत्यनयोः को भेद इत्याह इह चेति । कारणसमुच्चये चेत्यर्थः । साहित्येन यौगपद्येन, अवतार उपस्थितिः । साधके कारणे समग्रेऽपि साधनसमर्थेऽपि आपतनमुपस्थितिः । काक उड्डीनः तालफलमपि पतितम्, तत्र लोकै राख्यायते—काकेन तालफलं पातितमिति । एष न्यायः, काकतालीयः । तथा च कारणानामदैवाद्यौगपद्यं तु समाधिरित्यनयोर्भेद इति सरलार्थः । अतएव समाधिलक्षणे दैवादिति वक्ष्यते ।

(य) गुणयोः क्रिययोश्च यौगपद्ये द्वितीयतृतीयप्रकारौ समुच्चयस्यैकोदाहरणेनैवाह अरुणे इति । मानिनीं प्रति तत्सख्या उक्तिरियम् । हे तरुणि ! तव नयने नेत्रद्वयम्, अरुणे रक्तवर्णे जाते इति शेषः ; प्रियस्य तव पत्युश्च मुखं मलिनं जातम् । तथा हे सखि ! ते तव मुखमानतमवनतीभूतञ्च. अस्य त्वत्पत्युरन्तरे चित्ते स्मरज्वलनो मदनानलो ज्वलितश्च । अत्र चकारचतुष्टयं यौगपद्यसूचनाय ।

(र) अत्रेति । गुणयोररुणत्वमलिनत्वयोः यौगपद्यमेककालीनत्वम् । द्वितीये अर्द्धे इति पूर्वेणान्वयः. क्रिययोरानमनज्वलनरूपयोः यौगपद्यमिति पूर्वानुषङ्गः । तेनात्र प्रथमार्द्धे गुणसमुच्चयः, द्वितीयार्द्धे तु क्रियासमुच्चय इति भावः । अत्र द्वावेव समुच्चयौ वैयधिकरण्ये इति द्रष्टव्यम् ।

(ल) उभयोरिति । गुणक्रिययोरित्यर्थः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"कलुषञ्च तवाहितेष्वकस्मात् सितपङ्केरुहसोदरश्रि चक्षुः।
पतितञ्च महीपतीन्द्र! तेषां वपुषि प्रस्फुटमापदां कटाक्षैः॥" (व)

"धुनोति चासिं तनुते च कीर्त्तिम्।" (श) इत्यादावेकाधिकरणेऽप्येष दृश्यते (ष)।

न चात्र दीपकम् (स)। एते हि गुणक्रियायौगपद्ये समुच्चयप्रकारा नियमेन कार्य्य-कारण-काल-नियम-विपर्य्ययरूपातिशयोक्तिमूलाः, दीपकस्य चातिशयोक्तिमूलत्वाभावः (ह)।

१११। समाधिः सुकरे कार्य्ये दैवाद्वस्त्वन्तरागमात्॥ (क्ष)

---

(व) कलुषञ्चेति। कस्यचित् राज्ञो गुणवर्णनेयम्। हे महीपतीन्द्र! राजश्रेष्ठ! सितपङ्केरुहस्य श्वेतपद्मस्य सोदरा तुल्या श्रीः शोभा यस्य तत्तादृशं तव चक्षुः, अहितेषु शत्रुषु कलुषं रोषेणाविलञ्च जातमिति शेषः; अकस्मात् सहसैव तेषामहितानां वपुषि शरीरे आपदां कटाक्षैः वक्रदृष्टिभिः प्रस्फुटं स्पष्टं पतितञ्च आपद्भिरुपस्थितञ्चेत्यर्थः।

अत्र कलुषत्वं गुणः पतनञ्च क्रिया अनयोर्यौगपद्यात् समुच्चयः। स चात्रापि वैयधिकरण्य एव।

(श) सामानाधिकरण्येऽप्युदाहरति धुनोतीति। अस्य मत्पूरितापरपादत्रयं सम्पूर्णमिदं पद्यं यथा—

"दत्ते च हृष्टिं कुरुते च भीतिम् अर्पयति चाराद्धरते च शक्तिम्।
धुनोति चासिं तनुते च कीर्त्तिं छिनत्ति चारान् लभते च राज्यम्॥"

इयमपि राज्ञो गुणवर्णना। असौ राजा असिञ्च धुनाति सञ्चालयति, कीर्त्तिं शत्रुविजयनिबन्धनामात्मनः सुख्यातिञ्च तनुते विस्तारयति, युगपदेव तत् द्वयं करोतीत्यर्थः।

(ष) इत्यादाविति। एष गुणक्रियासमुच्चयः। एतेन वैयधिकरण्य एव गुणक्रियासमुच्चयस्य बाहुल्यम् एकाधिकरण्ये तु विरलत्वमिति द्योतितम्।

(स) ननु "धुनोति चासिम्" इत्यादौ अनेकयोः क्रिययोरेककर्त्तृकारकत्वात् "अथ कारकमेकं स्यादनेकासु क्रियासु चेत्" इत्युक्तलक्षणं बहुवचनस्य चाविवक्षितत्वाङ्गीकारात् निरुक्तलक्षणं दीपकमप्यास्तामित्याह न चेति। अत्र "धुनोति चासिम्" इत्यादौ।

(ह) कुतो न दीपकमित्याह एत इति। हि यस्मात्। समुच्चयस्य प्रकारा भेदाः, नियमेन विच्छित्तिविशेषायावश्यम्भावेन, कार्य्यकारणयोर्यः कालनियमः कारणस्य पूर्ववर्त्तित्वं कार्य्यस्य च परवर्त्तित्वमित्यं नियमस्तस्य विपर्य्ययो वैपरीत्यं रूपं यस्याः सा तादृशी अतिशयोक्तिर्मूलं येषां ते तथोक्ताः। तथा च "धुनोति चासिम्" इत्यादौ कीर्त्तिविस्तारं प्रति असिसञ्चालनस्य कारणत्वात् तयोः पौर्वापर्य्यस्यावश्यकत्वेऽपि यौगपद्यविवक्षणादतिशयोक्तिसमुत्थापितत्वाच्च क्रियासमुच्चय एवेत्याशयः। एतेन एकस्य कारकस्य अनेकक्रियान्वये उक्तरूपातिशयोक्तिसत्त्वे क्रियासमुच्चयः, तदसत्त्वे तु दीपकमित्यनयोर्भेदोऽपि प्रतिपादितः।

(क्ष) पूर्वलक्षणे अनेककारणप्रस्तावादनेककारणघटितमेव समाधिं नामालङ्कारं लक्षयति समाधि-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा—"मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्ज्जितम् ॥" (क)

११२ । प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि ।
तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः ॥ (ख)

तस्यैवेति रिपोरेव । यथा मम—
"मध्येन तनुमध्या मे मध्यं जितवतीत्ययम् ।
इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः ॥" (ग)

---

धिवि । दैवादीश्वरेच्छातः, वस्त्वन्तरस्य कारणान्तरस्य आगमादुपस्थितेर्हेतोः, कार्य्यं सुकरं अनायासनिष्पाद्यं सति, समाधिर्नाम अलङ्कारः स्यात् । एतेन केवलप्रारब्धकारणेन दुष्करस्य कार्य्यस्य ईश्वरेच्छाप्राप्तकारणेन सुकरत्वे सति समाधिरिति फलितम् । अतएव काव्यलिङ्गादस्य भेदः । कारणसमुच्चयेन सह भेदस्तु तत्रैव दर्शितः । दैवप्राप्तकारणेन कार्य्यस्य समाधानादस्य समाधिरिति समाख्या ।

(क) मानमिति । कस्यचित् प्रियाया मानभङ्गोक्तिरियम् । अस्याः प्रस्तुतायाः प्रियायाः, मानं निराकर्त्तुं खण्डयितुं तस्याः पादयोः पतिष्यतो मे मम उपकाराय, दिष्ट्या भाग्येन इदमुक्तरूपं घनस्य मेघस्य गर्जितम्, उदीर्णमुत्पन्नम् । केवलपादपतनेन तस्या मानभङ्गो दुष्कर एवासीत् किन्तु घनगर्जनश्रवणात् तस्याः कामावेशवशेनासौ सुकरो जात इत्याशयः ।

अतएवात्र केवलपादपतनेन दुष्करस्य मानभङ्गरूपकार्य्यस्य ईश्वरेच्छाप्राप्तघनगर्जनेन सुकरत्वात् समाधिरलङ्कारः ।

(ख) ननु समाधिरिव अभीष्टकार्य्यस्य आत्मनो दुष्करत्वे अलङ्कारान्तरं भवति न वेत्याकाङ्क्षायां प्रत्यनीकनामालङ्कारं निरूपयति प्रत्यनीकमिति । रिपोः प्रतीकारे अभीष्टे दमनकार्य्ये अशक्तेन दुष्करतया असमर्थेन जनेन विहित इति शेषः, तदीयस्य रिपुपक्षभुक्तस्य पदार्थस्य तिरस्कारः परिभवः, यदि तस्यैव रिपोरेव उत्कर्षसाधको भवेत्, तदा प्रत्यनीकं नाम अलङ्कारः स्यात् ।

प्रत्यनीकं प्रतिपक्षः तत्प्रयुक्तत्वादस्य प्रत्यनीकमिति संज्ञा ।

(ग) मध्येनेति । तनुमध्या कृशतरकटीदेशा नायिका, मध्येन कटीदेशेन, मे मम सिंहस्य, मध्यं कटीदेशं जितवती स्वकटीदेशस्य कृशताधिक्येन पराजितवती ; इति हेतोः, अयं हरिः सिंहः, अस्या नायिकायाः, कुचकुम्भनिभौ स्तनकुम्भतुल्यौ, इभस्य हस्तिनः कुम्भौ भिनत्ति नखराघातेन विदारयति ।

अत्र सिंहस्य मध्यविजयित्वान्नायिका सिंहस्य रिपुः, स च सिंहस्तस्या नायिकायाः साक्षात् कमपि प्रतीकारं कर्त्तुं न शक्तः ; इतश्च हस्तिकुम्भौ नायिकास्तनकुम्भसदृशाविति नायिकाः पक्षभुक्ताविव, तेनैव च सिंहस्तौ भिनत्ति, तत्र भेदनं नायिकायाः स्तनकुम्भोत्कर्षसाधकत्वेन तस्या अप्युत्कर्षसाधकमेवेति प्रत्यनीकमलङ्कारः । तथा स्तनकुम्भोपमानत्वेन प्रसिद्धयोरिभकुम्भयोः कुचकुम्भनिभावित्यनेनोपमेयत्वकल्पनात् प्रतीपालङ्कारस्येत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

११३। प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्।
निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते॥ (घ)

क्रमेण यथा—"यस्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरम्" इत्यादि (७२४ पृष्ठे) (ङ)।

"तद्वक्त्रं यदि, मुद्रिता शशिकथा ; हा हेम, सा चेद्द्युतिः ;
तच्चक्षुर्यदि, हारितं कुवलयैः ; तच्चेत् स्मितम्, का सुधा।
धिक् कन्दर्पधनुः ; भ्रुवौ यदि च ते, किं वा बहु ब्रूमहे
यत् सत्यं पुनरुक्तवस्तुविमुखः सर्गक्रमो वेधसः॥" (च)

अत्र वक्त्रादिभिरेव चन्द्रादीनां शोभातिवहनात्तेषां निष्फलत्वम् (छ)।

---

(घ) प्रत्यनीकोदाहरणद्वितीयार्द्धे प्रतीपालङ्कारोपस्थितेः कारिकाकर्त्तुर्द्दर्शितकर्त्तव्यत्वात् तत्प्रसङ्गेन प्रतीपालङ्कारं निर्वक्ति प्रसिद्धस्येति। प्रसिद्धस्य उपमानस्य उपमानत्वेन लोके प्रसिद्धिं प्राप्तस्य पदार्थस्य, उपमेयत्वप्रकल्पनम्, वा अथवा तादृशोपमानस्यैव निष्फलत्वाभिधानम् अभिधानवत् निष्फलत्वस्य स्पष्टसूचनम्, प्रतीपमिति नाम अलङ्कार उच्यते। अतएवेदं द्विप्रकारम्।

प्रसिद्धोपमानस्य उपमेयत्वकल्पनेनैव प्रतीपं प्रतिकूलम् (उलटा) इति प्रथमप्रकारे संज्ञा व्युत्पत्तिः। द्वितीयप्रकारे तु उपमानस्य निष्फलत्वाभिधानेनैव तस्य प्रातिकूल्यकरणात् प्रतीपमिति व्युत्पत्तिः।

(ङ) तत्र प्रथमप्रकारमुदाहरति यस्त्वदिति। व्याख्यातपूर्वमेतत्। अत्र यथाक्रमं नयनवदनगमनोपमानत्वेन प्रसिद्धानाम् इन्दीवर-चन्द्र-राजहंसगतीनां तत्तदुपमेयत्वकल्पनात् प्रतीपालङ्कारः। स च मालारूपः। केवलरूपस्तु "इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः" इत्यत्रैव।

(च) उपमानस्य निष्फलत्वाभिधाने उदाहरति तद्वक्त्रमिति। विद्धशालभञ्जिकायाः श्लोकोऽयम्। यदि तस्याः कुवलयमालाख्याया नायिकायाः, वक्त्रं वदनं विद्यत इति शेषः। एवं सर्वत्र। तदा शशिकथा चन्द्रसौन्दर्य्यसम्बन्धिनी प्रशंसा, मुद्रिता सङ्कुचिता ; सा कुवलयमालासम्बन्धिनी द्युतिर्देहशोभा चेद्विद्यते, तदा हेम सुवर्णं हा शोभाविषये शोच्यमित्यर्थः। यदि तस्याश्चक्षुर्विद्यते, तदा कुवलयैरिन्दीवरैः हारितं पराजितम्। तत् कुवलयमालासम्बन्धि स्मितं चेद्विद्यति, तदा का नाम सुधा अमृतम्, अपि तु कापि नेत्यर्थः। अपि च यदि ते कुवलयमालासम्बन्धिन्यौ भ्रुवौ विद्येते, तदा कन्दर्पधनुर्धिक् निन्दामीत्यर्थः। बहु वा किं ब्रूमहे वदामः, यत् वेधसो विधातुः सर्गक्रमः सृष्टिप्रणाली, पुनरुक्तवस्तुन एकप्रकारद्वितीयपदार्थात्तन्निर्म्माणादित्यर्थः विमुखो विरोधी भवति, तत् सत्यम्, विधाता एकप्रकारं वस्तुद्वयं न सृजतीति प्रवादः सत्य एवेत्यर्थः, चन्द्रादिभ्यस्तद्वक्त्रादीनामत्युत्तमत्वेन एकप्रकारत्वाभावादिति भावः।

(छ) अत्रेति। शोभाया अतिवहनादतिरेकेण धारणात् चन्द्रादिशोभाभ्यः अत्यधिकशोभाधारणादित्यर्थः, तेषां चन्द्रादीनाम्, निष्फलत्वं सूचितमिति शेषः, उत्तमसत्त्वे अधमानामनावश्यकत्वादिति भावः। अत्रापि मालारूपोऽयम्। केवलरूपो यथा नैषधे—

"मन्ये स विज्ञः स्मृततन्मुखश्रीः क्रतार्द्धमौज्झद्भवमूर्द्धि यस्तम्।"



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

११४। उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः।
कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे॥ (ज)

यथा—

"अहमेव गुरुः सुदारुणानामिति हालाहल! तात! मास्म दृप्यः।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम्॥" (झ)

अत्र प्रथमपादे उत्कर्षातिशय उक्तः। तदनुक्तौ तु नायमलङ्कारः। यथा—"ब्रह्मेव ब्राह्मणो वदति" इत्यादि (ञ)।

११५। मीलितं वस्तुनो गुप्तिः केनचित् तुल्यलक्ष्मणा। (ट)

अत्र समानलक्षणं वस्तु क्वचित् सहजं क्वचिदागन्तुकम् (ठ)। क्रमेण यथा—

---

(ज) मतान्तरीयप्रतीपं लक्षयति उक्त्वेति। किञ्चेति चार्थः। अत्युत्कृष्टस्य अतीवप्रधानस्य, वस्तुनः पदार्थस्य अत्यन्तमुत्कर्षमतीवप्राधान्यमुक्त्वा, उपमानत्वे कल्पिते स्थापितेऽपि केचिदालङ्कारिकाः प्रतीपमूचिरे उक्तवन्तः। अत्र सुष्ठु संभाव्युत्पत्तिविरहादसर्ववादिसिद्धत्वाच्च अस्वरसता प्रत्येतव्या।

(झ) अहमिति। दुर्जननिग्रहीतस्य कस्यचिदुक्तिरियम्। हे हालाहल! महाविष! तात! "अहमेव सुदारुणानां मध्ये गुरुः श्रेष्ठः" इति एवं विविच्येत्यर्थः, मास्म दृप्यः न दर्पितो भव। कथमेवमित्याह—ननु हे हालाहल! अस्मिन् भुवने भवादृशानि त्वत्तुल्यसुदारुणानि, दुर्जनानां वचनानि भूयो बाहुल्येन सन्ति। अतएवात्मनः अद्वितीयत्वबुद्ध्या तादृशदर्पो न युज्यत इति भावः।

(ञ) अत्रेति। उत्कर्षातिशयो हालाहलस्येत्यर्थः। तथा च तीव्रतायामतिप्रधानस्य हालाहलस्य "सुदारुणानां गुरुः" इत्यनेन अत्यन्तमुत्कर्षमुक्त्वा "भवादृशानि" इत्यनेन उपमानत्वकल्पनात् प्रतीपालङ्कारः। तदनुक्तौ उत्कर्षातिशयानुक्तौ। ब्रह्मेव विरिञ्चिरिव। अत्रोपमानभूतस्य ब्रह्मण उत्कर्षातिशयानुक्तेर्न प्रतीपमित्याशयः।

(ट) वस्तुनोः प्रतिरूपत्वे प्रतीपमिव अनुरूपत्वे कश्चिदलङ्कारो भवति न वेत्याकाङ्क्षायां मीलितालङ्कारं निर्वक्ति मीलितमिति। तुल्यं लक्ष्म चिह्नं रूपं यस्य तेन अनुरूपेणेत्यर्थः, केनचिद्वस्तुना, वस्तुनस्तुल्यरूपवस्त्वन्तरस्य गुप्तिर्गोपनं तिरस्करणमिति यावत् मीलितं नाम अलङ्कारः स्यात्। उत्कृष्टगुणेन निकृष्टगुणस्य आच्छादनं मीलितमिति विवक्षितोऽर्थः। अतएवास्य वक्ष्यमाणसामान्यालङ्कारादिभिर्भेदस्तत्र तत्र वृत्तावेव वक्ष्यते। व्याजोक्तौ प्रकाशितस्य वस्तुनो व्याजेन गोपनचेष्टामात्रं न तु गोपनं सम्पद्यते अत्र तु अव्याजेन चेष्टां विनैव च गोपनं सम्पद्यत इत्यनयोर्भेदः।

मीलितं मुद्रितं यत्किञ्चिद्वस्तु वस्त्वन्तरेण तिरोहितमित्यतो मीलितमिति संज्ञा।

(ठ) अस्य विभजनाय तुल्यलक्ष्म विभजते अत्रेति। समानलक्षणं तुल्यलक्ष्मेति पर्यायमित्यर्थः। सहजं स्वाभाविकम्, आगन्तुकं वस्त्वन्तरादागमनशीलम्। अतएवायं द्विविध इति भावः।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"लक्ष्मीवक्षोजकस्तूरी-लक्ष्म वक्षःस्थले हरेः ।
ग्रस्तं नालक्षि भारत्या भासा नीलोत्पलाभया ॥" (ड)

अत्र भगवतः श्यामा कान्तिः सहजा (ढ)।

"सदैव शोणोपलकुण्डलस्य यस्यां मयूखैररुणीकृतानि ।
कोपोपरक्तान्यपि कामिनीनां मुखानि शङ्कां विदधुर्न यूनाम् ॥" (ण)

अत्र माणिक्यकुण्डलस्यारुणिमा मुखे आगन्तुकः (त)।

**११६ । सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः ॥ (थ)**

यथा—"मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्च्चिताः ।
अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः ॥" (द)

---

(ड) तत्राद्यमुदाहरति लक्ष्मीति । हरेर्नारायणस्य वक्षःस्थले, लक्ष्म्या वक्षोजयोः स्तनयोः कस्तूरीलक्ष्म आलिङ्गनेन संलग्नं कस्तूरीचिह्नम्, नीलोत्पलाभया नीलपद्मतुल्यवर्णया भासा हरेरेव देहप्रभया, ग्रस्तं कवलितं तिरोहितमिति यावत्, अतएव भारत्या लक्ष्मीसपत्नीरूपया सरस्वतीदेव्या, न अलक्षि तत् कस्तूरीलक्ष्म न दृष्टम् । अतएव भारत्या मानो न कृत इत्याशयः ।

(ढ) अत्रेति । भगवतो हरेः । तथा च कस्तूरीगतश्यामगुणमपेक्ष्य उत्कृष्टगुणभूतया सहजया उभयोरपि श्यामत्वात्तुल्यरूपया देहप्रभया श्यामकस्तूरीचिह्नस्य तिरोधानादत्र मीलितालङ्कार इत्याशयः ।

(ण) द्वितीयप्रकारस्योदाहरणमाह सदैवेति । यस्यां पुर्य्याम्, शोणोपलकुण्डलस्य रक्तवर्णमणिनिर्म्मितकर्णाभरणस्य, मयूखैः प्रभाभिः, सदैव अरुणीकृतानि कामिनीनां मुखानि, कोपेन प्रणयकोपेन उपरक्तान्यपि आरक्तवर्णीकृतान्यपि सन्ति, यूनां शङ्कां भयं न विदधुः ; तादृशकुण्डलमयूखकृत एवायं रक्तिमेति यूनां निश्चयादिति भावः ।

(त) अत्रेति । अरुणिमा रक्तिमा । तथा च मुखे कुण्डलादागन्तुकेन कोपजनितरागापेक्षया आधिक्यादुत्कृष्टेन रागेण कोपजनितरागस्य तिरोधानादत्र मीलितालङ्कार इति भावः ।

(थ) मीलिते सदृशगुणप्रस्तावोत्थानात् सदृशगुणघटितमेव सामान्यालङ्कारं लक्षयति सामान्यमिति । सदृशैर्गुणैः प्रकृतस्य प्रस्तुतपदार्थस्य अन्यतादात्म्यमप्रस्तुतपदार्थाभेदः सामान्यं नाम अलङ्कारः स्यात् । समानगुणद्वारा प्रस्तुताप्रस्तुतपदार्थयोरभेदप्रतीतिः सामान्यमित्यर्थः । परत्र स्वगुणत्यागादित्यभिधानादत्र स्वगुणात्यागादिति लभ्यते । तेन तद्गुणेन सह अस्य भेदः ।

सामान्यं समानता तद्घटितत्वादस्य सामान्यमिति संज्ञा ।

(द) मल्लिकेति । मल्लिकाभिस्तदाख्यश्वेतपुष्पैश्चिता व्याप्ता धम्मिल्लाः संयतकेशा यासां ताः, तथा चारुभिश्चन्दनैश्चर्च्चिताः कृताङ्गलेपाः, अतएव अविभाव्याः चन्द्रिकासमानवर्णत्वात् लोकैश्चन्द्रिकाभिन्नत्वेन विभावयितुमशक्याः, अभिसारिकाः प्रागुक्तलक्षणा नायिकाविशेषाः, चन्द्रिकासु ज्योत्स्नासु सुखं निरुद्वेगं यथा स्यात्तथा यान्ति रमणान्तिकमिति शेषः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मीलिते उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानम्, इह तु उभयोस्तुल्यगुणतया भेदाग्रहः (ध) ।

११७ । तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः । (न)

यथा—"जगाद वदनच्छद्मपद्मपर्यन्तपातिनः ।
नयन् मधुलिहः श्वैत्यमुदग्रदशनांशुभिः ॥" (प)

मीलिते प्रकृतस्य वस्तुनो वस्त्वन्तरेणाच्छादनम्, इह तु वस्त्वन्तरगुणेनाक्रान्तता प्रतीयत इति भेदः (फ) ।

११८ । तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुणः ॥ (ब)

यथा—"हन्त ! सान्द्रेण रागेण भृतेऽपि हृदये मम ।
गुणगौर ! निषण्णोऽपि कथं नाम न रज्यसि ॥" (भ)

---

अत्र समानश्वेतगुणद्वारा प्रस्तुताया अभिसारिकाया अप्रस्तुतायाश्चन्द्रिकायाश्च अभेदप्रतीतेः सामान्यालङ्कारः ।

(ध) ननु तुल्यरूपेण वस्तुना वस्त्वन्तरस्य गुप्तिः समानगुणवशात् प्रस्तुताप्रस्तुतयोर्वस्तुनोरभेदप्रतीतिश्च पर्य्यालोचने एकरूपतयैव पर्य्यवस्यतीत्यनयोर्मीलितसामान्ययोः को भेद इत्याह मीलित इति । तिरोधानमाच्छादनम् । इह तु सामान्ये तु भेदाग्रहो भिन्नतया प्रतीत्यभावः । मीलिते कस्यचिद्गुणस्योत्कर्षः कस्यचिच्च निष्कर्षः, सामान्ये तु उभयगुणयोः समानतैवेति भेदः ।

(न) गुणप्रस्तावाद्गुणघटितमेव तद्गुणालङ्कारं निरूपयति तद्गुण इति । स्वगुणत्यागादात्मगुणत्यागं कृत्वा, अत्युत्कृष्टगुणस्य यद्ग्रहो ग्रहणं तद्गुणो नाम अलङ्कारः स्यात् । तस्य उत्कृष्टगुणस्य गुणो यस्मिन्निति तद्गुणः ।

(प) जगादेति । शिशुपालवधद्वितीयसर्गस्थमिदं पद्यम् । उदग्रा उन्नता ये दशना दन्तास्तेषामंशुभिः शुभ्रकिरणैः, वदनमेव छद्म व्याजं यस्य तादृशं यत् पद्मं तस्य पर्य्यन्ते प्रान्तभागे पतितुं शीलं येषां तान्, मधुलिहो भ्रमरान्, श्वैत्यं श्वेतवर्णतां नयन् प्रापयन् सन्, जगाद बलराम उवाच ।

अत्र भ्रमरैः स्वकीयकृष्णगुणं परित्यज्य तदपेक्षया अत्युत्कृष्टश्वैत्यगुणग्रहणात्तद्गुणः । वस्तुतः स्वगुणत्यागाभावेऽपि गुणान्तरेणाक्रान्तिवशादेव स्वगुणत्याग इव प्रतीयत इति बोध्यम् ।

(फ) ननूदाहृते श्वैत्यरूपेण उत्कृष्टगुणेन निकृष्टगुणस्य कृष्णरूपस्य तिरोधानान्मीलितस्यापि प्रसक्तिरित्यनयोः को भेद इत्याह मीलित इति । वस्त्वन्तरेण सजातीयगुणविशिष्टेनेत्यर्थः । वस्त्वन्तरगुणेन विजातीयेनेति तात्पर्य्यम्, आक्रान्तता अभिभूतता । तथा च सजातीयोत्कृष्टगुणेन सजातीयनिकृष्टगुणस्य तिरोधाने तु मीलितम्, विजातीयोत्कृष्टगुणेन विजातीयनिकृष्टगुणस्य तिरोधाने तु तद्गुण इत्यनयोर्भेदः । तत्र उत्कर्षनिकर्षौ तु अधिकन्यूनत्वरूपावेवेति बोध्यम् । सामान्यालङ्कारेण सह अस्य भेदस्तु तत्रैव दर्शितः ।

(ब) तद्गुणं परीत्येन अतद्गुणं निर्वक्ति तद्रूपेति । हेतौ सत्यपि सन्निधानादिरूपे परगुणग्रहणकारणे विद्यमानेऽपि, तद्रूपस्य परगुणस्य अननुहारः अग्रहणन्तु, अतद्गुणो नाम अलङ्कारः स्यात् । न विद्यते तस्य परस्य गुणो यस्मिन्नित्यतद्गुणः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा वा—(म)

"गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस ! तव सैव शुभ्रता चीयते न च न चापचीयते ॥" (य)

पूर्वत्रातिरिक्तहृदयसम्पर्कात् प्राप्तवदपि गुणगौरशब्दवाच्यस्य नायकस्य रक्तत्वं न निष्पन्नम् ; उत्तरत्राप्रस्तुतप्रशंसायां विद्यमानायामपि गङ्गायमुनापेक्षया प्रकृतस्य हंसस्य गङ्गायमुनयोः सम्पर्केऽपि न तद्रूपता (र) ।

अत्र च गुणाग्रहणरूपविच्छित्तिविशेषाश्रयाद्विशेषोक्तेर्भेदः, (ल) वर्णान्तरोत्पत्त्यभावाच्च विषमात् (व) ।

---

(भ) प्रक्रान्तेन प्रकृतगुणाग्रहणे उदाहरति हन्तेति । अननुरक्तं पतिं प्रति अनुरक्तायाः कस्याश्चिदुक्तिरियम् । हन्त खेदे । हे गुणगौर ! विद्याविनयादिगुणजनितयशसा गौरवर्ण ! सान्द्रेण गाढेन रागेण अनुरागात्मकरक्तिम्ना भृतेऽपि परिपूर्णेऽपि मम हृदये निषण्णोऽपि अवस्थितोऽपि त्वं कथं नाम न रज्यसि नानुरक्तो भवसि न लोहितो भवसि च ।

अत्र रक्तिमपूर्णहृदयावस्थानरूपे कारणे सत्यपि तदीयरक्तिमाग्रहणादतद्गुणः ।

(म) प्रकृतेन अप्रकृतगुणाग्रहणे उदाहर्तुमाह यथा वेति ।

(य) गाङ्गमिति । तपस्विगृहे वेश्यागृहे च भिक्षां कुर्वन्तं कश्चित् साधुं प्रति कस्यचिदुक्तिरियम् । हे राजहंस ! गङ्गाया इदं गाङ्गम्, अम्बु जलम्, सितं श्वेतवर्णम्, यमुनाया इदं यामुनम्, अम्बु जलञ्च कज्जलाभं कज्जलतुल्यकृष्णवर्णम्, उभयत्र तयोरुभयोरपि मज्जतः अवगाहमानस्य तव सैव पूर्वैव शुभ्रता देहधवलता, न च चीयते शुभ्रगङ्गाजलसम्बन्धात् न च वर्द्धते, न च अपचीयते कृष्णयमुनाजलसम्बन्धादपि न च ह्रासं प्राप्नोति एतदाश्चर्यमिति भावः ।

अत्र मज्जनरूपे कारणे सत्यपि गङ्गाजलगतशुक्लतायाः यमुनाजलगतकृष्णतायाश्च अग्रहणादतद्गुणः ।

(र) उक्तोदाहरणद्वये क्रमेण लक्षणं सङ्गमयति पूर्वत्रेति । "हन्त ! सान्द्रेण" इत्यादावित्यर्थः । प्राप्तवदपि प्राप्तुमुचितमपि । न निष्पन्नमिति । तेन अतद्गुणालङ्कार इति भावः । उत्तरत्र "गाङ्गमम्बु" इत्यादौ । ननु अप्रस्तुतप्रशंसाया विद्यमानत्वे राजहंसस्य प्रकृतत्वं कुत इत्याह गङ्गायमुनापेक्षयेति । तथा च प्रकृतत्वं नाम वर्णनीयत्वम् ; तेन राजहंसस्य वास्तविकप्रकृतभिक्षुमपेक्ष्य अप्रकृतत्वेऽपि गङ्गायमुनापेक्षया अधिकावर्णनीयत्वात् प्रकृतत्वमेवेति भावः । न तद्रूपता न श्वेतरूपता न कृष्णरूपता वा । अतएवात्रापि अतद्गुणालङ्कार इत्याशयः ।

(ल) ननु उभयोरेव लक्षणयोः सर्वथैकरूपत्वादनेनातद्गुणेन सह प्रागुक्तविशेषोक्तेः को भेद इत्याह अत्र चेति । अतद्गुणे चेत्यर्थः । चकारस्त्वर्थे । गुणाग्रहणरूपो यो विच्छित्तिविशेषो वैचित्र्यातिरेकस्तस्य आश्रयादवलम्बनात् । तथा च वैचित्र्यवैलक्षण्यादाभ्यामपि वैलक्षण्यमिति भावः ।

(व) अथ तथापि "हन्त ! सान्द्रेण" इत्यादौ नायकावस्थानं प्रति कारणभूते नायिकाहृदये रक्तो गुणः तदवस्थानरूपकार्यवत्यपि तु गौरो गुण इति कार्यकारणगुणयोर्विरुद्धत्वाद्विषमालङ्कारेण सह अस्यातद्गुणा-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

११९ । संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा ।
कयापि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते ॥ (श)

सूक्ष्मः स्थूलमतिभिरसंलक्ष्यः (ष) । अत्राकारेण यथा—

"वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्तो वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ॥" (स)

अत्र कयाचित् कुङ्कुमभेदेन संलक्षितं कस्याश्चित् पुरुषायितं पाणौ पुरुषचिह्नखड्गलेखालिखनेन सूचितम् (ह) । इङ्गितेन यथा—

"सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥" (क्ष)

---

लङ्कारस्य को भेद इत्याह वर्णे ति । वर्णान्तरस्य रक्तविपरीतगुणान्तरस्य उत्पत्त्यभावात् विषमाद्भेद इत्यनुपन्यते । तथा चोक्तोदाहरणे नायकगतो गौरो गुणो नोत्पन्नः, किन्तु स्थित एव ; विषमालङ्कारलक्षणे तु कार्य्यगतविरुद्धगुणोत्पत्तिरेव विवक्षितेति भावः । वस्तुतस्तु उक्तोदाहरणद्वये विषमालङ्कारप्रसक्तिरेव नास्ति, नायकं राजहंसञ्च प्रति नायिकाहृदयस्य गङ्गायमुनयोश्च कारणत्वाभावात्, अवस्थानादिक्रियायाः कार्य्यत्वेन तत्तोऽपि कार्य्यत्वाङ्गीकारस्य अन्याय्यत्वादिति ध्येयम् ।

(श) गुणघटितानलङ्कारानभिधायेदानीं दुरूहार्थघटितानभिधातुं तत्र प्राधान्यात् प्रथमं सूक्ष्मं नामालङ्कारमभिधत्ते संलक्षित इति । तुशब्दः पूर्वप्रकरणभेदद्योतनार्थः । यत्रे ति यदर्थं कमव्ययम् । तथा च आकारेण चिह्नाद्याकृतिविशेषेण, इङ्गितेन भ्रूनेत्रादिभङ्ग्या वा संलक्षितः सम्यगवगतः, सूक्ष्मः सूक्ष्मबुद्धिवेद्यः अर्थो विषयः कयापि भङ्ग्या विदग्धव्यवहारेण, यत्र यत्, सूच्यते संलक्षयता जनेन परस्मै ज्ञाप्यते, तत् सूक्ष्मं नाम अलङ्कार उच्यते ।

(ष) संज्ञाव्युत्पत्तिमाह सूक्ष्म इति । सूक्ष्मबुद्धिवेद्यत्वादेवास्य सूक्ष्म इति संज्ञेत्याशयः । अत्र अनयोर्भेदयोर्मध्य इत्यर्थः ।

(स) वक्त्रे ति । काऽपि वयस्या, तन्व्याः कृशाङ्ग्याः अपरस्या वयस्यायाः वक्त्रान्मुखात् स्यन्दिनः अवर्षिणः ये स्वेदबिन्दुप्रबन्धा घर्म्मबिन्दुधारास्तैः, कण्ठे गलदेशे कुङ्कुमम् अङ्गरागभूतं कुङ्कुमलेपं भिन्नं विभक्तं दृष्ट्वा, सुरते उपरिस्थितत्वेन पुरुषवद्व्यवहारमनुमायेत्यर्थः, स्मित्वा मन्दहास्यं कृत्वा, पुंस्त्वं तस्या एव वयस्यायाः पुरुषत्वम्, व्यञ्जयन्ती प्रकाशयन्ती सती, पाणौ तस्या वयस्याया एव हस्ततले खड्गलेखाम् असिचित्रं लिलेख चित्रयामास ।

(ह) अत्रे ति । कयाचित् वयस्यया कुङ्कुमभेदेन तद्रूपाकारेण । पुरुषायितं पुरुषवदाचरितम् उत्तानशयस्य नायकस्योपरि तिष्ठन्त्या रमणात् पुरुषवद्व्यवहृतमित्यर्थः । तथैव मुखगलितघर्म्मबिन्दुप्रवाहेण कण्ठगतकुङ्कुमलेपभेदनसम्भवात्, उत्तानशयाया नायिकाया रमणे तु तन्मुखगलितघर्म्मप्रवाहस्य शय्यायामेव पतनसम्भवेन तदीयकण्ठकुङ्कुमलेपभेदनासम्भवादिति भावः । पुरुषचिह्नं पुरुषेणैव खड्गधारणात् पुरुषत्वपरिचायको यो खड्गस्तस्य लेखा चित्रं तस्या लिखनेन अवधारणादिभिर्मिलितेन ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र विटस्य भ्रूक्षेपादिना लक्षितः सङ्केतकालाभिप्रायो रजनीकालभाविना पद्मनिमीलनेन प्रकाशितः (क) ।

## १२० । व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः । (ख)

यथा—"शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
आः ! शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥" (ग)

नेयं प्रथमापह्नुतिः, अपह्नवकारिणो विषयस्यानभिधानात् (घ) । द्वितीयापह्नुतेर्भेदश्च तत्प्रस्तावे दर्शितः (ङ) ।

---

(च) सङ्केतेति । विवृतपूर्वमेतत् (६१ पृष्ठे) ।

(क) अत्रेति । विटस्य उपनायकस्य, भ्रूक्षेपादिना इङ्गितेनेत्यर्थः । सङ्केतकालाभिप्रायो रमणस्य कालं ज्ञातुमिच्छेत्यर्थः । पद्मस्य निमीलनेन मुद्रणेन, प्रकाशितः स्वयमवगतत्वेन विटाय द्योतितः । अथवा प्रकाशिती विटस्याभिप्रायं बुद्धा तस्मै रजनीरूपः सङ्केतकालो ज्ञापितः ।

(ख) निरुक्तासूक्ष्मलक्षणे व्याजरूपाया भङ्ग्याः प्रस्तावात् व्याजघटितं व्याजोक्तिं नामालङ्कारं लक्षयति व्याजोक्तिरिति । उद्भिन्नस्यापि कार्य्यद्वारा प्रकाशितस्यापि, वस्तुनः पदार्थस्य, व्याजात् प्रकाशयोग्यकारणाभिधानरूपच्छलात् गोपनं व्याजोक्तिर्नाम अलङ्कार उच्यत इत्यनुषङ्गः ।

अयथार्थकारणोपन्यासेन कार्य्यस्य यथार्थकारणगोपनं व्याजोक्तिरिति फलितार्थः । व्याजेन उक्तिर्यस्यामिति व्युत्पत्तिः ।

(ग) शैलेन्द्रेति । शैलेन्द्रेण गिरिराजेन हिमालयेन प्रतिपाद्यमानाया दीयमानाया गिरिजायाः पार्वत्या हस्तस्य उपगूढेन संयोगेन उल्लसन्त उत्पद्यमाना ये रोमाञ्चादयः कामोद्रेकात् रोमाञ्चकम्पप्रभृतयस्तैः विसंष्ठुलौ विशृङ्खलीभूतो यः अखिलः समस्तो विधिव्यासङ्गो विवाहकालीनमन्त्रपाठादिर्वैदिकव्यापारस्तस्य भङ्गेन भङ्गभयेन आकुलो व्यस्तः । 'आः' इति शैत्यजनितपीडासूचकम् । तुहिनाचलस्य वरणसमये संस्पर्शिनी हिमालयस्य, करयोर्हस्तयोः, शैत्यं शीतलत्वम् इति ऊचिवानुक्तवान्; तथा शैलस्य हिमाचलस्यैव अन्तःपुरे ये मातृमण्डलगणा मण्डलाकारेणावस्थिता ब्राह्मीप्रभृतिमातृगणास्तैः सस्मितं कामोद्रेकेणैव रोमाञ्चकम्पादिदर्शनात् समन्दहासं दृष्टः, शिवो महादेवः, वो युष्मान् अवतात् रक्षेत् ।

अत्र "आः ! शैत्यं तुहिनाचलस्य करयोः" इति प्रकाशयोग्यकारणाभिधानरूपच्छलं कुर्वता शिवेन "शीतलस्पर्शजनित एवायं मम रोमाञ्चकम्पादिः" इति सूचयता तादृशरोमाञ्चादिकार्य्यद्वारा प्रकाशितस्यापि कामोद्रेकरूपकारणस्य गोपनं कृतमिति व्याजोक्तिरलङ्कारः । अथवा हिमालयकरस्पर्शेनैवायं मे रोमाञ्चकम्पादि इति सूचयता शिवेन रोमाञ्चादिकार्य्यसिद्धिं प्रति शीतस्पर्शरूपायथार्थकारणोपन्यासेन कामोद्रेकरूपयथार्थकारणस्य गोपनात् व्याजोक्तिः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१२१ । स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम् ॥ (च)

दुरूहयोः कविमात्रवेद्ययोः, अर्थस्य डिम्भादेः, स्वक्रियारूपयोः (१) तदेकाश्रययोश्चेष्टारूपयोः (छ) । यथा मम—

"लाङ्गूलेनाभिहत्य क्षितितलमसकृद्दारयन्नग्रपद्भ्या-
मात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन् विक्रमेण ।
स्फूर्जद्धुङ्कारघोषः प्रतिदिशमखिलान् द्रावयन्नेष जन्तून्
कोपाविष्टः प्रविष्टः प्रतिवनमरुणोच्छूनचक्षुस्तरक्षुः ॥" (ज)

(घ) नन्वत्र प्रकृतकारणप्रतिषेधसूचनेन अप्रकृतकारणस्थापनात् "प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः" इति निरुक्तलक्षणाया अपह्नुतेरपि प्रसक्तिरित्यनयोः को भेद इत्याह नेयमिति । इयमुदाहरणस्था विवक्षिता, प्रथमा प्रकृतमित्याद्युक्तलक्षणा । अपह्नवकारिणः प्रकृतकारणगोपनकारिणः शिवस्य वायुः, विषयस्य प्रकृतकारणस्य । तथा च गोपनकारिणा अनेन प्रकृतमभिधायैव तत्प्रतिषेधपूर्वकाप्रकृतस्थापने प्रथमा अपह्नुतिः, प्रकृतमनभिधाय तत्प्रतिषेधसूचनपूर्वकाप्रकृतस्थापने तु व्याजोक्तिरित्यनयोर्भेद इति भावः । किञ्च, निरुक्तापह्नुतिलक्षणस्य "उपमेयं निषिध्य उपमानस्थापनादपह्नुतिः" इत्यर्थकतया उदाहृते तत्प्रसक्तिरेव नास्ति, कामोद्रेकशीतलस्पर्शयोरुपमेयोपमानभावाभावादित्यपि द्रष्टव्यम् ।

(ङ) अथ तथापि रोमाञ्चकम्पादिकार्यैर्यैव कामोद्रेकरूपकारणं द्योतयित्वा शीतलस्पर्शरूपकारणोपन्यासेन तदन्यथाकरणात् "गोपनीयं कमप्यर्थम्" इत्याद्युक्तलक्षणाया द्वितीयापह्नुतेः प्रसक्तेः अस्या सह अस्य को भेद इत्याह द्वितीयेति । तत्प्रस्तावे द्वितीयापह्नुतिप्रकरणे ।

(च) दुरूहार्थस्य प्रकृतत्वात् विशेषातिदिष्टेन च व्याजोक्त्यलङ्कारेण तद्बाधाया अयोगात् दुरूहार्थघटितमेव स्वभावोक्तिं नाम अलङ्कारं निरूपयति स्वभावोक्तिरिति । दुरूहयोर्विशेषेण पुनःपुनर्यत्नेन स्थूलबुद्धिभिर्वेद्ययोः, कविमात्रवेद्ययोः, अर्थस्य शिशु-पशु-पक्षिप्रभृतिपदार्थस्य स्वक्रियारूपयोः केवलतत्तद्गतस्वाभाविकचेष्टाकारयोः, वर्णनं स्वभावोक्तिर्नाम अलङ्कार उच्यत इत्यनुषज्यते ।

"गौरपत्यं बलीवर्दो घासमत्ति मुखेन सः । लाङ्गूलं विद्यते तस्य शृङ्गस्यापि च विद्यते ॥"

इत्यादौ साधारणबुद्धिवेद्यत्वेनादुरूहयोर्धर्मगतस्वाभाविकचेष्टाक्रिययोर्वर्णने अतिव्याप्तिवारणाय दुरूहेति विशेषणम् । तर्कवागीशस्तु "पश्चात् पुच्छं वहति विपुलम्" इत्यादावुत्तररामचरितपद्येऽपि स्वभावोक्तिमाह स्म । तदपि युक्तमेव ; अश्वगततादृशचेष्टारूपयोस्तत्कालोपस्थितलवादिबालकानां दुरूहत्वेन चमत्कारविधायित्वात् । "गौरपत्यम्" इत्यादौ तु उद्देश्यभूतश्रोतुरदुरूहत्वेन अचमत्कारविधायित्वमेवेति सुधीभिर्विभावनीयम् ।

स्वभावस्योक्तिर्यस्मिन्निति व्युत्पत्तिः । अथवा स्वभावोक्तिघटितत्वादेवास्य स्वभावोक्तिरिति संज्ञा ।

(छ) लक्षणार्थं विवृणोति दुरूहयोरिति । डिम्भः शिशुः, आदिशब्दात् पशु-पक्षिप्रभृतीनां ग्रहणम् । "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः । स डिम्भादिरेव एकः केवलः आश्रयो ययोस्तयोः । डिम्भादेर्या क्रिया यच्च रूपं वर्ण्यते, तत् केवलं तन्मात्रगतमेव भवेदिति भावः । चेष्टा आचरणम्, रूपमाकारस्तयोः ।

(१) स्वयोरिति पाठान्तरम्, स्वक्रिययोरित्यपि क्वचित् पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

१२२। अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः।
यत् प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम्॥ (झ)

यथा—"मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्य-कच्छपौ॥" (ञ)

यथा वा—(ट)

"आसीदञ्जनमत्रेति पश्यामि तव लोचने।
भाविभूषणसम्भारां साक्षात् कुर्वे तवाकृतिम्॥" (ठ)

---

(ज) लाङ्गूलेनेति। कोपाविष्टः क्रुद्धः, अतएव अरुणे रक्तवर्णे उत्फुल्ले स्फीते च चक्षुषी यस्य स तथोक्तः एष तरक्षुर्व्याघ्रविशेषः, लाङ्गूलेन क्षितितलं भूमिम् अभिहत्य ताड़यित्वा, अग्रपद्भ्यां चरणाग्राभ्याम्, असकृत् वारं वारं दारयन् क्षितितलमेव विलिखन्, आत्मन्येव अवलीय सङ्कुचितदेहो भूत्वेत्यर्थः, अथ अनन्तरं विक्रमेण द्रुतं गमनं प्रोत्पतन् उद्गच्छन्, स्फुर्जन् वर्द्धमानो हुङ्कारघोषो हुमितिशब्दो यस्य स तथाभूतः सन्, प्रतिदिशं सर्वासु दिक्षु, जन्तून् छागकुक्कुरादि प्राणिगणान् द्रावयन् भयजननेनापसारयन्, प्रतिवनं वने वने प्रविष्टः।

अत्र क्रुद्धस्य तरक्षोः स्वाभाविकक्रियारूपयोर्वर्णनात् तयोश्च तथाभूतयोरन्यथासम्भवेन केवलतन्मात्रनिष्ठत्वात् स्वभावोक्तिरलङ्कारः। इदं पशोः स्वभाववर्णनम्।

शिशोः स्वभाववर्णने यथा मम रुक्मिणीहरणमहाकाव्ये शिशुभूताया रुक्मिण्याः—

"यदा तु धात्री नहि सन्निधात्री, तदा सलीलं सलिलं विलाप्य।
मृदुन्यथाङ्के हृदि तद्विलय करेण दत्त्वेव लिलेप दधा॥"

(झ) प्राकरणिकदुरूहार्थघटितमेव भाविकं नाम अलङ्कारं लक्षयति अद्भुतस्येति। अद्भुतस्य आश्चर्यस्य, भूतस्य अतीतस्य, अथवा भविष्यतो भाविनः पदार्थस्य, यत् प्रत्यक्षायमाणत्वं वर्णनाकौशलेन प्रत्यक्षवत् प्रकाशमानत्वं तत् भाविकं नाम अलङ्करणमुदाहृतमुक्तम्, आलङ्कारिकैरिति शेषः। पदार्थस्य उक्तत्रिविधतया भाविकमपि त्रिविधम्।

भावेन कवेरभिप्रायविशेषेण संसृष्टमिति व्युत्पत्तिः। काव्यप्रकाशकृता तु "भावः कवेरभिप्रायोऽस्तीति भाविकम्" इत्युक्तम्। स्वार्थे अयमपि नित्यनपुंसकलिङ्गः शब्दः।

(ञ) तदाद्यमुदाहरति मुनिरिति। योगिनामिन्द्रः श्रेष्ठो महात्मा कुम्भसम्भवो मुनिरगस्त्यः, जयति सर्वेभ्य एव मुनिभ्य उत्कर्षेण वर्त्तते। येन मुनिना एकस्मिन् चुलुके प्रसृतौ दिव्यौ स्वर्गीयौ, तौ नारायणावतारत्वेन प्रसिद्धौ, मत्स्यकच्छपौ दृष्टौ समुद्रपानकाल इति शेषः।

अत्र आत्मनः प्रसृतिमात्रस्थान एव निरतिशयविशाल-भगवदवतारमत्स्यकच्छपदर्शितया अद्भुतस्य महर्षेरगस्त्यस्य जयतीति वर्त्तमानकालनिर्द्देशेन श्रीदृशां प्रत्यक्षायमाणत्वात् भाविकालङ्कारः।

(ट) एकोदाहरणेनैव भूतभविष्यतोः प्रत्यक्षायमाणत्वे द्वितीयतृतीयप्रकारौ दर्शयितुमाह यथा वेति।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न चायं प्रसादाख्यो गुणः, भूतभाविनोः प्रत्यक्षायमाणत्वं तस्याहेतुत्वात् (ड)। न चाद्भुतो रसः, विस्मयं प्रति अस्य हेतुत्वात् (ढ)। न चातिशयोक्तिरलङ्कारः, अध्यवसायाभावात् (ण)। न च भ्रान्तिमान्, भूतभाविनोर्भूतभावितयैव प्रकाशनात् (त)। न च स्वभावोक्तिः, तस्य लौकिकवस्तुगतसूक्ष्मधर्मस्वभावस्यैव यथावद्वर्णनं स्वरूपम्, अस्य तु वस्तुनः प्रत्यक्षायमाणत्वरूपो विच्छित्तिविशेषोऽस्तीति (थ)। यदि पुनर्वस्तुनः क्वचित् स्वभावोक्तावप्यस्या विच्छित्तेः सम्भवः, तदोभयोः सङ्करः (द)।

---

(ठ) आसीदिति। दशवर्षदेशीयां काञ्चित् कुमारीमवलोक्य कस्यचिदुक्तिरियम्। अत्र अनयोः अञ्जनं कज्जलमासीत् इति जानेन तव लोचने नयनद्वयं पश्यामि; पूर्वं सततमेवाञ्जनदर्शनादिदानीमपि तथैव संस्कारादिति भावः। तथा भावी भूषणसम्भारः अलङ्कारसमूहो यस्यां तां तादृशीं तव आकृतिं देहं साक्षात् कुर्वं प्रत्यक्षीकरोमि; अस्यास्तवाकृतेरत्यन्तसुन्दरतया धनिगृहे परिणयावश्यम्भावसम्भावनया तथैवानुमानोदयादित्याशयः।

अत्र पूर्वार्द्धे भूतस्याप्यञ्जनस्य पश्यामीति वर्त्तमाननिर्द्देशेन प्रत्यक्षायमाणतया भाविकम्। परार्द्धे च भाविनोऽपि भूषणसम्भारस्य साक्षात् कुर्वे इति वर्त्तमाननिर्द्देशेन प्रत्यक्षायमाणतया भाविकम्।

(ड) ननु भूतभाविनोः प्रत्यक्षायमाणत्वं प्रति उक्तरूपसुखबोध्यशब्दप्रयोग एव प्रयोजक इति प्रसादगुण एवायमङ्गीक्रियताम्, किमतिरिक्तभाविकाख्यालङ्काराङ्गीकारगौरवेणेत्याह न चेति। अयमनुभूयमानो वैचित्र्यविशेषः प्रसादाख्यो गुण इति वाच्यं न चेत्यर्थः। एवमुत्तरत्रापि बोध्यम्। तस्य प्रसादगुणस्य। रसादिपुष्टिं प्रत्येव तस्य हेतुत्वादित्याशयः।

(ढ) तर्हि अद्भुतस्य प्रत्यक्षायमाणत्वस्थले अद्भुतरस एवास्त्वित्याह न चेति। अस्य अद्भुतरसस्य, विस्मयं प्रति हेतुत्वात् श्रोतॄणां विस्मयजनकत्वात्; "मुनिर्जयति" इत्यादौ तु तदभावादिति भावः।

(ण) अथ तदा अप्रत्यक्षस्यापि अद्भुतस्य प्रत्यक्षायमाणत्वे भूतभाविनोः प्रत्यक्षायमाणत्वे च सम्भवातिक्रमेणायथार्थतामतीतेरतिशयोक्त्यलङ्कार एवायं भवत्वित्याह न चेति। अध्यवसायस्य अभेदप्रतिपत्तेरभावात्; अतिशयोक्तेश्च तद्रूपत्वादित्याशयः।

(त) ननु तर्हि अप्रत्यक्षस्यापि प्रत्यक्षवत् प्रतीतिर्भ्रान्तिरेवेति भ्रान्तिमानलङ्कार एवायमस्तु इत्याह न चेति। भूतेति। एवञ्च सति "अतस्मिंस्तद्बुद्धिर्भ्रान्तिः" इत्युक्तलक्षणाया भ्रान्तेरेवाभावात् प्रत्यक्षायमाणत्वमित्युक्त्या वास्तविकप्रत्यक्षाभावस्य सूचितत्वाच्चेति भावः।

(थ) अथ तथापि अगस्त्यस्य कुमार्य्याश्च दुष्टयोः क्रियारूपयोर्वर्णनात् स्वभावोक्तिरेव भवत्वित्याह न चेति। तस्य स्वभावोक्त्यलङ्कारस्य, लौकिकवस्तुगतः सूक्ष्मः सूक्ष्मबुद्धिमात्रवेद्यो यो धर्मरूपः स्वभावस्तस्यैव, न तु प्रत्यक्षायमाणत्वस्य इति एवशब्दस्यार्थः। स्वरूपमवस्था। अस्य तु भाविकालङ्कारस्य तु, वस्तुनः अद्भुतस्य, भूतस्य भविष्यतो वा पदार्थस्य। विच्छित्तिविशेषः स्वभावोक्तिवैचित्र्यापेक्षया भिन्नरूपवैचित्र्यम्, इति हेतौ च स्वभावोक्तिरित्यर्थः। एतेन लौकिक[illegible] नामभेद इति सूचितम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"अनातपत्रोऽप्ययमत्र लक्ष्यते सितातपत्रैरिव सर्वतो वृतः ।
अचामरोऽप्येष सदैव वीज्यते विलासबालव्यजनेन कोऽप्ययम् ॥" (ध)

अत्र प्रत्यक्षायमाणस्यैव वर्णनान्नायमलङ्कारः, वर्णनावशेन प्रत्यक्षायमाणत्वस्यैवास्य स्वरूपत्वात् (१) (न) । यत् पुनः प्रत्यक्षायमाणस्यापि वर्णने प्रत्यक्षायमाणत्वं तत्रायमलङ्कारो भवितुं युक्तः । यथोदाहृते "आसीदञ्जनम्" इत्यादौ (प) ।

१२३ । लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते ।
यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत् ॥ (फ)

---

(द) नन्वेकत्र स्वभावोक्तिघटकविच्छित्तेर्भाविकघटकविच्छित्तेश्च सम्भवे कतरोऽङ्गीकर्त्तव्य इत्याह यदि पुनरिति । अस्या भाविकालङ्कारघटिकायाः । उभयोः स्वभावोक्तिभाविकयोः । तथा च "ग्रीवाभङ्गाभिरामम्" इत्यादौ शाकुन्तलश्लोके हरिणस्य तदानीन्तनगतस्वभावगतक्रियारूपयोर्वर्णनात् स्वभावोक्तिः, तथाभूततया अद्भुतरूपस्य तस्य हरिणस्य प्रत्यक्षायमाणत्वाच्च भाविकमित्यनयोरङ्गाङ्गिभावेन सङ्करः ।

(ध) प्रत्यक्षायमाणत्वं भिन्नमुदाहरति अनातपत्र इति । कस्यचित् राज्ञो वर्णनमिदम् । अयं राजा, अनातपत्रोऽपि छत्रविहीनोऽपि, सर्वतः समन्तात् सितातपत्रैः श्वेतछत्रैर्वृत आवृत इव लक्ष्यते । तथा अचामरोऽपि बालव्यजनरहितोऽपि, सदैव बालव्यजनेन श्वेतचामरेण वीज्यत इव ; उभयत्रैव यशोराशिप्रसारादिति भावः ; अत एवायं कोऽपि अनिर्वचनीयः पुरुष इत्यर्थः ।

(न) अत्रेति । प्रत्यक्षायमाणस्यैव सितातपत्रकर्त्तृकावरणस्य विलासबालव्यजनकर्तृकव्यजनस्य च उत्प्रेक्षिततया सम्भावनावशेनैव प्रत्यक्षवदाचरत इत्यर्थः । अयं भाविकनामा । अस्य भाविकस्य । तथा च यत्र उत्प्रेक्षेतरकविरचनाकौशलेन अद्भुतादेः प्रत्यक्षायमाणत्वम्, तत्रैव भाविकम्, न पुनरुत्प्रेक्षात्मकसम्भावनास्थलेऽपि ; तस्याः सर्वत्रैव सम्भवेन सर्वत्रैव भाविकप्रसङ्गात् । तेन "अनातपत्रः" इत्यादौ उत्प्रेक्षात्मकसम्भावनया आतपत्रकर्त्तृकावरणादेः प्रत्यक्षायमाणत्वान्न भाविकप्रसङ्ग इत्याशयः ।

(प) अथ तर्हि "आसीदञ्जनमत्रेति" इत्यादावपि प्रत्यक्षायमाणस्यैव अञ्जनसत्तादेर्वर्णनात् कथं भाविकमित्याह यत् पुनरिति । अयं भाविकनामा । तथा च वयं प्रत्यक्षायमाणस्य वर्णनास्थल एव भाविकमिति न ब्रूमः, अपि तु यत्र उत्प्रेक्षेतरवर्णनावशेन प्रत्यक्षायमाणत्वं तत्रैव भाविकमिति ब्रूमः । तेन "अनातपत्रः" इत्यादौ उत्प्रेक्षावशेनैव प्रत्यक्षायमाणस्य वर्णनान्न भाविकम् ; "आसीदञ्जनम्" इत्यादौ तु प्रत्यक्षायमाणस्यापि उत्प्रेक्षेतरवर्णनावशेन पुनः प्रत्यक्षायमाणत्वमिति भाविकं भवत्येवेति सर्वं समञ्जसमिति भावः ।

(फ) ननु सर्वथा यथावद्वस्तुवर्णने स्वभावोक्तिः यथाकथञ्चिदयथावद्वस्तुवर्णने च भाविकम्, किन्तु अयथावद्वस्तुवर्णने कश्चिदलङ्कारो भवति न वेत्याकाङ्क्षायां प्रथमप्रकारमुदात्तं निरूपयन् सर्वमेव तन्निरूपयति लोकेति । लोकानतिशेते अतिक्रामतीति लोकातिशया लोके असम्भवेत्यर्थः या सम्पत्तिर्धनरत्नादिसमृद्धिस्तस्या

---

(१) प्रत्यक्षायमाणत्वस्यास्य, प्रत्यक्षायमाणत्वस्यैव स्वरूपत्वादिति पाठभेदौ ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्रमेणोदाहरणम्—

"अधःकृताम्भोधरमण्डलानां यस्यां शशाङ्कोपलकुट्टिमानाम् ।
ज्योत्स्नानिपातात् क्षरतां पयोभिः केलीवनं वृद्धिमुरीकरोति ॥" (व)

"नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा ।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते ॥" (भ)

१२४ । रसभावौ तदाभासौ भावस्य प्रशमस्तथा ।
गुणीभूतत्वमायान्ति यदालङ्कृतयस्तदा ॥
रसवत् प्रेय ऊर्जस्वि समाहितमिति क्रमात् । (म)

तदाभासो रसाभासो भावाभासश्च ।

---

वर्णना उदात्तं नाम अलङ्कार उच्यते । वा अथवा यद्यपि महतां चरितं चरितवर्णनम्, प्रस्तुतस्य प्रस्तुतवर्णनस्य अङ्गं सम्पादकं भवेत्, तदपि उदात्तमुच्यते इति पूर्वेणान्वयः । अतएवेदं द्विविधमिति बोध्यम् ।

अतिशयोक्तिरध्यवसायमूला इदन्तु न तथेति भेदः । महतामिति बहुवचनमविवक्षितम् ।

उदात्तमुक्तम् । तथा च उदात्तसम्पत्तिवर्णनास्वरूपत्वात् उदात्तचरितवर्णनास्वरूपत्वाच्च अस्य उदात्तमिति संज्ञा । अस्मिन्नर्थे अयमुदात्तशब्दोऽपि नित्यनपुंसकलिङ्गः ।

(व) तत्राद्यमुदाहरति अध इति । कस्याश्चित् पुरो वर्णनमिदम् । यस्यां पुरि केलीवनं तादृश्यभवनसन्निहितं विलासकाननं कर्तृ, अधःकृतं नीचै स्थापितम् अम्भोधरमण्डलं मेघसमूहो यैस्तादृशानाम्, ज्योत्स्नायाश्चन्द्रकिरणावल्याः निपातात् पतनात् क्षरतां जलं निःसारयताम्, शशाङ्कोपलकुट्टिमानां चन्द्रकान्तमणिनिर्मितोपरितनभूमीनां पयोभिः प्रस्रुतजलैः वृद्धिं पुष्टिम्, उरीकरोति अङ्गीकरोति आप्नोतीत्यर्थः । चन्द्रकिरणसम्पर्के चन्द्रकान्तमणितो जलं स्रवतीति प्रसिद्धिः । जलेन वनवृद्धिस्तु प्रत्यक्षा ।

लोके एकोऽपि चन्द्रकान्तमणिः सुदुर्लभ एव, किन्तु तत्र पुरि तैरेव चन्द्रकान्तमणिभिर्गृहस्य उपरितनभूमय एव बद्धा इति लोकातिशयसम्पत्तिवर्णनादत्र उदात्तालङ्कारः ।

(भ) द्वितीयप्रकारं दर्शयति नाभीति । समुद्रवर्णनात्मकं रघुवंशत्रयोदशसर्गस्थमिदं पद्यम् । नाभितः प्रभिन्नमुत्पन्नम् अम्बुरुहं पद्ममेव आसनं यस्य तेन तादृशेन, प्रथमेन आद्येन धात्रा सृष्टिकर्त्रा ब्रह्मणा संस्तूयमानः, युगान्ते प्रलयकाले उचिता अभ्यस्ता योगनिद्रा यस्य सः, पुरुषो नारायणः, लोकान् संहृत्य आत्मनि उपसंहृत्य, अमुं समुद्रम्. अधिशेते आश्रित्य स्वपिति ।

अत्र नारायणस्य चरितवर्णनं प्रस्तुतसमुद्रवर्णनस्याङ्गमिति उदात्तालङ्कारः ।

(म) एतावता ग्रन्थेन शब्दघटितानर्थघटितांश्चालङ्कारान् निरूप्य इदानीं रसादिघटितानपि निरूपयितुं तत्र प्रधानतया रसवदाद्यलङ्कारचतुष्टयं निरूपयति रसेति । तत्र रसादयः सर्वं एव तृतीयपरिच्छेदे निरूपिता द्रष्टव्याः । रसो भावश्चेति तौ तयो रसभावयोराभासौ तदाभासौ, तथा भावस्य प्रशमः शान्तिश्च एते यदा गुणीभूतत्वम् अपररसाद्यपेक्षया [illegible] आयान्ति प्राप्नुवन्ति ; तदा रसवत्,

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र रसयोगाद्रसवदलङ्कारो यथा—"अयं स रसनोत्कर्षी" इत्यादि (२५६ पृष्ठे)। अत्र शृङ्गारः करुणस्याङ्गम् (य)। एवमन्यत्रापि (र)।

प्रकृष्टप्रियत्वात् प्रेयः (ल)। यथा मम—

"आमीलितालसविवर्त्तिततारकाक्षीं
मत्कण्ठबन्धनदरश्लथबाहुवल्लीम्।
प्रस्वेदवारिकणिकाचितगण्डबिम्बां
संस्मृत्य तामनिशमेति न शान्तिमन्तः॥" (व)

अत्र सम्भोगशृङ्गारः स्मरणाख्यभावस्याङ्गम्, स च विप्रलम्भस्य (श)।

---

प्रेयः ऊर्जस्वि, समाहितञ्च इति नामभिस्त्रयः, अलङ्कृतयः क्रमाद्भवन्तीत्यर्थः। अत्र आभासत्वेन रूपेण रसाभासभावाभासयोरुभयोरप्येकत्वेनैव ग्रहणं प्राचीनमतानुसारादित्यवधेयम्। तथा च यदा एको रसः अपरस्य रसस्य भावादेर्वा अङ्गं भवति, तदा प्रेयो रसवन्नामालङ्कारः; यदा एको भावः अपरस्य भावस्य रसादेर्वा अङ्गं भवति, तदा प्रेयो नामालङ्कारः, यदा रसाभासो भावाभासो वा रसस्य भावादेर्वा अङ्गं भवति, तदा ऊर्जस्वि नामालङ्कारः; यदा च भावस्य प्रशमो रसस्य भावादेर्वा अङ्गं भवति, तदा समाहितं नाम अलङ्कारः स्यादिति सरलार्थः।

अत्र एष्वर्थेषु रसवदादयः शब्दा नित्यनपुंसका एव। अतएव अलङ्कृतय इति स्त्रीविशेषणत्वेऽपि तेषां नपुंसकनिर्देशः, अपत्यं कन्या इत्यादिवत्। एषां व्युत्पत्तयस्तु वृत्तावेव दर्शिताः।

(य) रसवदादिशब्दानां व्युत्पत्तिप्रदर्शनपूर्वकं तेषामुदाहरणानि क्रमेण दर्शयितुमाह तत्रेति। तथा च रसोक्तेषु चतुर्षु अलङ्कारेषु मध्ये इत्यर्थः। रसयोगादिति रसवच्छब्दस्य व्युत्पत्तिप्रदर्शनम्। रसोऽस्यास्तीति रसवत् प्रशस्तार्थे मत्वर्थीयो वतुप्रत्ययः। रसस्य प्राशस्त्यञ्च रसान्तरेण पुष्टीकरणादिति बोध्यम्; अयमित्यादिविवरणं शृङ्गारस्य करुणाङ्गत्वञ्च चतुर्थपरिच्छेदे (२५६ पृष्ठे) अस्माभिः स्पष्टमेव दर्शितम्।

(र) एवमिति। अन्यत्रापि अन्यरसस्य अन्यरसाङ्गत्वे भावाङ्गत्वेऽपि च एवमुदाहरणमूह्यमित्यर्थः। तथा च "क्षिप्तो हस्तावलग्नः—" इत्यादौ (५२७ पृष्ठे) करुणः शृङ्गारस्याङ्गम्। "एकं ध्याननिमीलनान्मुकुलितप्रायम्" इत्यादौ (५२६ पृष्ठे) शान्तशृङ्गाररौद्ररसाः शिवविषयकरतिभावस्याङ्गानि।

(ल) 'भावस्य इतराङ्गत्वे प्रेय उदाहर्त्तुं प्रेयःशब्दस्य व्युत्पत्तिमाह प्रकृष्टेति।

(व) आमीलितेति। सख्युः समीपे विरहिण उक्तिरियम्। आमीलिते किञ्चित् सङ्कुचिते अलसं मन्थरं यथा स्यात्तथा विवर्त्तिते सञ्चालिते च तारके कनीनिकाद्वयं ययोस्ते तादृशे अक्षिणी नयनयुगलं यस्यास्ताम्; मम कण्ठबन्धने कण्ठालिङ्गने दरश्लथा अल्पशिथिलीभूता बाहुवल्ली भुजलता यस्यास्ताम्; उभयत्रापि रतिश्रमेण निद्रावेशादिति भावः; तथा प्रस्वेदवारिकणिकाभिः सुरतपरिश्रमेण समुत्पन्नघर्मजलबिन्दुभिः चितौ व्याप्तौ गण्डबिम्बौ कपोलद्वयं यस्यास्ताम्; तां प्रियतमां संस्मृत्य विद्यमानस्य मम अन्तः अन्तःकरणं कर्तृ, शान्तिं न एति न प्राप्नोति।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ऊर्जो बलम्, अनौचित्यप्रवृत्तौ तदत्रास्तीत्यूर्जस्वि (घ)। यथा—

"वनेऽखिलकलासक्ताः परिहृत्य निजस्त्रियः।
त्वद्वैरिवनिताबृन्दे पुलिन्दाः कुर्वते रतिम् ॥" (ङ)

अत्र शृङ्गाराभासो राजविषयरतिभावस्याङ्गम् (च)। एवं भावाभासोऽपि (छ)।

समाहितं परिहारः (क)। यथा—

"अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥" (ख)

अत्र मदाख्यभावस्य प्रशमो राजविषयरतिभावस्याङ्गम् (ग)।

---

(अ) अत्रेति। स च अरणाख्यभावस्य; विप्रलम्भस्य प्रवासात्मकविप्रलम्भशृङ्गारस्य अङ्गमिति सम्बन्धः। एवञ्च भावस्य रसाङ्गतया प्रेयोऽलङ्कार इत्याशयः। किञ्च सम्भोगशृङ्गारस्य अरणाख्यभावाङ्गतया रसवदलङ्कारोऽपि। तेनानयोरङ्गाङ्गिभावेन सङ्कर इत्यवधेयम्। शुद्धोदाहरणन्तु "अरविन्दमिदं वीक्ष्य" इत्यादि (६१९ पृष्ठे)। अत्र अरणाख्यभावो विप्रलम्भशृङ्गारस्याङ्गमिति प्रेयोऽलङ्कारः।

(घ) रसभावयोराभासस्य इतराङ्गत्वे ऊर्जस्वि उदाहर्तुम् ऊर्जस्विशब्दस्य व्युत्पत्तिमाह ऊर्ज इति। अनौचित्यप्रवृत्तौ रसभावयोरिति शेषः। एतेन तयोराभासत्वं दर्शितम्, "अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः" इत्युक्तलक्षणात्। तदत्रास्तीति तु अर्थमात्रप्रदर्शनपरम्, सप्तम्यन्तशब्दात् मत्वर्थीयप्रत्ययस्यानुशासनाभावात्। वाक्यन्तु ऊर्जः अस्यास्तीति। चमत्कारविधायित्वे ऊर्जस्वि बलवदिति तदर्थः।

(ङ) वन इति। कस्यचित् राज्ञः स्तुतिरियम्। हे राजन्! वने पुलिन्दा म्लेच्छविशेषाः अखिलासु कलासु नृत्यगीतादिषु आसक्ता आसक्ततया तासु दक्षा अपि निजस्त्रियः परिहृत्य विहाय, त्वद्वैरिवनिताबृन्दे तव शत्रुस्त्रीसमूहे रतिं सुरतव्यापारं कुर्वते।

(च) अत्रेति। शृङ्गाराभासः परस्त्रीविषयकत्वादिति भावः।

(छ) एवमिति। ऊर्जस्विविषये भावाभासोऽपि एवमूहनीय इत्यर्थः; तत्र यथा मम—

"अनन्तभङ्गी परिभूषिताङ्गी मञ्जीरमञ्जुस्वनशालिनीयम्।
वेश्याङ्गना कापि विलोक्य लोकं नतानना राजति राजमार्गे ॥"

अत्र "भावाभासो लज्जादिके तु वेश्यादिविषये स्यात्" इति प्रागुक्तलक्षणात् लज्जाया वेश्यागतत्वया भावाभासः; स च शृङ्गारस्याङ्गमिति ऊर्जस्वि।

(क) भावप्रशमस्य इतराङ्गत्वे समाहितमुदाहर्तुं समाहितशब्दस्य व्युत्पत्तिं दर्शयति समेति। परिहार उपसंहारः समापनमिति यावत्।

(ख) अविरलेति। इयमपि राजस्तुतिः। हे राजन्! तव वैरिणां शत्रूणाम्, अविरलैर्निरन्तरैः करवालानामसीनां कम्पनैः, भ्रूभङ्गीभिः तर्जनैस्तव पक्षमुद्दिश्य भर्त्सनैः गर्जनैर्वीरनादैश्च मदो मत्तता मुहुर्वारं वारं ददृशे लोकैर्दृष्टः; किन्तु तव ईक्षणे दर्शने सत्येव स मदः, क्षणादेव क्वापि गतो विलुप्त इत्यर्थः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**१२५ । भावस्य चोदये सन्धौ मिश्रत्वे च तदाख्यकाः ॥ (घ)**

तदाख्यकाः—भावोदय-भावसन्धि-भावशवलनामानोऽलङ्काराः । क्रमेणोदाहरणम्—

"मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः ।
श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम् ॥" (ङ)

अत्र त्रासोदयः (१) राजविषयरतिभावस्याङ्गम् (च) ।

"जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका ।
सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ॥" (छ)

अत्रौत्सुक्यलज्जयोश्च सन्धिर्देवताविषयरतिभावस्याङ्गम् (ज) ।

---

(ग) मदेति । मदाख्यभावस्य "सम्मोहानन्दसम्भेदो मदो मद्योपयोगजः" इति प्रागुक्तलक्षणस्य, प्रशमो निवृत्तिः । अङ्गमिति । अतएव समाहितमलङ्कार इति भावः ।

(घ) रसभावादिघटितालङ्कारनिरूपणप्रस्तावादेव भावघटितान् भावोदयादीन् त्रीनलङ्कारान् निरूपयति भावस्य चेति । प्रथमचकारेण "गुणीभूतत्वमायान्ति" इति पूर्वमादनुकृष्यते ; तच्चात्र आयातीति समस्यैकवचनान्ततया विपरिणम्यते योग्यत्वात् । द्वितीयचकारस्तु अवत्यानामुदयादीनां समुच्चये । तथा च भावस्य "सञ्चारिणः प्रधानानि" इत्यादिप्रागुक्तलक्षणस्य कस्यचित्, उदये आविर्भावे गुणीभूतत्वमायाति सति (भावोदयनामा) ; सन्धौ कयोश्चिदुक्तलक्षणकयोर्भावयोः संयोगे गुणीभूतत्वमायाति सति (भावसन्धिनामा) ; तथा केषाञ्चिदुक्तलक्षणकानां भावानां मिश्रत्वे सम्मिलितत्वे च गुणीभूतत्वमायाति सति (भावशवलनामा) ; तदाख्यकास्तत्तन्नामानः भावोदयादिनामान इत्यर्थः अलङ्काराः स्युः ।

अत्र द्वयोर्योगे सन्धिशब्दस्य बहूनां योगे च मिश्रताशवलताशब्दयोरालङ्कारिकनिरूढत्वमवधेयम् । एषां व्युत्पत्तिस्तु स्पष्टा ।

(ङ) भावोदयमुदाहरति मधुपानेति । राजस्तुतिरियम् । हे राजन् ! सुहृद्भिः स्वकीयबन्धुभिः सह मधुपाने मद्यपाने प्रवृत्ताः, ते तव वैरिणः शत्रवः, कुतोऽपि जनात् तन्नाम श्रुत्वा, विषमां दशां भयविह्वलतावस्थां लेभिरे प्रापवन्तः ।

(च) अत्रेति । त्रासस्य तदाख्यव्यभिचारिभावस्य उदयो वैरिहृदये आविर्भावः । अङ्गं सम्पादकः । अतएव भावोदयनामालङ्कार इत्याशयः ।

(छ) भावसन्धेरुदाहरणमाह जन्मेति । जन्मान्तरीणः पूर्वजन्मवर्ती यो रमणः पतिस्तस्य शिवस्येत्यर्थः, अङ्गसङ्गे सर्वाङ्गीणस्पर्शे आलिङ्गने समुत्सुका, अथ च सख्या अन्तिके इति हेतोः सलज्जा पार्वती नः अस्मान् पातु रक्षतु ।

(ज) अत्रेति । सन्धिरित्यस्य पार्वत्यां सम्बन्धः । अतएव भावसन्धिरलङ्कारः ।

---

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(१) त्रासादय इत्यसङ्गतः पाठः पुस्तकान्तरेषु दृश्यते ।

"पश्येत् कश्चिच्चल चपल रे ! का त्वराहं कुमारी
हस्तालम्बं वितर हहहा ! व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ़ ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित् फलकिसलयान्याददानाभिधत्ते ॥" (ञ)

अत्र शङ्काऽसूया-धृति-स्मृति-श्रम-दैन्य-विबोधौत्सुक्यानां शबलता राजविषयरतिभावस्याङ्गम् (ज) ।

इह केचिदाहुः—"वाच्यवाचकरूपालङ्करणमुखेन रसाद्युपकारका एवालङ्काराः । रसादयस्तु वाच्यवाचकाभ्यामुपकार्य्या एवेति न तेषामलङ्कारता भवितुं युक्ता" इति (ट) । अन्ये तु "रसाद्युपकारमात्रेणेह अलङ्कृतिव्यपदेशो

---

(ञ) भावशबले उदाहरणं दर्शयति पश्येदिति । पराजयेन वनवासीभूतस्य विपक्षनृपतेः कन्यया सह कस्यचिद्विशेषपरिचितवनेचरयुवकस्य उक्तिप्रत्युक्ती प्रदर्श्य कश्चिदात्मीयं राजानमनेन स्तौति । कश्चित्तृतीयो जनः पश्येत् आवयोरेतन्निर्जनस्थानादवस्थानमवलोकयेत्, दृष्ट्वा चावयोर्दुष्प्रवृत्तिं सम्भावयेदिति भावः । इयं कन्याया उक्तिः । अत्र कन्यायाः शङ्का । अतएव रे चपल ! चञ्चलस्वभाववनेचरयुवक ! चल मया सह पितुरावासमागच्छ । इयमपि कन्याया उक्तिः । अत्र निकृष्टसम्बोधनेन कन्याया औद्धत्यात् तां प्रति वनेचरस्यासूया । का त्वरा इतो गमने का तव सत्वरता । अस्मिन् दुर्गमस्थाने सहसा तृतीयः कोऽपि न खल्वागच्छेदिति भावः । इयं वनेचरस्य प्रत्युक्तिः । अत्र वनेचरस्य धृतिः । अहं कुमारी राजकन्या ; अतो लोकः स्वल्पमपि सङ्केतः चेत्तदा महादोष एव भवेत्, विशेषतश्चाहं फलपल्लवाहरणाय प्रस्तरारोहणेन परिश्रान्तास्मीति भावः । इय कन्याया उक्तिः । अत्र कन्यायाः "अहं कुमारी" इति स्मृतिः । हस्तालम्बं वितर परिश्रान्तासि चेत् मम गात्रे हस्तभरं देहि । इति वनेचरस्योक्तिः । अत्र राजकन्यायाः श्रमः । हहहा इति कन्याया दैन्यसूचिकोक्तिः । अहमुच्चजातीया राजकन्या सती कथमद्यैवं व्यवहरामीति भावः । अत्र राजकन्याया दैन्यम् । व्युत्क्रमः राजकन्यया त्वया वनेचरस्य समावलम्बनं निरुद्धः क्रम एव । इति वनेचरस्योक्तिस्तस्य विबोधश्च । इत्युक्त्वा वनेचरे प्रच्छन्नीभूय प्रस्थिते कन्या आह—क्वासि वनेचर ! क्व वर्त्तसे त्वं किं यासि । अत्र कन्याया औत्सुक्यम् । हे पृथ्वीपरिवृढ़ ! धराधिप ! अरण्यवृत्तेर्वनवासिनः, भवद्विद्विषस्तव शत्रुनृपतेः कन्याः, फलकिसलयानि आददाना भोजनभूषणार्थमाहरन्ती सती, कञ्चिद्वनेचरयुवकम्, इत्थमुक्तप्रकारम्, अभिधत्ते परस्परं ब्रवीतीत्यर्थः ।

(ज) अत्रेति । शङ्काऽसूयादयः । स्वस्वस्थान एव व्याख्याया दर्शिताः । शबलता मिश्रता । अङ्गं गुण्यादिका । अतोऽत्र भावशबलनामालङ्कार इत्याशयः ।

(ट) ये किल रसवदादीनामलङ्कारत्वं नाङ्गीकुर्वन्ति ; इदानीं तन्मतनिराकरणेन, तेषामलङ्कारत्वं व्यवस्थापयितुं दूषणाय तन्मतानि क्रमादाह इहेति । अलङ्क्रियते अनेनेति अलङ्करणम् । तथा च वाच्यः अर्थः वाचकः शब्दः तदुभयरूपं यदलङ्करणमलङ्कारहेतुस्तन्मुखेन तद्द्वारा रसादीनामुपकारकाः पुष्टिजनका

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भाक्ताः चिरन्तनप्रसिद्ध्या अङ्गीकार्य्या एव" इति (ठ)। अपरे च "रसाद्युपकारमात्रेणालङ्कारत्वं मुख्यतः, रूपकादौ तु वाच्याद्युपधानम् अजागलस्तनन्यायेन" इति (ड)। अभियुक्तास्तु "स्वव्यञ्जकवाच्यवाचकाद्युपकृतैरङ्गभूतै रसादिभिरङ्गिनो रसादेर्वाच्यवाचकोपस्कारद्वारेणोपकुर्वद्भिरलङ्कृतिव्यपदेशो लभ्यते (ढ)। समासोक्तौ तु नायिकादिव्यवहारमात्रस्यैवालङ्कृतिता ; न त्वासादस्य, तस्योक्तरीतिविरहात्" इति मन्यन्ते (ण)। अतएव ध्वनिकारेणोक्तम्—(त)

---

शब्दार्थमात्रवृत्तिर्वैचित्र्यरूपा धर्म्मा इत्यर्थः। तेषां रसादीनाम्। अतएव रसवदादयो नालङ्कारा इति तेषामाशयः। अत्र द्वाभ्यामेवादिशब्दाभ्यां भाव-रसाभास-भावाभास-सन्धि-शबलतानां ग्रहणम्। एवमुत्तरवाक्येऽपि।

(ठ) अन्ये त्विति। रसादीनामङ्गिभूतानामित्यर्थः, उपकारमात्रेण यथाकथञ्चित् सामान्यत एव पुष्टिमात्रेण, इह रसवदादौ, अलङ्कृतिव्यपदेशः अलङ्कारतया निर्द्देशः, भाक्तो गौणः, चिरन्तनप्रसिद्ध्या प्राचीनपरम्परया अलङ्कारतया प्रसिद्धिलाभेन। तथा च अङ्गभूतै रसादिभिरङ्गिभूतानां रसादीनां यथाकथञ्चित् पुष्टिकरणात् प्राचीनपरम्परया अलङ्कारतया प्रसिद्धत्वाच्च रसवदादीनां गौणालङ्कारत्वमङ्गीक्रियत एव, किन्तु शब्दार्थान्यतरघटितवैचित्र्यविशेषस्यैव वास्तविकालङ्कारत्वेन न पुनर्मुख्यालङ्कारत्वमित्यन्येषामभिप्रायः।

(ड) अपरे चेति। मुख्यतः प्रधानतः। रूपकादावित्यादिशब्देन सन्देहादीनां ग्रहणम्। वाच्यादेर्वाच्यवाचकयोः अर्थशब्दयोः, उपधानं शोभासम्पादनम्, अजा छागी तस्या गलस्तनन्यायेन तद्वत्। तथा च यः पदार्थो रसादीनुपकरोति स एव मुख्योऽलङ्कारः एवञ्च रूपकसन्देहादौ यत्, रसाद्युपकारातिरिक्तं शब्दार्थयोरपि शोभासम्पादनम्, तत् स्वभावागतम् अजाया गलदेशवर्त्तौ दुग्धहीनः स्तन इव निरर्थकमिति भावः। एतन्मतेऽपि रसवदादीनां गौणालङ्कारत्वमिति बोध्यम्, मुख्यत इत्यभिधानात्।

(ढ) स्वमतसमर्थकं मतमाह अभीति। अभियुक्तास्तु युक्तियुक्ताभिधानेन सर्वमानितास्तु आहुरिति पूर्वेणान्वयः। स्वव्यञ्जका अङ्गभूतरसादिव्यञ्जका ये वाच्यवाचका आदिशब्दात् लक्ष्यलक्षकाश्च अर्थशब्दास्तैरुपकृताः पुष्टीकृतास्तैः। वाच्यवाचकयोरर्थशब्दयोः उपस्कारद्वारेण अध्याहारद्वारेण "अयं स रशनोत्कर्षी" इत्यादौ केवलशृङ्गारव्यञ्जकशब्दार्थवति पद्ये करुणव्यञ्जकशब्दार्थाध्याहारेणेत्यर्थः, उपकुर्वद्भिः अङ्गिनो रसादेरिति सम्बन्धः, अलङ्कृतिव्यपदेशः अलङ्कार इति नाम, लभ्यते, तेषामङ्गभूतरसादीनामपि शब्दार्थवत् रसाद्युपकारकत्वाविशेषादिति भावः।

(ण) नन्वत्र अङ्गीभूतानां रसादीनामुपकारकत्वादङ्गभूतानां रसादीनामलङ्कारत्वमस्तु, यत्र एक एव रसादिस्तत्र उपकार्य्योपकारकभावासम्भवात् कथं तस्यालङ्कारत्वमित्याह समासोक्तौ त्विति। अत्र समासोक्तिवदेकमात्ररसाद्युपकारकालङ्कारमात्रोपलक्षणम्। आस्वादस्य रसादेः तस्य आस्वादापरपर्य्यायस्य रसादेः, उक्तरीतिविरहात् आस्वादान्तराविद्यमानत्वेन तदुपकारकत्वाभावात्। एतेनैतन्मते अङ्गिभूतानां रसादीनामुपकारकत्वादङ्गभूतानां रसादीनामलङ्कारत्वमस्त्वेवेति रसवदादीनां स्वसम्मतमलङ्कारत्वं सिद्धमेवेति दर्शितम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥" (थ)

यदि च रसाद्युपकारमात्रेणालङ्कृतित्वम्, तदा वाचकादिष्वपि तथा प्रसज्येत (द)। एवञ्च यच्च केश्चिदुक्तम्—"रसादीनामङ्गित्वे रसवदाद्यलङ्कारः, अङ्गत्वे तु द्वितीयोदात्तालङ्कारः" तदपि परास्तम् (ध)।

१२६। यद्येत एवालङ्काराः परस्परविमिश्रिताः ।
तदा पृथगलङ्कारौ संसृष्टिः सङ्करस्तथा ॥ (न)

---

(त) अत एवेति। अङ्गिभूतानां रसादीनामुपकारकत्वेनैव अङ्गभूतानां रसादीनामलङ्कारव्यपदेशस्य युक्तियुक्तत्वादेवेत्यर्थः।

(थ) प्रधान इति। यत्र काव्ये अन्यत्र अन्यस्मिन् रसादौ वाक्यार्थे वा प्रधाने सति अन्ये रसादयस्तु अङ्गं तयोरुपकारका भवन्तीत्यर्थः, तस्मिन् काव्ये रसादिरङ्गभूत इत्याशयः, अलङ्कारो भवेत्, इति मे मम मतिः सम्मतिः।

एतेन ध्वनिकारमतेऽपि रसवदादीनामलङ्कारत्वमस्तीति दर्शितम्।

(द) केचिदित्यादिमतत्रयमेव दूषयितुमाह यदि चेति। किञ्चेति चार्थः। रसादीनामुपकारमात्रेण केवलेनैवोपकारकत्वेन, न पुनः शोभातिशायित्वेनापीति मात्रशब्दस्यार्थः, यदि अलङ्कृतित्वमलङ्कारत्वमुच्यते भवद्भिरिति शेषः; तदा वाचकादिष्वपि अभिधादिना रसादिबोधकेष्वपि। आदिशब्देन लक्षकग्रहणम्, बहुवचनन्तु व्यक्तिभेदात्। तथा अलङ्कृतित्वम्। तथा च—"तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः कोऽप्यजायत" "उदितं चन्द्रमालोक्य शृङ्गारे मग्नमन्तरम्" "आसील्लज्जावती मुग्धा प्रियस्य परिचुम्बने" इत्यादौ रसशृङ्गारलज्जादिपदैरपि रसभावादीनामभिधानेनैवोपकृतत्वात् भवतां मते अलङ्कारत्वप्रसक्त्या अतिव्याप्तिः; प्रत्युत तेषु स्वशब्दवाच्यतादोष एव। अस्माकं मते तु अलङ्कारलक्षणे शोभातिशायीतिविशेषणनिवेशेन एतेषु शोभातिशायित्वाभावान्नातिव्याप्तिः रसवदादौ चाङ्गभूतरसादिभिरेव शोभातिशायित्वादलङ्कारलक्षणसङ्गतिश्चेत्याशयः।

(ध) प्रागुक्तसर्वमतविलक्षणं कस्यचिदद्भुतं मतं दूषयितुमाह एवञ्चेति। सपक्षविपक्षाणां सर्वेषामेव मते रसाद्युपकारकाणामेवालङ्कारत्वे चेत्यर्थः। अङ्गित्वे प्रधानत्वे अङ्गत्वे उपकारकत्वे तु, द्वितीयोदात्तालङ्कारः "यद्यपि प्रस्तुतस्याङ्गं महतां चरितं भवेत्" इत्युक्तलक्षणोदात्तालङ्कारः; तन्मते उक्तलक्षणे "महतां चरितम्" इत्यनिवेशात् "अप्रस्तुतानां प्रस्तुताङ्गत्वं उदात्तम्" इति सामान्याभिधानादिति बोध्यम्। परास्तमिति अङ्गिनां रसादीनां केवलोपकार्यतया उपकारकत्वाभावेनालङ्कारत्वस्यैवाप्रसक्तेः, अङ्गत्वे तु उपकारकतया रसवदादीनामपि प्रसक्तेश्चेति भावः। किञ्च, अङ्गाङ्गिनोर्नियतपरस्परसापेक्षतया एतन्मते रसवदादिभिः सह द्वितीयोदात्तालङ्कारस्य नियतसाङ्कर्यापत्तिश्चेति द्रष्टव्यम्।

(न) एतावता सर्वेषामेवालङ्काराणां प्रातिस्विकलक्षणान्युक्त्वा इदानीं तेषामेव एकत्रानेकसम्भवे-

CCO. Vasjshtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा लौकिकालङ्काराणामपि परस्परमिश्रणे पृथक् चारुत्वेन पृथगलङ्कारत्वम्, तथोक्तरूपाणां काव्यालङ्काराणामपि परस्परमिश्रत्वे संसृष्टि-सङ्कराख्यौ पृथगलङ्कारौ (प)। तत्र—(फ)

१२७। मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते। (ब)

एतेषां शब्दार्थालङ्काराणाम् (भ)। यथा—

"देवः पायादपायान्नः स्मेरेन्दीवरलोचनः।
संसारध्वान्तविध्वंस-हंसः कंसनिसूदनः॥" (म)

अत्र "पायादपायात्" इति यमकम्, "संसार" इत्यादौ चानुप्रास इति शब्दालङ्कारयोः संसृष्टिः। द्वितीये पादे उपमा, द्वितीयार्द्धे च रूपकमित्यर्थालङ्कारयोः संसृष्टिः। एवमुभयोः स्थितत्वाच्छब्दार्थालङ्कारसंसृष्टिः (य)।

---

पृथगलङ्कारौ निरूपयितुमुद्दिशति यदीति। अत्र यदिशब्दात् तदाशब्दाच्च परम् अपिशब्दः सामर्थ्यादवगन्तव्यः। तथा च यद्यपि परस्परविमिश्रिता एकस्मिन् पद्ये गद्ये वा बाधकाभावात् परस्परं सम्मिलिताः सन्तः, एत एव पूर्वोक्ताः, अलङ्काराः शब्दालङ्कारा अर्थालङ्कारा रसाद्यलङ्काराश्च, पृथक् पृथग् व्यपदेष्टुं योग्याः सम्भवन्तीत्यर्थः, तथापि संसृष्टिर्नाम सङ्करो नाम च पृथग् भिन्नौ अलङ्कारौ वेदितव्याविति शेषः; अनेकविधवैचित्र्यस्यैकत्र मेलने पृथग्वैचित्र्यतयैव तदुपलम्भात् तस्य पृथङ्नामतया एवौचित्यादित्याशयः।

(प) दृष्टान्तमुपन्यस्य व्याचष्टे यथेति। लौकिकालङ्काराणां कटककुण्डलादीनाम्। पृथगलङ्कारत्वमिति। यथा कटकवन्मकराकृतिमुखत्वात् कुण्डलवद्गोलाकारत्वाच्च कटककुण्डलयोर्मिश्रितरूपस्य कर्णालङ्कृतिविशेषस्य "माकरी" इतिसंज्ञकपृथगलङ्कारत्वम्।

(फ) तत्रेति। तयोः संसृष्टिसङ्करयोर्मध्य इत्यर्थः।

(ब) उद्देशक्रमेण प्राक् संसृष्टिं निरूपयति मिथ इति। एतेषामिति बहुवचनमविवक्षितम्। तेन ययोः कयोश्चित् द्वयोरलङ्कारयोः येषां केषाञ्चित् बहूनामलङ्काराणां वा मिथोऽनपेक्षया परस्परनैरपेक्ष्येण, स्थितिः एकस्मिन् पद्ये गद्ये वा अवस्थानं संसृष्टिर्नाम अलङ्कार उच्यते। अनेकशब्दालङ्कारमात्रस्य अनेकार्थालङ्कारमात्रस्य अनेकशब्दार्थोभयालङ्कारस्य च परस्परनैरपेक्ष्येण स्थितिः सम्भवतीति त्रिविधा संसृष्टिः।

(भ) एतेषामिति। अत्र शब्दार्थालङ्काराणामित्युपलक्षणम्। रसालङ्काराणामपि रसवदादीनामुक्तत्वात्तेषामपि, संसृष्टिसङ्करौ वेदितव्यौ समानन्यायाद्बाधकाभावाच्च। अतएव "आमीलितालसविवर्त्तिततारकाक्षीम्" इत्यादौ प्रेयोरसवदलङ्कारयोः सङ्करो दर्शितः।

(म) एकोदाहरणेनैव त्रिविधा एव संसृष्टीर्दर्शयति देव इति। स्मेरे प्रस्फुटिते इन्दीवरे नीलोत्पले इव लोचने नयनयुगलं यस्य सः, संसार एव ध्वान्तमन्धकारं तस्य विध्वंसे विनाशविषये हंसः, सूर्यः, तथा कंसस्य निसूदनो निहन्ता देवः श्रीकृष्णः, नः अस्मान्, अपायाद्विपत्तेः सकाशात् पायात् रक्षेत्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(य) अत्रेति। "ध्वान्तविध्वंस—" इत्यत्र ध्वकारयोरनेकधा सङ्घात् साम्यात् छेकानुप्रासः, "विध्वंस"

१२८। अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ।
सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः॥ (र)

अङ्गाङ्गिभावो यथा—

"आकृष्टिवेगविगलद्भुजगेन्द्रभोग-
निर्मोकपट्टपरिवेष्टनयाम्बुराशेः।
मन्थव्यथाव्युपशमार्थमिवाशु यस्य
मन्दाकिनी चिरमवेष्टत पादमूले॥" (ल)

---

"कंस" इत्यनयोश्च आद्यस्वरेण सह यथावस्थव्यञ्जनावृत्तेः पदगतः अन्त्यानुप्रासः, "संसारः" "हंसः" "निसूदनः" एतेषु दन्त्यसकाराणामसकृत् साम्यादावृत्त्यनुप्रासश्च एषामनुप्रासानामपि परस्परनैरपेक्ष्येण स्थितेरपरा संसृष्टिरनुसन्धेया। उपमेति। "क्विप्समासगता द्वेधा धर्मवादिविलोपने" इत्युक्तलक्षणा समासगता लुप्तोपमेत्यर्थः। रूपकमिति। संसारे ध्वान्तत्वारोपः श्रीकृष्णे सूर्यत्वारोपस्य निमित्तमिति श्लिष्टशब्दनिबन्धनं केवलपरम्परितरूपकमित्यर्थः। उभयोरिति। यमकानुप्रासरूपशब्दालङ्कारस्य उपमारूपकरूपार्थालङ्कारस्य चेत्यर्थः, स्थितत्वात् परस्परनैरपेक्ष्येणेति शेषः।

(र) इदानीमवशिष्टं सङ्करालङ्कारं लक्षयति अङ्गेति। अत्रालङ्कृतीनामिति सर्वत्रान्वेति। बहुवचनञ्चाविवक्षितम्। तथा च अनेकस्यालङ्कारस्य अङ्गाङ्गित्वे सम्पादकसम्पाद्यत्वे सापेक्षभावेन गुणप्रधानभावेन वा, तद्वत् तथा, अनेकस्यालङ्कारस्य एकस्मिन्नाश्रये पादरूपे वा स्थाने स्थितौ, तथा अनेकस्यालङ्कारस्य सन्दिग्धत्व अनेकलक्षणगमनात् "अयमलङ्कारो भवेत् एष वा" इत्येवं संशयविषयत्वे च सङ्करो भवति; अतएव सोऽपि पुनः सङ्करः संसृष्टिवदेव त्रिविधः।

विषयविभागाभावात् संसृष्टि सामान्यरूपा, विषयविभागात् सङ्करस्तु विशेषरूपः एवञ्च सामान्यस्य विशेषेतरवृत्तित्वनियमादनेकालङ्कारस्य परस्परनैरपेक्ष्येणापि एकाश्रयस्थितिपक्षे सन्देहपक्षे च सङ्कर एव। एवमेव एकाश्रयस्थितिरूपसङ्करस्यापि, सामान्यरूपत्वात् अङ्गाङ्गिभावसन्देहसंकरयोर्विशेषरूपयोरतिरिक्तस्थल एव तस्य विषयत्वम्। तथा अनेकसंसृष्टेः अनेकसंकरस्य संसृष्टिसंकरयोरुभयोश्च परस्परनैरपेक्ष्येण स्थितौ पुनः संसृष्टिः, अङ्गाङ्गिभावादौ च पुनः संकरः सम्भवत्येव, संसृष्टिलक्षणे एतेषामिति अत्र च अलङ्कृतीनामित्येतयोरलङ्कारसामान्यपरतया संसृष्टिसंकरयोरपि ग्रहणादिति सुधीभिर्भाव्यम्।

व्युत्पत्तिस्तु संकरः संकीर्णता अनेकस्यैकत्र सम्मेलनमिति यावत्।

(ल) आकृष्टीति। समुद्रवर्णनमिदम्। मन्दाकिनी गङ्गा पतिव्रता स्त्री चेति व्यज्यते, आकृष्टेर्मन्थनकाले सुरासुरगणैरुभयत आकर्षणस्य, वेगेन गलन् प्रस्खलन् यो भुजगेन्द्रभोगस्य अनन्तनागशरीरस्य निर्मोकपट्टः परित्यक्तचर्मरूपं वस्त्रम्, तस्य परिवेष्टनया परिवेष्टनकरणच्छलेन, अम्बुराशेः समुद्रस्य, पत्युरिति च व्यज्यते, मन्थनव्यथाव्युपशमार्थमिव मन्थनजनितवेदनाशमनार्थमिव, आशु त्वरितम्, यस्य समुद्रस्य पत्युरिति च गम्यते, पादमूले एकस्मिन् प्रदेशे चरणनिकटे च चिरमवेष्टत प्रावहत् कराभ्यां परिवेष्ट्य आत्मसमकरोच।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र निर्म्मोकपट्टापह्नवेन मन्दाकिन्या आरोप इत्यपह्नुतिः। सा च मन्दाकिन्या वस्तुवृत्तेन यत् पादमूलवेष्टनं तच्चरणवेष्टनमिति श्लेषमुत्थापयतीति तस्याङ्गम्। श्लेषश्च पादमूलवेष्टनमेव चरणमूलवेष्टनमित्यतिशयोक्तेरङ्गम्। अतिशयोक्तिश्च "मन्यव्यथाव्युपशमार्थमिव" इत्युत्प्रेक्षाया अङ्गम्। उत्प्रेक्षा च अम्बुराशिमन्दाकिन्योर्नायकनायिकाव्यवहारं गमयतीति समासोक्तेरङ्गम् (व)।

यथा वा—(श)

"अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः।
अहो! दैवगतिश्चित्रा तथापि न समागमः॥" (ष)

अत्र समासोक्तिर्विशेषोक्तेरङ्गम् (स)।

---

(व) अत्रेति। अपह्नुतिर्वस्तुना अपह्नुतिध्वनिः, तद्वाचकस्याभावादित्यवधेयम्। सा अपह्नुतिः। वस्तुवृत्तेन वस्तुगत्या अत्रत्यपदार्थपर्य्यालोचनावशेनेत्यर्थः। श्लेषं विभक्तेरभेदात् "नीतानामाकुलीभावम्" इत्यादिवत् प्रकृतिश्लेषम्। अतिशयोक्तेः भेदे अभेदाध्यवसायरूपायाः। उत्प्रेक्षायाः फलोत्प्रेक्षायाः। समासोक्तेर्लिङ्गसाम्यघटितायाः।

(श) कारिकायामलङ्कृतीनामिति बहुवचनस्य अविवक्षितत्वसूचनाय द्वयोरप्यङ्गाङ्गिभावेन संकरं दर्शयितुमाह यथा वेति।

(ष) अनुरागेति। सन्ध्याः सायंकालः काचिन्नायिका च, अनुरागवती रक्तोत्पलादिसदृशलौहित्यवती, सुरतेच्छावती च, दिवसो वासरो नायकश्च, तस्याः सन्ध्याया नायिकायाश्च, पुरःसरः अवस्थानाय रमणाय च अग्रवर्त्ती सम्मुखवर्त्तीत्यर्थः। अहो आश्चर्य्यम्। तथापि न समागमस्तयोः सम्मेलनम्; अतएव दैवगतिर्विधातृव्यवहारः, चित्रा आश्चर्य्या; दैवगतिवशादेव तयोर्न समागम इति भावः।

(स) अत्रेति। समासोक्तिः सन्ध्यादिवसयोर्लिङ्गसाम्यघटितेत्यर्थः। विशेषोक्तेः रमणाय नायकस्य नायिकायाः सम्मुखवर्त्तित्वरूपकारणे सत्यपि रमणात्मकसमागमरूपतत्कार्य्याभावादिति भावः। अङ्गं सम्पादिका। किञ्चात्र "दैवगतिश्चित्रा" इत्येतमर्थं प्रति वाक्यान्तरार्थानां हेतुत्वात् काव्यलिङ्गं तत् प्रति च सा विशेषोक्तिरप्यङ्गमिति त्रयाणामेवाङ्गाङ्गिभावेन संकरत्वात् द्वयोः संकरः कुत इति चेत्, तदिदमुदाहरणम्—"क्व सूर्य्यप्रभवो वंश." इत्यादि। अत्र केवलविषमनिदर्शनयोरेवाङ्गाङ्गिभावेन संकरः।

गुणप्रधानभावेनाङ्गाङ्गिभावे संकरो यथा मम विराजसरोजिन्याम्—

"उदयति रसिकत्वं यौवने कामिनीनां सततमनपनेया मुग्धता शैशवे तु।
मधु भवति नलिन्याः पुष्पितायाः स्वभावात् पतति च कलिकाया न्यस्तमप्यात्मनैव॥"

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासो व्यापित्वात् प्रधानः, "न्यस्तमपि" इत्यर्थापत्तिस्तु अव्यापित्वादप्रधान इत्येतयोः संकरः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सन्देहसङ्करो यथा—(ङ)

"इदमाभाति गगने भिन्दानं सन्ततं तमः।
अमन्दनयनानन्दकरं मण्डलमैन्दवम्॥" (च)

अत्र किं मुखस्य चन्द्रतयाध्यवसानादतिशयोक्तिः? उत इदमिति मुखं निर्द्दिश्य चन्द्रत्वारोपाद्रूपकम्? अथवा इदमिति मुखस्य चन्द्रमण्डलस्य च द्वयोरपि प्रकृतयोरेकधर्म्माभिसम्बन्धात्तुल्ययोगिता? आहोस्विच्चन्द्रस्याप्रकृतत्वाद्दीपकम्? किंवा विशेषणसाम्यादप्रस्तुतस्य मुखस्य गम्यत्वात् समासोक्तिः? यद्वा अप्रस्तुतचन्द्रवर्णनया प्रस्तुतस्य मुखस्यावगतिरित्यप्रस्तुतप्रशंसा? यद्वा मन्मथोद्दीपनः कालः स्वकार्य्यभूतचन्द्रवर्णनामुखेन वर्णित इति पर्य्यायोक्तिरिति बहूनामलङ्काराणां सन्देहात् सन्देहसङ्करः (क)।

यथा वा—(ख) "मुखचन्द्रं पश्यामि" इत्यत्र किं मुखं चन्द्र इव इत्युपमा? उत चन्द्र एवेति रूपकम्? इति सन्देहः (ग)।

साधकबाधकयोर्द्वयोरेकतरस्य सद्भावे न पुनः सन्देहः (घ)। यथा—

---

(ङ) अङ्गाङ्गित्वाभावे सन्देहाभावे च सामान्यत्वेन पारिशेष्यादेकाश्रयस्थितिरूपः संकर इति सूचयितुमेव कारिकोक्तक्रममुल्लङ्घ्य प्राक् सन्देहसंकरमुदाहर्त्तुमाह सन्देहेति।

(च) इदमिति। सततं व्याप्तम्, तमोऽन्धकारम्, भिन्दानं विनाशयत्, तथा अमन्दं बहुलं नयनानन्दं करोतीति तत्तादृशम्, इदं दृश्यमानम्, इन्दोश्चन्द्रस्येदमिति ऐन्दवं मण्डलम्, गगने आभाति शोभते।

(क) अत्रेति। अतिशयोक्तिर्भेदे अभेदाध्यवसायरूपा। निर्द्दिश्येत्यनेन मुखस्य अनिगरणं दर्शितम्, अतएव रूपकं तच्च निरङ्गं केवलरूपकम्। तुल्ययोगितेति। इदं मुखं चन्द्रमण्डलञ्च आभातीत्येकक्रियया तदुभयाभिसम्बन्धादिति भावः। चन्द्रस्याप्रकृतत्वादिति। मुखस्य च प्रकृतत्वादिति गम्यते। तथा च प्रस्तुताप्रस्तुतयोर्मुखचन्द्रयोराभातीत्येकक्रियाभिसम्बन्धात् दीपकमित्यर्थः। विशेषणसाम्यादिति। मुखपक्षे, गगने वातायनाकाशे, तमः तमोगुणजनितं विरहकालीनं मोहं भिन्दानमित्यर्थकरणादुभयत्रापि विशेषणसाम्यमित्याशयः। मुखस्य गम्यत्वात् प्रस्तुते चन्द्रमण्डले गम्यस्य मुखस्य व्यवहारसमारोपादित्यर्थः। स्वकार्य्येति। स्वस्य मन्मथोद्दीपनकालस्य रात्रेरित्यर्थः कार्य्यभूतो यश्चन्द्रप्रकाशस्तस्य वर्णनामुखेन वर्णनाद्वारा।

(ख) कारिकायां "सन्दिग्धत्वे" इत्यत्राप्यन्वितस्य "अलङ्कृतीनाम्" इति पदस्य बहुवचनाविवक्षासूचनाय द्वयोरप्यलंकारोः सन्देहसंकरं दर्शयितुमाह यथा वेति।

(ग) मुखेति। उपमेति। "क्विप्समासगता द्वेधा धर्म्मेवादिविलोपने" इत्युक्तलक्षणा औपम्यवाचकसामान्यधर्म्मयोर्लोपस्थलीया समासगता लुप्तोपमेत्यर्थः। चन्द्र एवेतीति। मुखमिति पूर्वस्मादनुकृष्यते। रूपकं निरङ्गकेवलरूपकम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"मुखचन्द्रं चुम्बति" इत्यत्र चुम्बनं मुखस्यानुकूलमित्युपमायाः साधकम्, चन्द्रस्य तु प्रतिकूलमिति रूपकस्य बाधकम् (ङ)। "मुखचन्द्रः प्रकाशते" इत्यत्र प्रकाशाख्यो धर्मो रूपकस्य साधको मुखे उपचरितत्वेन सम्भवतीति नोपमाबाधकः (च)।

"राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ॥" (छ)

अत्र योषित आलिङ्गनं नायकस्य सदृशेनोचितमिति लक्ष्म्यालिङ्गनस्य राजन्यसम्भवादुपमाबाधकम्, नारायणे सम्भवाद्रूपकम् (ज)।

एवम्—"वदनाम्बुजमेणाक्ष्या भाति चञ्चललोचनम्।" (झ)

---

(घ) तत् किमेवं समासभाव एव उपमारूपकयोः सन्देहसङ्कर इत्याह साधकेति। साधक एकतरस्य प्रतिपादकः, बाधकोऽप्येकतरस्य प्रतिबन्धकः, तयोर्द्वयोरेव सद्भावे, अथवा तयोरेकतरस्य सद्भावे इत्यर्थः।

(ङ) तत्र साधकबाधकयोर्द्वयोः सद्भावे उदाहरति मुखचन्द्रं चुम्बतीति। मुखस्यानुकूलं मुखे सम्भवपरम्। चन्द्रस्य तु प्रतिकूलं चन्द्रे असम्भवमित्यर्थः, चुम्बनस्य भूतलस्थकर्तृकत्वात् चन्द्रस्य तु गगनस्थत्वेन बहुदूरवर्त्तित्वादिति भावः। अवेदमवधेयम्—उपमितसमासे उपमेयस्य प्राधान्यं रूपकसमासे तु उपमानस्य प्राधान्यं भासते। तेन "अव्यक्तं प्रधानगामि" इति मीमांसोक्तन्यायेन अन्वये अनियतस्य चुम्बतीतिपदस्य, प्रधानेनैवान्वयो वाच्यः। एवञ्च भूतलस्थजनकर्तृकचुम्बनस्य मुख एव सम्भवात् मुखस्य प्राधान्यप्रतिपादनाय उपमितसमासस्यैवाश्रयणीयतया चुम्बतीति पदमेव उपमायाः साधकं रूपकस्य च बाधकमित्युक्तमेव। एवमुत्तरत्रापि बोध्यम्।

(च) साधकबाधकयोरेकतरस्य सद्भावे उदाहरति मुखचन्द्रः प्रकाशत इति। प्रकाशाख्यस्तेजःस्फुरणरूपः। रूपकस्य साधक इति। प्रकाशत इत्यस्य मुख्यार्थमादाय चन्द्रान्वयार्थं "मुखचन्द्रः" इत्यत्र मुखमेव चन्द्र इति चन्द्रस्य प्राधान्यप्रतिपादकरूपकसमासस्यैव आश्रयणीयत्वादिति भावः। उपचरितत्वेन शोभत इत्यर्थकतया लक्षितत्वेन। नोपमाबाधक इत्यनेन रूपकस्य साधकताभावं दर्शितम्।

(छ) उपमाबाधकसद्भावेऽप्युदाहरति राजेति। "विध्युन्नावनविख्यातं शङ्खचक्राब्जभूषितम्।" इति मत्पूरितपूर्वार्द्धम्। लक्ष्मीः, राजा एव नारायणस्तं त्वां निर्भरं दृढम् आलिङ्गति।

(ज) अत्रेति। योषितो नायिकायाः। नायकस्य स्वयोग्यपुरुषस्य, सदृशेन समानस्थान-प्रभाव-जात्यादिना तुल्येन अपरेण पुरुषेण सहेत्यर्थः, उचितं सम्भवपरम्, इति हेतोः। असम्भवादिति। मानुषभावस्य राज्ञो लक्ष्मीयोग्यनायकापेक्षया स्थानप्रभाव-जात्यादिना नितान्तन्यूनत्वादिति भावः। उपमाबाधकमिति। लक्ष्मीकर्तृकम् "आलिङ्गति" इति पदमित्यर्थः। नारायणे सम्भवात् लक्ष्म्यालिङ्गनस्येति सम्बन्धः। रूपकमिति। प्रदर्शितप्रकाररूपकसमासस्यैवाश्रयादिति भावः।

(झ) विशेषणस्य साधकबाधकतायामुदाहरति वदनेति। "तथा भुजलतावन्द्यं क्वणत्कङ्कणभूषितम् ॥" इति मत्पूरितपरार्द्धम्। चञ्चले लोचने यत्र तत्ताद्दशम्, एणाक्ष्या मृगनयनाया नायिकायाः, वदनमम्बुजं पद्ममिव भातीति।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र वदने लोचनस्य सम्भवादुपमायाः साधकता, अम्बुजे चासम्भवात् रूपकस्य बाधकता (त) ।

एवम्—"सुन्दरं वदनाम्बुजम्" इत्यादौ साधारणधर्मप्रयोगे "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" (२।१।५६ पा) इति वचनादुपमासमासो न सम्भवतीति उपमाया बाधकः । एवञ्चात्र मयूरव्यंसकादित्वात् रूपकसमास एव (ट) ।

एकाश्रयानुप्रवेशो यथा मम—(ठ)

"कटाक्षेणापीषत् क्षणमपि निरीक्षेत यदि सा<br>
तदानन्दः सान्द्रः स्फुरति पिहिताशेषविषयः ।<br>
सरोमाञ्चोदञ्चत् कुचकलसनिर्भिन्नवसनः<br>
परीरम्भारम्भः क इव भविताऽम्भोरुहदृशः ॥" (ड)

अत्र "कटाक्षेणापीषत् क्षणमपि" इत्यत्र छेकानुप्रासस्य । "निरीक्षेत" इत्यत्र क्षकारमादाय वृत्त्यनुप्रासस्य चैकाश्रयेऽनुप्रवेशः (ढ) ।

एवञ्चात्रैवानुप्रासार्थापत्त्यलङ्कारयोः (ण) ।

---

(त) अत्रेति । उपमायाः साधकतेति । प्रागुक्तरीत्या वदनस्य प्राधान्यप्रतिपादनार्थं मुपमितसमासस्यैवाश्रयणीयत्वादिति भावः । असम्भवात् लोचनस्येति सम्बन्धः ।

(ट) प्रकारान्तरेण विशेषणस्यैव साधकबाधकतायां दर्शयति सुन्दरमिति । सामान्याप्रयोगे साधारणधर्मानुल्लेखे सति व्याघ्रादिभिः परपदैः सह उपमितं पूर्वपदं समस्यत इति सूत्रार्थः । न सम्भवतीति । उदाहृते सुन्दरमिति सामान्यधर्मप्रयोगादिति भावः । इति हेतोः, उपमाया बाधकः, सुन्दरमिति सौन्दर्यरूपसामान्यधर्मप्रयोग इति शेषः । एवञ्च उपमासमासासम्भवे च ।

(ठ) इदानीमवशिष्टमेकाश्रयस्थितिरूपं सङ्करमुदाहर्तुमाह एकेति । एकस्मिन्नाश्रये पादरूपे पदरूपे वा स्थाने अनुप्रवेशः अनेकशब्दालङ्कारस्य अनेकार्थालङ्कारस्य अनेकशब्दार्थालङ्कारस्य वा समावेशः ।

(ड) कटाक्षेणेति । काञ्चित् किशोरीं कुमारीमवलोक्य कस्यचित् साभिलाषोक्तिरियम् । सा नायिका यदि क्षणमपि कटाक्षेणापि ईषदपि निरीक्षेत मां पश्येत्, तदा सान्द्रो निबिड़ः, तथा पिहिता आवृता अशेषाः सकला विषया येन स तथाविधः सर्वविषयवर्त्तीत्यर्थः, आनन्दः स्फुरति चित्ते प्रकाशते । किन्तु अम्भोरुहे पद्मे इव दृशौ चक्षुषी यस्यास्तस्याः, सरोमाञ्चौ कामवेशात् सपुलकौ, अतएव उदञ्चन्तौ बाहुल्येनोन्नतीभवन्तौ यौ कुचकलसौ ताभ्यां निर्भिन्नमुदीर्णं ततो निपतितं वा वसनं यस्मिन् स तादृशः, परीरम्भारम्भ आलिङ्गनारम्भः, क इव भविता तत्र नाणे इत्यर्थः । अनिर्वचनीयानन्ददायको भविष्यतीति भावः ।

(ढ) अत्रेति । छेकानुप्रासस्येति । ककारषकारघटितक्षकारस्य स्वरूपतः क्रमतश्च सकृत्साम्यादित्याशयः । इत्यत्र स्थितमिति शेषः । वृत्त्यनुप्रासस्य चेति । तृतीयक्षकारग्रहणे क्षकाराणां बहुतया स्वरूपतः, क्रमतश्च असकृत्साम्येन "अनेकस्याप्यनेकधा" इति लक्षणसङ्गतेरिति भावः । [illegible] सङ्करः समुन्नेयः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा वा—(त) "संसारध्वान्तविध्वंस—" इत्यत्र रूपकानुप्रासयोः। (थ)

यथा वा—(द) "कुरबका रवकारणतां ययुः" इत्यत्र "रवका रवका" इत्येकम्, "वकार वकार" इत्येकमिति यमकयोः (ध)।

यथा वा—(न)

"अहिणअपओअरसिएसु पहिअसामाइएसु दिअहेसु।
मोहइ (१) पसारिअगीआणं णच्चिअं मोरविन्दाणं॥" (प)

अत्र "पहिअसामाइएसु" इत्येकाश्रये पथिकश्यामायितेत्युपमा, पथिकसामाजिकेष्विति रूपकं प्रविष्टमिति (२) (फ)।

---

(ण) एवञ्चेति। अपि चेत्यर्थः। अनुप्रासः प्रदर्शितप्रकारच्छेकानुप्रासवृत्त्यनुप्रासात्मकः, अर्थापत्तिश्च "पूर्णं दृष्ट्या दर्शने का कथा कटाक्षेणापि" "अधिकदर्शने का कथा ईषदपि" "बहुकालं यावद्दर्शने वा कथा क्षणमपि" इत्येवंरूपत्रितयात्मिका तयोः, एकाश्रयेऽनुप्रवेश इति पूर्वेण सम्बन्धः।

(त) एकपदरूपैकाश्रये विजातीयानेकालङ्कारानुप्रवेशं दर्शयितुमाह यथा वेति।

(थ) संसारेति। अत्र रूपकं निरङ्गकेवलरूपकम्, अनुप्रासश्च च्छेकस्तयोः एकाश्रये अनुप्रवेश इति पूर्वेण सम्बन्धः। एवञ्च ईदृशेन सङ्करेणापि सह "पायादपायात्" अत्र स्थितस्य यमकस्य संसृष्टिरित्यवधेयम्।

(द) एकपादरूपैकाश्रये सजातीयानेकालङ्कारानुप्रवेशमुदाहर्त्तुमाह यथा वेति।

(ध) कुरबका इति। "विरचिता मधुनोपवनश्रियामभिनवा इव पत्रविशेषकाः। मधुलिहां मधुदानविशारदाः—" इति माघे प्रथमचरणत्रयम्। मधुना वसन्तकालेन विरचिता उत्पादिताः, उपवनश्रियामुद्यानलक्ष्मीणाम्, पत्रविशेषकाः पत्रावलीतिलका इव मधुदाने मकरन्दवितरणे विशारदा दक्षाः, कुरबकाः कुसुमविशेषाः, मधुलिहां भ्रमराणाम्, रवकारणतां गुञ्जनहेतुतां ययुः प्रापुः। इत्येकं यमकमिति शेषः। एवं परत्रापि। यमकयोरेकाश्रये अनुप्रवेश इति पूर्वेणान्वयः।

(न) एकपदरूपैकाश्रये अनेकार्थालङ्कारानुप्रवेशं दर्शयितुमाह पुनर्यथा वेति।

(प) अहिणअ इति। "अभिनवपयोदरसितेषु पथिकश्यामायितेषु (पथिकसामाजिकेषु) दिवसेषु। महति प्रसारितग्रीवाणां नृत्यं मयूरवृन्दानाम्॥" इति संस्कृतानुवादः। गाथासप्तशतीस्थमिदं पद्यम्। अभिनवानां पयोदानां मेघानां रसितानि गर्जितानि येषु तेषु, पथिका विदेशवासिनः प्रियाविरहिण इत्यर्थः। श्यामायिताः कामवेदनया श्यामाङ्गवदाचरिता येषु तेषु पथिकसामाजिकेषु इति पक्षे तु पथिका एव सामाजिकाः सभ्या नित्यदर्शिनो येषु तेषु, दिवसेषु वर्षाकालीनदिनेषु, प्रसारिता लम्बीकृता ग्रीवा यैस्तेषां मयूरवृन्दानाम्, नृत्यं कर्त्तृ, महति महः उत्सव इवाचरति।

(फ) अत्रेति। उपमा कथङ्गतेत्यर्थः। रूपकञ्च निरङ्गकेवलरूपं पर्यालोचने तु "पथिकसामाइ-

---

(१) रहइ इति क्वचित् पाठः। (२) क्वचित् इतिशब्दो नास्ति।


CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रीचन्द्रशेखरमहाकविचन्द्रसूनु-
श्रीविश्वनाथकविराजकृतं प्रबन्धम् ।
साहित्यदर्पणममुं सुधियो विलोक्य
साहित्यतत्त्वमखिलं (१) सुखमेव वित्त ॥ (ब)

यावत् प्रसन्नेन्दुनिभाननाश्रीर्नारायणस्याङ्कमलङ्करोति ।
तावन्मनः सम्मदयन् कवीनामेष प्रबन्धः प्रथितोऽस्तु लोके ॥ (भ)

इति श्रीमन्नारायणचरणारविन्दमधुव्रत-साहित्यार्णवकर्णधार-
ध्वनिप्रस्थापन-परमाचार्य्य-कविसूक्तिरत्नाकराष्टादशभाषा-
वारविलासिनीभुजङ्ग-सान्धिविग्रहिक-महापात्र-
श्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे
दशमः परिच्छेदः ॥०॥ (म)

—०○—

एसु" इत्यत्र पथिकाः श्यामायिता येषु इत्यनुवादः ? उत पथिका एव सामाजिका येषु इत्यनुवाद इत्येवमनुवाद-सन्देहेनैव उपमारूपकयोः सन्देहात् सन्देहसङ्कर एव युक्त इत्यवधेयम् । तेन "राजहंसगतिप्रापिपद-पद्मयेमागता" इत्युदाहरणं द्रष्टव्यम् । अत्र हि "राजहंसगतिप्रापिपदपद्मा" इत्येकपदरूपे काश्रये निदर्शनालुप्तोपमारूपयोरर्थालङ्कारयोरनुप्रवेशः ।

(ब) ग्रन्थं समाप्येदानीमात्मपरिचयप्रदानपूर्वकं ग्रन्थस्य पूर्णतां सूचयितुमाह श्रीचन्द्रेति । हे सुधियः ! पण्डिताः ! यूयम्, श्रीचन्द्रशेखरो नाम महाकविषु चन्द्र इव तस्य महाकविषु श्रेष्ठस्य श्रीचन्द्रशेखर-स्येत्यर्थः सूनुः पुत्रो यः श्रीविश्वनाथो नाम कविराजः कवीनां मध्ये श्रेष्ठ इति तात्पर्य्यम्, तेन कृतम्, साहित्य-दर्पणं नाम अमुं प्रबध्यत इति प्रबन्धो ग्रन्थस्तम्, विलोक्य आद्योपान्तं समालोच्य, सुखमेव विस्पष्टत्वादनायास-मेव यथा स्यात्तथा, अखिलं सकलं साहित्यस्य काव्यस्य तत्त्वं स्वरूपं ज्ञातव्यविषयमित्यर्थः वित्त जानीत । एतेनास्मिन् ग्रन्थे काव्यस्य ज्ञातव्यविषयाः सर्व एव निबद्धा इति ग्रन्थान्तरापेक्षया अस्य पूर्णतया प्राधान्यं द्योतितम् । हन्त ! पूर्णः खलु ग्रन्थः, किन्तु स्वकीयस्थानसमयादिपरिचयाप्रदानादपूर्णैव चिरमितिहास-लिप्सूनामाकाङ्क्षा ।

(भ) पर्य्यवसाने परमेष्टदेवतास्मरणेन भङ्ग्या तदन्तिक एव स्वनिर्म्मितग्रन्थस्य चिरस्थायितां प्रार्थयते यावदिति । प्रसन्नेन्दुनिभं निर्म्मलचन्द्रतुल्यमाननं यस्याः सा तादृशी श्रीर्लक्ष्मीः, यावत् नारायणस्य अङ्कमलङ्करोति अवस्थानेन शोभयति तावत् कालमेव एष प्रबन्धः, कवीनां मनः सम्मदयन् जिज्ञासितविषय-ज्ञापनेन सन्तोषयन् सन्, लोके प्रथितः प्रसिद्धः अस्तु ।

(म) इतीति । प्रथमपरिच्छेद एवैष सन्दर्भो यथायथं विवृत इति ।

(१) साहित्यतत्त्वमखिलमित्यपि पाठः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विरोधिविद्वेषविवर्जनाम्न मे न वाऽस्ति दुःखं खलदूषणात् खलु।
विषान्तिके हन्त! सुधा मुधायते न कम्पयेत् कम्पति वा कपिर्मुखम् ॥१॥
सुधीधुरीणेन विविच्य चेत् कृता तिरस्कृतिः सैव भवेत् पुरस्कृतिः।
तनोति दाहो दहनस्य काञ्चने सुसञ्चितां काञ्चिदपूर्वचारुताम् ॥२॥

जानकीविक्रमं नाम नाटकं वीररौद्रवत्।
नाटिकामुज्ज्वलरसां श्रीविराजसरोजिनीम् ॥३॥
वियोगवैभवाख्यानं खण्डकाव्यमनन्तरम्।
नानाबन्धं महाकाव्यं रुक्मिणीहरणाभिधम् ॥४॥
स्मृतिचिन्तामणिं नाम संक्षिप्तस्मृतिसंग्रहम्।
उत्तररामचरित-टीकां सर्वार्थबोधिनीम् ॥५॥
मालविकाग्निमित्रस्य मालतीमाधवस्य च।
कादम्बरीकथायाश्च टीकां कल्पलताभिधाम् ॥६॥
श्रीवङ्गीयप्रतापाख्यं नाटकं वङ्गगौरवम्।
कृत्वा कुर्वन् गद्यकाव्यमपूर्वं सरलाभिधम् ॥७॥

कोटालिपाड़ोनग्रियानिवासी नक्कीपुरेशस्य सभाप्रवासी।
सत्काव्यपोऽध्यापनमुख्यकर्मा व्यधादिमां श्रीहरिदासशर्मा ॥८॥
ख-देव-वह्निन्दुमिते शकाब्दे सूर्ये धनुःस्थे दशमे बुधेऽह्नि।
वङ्गेषु रामा प्रतिमा ममेयं समाप्तिमाप्ता गिरिशप्रसादात् ॥९॥
रसिकाधिकदृष्टिहारिणी सुषमा सौरभलोभदायिनी।
कुसुमप्रतिमाऽत्र दर्पणे चिरलग्ना विबुधैर्विलोक्यताम् ॥१०॥

इति गङ्गाधरविद्यालङ्कारभट्टाचार्यात्मज-महामहोपाध्याय-भारताचार्य-श्रीहरिदास-
सिद्धान्तवागीशभट्टाचार्यविरचितायां साहित्यदर्पणटीकायां
कुसुमप्रतिमायां दशमः परिच्छेदः ॥०॥

—oo—

## समाप्तश्चायं ग्रन्थः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

महामहोपाध्याय-महाकवि-भारताचार्य-
श्रीयुक्तहरिदाससिद्धान्तवागीशमहाशयप्रणीत-

ग्रन्थावली।

——०——

मुद्रिता ग्रन्थाः।

—:००:—

१। स्मृतिचिन्तामणिः (চতুর্থবারং সংস্কৃতঃ) মূল্যং ৩৲ মাশুলাদি ॥৵০

२। रुक्मिणीहरणम् (महाकाव्यम्, तृतीयवारं संस्कृतम्, काव्य-मध्यपरीक्षायां पाठ्यम्) मूल्यं २॥० माशुलादि ॥৶)

३। विराजसरोजिनी (नाटिका) मूल्यं १) माशुलादि ॥০)

४। वङ्गीयप्रतापम् (नाटकम्, प्रतापादित्यचरित्रविषयम्, असकृदभिनीतम्, अभिनयोपयोगि, चमत्कारि च)। मूल्यं २) माशुलादि ॥०

৫। যুধিষ্ঠিরের সময় (২য় সংস্করণ) মূল্য ।০ আনা

৬। বিধবার অনুকল্প (২য় সংস্করণ) মূল্য ৵০ আনা

——(:०:)——

मुद्रापणीया ग्रन्थाः।

——०:०——

७। वियोगवैभवम् (खण्डकाव्यम्)

८। शङ्करसम्भवम् (खण्डकाव्यम्)

९। सरला (गद्यकाव्यम्)

१०। कंसवधम् (नाटकम्)

११। जानकीविक्रमम् (नाटकम्)

१२। मिवारप्रतापम् (नाटकम्)

१३। वैदिकवादमीमांसा (इतिहासः)

पाठ्या अपरे मुद्रिता ग्रन्थाः पत्रान्तरे द्रष्टव्याः।

श्रीहेमचन्द्रकाव्यव्याकरणपुराणतीर्थः। ४१ देवलेन, कलिकाता।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

